# गङ्गाज्ञानमहोदधिः

( गङ्गाविषयकग्रन्थानाम् अद्यावधि अमुद्रितानां ईशवीय 1000 वर्षादारभ्य रचितानां संग्रहः )

सम्पादकः

आचार्यरमापदचक्रवर्ती



# Gaṅgā-Jñāna-Mahodadhiḥ

(A Collection of works on Gaṅgā from C. 1000 AD so for unpublished.)

*Editor*

**Acharya Ramapada Chakravarty**



*This Publication has been brought out with the financial assistance from Rashtriya Sanskrit Sansthan. New Delhi.*

**Patron :**
All India Kashi Raj Trust;
Ramnagar fort, Varanasi

**Editor :**
Acharya Ramapada Chakravarty

**Publisher :**
Raghava Prakashan
Baijnatha, Varanasi

**First Edition :** 2001 Copies


ISBN 817525-214-6

**Price :** 237

**Printer :**
Raghava Offset
Baijnatha, Varanasi

विष्णुकान्त शास्त्री
राज्यपाल, उत्तर प्रदेश



राजभवन
लखनऊ-227132

# सन्देश

मुझे यह जानकर अत्यधिक प्रसन्नता हुई कि सम्पूर्णानन्द संस्कृत विश्वविद्यालय के श्रीरमापद चक्रवर्ती द्वारा देश के विभिन्न पुस्तकालयों में उपलब्ध ग्यारहवीं से अठ्ठारहवीं शताब्दी के प्राचीन देवनागरी, शारदा, वंग, मैथिली, उड़िया एवं मिश्रलिपियों तथा संस्कृत भाषा की अप्रकाशित ५२ पाण्डुलियों का संकलन कर उन्हें देवनागरी में लिप्यन्तर कर एक संग्रह के रूप में प्रकाशित किया जा रहा है।

सम्पूर्णानन्द संस्कृत विश्वविद्यालय के श्रीचक्रवर्ती द्वारा किया जा रहा यह कार्य बड़ा ही प्रशंसनीय है, इसकी जितनी भी सराहना की जाय कम है। इस संग्रह के प्रकाशन से शोधकर्ताओं एवं जिज्ञासुओं को शास्त्रों एवं विभिन्न साहित्य को जानने का अवसर मिलेगा।इस संग्रह के सफल प्रकाशन के लिए मेरी हार्दिक शुभकामनाएँ।

विष्णुकान्त शास्त्री
महामहिम राज्यपाल, उत्तर प्रदेश

# समर्पणम्

काशी येन विकासिता भगवतः शम्भोः प्रतीकात्मना
येनाचारपरम्परा श्रुतिपरा राजर्षिणा रक्षिता ।
तस्मै गाङ्गपवित्रनिर्मलयशःपूर्णप्रकाशीभवत्-
काशीराजविभूतये सुमतये ग्रन्थो मयोपष्कृतः ।।



आविर्भाव ५ नवम्बर १९२७ | तिरोधान २५ दिसम्बर २०००



दुर्ग रामनगर, वाराणसी
दिनांक : २ फरवरी, २००१

## सन्देश

यह अत्यन्त प्रसन्नता का विषय है कि सम्पूर्णानन्द संस्कृत विश्वविद्यालय के विद्वान् आचार्य रमापद चक्रवर्ती द्वारा संकलित एवं सम्पादित "गंगाज्ञानमहोदधि" ग्रन्थ का प्रकाशन राष्ट्रीय संस्कृत संस्थान के आर्थिक सहयोग से हो रहा है। इस ग्रन्थ के संकलन और सम्पादन में कैलाशवासी कीर्तिशेष मेरे पूज्य पिता की भी प्रेरणा और सहायता प्राप्त थी। इस ग्रन्थ का संकलन और सम्पादन आचार्य चक्रवर्ती ने ११वीं सदी से १८वीं सदी तक विरचित स्तुतियों और वर्णनों की पाण्डुलिपियों के आधार पर किया है। ये पाण्डुलिपियां देवनागरी, मैथिली, बंगला, उड़िया आदि लिपियों में लिखित हैं और इनमें वेद, साहित्य, पुराण, धर्मशास्त्र, कर्मकाण्ड, तन्त्र आदि के विषय अनुस्यूत हैं। इन हस्तलेखों को उन्होंने उत्तरभारत के प्रधान हस्तलेखागारों से संग्रहीत किया है। ग्रन्थ का सम्पादन और संकलन परिश्रम और पाण्डित्य के साथ किया गया है। ग्रन्थ के प्रकाशन पर मैं अपनी हार्दिक शुभकामंना समर्पित करता हूँ और इसकी सफलता के लिये बाबा विश्वनाथ से प्रार्थना करता हूँ।

काशी नरेश

अनंतनारायणसिंह

# अभिसम्मतिः

**स्मरामि-**

बहोः कालात्पूर्वं श्रीरमापदचक्रवर्तिसुधिया गङ्गासम्बन्धिन्यो मातृकाः संगृह्यमाणाः, तासां संकलना तस्य सकल्पस्य मह्यं निवेदिता, तेनोक्तं यन्मन्मनसि एतादृशपुण्यकार्यस्य संकल्प आसीत्, बहु कार्यव्यापृततया मया मनसि चिन्तितं रमापदचक्रवर्तिना ग्रन्थे संकलिते प्रकाशिते च गङ्गावाङ्मयस्य विस्तरेणानुशीलनं प्रारप्स्यते। अद्य महतः प्रमोदस्य स्थानं यत् सतत-संकलनात्मकः एष तदीयः संकल्पः प्रकाशतामानीयते। अस्मिन् द्विपञ्चाशत्मातृकास्तासां पाठभेदाँश्च पुरस्कृत्य पाठनिर्माणपूर्वकं ग्रन्थस्वरूपमनेकदिशा परिस्कृत्य ग्रन्थोऽयं प्रकाशितः। अयं संग्रहो न केवलं विदुषां कृते अपितु सामान्यजनानां कृते येषां मनसि गङ्गा समुल्लसति तेषां महोपकारको भविष्यतीति नास्ति कोऽपि सन्देहः। अत्र न केवलं गङ्गास्तुतयः संकलिता गङ्गामाश्रित्य रचितानि काव्यान्यपि संकलितानि गङ्गासपर्यापद्धतयोऽपि संकलिताः। एष समुदितः प्रयासो ग्रन्थं गङ्गाविश्वकोशरूपतां प्रापयति।

गङ्गा नाम केवलं पवित्राया नद्या न वाचकं प्रत्युत निखिलाया भारतीयायाः संस्कृतेरपि वाचकम् एतत्त्वस्माकं धर्मसर्वस्वं ज्ञानसर्वस्वं कर्मसर्वस्वं भक्तिसर्वस्वञ्च प्रति भासते, कोटि-कोटिजनानां प्रतिदिनं गङ्गास्मरणदर्शनानमज्जनपानवेलासु यत् क्षणमात्रमपि शुचिता-स्पन्दनं अनुभूयते तादृशस्पन्दनसमुदये गङ्गा नाम भारतवर्षस्य तपसः प्रसूतिः श्रोतोरूपं विद्यते। किम्बहुना अस्माकं देशस्य कृषि सम्पद एव गङ्गा यदपि ऐहलौकिकं पारलौकिकं माहात्म्यं भवेत् तत् सर्वं गङ्गायामेव समाविष्टं तिष्ठति। गङ्गानामस्मरणमात्रेण रोमाणि प्रहृष्टानि नयनानि अनुनिर्झरणी भूतानि मनांसि उत्कलितानि सम्पद्यन्ते, ये जनाः गङ्गाया प्रदूषणं व्याहरन्ति ते न स्मरन्ति गङ्गायाः सूक्ष्मातिसूक्ष्मं तरणतारण भावं बाह्यदृष्ट्या। आन्तरदृष्ट्या तु गङ्गायाः परमपावनशक्तिः कदापि न क्षीयते। अस्य प्रमाणं पर्वसु विशेषतः वैशाखज्येष्ठकार्तिकमाघमासेषु आपतितेषु पर्वसु कोटि-कोटि-जना निमज्जनेनात्मानं पूतमापादयन्ति गङ्गास्नानं कोटि-कोटि-जन्मपुण्यफलं कोटि-कोटियज्ञपुण्यतुल्यनेन कारणेन प्रख्यापयति यत् गङ्गाया सह क्षणमात्रम् तन्मयत्वं कोटिकोटिजनानां दिव्यतत्त्वमात्मनि समुपस्थापयति। यद्यपि सन्ति बहवस्तीर्थव्यूहाः पुण्यफलावलम्बिनः, तथापि ते गङ्गायाः सातीर्थ्यं नाधिगच्छन्ति। अस्माद्धेतोः गङ्गायाः शुचिताद्रवरूपेण सर्वोत्कृष्टा सर्वोपरिष्टाच्च विद्यते।

अतो हि श्रीरमापदचक्रवर्तिना सुधिया यत् समाचरितमस्य ग्रन्थस्य संकलनं तस्य फलं तेन लप्स्यते, ग्रन्थानुशीलनेनापि अन्यैर्जनैश्च लप्स्यते। अनेन महता कार्येण नूनं श्रीरमापद चक्रवर्तिमहाभाग एतदर्थं सम्माननीयः इति।

काश्यां माघकृष्णतृतीयायां
२०५७ संवत्सरे वैक्रमीये

पद्मभूषणः
**प्रो० विद्यानिवासमिश्रः**

**प्रो. राममूर्ति शर्मा**
डी.लिट्., एफ.आर.ए.एस.
राष्ट्रपति सम्मानित
*कुलपतिः*
**सम्पूर्णानन्द संस्कृत विश्वविद्यालय-**
वाराणसी - २२१००२



दूरलेख : 'श्रुतम्'
दूरभाष (०५४२) २०४०८९ कार्यालय
(०५४२) २०११३० निवास
(०५४२) २०६६१७ निवास
फैक्स (०५४२) २०११३०
पत्र-संख्या......................................

# शुभाभिमतिः

गङ्गाज्ञानमहोदधिरित्येष विश्वकोशवत्प्रकाशमासादयन् विशिष्टग्रन्थोऽस्माभिर्बहुशश्चर्चया श्रुतस्तथा चैतन्महत्त्वमभिज्ञातम्। सरस्वतीभवनपुस्तकालये यावतो गङ्गाविषयकान् प्राकाश्यमनुपगतान् हस्तलिखितानेकादशशताब्दीमारभ्याष्टादशशताब्दीं यावदुपलब्धान् वेदपुराणधर्मशास्त्रकर्मकाण्डसाहित्यतन्त्रविषयकान् पाण्डुग्रन्थान् विलोक्य तेषु द्विपञ्चाशत्संख्यकान् ग्रन्थान् संकलय्य सम्पाद्य चैष श्रीरमापदचक्रवर्तिना महान् ग्रन्थो भगवत्या भागीरथ्या गङ्गाया विविधविषयकवृहत्तममाहात्म्यगरिमप्रख्यापनपरः समेषां सचेतसां विपश्चितां पुरस्तात् पुरस्क्रियमाणोऽस्ति अनेन नूनमभिनवः पन्थाः गाङ्गेयज्ञानविज्ञानसूर्यस्याविष्कृत इति सुदृढं विश्वसिमि।

एतस्य विशिष्टग्रन्थस्य सङ्कलनसम्पादनप्रकाशनाय च यदुपक्रान्तमनेन तत् सर्वथा सुधीभिः श्लाघनीयम्, एतदर्थं श्रीमते चक्रवर्तिने च भूयशः साधुवादान् वितरामि वाञ्छामि चास्य महोदधेर्महतो महत्तरं साफल्यं चतुरस्रं भगवान् विश्वनाथो विदध्यादिति।

राममूर्ति शर्मा
१५/२/२००१

# शिवसङ्कल्पः

आसेतुहिमाचलं सनातनवैदिकधर्मस्य विजयध्वजं प्रतिष्ठापयामासुश्चतुर्दिशामपि भगवत्पादाः श्रीशङ्कराचार्या इति सर्वलोकविदितम् । ते च समामनन्ति स्वीये जनसामान्यबोधनाय कल्पिते सरससरलपद्यमये **भजगोविन्दाख्ये** लघुप्रकरणे साधनानि त्रीणि लोकानां कृते जीवितान्ते यमयातनाभ्यः परित्रातुमात्मानम् । तत्रत्यमिदं पद्यम्–

**भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता ।**
**सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमेन न चर्चा ।।**

भणन्ति नितरां सुखसाध्यान् त्रीनुपायानत्र श्रीशङ्करभगवत्पादाः । तेषु प्रथमः अत्यल्पस्यापि गीताश्लोकभागस्य एकवारं पाठः । एवमेव एकवारं क्वचिद् भगवतो हरेः पूजनमिति द्वितीयः । तृतीयोऽपि तथैवैकवारं गङ्गाप्रवाहोद्धृतजलस्य नितान्तलघुलघुतमस्य भागस्य जन्मनि कदाचिदेकवारं पानमिति । अत्रेदं सुधीभिरवधेयम् । यद्यपि मूलश्लोके 'सकृद्' इत्ययं शब्दो हरिपूजनप्रसङ्गेनैव योजितः, तथापि वस्तुगत्या त्रिभिरप्युपायैः सह सकृदर्थसम्बन्धो ध्रुवमभीष्ट आचार्याणामित्यतिरोहितं सहृदयानाम् । अतश्च सकृदपि भगवद्गीता स्तोकांशपाठो वा, सकृदपि गङ्गाजललवलेशपानं वा, सकृदपि हरिपूजनं वा नरं नारायणपदं प्रापयितुमलमिति स्फुटमत्र हृदयं देशिकोत्तमानाम् । भगवत्या गङ्गाया विषये तु सत्यमेव पराक्रान्तं "जल-लव-कणिका" इति अपूर्वं योगं युञ्जानैः सिद्धसरस्वती-भिराचार्यपादैः । विभावयन्तु समाहितचेतसः सहृदया । अत्र खल्वाचार्या न वदन्ति केवलं गङ्गाजलमिति, किन्तु गङ्गाजललव इति, पुनश्चैवमग्रेऽपि न केवलं जललव इति किन्तु जललवकणिकेति । अत्रेदं विभावनीयम् । लवशब्दः कणशब्दश्चेत्युभयमपि अत्यल्पतावाचकं पर्यायप्रायमेव । अत एव सूक्ष्मपर्यायेषु "लवलेशकणाणवः" इति द्वयमपि पठितममरकोशे एकत्र । परमिदमीषद् विचित्रमिव भाति यदाचार्यैरिह गङ्गाजलस्याल्पताख्यापनप्रवृत्तैः अल्पपर्यायद्वयेनाप्यपरितुष्यद्भिः 'कण'शब्देन सह पुनरप्यल्पताद्योतकः 'कन्' प्रत्ययः संयोजितः । किं हि नाम स्यात् प्रयोजनमभीष्टं भगवत्पादानां श्रीशङ्कराचार्याणामस्य उपदेशकाव्यस्य प्रणेतॄणामित्थम् आम्रेडितप्रायाणां पुनरुक्तवदाभासमानानां नैकेषामल्पतावाचकानां पदप्रत्ययादीनां प्रयोगं विधाय पिष्टपेषणमिव कुर्वताम्? अयमत्राभिसन्धिराचार्याणामिति प्रतिभाति– गङ्गाप्रवाहजलबिन्दोः अणोरप्यणीयान् स्तोकस्तोकः शीकरलेशोऽपि पुरुषं संचितपापमलादुद्धर्तुं पर्याप्तमिति । तस्मादयमत्र निष्कर्षः फलति गङ्गायाः शीकराणुनापि पीतेन वा अन्यथा वा बहिः संपृक्तेन अशुद्धमपि वस्तु झटिति शुद्धं भवतीति, निसर्गतोऽपवित्रोऽपि प्राणी क्षणमात्रेण पवित्रीभवतीति चमत्कारकथनमुखेन गङ्गायाः परमाद्भुतमलौकिकं माहात्म्यं बोधयितुं वाञ्छन्ति श्रीशङ्कराचार्याः पद्यखण्डेनामुना इति ।

गङ्गाया उल्लेखस्तावद् ऋग्वेदस्य प्रसिद्धनदीसूक्तस्थात् "इमं मे गङ्गे यमुने सरस्वती........" इत्यादिमन्त्रादारभ्य बहुधा वैदिकग्रन्थेषु उपलभ्यते । एवमेव मनुप्रभृतिषु

स्मृतिग्रन्थेषु, रामायणे, महाभारते, पुराणेषु, परस्ताच्च काव्यनाटकादिग्रन्थेषु च पदे पदे गीयते महिमा गङ्गायाः । स्तोत्ररूपाणां ग्रन्थानां संख्या तु अतिभूयसी । एतेषां सर्वेषां ग्रन्थानामेकत्र संकलनं तु न शक्यते मनसापि उत्प्रेक्षितुम् । अत एव प्रकृतग्रन्थगङ्गाज्ञानमहोदधिसम्पादकेन आयुष्मता **श्रीरमापदचक्रवर्त्तिना सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य** प्रतिष्ठाप्राप्ते सरस्वतीभवन-ग्रन्थागारे यावन्तो गङ्गाविषयकाः प्रायशोऽद्ययावत् प्राकाश्यमनुपनीता हस्तलिखिता मातृकाकोशाः, सन्ति तेषां सर्वेषां संकलनाय प्रकाशनाय च यदुपक्रान्तं तत्प्रकामं श्लाघनीयं नवग्रन्थरसिकैः । तरुणेनानेन विदुषा सुचिरं भृशं परिश्रान्तमेतदर्थमिति सत्यमभिनन्दनीयोऽस्य दृढः सङ्कल्पः, हढतरश्च गङ्गासेवाध्यवसायो "दीर्घकालनैरन्तर्यसत्कारासेवितः ।" जन्मान्तरीय-पुण्यपरिपाकवशात् प्राप्त-गङ्गातीरनिरन्तरनिवाससौभाग्यः श्रीचक्रवर्ती शेषमायुरपि एवमेव गङ्गासाहित्यस्य संग्रहाध्ययनप्रकाशनेषु विनियुञ्ज्यादिति प्रत्येमि ।

भूयसा धनव्ययेन साधिते "गङ्गाज्ञानमहोदधि" रिति प्रकृतग्रन्थप्रकाशने संजातोऽस्य महान् परिश्रमश्च फलेग्रहिर्भूयादित्याशासे । श्रद्धालवो जनाः ग्रन्थमेनमवश्यमाद्रियन्तामित्यभ्यर्थये । प्रार्थये च समस्तविश्वनियन्तारं भगवन्तं विश्वनाथं भगवतीं जगज्जननीमन्नपूर्णाम्बां च यदयं कल्याणाभिनिवेशी गङ्गायां परमः श्रद्धालुः तरुणपण्डितः गङ्गासेवाफलं सकलमभ्युदयं नातिचिरेणैव लभतामिति ।

इदमन्यच्च वर्तते मे मनसि । स्मृतिपथमुपतिष्ठते संप्रति सर्वतन्त्रस्वतन्त्रः पदवाक्यप्रमाणज्ञः सर्वविद्यापारदृश्वा वाचस्पतिमिश्रो मूर्धन्यो मैथिलपण्डितेषु । विद्वल्लोके सुविख्यातैवास्य अपूर्वा अनितरसाधारणी वाग्धोरणी । अस्यासीत् परिणतप्रज्ञाप्रसूतं सर्वश्रेष्ठं ग्रन्थरत्नं प्रख्याता टीका शाङ्करस्य ब्रह्मसूत्रभाष्यस्य भामती नाम । अस्याष्टीकाया उपक्रमे यदभाणि तेन सिद्धवचसा तदनुस्मरामि संप्रति । स्वयं ललितपदविन्यासचारुवाग्विलासोऽपि सः प्राह स्म शाङ्करभाष्यसंयोगः तद्वाणीं पवित्रयिष्यति गङ्गाप्रवाहपातो रथ्याजलमिवेति ।

**आचार्यकृतिनिवेशनम् अप्यवधूतं वचोऽस्मदादीनाम् ।**
**रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ।।**

तत्प्रणीतं पन्थानमनुसरन्नहमपि मनसा प्रार्थये यदत्र जातेन गङ्गा-कथा-नामसंयोगेन मदीयेयं कृशकर्कशा कन्याप्राया वाणी, तथा आयुष्मतः **श्रीरमापदचक्रवर्तिना** संगृहीता पूर्वसूरिणां सर्वेषां वाणी च साक्षादुपनतगङ्गाप्रवाहपातेन बाढं पवित्रीभूयादिति ।

पौ० व० अमावास्या
सोमवार:, (२५/१२/२०००)

**पद्मश्री**
**वि० वेङ्कटाचलम्**

# ॥ शुभाशंसनम् ॥

**या ब्रह्मविष्णुगिरिशत्रिदशत्रयेण सम्भाविता शुचिसितामृतवारिधारा ।**
**सा स्नानपानरसनाचमनार्चनाद्यैः संसेविता सुरधुनी भुवनीं पुनीते ॥**

'गङ्गाज्ञानमहोदधिरित्याख्यया सुख्यापितो विशिष्टग्रन्थोऽयमस्मदभिन्नहृत्सहचरसुहृत्कल्पेन शिष्येण श्रीरमापदचक्रवर्तिनामधेयेन वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुत-सरस्वतीभवनपुस्तकालये सहायकपुस्तकाध्यक्षेण सुभृशं परिश्रम्य गङ्गाविषयकं विविधलिपिकपाण्डु-ग्रन्थेभ्यः सङ्कलनाकलनोल्लेखनलिप्यन्तरणादिप्रकृष्टप्रयत्नसाध्यसत्कर्मानुष्ठानेन सङ्ग्रथितः सम्प्रति तदीयसुदीर्घश्रमचारितार्थ्यमापादयन् प्राकाश्यमुपयातीति नितरां हार्दहर्षप्रकर्षमनुभवामि ।

भारतभरतभुवि भगवती भागीरथी गङ्गा प्रायेण बालवृद्धयुवस्त्रीणामशेषाणामास्थाभक्ति-श्रद्धास्पदमादिकालादद्यावधि यथावदस्तीति नास्ति कस्यापि नास्तिकस्यापि विमतिः । जलसृष्टिमत्-सागरनदसरःसरित्सु यथा महनीयतममाहात्म्यमहिमशालिनीयं सुरधुनी गङ्गा वरीवर्ति न तथा सरित्पतिपयोनिधिरपि महन्महत्त्वमधिगत इति निर्विचिकित्समुदीरितुं शक्यते । ब्रह्मद्रवेयं द्रुहिणकमण्डलोः पुण्यपयोऽमृतेयं पुरुषोत्तमस्य जरज्जटाचलशिरोरुहेयं शशिशेखरस्य स्रोतस्विनीयं सुमनसां तपः-साधनेयं साधुतपस्विनां मुक्तिस्रुतिरियं मुमुक्षूणां मुक्तिभुक्तिरियं भोगभावपरीप्सूनां किं बहुना त्रिदशापगेयं त्रिकालत्रिदिवस्थानप्रदानसोपानस्वरूपायमाणामृतपयःपूरसम्भारसम्भृता मर्त्यलोकेऽस्मिन् साधारण्येन सर्वान् प्राणिव्यूहानुत्तारयितुमलङ्कर्मीणा आ च हिमाचलादा च सागरान्तमनवच्छिन्न प्रकीर्णा प्रवहन्ती कलिकालकलुषं निहन्तीति ।

भारतीयसर्वभाषीयसाहित्ये किं वा विदेशीयेऽपि भगवत्या भागीरथीगङ्गाया वर्णनमुपलभ्यते विशेषतश्च संस्कृतवाङ्मये ह्येतस्या देवताकृतिप्रकृतेर्भूयोमाहात्म्यमेदुरं गौरवं निरूप्यमाणं तत्र तत्र विकीर्णमालोक्यते । तादृशसंस्कृतवाङ्मयान्तरुद्गीर्णतद्गौरवनिरूपणमेकत्रोपस्थापनधिया सुधियाऽऽयुष्मता चक्रवर्तिना तत्सर्वं संकलय्य सुमहानायाससम्पाद्यश्चैष अनीर्ष्याऽकलुषितशेमुषीक-सुधीजनश्लाघ्यः परप्रयासः प्रत्यपादि । आदशवर्षेभ्यो द्वादशशताब्दादारभ्याष्टादशशताब्दादधिकं विविधलिपिनिबद्धसंस्कृतभाषास्थगङ्गापरकप्रकीर्णविषयाणामहर्निशं सङ्कलनाय कृतभूरिप्रयत्नोऽयं प्रौढयुवा विद्वान् कस्य सचेतसः सुधियः प्रशस्यप्रशंसाभाजनं न स्यात् । गङ्गाविषयकपाण्डुग्रन्थ-संग्रहार्थमयं देशे यत्र कुत्रापि यात्रां विधाय तदभिज्ञानपूर्वकं प्रतिकृतिमवाप्तुमधिकतरकालव्ययेना-र्थोत्सर्गेणापि मनागपि सङ्कुचन्मना नाभूत् । इत्थङ्कारं दिवानिशं दशाधिकवर्षैः सुभृशं परिश्रम्याष्ट-दशघटिका यावत् प्रत्यहं देवनागरीलिप्यन्तरणं कर्तुं लेखनकर्मणि व्यापृतो भूत्वा भूयसा श्रमेणायं प्रकृतमहोदधिप्रणयनमकार्षीत् । पाण्डुग्रन्थान्तर्गताः पदे पदे प्रतिपदं प्रतिवाक्यञ्च लेखकप्रमादवशा-ज्जायमानानां प्रचुरतराणामशुद्धीनां संशोधनं दशवर्षाधिककालात्प्रायः प्रतिदिवसमस्मत्समीपमुपागत्य यथार्हसमयं मन्निर्देशनाद् व्यदधात् । सम्प्रति गाङ्गेयमहाकोषायमाणोऽयं महाप्रबन्धः प्रकाशपथातिथीभूय भवतां गुणैकपक्षपातपूर्णपरिपक्वमतीनां सुमतीनां समीक्षकाणामक्षिलक्ष्यीकरणाय प्रस्तुतस्तत्र तादृशगुणगणगणनानदीष्णा विद्वद्धुरीणा एव प्रमाणम् ।

अचिरादेव शिवसायुज्यजुषां सनातनधर्ममर्यादापालनैकव्रतपुषां विदुषामाश्रयभुवां तत्रभवतां काश्याः काशमानालङ्कारभूतानां भगवद्विश्वनाथप्रतीकाशानां काशिराजश्रीमद्विभूतिनारायणसिंह-

शर्ममहाशयानाममुष्य महाप्रबन्धायमानगङ्गाज्ञानमहोदधिग्रन्थस्य प्रकाशनाय महती प्रेरणा स्वीयस्नेह-सम्मानपात्रीकृतस्य श्रीरमापदचक्रवर्तिनः कृते च लेखनसम्पादनसौकर्याय पर्याप्तसार्थकसाह्यसहकृता प्राप्ताऽऽसीत्। तेभ्य एव काशिकेयमहाविभूतिभूतेभ्यो विभूतिनारायणेभ्यो महाप्रबन्धोऽयमुपायनी-क्रियमाणस्तदीयस्मारकप्रतीकमिव प्रत्येकमात्मसार्थक्याभ्युदयपदमभ्युदीयादित्याशास्यते।

**महाप्रबन्धाध्वनि साहसं दधत्सुधीमतामप्यवधानधीच्युतिः।**
**सचेतसां नैव मनीषिणां दृशा सदूषणा, प्रत्युत सद्गुणायते॥**

इत्यनयाऽभियुक्तोक्तिदिशानुकृतया कल्पितपद्यया मदुक्त्या सुमनसो विपश्चितः साकल्येनैकत्र सङ्ग्रथितस्य भगवत्याः सरिद्रूपप्रत्यक्षदेवताया भागीरथीगङ्गाया गरिमखनिसदृशस्य तन्महि-मख्यातिपरस्यास्य गङ्गाज्ञानमहोदधिनामख्यातस्य विशिष्टग्रन्थस्य तल्लेखनसम्पादनकर्मणि कृतभूरिश्रमस्य श्रीरमापदचक्रवर्तिनश्च सप्रश्रयोत्साहमुपयोगित्वमुरीकरिष्यन्तीति विश्वसन्नहमेतस्यैतादृशमहाप्रबन्धाध्वनि कृतपदस्य साहसिनः प्रियान्तेवासिनश्चक्रवर्तिनश्चतुरस्रमभ्युदयं निःश्रेयसञ्च कामये तथाऽभ्यर्थये च विश्वेश्वरं सान्नपूर्णं काशीश्वरमस्य सर्वविधायुष्यकीर्तिसौख्यसमृद्धिसिद्धिसम्वर्धनाय।

वि०सं० २०५७, पौषशुक्लैकादशी ७/१/२००१

**शिवजी उपाध्यायः**
आचार्योऽध्यक्षः साहित्यविभागस्य
सम्पूर्णानन्दसंस्कृत विश्वविद्यालयः वाराणसी

# मङ्गलाभिनन्दन

साहित्यशास्त्र के विद्वान् पण्डित श्री रमापद चक्रवर्ती द्वारा सम्पादित **''गङ्गाज्ञान-महोदधिः''** नामक परम-पावन ग्रन्थरत्न का मङ्गलाभिनन्दन लिखते हुए मैं अपने को धन्य मान रहा हूँ कि अपने सहाध्यायी की सुदीर्घ तपस्या मूर्त रूप में प्रस्फुटित हो रही है। धन्य है वह विश्वविख्यात **सरस्वतीभवन पाण्डुलिपि-पुस्तकालय**, जिसके क्रोड में यह **'गङ्गाज्ञानमहोदधि'** हिलोरें लेता रहा। धन्य हैं वे ऋषिकल्प मनीषी, जिन्होंने इतनी बड़ी गङ्गाज्ञानधारा को वाङ्मयी मूर्ति के रूप में सरस्वतीभवन पुस्तकालय में संगृहीत किया। मैं उस सरस्वतीभवन-पुस्तकालय की देहरी की धूलि को प्रणाम करते हुए अपने सहाध्यायी **पं० रमापद चक्रवर्ती** को धन्य मानता हूँ, जिन्होंने आजीवन सरस्वतीभवन के क्रोड में वात्सल्य पाकर 'गङ्गाज्ञानमहोदधि' जैसी विष्णुपदी गङ्गा की वाङ्मयी मूर्ति को विद्वत्समाज के समक्ष प्रस्तुत करते हुए उसके पावन तुषार-बिन्दुओं से सारी मानवता को पावन बनाने का युगान्तरकारी प्रयास किया है।

**पं० श्री रमापद चक्रवर्ती** की कठोर साधना के फलस्वरूप यह **'गङ्गाज्ञानमहोदधि'** नामक ग्रन्थरत्न आकार ग्रहण करता हुआ आकर ग्रन्थों का शिरमौर सिद्ध होगा, जिसके आकरत्व की अतल गहराइयों से गङ्गाविषयक नाना प्रकार के ज्ञान शाखा-प्रशाखा रूप से सदा-सदा मानवता को अनुप्राणित करते रहेंगे। श्री चक्रवर्ती का यह एक ही प्रयास यह सिद्ध करने के लिए पर्याप्त है कि सरस्वतीभवन को केन्द्र बनाकर इस प्रकार के सम्पूर्ण जीवनसाध्य प्रयास हों, तो पुङ्खानुपुङ्ख रूप से अनगिनत ज्ञान-शाखाओं का प्रस्फुटन हो सकेगा। सम्पूर्णानन्द संस्कृत विश्वविद्यालय ने इसीलिए अपने कुलगीत में सरस्वतीभवन को रेखांकित करते हुए बड़ी मार्मिक भावाभिव्यक्ति की है—

**हृदब्जे वहन् भारतज्ञामदीपः सदा विश्वविद्यालयोऽयं विभाति।**

वास्तव में सरस्वतीभवन पाण्डुलिपि-पुस्तकालय भारत का ज्ञानदीप है और उस ज्ञानदीप के मसृण प्रकाशालोक में मानवता को आशा, उत्साह, उन्मेष तथा नवनवोन्मेष प्राप्त होते रहेंगे। सरस्वतीभवन-पुस्तकालय पं० रमापद चक्रवर्ती जैसे शूरमाओं का आह्वान करता है कि वे उसके क्रोड में अवगुण्ठित ज्ञान-विज्ञान की महोदधियों को प्रवाहित करने में अपनी आत्माहुति दें।

यह **'गङ्गाज्ञानमहोदधि'** माहात्म्य-तरङ्ग, काव्य-तरङ्ग, समर्चा-तरङ्ग रूप तीन तरङ्गों में विभक्त है। इसकी सभी तरङ्गें **'गङ्गाज्ञानमहोदधि'** में अनुमेलित होती हुई उस वैदिक भास्वरता को रूपायित करती हैं, जिसमें उद्घोष किया गया है कि गङ्गा ऋग्वेद की मूर्ति है, यमुना यजुर्वेद की मूर्ति है, नर्मदा सामवेद की मूर्ति है तथा सरस्वती अथर्ववेद की मूर्ति है। इन सभी मूर्तियों से प्रवाहित ज्ञानद्रव तो महोदधि में ही आश्रय पाता है, जिसका उल्लेख काशीखण्ड में हुआ है—

**ऋग्वेदमूर्तिर्गङ्गा स्याद्यमुना च यजुर्ध्रुवम्।**
**नर्मदा साममूर्त्तिस्तु स्यादथर्वा सरस्वती॥** *(का.ख.९२.६)*

'गङ्गासहस्रनाम-स्तोत्र' में गङ्गा की एक संज्ञा 'आश्चर्यमूर्त्तिः' पठित है

**आश्चर्यमूर्त्तिरायुष्या ह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता ।**
**आप्यायिन्याप्तविद्याऽऽख्या त्वानन्दाऽऽश्वासदायिनी ।।**

*(गङ्गासहस्रनामस्तोत्रम्-२५)*

पं० श्री चक्रवर्ती के द्वारा मधुकरी वृत्ति से पुञ्जीभूत यह **'गङ्गाज्ञानमहोदधि'** वास्तव में आश्चर्यमूर्ति कहा जाएगा; क्योंकि इस ग्रन्थ में माँ गङ्गा की तरह पदे पदे आश्चर्यों, महाश्चर्यों का अनुमेलन हुआ है। इस 'गङ्गाज्ञानमहोदधि' के संकलन, सम्पादन में जो तप हुआ है, वह आश्चर्यजनक है, इसकी रूपाकारिता उससे भी आश्चर्यमयी है, सरस्वतीभवन पुस्तकालय उससे भी बड़ा आश्चर्यस्वरूप है और रूपाकार ग्रहण करने जा रहा यह **'गङ्गाज्ञानमहोदधिः'** और भी बड़ा आश्चर्य है। इन समस्त आश्चर्यों को अपनी तितिक्षा, अपनी वाङ्मधुरिमा, अपनी तपःसाधना एवं अपनी दुर्धर्ष जिजीविषा से इस 'वाङ्मयी तनु' में समेटते हुए जिस महोदधि को श्री चक्रवर्ती ने सारस्वत क्षेत्र में प्रवाहित करने का साहस किया है, वह निश्चय ही मानवता की अवगुण्ठित चिन्मय ज्ञान-लहरियों को उत्तालता प्रदान करेगी।

जैसा कि श्री चक्रवर्ती ने अपने 'आमुख' में इस तथ्य की ओर सङ्केत किया है कि ११वीं शताब्दी से लेकर १८वीं शताब्दी तक विष्णुपदी श्रीगङ्गा से सम्बन्धित ५२ पाण्डुलिपियों का संग्रह इस **'गङ्गाज्ञानमहोदधि'** में हुआ है। यह वाङ्मयी तनु ८०० वर्षों तक रचित-विरचित-प्रचित होती रही; किन्तु उसके बाद भी २०० वर्षों तक इसकी भास्वर आभा से मानवता वंचित रही। इसका मुख्य कारण है— हमारा आलस्य। माँ गङ्गा को श्रीगङ्गासहस्रनामस्तोत्र में "आलस्यघ्नी" भी कहा गया है—

**आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी ।**
**इरावतीष्टदात्रीष्टा त्विष्टापूर्तफलप्रदा ।।**

*(गङ्गासहस्रनामस्तोत्रम्-२६)*

इस मङ्गलाभिनन्दन का समापन करते हुए मैं माता गङ्गा से यह प्रार्थना करता हूँ कि हमारे पूँजीभूत आलस्य का वे विदारण करें एवं हमारे सहाध्यायी **पं० चक्रवर्ती** को वह शक्ति प्रदान करें, जिससे वे इसी प्रकार की ज्ञान-महोदधियों को अवगुण्ठनों से बाहर ला सकें। मैं श्री चक्रवर्ती के गुरुकल्प, मनीषी एवं शास्त्रमहोदधि अपने सहाध्यायी **आचार्य श्री शिवजी उपाध्याय** के प्रति हार्दिक नमन करता हूँ, जिन्होंने माँ गङ्गा की इस वाङ्मयी मूर्त्ति के परिष्कार में अपने बहुमूल्य ज्ञानानुभव का विनियोग किया है। हमें अपने इन दोनों सहाध्यायी मित्रों पर गर्व है।

वाराणसी
वसन्तपञ्चमी,
वि०सं० २०५७

**हरिश्चन्द्र मणि त्रिपाठी**
***निदेशक***
**प्रकाशन-संस्थान**
सम्पूर्णानन्द संस्कृत विश्वविद्यालय

# गङ्गा-तत्त्व एवं प्रस्तुत संग्रह

भारतीय वाङ्मय में गङ्गा को भुक्ति-मुक्ति प्रदायिनी, कल्याणकर्त्री, सञ्जीवनीरूपा, परमशान्ता, वरदायिनी, प्रणत जन की दुःखहारिणी, दुरित विनाशिनी, जगन्माता, मङ्गलमूर्ति, नारायणीरूपा, मूलप्रकृति, शिवस्वरूपा, विष्णुस्वरूपा, ब्रह्म रूपिणी, सर्वदेवस्वरूपिणी, त्रिविध तापहन्त्री संसार रोग की औषधमूर्ति, शान्तिसन्तानकारिणी, संसारविषनाशिनी, शुद्धिविधायिनी, पापों की शत्रुस्वरूपा जैसे शतशः विशेषणों से विभूषित किया गया है।

गङ्गा के माहात्म्य के प्रसङ्ग में गङ्गासहस्रनामस्तोत्र में कहा गया है कि संसार में पुण्यजल सम्पन्न अनेक सरोवर तथा नदियाँ हैं, जितात्मा लोगों से अधिष्ठित कितने ही तीर्थ हैं परन्तु प्रत्यक्ष फलजनक एवं महामहिमामण्डित होने पर भी वे गङ्गा के कोट्यंश (करोड़वें भाग) भी नहीं है। उसका जल अमृतोपम है, जो दुःख दैन्य, सन्ताप, पाप आदि को हर लेता है। यह माना गया है कि पापतापतप्तों की पीड़ा और ताप को दूर करने में गङ्गा के सदृश दूसरा कोई नहीं है, सभी तीर्थ, तपोवन और सिद्धिक्षेत्र गङ्गा ही है, उसमें स्नान करने वाले वहाँ निवास करते हैं, जहाँ की भूमि हिरण्मयी और वृक्ष कामनाओं की सिद्धि करने वाले हैं।

सम्भवतः इसी कारण यह माना गया है कि गङ्गा की महिमा का कीर्तन, दर्शन, स्पर्शन, पान और स्नान करने से क्रमशः दशोत्तर गुण पुण्य होता है। किं बहुना, 'गङ्गे ! तव दर्शनात् मुक्तिः' का उद्घोष मात्र उसके माहात्म्य को सिद्ध करने के लिये पर्याप्त है। पौराणिक आख्यानों से यह भी ज्ञात होता है कि गङ्गा वामन के विराट् पदनख से निःसृत होकर ब्रह्म-कमण्डलु में स्थित हुईं, भगीरथ-तप से द्रवित होकर शिव की जटा में उलझ गईं, पुनः भगीरथ अनुगामिनी होकर कुपित जह्नु के उदरस्थ होने और उनके द्वारा मुक्त किये जाने के बाद सगर-पुत्रों की उद्धार कर्त्री बनीं, इसी लिये विष्णुपदी, भागीरथी एवं जाह्नवी जैसे नामों से पुकारा जाता है।

गोमुख से गङ्गासागर तक गङ्गा का एक अविच्छिन्न प्रवाह है सागर में उसकी सत्ता विलीन हो जाती है, परन्तु भारतीय वाङ्मय में गङ्गा विषयक साहित्य प्रवाह के कहीं विलीन होने के लक्षण नहीं मिलते। ऋग्वेद, शतपथ तथा ऐतरेय ब्राह्मण तैत्तिरीय आरण्यक, कात्यायन श्रौतसूत्र जैसे वैदिक साहित्य में गंङ्गा विषयक जो संक्षिप्त उल्लेख मिलता है, उसे विभिन्न पुराणों, रामायण, महाभारत जैसे आकर ग्रंथों में प्रचुर विस्तार मिला। संस्कृत भाषा के महान साहित्यकारों ने अपने ग्रन्थों में जहाँ उसका आदरपूर्वक उल्लेख किया है, वहीं गङ्गा पर स्वतन्त्र काव्य रचना हुई है और वही प्रवृत्ति भारतीय प्रादेशिक भाषाओं में भी परिलक्षित होती है।

भारतीय जन-मानस में गङ्गा किस प्रकार रच-बस गई हैं, लोक साहित्य उसका प्रमाण है। हरिद्वार और प्रयाग के कुम्भ मेले इस बात के प्रत्यक्ष प्रमाण हैं कि गङ्गाजल के दर्शन, स्पर्शन, मज्जन और पान के प्रति जन सामान्य के मन में अगाध आस्था है। आज के परिवेश में वैज्ञानिक भले ही विभिन्न परीक्षणों के माध्यम से गङ्गाजल के प्रदूषित होने तथा स्नान-पान के वर्जन का उद्घोष करें परन्तु उससे जन सामान्य की आस्था और भावनाओं पर कोई प्रभाव पड़ने वाला नहीं, उसकी चेतना महर्षि वाल्मीकि की इस भावना से कि तुम्हारे तट पर निवास करते हुए तुम्हारा जल पीते हुए, तुम्हारी लहरों को देखते हुए, तुम्हारा नाम-स्मरण करते हुए, तुम्हारे प्रति अर्पित होते हुए मेरा शरीर व्यय हो जाय' गहराई तक जुड़ी हुई है। महर्षि व्यास के वचनों का विश्वास करते हुए भगवती गङ्गा की जन सामान्य आज भी उन्हीं के शब्दों में स्तुति करता है—

**सर्वस्य सर्व व्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तुते।**<br>**संसारविषनाशिन्यै जीवनायै नमोऽस्तुते॥**

भारतीय संस्कृति के मूल तत्त्वों से अनभिज्ञ व्यक्ति भारतीय जन मानस की इस आस्था और विश्वास को भले ही उसकी रूढ़िवादिता, अज्ञान और अन्धविश्वास निरूपित करे परन्तु जिसे भारतीय अध्यात्म और दर्शन की जानकारी है, वह वैज्ञानिकों के उद्घोष से तनिक भी विचलित नहीं होता। वह जानता है कि वर्तमान, काल के अनन्त प्रवाह का एक बूँद मात्र है और प्रत्यक्ष-असीम पूर्ण सत्ता के एक अंश की बाह्य झलक मात्र। व्यावहारिक जगत् में यह सत्य है कि प्रत्यक्ष का कोई भी अपलाप नहीं कर सकता। परन्तु यह भी सच है कि प्रत्यक्ष किसी व्यक्ति या समूह का एकदेशीय एवं एककालिक सत्य है, और यह आंशिक सत्य चरम सत्य न होकर सत्याभास भी हो सकता है।

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।**<br>**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥**

गङ्गा उसी पूर्ण सत्ता की अभिव्यक्ति का प्रतीक है। वह विष्णुपदी है, विष्णु वह है जिसने समस्त चराचर को व्याप्त कर रखा है। अभिव्यक्ति के पूर्व वह ब्रह्मा के कमण्डलु में स्थित रहती है। निखिल ब्रह्माण्ड ही तो ब्रह्मकमण्डलु है। ब्रह्म कमण्डलु से निःसृत होकर वे भगवान् शिव की जटा में उलझ जाती है, भगवान् शिव का अपर नाम व्योमकेश है और आकाश का केश ही तो है आकाश-गङ्गा। भगीरथ प्रयत्न और व्योमकेश की कृपा से वे पृथ्वी पर आकर गङ्गा (गाम् गतेति ततो गङ्गा) कहलाती है, पृथ्वी पर अभिव्यक्त होती हैं—गो-मुख से जो गति या प्रवाह का प्रतीक है। वेग के अहंकार से जह्नु के आश्रम या यज्ञ को नष्ट करती है, जिससे गति अवरुद्ध होती है, पुनः जाह्नवी रूप पाकर कपिलमुनि के पाताल स्थित आश्रम में अहंकारी सगर पुत्रों का उद्धार करती है। गङ्गा का केवल भौतिक रूप नहीं है, उनका आधिदैविक एवं आध्यात्मिक स्वरूप है, अतएव वे त्रिपथगा है, उनका चिन्मय स्वरूप है, इसीलिये वे विष्णुपदी हैं।

वे केवल एक नदीमात्र नहीं है अपितु जल का प्रतीक है, जल जो जीवन का मूलाधार है, जिसके बाह्य रूप में सम-रसता परिलक्षित होती है और अन्तस् में निहित रहता है प्रचण्ड तेज और ऊर्जा।

अपने भौतिक रूप में भी गङ्गा अनेक साम्राज्यों एवं सभ्यताओं के उत्थान-पतन की साक्षी रही है। अपनी सहायक नदियों के साथ उन्होंने संसार के विशालतम मैदान की संरचना की है, उसके तट उन ऋषियों मुनियों के तप स्थान रहे हैं, जिन्होंने जन सामान्य में विश्व-बन्धुत्व एवं सह अस्तित्त्व की भावना जागृत की है और अपने ज्ञान-प्रभा से विश्व को आलोकित किया है। नदी-नालों को अपने में समेटते हुये, उसे अपना नाम देते हुये और स्वयं अविकृत रहते हुये मार्ग के अवरोधों को दूर कर निरन्तर गतिशील बने रहने का नाम ही तो गङ्गा है। हमने अपने सामाजिक जीवन में जब तक इस गङ्गा तत्त्व को आदर्श के रूप में स्वीकार कर आचरण में ढाला, प्रशस्त रहे और जहाँ चूके वहीं पतनोंन्मुख हुये। आज के परिवेश में विजेता शक, यवन, हूण, कुषाण आदि के वंशजों का स्वतन्त्र रूप से अस्तित्त्व नहीं है, वे समाज रूपी गङ्गा की मुख्य धारा में विलीन हो गये।

हम भारतीयों के लिये गङ्गा मां है, उनके द्वारा निर्मित विशाल मैदानों के शस्य से हमारा पालन होता है, उनके प्लावन में भी सृष्टि के बीज निहित हैं। गङ्गा जीवन का प्रतीक है, क्योंकि जल ही जीवन है, वह कठोरता अथवा अहंकार के वन्धन को शिथिल करता है और ताप को सह्य बनाता है। वह सात्त्विकता की प्रतिमूर्ति हैं, उसके तटस्थित बनों ने जहाँ तपस्वियों को आश्रय दिया वहीं उसके फलों ने जीव हिंसा की संभावना समाप्त कर लोगों को शाकाहारी एवं फलाहारी बनाया। वह एक सन्देश है— राह की बाधाओं को काटते-छाँटते, तरह देते हुए निरन्तर गतिशील रहने की। वह एक प्रतीक हैं— आभ्यन्तरिक शुचिता की। इन दृष्टियों से गङ्गा एक भौतिक नदी मात्र न होकर एक समग्र जीवन दर्शन है।

गङ्गा के माहात्म्य स्तवन एवं पूजन के सन्दर्भ में पुराणों और महापुराणों, काव्यों में प्रासंगिक रूप से विस्तृत उल्लेख है तथा प्राचीन महाकवियों ने पारम्परिक रूप से इनका अनुसरण भी किया है। कालान्तर में गङ्गा विषयक स्वतन्त्र ग्रन्थ भी लिखे गये हैं। श्री रमापद चक्रवर्ती जो सम्पूर्णानन्द संस्कृत विश्वविद्यालय के सरस्वती भवन पुस्तकालय में सहायक पुस्तकाध्यक्ष के रूप में कार्यरत हैं, ने अत्यधिक अध्यवसाय से पाण्डुलिपियों का संकलन किया है। सरस्वती भवन में प्राय: १.१० लाख पाण्डुलिपियाँ हैं उनमें गङ्गा विषयक पाण्डुलिपियों को निकालना और उनका सम्पादन करना निश्चय ही श्रम साध्य कार्य था। **अल्प वेतन भोगी** होते हुये भी व्यक्तिगत रूप से एशियाटिक सोसायटी, नेशनल लाइब्रेरी और राजकीय संस्कृत विद्यालय कलकत्ता से पाण्डुलियों को प्राप्त करने का उनका कृत्य उनकी गङ्गा के प्रति गहरी आस्था को प्रदर्शित करता है।

१९८५-८६ से प्राय: एक दशक तक उनका संकलन कार्य चलता रहा। पाण्डुलिपियां देवनागरी के अतिरिक्त उड़ीसा, बंगला, मैथिली, शारदा एवं मिश्रित लिपियों में थी, फलत: उनका सम्पादन भी एक दुष्कर एवं कष्ट साध्य कार्य था। प्राय: ५२ पाण्डुलिपियों को संकलित कर उन्हें एकसाथ प्रकाशित करना, एक ऐसे व्यक्ति के लिये जिसे अपना जीवन निर्वाह कर पाना ही कठिन हो रहा हो, निश्चय ही दिवास्वप्न था परन्तु पूर्व काशी नरेश श्री विभूतिनारायण सिंह की अहेतुकी कृपा और मानव-संसाधन विकास मंत्रालय के अनुदान से यह कार्य संभव हो पा रहा है, यह श्रीचक्रवर्ती की मां गङ्गा के प्रति गहरी आस्था एवं विश्वास का ही फल है।

प्रस्तुत संग्रह में ११वीं से १८वीं शताब्दी के मध्य लिखी गई ५२ पाण्डुलिपियों का संकलन है, जो त्रिपथगा विषयक तीन तरंगों में विभक्त है— (१) गङ्गामाहात्म्य तरंग (२) गङ्गाकाव्यतरंग (३) गङ्गासमर्चातरंग। तीनों तरंगों के समुच्चय को 'गङ्गाज्ञानमहोदधि' की संज्ञा दी गई है। यह प्रो०विश्वनाथ वेंकटाचलम् पूर्व कुलपति, संस्कृत विश्वविद्यालय प्रो० विश्वनाथ भट्टाचार्य पूर्व संस्कृत विभागाध्यक्ष, काशी हिन्दू विश्वविद्यालय एवं प्रो० शिवजी उपाध्याय साहित्य विभागाध्यक्ष, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी जैसे मनीषियों की कृपादृष्टि एवं कुशल निर्देशन का ही प्रसाद है, जिससे ग्रन्थ की प्रस्तुत मूर्त स्वरूप मिल सका है। ऐसा विश्वास है कि गङ्गा विषयक यह संकलन गङ्गा प्रेमियों की अभिलाषा की पूर्ति करेगा क्योंकि गङ्गा विषयक प्रकाशित ग्रन्थों में अपने विस्तार के कारण यह अपूर्व है। आशा है विद्वज्जन में यह ग्रन्थ समादृत होगा।

कार्तिक पूर्णिमा
सं. 2057.

(कृष्णाकान्त उपाध्याय)
**वित्त अधिकारी**
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
एवं
महात्मागाँधी काशी विद्यापीठ, वाराणसी

# INTRODUCTION

*"Gaṅga-jñana-mahodadhi"* represents a valuable collection of Sanskrit treatises on Ganga, so far lying unnoticed in the form of manuscripts.

Sri Ramapada Chakravarti, the editor deserves sincere approbation of all the votaries of Sanskrit for his effort to bring to light these manuscripts lodged with the Sarasvati Bhavan Library of the Sampurnanand Sanskrit University. As a member of the staff of the Library, Shri Chakravarti came across a large number of manuscripts devoted to the most venerable river of the Hindus-the Ganga and got interested in them. He made careful transcripts of these in Devānagarī, as many of these were written in different scripts. He studied them and added editorial notes. Although a few of the smaller tracts were published in some Sanskrit journals, his desire to publish all these works in a volume remained unfulfilled untill he was blessed by the encouragement of the ex-Maharaja of Varanasi, Dr. Vibhuti Narayan Singh.

The Maharaja whose love of Sanskrit and traditional culture of India knows no bounds, encouraged Sri Chakravarti to collect and edit all the manuscripts for their publication in book form. It was the blessings and encouragement of the Maharaja that guided Sri Chakravarti, and the result is the present volume- *"Gaṅgā-jñana-mahodadhi."*

(2) *"Gaṅgā-jñana-mahodadhi."* comprises 52 works on the Ganga, composed since c. 1100 A.D. Though the theme is the same, the treatment of the subject matter differs. The editor has rightly divided the works broadly under three sections (1) Māhātmya-taranga (2) Kāvya-taranga and (3) Samarcā-taranga on the basis of the sentiment of the authors. Thus works collected in section one may be said to be Religio-philosophical, as these deal with the supernatural essence of the Ganga and her unique supremacy in delivering all the *puruṣārthas*. Section two consists of works of poetical nature. Authors of these tracts, some short and some quite long, are poets who have described the great river in standard poetic diction. This is the biggest section and shows up the poetic talent of the authors. We find here *stotraṣ, stutis* (hymas) etc in the form of Aṣṭakas. *Añjalis or Mangalas*, eulogising the divine stream in feeling phrases. Sentiment of devotion (bhakti) finds impressive expression in these lyrical pieces which are marked with all the standard poetic embellishments.

In addition to the Kāvya variety of stotras, this section consists of a Campū and a dramatic composition. Thus the Kāvya-tranga is representative of almost all the varieties of Kāvya-Kāvya proper, Campū and Drama.

Imaginative faculty of the poets is highly impressive and at times quite ingenuous. The drama, for example has the theme of supremacy of the Ganga which is debated by protagonists of different views.

The third section may be termed Ritualistic as it contains works on the worship of the river. The divine character of the Ganga dominates here and very detailed procedure of worship of the river-goddess is provided by the authors, including the *dhyāna and specific mantras* along with the *saṅkalpa-vākya.* The tradition of worshipping the Ganga gets corroboration from these works of the medieval period.

(3) The specific feature of ancient Indian culture has been the divinisation of natural elements. Nature *per se* does not enjoy importance in Indian thought-it assumes real significance on its spiritual essence. The idea of presiding deity for almost all the natural phenomena is clearly noticeable right from the Vedic period. *Ādhibhautika* (natural), *Ādhidaivika* (Supernatural) and *Ādhyātmika* (spiritual) are accepted as the three essential aspects of every object of our experience. True to this age-old tradition, the authors of all these works on Ganga, have stressed the natural aspect of the Ganga as a flow of life-giving water, the supernatural aspect as the nourishing mother and the spiritual aspect as the bestower of deliverance to mankind from all worldly bondages. It is a matter of great intellectual satisfaction that here in this volume one will be able to evaluate the impact of this great river on Indian life and thought.

To conclude, I feel happy to recommend to all lovers of Sanskrit literature this volume on the Ganga which represents Indian perception of the overall impact of the great river. In passing, it may also be pointed out that our awareness of the importance of rivers such as the Ganga is urgently needed in this present age of ecological disbalance. Indians will have to realise that the physical aspect of Ganga demands a greater attention in this age of widespread pollution as otherwise, its spiritual nature itself will be jeopardised. Mere prayers and rituals will not suffice to keep this life-line healthy and ever-flowing.

Let the Ganga grant us the energy to help maintain its flow from the hoary past to a bright future.

Varanasi
12-04-2000
Ramanavami

***Biswanath Bhattacharya***
Retd. Professor of Sanskrit
Banaras Hindu University

॥ श्रीगुरुः शरणम् ॥

## गाङ्गवाङ्मुखम्

# सर्वप्रथम विष्णुपदी को मैं साष्टाङ्ग करता हूँ

चौदहवर्ष पुराना स्वप्न— एक दिन ब्राह्ममुहूर्त में स्वप्न देखा कि माँ गङ्गा के जल के ऊपर चल रहा हूँ और चलते चलते कोई राजा राजवेश में घोड़ा चढ़ कर वहीं गङ्गा जल पर आया और मेरा हाथ पकड़ लिया। उसी क्षण नींद खुल गयी। मन इतना प्रसन्न हुआ जो अब तक कभी उतना प्रसन्न और आश्चर्य युक्त नहीं हुआ था। प्रातः अपने गुरु पं० द्विजेन्द्रनाथ मिश्र जी से मिल कर स्वप्न को सुनाया। उन्होंने कहा कि— स्वप्न अच्छा है। तुम माँ गङ्गा के विषय में अब से लिखो, पढ़ो, और तभी से गङ्गा के विषय में लिखना पढ़ना आरम्भ किया, लगभग सहस्राधिक मुद्रित संस्कृतवाङ्मय के ग्रन्थों को आद्योपान्त देखा। सभी ग्रन्थों में ग्रन्थकारों ने किसी न किसी प्रसङ्ग में गङ्गाजल, बालू, मिट्टी, दर्शन, स्पर्शन, अवगाहन आदि में गङ्गा की महिमा को दर्शाया है और मैंने उन सभी स्थलों को सहस्राधिक पृष्ठों में संकलित किया।

सन् १९५७ में वेद पढ़ने के लिये काशी आया था, जिस गुरु के निकट आया था वे उस समय काशी में नहीं थे अतः विवश होकर मणिकर्णिका घाट पर एक पञ्चमुखी शिवमन्दिर में दो मास तक रहा और डोडरमल के क्षेत्र में खाता रहा, एक दिन एक सज्जन के सलाह से मैं संस्कृत विश्वविद्यालय के तत्कालीन कार्यकारी उपकुलपति प्रातःस्मरणीय क्षेत्रेशचन्द्र चट्टोपाध्याय जी से मिला और कहा कि मैं वेद पढ़ने के लिये काशी आया हूँ इसके लिये मुझे सुविधा प्रदान करें। उन्होंने तत्काल मुझसे सन्ध्या का मार्जन एवं सूर्योपस्थान का मन्त्र पूछा। उपनयन के समय से ही प्रतिदिन सन्ध्या करता था, इन मन्त्रों को बता दिया, उन्होंने कहा ठीक है, कल आना दूसरे दिन मिला तो उन्होंने एक पत्र दिया और कहा कि सरस्वती भवन में पं० विभूति भूषण भट्टाचार्य से जा कर मिलो, पत्र दो। उनसे मिलने पर मुझको साथ लेकर अपने घर ले गये और रहने खाने एवं पढ़ने की सारी व्यवस्था हो गई। उनके पूज्य पिताश्री पं० ताराचरण साहित्याचार्यजी ने मुझ से कहा— तुम वेद पढ़ने आये हो ठीक है।उनके निर्देश से वेद पढ़ने के लिये मैं पं० अग्निष्वात्तशास्त्री जी के पास सूर्यकुण्ड पर जाने लगा, रोज जो मन्त्र उनसे पढ़ता था वह आकर उन्हें प्रतिदिन सुनाना पड़ता था। पूर्वमध्यमा परीक्षा वेद से दिया, दूसरे वर्ष पं० श्रीताराचरण जी ने कहा कि तुम अब साहित्य से परीक्षा दो और मुझको वे साहित्य विषय का रघुवंश पढ़ाने लगे, उनका मैं अन्तिम छात्र रहा।

छात्रावस्था से ही निबन्ध लिखने का अभ्यास पड़ गया, क्योंकि पं० श्रीरामशङ्कर भट्टाचार्य एवं पं० श्रीवासुदेवशरण अग्रवाल जी के निबन्धप्रतिलिपीकरण का कार्य करता था। अन्त में प्रातः स्मरणीय महामहोपाध्याय गोपीनाथ कविराज जी के द्वारा सम्पादित तन्त्र ग्रन्थों की मूलपाण्डुलिपि से जो विभिन्न प्राचीन लिपियों में थी उसके लिप्यन्तर का कार्य करने का सुयोग मिला और अभ्यास भी हुआ। साथ ही क्रमशः तत्कालीन पुस्तकाध्यक्ष डॉ० सुभद्र झा जी के आदेशानुसार शताधिक अप्रकाशित विभिन्न विषयों की पाण्डुलिपियों

का देश विदेश के विद्वानों के आवश्यकतानुसार लिप्यन्तरण एंव पाठोद्धार किया, सभी पाण्डुलिपियाँ प्राय: उन विद्वानों के द्वारा सम्पादित और प्रकाशित हो चुकी हैं। इस प्रकार मेरे परिश्रम को देखकर पुस्तकाध्यक्ष डॉ० सुभद्र झा जी ने १९६७ में पुस्तकालय में निर्वाध मेरी नियुक्ति कर दी।

सन् १९६२ से १९८० तक ३८ अड़तीस लेख एवं छ: आकाशवाणी के वार्तालेख विभिन्न विषयों के संस्कृत एवं हिन्दी भाषा में प्रकाशित एवं प्रसारित हुए हैं। हिन्दी निबन्ध लेखन के मेरे गुरु थे डॉ० शम्भुनाथ सिंह जी एवं संस्कृत के थे पं० द्विजेन्द्रनाथ मिश्र जी।

मुद्रित ग्रन्थों से गङ्गा की महिमा का संग्रह करते हुए एक दिन मन हुआ कि गङ्गा के विषय में पाण्डुलिपियाँ भी तो होंगी और पाण्डुलिपियों के सूचीपत्रों की खोज की तो ज्ञातं हुआ कि गङ्गा के विषय में लगभग १४२ पाण्डुलिपियाँ भारतीय विभिन्न लिपियों एवं विषयों में अपने देश एवं विदेशों के पुस्तकालयों में सुरक्षित है, तब से मेरा पाण्डुलिपियों की छायाप्रति प्राप्त करने का उद्योग चला और प्रथमत: सरस्वती भवन पुस्तकालय में उपलब्ध ७२ पाण्डुलिपियों की क्रमश: छायाप्रति प्राप्त की और यह कार्य रात्रि में एवं सुबह साम निरवच्छिन्न रूप से करता रहा। सभी पाण्डुलिपियों का लिप्यन्तर कर काशी के विशिष्ट विद्वानों को दिखाया। गुरुजनों ने कार्य की सराहना की, अन्त में एक दिन काशी के पूर्व नरेश डॉ० विभूतिनारायण सिंह जी से मिला और अपने इस कार्य को दिखाया तो उन्होंने इस कार्य की भूरिश: प्रशंसा की और अत्यन्त प्रोत्साहन दिया और कहा कि आप प्रति गुरुवार को मेरे पास आकर गङ्गा जी की महिमा को सुनाइये, पुन: इस क्रम में उन्होंने दो पाण्डुलिपि मुझे दिखायी एक अयोध्यामाहात्म्य दूसरा मिथिलामाहात्म्य जो अत्यन्त प्राचीन एवं मिश्रित लिपियों में थी। इन दोनों पाण्डुलिपियों को मुझे लिखने के लिये दिया, मैंने उक्त दोनों ग्रन्थ लिखकर उन्हें दे दिया इस पर उन्होंने कहा कि आप बहुत काम के हैं। यह क्रम दो वर्ष तक चला और विभिन्न पुराणों में एवं उन पाण्डुलिपियों में विभिन्न प्रकार की गङ्गावतरण तथा महिमा आदि प्रति गुरुवार को उन्हें सुनाता रहा। महाराज अन्तिम दिन २२/१२/२००० तक समयानुसार गङ्गा की कथा सुनते रहे और इस गङ्गाज्ञानमहोदधि के प्रकाशन को शीघ्र करने का संकेत करते रहे।

पाण्डुलिपियों का लिप्यन्तर पाठोद्धार करके देखा कि ग्रन्थों में लिपिकार और ग्रन्थकार का प्रमाद प्राय: प्रत्येक पंक्ति में है, इसे पूर्णरूप से शोधन करने के लिये किसी प्रबुद्ध विद्वान् की सहायता नितान्त आवश्यक है, इस दृष्टि से मैंने कुछ गुरुओं के समक्ष अपनी समस्या रक्खी प्राय: सभी गुरुओं ने मेरी ही प्रशस्ति की, आपने इतने सारे पाण्डुलिपियों का पाठोद्धार किया और सब प्रकाशित हो गया और अब गङ्गा जी की पाण्डुलिपियों के पाठशोधन में आपको संशय हो रहा है, आप सब ठीक ठीक कर लेंगे।

जैसे गङ्गा के जल पर आजकल के वैज्ञानिकों की शुद्धता पवित्रता पर शङ्का बनी है, उसी प्रकार लगा कि गङ्गा साहित्य जो ११वीं शताब्दी से १८वीं शताब्दी तक पूर्व सूरियों द्वारा विभिन्न विषयों में लिखा गया है उस पर भी लिपिकार का प्रमाद मुझे परिलक्षित होने लगा, और इसी क्रम में मैं प्रो० डॉ० विश्वनाथ भट्टाचार्य जी (का०हि०वि०वि०) से मिला, उन्होंने देख कर कहा कि यत्र तत्र अशुद्धियाँ तो हैं, अत: उन्होंने एक 'गङ्गाभक्तिचन्द्रिका' नामक एकाङ्कि भक्ति एवं हास्य रस के नाटक को पूर्ण अवलोकन कर शुद्ध कर दिया एवं

कहा कि सं.सं.वि.वि. में प्रतिभावान् पण्डित प्रो० शिवजी उपाध्याय तुम्हारे इस कार्य में अवश्य सहायता करेंगे उनसे विधिवत् निवेदन करो।

प्रोफेसर शिवजी उपाध्याय मेरे बाल्यावस्था के सहपाठी होने पर भी मैं उन्हें गुरुवत् श्रद्धा करता था, इस विषय पर जब उनसे निवेदन किया तो उन्होंने जैसे इस कार्य के कर्णधार के रूप में मेरी सहायता की, उनकी कुशाग्रप्रतिभा, निष्ठा, सात्त्विकता एवं साहित्य साधना से मैं इतना प्रभावित हुआ कि लगा मुझे स्वयं शंकर जी ही काशी में सर्वविध सहायता के लिये मिल गये हैं। मैंने नियमित प्रातः सायं यह कार्य विगत ८ आठ वर्षों से उनके सान्निध्य में किया तथा उनकी पाण्डित्यपूर्ण प्रतिभा से यह विशाल कार्य शुद्ध रूप से सम्पन्न हुआ। इस कार्य का सम्पूर्ण श्रेय मैं अपने शिक्षागुरु एवं दीक्षागुरु प्रो० शिवजी उपाध्याय को समर्पित करता हूँ।

जिनकी मर्मस्पर्शी वाणी गङ्गा की नीर की तरह मुझे सदा मानसिक उत्साह आध्यात्मिक प्रेरणा देती रही है, उन महामानव पुण्यश्लोक विश्व की विभूति काशी नरेश डॉ० विभूति नारायण सिंह जी के प्रति मैं हार्दिक कृतज्ञता व्यक्त करता हूँ। साथ ही प्रो० वी० वेंकटाचलम् पूर्व कुलपति (सं०सं०वि०वि०) एवं कामेश्वर सिंह दरभंगा विश्वविद्यालय तथा प्रो० विश्वनाथ भट्टाचार्य संस्कृतविभागाध्यक्ष (का०हि०वि०वि०) एवं पं० श्री कृष्णकान्त उपाध्याय, वित्ताधिकारी (सं०सं०वि०वि०) वाराणसी एवं डॉ० हरिश्चन्द्रमणित्रिपाठी निदेशक प्रकाशन (सं०सं०वि०वि०) ने जो महानुभाव प्रारम्भ से ही इस कार्य को पूर्ण करने के लिये मेरा उत्साह वर्धन करते रहे हैं एतदर्थ मैं उन सबका ऋणी हूँ।

काशी श्रीमठ के जगद्गुरु स्वामी रामानन्दाचार्य श्रीरामनरेशाचार्य जी, तपोमूर्ति गणेशानन्द जी बेत्तीना बौमेर एवं ख्रीस्टोफ़र मिन्कोव्स्की जी ने पाण्डुग्रन्थों के उद्धार फोटोस्टेट आदि कार्यों में सहयोग एवं ग्रन्थ प्रकाशन के लिये शुभाशंसा प्रदान की, एतदर्थ मैं उनके प्रति हृदय से कृतज्ञ हूँ। मुद्रण कार्य के लिये श्री विपिनशंकर पाण्ड्या ''राघव ऑफसेट, बैजनत्था'' जी ने अपने विशिष्ट व्यक्तित्व, शालीन एवं कुलीन व्यवहार दक्षता से इस ग्रन्थ का मुद्रण कार्य कराया है। उनकी सर्वविध उन्नति एवं कीर्त्ति की प्रार्थना मैं व्योमकेश गङ्गाधर जी से करता हूँ।

मेरे अनुजकल्प, घनिष्ठ मित्र, विविधविषयज्ञ डॉ० गिरीशदत्त पाण्डेय जी ने पाण्डुलिपि एवं प्रूफ संशोधन में अत्यन्त प्रशंसनीय परिश्रम किया है, इसके लिये मैं उनके प्रति हार्दिक आभार व्यक्त करते हुये उनके सर्वविध अभ्युदय के लिये भगवती पतितपावनी जगज्जननी जाह्नवी से सदा प्रार्थना करता हूँ।

सरस्वती भवन पुस्तकाकलय के पाण्डुलिपियों के सहायक छायाकार श्री सूर्यकान्त चौधरी को मैं अशेष धन्यवाद देता हूँ जिन्होंने अत्यन्त तत्परता से प्राचीन एवं जीर्ण पाण्डुग्रन्थों की अति सावधानी से एवं सुन्दर रूप में छायाप्रतियाँ उपलब्ध कराये हैं।

*विद्वज्जनचरणानुरागी—*

**रमापद चक्रवर्ती**

# भूमिका

पृथ्वी जलं तेजो वायुराकाश इत्येषा पञ्चरूपात्मिका भौतिकी सृष्टिरुच्यते। तदुत्पत्तौ पृथ्वीजलयोर्मुख्यत्वमस्ति। रसतन्मात्रया जलं परिणतिमुपागतम्। एतस्मिञ् जलात्मके महाभूते सूक्ष्मता मृदुला स्निग्धता गुरुता शुक्लता शीतलता प्रभाववत्ता सन्धानवत्ता रक्षणीयता पवित्रतेति रसतत्त्वानि सर्वदा विद्यमानानि सन्ति।

भारतवर्षे जलमहाभूतस्य सर्वस्वाकारतया गङ्गैव सर्वहितकारिका, अनन्तकालाद् वैदिकानामृषीणां मनीषिणाञ्च ज्ञानमञ्जरी तदीयप्रेरणास्रोतः स्वरूपा समवर्तत।

**स योऽपो ब्रह्मसमुपास्ते आप्नोति सर्वान् कामान्।**

—छान्दोग्योपनिषद् ७/१०/१२

यश्च सर्वव्यापकस्य जलस्य गुणेषु परिणामेषु च निमित्तरूपं ब्रह्म उपास्ते स स्वाभिलषितसिद्धिमुपलभते, जले सत्वरजसोर्वृद्धिस्तमसश्च न्यूनता भवति। अस्मादेव कारणात् तज्जलं सततं गतिशीलं सद् भूगतवाष्पीयसूक्ष्मरूपतया व्योमचरिष्णु तथा सूक्ष्मातिसूक्ष्मरूपतया शरीरस्य तन्तुषु प्रवहत् प्राणशक्तिरित्युच्यते।

इमामेव जलमहाभूतस्वरूपां गङ्गां वैदिकर्षयो ज्ञानमञ्जरीति मत्वा भक्त्याऽऽराध्यविषयीकृत्य तन्निष्ठब्रह्मचेतनाशक्तेरनुभूतिद्वारा ते तपस्विनस्तां मोक्षस्य हेतुरित्यमन्यन्त; तथा च वैज्ञानिकास्तां कर्मधारायाः परियोजनकारणत्वेन स्वीचक्रुः। मूलतश्च पृथिवीजलयोरुभयोर्महाभूतयोः प्रत्यक्षदृश्यमानतया तदुभयं ज्ञानविज्ञानात्मकं ब्रह्मेति वेद्यम्। अस्या एव परमात्मसत्ताया मूर्तमूर्तिर्गङ्गाऽस्ति।

संसारेऽस्मिन् सर्वास्वपि नदीषु गङ्गा शीर्षस्थानं दधाति। भारतीया अनादिकालाद् गङ्गाया जलमयीं मूर्तिं भक्तेरूपासनाया ज्ञानस्य कर्मणश्च विषयीकृत्य तत्र देवीत्वमध्यारोप्य स्वकीयकल्याणकारणत्वेन प्राप्तप्रतिष्ठां मन्यन्ते।

गङ्गेयं निरवधिस्वरलहरी अनन्तप्रतिध्वनिर्महाकालसङ्गीतश्रुतिरस्ति। चेतनान्तर्जायमानाव्यक्तनादो यदा समुद्भवति तदा प्राणानां सम्पूर्णव्योम्नि ब्राह्मज्योतिरुद्गच्छति। इयमेवानिर्वचनीयतरलतरकाव्यगन्धा ज्योत्स्ना देदीप्यमाननिरवच्छिन्नसुधाम्बुधारा गङ्गेति संज्ञया सङ्गीयते।

चेतनाविज्ञानानुसारं गङ्गा परा सत्ता पयस्विनी स्वर्गङ्गा देवधुनीत्युच्यते। ऋषिकल्पनया गङ्गेयं चेतनात्मिकाया भुवो नदीति कथ्यते। सेयं गङ्गा त्रिविधरूपेण दैहिकदैविकभौतिक-जाग्रत्स्वप्नसुषुप्तिमनोबुद्ध्यहंकारसत्यशिवसुन्दरादिस्वरूपा सकलधरातलेषु प्रवहति। योगिक-शब्दाभिधानेन एषा तुरीयावस्था निगद्यते। युद्धस्थले कर्तव्याकर्तव्यनिर्णये भ्रान्तमतिमर्जुनं निजोपदेशामृतपानं कारयता भगवता कृष्णेन प्रोक्तम्—

**स्रोतसामस्मि जाह्नवी।** (१०/३१ गीता)

अनया भगवदुक्त्या स्पष्टं प्रतीयते यद् गङ्गा भगवद्रूपैव तत्र नास्ति कश्चन भेदः। नदीषु देवतात्वारोपः ऋग्वेदे कृतो दृश्यते, यथा—

**पूषा विष्णुर्हवनं मे सरस्वती अवन्तु सप्त सिन्धवः ।**
**आपो वातः पर्वतासो वनस्पतिः शृणोति पृथिवी हवम् ॥**

(ऋक्० ८/५४/४)

एवञ्च ऋग्वेद एव सप्तसिन्धूनुद्दिश्य आपो मातरः सप्त इत्युक्त्वा सप्तसिन्धूनां जगन्निर्मातृत्वं प्रतिपादितम्। किञ्च ऋग्वेद एव एतादृशानि पञ्चदश स्थलानि उपलभ्यन्ते यत्र सप्तसिन्धवः, सप्तनद्यः, सप्तप्रवतः, सप्तसुवत इत्यादयः प्रयोगाः प्राप्यन्ते। आसां सप्तनदीनामभिप्रायः—

**इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।**
**असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥**

(ऋक्० १०/७५/५)

दातुः श्रेष्ठत्वं दर्शयितुं तस्योपमा गङ्गाया उन्नतकूले जायमानेन वृक्षेण सह दीयते यथा—

**अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात् ।**
**उरूः कक्ष्यो न गांग्यः ।** (ऋक्० ६/४५/३१)

शिवस्वरोदये तान्त्रिके ग्रन्थे गङ्गा इडा यमुनापिङ्गला, सरस्वती च सुषुम्नेति निर्दिष्टा, यथा—

**इडा गङ्गेति विज्ञेया, पिङ्गला यमुना नदी ।**
**मध्ये सरस्वती विद्यात् प्रयागादिसमस्तया ॥३४७॥**

एवञ्च संस्कृतवाङ्मयस्य सर्वेषु ग्रन्थेषु यथाऽष्टादशसु पुराणेषूपपुराणेषु रामायणे स्मृतिमीमांसादर्शने ज्योतिषे वेदान्ते काव्येषु कर्मकाण्डधर्मशास्त्रबौद्धधर्मादिग्रन्थेषु सर्वत्रगङ्गाया वैशिष्ट्य महत्त्वञ्च आचार्यैर्मनीषिभिश्च भूयसा वर्णितमुपलभ्यते। अतश्च भगवती गङ्गेयं वस्तुतो लोकमाता विश्वपावनी च प्रतितिष्ठति। अस्या भगवत्याः सुरस्रोतस्वत्या आश्रयमालम्ब्य मानवो न केवलां भौतिकोन्नतिं प्रत्युत मानवतामप्युपकर्तुमाध्यात्मिकीमुन्नतिं च विधातुं शक्नोति।

गङ्गा भारतीयानामनादिजीवनधारया सहानुस्यूता प्रवहन्ती चिरतराद् वर्तते। समग्रभूण्डले प्राचीनयुगे प्रायो नदीविशेषश्रयणादेव मानवसभ्यताया विकासः समभूत्। अस्मिन्नेव क्रमे भारतस्य वैदिकसभ्यतायाः समुन्नयनं हिमालयस्य गङ्गायाश्च सन्निधानेन समभवत्। अतश्च तदीयविकासस्य स्रोतो गङ्गेति सुतरां वक्तुं शकयते। भारतदेशे गङ्गाया अनितरसाधारणं वैशिष्ट्यं मनीषिभिर्वैज्ञानिकैरन्यैश्च तद्विद्भिः प्राक्कालादद्यावधि स्वीकृतम्। वस्तुतस्तु वेदो हिमालयो गङ्गा चेतित्रयी भारतभूमेः प्राचीनकालाद्द्यावधि ज्ञानविकासस्य संस्कृतेः सभ्यतायाश्च दृढ़तमा सर्वोत्तमा च परिचायिकाऽस्ति।

एतादृश्या भगवत्या गङ्गानद्या आश्रयमालम्ब्यानादिकालात् प्रतियुगं भारतीया मनीषिणः सुकवयो लेखका भक्ताश्च तत् स्वरूपवर्णनं स्तुतिगानं गुणाख्यानं तथा पूजनविधिनिर्वचनमित्यादि-नानाविषयकान् ग्रन्थान् प्रणिन्युः। महर्षयो मनीषिणश्च वेदोपनिषत्पुराणेषु गङ्गाया महात्म्यं कवयश्च कवित्वप्रतिभावैशिष्ट्येन पुराणोक्तकथाख्यायिका आधारीकृत्य काव्यत्वगुणसम्पन्ना अनेका रचनाश्चक्रुः। एवं च भक्ता उपासकाः साधकाश्च श्रुतिस्मृतिपुराणानामाधारेण तद्भक्तिं पूजामुपासनां विधाय तद्विषयकान् ग्रन्थान् व्यरचयन्।

भारतीयश्रद्धालुमानवानां द्रढीयानयं विश्वासो यद् 'विष्णुपादोद्भूताया' गङ्गाया माहात्म्यकीर्तनेन तदर्चनेन तद्भक्तिमयकाव्यसाधनामाध्यमेन च विष्णुपदं विष्णुलोकञ्च प्राप्तुं शक्यते।

प्रस्तुतोऽयं 'गङ्गाज्ञानमहोदधिः' इत्याख्यो ग्रन्थोऽद्यावधि न प्रकाशितो गङ्गाविषयकः पाण्डुलिपीनां विविधविषयात्मकसंग्रहोऽस्ति। यश्चैकसहस्रेस्वीयतोऽष्टादशेस्वीयपर्यन्तं भारतीय-विभिन्नलिपिषु लिखितो विद्यते। परन्तु साकल्येन तत् सर्वं देवनागरीलिप्यां विलिख्य संशोध्य च मयाऽत्र प्रस्तुतम्।

अस्मिन् 'गङ्गाज्ञानमहोदधौ' द्विचत्वारिंशदुत्तरैकशतसंख्याकानां पाण्डुलिपीनां संकलनं मया कृतम्। परन्तु संकलनग्रन्थेषु ये ग्रन्थाः सर्वाधिकमहत्त्वपूर्णास्तेषां द्विपञ्चाशत्संख्यकानां ग्रन्थानां समावेशोऽत्र कृतोऽस्ति। तस्य समग्रस्य संक्षेपेण परिचयः प्रस्तूयते। अत्र सम्पादिताः सर्वेऽपि पाण्डुग्रन्थाः वाराणसीस्थसरस्वतीभवनपुस्तकालयात् संगृहीताः सन्ति।

पाण्डुग्रन्थानां विषयस्त्रिभिस्तरङ्गैर्विभक्तः, तत्र प्रथमो गङ्गामाहात्म्यतरङ्गः, द्वितीयो गङ्गाकाव्यतरङ्गः, तृतीयो गङ्गासमर्चातरङ्गश्च।

## प्रथमो गङ्गामाहात्म्यतरङ्गः

वेदोपनित्स्मृतिपुराणादिषु गुणवैशिष्ट्यप्रकारवर्णन पूर्वकं प्राकरणिकविषयवस्तुप्रधानानि महिमकीर्तनानि येषु पाण्डुग्रन्थेषु समुपलभ्यन्ते तानि माहात्म्यतरङ्गे समावेशितानि।

बोपदेवकृतस्य पुराणेतिहासविषयक 'गङ्गामाहात्म्यसंग्रहस्य[१] लिपिकालः सम्बत् १६५८ पाण्डुलिपि पत्रसंख्या १-२४ इत्यस्ति, देवनागर्यां लिप्यां ग्रन्थोऽयं पूर्णोऽस्ति। ग्रन्थेऽस्मिन् चत्वारिंशत्प्रकरणेषु गङ्गाया अष्टादशपुराणेषूद्धृतवैशिष्टस्य माहात्म्यस्य च प्रकरणक्रमेण विशदं महत्त्वपूर्णं विवरणमुपलभ्यते। तथाऽस्याः पाण्डुलिपेरेकाऽन्या प्रतिरस्ति यस्या रचना वोपदेवेन कृता, अत्र केचित् पाठभेदा अपि सन्ति।

ग्रन्थकारो बोपदेवो मुग्धबोधनामकलघुव्याकरणस्य प्रणेताऽस्ति। अस्य पितुर्नाम केशवदेवः गुरुश्च धनेश्वरः (धर्मेशः) अस्य निवासो दौलतावादनगरे देवगिरेः समीपे, देवगिरेर्हेमाद्रिनृपतेरयं मन्त्री आसीत्। अस्य समयः वि०सं० १३००-१३५० इत्यस्ति। अस्यान्या रचना कविकल्पद्रुमः धातुपाठसंग्रहः, तदीया टीका मुक्ताफलं, हरिलीलाविवरणं, शतश्लोकी (वैद्यकग्रन्थः) हेमाद्रिनामको धर्मशास्त्रीयनिबन्धश्चेति।

स्तोत्रविषयिका वामदेवकृता 'गङ्गानामावलीत्यस्ति', अस्याः पत्रसंख्या १-३१, लिपिर्देवनागरी, ग्रन्थः पूर्णोऽस्ति। अस्मिन् ग्रन्थे गङ्गाया अकारादिक्रमेण सहस्रसंख्यानि नामानि वर्णितानि सन्ति। तेषां नाम्नां गुणवैशिष्ट्यं माहात्म्यं चोपलभ्यते।

वामदेवस्य परिचयः— जैनधर्मिमूलसंघस्य भट्टारकत्रैलोक्यकीर्तेः प्रशिष्यस्तथा मुनिलक्ष्मी-चन्द्रस्य शिष्य आसीत्। अस्य कुलनाम कायस्थ प्रतिष्ठाचार्यः। दिल्लीनगरस्य समीपेऽस्य कार्यक्षेत्रमासीत्। अस्य समयः वि.सं. १५ पञ्चदशशती आसीत्। अस्यान्या रचना त्रैलोक्यदीपकः, भावसंग्रहः, प्रतिष्ठासूक्तिसंग्रहः, त्रिलोकसारपूजा, गङ्गानामावली, तत्त्वार्थसारः श्रुतज्ञानोद्यानम् तथा मन्दिरसंस्कारपूजा इत्यस्ति।

रामकृष्णगौडकृतो 'गङ्गास्नानविधिः' कर्मकाण्डविषयको ग्रन्थोऽस्ति। अस्य पाण्डुलिपि-पत्रसंख्या १-११ लिपिश्च मैथिली, ग्रन्थः पूर्णोस्ति। रचनाकालः संवत् १६२६ अस्ति। चित्र-कौमुद्यन्तर्गतेऽस्मिन्ग्रन्थे गङ्गाया विविधतीर्थेषु स्नानविधिसामग्रीमन्त्राश्च विशदरूपेणोल्लिखिताः सन्ति।

रामकृष्णः काशीनिवासिनो गौडपरिवारस्यैको धर्मशास्त्रीयः पण्डित आसीत्। तस्य समयः सप्तदशशताब्दीत्यस्ति, अस्य पिता नारायण आसीत्। अनेन जीवत्पितृकर्मनिर्णयः ज्योतिष्टोमपद्धतिः, विभागतत्त्वम्, मासिकश्राद्धनिर्णयः, तन्त्रवार्तिकटीकेत्यादयोऽनेकग्रन्थाः प्रणीताः सन्ति। अस्य द्विपञ्चाशद्वर्षवयसि मृत्युरभवत्। तदीया पत्नी उमा नाम्नी सती सञ्जाता।

स्कन्दपुराणान्तर्गतं 'गङ्गासहस्रनामस्तोत्र'[४] वर्तते। अस्य पाण्डुलिपि पत्रसंख्या १-९ पूर्णा, इदं देवनागर्यां लिप्यां विनिबद्धमस्ति। अस्मिन् ग्रन्थे २१० संख्याकाः श्लोकाः सन्ति, परन्तु मुद्रितस्य स्कन्दपुराणस्य काशीखण्डे समुल्लिखितेभ्यः पाठेभ्य इदं यत्र तत्र भिन्नमस्ति। अत्र गङ्गायाः सहस्रनाम्नामनुष्टुप्छन्दसानुप्रासालङ्कारैरुल्लेखोऽस्ति। ग्रन्थकारस्य नाम नोल्लिखितमस्ति।

'गङ्गासागरपद्धतिः[५] कर्मकाण्डविषयको ग्रन्थोऽस्ति। पाण्डुलिपिपत्रसंख्या १-२ पूर्णाऽस्ति, लिपिश्च देवनागरी। अस्मिन् ग्रन्थे गङ्गायाः प्रमुखतीर्थेषु तथा सागरतीर्थे विभिन्नेषु पर्वयोगेषु मनुष्यैः किं किं पुण्यकर्म कर्त्तव्यं तथा तादृशकर्मणां किं किं फलमित्यादि वर्णितमस्ति। ग्रन्थकारस्योल्लेखो नास्ति।

'दिव्यमङ्गलाख्यं गङ्गाकवचम्[६]' कर्मकाण्डविषयकमस्ति। अस्य पाण्डुलिपिपत्रसंख्या १-९ ग्रन्थः पूर्णोऽस्ति, लिपिर्देवनागरी चास्ति। अस्मिन् ग्रन्थे विनियोगो गङ्गाध्यानमन्त्राः गङ्गागायत्रीं कवचमन्त्रस्तथा कवचलेखनविधिश्चास्ति। एतद् ब्रह्माण्डपुराणस्य ऋषिसनत्कुमारस्य संवादात् गृहीतमस्ति। परन्तु पुराणात् किञ्चिद् भिन्नं तथा तत्समधिकविषयगर्भमस्ति। ग्रन्थकारश्च दीनानाथोऽस्ति। अस्य रचनाकालः १७८२ संवत्सरोऽस्ति दीननाथो वा दीनानाथोऽयं ज्योतिषपण्डित आसीत्। अस्यान्यरचना 'सर्वसंग्रह' इत्यस्ति। अन्य परिचयो नोपलभ्यते।

तन्त्र विषयकं 'गङ्गासाम्राज्यकवच[७]' नामकं पाण्डुलिपिपत्रमेकं श्रीशिवशिवानन्दविरचितं देवनागर्यां लिप्यां पूर्णमस्ति। ग्रन्थोऽयं देव्युवाच श्रीशिव उवाचेति क्रमेण षोडशश्लोकैरनुष्टुप्छन्दो-भिर्विनिबद्धोऽस्ति। कवचेऽस्मिन् प्रारम्भे कवचस्य पाठधारणं विविधफलमनन्तरं विनियोगः कीलकं न्यास इत्यादि तान्त्रिकविधिना नित्यपाठफलं च वर्णितमस्ति।

शिवशिवानन्दस्य मूलनाम काशीनाथभट्ट इत्यासीत्। अस्य समयः सप्तदशशताब्द्या अष्टादशशताब्दीत्यनुमीयते। शिवस्य तथा शक्तेरयमुपासकः दक्षिणाचारस्य पुरस्कर्ता वामाचारस्य प्रबलविरोधक इति ज्ञायते। तन्त्रे तथा पुराणेष्वनेके ग्रन्था अनेन रचिताः।

धर्मशास्त्रविषयको 'गङ्गोदकेन सर्वक्रियाकरणकनिर्णयः[८]' इत्याख्यो ग्रन्थोऽस्ति। ग्रन्थोऽयं पाण्डुलिपिपत्रद्वये पूर्णः देवनागर्यां लिप्यां विनिबद्धोऽस्ति। अस्मिन् ग्रन्थे नामानुरूपं सर्व-विवेचनं सविशेषविधिनिषेधात्मको विभागोऽस्ति। मीमांसाशास्त्रानुसारिन्यायशास्त्रानुसारि-विवेचनतर्कसिद्धान्तोऽत्र समुपलभ्यते। ग्रन्थकारस्य तथा रचनाकालस्योल्लेखो नास्ति।

कर्मकाण्डविषयकं रघुनाथकृतं- 'गङ्गास्नानम्[९]' इत्यस्ति। अस्य पाण्डुलिपिपत्रसंख्या १-५ पूर्णा, देवनागर्यां लिप्यामिदं विनिबद्धमस्ति। अस्य रचनाकालः १४१६ संवत्सरोऽस्ति।

अस्मिन् ग्रन्थे विविधेषु योगेषु तीर्थेषु संस्कारेषु गङ्गास्नानस्य संकल्पस्नानविधिः गङ्गास्पर्शमन्त्रा इत्यादि नियमानां विशदरूपेण वर्णनमस्ति। रघुनाथकृता एकाऽन्या गङ्गाविषायकाऽपूर्वरचना 'गङ्गामृततरङ्गिणी' ति नाम्नोपलभ्यते। 'गङ्गामृततरङ्गिणी' प्रसङ्गे रघुनाथस्य परिचयं विवृणोमि।

पुराणविषयकं 'गङ्गामाहात्म्यम्[१०]' इत्यस्ति। अस्य पाण्डुलिपेः पत्रसंख्या १-१० पूर्णाऽस्ति, लिपिश्च देवनागरी, संवत् १७७८ अस्य रचनाकालोऽस्ति अत्राष्टादशपुराणोक्तं गङ्गाया माहात्म्यं वर्णितमस्ति। ग्रन्थकारो रामकृष्णः। रामकृष्णस्य पूर्णनाम रामकृष्णकादम्ब इत्यासीत्। अयं गोदावरीतटवासी कविरासीत्। अस्यान्या रचना दत्तकोल्लासः, भागवततात्पर्यमञ्जरी, चम्पूभारत-टीका, गङ्गामाहात्म्यम् नैषधचरितटीका, रामावयवमञ्जरी, त्रिशतकम्, नृसिंहविजयकाव्यम्, इत्यादयः सन्ति।

बोपदेवकृत 'गङ्गास्नानमाहात्म्यम्[११]' इत्याख्यपाण्डुग्रन्थस्य पत्रसंख्या १-६ पूर्णा, लिपिश्च देवनागरी। ग्रन्थेऽस्मिन् गङ्गायाः समस्तसंगमेषु तीर्थेषु योगेषु श्रुतिस्मृतिपुराणोक्तधर्मशास्त्रानुसारिस्नान-विधिनिषेधतत्फलमाहात्म्यञ्च वर्णितमस्ति। वोपदेवस्य परिचयस्तत् प्रणीतगङ्गामाहात्म्यसंग्रह ग्रन्थस्य परिचयान्ते समुल्लिखितोऽस्ति।

## द्वितीयो गङ्गाकाव्यतरङ्गः

येषु पाण्डुग्रन्थेषु काव्यगुणसंवलितकवित्वप्रतिभावैशिष्ट्यानि काव्यानि विलसन्ति तानि रचना काव्यतरङ्गे, समाहितानि।

शंकरदीक्षितकृतसाहित्यविषयक 'गङ्गावतरणचम्पूः[१२]' काव्यस्य रचनाकालः १८१६ वैक्रमाब्दस्तदनुसारं १७२६ ईशवीयाब्दः, पाण्डुलिपि पत्रसंख्या १-६८ इत्यस्ति। देवनागर्यां लिप्यां ग्रन्थोऽयं पूर्णोऽस्ति। पाण्डुलिपेः कथावस्तु नानापुराणसम्मतं बाल्मीकीयरामायणाद् गृहीतमस्ति। ग्रन्थोऽयं सप्तसूच्छ्वासेषु विनिबद्धः। प्रथमोच्छ्वासे राज्ञः सगरस्य राज्यशासनादारभ्य यज्ञसमाप्तिपर्यन्ता कथा निबद्धाऽस्ति। द्वितीयोच्छ्वासेअंशुमतः शासनस्य तपश्चर्यायाश्च वर्णनं दिलीपस्य वर्णनं चापि विद्यते। तृतीयोच्छ्वासेराज्ञो भगीरथस्य गङ्गानयनार्थं तपश्चर्यावर्णनं गङ्गावतरणकथा चास्ति। चतुर्थोच्छ्वासेगङ्गावर्णना जह्नुमुनेः कथा च वर्णिताऽस्ति। पञ्चमोच्छ्वासे प्रयागविन्ध्यकाशीप्रभृतितीर्थानां विन्ध्यवासिन्या देव्याः स्तुत्यादिवर्णनम्। षष्ठसप्तमयोरुच्छ्वासयोः काश्या विविधविशदवर्णनमस्ति। काश्या माहात्म्यं गणेशभैरवान्नपूर्णाशिवप्रभृतीनां देवानां स्थानं माहात्म्यं च सुविशदं चित्रितम्। अनेकेषां घट्टानां निरूपणं सर्वशास्त्रविशारदानां विदुषां दिनचर्यावर्णनं सन्ध्ययोरुभयोर्वाराणस्यां गङ्गातटे सौन्दर्यशोभावर्णनं तीर्थयात्रिणां दिनचर्यावर्णनं, काश्याः परिक्रमा पञ्चक्रोशीवर्णनञ्चातीव मनो हरति। इत्थं सर्वतोभावेन काश्या बहुविधवर्णनमव-लोक्यानुमातुं शक्यते यदसौ कविरासीत् काशीवासीति।

ग्रन्थेऽस्मिन् बहुविधानां प्रचलिताप्रचलितानां छन्दसां प्रयोगोऽस्ति,खड्गबन्धपद्मबन्धादीनि चित्रकाव्यान्यपि प्रयुक्तानि सन्ति। काव्यप्रणयननैपुण्येनास्मिन् चम्पूकाव्ये भक्तिरस एव प्रधानो रसः परिस्फुरति। प्राकृतिकं सांस्कृतिकं च चित्रणं कविनाऽतीवरमणीयरीत्या कृतम्।

शंकरस्य पितामहः सर्वशास्त्रपारङ्गतो दुण्डिराजः, पिता बालकृष्ण दीक्षितश्चासीत् बालकृष्णकृता 'गङ्गाभक्तिचन्द्रिका' नामाप्येका नाटिका वर्तते, साऽप्यस्मिन् प्रसङ्गे सम्पादिता।

गङ्गावतरणचम्पूग्रन्थेमालिनी, अनुष्टुप्, आर्या, शार्दूलवि., वसन्तति., शिखरिणी, भुजङ्गप्रयातं, पृथ्वी, स्वागता, रथोद्धता, स्रग्धरा, द्रुतविल., उपजातीन्द्रवज्रोपेन्द्रवज्रेत्यादीनि वृत्तानि अपि च गीतिविद्युन्मालाविद्युल्लेखावसुमतीप्रमाणिकासुवसुसुमतिसरलयुगानन्दाहरिण्यचलद्युतिपुष्पिताग्रा-सुन्दरीकालभारिणीमंजुभाषिणीरुधिरातोटकमोटकशालिनीपञ्चचामरोपजातीन्द्रवंशेन्द्रवज्राऽखिल-सौलकमात्रातिलकसगलच्छन्दांसि पूर्णयोग: ४९८ संख्याका: श्लोका: सन्ति। कवेरन्यरचना-शंकरचेतोविलासचम्पू: प्रद्युम्नविजयं काव्यं चास्ति।

अप्पय्यदीक्षितकुलोत्पन्नेन बालकृष्णदीक्षितेन विरचिता एकाङ्किनाटिका 'गङ्गाभक्ति-चन्द्रिकेत्यस्ति[१३]। पाण्डुलिपिपत्रसंख्या १-९ देवनागर्यां लिप्यामियं पूर्णाऽस्ति। इयं नाटिका गङ्गाया महत्त्वं नानाशास्त्रवचनै: प्रकटयन्ती, प्रसङ्गात् तर्कव्याकरणमीमांसादिशास्त्राणां विचारमपि प्राकाश्यमानयत्। भक्तिभावप्रधाना नाटिकेयं तस्मिन् काले प्रचलितस्य शैव-वैष्णव-वैदिकसम्प्रदायानां पारस्परिकविरोधस्यापाकरणाय गङ्गाभक्तिरेव परमसरणिरिति प्रतिपादयति।

रुक्मिणया सह श्रीकृष्णं चित्रगतं गङ्गापूजनरतमालोक्य सूत्रधारस्तत्र नाट्यप्रदर्शनमिच्छति, अस्मिन् समये नट: प्रविश्य तत्र नाट्यप्रदर्शनार्थं राजाज्ञां सूत्रधारं श्रावयति। एवं सूत्रधारो गङ्गाभक्ते: पुराणादिवचनजातेन प्राशस्त्यं कीर्तयन् गङ्गाया अभक्तस्य दौर्भाग्यं च प्रतिपादयन्,

**मर्त्ये च भूतिलसित: प्रजहाति तापं**
**गङ्गां भजन्तु ननु किं सुजनास्ततोऽन्यै:**

इति स्तौति। तच्छ्रुत्वा रुष्टो वैष्णव: सशिष्यस्तत्र प्रविशति, स विष्णुमाहात्म्यं प्रख्यापयन् नृपं प्रत्याशिषं प्रयुज्य कथयति-भो राजन्! तव सदसि तटिनीस्तवो न युज्यते, शिष्यश्च गङ्गाया विष्णुपादोद्भवत्वेन तदीयस्तवं समर्थयति। एतस्मिन्नन्तरे शैवस्य प्रवेशो भवति। स शिवमहत्त्वं प्रख्यापयति। तच्छ्रुत्वाऽसहमानेन वैष्णवेन सह शैवस्य विवादो भवति। तयो: शास्त्रानुसारं विवादो रमणीयो वर्तते। तयो: कलहं श्रुत्वा गङ्गाभक्तस्तत्रागत्य हरिहरयोरैक्यं दर्शयति। अत्र कवे: सूक्ष्मो भावो विद्यते यद् विष्णुपादोद्भूता गङ्गा शिवशिरसि गता हरिहरयोरैक्य-बन्धनसूत्रभूताऽस्तीति। अत्रान्तरे शब्दब्रह्मवादिन: प्रवेशो भवति। स यावदितरान् विबुधान् तृणाय मत्वा वैयाकरणगुणं प्रख्यापयति, तावत् तत्र तार्किकस्य प्रवेशो भवति। तार्किकवैयाकरणयो: शास्त्रार्थ: प्रवर्तते शास्त्रार्थं तयोराकर्ण्य मीमांसकोऽपि तत्रागच्छति, स वेदस्य प्राधान्यं प्रख्यापयति। ततस्तेषां त्रयाणां रमणीय: शास्त्रार्थो भवति। अन्ते च तेषां शास्त्रार्थो मुष्टीमुष्टिरूपेण प्रायेण परिणतो भवन् गङ्गाभक्तेन वारित:। इत्थमत्र नानाविधशास्त्रार्थचमत्कारो भक्तेश्च प्राधान्यं विद्योततेतराम्।

ग्रन्थे सप्तचत्वारिंशत् संख्याका श्लोका: सन्ति, तन्मध्ये वाराहस्कान्दपाद्मविष्णुपुराणेषु तथा महाभारतोक्ता एकैकसंख्यका; श्लोका:, भविष्यकालिकापुराणयोर्द्वौ द्वौ इति चतु: संख्यका: श्लोका: सन्ति। अन्ये च ग्रन्थकारस्य नैजा: श्लोका: सन्ति। छन्दांसि षोडशभेदसंख्यकानि विद्यन्ते।

जयपुरनिवासिन औदीच्यविप्रस्य बालकृष्णास्य जन्म १७४० ईशवीयवर्षे मारवाडप्रान्तशासक श्रीमदजितसिंहस्य राज्यकाले समभूत्। आलोच्यनाटिकाया रचना १७६८ ईश्ववीयवर्षे जातेत्यनुमीयते। अस्य बालकृष्णस्य प्रथमा रचना 'अजितसिंहररितम्' इत्याख्यं दशसर्गात्मकं महाकाव्यमित्यवसीयते।

आयुर्वेदमूलक स्तोत्रात्मक: कविकण्ठीरवरघुनाथविरचितो 'गङ्गामृततरङ्गिणीत्याख्यो[१४] ग्रन्थोऽस्ति। अस्य पत्रसंख्या १-१८ पूर्णा लिपिश्च देवनागरी तथा रचनाकाल: १६१६ संवत्सर:,

अस्य ग्रन्थस्य विषयवस्तुरूपेण ग्रन्थकृता प्रारम्भिकगङ्गाया महत्त्वं तदीयजलस्य च गुणं प्रदर्शयता गङ्गोत्पत्तिस्थलादारभ्य अलकनन्दापर्यन्तं गङ्गाजलधाराया रुचिरं वर्णनं कृतम्। तत्र गङ्गाजलधाराया मार्गे ये गिरयोऽरण्यानि वा समुपलभ्यन्ते तेषां गिरीणां वर्णनं तथा गिरिषु जलसंस्पर्शात् तत्र जलगतानामोषधितत्त्वानामुपकरणानां च सूक्ष्मं विवेचनं तेन विहितम्।

रघुनाथकृता 'गङ्गामृततरङ्गिणी' भक्तिकाव्यान्तर्गताऽतीवमनोहारिणी गङ्गाभक्तानां चेतांसि सततं समाकर्षति। अस्मिन् हि ग्रन्थे कविना प्राय: शिखरिणीच्छन्दस: प्रयोग: कृत:। अन्ते च स्रग्धरापृथ्वीशार्दूलविक्रीडितप्रभृतिच्छन्दसां प्रयोग: कृत:।

ग्रन्थस्यास्य प्रथमे भागे शास्त्रान्तरीयपाण्डित्यमपि कविना प्रदर्शितम्, येन तत्तच्छास्त्रनिष्णातानां चेतांसि प्रसीदन्तितराम्। न्यायमीमांसाप्रभृतिशास्त्राणां विचारेण ग्रन्थोऽयं प्रथमांशे क्लिष्टोऽप्यन्ते काव्यरसनिर्झरेण सकलजनबोधगम्येन समुपादेय: समभवत्। शास्त्रान्तरीयपाण्डित्यप्रदर्शनेन विदुषां चेतांसि चमत्करोतीति न संशय:। अस्मिन्ग्रन्थे प्रथमांशे प्रसादगुणाभावो विद्यते, येन क्लिष्टत्वदोष: संवृत्त:। अन्ते च सोऽपि दोष: कविनाऽपाकृतो निजभक्तिकाव्यरसस्य रमणीयता प्रादर्शि।

श्लेषालङ्कारस्य प्राचुर्यं काव्येऽस्मिन् वरीवर्ति। अन्येषामप्यलङ्काराणामभावो न विद्यते। काव्यस्य क्लिष्टार्थतया सर्वत्र भावस्य प्रसारो न तथा जात:, विवेचने कृतेऽप्यनेके दोषा अप्यत्र काव्ये दृष्टिपथमायास्यन्ति, परं गुणानामप्यभावो न विद्यते। एवं विधदोषगुणमिश्रिततया केषाञ्चित् केवलं काव्यरसिकानां वैमुख्यभाजनमपि भवेत्, किन्तु भक्तानां तथा गङ्गाजलगुणवैशिष्ट्य-विवेचकानां परमं रमणीयमुपादेयभूतं काव्यमिदमस्तीत्यस्माभिर्निश्चप्रचं वक्तुं शकयते। ग्रन्थेऽस्मिन् षोडशोत्तरशतसंख्याका: श्लोका: सन्ति।

कविकण्ठीरवरघुनाथो महाप्रभुचैतन्यस्य षट्प्रमुखानुयायिभक्तेषु एक आसीत्। रघुनाथश्च महाप्रभुचैतन्यस्य सम्प्रदाये स्वनाम्ना सह दास इति संयोज्य रघुनाथदास: समभूत्। वृन्दावने निवसन्नसौ स्वकीयपञ्चसंख्याकै: सहयोगिगोस्वामिभि: सह चैतन्यमतस्य ग्रन्थानां लेखने तथा साम्प्रदायिकक्रियाणां स्वरूपनिर्माणे संलग्न आसीत्। तेन भक्तिदर्शने क्रियाचारे च भाष्यं टीका च व्यलेखि। तस्यान्या रचना 'मथुरामाहात्म्यम्' वनयात्रा, रासलीला इत्यासन्।

साहित्यविषयक: श्रीजयदेवकविविरचितो 'गङ्गाष्टपदी'[१५] नामको ग्रन्थोऽस्ति। पाण्डुग्रन्थस्यास्य पत्र संख्या १-२१ लिपिश्च देवनागरी रचनाकालश्च १६९६ संवत्सरोऽस्ति। ग्रन्थोऽयं पूर्ण:। कविना श्रीजयदेवेन गीतगोविन्दाख्यग्रन्थस्य रचनाप्रकारमनुसृत्य ध्रुपदच्छन्द:सु सरसभावगुम्फित: शास्त्रीयप्रमाणानुरूपो गुणराशिमण्डितो गङ्गाया महिमा ग्रन्थेऽस्मिन् वर्णित:।

संस्कृतवाङ्मये जयदेवनाम्ना नव संख्याका रचनाकारा: समुपलभ्यन्ते। किन्तु तेषु गीतगोविन्दकारो जयदेवो युगप्रवर्तकोऽद्वितीयो गीतकाव्यकार आसीत्। एष जयदेवो वङ्गप्रान्तस्य राज्ञो लक्ष्मणसेनस्य सभाकविरासीत्। अस्य समयो द्वादशशताब्द्या उत्तरार्ध इत्यनुमीयते। गीत-गोविन्दनामके तदीये सुख्यातग्रन्थे राधाकृष्णयोर्ललितलीलाया मनोरमं रसस्निग्धञ्च वर्णनं वर्तते। तस्मिन् सुप्रसिद्धगीतकाव्ये विविधैर्विख्यातैराचार्यै: प्रणीता: त्रिंशत्संख्याकाष्टीका: सन्ति। प्राय: सर्वासु भारतीयभाषास्वस्यानुवादो जातोऽस्ति। आङ्ग्लभाषायां लैटिनभाषायाञ्चाप्यस्यानुवादो जात:।

महाकविजयदेवस्य पितुर्नाम भोजदेवो, मातुर्नाम रमा देवी तथा पत्न्या नाम पद्मावतीत्यासीत्। एकदा राजा लक्ष्मणसेनो जयदेवेन सहाखेटं कर्तुमगच्छत्। इतश्चामत: पुरे लक्ष्मणसेनस्य राज्ञी जयदेवस्य पत्नी पद्मावती च वार्तालापे निमग्ने आस्ताम्। राज्ञ्या पद्मावत्या: पातिव्रत्यनिष्ठा

परीक्षितुं मनसीच्छा कृता। तया केनचिदेकेन दूतेन सह परामृश्य षड्यन्त्रं व्यरचि। किञ्चित्समयानन्तरं दूतः सवेगं धावन्नन्तःपुरं प्राविशदवदच्च यदाखेटं विदधतो जयदेवस्य मृत्युर्जात इति। वृत्तमिदं श्रुत्वा पद्मावत्याः प्राणा उदगच्छन्। पुनश्च किञ्चित्कालानन्तरं राजा लक्ष्मणसेनो जयदेवश्चाखेटान्निवृत्तौ राजप्रासादं परावर्तताम्। राजा यदा वृत्तमिदं श्रुतवान् यत् तदीया राज्ञी पद्मावत्या मृत्योर्हेतुरभवत् तदा सोऽधिकं कुपितो जातस्तथा राज्ञीं ताडयितुं प्राक्रमत ततश्च जयदेवेन स निवारितस्तथोक्तश्च यद् यदाऽहं जीवितोऽस्मि तदा पद्मावत्या अपि पुनर्जीवनं सम्भाव्यते, तेन तत्कालमेव सञ्जीवनी गङ्गाष्टपदीमुच्चार्य यदैव पत्न्याः शरीरे गङ्गाजलस्य सेचनं कृतं तदैव सा चेतनाम्प्राप्योदतिष्ठत्।

सैवेयं 'सञ्जीवनी गङ्गाष्टपदी' तदीयाऽद्वितीयाऽपूर्वा कृतिरस्ति। मनुष्याभ्यन्तरे ये चेतनाश्रद्धाभक्तिसद्भावादयो गुणाश्च मृतप्रायाः सुप्ताः सन्ति तान् सर्वान् गुणान् पुनर्जीवयितुं भूयसी शक्तिः काव्यपदसाधनायामस्यां गङ्गाष्टपदीतिरचनायां सन्निहिताऽस्ति।

स्तोत्रविषयकं 'गङ्गाष्टकम्' अगस्त्यवाल्मीकिमुनिकृतमस्ति। अस्य पाण्डुलिपिपत्रसंख्या १-१२ लेखनकालश्च १८१२ संवत्सरोऽस्ति। देवनागरीलिप्यां कालिदासरचितं च त्रिप्रकारं गङ्गाष्टकम्, हनुमात्कृतं १८३३ संवत्सरीयं गङ्गाष्टकम्, शंकराचार्यकृतं गङ्गास्तोत्रं, गङ्गास्तवः, गङ्गाष्टकमित्यादीनि पञ्चसंख्यकानि स्तोत्रस्तवाष्टकान्युपलभ्यन्ते। वल्लभाचार्यकृतं गङ्गाष्टकम्, भगीरथकृतो गङ्गास्तवश्च, एवमेव गोपालमिश्र, रामचन्द्रशर्म-बाजाली-दशफखाँ प्रभृति विविध-कवियतिमहात्मप्रणीयतानि समये समये समुपलब्धान्यष्टाविंशतिसंख्याकानि गङ्गाष्टकस्तवस्तोत्र-स्तुतिनामकानि पुस्तकानि सन्ति। गङ्गाष्टकेषु तेषु तैलङ्गस्वामिकृतं पञ्चगङ्गाष्टकमप्युपलभ्यते। सर्वाण्यष्टकस्तवस्तुतिस्तोत्राणि पूर्णानि सन्ति।

उपर्युक्तगङ्गाष्टकानां पाण्डुलिपिपत्रसंख्या साकल्येन चतुस्त्रिंशदस्ति। देवनागरी-वङ्ग-मैथिली-उड़ीया-असामीशारदेत्यादयो विभिन्ना लिपयः सन्ति।

एतेष्वष्टकेषु स्तोत्रेषु च वाल्मीकिशंकराचार्यकालिदासकृतान्यष्टकानि स्तोत्राणि च मुद्रितान्युपपभ्यन्ते परन्तु पाण्डुलिपीनां पाठेभ्यो यत्र तत्र भिन्ना न्यूना अधिका वा पाठाः प्राप्यन्ते, अतश्च ता अपि पाण्डुलिपयोऽत्र समावेशिताः सन्ति।

गङ्गामुखनिःसृतो भगीरथकृतस्तथा दराफखाँकृतश्च गङ्गास्तवो वङ्गलिप्यां मुद्रितो लभ्यते किन्तु, तत्रापि मूलपाण्डुलिप्यन्तर्गतपाठभेदो वर्तते, देवनागरलिप्यां तु मुद्रितो नास्ति, अतस्तेषामपि स्तोत्राणामत्र समावेशः कृतोऽस्ति।

स्तोत्रविषयिणी 'पद्मनिधिविरचिता[१७] १-८ पत्र संख्याका उडियालिपिनिबद्धैका 'गङ्गालहरी' त्यस्ति। इयं लहरी पण्डितराजजगन्नाथकृतलहर्याः परवर्तिरचनाऽस्ति। इयं लहरी चतुःपञ्चाशत्-संख्याकैः श्लोकैः प्रणीताऽस्ति।

पण्डितराजजगन्नाथकृतगङ्गालहर्याष्टीकाचतुष्टयी[१८] समुपलभ्यते १६२८ संवत्सरे पूर्णानन्दकृता प्रथमा टीका १-३१ पत्र संख्याका, तन्त्रविषयमूलिका वङ्गलिप्यां लिखताऽस्ति। द्वितीयां टीका रङ्गनाथद्वारा विरचिता वेदान्तविषयिणी १-२७ पत्रसंख्याका देवनागरलिप्यां प्रणीता। तृतीया टीका दलपतिरामविरचिता बालबोधिनीति नाम्ना साहित्यमूलिका १-२७ पत्रसंख्याका देवनागरलिप्यां विनिबद्धाऽस्ति। अस्या रचनाकालः १८६४ संवत्सरोऽस्ति। उपर्युक्तास्तिस्रष्टीकाः पूर्णाः सन्ति।

चतुर्थी टीका कृष्णाभट्टशिष्यकृता पुराणमूलिका १-६ १ पत्र संख्याका देवनागरलिप्याम-पूर्णाऽस्ति।

आसुः प्रथमा द्वितीया च टीके अत्यन्तविस्तीर्णे सर्वविधकोशोद्धरणपूर्वकं विस्तृत-व्याख्यासमन्विते स्तः।

## तृतीयो गङ्गासमर्चातरङ्गः

येषु च पाण्डुग्रन्थेषु प्राधान्येन स्मृतिधर्मशास्त्रानुगतार्चनोपासनापूजादिविषयः प्रतिपादिताः सन्ति ते समर्चातरङ्गे सन्निवेशिताः।

जयकृष्णकृतधर्मशास्त्रविषयकः 'गङ्गास्नानसंकल्पवाक्यदीपः[१९]' इत्याख्यो ग्रन्थोऽस्ति पाण्डुलिपेःयत्र संख्या १-१६ इत्यस्ति। पूर्णोऽयं ग्रन्थो वङ्गलिप्यां विनिबद्धोऽस्ति। अस्य रचनाकाल १६६९ शकाब्दः। ग्रन्थस्य मङ्गलाचरणे ग्रन्थकारस्य नामोल्लेखः समुपलभ्यते, तदन्तरं गङ्गाध्यानं गङ्गागायत्री गङ्गाबीजमन्त्रा यन्त्रं गङ्गोदके चरणस्पर्शमन्त्रो गङ्गातीरेऽन्य-तीर्थचिन्तनस्य दोषस्तत्फलं गङ्गापूजा नीराजनादिषोडशोपचारपूजा विविधप्रकरणानां संकल्पसूत्राणि चेत्यादयो विषया निबद्धाः सन्ति।

ग्रन्थकारजयकृष्णस्य पूर्णनाम जयकृष्णकविरित्यस्ति। भवानीदासकवेरयं पुत्र आसीत्। अस्यान्यरचना 'छन्दःसार' इति नामकः पिङ्गलग्रनथस्य टीकाग्रन्थोऽस्ति। अयं काशीवासीत्यनुमीयते।

धर्मशास्त्रविषयको गणेश्वरमन्त्रिकृतो 'गङ्गापत्तलकम्' (पत्तनकम्) इत्याख्योऽथवा 'गङ्गाभक्तितरङ्गिणी'ति नामको ग्रन्थोऽस्ति। अस्य पाण्डुलिपेः पत्रसंख्या १-१३+१, अस्य मैथिली लिपिश्च पूर्णाऽस्ति। अत्र मङ्गलाचरणे—

**ॐ नमो गणेशाय**

**वेदस्मृतिपुराणादि दृष्ट्वा गङ्गामृतं हितम्।**
**ततः पत्तनकं रम्यं श्रीगणेश्वरमन्त्रिणा॥**

**इत्युल्लिखितम्॥**

अस्मिन् ग्रन्थे गङ्गास्नानं संकल्पवाक्यमष्टादशपुराणेषु गङ्गास्मरणवाक्यं विविधेषु गङ्गातीर्थेषु गङ्गास्नानविधिस्तथा स्नानफलञ्चेत्यादि वर्णितमस्ति। सम्पूर्णवर्षे यावन्तोऽपि गङ्गास्नानस्य योगास्तेषां नियमाश्च भवन्ति तदुपचाराणां निर्देशोऽत्रोपलभ्यते। अस्य रचनाकालः १६१२ संवत्सरोऽस्ति।

गणेश्वरमन्त्रिणः प्रथमं नाम गणेश्वरमिश्र इत्यासीत्। अयं मैथिल्या भाषायाः सुप्रसिद्धस्य विद्यापतिकवेः पिताऽऽसीत्। अस्यैकमात्रकृतिर्गङ्गाभक्तितरङ्गिणीत्यस्ति मैथिल्यां भाषायां 'गङ्गापत्तलकम्' इत्यनेन नाम्ना प्रख्याताऽस्ति। मूलग्रन्थे हस्तलेखे नामद्वयमुल्लिखितमस्ति, अस्य पितुर्नाम जयदत्त इत्यासीत्। अयमसाधारणपण्डितो धार्मिकश्च प्राप्तयोगीश्वरोपाधिः सुप्रसिद्धो बभूव। गङ्गापत्तलकमित्यस्य रचनानन्तरं गणेश्वरो मिथिलाराजेन स्वमन्त्रिपदे प्रतिष्ठापितः।

तन्त्रविषयिणी नारायणकृता 'गङ्गामानसपूजे[२१]' ति कृतिरस्ति। तत्र गङ्गाजलमाहात्म्यमपि ग्रन्थान्ते विनिबद्धमति। अयं ग्रन्थः १-११ पत्रसंख्याकः पूर्णो वङ्गलिपिमयो वर्तते। अस्य रचनाकालः १२६४ संवत्सरोऽस्ति।

ग्रन्थेऽस्मिन् गङ्गाया विविधेष्ववसरेषु मानसपूजायाः नानाविधान्यनुष्ठानानि श्रुतिस्मृति-तन्त्रोल्लिखितानि वर्णितानि सन्ति। मन्त्राणामर्चनानामार्घ्यार्तिक्योपासनानाञ्च विशदं विधिविवेचनं समुपलभ्यते।

ग्रन्थकारस्य नारायणस्य परिचयः– नारायणो ज्योतिषशास्त्रस्य प्रसिद्ध आचार्यः, अस्य द्वादशशताब्दीमारभ्य त्रयोदशशताब्दीं यावत् समयो निर्धारितः, अस्य पिता अनन्तनन्दनः टापरग्राम-वास्तव्य आसीत् नारायणस्यान्या कृतिः मुहूर्तमार्तण्डनामको ग्रन्थो मुहूर्तविषयगर्भोऽस्ति।

शङ्करकृतकर्मकाण्डविषयक 'गङ्गापूजापद्धतिः[२२]' इत्याख्यः पाण्डुग्रन्थोऽस्ति। ग्रन्थस्य पत्रसंख्या १-२ पूर्णा लिपिश्च देवनागरी, अस्य रचनाकालः संवत् १६७० इत्यस्ति। ग्रन्थेऽस्मिन् गङ्गायाः श्रुतिस्मृतिपुराणोक्तषोडशोपचारपूजाविधिस्तथा पूजोपकरणानि मन्त्रयन्त्राणि च विशदरूपेण वर्णितानि सन्ति।

गङ्गाध्यानार्चनविधिः[२३] इति नामकस्तान्त्रिकस्तोत्रार्चनाविषयको ग्रन्थोऽस्ति, पाण्डुग्रन्थस्य पत्रसंख्या १-८ पूर्णा, देवनागर्यां लिप्यामस्ति। ग्रन्थस्य रचनाकालःसंवत् १८६३ इत्यस्ति।

ग्रन्थेऽस्मिन् गङ्गाया आवाहनं ध्यानं स्तोत्रं बीजमन्त्रः कीलकं कवचं प्रणामादिमन्त्राणां तान्त्रिकविधिना सङ्कलनं कृतमस्ति। ग्रन्थकारस्य नामोल्लेखो नास्ति।

पादटिप्पणी श्लोकपार्श्वे छन्दोनिर्णयश्चास्माभिः स्वयं न्यदर्शि।



॥ श्री गुरुः शरणम् ॥

# ॥ मङ्गलाचरणम् ॥

देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ।
विघ्नान् हरन्तु हेरम्बचरणाम्बुजरेणवः ॥१॥

गङ्गां गीतां च सीतां च त्रयीमेतां पतिव्रताम् ।
प्रार्थये सिद्धिकामार्थं शिवपादाम्बुजद्वयम् ॥२॥

भूमिकल्पलतां वन्दे जह्नुकन्यां सरस्वतीम् ।
भजेऽहं गुणलाभार्थमामोदरवियुग्मकम् ॥३॥

नेत्रायातपथव्यतीतपयसः सन्त्येव नद्यः शतम् ।
प्रायश्चित्तमुपाचरन्ति कृतिनः स्पृष्ट्वैव यासां पयः ।
या दृष्ट्वैव पुनाति विश्वमखिलं सेयं पुनर्जाह्नवी ।
विच्छिन्ना क्वचिदाविला क्वचिदतिस्वल्पाम्बुशोच्या क्वचित् ॥४॥

प्रणयिवचनं दीना दृष्टिः शिरोनिहितोऽञ्जलिः ।
चरणपतनं गङ्गायाः सन्ति प्रसादनहेतवः ।
सततविततज्वालाताप-स्फुटन्मृदुमानसै- ।
र्वरतनुरसौ येन प्राप्या स एव तु नास्ति मे ॥५॥

आस्तां तावत् स्वकृतरचना भाजनत्वं विदूरे ।
दूरे चास्तां तव तनुपरीरम्भसम्भावनापि ।
भूयोभूयः प्रणतिभिरिदं किन्तु याचे विधेया ।
स्मारं स्मारं स्वजनगणने कापि रेखा मदीया ॥६॥

अज्ञानखण्डनकरी धनमानहेतुः सौख्यापवर्गफलमार्गनिदेशसेतुः ।
सा नः समस्तजगतामभिलाषकेतुर्विद्या निरस्य जडतां धियमादधातु ॥७॥

गङ्गाज्ञानमहोदधीति विपुलं सम्पाद्य मोदावहं ।
ग्रन्थं पुण्यतमं समस्तसुधियां संस्थापयन् सम्मुखम् ।
तेषां सोऽहमनुग्रहं त्रुटिपरप्रायस्थले साग्रहं ।
याचे चेदनुमोदयन्ति विबुधास्तन्मेश्रमः सार्थकः ॥८॥

# ॥ अष्टदलकमलम् ॥

देवाधीश्वरमौलि-रत्न-विलसन्मालावली-भासुर-

श्रीमद्भूधरकन्यकातिमहितप्रेमामृतैकास्पदम् ।

सद्यो मुक्तिमहाफलावलिलसच्छाखाढ्यकल्पद्रुमः

काशीतीर्थनिवासमोदहृदयः श्रीविश्वनाथो जयेत् ॥१॥

रिङ्गत्तुङ्ग-तरङ्ग-रिङ्गण-गण-व्यासङ्ग-गङ्गाऽङ्गनाऽ-

पाङ्गोत्सङ्ग-शुभाङ्ग-मङ्गल-गलत्-सत्प्राङ्गणालिङ्गना ।

काशी नाम पुरीश्वरीश्वरपुरी मुक्तिर्हि यत्किङ्करी

राराजीति सदा मुदा त्रिजगतीभाण्डात् बहिः सृष्टितः ॥२॥

श्रीमद्विष्णुपदद्वयाम्बुजमहामाध्वीकभृङ्गी पुरा

किं वा ब्रह्ममहाकमण्डलुमहामञ्चैकमुग्धाङ्गना ।

श्रीमद्धूर्जटिजाटजूटपटलीभूयोभ्रमन्नर्तकी

सैषा भाति निरन्तरं त्रिपथगा त्रैलोक्यमुक्तिव्रता ॥३॥

यत्साहित्यमयं हि वर्णनमहो सर्वे कवीन्द्राः क्षिता-

वा सृष्टेस्तु चरीकरीति सततं जग्मुश्च नान्तं क्वचित् ।

ग्रन्था यद्विषये चकासति सदा पारेसहस्रं बुधाः,

सैषा भाति जगत्त्रये त्रिपथगा पुण्यैकलभ्या नदी ॥४॥

तत्साहित्यचयाद् रमापदकृती पारेशतं पुस्तकं

भूयोऽन्विष्य यथाश्रमं ननु पुनः सम्पाद्य सर्वं हि तत् ।

सर्वेषां पुरतः प्रकाशयति यः सद्यस्तरां साम्प्रतं

येनास्तिक्यमहो महो हि महतां नर्नर्ति नूनं भुवि ॥५॥

कृष्णात्रेयकुलोद्भवोऽभवदहो श्रीरामनारायणः
पत्नी दासमणिर्बभूव सततं साध्वी तदीया सदा।
पुत्रोऽभूत्तु ततो रविः सचरणो यश्चक्रवर्ती बुधः
पत्यस्तिस्र इहाभवन् क्रमवशात्तस्याग्रजस्यादरात् ।।६।।

आदौ फूलमणिस्ततोऽभवदहो देवी सदा पार्वती
पश्चाद् या समभूत्तृतीयगृहिणी साऽऽमोदबाला प्रसूः।
एवं यो जननीत्रिवेणिविलसच्छ्रीराजहंसोपमो
गंगाज्ञानमहोदधिं वितनुते सद्ग्रन्थसङ्ग्राहकम् ।।७।।
श्रीमाध्यन्दिनशाखया परिवृतो यो दाक्षिणात्यो द्विजः
श्रीमद्ब्राह्मणवैदिकः शतपथाख्यब्राह्मणाध्यायकः।
वङ्गान्तर्गतमेदिनीपुरगतग्रामे यदीया जनिः
स प्रस्तौति रमापदो बुधवरो ग्रन्थं प्रणत्याखिलान् ।।८।।

**मनुदेवभट्टाचार्यः**
नव्यव्याकरण उपाचार्यः,
सं.सं.वि.वि. वाराणसी।

# गङ्गाज्ञानमहोदधि विषयानुक्रमणिका

## गङ्गामाहात्म्यतरङ्गः

**गङ्गामाहात्म्यसंग्रहः** पृष्ठ १ से ३९ तक

## विषयानुक्रमणिका

**समाप्तोऽयं ग्रन्थः**



**संकेतः**

| | | |
|---|---|---|
| **स.भ.पु.** | = | सरस्वतीभवन पुस्तकालयः |
| **पा.लि.प.सं.** | = | पाण्डुलिपि पत्र संख्या |
| **स.भ.पा.लि.सं.** | = | सरस्वती भवन पाण्डुलिपिसंख्या |
| **दे.ना.** | = | देवनागरी |
| **अनु.** | = | अनुष्टुपछन्दः |
| **मात्रा.** | = | मात्राछन्दः |
| **वसन्त.** | = | वसन्ततिलकाछन्दः |
| **शार्दूल.** | = | शार्दूलविक्रीडितम् |
| **ब्रह्मपु.** | = | ब्रह्मपुराण |
| **विष्णुपु.** | = | विष्णु पुराण |
| **महांभा.** | = | महाभारत |

# गङ्गामाहात्म्यतरङ्गः

## गङ्गामाहात्म्यसंग्रहः

॥ श्रीगणेशाय नमः ॥

आर्याछन्दः श्रीगङ्गायाः [१]प्रभवः [२]स्वभाव[३]सर्वामरादिरूपंत्वे[१] ।
[४]वैशिष्ट्य[५]स्मृति[६]कीर्त्तन[७]यात्रा[८]क्षेत्रप्रमाण[९]संश्रुतयः[२] ॥१॥
,, [१०]गति[११]रभयं वै [१२]दर्शन[१३]नमस्क्रिया[१४]स्पर्शना[१५]वगाहनाख्याः[३] ।
[१६]स्नानं [१७]कालविशेषस्नानं [१८]मृत्[१९]तर्पण[२०]जप[२१]पूजाश्च ॥२॥
,, [२२]दानानि [२३]व्रतचर्या [२४]श्राद्धं [२५]पिण्डक्रिया च [२६]जलपाने[४] ।
[२७]वासो [२८]विघ्नाख्यानं [२९]प्रतिग्रहा [३०]भक्तिदोषौ च ॥३॥
,, [३१]प्रायश्चित्ताक्षेपः [३२]कृतकृत्यत्वं [३३]विपर्ययो[३४]ऽस्थिविधिः ।
नखलोमकेशभस्मादीनां [३५]पातः [३६]प्रकीर्णकः क्रमशः ॥४॥
,, [३७]गङ्गाद्वारादिफलं [३८]मुक्तिश्चैव[३९]मतिपुण्य[४०]मतिरर्थम् ।
लिखितं चत्वारिंशत्प्रकरणमिति सोढदेवेन ॥५॥

## तत्र प्रथमं प्रभव-प्रकरणम्

**महाभारते—**

अनुष्टुप् महापुण्यां हि गगनात् पतन्तीं यां महेश्वरः ।
दधार शिरसा गङ्गां तामेव दिवि सेवते ॥६॥

**ब्रह्माण्डे—**

,, महारुद्रस्य या शम्भोरुत्तमाङ्गोद्भवा शिवा ।
विनिःसृता महानन्दा दक्षिणे क्षणतः शुभा[५] ॥७॥

---

**ग्रन्थकारः—** वोपदेवः, सोढदेवः, रामः
**विषयः—** पुराणेतिहासम्, स.भ.पु.पा.सं. १४८४३, १४२७६
**पत्रसंख्या—** १-२४, १-१४, पूर्णम्, **लिपिः—** दे.ना. रचनाकालः सम्वत् १६५८

आर्याछन्दः त्रिविक्रमपदोद्भूता ब्रह्माण्डसुस्थिरोद्भवा[६] ।
परा विष्णुपदी गङ्गा समुद्रापूर्तिकारिणी ॥८॥

**विष्णुपुराणे—**

अनुष्टुप् ततः प्रभवति ब्रह्म सर्वपापहरा सरित् ।
गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥९॥

**तथा—**

विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद्ब्रह्मणः[७] पुर्या[८] गङ्गा पतति वै दिवि ॥१०॥

सा तत्र पतिता दिक्षु चतुर्धा प्रत्यपद्यत ।
सीता चालकनन्दा च वंक्षुर्भद्रा[९] च वै क्रमात् ॥११॥

**मत्स्यपुराणे—**

क्षितौ तारयते मर्त्यान् नागाँस्तारयतेऽप्यधः ।
दिवि तारयते देवाँस्तेन त्रिपथगा स्मृता ॥१२॥

**भविष्ये—**

सर्वेश्वरस्य या शम्भोर्मूर्तिरेषा सनातनी ।
त्रैलोक्यपावनार्थाय दयया धरणीङ्गता ॥१३॥

## अथ द्वितीयं स्वभाव-प्रकरणम् ।

**ब्रह्माण्डे—**

पापिनां पापहन्तृत्वं स्वर्गमोक्षाप्तिहेतुना ।
स्वभाव एव गङ्गायाः शैत्यं शीतरुचो यथा ॥१४॥

**भविष्ये—**

पापखण्डनशीला हि सद्यो गङ्गा जगद्धिता ।
उपपातकराशीनां सा हि हन्त्री यतः स्मृता ॥१५॥

**स्कन्दमात्स्ययोः—**

क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम्[१०] ।
कामिनां च तथान्यत्र तपोयज्ञादि निष्फलम् ॥१६॥

गङ्गायां तु कृतं सर्वं सफलं स्यान्न संशयः ।
पा.लि.प.सं. ३ परब्रह्मस्वरूपायां गङ्गायां तु स्वभावतः ॥१७॥

शिलोदके तु पतिते तृणपर्णादिकं तथा ।
शिलात्वं भजते तत्र[११] वस्तुशक्त्या तथैव हि ॥१८॥

सर्वदेवमयी गङ्गा सर्वधर्मस्वरूपिणी ॥१९॥

**श्रीमद्भगवद्गीतायाम्—**

स्रोतसामस्मि जाह्नवी ।

## अथ तृतीयं सर्वदेवादिमयत्व-प्रकरण् ।

**भविष्ये-शिववाक्यम्—**

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
धर्मश्च सर्वदेवश्च सर्वयज्ञतपांसि च ॥२०॥

अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्वितः ।
अष्टाविंशतिकोट्यश्च[१२] देवतानां च वै सदा ॥२१॥
गङ्गायां सर्व एवैते सूक्ष्मरूपेण वै स्थिताः ॥२२॥

**स्कान्दे—**

तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ।
सर्वदा कलिकाले तु गङ्गायां नात्र संशयः ॥२३॥

देवानां च महादेवो यथाश्रेष्ठतमस्तथा ।
सर्वेषामेव तीर्थानां गङ्गातीर्थं विशिष्यते ॥२४॥

**महाभारते—**

सर्वतीर्थमयी गङ्गा सर्ववेदमयो मनुः ।
पा.लि.प.सं. ४ सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः ॥२५॥

## अथ चतुर्थं वैशिष्ट्यप्रकरणम् ।

**स्कान्दे—**

वसन्ततिलका भूतेश्वरादिह परो न हि पूजनीयो,
नैवाश्वमेधसदृशः क्रतुरस्ति तात !
गङ्गासमं त्रिभुवनेऽपि न तीर्थमस्ति,
नान्यद्व्रतं हि शिवरात्रिसमं तथास्ति ॥२६॥

**महाभारते—**

न गङ्गासदृशं तीर्थं न देवः केशवात्परः
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥२७॥

**ब्रह्माण्डे—**

कलौ तु सर्वतीर्थानि स्व-स्व-वीर्यं स्वभावतः ।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित् ॥२८॥

**नारदीये–**

कोटीष्वष्टादशसु[१३] च तीर्थानां यत्फलं भवेत्।
तत्समस्तमिहैकत्र गङ्गायां लभते नरः ॥२९॥

अनुभूतिप्रमाणा हि भक्तिग्राह्या महेश्वरी।
भावानुरूपफलदा गङ्गा सर्वजगद्धिता ॥३०॥

**ब्रह्माण्डे–**

प्रभासे गोसहस्रेण राहुग्रस्ते निशाकरे।
यत्फलं पाण्डवश्रेष्ठ! गङ्गायां तु दिने-दिने ॥३१॥

**स्कान्दे–**

सद्यः पापहरा चैव सद्यः शुद्धिकरी परा।
महत्पुण्यप्रदा सद्यः स्वर्गमोक्षफलप्रदा ॥३२॥

**दानधर्मे–**

पा.लि.प.सं. ५ स्वायम्भुवं यथास्थानं सर्वेषामुपरि स्थितम्।
तीर्थानां सरितां श्रेष्ठा गङ्गा तद्वदिहेष्यते ॥३३॥

**मात्स्ये–**

तीर्थानां परमं तीर्थं नदीनामुत्तमा नदी।
मोक्षदा सर्वभूतानां महापातकिनामपि ॥३४॥

**भविष्ये–**

ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः।
द्वापरे तद्वयं यज्ञः कलौ गङ्गैव केवला[१४] ॥३५॥

**तथा–**

चिन्तामणिगणेभ्यश्च गङ्गायास्तोयविन्दवः।
विशिष्टा ये प्रयच्छन्ति भक्तेभ्योऽचिन्तितं फलम् ॥३६॥

**शिवपुराणे–**

नास्ति गङ्गासमं तीर्थं कलिकल्मषनाशनम्।
नास्ति दान-समं पुण्यं नास्ति वेदसमा स्मृतिः ॥३७॥
नास्ति मृत्युसमः पन्था नास्ति भूतिसमं तपः ॥३८॥

**कौर्ममात्स्ययोः–**

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम्।
द्वापरे तु कुरुक्षेत्रं[१५] कलौ गङ्गा विशिष्यते ॥३९॥

**महाभारते—**

ज्ञानयोगक्रियायोगसारभूता महर्द्धिदा ।
वेदवेदान्तविद्यानां[१६] सारभूता हि जाह्नवी ॥४०॥

**स्कान्दे—**

पा.लि.प.सं. ६ द्विःसप्तभुवनादन्तर्बहिश्चापि प्रयत्नतः ।
सारमुद्धृत्य धर्मस्य ज्ञानस्य च महेश्वरः ॥४१॥

सर्वसारमयीं यां तु स्वकीयानन्दवर्धिनीम् ।
प्रीत्यैव लीलया धत्ते स्वमूर्तिं परमेश्वरः ॥४२॥

**दानधर्मे—**

ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः ।
येषां भागीरथी पुण्या मध्ये याति सरिद्वरा ॥४३॥

**वनपर्वणि—**

यत्र गङ्गा महाराज ! स देशस्तत्तपोवनम् ।
सिद्धिक्षेत्रं हि तज्ज्ञेयं गङ्गातीरसमाश्रयम् ॥४४॥

**पठन्ति—**

प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम् ।
गङ्गां प्राप्य न दुष्येत सा हि धर्मद्रवी यतः[१७] ॥४५॥

**स्मृतिः—**

न मन्त्रो न विधिश्चैव न मृदो न च गोमयम् ।
न स्थाननियमः कश्चिद्गङ्गां प्राप्य सरिद्वराम् ॥४६॥

**भविष्ये—**

सर्व एव शुभः कालः सर्वो देशस्तथा शुभः ।
सर्वो जनपदः पात्रं स्नानादौ जाह्नवीजले ॥४७॥

**महाभारते—**

विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा:दिशश्चैव हीना गङ्गाजलैः शुभैः ॥४८॥

## अथ पञ्चमं स्मरणप्रकरणम्

**हरिवंशे—**

दिव्या त्रिधारा दृष्टा या पुण्या त्रिपथगामिनी ।
पा.लि.प.सं. ७ स्मरणादेव सर्वेषामंहसां या विभेदिनी ॥४९॥

**ब्रह्माण्डे–**

मनसा संस्मरेद्यस्तु गङ्गां द्वारस्थितो नरः।
चान्द्रायणसहस्रं तु लभते नात्र संशयः ॥५०॥

**भविष्यपुराणे–**

स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम्।
भेदं सहस्रमाप्नोति गिरिर्वज्रहतो यथा ॥५१॥

**तथा–**

शतयोजनसंस्थाश्च गङ्गां भक्त्या स्मरन्ति ये[१८]।
(गङ्गा गङ्गेति च ब्रूयुर्मुच्यन्ते सर्वपातकैः ॥५२॥

भवनानि विचित्राणि विचित्राभरणा स्त्रियः।
आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम्[१९]) ॥५३॥

**ब्रह्माण्डे–**

यत्र तत्र स्थितो वाऽपि मरणे समुपस्थिते।
भक्तो गङ्गां स्मरन् याति नरः शिवपुरं परम् ॥५४॥

**भविष्ये–**

गच्छँस्तिष्ठन् स्वपन् जाग्रन् ध्यायन् भुञ्जन् श्वसन् वदन्।
यः स्मरेत्सततं गङ्गां सोऽपि मुच्येत किल्विषात् ॥५५॥

## अथ षष्ठ कीर्तन-प्रकरणम्

**विष्णुपुराणे–**

गङ्गा गङ्गेति यैर्नाम योजनानां शतैरपि।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥५६॥

**आग्नेये–**

पा.लि.प.सं. ७क यो गृहे वर्त्तमानोऽपि त्वां नाम्ना कीर्तयिष्यति।
स च याति दिवं नित्यमित्याह भगवान्भवः ॥५७॥

अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्।
गङ्गेति शब्दमाकर्ण्य नश्यन्त्येतानि वै ध्रुवम् ॥५८॥

**तथा–**

अलं ध्यानेन विप्रेन्द्राः! व्रतेनाध्ययनेन च।
इदं वः स्वर्गसोपानं गङ्गा गङ्गेति कीर्तनम् ॥५९॥

**ब्रह्माण्डे—**

शतयोजनसंस्थोऽपि त्रिसन्ध्यं सुसमाहितः।
गङ्गा गङ्गेति च ब्रूयात् स याति परमां गतिम् ॥६०॥

## अथ सप्तमं यात्राप्रकरणम्।

योगवृद्धिं शुभां देवाः प्रयच्छन्ति महात्मनाम्।
तेऽपि गच्छन्ति नियतं गङ्गामभिगतां सुरैः ॥६१॥

**मनुः—**

यमो वैवस्वतो देवो यस्तवैव हृदि स्थितः।
तेन वेदविवादस्ते[२०] मा गङ्गां मा कुरून् गमः ॥६२॥

**ब्रह्माण्डे—**

स्नानं भक्त्या तु गङ्गायां कर्तुकामस्य गच्छतः[२१]।
पदे पदेऽश्वमेधस्य फलं मर्त्यस्य जायते ॥६३॥

निर्गत्य मध्ये तु नरः कुदेशे म्रियते यदि।
गङ्गास्नानफलं सोऽपि नियतात्मा लभेत वै ॥६४॥

**वराहब्रह्माण्डयोः—**

पा.लि.प.सं. ८ अर्घ्यादिकं गृहीत्वा तु सेन्द्रा देवाः समासते।
आगच्छन्ति कदेत्यार्या गङ्गामभिगता नराः[२२] ॥६५॥

**ब्रह्माण्डे—**

ये गच्छन्ति स्वतो[२३] गङ्गां परांश्च प्रेरयन्ति ये।
गृहे ते सर्वभोगानामन्ते मुक्तेश्च भाजनम् ॥६६॥

**भविष्ये—**

बहुनाऽत्र किमुक्तेन गङ्गायाश्चैव भक्तितः।
महापातकिनो ये वा गमनाद्ब्रह्मलोकगाः ॥६७॥

गच्छध्वं हि बुधा![२४] गङ्गां मत्वा विश्व[२५]मशाश्वतम्।
सुघोरे[२६] च कलौ प्राप्ते मुक्तिर्वो वाञ्छिता यदि ॥६८॥

**तथा—**

तेषामुपरि नान्योऽस्ति कल्पकोटिशतैरपि।
ये तु संत्यक्तदम्भाश्च गङ्गां ध्यायन्ति यान्ति च ॥६९॥

**भविष्ये—**

आनुषङ्गेन सङ्गेन वाणिज्येन[२७] च सेवया।
कामासक्त्याऽपि हि नरो गङ्गां प्राप्य दिवं व्रजेत् ॥७०॥

**दानधर्मे—**

गङ्गाङ्गता ये त्रिदिवङ्गतास्ते-
ऋषिस्तुतां ब्रह्मपथावतारिणीम् ॥७१॥

**स्कान्दे—**

गङ्गास्नानं करोमीति मनसा यस्तु चिन्तयेत्।
अशक्तस्तु स्वयं गन्तुं सामग्री यस्य नास्ति वै ॥७२॥

स तया श्रद्धया भक्त्या विमुक्तः सर्वपातकैः।
पा.लि.प.सं.८क ब्रह्मलोकमवाप्नोति देहान्ते नात्र संशयः ॥७३॥

## अथाष्टमं क्षेत्रप्रमाणप्रकरणम्।

**ब्रह्माण्डे—**

सार्धहस्तशतं यावद्गर्भतस्तीरमुच्यते।
न मन्त्रो न विधिः कालो न मृदो न च गोमयम् ॥७४॥
शुद्धिहेतुरित्यनुषङ्गः।[२८]

**पाद्मे—**

अत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ॥७५॥

**स्कान्दे—**

तीराद्गव्यूतिमात्रं तु[२९] परितः क्षेत्रमुच्यते।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥७६॥
अत्रस्थाश्च[३०] दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥७७॥

**ब्रह्माण्डे—**

यत्र गङ्गा महाराज! शम्भुस्तत्र तपोवनम्।
सिद्धिक्षेत्रं तु तज्ज्ञेयं समन्ताच्च त्रियोजनम् ॥७८॥

**दानधर्मे—**

भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम्।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥७९॥

**ब्रह्माण्डे—**

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥८०॥

## अथ नवमं [31]श्रुतादिप्रकरणम्

**स्कान्दे–**

श्रुताभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ।
या पावयति भूतानि कीर्तिता च दिने दिने ॥८१॥

**दानधर्मे–**

पा.लि.प.सं. ९ सप्तावरान्सप्तवरान् पितॄँस्तेभ्यश्च ये परे ।
पुमाँस्तारयते गङ्गां स्पृष्ट्वा[32] वीक्ष्यावगाह्य च ॥८२॥

## अथ दशमं गतिप्रकरणम्

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां[33] गङ्गैव परमा गतिः ॥८३॥

**भविष्ये–**

परदारपरद्रव्यवाञ्छाद्रोहरतात्मनाम् ।
गतिमन्विष्यमाणानां गङ्गैव परमा गतिः ॥८४॥

**स्कान्दे–**

सद्यः पातकसंहन्त्री सद्यो दुःखविनाशिनी ।
सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः ॥८५॥

## अथैकादशं अभयप्रकरणम्

**दानधर्मे–**

न भयेभ्यो भयं तस्य न पापिभ्यो न राजतः ।
न रोगादेश्च यो[34] गङ्गामादेहान्तं तु सेवते ॥८६॥

अप्रतिष्ठाश्च ये [35]किंचिदधर्मकरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गा हि शरणं कर्म शर्म च ॥८७॥

गङ्गाम्भःकणदिग्धस्य वायोः संस्पर्शनादपि ।
पापशीला अपि नराः शुभां गतिमवाप्नुयुः ॥८८॥

## अथ द्वादशं दर्शनप्रकरणम्

**दानधर्मे–**

जात्यन्धैरिह तुल्यास्ते मृतैः पंगुभिरेव वा ।
समर्था ये न गच्छन्ति गङ्गां पुण्यजलां शिवाम् ॥८९॥

लावण्यैर्नष्टविषयैर्न सुखैर्न धनागमैः[३६] ।
तथा प्रसादो भवति वीक्ष्य गङ्गां यथा भवेत् ॥९०॥

**भविष्ये—**

भवन्ति निर्विषाः सर्पा[३७] यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वन्मर्त्यः पापैः प्रमुच्यते ॥९१॥

**ब्रह्माण्डे—**

ज्ञानमैश्वर्यमायुश्च प्रतिष्ठा सर्वमान्यता ।
शुभानामाश्रयत्वं हि गङ्गादर्शनजं फलम् ॥९२॥

**स्मृतिश्च—**

वर्तमानमतीतं च ज्ञानतोऽज्ञानतोऽपि वा ।
कृतं यदशुभं कर्म गङ्गां दृष्ट्वा प्रणश्यति ॥९३॥

**भविष्ये—**

वापीकूपतटाकादिप्रपासत्रादिभिश्च[३८] वै ।
अन्यत्र यद्भवेत्पुण्यं तद्गङ्गादर्शनाद् भवेत् ॥९४॥

**तथा—**

यत् फलं जायते पुंसां दर्शने परमात्मनः ।
तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥९५॥

**तथा—**

विधूतपापा ये मर्त्याः परज्योतिःस्वरूपिणीम् ।
सहस्रसूर्यप्रतिमां गङ्गां पश्यन्ति भूतले ॥९६॥

कदा द्रक्ष्यामि तां गङ्गां कदा स्नानं करोम्यहम् ।
इत्याद्यभिलषिता[३९] गङ्गा कुलानां शतमुद्धरेत् ॥९७॥

वेदान्तवेद्यं यत्तत्वं परं ब्रह्म सनातनम् ।
पश्यन्नुनुदिनं[४०] गङ्गां प्रत्यक्षं पुरतः स्थिताम् ॥९८॥

**पाद्मे—**

स्वर्गं मासात्तदा[४१] पश्येत्स्पृशेद्वाऽपि पुनः पुनः ।
भक्त्या यदीच्छति नरः शाश्वतं चामृतं फलम् (पदम्) ॥९९॥

## अथ त्रयोदशं नमस्कारप्रकरणम्

**भविष्ये–**

सर्वतत्त्वमयीं गङ्गां परमार्थस्वरूपिणीम् ।
पा.लि.प.सं.१० त्रैलोक्यतारणार्थाय गङ्गा तां प्रणमेत्सदा ॥१००॥

**तथा–**

प्रणमेत्प्रातरुत्थाय गङ्गां पुण्यजलां शुभाम् ।
यस्तु धमार्थकामानां सत्यमायुष्यभाजनम् ॥१०१॥

## अथ चतुर्दशं स्पर्शनप्रकरणम्

**ब्रह्माण्डे–**

अभक्त्याऽपि महापापो गङ्गां स्पृष्ट्वा शुभो भवेत् ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः[४२] ॥१०२॥

**नारदीये–**

तथेह गङ्गां संस्पृश्य ब्रह्मरूपां सुपुण्यदाम् ।
शुभा भवन्ति ते सर्वे सत्यमेव न संशयः ॥१०३॥

कृष्णायसो यथा लोके मलीमसतरोऽपि वा ।
स्पर्शसंस्पर्शनात्सद्यो हेमत्वं प्रतिपद्यते ॥१०४॥

**वाराहे–**

ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वा सर्वपातकैः ।
यस्यास्तोयैर्नरः स्पृष्टः सर्वपापैः प्रमुच्यते ॥१०५॥

## अथ पञ्चदशं अवगाहप्रकरणम्

**वनपर्वणि–**

यद्यकार्यशतं कृत्वा कृतं गङ्गावगाहनम् ।
सर्वं दहति गङ्गाम्भः[४३] तूलराशिमिवानलः ॥१०६॥

**दानधर्मे–**

अपकृत्य तमस्तीव्रं[४४] यथा भात्युदये रविः ।
तथापकृत्य[४५] पाप्मानं भाति गङ्गाजलोक्षितः ॥१०७॥

**ब्रह्माण्डे–**

यः[४६] पुण्यवर्धिनी गङ्गा सकृद्भक्त्याऽवगाहिता ।
तेषां कुलानि भक्त्या च भारात्तारयते[४७] शिवा ॥१०८॥

**भविष्ये—**

पा.लि.प.सं.१०क भक्त्या गङ्गावगाहस्य फलं वक्तुं[४८] न शक्यते।
स्वर्गमोक्षौ फलं तस्याप्येवमाह पितामहः ॥१०९॥

## दुर्वाससो वाक्यम्

मज्जन्ति मुनयः सर्वे त्वमेकः किन्न मज्जसि।
मुक्तिस्त्वद्दर्शनाद्देवि! न जाने स्नानजं फलम् ॥११०॥

## अथ षोडशं स्नानप्रकरणम्

**विष्णुपुराणे—**

स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति।
अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते ॥१११॥

**भविष्ये—**

शक्तस्य पण्डितस्यापि गुणिनो दानशालिनः।
गङ्गास्नानविहीनस्य ध्रुवं जन्म निरर्थकम् ॥११२॥

**ब्रह्माण्डे—**

अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति।
स्नानमात्रेण गङ्गायां सद्यः पुण्यमनुत्तमम् ॥११३॥

प्रभासे गोसहस्रेण राहुग्रस्ते निशाकरे।
यत्पुण्यं लभते मर्त्यो गङ्गायां तद्दिने दिने ॥११४॥

**भविष्ये—**

पितरो योगिनश्चापि गाथां गायन्ति सादराः।
अपि नः स कुले कश्चिद् गङ्गास्नायी भविष्यति ॥११५॥
देवेभ्यश्च पितृभ्यश्च दास्यते सतिलं जलम् ॥११६॥

**स्कान्दे—**

क्रन्दन्ति सर्वपापानि सम्भ्रान्ताः सर्वपापिनाम्[४९]।
अरिष्टानि पलायन्ते गङ्गास्नानोद्यतस्य वै ॥११७॥

**ब्रह्माण्डे—**

अन्यस्थानकृतं पापं गङ्गातीरे विनश्यति।
पा.लि.प.सं.११ गङ्गातीरकृतं पापं गङ्गास्नानाद्विनश्यति ॥११८॥

**भविष्ये—**

(गङ्गास्नानरतं मर्त्यं दृष्ट्वैव यमकिङ्कराः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः[५०]) ॥११९॥

**तथा—**

यमोऽपि भीतस्तं दृष्ट्वा सम्भ्रमात्प्रणिपत्य च ।
न शक्नोति तथा स्थातुं तस्याग्रे शुभकर्मणः ॥१२०॥

**कालिकापुराणे—**

वाञ्छन्ति देवता नित्यं मानुष्यं प्राप्नुयामहे ।
सम्यक्श्रद्धापरा भूत्वा गङ्गास्नानं लभेमहि ॥१२१॥

**भविष्ये—**

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
गङ्गास्नानेन दग्धः स्यात्तूलराशिरिवाग्निना ॥१२२॥

अप्सु नारायणं देवं स्नानकाले सदा पठेत्[५१] ।
साक्षाद्ब्रह्मस्वरूपायां गङ्गायां तु विशेषतः ॥१२३॥

**तथा—**

प्रवेशादेव गङ्गायाः स्नानार्थे भक्तितो नृणाम् ।
ब्रह्महत्यादयो दोषा हाहेत्युक्त्वा[५२] प्रयान्त्यलम् ॥१२४॥

**ब्रह्माण्डे—**

रात्रौ दिवा वा सन्ध्यायां गङ्गायां च प्रसङ्गतः ।
स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥१२५॥

अलक्ष्म्या किल संयुक्तो वृत्तं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यो गङ्गायां स प्रमुच्यते ॥१२६॥

**भविष्ये—**

ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गङ्गास्नानान्न संशयः ॥१२७॥

**ब्रह्माग्नेयदानधर्मे—**

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः कृतकर्मणाम्[५३] ।
शुद्धिर्भवति[५४] या पुंसां न सा क्रतुशतैरपि ॥१२८॥

**आग्नेये सूर्यवाक्यम्—**

पां.लि.प.सं.११क ये तु सूर्यांशुसन्तप्ते जले स्नानादिका क्रियाः[५५] ।
करिष्यन्ति च यास्यन्ति भित्वा ते मम मण्डलम्[५६] ॥१२९॥

**पुलस्त्यः—**

कपटेनापि गङ्गायां स्नानदानादिकर्म यत् ।
यो लाभख्यातिपूजार्थं कुर्यात् सोऽपि दिवं व्रजेत् ॥१३०॥

**ब्रह्माण्डे—**

स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा ज्ञानमवाप्नुयात् ।
गङ्गास्नानेन भक्त्या तु परमाप्नोति पूरुषः ॥१३१॥

**पठन्ति—**

गङ्गायां मौशलस्नानं महापातकनाशनम् ।

**भविष्ये—**

कपिलाकोटिदानाद्धि गङ्गास्नानं विशिष्यते ॥१३२॥
सकृद्गङ्गावगाहे तु कुलकोटीः समुद्धरेत् ॥१३३॥

**तथा—**

सर्वतीर्थेषु यत्पुण्यं सर्वेष्वायतनेषु च ।
तत्फलं लभते शीघ्रं गङ्गास्नानान्न संशयः ॥१३४॥

## अथ सप्तदशं पुण्यकालस्नानप्रकरणम्

**भविष्ये—**

द्वादश्यां श्रवणर्क्षे च ह्यष्टम्यां पुण्ययोगतः ।
आर्द्रायां च चतुर्दश्यां गङ्गास्नानं सुदुर्लभम् ॥१३५॥

**तथा—**

वैशाखे पूर्णिमायां स्यान्माघे वा कार्तिके तथा ।
तथा माघी[५७] त्वमावास्या गङ्गायां तु सुदुर्लभा ॥१३६॥

कृष्णाष्टम्यां सहस्रं तु शतं स्यात् सर्वपर्वसु ।
अमावास्यायां तु तथा सहस्रं तु दिनक्षये ॥१३७॥
सोमसूर्यग्रहे लक्षं व्यतीपाते त्वनन्तकम् ॥१३८॥

**ब्रह्माण्डे—**

संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
पा.लि.प.सं.१२ पुण्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत् ॥१३९॥

**भविष्ये—**

जन्मभे[५८] च कृतं स्नानं गङ्गायां भक्तिभावतः ।
जन्मप्रभृति वै पापं तत्क्षणादेव नश्यति ॥१४०॥

चतुर्दश्यां यदा युक्तो व्यतीपातेन चन्द्रमाः ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥१४१॥

तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात् ।
यत्र तत्र विपन्नोऽपि गङ्गा[५९]मरणजं च तत् ॥१४२॥

मन्दाक्रान्ता
ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां,
हस्ते शैलान्निरगमदियं[६०] जाह्नवी मर्त्यलोकम् ।
पापान्यस्यां[६१] हरति हि तिथौ सा दशेत्याहुरार्याः,
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥१४३॥

**भविष्ये—**

कृष्णाष्टम्यां यदात्वार्द्रा व्यतीपातश्च वै भवेत् ।
गङ्गायां दुर्लभं स्नानं संयोगोत्पत्तिदुर्लभम् ॥१४४॥

यो माघे दैवयोगेन तदा[६२] स्नानं तु योगवित् ।
लभते चेत्स सद्यो वै जातीः स्मरति पौर्वकीः[६३] ॥१४५॥

सर्वदानतपोध्यानफलमाप्नोति तत्क्षणात् ।
सर्वशास्त्रार्थविज्ञाता[६४] ह्यरोगश्च तथा भवेत् ॥१४६॥

नैरन्तर्येण गङ्गायां मासं यः स्नाति मानवः ।
स हि शक्रसमो लोके चिरं स्थित्वा स्वगोत्रजैः ॥१४७॥
ततो ब्रह्मपुरे तिष्ठेत् कल्पकोटिसमायुतम् ।

**तथा—**

पा.लि.प.सं.१२क षण्मासं स्नाति गङ्गायां नैरन्तर्येण यो नरः ॥१४८॥
सर्वपापविनिर्मुक्तः समस्तकुलसंयुतः ।
समस्तभोगसंयुक्तो विष्णुलोके महीयते ॥१४९॥

परार्धद्वितयं यावन्नात्र कार्या विचारणा ।
षण्मासमेकस्त्वपरः सकृदेवोत्तरायणे ॥१५०॥

तयोः स्नानं भवेत्तुल्यं विषुवे च तथैव च ।
संक्रान्तिषु च सर्वासु चातुर्मास्यफलं लभेत् ॥१५१॥

**तथा—**

संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः ।
गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत् ॥१५२॥

**ब्राह्मे—**

चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥१५३॥

इन्दोर्लक्षगुणं[६५] प्रोक्तं रवेर्दशगुणं तथा ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥१५४॥

**तथा—**

गवां कोटिसहस्रस्य सम्यग् दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥१५५॥
दिवाकरे पुनस्तद्वच्छतसंख्यमुदाहृतम् ।

**भविष्ये—**

प्रातःस्नानाद्दशगुणमनन्तं[६६] शिवसन्निधौ ॥१५६॥

**तथा—**

महाज्यैष्ठी सुरश्रेष्ठ ! कृतानन्तफला स्मृता ।
तस्यां तु जाह्नवीस्नानं सूर्यग्रहशताधिकम् ॥१५७॥

मासंसंज्ञे यदा तिष्ये[६७] चन्द्रः सम्पूर्णमण्डलः ।
पा.लि.प.सं.१३ गुरुणा याति संयोगं तन्महत्त्वं तिथेर्मतम्[६८] ॥१५८॥

पितॄनुद्दिश्य यो देवान् स्नापयेद्गाङ्गवारिणा ।
दृष्टाः[६९] स्युस्तस्य पितरो नरकस्था अपि क्षणात् ॥१५९॥

तेषां लोकान् प्रयान्त्येव मोदन्ते च वै चिरम् ।
मृत्कुम्भात्ताम्रकुम्भैस्तु स्नानं दशगुणं स्मृतम् ॥१६०॥
रौप्यैर्लक्षगुणं प्रोक्तं हैमैः कोटिगुणं भवेत् ॥१६१॥

**पैठीनसिः—**

कृत्वा प्रतिकृतिं यस्य कौशीं तत्तीर्थवारिणि ।
मज्जयेत्तु यमुद्दिश्य[७०] सोऽष्टभागफलं लभेत् ॥१६२॥

**तथा—**

कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणा निर्मितः पुरा ।
त्वयि स्नाते च स स्नातो यस्येदं ग्रन्थिबन्धनम् ॥१६३॥

महाज्यैष्ठ्यां तु यः पश्येत्पुरुषः पुरुषोत्तमम् ।
सोऽपि सद्गतिमाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥१६४॥

**पठन्ति—**

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समाः ॥१६५॥

**स्मृतिः—**

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैरपि ॥१६६॥

**पाद्मे—**

महापातकसंज्ञानि यानि पापानि सन्ति वै ।
गोविन्दं द्वादशीं प्राप्य तानि मे हर जाह्नवी ॥१६७॥

## अथ अष्टादशं मृत्तिकाप्रकरणम्

**तत्र दानधर्मब्रह्माण्डाग्नेयेषु—**

गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्त्ति यः ।
पा.लि.पं.सं.१३क बिभर्त्ति रूपं सोऽर्कस्य तमो नाशाय केवलम् ॥१६८॥

**स्कान्दे—**

अतिपापतरो नित्यं सुदूरस्थोऽपि यो नरः ।
आलभ्य विबुधान् याति मूर्ध्ना तत्तीरमृत्तिकाम् ॥१६९॥
विलिप्य सर्वदेहं तु गोसहस्रफलं लभेत् ॥१७०॥

## अथ ऊनविंशं तर्पणप्रकरणम्

**तत्र ब्रह्माण्डे दानधर्माग्नेयेषु—**

य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄँस्तर्पयेद्गङ्गामभिगम्य सुराँस्तथा ॥१७१॥

**विष्णु पुराणे—**

दत्ताः पितृभ्यो यत्त्वापस्तनयैः श्रद्धयान्वितैः ।
समात्रयं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥१७२॥

**भविष्ये—**

चत्वारः सुलभा वेदाः षडङ्गसपदक्रमाः ।
सुलभानि कुरुक्षेत्रे दानानि विविधानि च ॥१७३॥

चान्द्रायणानि कृच्छ्राणि तपांसि विविधानि च ।
अग्निष्टोमादयो यज्ञाः सुलभाश्चाप्तदक्षिणाः ॥१७४॥

तथा–

गङ्गातोयैस्तु सलिलैदुर्लभं पितृतर्पणम् ।
मासं तर्पणमात्रेण पीडानां यातने न च ॥१७५॥

गङ्गायां पितरः सर्वे विमाने सूर्यवर्चसि ।
मासतर्पण[७१]मात्रेण सन्तृप्ताः श्राद्धपिण्डकैः ॥१७६॥
आरुह्य सहसा यान्ति ब्रह्मलोकमनामयम् ॥१७७॥

तथा–

यावन्तश्च तिला मर्त्यैर्गृहीताः पितृतर्पणे[७२] ।
तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ॥१७८॥

स्वर्गसंस्थाश्च ये केचित्पितरः पुण्यशालिनः ।
गङ्गाजलैस्तथा पुंसां तर्पिता विधिनाऽसकृत् ॥१७९॥
तेऽपि मोक्षं प्रपद्यन्ते यथा देवोऽब्रवीद्वचः ॥१८०॥

## अथ विंशं जपप्रकरणम्

तत्र स्कान्दे–

तन्नामजापी सततं सर्वदुःखान्तमेष्यति ॥१८१॥

भविष्ये–

सर्वानन्दप्रदायिन्यां गङ्गायां मानवोत्तमः ।
अष्टाक्षरं जपेन्मन्त्रं तस्य मुक्तिः करे स्थिता ॥१८२॥

गङ्गायां विधिवत् स्नात्वा जपेदष्टाक्षरं यदि ।
सर्वयज्ञफलं तस्य सर्वदानफलं तथा ॥१८३॥

सर्वव्रतफलं चैव भवेत्सर्वतपःफलम् ।
षण्मासादणिमाद्यास्तु सिद्धयोऽत्र भवन्ति वै ॥१८४॥

एकान्ते विजने स्थाने गङ्गायास्तु जलोक्षितः ।
अष्टाक्षरं जपन्मन्त्रं विष्णुसायुज्यमाप्नुयात् ॥१८५॥

अष्टाक्षरो महामन्त्रः सर्वपापहरः परः ।
भक्तानां जपतां साक्षात् स्वर्गमोक्षफलप्रदः ॥१८६॥

**तथा–**

अष्टाक्षराद् द्विजश्रेष्ठ ! श्रेष्ठः पंचाक्षरः परः ।
नमः शिवायेति मन्त्रः प्रणवेन तु संयुतः ॥१८७॥

भक्तानां जपतां साक्षात्स्वर्गमोक्षफलप्रदः ।
सर्वमन्त्राधिकश्चैव मोक्षोपायः षडक्षरः ॥१८८॥

## ॐ नमः शिवायेति

अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
महापातकयुक्तोऽपि मन्त्रस्यास्य जपात्तथा ॥१८९॥

अधिकारी भवेत्सद्य इति देवोऽब्रवीच्छिवः ॥१९०॥

**ब्रह्माण्डे–**

स्नानं दानं तपो जप्यं श्राद्धं देवप्रपूजनम् ।
गङ्गायां तु कृतं सर्वं कोटिकोटिगुणं भवेत् ॥१९१॥

**विष्णुधर्मोत्तरे–**

मन्त्रमन्तर्जले जप्यं ध्यायन्वै मन्त्रदेवताम् ।
नरो मोचयते पापं महापातकसम्भवम् ॥१९२॥

## अथ एकविंशं पूजाप्रकरणम्

**गाङ्गेये–**

पूजितायान्तु गङ्गायां पूजिताः सर्वदेवताः ।
तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥१९३॥

**ब्रह्माण्डे–**

स्मृताऽर्चिता स्तुता ध्याता भाविताऽत्वनुमोदिता ।
गङ्गा तारयते पुंसामुभौ वंशौ भवार्णवात् ॥१९४॥

यः प्रदद्याद् गवां लक्षं दोग्ध्रीनां वेदपारगे ।
अन्यत्र विधिना यस्तु नरो गङ्गातटे सकृत् ॥१९५॥

एकाहमर्चयेद् भानुं शिवं वाऽप्यथ केशवम् ।
यथासम्भवपत्राद्यैस्तस्य पुण्यं ततोऽधिकम् ॥१९६॥

**पाद्मे—**

गङ्गातीरे महादेवं विल्वपत्रेण ये नराः।
पूजयिष्यन्ति सुप्रीतास्तेऽपवर्गस्यं भाजनम् ॥१९७॥

नीलोत्पलं सितं पद्मं गङ्गायाः सर्वदा प्रियम्।
तत्पुष्पैः पूजयेद्यस्तु गङ्गां भक्त्या नरोत्तमः ॥१९८॥

तस्य गङ्गा सदा तुष्टा सर्वान्कामान्प्रयच्छति।
इह श्रियं परां दत्वा मुक्तिमन्ते ददाति च ॥१९९॥

**ब्रह्माण्डे—**

वैशाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥२००॥

पा.लि.प.सं.१५ तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ॥२०१॥

**भविष्ये—**

चतुर्भजां त्रिनेत्रां च सर्वाभरणभूषिताम्।
रत्नकुम्भसिताम्भोजवरदानाभयङ्कराम् ॥२०२॥

श्वेतपट्टपरीधानां मुक्ताभरणभूषिताम्।
ततो ध्यायेत् सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥२०३॥

चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम्।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ॥२०४॥

सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम्।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम् ॥२०५॥

दिव्यरूपविभूषाञ्च दिव्यगन्धानुलेपनाम्।
ध्यात्वा जले यथा प्रोक्तं तथाऽऽचार्यांश्च पूजयेत् ॥२०६॥

**"ॐ गङ्गायै विश्वमुख्यायै**
**शिवामृतायै शान्तिप्रदायिन्यै नारायण्यै**
**नमो नमः" इति पूजामन्त्रः ॥**

**तथा—**

गङ्गायां तु नरः स्नात्वा योऽनिशं लिङ्गमर्चयेत्।
एकेन जन्मना मुक्तिं परमाप्नोति[७३] स ध्रुवम् ॥२०७॥

**तथा—**

अग्निहोत्राश्च वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
गङ्गायां लिङ्गपूजायाः कोट्यंशे नाऽपि नो समाः ॥२०८॥

**शिवधर्मे—**

देवो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ।
सर्वमन्त्राधिकश्चैव प्रणवादिषडक्षरः ॥२०९॥

**तथा—**

गङ्गातीरसमुद्भूतमृदा लिङ्गानि भक्तितः ।
सल्लक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ॥२१०॥

पा.लि.प.सं.१५क मन्त्रैस्तु गन्धपुष्पाद्यैः सम्पूज्याऽपि स्वभक्तितः ।
गङ्गायां प्रक्षिपेन्नित्यं तस्य पुण्यं ततोऽधिकम् ॥२११॥

**तथा—**

विभवे सति यो लोभान्न कुर्याद्विधिविस्तरम् ।
नैतत्फलमवाप्नोति देवेन्द्रो हि स उच्यते ॥२१२॥

**तथा—**

गङ्गामज्जनशीलस्य गङ्गातीरनिवासिनः ।
सर्वं कृत्वा यथान्यायमश्वमेधफलं लभेत् ॥२१३॥

## अथ द्वाविंशं दानप्रकरणम्

**भविष्ये—**

वासो हिरण्यरूपाणि पत्रपुष्पफलानि च ।
अन्नपानादिकं चापि यस्य यद्यदतिप्रियम् ॥२१४॥

तत्तथैव हि गङ्गायै यः प्रयच्छति मानवः ।
तत्तत्सुखमनन्तं हि सम्प्राप्नोतीह[७४] जन्मनि ॥२१५॥
प्रेत्य चाप्नोति निर्वाणं परमं सन्नियोजनम्[७५] ॥२१६॥

**तथा—**

गङ्गायां कुशदानेन ब्रह्मलोकमवाप्नुयात् ।
वैष्णवं यवदानेन रूद्रलोकमवाप्नुयात् ॥२१७॥

प्रायो हि तिलदानेन हैमेनैश्वर्यमाप्नुयात् ।
सदाशिवपदं साक्षादाज्यदानेन चाप्नुयात् ॥२१८॥

गो-भूहिरण्यदानेन कृत्वा यागं तटेऽसकृत्।
नरो न जायते भूयः संसारे दुःखसंकटे ॥२१९॥

दीर्घायुष्यं[७६] हि वासोभी रत्नदानेन संपदः।
विद्यादानेन वै ज्ञानं कीर्त्तिः कन्याप्रदानतः ॥२२०॥

यज्ञो दानं तपो जाप्यं[७७] श्राद्धं च सुरपूजनम्।
गङ्गायां तु कृतं सर्वं कोटिकोटिगुणं भवेत् ॥२२१॥

**भविष्ये–**

शिवस्य विष्णोः सूर्यस्य दुर्गाया ब्रह्मणस्तथा।
पा.लि.प.सं.१६ गङ्गातीरे प्रतिष्ठां तु यः करोति नरोत्तमः ॥२२२॥

तथैवायतनं तेषां कारयित्वा तु भक्तितः।
अन्यतीर्थेषु करणात् कोटिकोटिगुणं भवेत् ॥२२३॥

**तथा–**

गङ्गातीरे नरो यस्तु जम्ब्वाम्र[७८]बकुलाकुलम्।
कदलीनारिकेलैश्च कपित्थाश्वत्थचम्पकैः ॥२२४॥

विचित्रं कारयित्वैवमारामं पुष्पशोभितम्।
शिवस्य विष्णवे वाऽपि दुर्गायै भास्कराय वा ॥२२५॥

प्रयच्छन्ति महाभक्त्या सर्वार्थं परिकल्प्य च।
तस्य पुण्यफलं वक्ष्ये संक्षेपान्न तु विस्तरः ॥२२६॥

यावन्ति तेषां वृक्षाणां पुत्रपुष्पफलानि च।
बीजानि च विचित्राणि तेषां मूलानि वै तथा ॥२२७॥
तावत्कल्पसहस्राणि तेषां लोके स मोदते।

## अथ त्रयोविंशं व्रतप्रकरणम्

शालितण्डुलप्रस्थेन तथा द्व्यर्धेन वा पुनः।
पायसं पाययित्वा तु मधुखण्डघृतैस्तथा ॥२२९॥

प्रत्येकं पलमात्रं तु तत्र प्रक्षिप्य भक्तितः।
तत्पायसमपूपाँश्च मण्डकान् मोदकानि च ॥२३०॥

तथा गुञ्जार्धमात्रं तु सुवर्णं रौप्यमेव च।
चन्दनागुरुकर्पूरं कुङ्कुमादि च गुग्गुलम् ॥२३१॥

विचित्रमाल्यपत्राणि रोचनासितसर्षपम्[७९]।
नीलोत्पलस्य पुष्पाणि पुष्पाभावे दलानि च ॥२३२॥

यथाशक्ति महाभक्त्या गङ्गाम्भसि विनिःक्षिपेत्।
मासे मासे पौर्णमास्यामयने ग्रहणद्वये ॥२३३॥

पा.लि.प.सं.१६क श्रद्धयाऽनेन[८०] सत्रेण यावत्संवत्सरं तथा।
ॐ गङ्गायै नारायण्यै शिवायै ते नमो नमः ॥२३४॥

इति मन्त्रेण शतमष्टोत्तरं जपेत्।
गङ्गाजलान्तःस्थित्वा तु तन्मनाः मुक्तसंशयः ॥२३५॥

हविष्याशी मिताहारो गमितेषु दिनेषु च।
संवत्सरान्ते तस्यैषा गङ्गा दिव्यवपुर्धरा ॥२३६॥

दिव्यमाल्याम्बरधरा दिव्यगन्धानुलेपना।
चारुरत्नधरा देवी दिव्यरूपविभूषणा ॥२३७॥

प्रत्यक्षरूपा पुरतस्तिष्ठत्येव वरप्रदा।
एवं प्रत्यक्षतः साक्षाद् गङ्गां दिव्यवपुर्धराम् ॥२३८॥

दृष्ट्वा तु चक्षुषा मर्त्यो वरदानसमुद्यताम्।
यान् यान् कामयते कामाँस्ताँस्तान्कामानवाप्नुयात्[८१] ॥२३९॥
निष्कामस्तु परं मोक्षं लभते चैक[८२]जन्मनि ॥२४०॥

**तथा–**

गङ्गाभक्तिरतस्त्वप्सु श्लेष्माऽसृङ्मांससञ्चयम्[८३]।
उच्छिष्टं न क्षिपेच्चापो हस्तपादैर्न ताडयेत् ॥२४१॥

## अथ चतुर्विंशं श्राद्धप्रकरणम्

**तत्र भविष्ये–**

गयाश्राद्धं कृतं तेन समुत्सृष्टो वृषस्तथा।
येन त्वद्वीचिसंसिक्ते तीरे श्राद्धमकारि वै ॥२४२॥

**तथा–**

पितृनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम्।
गुडसर्पिःसमायुक्तं गङ्गाम्भसि विनिःक्षिपेत् ॥२४३॥
तृप्ताः भवन्ति पितरस्तस्य वर्षशतत्रयम्।

**देवीपुराणे—**

अकालेऽप्यथवा काले तीर्थे प्राप्ते महामतिः ।
पा.लि.प.सं.१७ प्राप्तैरेवं सदा सम्यक् कर्त्तव्यं पितृतर्पणम् ॥२४५॥

**भविष्ये—**

देवाश्च पितरश्चैव गङ्गायां तु सदाश्रिताः ।
आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ॥२४६॥

**वृहद्विष्णुः—**

गङ्गायमुनयोस्तीरे तथा ह्यमरकण्टके ।
नर्मदायां गयातीर्थे सर्वमानन्त्यमश्नुते ॥२४७॥

**पाद्मे—**

एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते ।
गङ्गायां यत् कृतं श्राद्धं तच्छ्राद्धमपवर्गदम् ॥२४८॥

## अथ पञ्चविंशं पिण्डदानप्रकरणम्

**तत्र कूर्मपुराणे—**

सकृद्गङ्गाभिगमनं कृत्वा पिण्डं ददाति यः ।
तारिताः पितरस्तेन भवाम्भोधेस्तिलोदकैः ॥२४९॥

**तथा—**

गङ्गायां च गयायां च पिण्डदानं समं मतम् ।
विशेषतः कलियुगे गङ्गापिण्डः[८४] प्रशस्यते ॥२५०॥

**ब्रह्माण्डे—**

गङ्गायां पिण्डदानेन पितरस्तु तिलोदकैः ।
नरकस्थाः दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥२५१॥

**पठन्ति—**

गङ्गायां विजने चैव माहेन्द्रे जाह्नवीतटे ।
अत्र पिण्डप्रदो याति ब्रह्मलोकमनामयम् ॥२५२॥

## अथ षडविंशं जलप्रकरणम्

**तत्र स्कान्दे—**

योऽसौ सर्वगतो देवश्चित्स्वरूपी[८५] जनार्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥२५३॥

**भविष्ये—**

जलकृत्यानि सर्वाणि गङ्गातोयेन यः सदा ।
नियमेनैव कुरुते यावज्जीवं प्रतिज्ञया ॥२५४॥

पा.लि.प.सं.१७क स एव जीवन्मुक्तस्तु स मुनिः स च पण्डितः ।
तेनैव साक्षात्तत्प्राप्तं मोक्षार्थं परमं पदम् ॥२५५॥

**लैङ्गे—**

ब्रह्महा गुरुहा गोघ्नः स्वर्णहृद्गुरुतल्पगः ।
गङ्गाम्भसा तु पूयन्ते नात्र कार्या विचारणा ॥२५६॥

**ब्राह्मे—**

तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान् ।
संसेवते मासमेकं गङ्गाम्भः स विशिष्यते ॥२५७॥

**दानधर्मे—**

देवाः सोमार्कसंस्थानि तथा शक्रादिभिर्मखैः[८६] ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥२५८॥

**देवल-यमौ—**

क्षेत्रस्थमुद्धृतं वाऽपि शीतमच्छमथापि[८७] वा ।
गांङ्गेयं हरते तोयं पापमामरणान्तिकम् ॥२५९॥

वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम् ।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥२६०॥

**ब्रह्माण्डे—**

चिन्तामणिगणाद्वापि गङ्गायास्तोयबिन्दवः ।
विशिष्टा ये प्रयच्छन्ति[८८] भक्तेभ्योऽचिन्तितं फलम् ॥२६१॥

**दानधर्मे—**

मेरोः समुद्रस्य च सर्वयत्नैः संख्योपलानामुदकस्य चापि ।
शक्या वक्तुं नेह गङ्गाजलानां गुणाख्यानं परिणामं तथैव ॥२६२॥

**स्कान्दमात्स्ययोः—**

तीर्थयात्राविधिं कृत्स्नमकुर्वाणोऽपि यो नरः ।
गङ्गातोयस्य माहात्म्यात्सोऽप्यत्र फलभाग्भवेत् ॥२६३॥

# अथ सप्तविंशं तोयपानप्रकरणम्

**भविष्ये—**

अन्नदानैश्च गोदानैः स्वर्णदानादिभिस्तथा ।
तथाश्वगजदानैश्च[८९] यत्पुण्यं परिकीर्त्तितम् ॥२६४॥
ततः शतगुणं गङ्गातोयपानादवाप्नुयात् ॥२६५॥

**महाभारते—**

चान्द्रायणसहस्रेण[९०] यच्च वै देहशोधनम्[९१] ।
यः पिबेच्च यथेष्टं वै गङ्गाम्भः स विशिष्यते ॥२६६॥

**ब्रह्माण्डे—**

गङ्गातीरे वसेन्नित्यं गङ्गातोयं सदा पिबेत् ।
दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने ॥२६७॥

**तथा—**

गङ्गातोयाभिसंसिक्तो भिक्षामश्नाति योगवित् ।
सर्पवत् कञ्चुकं त्यक्त्वा पापानीह नरोत्तमः ॥२६८॥
स्वर्गापवर्गिणीं सिद्धिं प्राप्नोत्येव न संशयः ॥२६९॥

**दानधर्मे—**

सर्वाणि येषां गङ्गायास्तोयैः कर्माणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र ! दिवि तिष्ठन्ति तेऽमलाः ॥२७०॥

**स्कान्दे—**

गण्डूषमात्रपानेन वाजिमेधफलं लभेत् ।
स्वच्छन्दं यः पिबेच्चापस्तस्य मुक्तिः करे स्थिता ॥२७१॥

त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यति ॥२७२॥

अन्यान्तर्गततोयानां मृतानां क्वापि देहिनाम् ।
तत्र तीर्थफलावाप्तिर्नात्र कार्या विचारणा ॥२७३॥

**वाराहे शौकरमाहात्म्ये—**

प्रवाहमवधिं कृत्वा योजनार्द्धप्रमाणतः ।
मा विकल्पं कुरुष्वैतत्तत्सर्वं जाह्नवीजलम् ॥२७४॥

**दानधर्मे—**

इन्दुव्रतसहस्रं तु यश्चरेद्देहशोधनम् ।
पिवेद्यश्चापि गङ्गाम्भः समौ स्यातां न वाऽसमौ ॥२७५॥

यस्तु सूर्यांशुसन्तप्तं गाङ्गेयं पिबते जलम् ।
गवामाहारनिर्मुक्ताद्यावकात्स विशिष्यते ॥२७६॥

## अथ अष्टाविंशं आश्रयप्रकरणम्

**गाङ्गेये दानधर्मे—**

सञ्जीवनीं[९२] महापुण्यां मधुमतीं च त्रिवर्त्मगाम् ।
त्रिलोकगोश्रीं ये गङ्गामाश्रितास्ते[९३] दिवङ्गताः ॥२७७॥

पा.लि.प.सं.१८क
उपेन्द्रवज्रा

यो वत्स्यति द्रक्ष्यति वाऽपि मर्त्य-
स्तस्मै शुभानि प्रदिशन्ति देवाः ।
उत्तारिताः[९४] स्पर्शनदर्शनेन,
कृत्स्नां गतिं तस्य सुरा दिशन्ति ॥२७८॥

**नारदीये—**

किमष्टाङ्गेन योगेन ? किं तपोभिः ? किमध्वरैः ? ।
वास एव हि गङ्गायां ब्रह्मयज्ञस्य लक्षणम् ॥२७९॥

**स्कान्दे—**

स एव देवैर्मर्त्यैश्च पूजनीयो महर्षिभिः ।
यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः ॥२८०॥

**दानधर्मे—**

लम्बेदवाक्[९५]शिरा यस्तु युगानामयुतं पुमान् ।
यस्तिष्ठति यथेष्टं तु गङ्गायाः स विशिष्यते ॥२८१॥

**तथा—**

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वाऽसमौ[९६] ॥२८२॥

**ब्रह्माण्डे—**

लम्बेदवाक्शिरा[९७] यस्तु युगकोटिसमाहितः ।
यः श्रयेच्च यथेष्टं तु गङ्गां स हि विशिष्यते ॥२८३॥

पितृमातृसुतैः सर्वैः संत्यक्तः पतितोऽपि वा ।
महारौरवयोग्यस्तामाश्रितश्चेद्दिवं व्रजेत् ॥२८४॥

परमात्मा शिवोह्यन्यस्तस्मादन्या च जाह्नवी ।
इति यः सेवते[९८] गङ्गां न स मोक्षस्य भाजनम् ॥२८५॥

**तथा–**

गङ्गासेवा परस्येह दिवसार्धेन यत्फलम् ।
न तच्छक्यं प्रयत्नेन प्राप्तुं क्रतुशतैरपि ॥२८६॥

**स्कान्दे–**

अहो किं बहुनोक्तेन गङ्गा सेव्या[९९] नरैर्मुदा ।
नान्यत्संसारदुःखस्य नाशकं[१००] मोक्षदायकम् ॥२८७॥

**गाङ्गेये–**

महापातकिनो ये च मर्त्याः सेवन्ति• जाह्नवीम् ।
पातकेभ्योपि पञ्चभ्यो[१०१] मुच्यन्तेऽन्यस्य का कथा ॥२८८॥

**भविष्ये–**

त्रिरात्रं सप्तरात्रं वा स्थितिमात्रेण भक्तितः[१०२] ।
गङ्गातीरे नरो यस्तु नरकं स न पश्यति ॥२८९॥

**नारदीये–**

कलौ तत्परमब्रह्मप्राप्तये सत्वरं[१०३] नृणाम् ।
गङ्गाजलस्य सेवा तु महोपायो महर्षयः ॥२९०॥

## अथ ऊनत्रिंशं विघ्नप्रकरणम्

**स्मृतिः–**

षष्टिर्विघ्नसहस्राणि गङ्गा रक्षति सन्ततम् ।
निवारयति तत्तीर्थं यावत्तद्धनमश्नुते ॥२९१॥

## अथ त्रिंशं प्रतिग्रहप्रकरणम्

**मात्स्ये–**

पा.लि.प.सं.१९ यत्तीर्थे प्रतिगृह्णीयात्क्षेत्रेष्वायतनेषु च ।
हिरण्यं रजतं ताम्रं यच्चान्यद्वस्तु किञ्चन ॥२९२॥

निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ।
वरं विक्रयणं मातुर्वरं विक्रयणं पितुः ॥२९३॥

न तु गङ्गातटस्थस्तु प्रगृह्णीयात् कदाचन ।
गङ्गाविक्रयणाद् राजन् ! विक्रीतः स्याज्जनार्दनः• ॥२९४॥
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥२९५॥

## अथ एकत्रिंशं भक्तिप्रकरणम्[१०४]

**भविष्ये—**

गङ्गाया महिमानं[१०५] तु न मन्यन्ते नराधमाः।
कुतार्किका नास्तिका ये ते वै निरयगामिनः ॥२९६॥

**तथा—**

गङ्गां प्राप्यापि ये मर्त्याः प्रीयन्ते च नमन्ति च।
ताँश्चापि तारयेद् गङ्गा भक्तान् पापरताँस्तथा ॥२९७॥

कामक्रोधमहामोहलोभादिनिशितैः शरैः।
प्रहरन्ति मनस्तेषां स्थितिं वै नाशयन्ति च ॥२९८॥

**कालिकापुराणे—**

रुद्रेण रक्ष्यते देवी मोहयित्वा तु मानवान्।
येन[१०६] साधारणीबुद्धिर्गङ्गायामपि जायते ॥२९९॥

गङ्गां प्राप्यापि ये मर्त्याः श्रद्धां भक्तिं न कुर्वते।
तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः ॥३००॥

**तथा—**

सर्वोत्तमां महादेवीं सर्वोत्कृष्टां वरप्रदाम्।
अन्यतीर्थसमां कुर्युस्ते वै निरयगामिनः ॥३०१॥

**स्कान्दे—**

गङ्गातीर्थं परित्यज्य येऽन्यतीर्थाभिलाषुकाः।
ब्रह्महत्याफलं तेषां सततं संशयात्मनाम् ॥३०२॥

**भविष्ये—**

गङ्गातोयं परित्यज्य येऽन्यतोयाभिलाषिणः।
तोयान्तरे रतिर्येषां ते वै निरयगामिनः ॥३०३॥

## अथ द्वात्रिंशं प्रायश्चित्ताक्षेपप्रकरणम्

चान्द्रायणं पराकञ्च प्राजापत्यमथापि वा।
प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ॥३०४॥

## अथ कृतकृत्यत्वप्रकरणम्

**ब्राह्मे—**

गङ्गां संश्रित्य यस्तिष्ठेत्तस्य कृत्यं न विद्यते।
कृतकृत्यः स वै युक्तो जीवन्मुक्तो न संशयः (भवेन्नरः) ॥३०५॥

## अथ त्रयस्त्रिंशं मृत्युप्रकरणम्

**आग्नेये-श्रीकृष्णवाक्यम्—**

यदि गङ्गाजलौघेन प्लाव्यते यत्कलेवरम् ।
तदेतन्मेध्यतां याति मृत्युकाले विशेषतः ॥३०६॥

पा.लि.प.सं.२० ये मुञ्चन्ति नराः प्राणाँस्तिष्ठन्तस्तव सन्निधौ ।
ते मे लोकं प्रयास्यन्ति पूज्यमाना दिवौकसाम् ॥३०७॥

**स्मृतिः—**

शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे ।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्दने ॥३०८॥

**ब्राह्मे—**

ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपि वा ।
गङ्गामध्ये मृतो मर्त्यो मोक्षं स्वर्गं च विन्दति ॥३०९॥

**भविष्ये—**

कृमिकीटपतङ्गानां ये मृता जाह्नवीतटे ।
कुलाच्च पतिता वृक्षास्तेऽपि यान्ति परां गतिम् ॥३१०॥

तथा विष्ण्वादिदेवानां लोकानाप्नोति मानवः ।
स्नानेन भक्त्या गङ्गायां मरणान्मोक्षमाप्नुयात् ॥३११॥

**तथा—**

अपि योजनपर्यन्तं गङ्गां स्मृत्वा तनुं त्यजेत् ।
वैवस्वतोऽपि तस्यार्धं दत्वा स्वर्गं प्रयच्छति ॥३१२॥

या गतिर्योगयुक्तानां या गतिर्यज्वनामपि ।
ज्ञानविज्ञाननिष्ठानां सा गङ्गायां मृतस्य च ॥३१३॥

**गाङ्गेये—**

अर्धोदके तु गङ्गायां म्रियतेऽनशनेन यः ।
स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च ॥३१४॥

## अथ चतुस्त्रिंशं अस्थिप्रकरणम्

**तत्र विष्णुपुराणे—**

पा.लि.प.सं.२०क शम्भोर्जटाकलापाच्च विनिष्क्रान्तास्थिपञ्जरान् ।
प्लावयित्वा दिवं निन्ये या पापान् सगरात्मजान् ॥३१५॥

**कौर्मे–**

यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥३१६॥

**ब्रह्माण्डे–**

गङ्गातोयेषु यस्यास्थि प्लाव्यते शुभकर्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ॥३१७॥

**तथा–**

गङ्गातोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरैः ।
वर्षाणां च सहस्राणि तस्य स्वर्गे भवेत्स्थितिः ॥३१८॥

**तथा–**

यस्मिन् काले नृणामस्थि गङ्गायां क्षिप्यते नरैः ।
तत्कालमादितः कृत्वा तस्य स्वर्गे भवेत्स्थितिः ॥३१९॥
तावद्वर्षसहस्राणि नात्र कार्या विचारणा ॥३२०॥

**यमः–**

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक् तत्फलमाप्नुयात् ॥३२१॥

**ब्रह्माण्डे–**

उपाजाति छन्दः स्नात्वा तु सिक्त्वात्वथ पञ्चगव्यै-
हिरण्यमध्वाज्ययुतैश्च तण्डुलैः ।
प्रयोज्य मृत्पिण्डपुटे निधाय,
पश्यन् दिशः प्रेतगणोपगूढः ॥३२२॥

नमोऽस्तु धर्माय वदन् प्रविश्य,
जलं समापीत्य इति क्षिपेच्च ।
एवं कृते प्रेतपुरे स्थितस्य,
स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ॥३२३॥

## अथ पञ्चत्रिंशं केशनखभस्मपातादिप्रकरणम्

**ब्रह्माण्डे–**

पा.लि.प्र.सं.२१ केशभस्मनखादीनि येषां पुंसां तु वायुना ।
निक्षिप्यन्ते च गङ्गायां तेषां च स्यात् दिवि स्थितिः ॥३२४॥

**रामायणे–**

भस्मन्यथास्तु ते तेन राघवेण महात्मना ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥३२५॥

तारितानि नरश्रेष्ठ ! दिवं यातानि देववत् ।
षष्ठिपुत्रसहस्राणि सगरस्य महात्मनः ॥३२६॥

**विष्णुपुराणे–**

मुक्तप्रायास्यास्थिभस्मस्नायुकेशाद्युत्सृष्टं शरीरिणां
यच्च पतितं तत्सद्यः स्वर्गं नयति ।

**महाभारते-शुकवाक्यम्–**

भस्मभूतास्थिसङ्गेन स्वर्याताः सगरात्मजाः ।
किं पुनः श्रद्धया देवीं सेवन्ते ये दृढव्रताः ॥३२७॥

## अथ षट्त्रिंशं प्रकीर्णप्रकरणम्

**तत्र दानधर्मे–**

पा.लि.प.सं.२१क न पुत्रैर्न च वित्तेन कर्मणा न च तत्फलम् ।
प्राप्नुयात्पुरुषो दान्तो गङ्गां प्राप्य यदाप्नुयात् ॥३२८॥

**ब्रह्माण्डे–**

दृष्ट्वा जन्मकृतं पापं स्पृष्ट्वा जन्मशतस्य च ।
स्नात्वा जन्मसहस्रस्य हन्ति गङ्गा कलौ युगे ॥३२९॥

**तथा–**

दृष्ट्वा च हरते पापं स्पृष्टा या च दिवं नयेत् ।
प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता ॥३३०॥

**भविष्ये–**

परं हितं ते वक्ष्यामि शृणु तद्वचनं मम ।
गङ्गैव परमं तीर्थं गङ्गैव परमं पदम् ॥३३१॥

गङ्गैव परमो योगो देवतानां च देवता ।
गुह्यानां परमं गुह्यं गङ्गायां स्नानमुत्तमम् ॥३३२॥

जन्मान्तरकृतैः पुण्यैस्तपोभिर्नियमादिभिः ।
इह जन्मनि गङ्गायां भक्तिरुत्पद्यते यदि ॥३३३॥

येषां प्रसन्नो भगवान् यमोऽयं परमेश्वरः ।
ते विदन्ति परां भक्तिं गङ्गायामिव मानवाः ॥३३४॥

**तथा विष्णुवाक्यम्–**

सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ।
पा.लि.प.सं.२२ प्रयागः सर्वतीर्थेभ्यः प्रभवत्यधिकः प्रभो ! ॥३३५॥

**तथा–**

इदं सत्यं विजानीयाद्बन्धूनामात्मजस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यार्थगतस्य च ॥३३६॥

श्रवणात्तस्य तीर्थस्य कीर्तनादपि भारत ! ।
न गङ्गासदृशं तीर्थं न गतिः केशवात्परा ॥३३७॥

**तथा शिववाक्यम्–**

ममैव परमा मूर्तिस्तोयरूपा शिवात्मिका ।
ब्रह्माण्डानामनेकानामाधारः प्रकृतिः परा ॥३३८॥

## अथ सप्तत्रिंशं गङ्गाद्वारादिप्रकरणम्

**तत्र मात्स्यस्कान्दयोः–**

सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥३३९॥

**तथा–**

यत्पुण्यं कनखले तीर्थे यत्पुण्यं सौकरेऽपि च ।
स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः ॥३४०॥
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधफलं लभेत् ॥३४१॥

**वनपर्वमात्स्ययोः–**

एतत्पुण्यतमं नास्ति त्रिषु लोकेषु भारत ! ।
मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते ॥३४२॥

प्रयागमनुगच्छेच्च वासं कृत्वाऽपि मानवः ।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥३४३॥

तत्राभिषेकं यः कुर्यात्सङ्गमे लोकविश्रुते ।
पां.लि.प.सं.२२क तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥३४४॥

या गतिर्योगयुक्तस्य सत्वस्थस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे ॥३४५॥

व्यतीतानथ वै सप्त भविष्याँश्च चतुर्दश ।
नरस्तारयते प्राणान् प्रयागे यः परित्यजेत् ॥३४६॥

**मात्स्ये–**

गङ्गायमुनयोर्मध्ये स्नातो मुच्येत बन्धनात् ।
मनसा चिन्तितान्कामान् तथाप्नोति स पुष्कलान् ॥३४७॥

सितासिते च यः स्नाति माघे मासि युधिष्ठिर ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥३४८॥

**वनपर्वणि–**

न वेदवचनात्तात ! न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥३४९॥

**शिववाक्यम्–**

प्रयागे च भवेन्मुक्तिरिह वा मत्परिग्रहात् ।
प्रयागादपि तीर्थाग्र्यादियं काशी विशिष्यते ॥३५०॥

**तथा–**

प्रलये सर्वभूतानां नष्टे स्थावरजङ्गमे ।
न हि त्यजामि तत्स्थानं महागणशतैर्वृतः ॥३५१॥

वाराणस्यां विशेषेण गङ्गा सद्यस्तु मोक्षदा ।
अनन्तकोटिजन्मोत्थं पापं पुंसां प्रणश्यति ॥३५२॥

**स्कान्दे–**

पा.लि.प.सं.२३ जाह्नवी सर्वतः शुद्धा ब्रह्महत्यापहारिणी ।
वाराणस्यां विशेषेण यत्र चोत्तरवाहिनी ॥३५३॥

अस्त्यत्र सुलभा गङ्गा दानं ध्यानं तथा जपः ।
एतानि सर्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥३५४॥

वाराणस्यां विशेषेण गङ्गाऽप्यत्यन्तमोक्षदा ।
अविमुक्ते मृतो यस्तु प्रत्याख्यातभिषक्क्रियः ॥३५५॥

**मात्स्ये–**

दशाश्वमेधे यः स्नात्वा दृष्ट्वा विश्वेश्वरं शिवम् ।
सद्यः पापविनिर्मुक्तो भवबन्धात्प्रमुच्यते ॥३५६॥

वाराणस्यां यदा गच्छेत्कदाचिद्देवसङ्गमात् ।
अश्मना चरणौ भित्वा तत्रैव निधनं व्रजेत् ॥३५७॥

**स्कान्दे—**

नान्यत्पश्यामि जन्तूनां त्यक्त्वा वाराणसीं पुरीम् ।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥३५८॥

**मात्स्ये—**

ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ।
अविमुक्तेन मुञ्चन्ति कृत्वा वासं न ते भुवि ॥३५९॥

जपध्यानविहीनानां दानवर्जितचेतसाम् ।
कलौ दुःखहतानां च गतिर्वाराणसी पुरी ॥३६०॥

**भविष्ये—**

नास्ति गङ्गासमं तीर्थं कलिकल्मषनाशनम् ।
नास्ति मुक्तिप्रदं क्षेत्रमविमुक्तसमं भुवि ॥३६१॥

पा.लि.प.सं.२३क अविमुक्तेषु सुप्तस्य कर्णमूले गतो हरः ।
आचष्टे शाश्वतं ब्रह्म नान्यथा कस्यचित्क्वचित् ॥३६२॥

सोमतीर्थं महापुण्यं कलिकल्मषनाशनम् ।
सोमं यत्रार्चयन्तीशं रुद्रेण शिरसा धृतम् ॥३६३॥

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ।
कुरुक्षेत्राद्दशगुणा यत्र विन्ध्येन सङ्गता ॥३६४॥

ततः शतगुणा प्रोक्ता यत्र पश्चिमवाहिनी ।
तस्मात्सहस्रं गुणिता यत्र चोत्तरवाहिनी ॥३६५॥

**गाङ्गेये—**

अर्कतीर्थे नरः स्नात्वा गङ्गायामर्चयन् पितृन् ।
कुलानि तारयेत्सप्त सप्त सप्त च सप्त च ॥३६६॥

गङ्गायमुनयोश्चान्तः स्नातो मुच्येत किल्विषात् ॥३६७॥

**वनपर्वणि—**

धन्यं हि तीर्थं कौरव्य पुण्यं कनखलं तथा ।
यच्च भूतं भविष्यञ्च भवेनैव नरोत्तम ! ॥३६८॥

**तथा–**

गङ्गावर्ते कुशावर्ते विन्ध्यके नीलपर्वते।
तीर्थे कनखले स्नात्वा ध्रुवं पापाद्दिवं व्रजेत्॥३६९॥

**महाभारते–**

गङ्गायां त्वथ राजेन्द्र सागरस्य च सङ्गमे।
अश्वमेधात्प्रयच्छन्ति पुण्यं दशगुणं तथा॥३७०॥

**गाङ्गेये–**

अन्तरिक्षे क्षितौ तोये पापीयानपि यो मृतः।
पा.लि.प.सं.२४ हरिब्रह्मशिवैः पूज्यः पदमक्षयमश्नुते॥३७१॥

**पठन्ति–**

गङ्गायां तु जले मोक्षो वाराणस्यां जले स्थले।
जले स्थलेऽन्तरिक्षे च गङ्गासागरसङ्गमे॥३७२॥

त्वया हि जाह्नवीतोयं सागरान्तः प्रपीडितम्।
मा क्लैव्यं गच्छ कौन्तेय! भवेत्तद्वारि सागरात्॥३७३॥

## अथ अष्टत्रिंशं मोक्षप्रकरणम्

**तत्र स्कन्दमात्स्ययोः–**

ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम्।
गङ्गा च परमो हेतुः कलिकाले विशेषतः॥३७४॥

**भविष्ये–**

गङ्गाजलस्वरूपेण तत्त्वज्ञानं व्यवस्थितम्।
तस्मात्तज्ज्ञानसेवा च कर्त्तव्या मोक्षकांक्षिभिः[१०७]॥३७५॥

**ब्रह्माण्डे–**

प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता॥३७६॥

**स्कान्दे–**

गङ्गातीरे वसेन्नित्यं गङ्गातोयं सदा पिवेत्।
एकेन जन्मना मुक्तिं लभते नात्र संशयः॥३७७॥

## अथ उनचत्वारिंशं अतिपुण्यप्रकरणम्

**भविष्ये–**

गङ्गामाहात्म्यमतुलं वक्तुं ज्ञातुं न च क्षमाः।
इन्द्रादयो न शक्ता हि दिव्यैर्वर्षशतैरपि॥३७८॥

माहात्म्यं ये तु गङ्गायाः शृण्वन्ति च पठन्ति च।
तेऽप्यसंख्यैर्महापापैर्मुच्यन्ते नात्र संशयः ॥३७९॥

## अथ चत्वारिंशं अत्यर्थप्रकरणम्

पा.लि.प.सं.२४क अतिदूरस्थितस्यापि गङ्गामाहात्म्यवेदिनः।
अयोग्यस्यापि पापस्य नाशं गङ्गा प्रयच्छति ॥३८०॥

**न चैतान्यर्थवादः—**

स्नानमात्रेण गङ्गायां पापं ब्रह्मबधोद्भवम्।
दुराघर्षं कथं याति चिन्तयेद्यो वदेदपि ॥३८१॥

तस्याहं प्रददे पापं कोटिब्रह्मवधोद्भवम्।
स्तुतिवादमिमं मत्वा कुम्भीपाके च जायते ॥३८२॥

अकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः।
इत्यादिभिर्भविष्यपुराणादिषु दोषश्रुतेः ॥३८३॥

**इति वोपदेवकृत[१०८] गङ्गामाहात्म्य संग्रहः समाप्तः**

**॥ शुभं भवतु ॥**

❖ ❖ ❖

## पादटिप्पणी

१. रूपत्वे इति 'ख' पुस्तके पाठः ।
२. संश्रूयः ।
३. नमस्त्रिया ।
४. जलपानं ।
५. शुभाः इति 'ख' पुस्तक पाठः ।
६. शुघिरोद्भव इति.ख.पु.पा. ।
७. समन्ताब्रह्मणः ।
८. पर्या ।
९. वंशु ।
१०. क्रियारताम् ।
११. भद्र ।
१२. अष्टविंशति ।
१३. दशसुतीर्थानाम् ।
१४. केवलम् ।
१५. कुलक्षेत्रम् ।
१६. वेदविद्यो न विद्यानाम् ।
१७. धर्म्ममदीयतः ।
१८. स्मरणजं फलम् ।
१९. ख पुस्तके नास्ति ।
२०. तेनावदविधानास्ते ।
२१. गच्छता ।
२२. नरः ।
२३. सुतो ।
२४. विवुधा ।
२५. विश्र ।
२६. अघोरे ।
२७. वानिज्येन ।
२८. ख पुस्तके नास्ति ।
२९. मात्रस्तु ।
३०. अत्रस्ताश्च ।
३१. श्रुत्वादि ।
३२. स्मृत्वा ।
३३. गति मन्विष्यमाणानां शु.पा. ।
३४. ये ।
३५. केचिद शु.पा. ।
३६. र्त्रस्तुतैर्त्रधनागमैः ।
३७. सर्पाः ।
३८. तडागादि ।
३९. इत्यभिलषिता, इति शु.पा. ।
४०. साक्षात्तदा, स्वर्गस्तदा ।
४१. पश्यतुस्तादिमां ।
४२. पावकम् ।
४३. गङ्गाम्भसः ।
४४.- अपहृत्य तपस्तीव्रं ।
४५. तथा पहृत्य ।
४६. यैः ।
४७. भावात्ता ।
४८. मुक्तं ।
४९. सर्वपातकाः ।
५०. ख पुस्तके अधिकम् ।
५१. स्मरेत ।
५२. हा दे त्युत्त्वा ।
५३. पुण्यकर्मणाम् ।
५४. वृष्टि र्भवति ।
५५. क्रियां ।
५६. मण्डले ।
५७. माघे इति शु.पा. ।
५८. जन्मान्ते ।
५९. गङ्गायां ।
६०. शैलान्दिरगम ।
६१. पापाह्वस्यां ।
६२. नन्दा ।
६३. पौर्विकी ।
६४. शस्त्रार्थ ।
६५. इंद्रोर्लक्षगुणं ।
६६. मध्याह्ने समुदाहृतं सायं काले शत-गुणमनन्तं शिवसन्निधौ, ख.पु.पा. ।
६७. रिष्ये ।
६८. तिथेर्मताम् ।
६९. तृप्ताः ।
७०. मज्जयेक्षुं ह्यमुद्दिश्य ।
७१. मासि तर्पण ।

७२. पितृकर्मणि।
७३. पदमाप्नोति।
७४. संप्राप्तेरिह।
७५. सन्निरञ्जनम्।
७६. दीर्घायुस्त्वं।
७७. तयोजप्यं।
७८. जत्ताग्र।
७९. सर्षपाम्।
८०. श्राद्धा।
८१. तां स्तान् सर्वानवाप्नुयात्।
८२. देव जन्मजन्मनि।
८३. श्रेष्ठ मासृग्गोमयसञ्चयम्।
८४. गङ्गापिण्डम् इति शु.पा.।
८५. जनार्दनोदेवः।
८६. शक्ति।
८७. मुष्ण।
* शौचाद्यपि गाङ्गे नैव कार्यमित्यस्य तात्पर्यम्।
८८. विशिष्टायत्प्रयच्छन्ति।
८९. यथाश्व।
९०. सहस्राणि।
९१. शोधने।
९२. जज्जीवतीं।
९३. माश्रिताते।
९४. उत्वारिताः।
९५. लम्बान्तवाक् शु.पा.।
९६. चा समौ।
९७. लम्बान्तवाक्।
९८. सेवेते।
९९. गङ्ग सेत्या न वै सदा।
१००. नाशंक।
१०१. लवेभ्यो।
१०२. भक्तिनः।
१०३. सद्वरं।
* सिञ्चन्ति, शु.पा.।
१०४. भक्ति दूषण प्रकरणम्।
१०५. महिमानस्तु।
१०६. येषां, शु.पा.।
* गङ्गाविक्रयणादेव गङ्गाप्रतिग्रहो दानामपि सिद्धम्। विष्णु-लक्ष्मी प्रतिमादानवत्।
१०७. मोक्षकांक्षया।
१०८. इति सोढदेवकृतं गङ्गामाहात्म्यं समाप्तम्। सम्बत् १६५८ समये अशुनि वदि अष्टमी मङ्गलवार। शुभमस्तु। वेन्यनमः माधवाये नमः। ।शुभं भवतु।

# गङ्गाकवचम्-दिव्यमङ्गलाख्यम्[1]

॥ श्रीगणेशाय नमः ॥

**ऋषय ऊचुः—**

भगवन् ! सर्वधर्मज्ञ ! सर्वशास्त्रविशारद ! ।
श्रीगंगायास्तु कवचं ब्रूहि नो वदतां वर ! ॥१॥

गुप्तं सहस्रनामाख्यं स्तोत्रं परमपावनम् ।
इदानीं श्रोतुमिच्छामि गंगायाः कवचं शुभम् ॥२॥

यस्य श्रवणमात्रेण गंगादेवी प्रसीदति ।
पापानि च विलीयन्ते वर्धन्ते धनसम्पदः ॥३॥

**सनत्कुमार उवाच—**

शृणुध्वं मुनयः सर्वे गुह्याद्गुह्यतरं परम् ।
जाह्नव्या दिव्यकवचं भुक्तिमुक्तिफलप्रदम् ॥४॥

ॐ अस्य श्रीगंगाकवचमन्त्रस्य श्रीसदाशिव ऋषिरनुष्टुप् छन्दः संसारतारिणी श्रीगंगा देवता श्रीबीजं गं शक्तिः गामिति कीलकं मम सकलपापक्षयपूर्वकं मोक्षसाधने जपे विनयोगः ॥

अथ ध्यानं प्रवक्ष्यामि गंगायाः सुरदुर्लभम् ।
यत् कृत्वा मुनयः सम्यक् परां सिद्धिमितो गताः ॥६॥

नेत्रत्रयोद्भासितचारुदेहां श्वेताम्बरां चन्द्रकलात्मिकां च ।
माणिक्यमुक्ताफलभूषिताङ्गीं श्वेतातपत्रां करुणारसार्द्राम् ॥७॥

सूर्येन्दुकोटिद्युतिमङ्गनाभिः सचामराभिः परिवीज्यमानाम् ।
चतुर्भुजां हस्तचतुष्टयेन वराभये पद्मयुगं दधानाम् ॥८॥

दिव्यानुलेपेन विभूषिताङ्गीं दिव्यां दधानां स्रजमादिशक्तिम् ।
सुरैरनेकैर्ऋषिभिश्च दिव्यै र्निषेव्यमानामुपचारयोगैः ॥९॥

नानाविधान्पातकिनः प्रपन्नान्,
सन्तारयन्तीं करुणादृशार्द्राम् ।
ध्यायेदिमां पूर्णशशांङ्कशुभ्रां,
नदैर्नदीभिः परिसेव्यमानाम् ॥१०॥

---

१. स.भ.पु.पा.लि.सं.— २३४०६, पत्र— १-९, लिपि— दे.ना. पूर्णा.

एवं ध्यात्वा महादेवीं गंगां त्रिभुवनेश्वरीम् ।
जपेन्मन्त्रं महादेव्यास्तस्योद्धारो निरूप्यते ॥११॥

प्रणवो वाग्भवं माया कामबीजं नमः पदम् ।
भगवत्यम्बिके अम्बालिके पदमथोद्धरेत् ॥१२॥

महामालिनि तस्यान्त एह्येहि पदमुद्धरेत् ।
अशेषतीर्थालवाले मायालक्ष्मीर्मनोभवः ॥१३॥

ततः शिवजटाजूटाधिरुढे पदमुद्धरेत् ।
गंगे गंगाम्बिके स्वाहा मनुर्द्विकरणाक्षरः ॥१४॥

सर्वसंपत्प्रदः सर्वपातकौघविनाशनः ।
सर्वकल्याणनिलयो गंगासान्निध्यकारकः ॥१५॥

एतस्य मन्त्रराजस्य महादेवऋषिः स्वयम् ।
विराट्छन्दः स्मृतं देवी जाह्नवी देवता स्वयम् ॥१६॥

तारो बीजं वाग्भवं च शक्तिर्माया च कीलकम् ।
तारकं कामबीजं च मुक्तौ च विनियोगकः ॥१७॥

कुर्यात् षडंङ्गं मन्त्रं स्वमायया प्रणवाद्यया ।
षड्दीर्घभिनयात्पश्चाज्जपेन्मंन्त्रं शताष्टकम् ॥१८॥

ततस्तु कवचं देव्याः पठेत् सर्वार्थसिद्धये ।
तदहं सम्प्रवक्ष्यामि श‍ृणुध्वं मुनिपुङ्गवाः ॥१९॥

प्राच्यां श्रीजाह्नवी पातु याम्यां गंगा सदाऽवतु ।
भीष्मसूः पश्चिमायां मे उदीच्यां सुरनिम्नगा ॥२०॥

भागीरथ्यग्निकोणे मां त्रिस्रोताः पातु नैर्ऋते ।
वायव्ये मां श्वेतवासा ईशाने त्रिपथस्थिता ॥२१॥

ब्रह्मगंगा चोर्ध्वदेशमधः पातालजाह्नवी ।
दिग्विदिक्प्रान्तराले मां गंगा स्वर्गगताऽवतु ॥२२॥

हृदस्ते पातु मे केशानभयं मे शिरोऽवतु ।
भालं मे कमलं पातु भ्रुवौ चन्द्रकलाऽवतु ॥
नेत्रे पातु जगद्धात्री ममोष्ठं विजयाऽवतु ।
विष्णुः पद्मधरं पातु श्रोत्रे पातु सुदर्शना ॥२३॥

मन्दाकिनी दन्तपङ्क्तिं स्वर्गगागण्डयुग्मकम् ।
सुधाजला पातु जिह्वां वाणी पातु मुखं मम ॥२४॥

तोतला तालुदेशं मे चिबुकं सर्वमङ्गला ।
मन्दाकिनी वक्त्रवृत्तं व्योम-गंगाजलं मम ॥२५॥

कृकोटिकां कल्मषघ्नी स्कन्धयोः सुरनिम्नगा ।
कौर्मी पातु भुजद्वन्द्वं पाण्योः फलकमीश्वरी ॥२६॥

करांङ्गुलीः पातु चान्द्री नखानाकाशचन्द्रिका ।
सूर्यमण्डलगा पातु कक्षां सागरतारिणी ॥२७॥

वक्षःस्थलं पातु नित्यं देवी मेऽलकनन्दिका ।
हृदयं पातु चक्षुर्मे सीता पातूदरं मम ॥२८॥

पार्श्वयोः पर्वतद्रावा स्तनौ सोमेश्वरी तथा ।
जगदुद्धारिणी नाभिं पृष्टं मकरवाहना ॥२९॥

विष्णुशक्तिः कटिं पातु स्फिचौ पातु दयाम्बुधिः ।
विष्णु पादाब्जसम्भूता गुह्यं मे परिरक्षतु ॥३०॥

कृपाकोमलगात्री सा मूलाधारं ममावतु ।
स्वाधिष्ठानं पातु नित्यं पापादथ दवानला ॥३१॥

पायान्मे मणिपूरं सा शान्तनोः सुखवर्धिनी ।
अनाहतं सदा पायाद् भगीरथनिषेविता ॥३२॥

विशुद्धचक्रं मे पातु वशिष्ठोपासिताम्बिका ।
आज्ञाचक्रं मम प्रीत्या विश्वामित्रार्चिताऽवतु ॥३३॥

ब्रह्मरन्ध्रं सदा पातु स्रवत्पीयूषमंदिरम् ।
स्वयम्भूलिङ्गिनी लिङ्गं कुण्डली परदेवता ॥३४॥

पतितोद्धारिणी पातु जठरं शङ्करप्रिया ।
जटालंकारिणी शम्भोरुरूयुग्मं ममावतु ॥३५॥

जानू मृडानी मे पातु जङ्घे पातु जगत्प्रसूः ।
लावण्यशेवधिः पातु गुल्फौ गगनमेखला ॥३६॥

मत्स्यकक्षपहंसालिराजिता पातु पादयोः ।
पादांङ्गुलीः पातु नित्यं निश्रेणी समनोहरे ॥३७॥

रसासृङ्मांसमेदांसि पातु मे भवतारिणी।
मनोबुद्धिमहन्तां मे पातु नारायणी सदा ॥३८॥

आयुः कल्याणदा पातु वयो रक्षतु वैष्णवी।
भार्यां वृद्धिकरी पातु पुत्रान् वंशकरी मम ॥३९॥

गृहं रक्षतु लक्ष्मी में पातु क्षेत्रं शिवप्रिया।
धर्मकर्त्री यशः पातु धर्मं पातु मनःस्विनी ॥४१॥

कुलं कुलेशी मे पातु सद्गतिं पातु सद्गतिः।
जले स्थलेऽनलेऽरण्ये पाताले रणसंकटे ॥४१॥

दुर्गे गृहे जगन्नाथा पातु सर्वनदीश्वरी।
अग्रतः पातु गंगोर्ध्वं पातु गंगा च पार्श्वयोः ॥४२॥

गङ्गैव पृष्ठतः पातु तथाधः पातु मे वपुः।
इतीदं कवचं दिव्यं गंगायाः परमाद्भुतम् ॥४३॥

ऋषयः कथितं साक्षान्महापातकनाशनम्।
एककालं द्विकालं वा त्रिकालं यः सदा पठेत् ॥४४॥

गंगायाः श्रावयेद्वापि तस्य पापं प्रणश्यति।
वर्धन्ते संपदः सर्वाः सम्पद्यन्ते मनोरथाः ॥४५॥

जायते सिद्धयोऽष्टौ च नश्यन्ति विपदः क्षणात्।
कुष्ठात् प्रमुच्यते कुष्ठी व्याधिभ्यश्चापि मुच्यते ॥४६॥

निर्मलं स्यान्मनस्तस्य विशुद्धं स्फटिकोपमम्।
यस्य यस्य च देवस्य क्रियते पूजनं जपः ॥४७॥

तस्य तस्य प्रसादं सा गंगादेवी प्रयच्छति।
पातकानामनेकानां प्रायश्चित्तं चिकीर्षुणा ॥४८॥

पठनीयं तु गंगायाः कवचं पातकापहम्।
गंगामाहात्म्यविण्मन्त्री गंगा-कवचमभ्यसेत् ॥४९॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः।
सर्वाणि तेन दानानि दत्तानि मुनिपुङ्गवाः ॥५०॥

श्रीविष्णुस्तोषितस्तेन तोषितस्तेन शङ्करः।
अर्घ्यदानेन संतुष्टः कृतस्तेन दिवाकरः ॥५२॥

तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ।
नाभिमात्रे जले स्थित्वा यो गंगाकवचं पठेत् ।।५३।।

स स्वप्ने पश्यति क्षिप्रं जाह्नवीं पुरतः स्थिताम् ।
इदं कवचमज्ञात्वा गंगामन्त्रं जपेन्नरः ।।५४।।

सर्वविघ्नैः स बाध्यः स्याद्व्याघ्रैर्मृगंशिशुर्यथा ।
गगा गंगेति यो ब्रूयाद् योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो हरिसायुज्यमाप्नुयात् ।।५५।।

इदं गंगाजले स्थित्वा कवचं यः सकृज्जपेत् ।
भूतप्रेतपिंशाचादिबाधाभ्यो मुच्यते क्षणात् ।।५६।।

पितरस्तृप्तिमायान्ति कवचस्यास्य पाठतः ।
श्राद्धकाले पठेन्मर्त्यो नयेत्स्वर्गं पितामहान् ।।५७।।

भूर्जे लिखित्वा कवचं मस्तके धारयेद्यदि ।
यत्र तत्र विपन्नोऽपि वाराणस्यां मृतो भवेत् ।।५८।।

मुनिभिः कथितं देव्याः जाह्नव्याः कवचोत्तमम् ।
यूयं पठध्वं सततं सद्गतिं समवाप्स्यथ ।।५९।।

।। इति श्रीब्रह्माण्डपुराणे ऋषिसनत्कुमारसंवादे गंगाया दिव्यमङ्गलं नाम कवचं सम्पूर्णम् ।।
शुभमस्तु । इदं पुस्तकं दीनानाथेन लिखितं स्वार्थं परार्थे संवत् १७८२ शके १९४७ समये ज्येष्ठ शुक्ल २ द्वितीया सोमे समाप्तम् । शुभमस्तु सर्वजगतः ।

।। श्रीगङ्गायै नमः ।।

# गङ्गोदकेन सर्वक्रियाकरणकनिर्णयः

**।। श्रीगणेशाय नमः ।।**

अथ गङ्गोदकेन सर्वक्रियाकरणकनिर्णयो लिख्यते।
काशीचन्द्रिकायां। काशीसेतावपि।
काश्यां निवसतां गङ्गोदकेन शौचाद्यशुचिकर्मकरणेऽपि न दोषः।

**अत्र प्रमाणम्—**

इन्द्रवज्रा द्वौ पादौ तत्क्षेत्रमासाद्य ममाविमुक्तं, गंङ्गोदकोपात्तसमस्तकार्यैः।
इति सनत्कुमारसंहितायां, काशीखण्डे च ॥१॥

सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम्।
भूमिष्ठा अपि ते मर्त्या अमर्त्या एव वै हरे ॥२॥

एवं गङ्गोदकेन शौचाद्यशुचिकर्मकरणविधायकवाक्यद्वयं ग्रन्थद्वयादुपलब्धम्। एवं भविष्योक्तनिषेधकानि वाक्यान्यपि सन्ति।

**तान्याह—**

गङ्गां प्राप्य सरिच्छ्रेष्ठां त्रयोदश विवर्जयेत्।
शौचमाचमनं नाम निर्माल्यमघमर्षणम् ॥३॥
गात्रसम्वाहनं क्रीडां प्रतिग्रहमथो रतिम्।
अन्यतीर्थगतिं चैव अन्यतीर्थप्रशंसनम् ॥४॥
वस्त्रत्यागमथाघातं संतारं च विशेषतः।
गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् ॥५॥
इति निषेधकानि।

अत्र सन्दिग्धपदानां स्पष्टार्थः क्रियते।

कृत्यानीतिपदे कृत्यानि नाम कार्याणि। स्युरित्यध्याहारेणान्वयः। कथम्? येषां देहिनां गाङ्गेयैस्तोयैः सर्वाणि कार्याणि स्युः ते मर्त्या अपि हरे अमर्त्या एव। शौचं नाम विण्मूत्रोत्सर्गादौ न ग्रहणम्। आचमनं नाम भोजनोत्तरं हस्त-मुखप्रक्षालनं गङ्गोदकेन न कर्तव्यम्। निर्माल्यं नाम शिवविष्ण्वतिरिक्तदेवता-पदार्पितपत्रपुष्पादेः गङ्गायां प्रक्षेपणं न। शिवविष्ण्वोस्तु निर्माल्यप्रक्षेपणमवश्यं कर्तव्यम्। कुतः? विष्णोः पादावनेजनत्वात्, शिवस्य तु पत्नीत्वात्। अत्र प्रमाणम्:—

---

**विषयः**— धर्मशास्त्रम्, **पत्रसंख्या**— पत्रद्वयम्, पूर्णम्, **लिपिः**— दे.ना., स.भ.पु.पा.लि.सं. १२५६९

मातः ! शैलसुतासपत्नि वसुधेति।

पते पत्युर्निर्माल्यं पत्न्यः शिरसा वहनीयमेवास्ति। यदा त्रिविक्रमावतारे श्रीवामनस्य चरणः ब्रह्माण्डकटाहं भित्वा उपरि निर्गतस्तदा विधिना कमण्डलु-जलैस्तुलसीदलैः पूजितः। तदा पादोदकं पावनमिति। पादोदकधारायाः स्तुतिः श्रीमद्भागवते प्रथमस्कन्धे, 'या वै तु सच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्य-धिकाम्बुनेत्रीति, वचनात्। इतरदेवतानिर्माल्यनिषेधः, कुतः ? गङ्गायाः सर्वदैवत्य-श्रेष्ठत्वात्।

अघमर्षणं नाम प्रत्यहं बुद्धिपूर्वकमघं कृत्वा गङ्गायाममर्षणं धावनम् तीर्थापराधदोषी स्यात्। गात्रसंवाहनं नाम गात्रघर्षणं अङ्गमलविसर्जनमित्यर्थः।

क्रीडा यथेष्टविहरणम्, अथवा राजभिः स्त्रीभिः सह जले रतिः। अरतिं गङ्गायामप्रीतिः, आघातं-जलताडनं, सन्तारं-बाहुभ्यां-तरणम्। एवमुभय-विधानि विधिनिषेधलक्षणानि वाक्यानि यत्र उपलब्धानि स्युः। तत्र किं विधायकानि मुख्येन ग्राह्यानि, अथवा निषेधकानि ? अत्र विचारः– सामान्यविशेषभेदेन बाध्यबाधकेनापि यदबाधितं तद्ग्राह्यं यद्बाधितं तत्त्याज्यम्। अत्र किं सामान्यं ? किं विशेषं ? बाध्यं च किं ? बाधकं च किं ?

गङ्गोदकोपात्तस्य समस्त कार्यैरिति सामान्यम्; यत्सामान्यं तदेव बाध्यम्– यद् विशेषं तदेव बाधकम्।

गङ्गां प्राप्य सरिच्छ्रेष्ठां त्रयोदश विवर्जयेत् इति विशेषम्। इदं विशेषं तच्च सामान्यं कुतः ? यत्र प्रकरणे विशेषविधिर्वा विशेषनिषेधो वास्ति। तद्विशेष्यम् तद्रहितं सामान्यम्। अत्र विशेषनिषेधोऽस्ति। अतः सामान्यविधेर्बाधः विशेषनिषेधेन।

अत्र प्रमाणम् मीमांसावाक्यम्।

विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वम्। अत्र विभागः, विशेष-विधेः शेषनिषेधफलम्। विशेषनिषेधस्य अभ्यनुज्ञाफलम्। शेषशब्देन तु एको विशेषविधिः इतरे सामान्यास्ते शेषसंज्ञाः। एवमभ्यनुज्ञा। एको मुख्यो निषेधः। इतरे सामान्या निषेधास्तेऽपि शेषसंज्ञाः, तेषां निषेधेनाभ्यनुज्ञा। अभ्यनुज्ञा किं ? विशेषनिषेधातिरिक्तसामान्यनिषेधनिषेधेन इतरेषामर्थादेवाङ्गीकारः। तस्मादित्युपसंहरिष्यति।

गङ्गोदकेन शौचाद्यशुचिकर्मकरणं वाक्यतः प्राप्तमपि वाक्यतत्त्वनिरासः। तस्माद्गङ्गोदकेन शुचिक्रिया एव कर्तव्या। इति सिद्धम्।

# गङ्गासागरपद्धतिः

## ।। श्रीगणेशाय नमः ।।

**तीर्थचूडामणौ–स्कान्दे–**

गङ्गां सम्प्राप्य यो मर्त्यो मुण्डनं नैव कारयेत् ।
तत्क्रिया[१] निष्फलाः सर्वास्तीर्थद्रोही भवेन्नरः ।।१।।

यावन्ति नखरोमाणि गङ्गातोये पतन्ति यत्[२] ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।२।।

यावन्ति नखरोमाणि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणा पुण्यकर्मणाम् ।।३।।

गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत् ।
स कोटिकुलसंयुक्त आकल्पं[३] रौरवे वसेत् ।।४।।

गङ्गां प्राप्य सरित्सर्वा गङ्गासागरसङ्गमे ।
पापीयानपि यो दृष्टस्तत्क्षणादेव नश्यति ।।५।।

परब्रह्मशिवैः पूतः परमक्षयमश्नुते[४] ।
चन्द्रसूर्यग्रहे चैव मृतानां पिण्डकर्मणि ।।६।।

महातीर्थे च सम्प्राप्ते क्षतदोषो न विद्यते ।
सूतके मृतके चैव न दोषो राहुदर्शने ।।७।।

स्नानमात्रं तु कर्त्तव्यं दानश्राद्धविवर्जितम् ।
गङ्गायां च जले मोक्षो वाराणस्यां जलस्थले ।।८।।

जले स्थले चान्तरिक्षे गङ्गासागरसङ्गमे ।
यावत्क्रतु जाह्नवीतोये सागराम्भःपरिप्लुतम् ।।९।।
मा क्लैव्यं गच्छ कौन्तेय यावद्भवति संगमः ।।१०।।

या गति र्योगयुक्तस्य वाराणस्यां मृतस्य च ।
सा गतिः स्नानमात्रेण सागरे हरिवासरे ।
प्रयागे माघमासेतु यत्फलं प्राप्नुयान्नरः ।।११।।
सागरस्नानमात्रेण दिनेनैकेन लभ्यते ।।१२।।

---

**विषयः–** कर्मकाण्डम्, **पत्र संख्या–** १-२ अपूर्णम्, **लिपिः–** दे.ना., स.भ.पु.पा.लि.सं. ७२२८, ११५३१

## अथ माधवदर्शनम्

**भविष्ये—**

गङ्गासागर संसेवेदंक्षंबन्धोत्सराम्बुजम्[५] (?)।
सन्तप्तं माधवं देवं चतुश्चक्रसमुज्ज्वलम् ॥१३॥
अत्र प्रजापदं वासुकिश्चक्रंतुरीयकम्।
अपि पञ्चमहापापं गङ्गाकामो निरन्तरम् ॥१४॥
चतुश्चक्रं हरिं दृष्ट्वा को न याति परां गतिम्।
सङ्केतमाधवं देवं दृष्ट्वा चक्रतुरीयकम् ॥१५॥
कुलानि वै समुद्धृत्य मुक्तिमेयं पुनर्नवाम्।
जन्मकोटिसहस्रैस्तु कृतो वै पापसंचयः ॥
चतुश्चक्रे हरौ दृष्टे तत्क्षणादेव नश्यति ॥१६॥

## अथ गङ्गाध्यानम्।

**भविष्ये—**

चतुर्भुजां त्रिनेत्रां च सर्वावयवभूषिताम्।
रत्नकुम्भसिताम्भोजवरदामभयप्रदाम् ॥
श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम्।
तपोध्यायां सुरूपां च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम्।
सुप्रसन्नां सुवदनां करुणार्द्रनिरन्तराम् ॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम्।

**इति ध्यात्वा।**

**अर्चयत्यादिभिः संपूजयेच्च।**

**ॐ गङ्गायै विश्वमुख्यायै नारायण्यै शिवायै ते नमो नमः ॥**

---

### पादटिप्पणि

१. क्रियास्तस्य।
२. ये।
३. आकल्प्यं।
४. मच्युते।
५. सन्दिग्ध पाठः।

# गङ्गास्नानम्

## ।। श्रीगणेशाय नमः ।।

## ।। श्रीगणाधिपतये नमः ।।

**अगस्त्य उवाच–**

विना स्नानेन गङ्गायां नृणां जन्म निरर्थकम् ।
उपायान्तरमस्त्यन्यद्येन स्नानफलं लभेत् ।।१।।

अशक्तानां च पङ्गूनामालस्योपहतात्मनाम् ।
दूरदेशान्तरस्थानां गङ्गास्नानं कथं भवेत् ? ।।२।।

दानं वाऽथ व्रतं वाऽथ मन्त्रस्तोत्रं जपोऽथवा ।
तीर्थान्तराभिषेको वा देवतोपासनं तु वा ।।३।।

यद्यस्ति किञ्चिद् षड्वक्त्र ! गङ्गास्नानफलप्रदम् ।
विधानान्तरमन्त्रेश ! तद्वद प्रणताय मे ।।४।।

त्वत्तो न वेद स्कन्दान्यो[१] गङ्गागर्भसमुद्भव ! ।
परं स्वर्गतरङ्गिण्या महिमानं महामते ! ।।५।।

**स्कन्द उवाच–**

सन्ति पुण्यजलानीह सरांसि सरितो मुने ! ।
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ।।६।।

दृष्टिप्रत्ययकारीणि महामहिमभाञ्ज्यपि ।
परं स्वर्गतरङ्गिण्याः कोट्यंशोऽपि न तत्र वै ।।७।।

अनेनैवानुमानेन बुध्यस्व कलशोद्भव ! ।
दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना ।।८।।

स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं क्वान्यत् समर्थमघशोधने ।।९।।

गङ्गास्नानफलं ब्रह्मन् ! गङ्गायामेव लभ्यते ।
यथा द्राक्षाफलस्वादो द्राक्षायामेव नान्यतः ।।१०।।

अस्त्युपाय इह त्वेकः स्याद्येनाविकलं फलम् ।
स्नानस्य देवसरितो महागुह्यतमो मुने ! ।।११।।

---

**विषयः–** कर्मकाण्डम्, **पत्र संख्या–** १-५ अपूर्णः, **लिपिः–** दे.ना., स.भ.पु.पा.लि.सं. ११२६२, ग्रन्थकारः रघुनाथः

शिवभक्ताय शान्ताय विष्णुभक्तिपराय च।
श्रद्धालवे त्वास्तिकाय गर्भवासमुमुक्षवे ॥१२॥

कथनीयं न चान्यस्य कस्यचित् केनचित् क्वचित्।
इदं रहस्यं परमं महापातकनाशनम् ॥१३॥

महाश्रेयस्करं पुण्यं मनोरथकरं परम्।
द्युनदीप्रीतिजनकं शिवसन्तोषसन्तति ॥१४॥

नाम्नां सहस्त्रं गङ्गायाः स्तवराजेषु शोभनम्।
जप्यानां परमं जप्यं वेदोपनिषदा समम् ॥१५॥

जपनीयं प्रयत्नेन मौनिना वाचकं विना।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ॥१६॥

**स्कन्द उवाच– ॐ नमो गङ्गादेव्यै**

ॐकाररूपिण्यजराऽतुलाऽनन्तामृतस्त्रवा।
अत्युदाराभयाशोकालकनन्दाऽमृताऽमला ॥१७॥
अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराजिता ॥१८॥
अनाथनाथाऽभीष्टार्थसिद्धिदाऽनङ्गवर्धिनी।
अणिमादिगुणाधाराऽग्रगण्याऽलीकहारिणी ॥१९॥
अचिन्त्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी।
अद्रिराजसुताऽष्टाङ्गयोगसिद्धिप्रदाऽच्युता ॥२०॥
अक्षुण्णशक्तिरसुदाऽनन्ततीर्थामृतोदका।
अनन्तमहिमापाराऽनन्तसौख्यप्रदान्नदा ॥२१॥
अशेषदेवतामूर्तिरघोरामृतरूपिणी।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ॥२२॥
अशेषविघ्नसंहन्त्री त्वशेषगुणगुम्फिता।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ॥२३॥
अभिरामानवद्याङ्ग्यन्तःसाराऽकलङ्किनी।
आरोग्यदाऽऽनन्दवल्ली त्वापन्नार्तिविनाशिनी ॥२४॥

आश्चर्यमूर्तिरायुष्या त्वाद्याद्या[२] प्रार्यसेविता।
आप्यायिन्याप्तविद्याख्या त्वानन्दाश्वासदायिनी ॥२५॥

आलस्यघ्न्यापदां हन्त्री स्वानन्दामृतवर्षिणी।
इरावतीष्टदात्रीष्टा इष्टापूर्तफलप्रदा ॥२६॥

इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा ।
इज्याशीला समिज्ज्येष्ठा त्विन्द्रादिपरिवन्दिता ॥२७॥

इलाऽलङ्कारमालेद्धा त्विन्दिरारम्यमन्दिरा ।
इन्दिन्दिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ॥२८॥
ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत् ।
उत्कृष्टशक्तिरुत्कृष्टा ह्युपमण्डल[१]चारिणी ॥२९॥
उदिताम्बरमार्गोरुोरगलोकविहारिणी ।
उक्षोर्वरोत्पलोत्कुम्भा ह्युपेन्द्रचरणद्रवा ॥३०॥
उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ।
उद्वेगघ्न्युष्णशमनीत्युष्णरश्मिसुता प्रिया ॥३१॥
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्जवहाऽस्यूर्जधरोर्जावती चोर्मिमालिनी ॥३२॥

ऊर्ध्वरेत:प्रियोर्ध्वाध्वा ह्युर्मिलोर्ध्वगतिप्रदा ।
ऋषिच्छन्द:स्तुतर्द्धिश्च ऋणत्रयविनाशिनी ॥३३॥

ऋतम्भरार्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चि ऋजुमार्गप्रदर्शिनी ॥३४॥

एधिताखिलधर्मार्था त्वेकैकामृतदायिनी ।
एधनीयस्वभावेज्यात्वेजिताशेषपातका ॥३५॥
ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युति: ।
पा.लि.प.सं.३ ओजस्विन्योषधीक्षेत्रमोजोदेहनदायिनी ॥३६॥

ओष्ठामृतौन्नत्यदात्री त्वौषधं भवरोगिणाम् ।
औदार्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपणि ॥३७॥

अम्बराध्ववहाम्बुष्ठाम्बरमालाम्बुजेक्षणा ।
अम्बिकाम्बुमहायोनिरन्धहान्धकहारिणी ॥३८॥
अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना ।
अन्धतामिश्रहन्त्र्यन्धुरञ्जनाह्यंजनावती ॥३९॥

कल्याणकारिणी काम्या कमलोत्पलगन्धिनी ।
कुमुद्वती कमलिनी कान्तिकल्पितदायिनी ॥४०॥

काञ्चनाक्षी कामधेनु: कार्तिकृत्क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी ॥४१॥

कमलाक्षी क्लमहरा कृशानुतपनद्युतिः ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥४२॥

कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी ।
कूटस्था करुणाकान्ता कूर्मयाना कलावती ॥४३॥

कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दगा ॥४४॥

कालकूटप्रशमनी कदम्बकुसुमप्रिया ।
कालिन्दी केलिललिता कलकल्लोलमालिका ॥४५॥

क्रान्तलोकत्रया कण्डूः कण्डूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधोरिणी ॥४६॥

खे खेलमालिनी खस्था खण्डेन्दुतिलकप्रिया ।
खेचरी खेचरीवन्द्या ख्यातिः ख्यातिप्रदायिनी ॥४७॥

खण्डितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैनःकन्दसन्दोहा खड्गखट्वाङ्गखेटिनी ॥४८॥

खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ॥४९॥

गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया ।
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ॥५०॥

गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोत्री गगनगामिनी ॥५१॥

गोत्रप्रवर्धिनी गुण्या गुणातीतगुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दांङ्घ्रिसमुद्भवा ॥५२॥

गुणनीयचरित्रा च गायत्रीगिरिशप्रिया ।
गूढरूपा गुणवती गुर्वी गौरववर्धिनी ॥५३॥

ग्रहपीडाहरा गुद्रा गरध्नी गानवत्सला ।
धर्महन्त्री धृतवती धृततुष्टिप्रदायिनी ॥५४॥

घण्टारवप्रिया घोराऽघौघविध्वंसकारिणी ।
पा.लि.प.सं.४ घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥५५॥

घातुका घूर्णितजला घृष्टपातकसन्ततिः ।
घटकोटिप्रपीतापा घटिताशेषमङ्गला ॥५६॥

15122

घृणावती घृणनिर्धिघस्मरा घूकनादिनी ।
घुसृणा पिञ्जरतनुः घर्घरी घर्घरस्वना ॥५७॥

चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चलायाचलद्युति ।
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ॥५८॥

चाम्पेयलोचना चारुश्चार्वङ्गी चारुगामिनी ।
चार्या चरित्रनिलया चित्रकृच्चित्ररूपिणी ॥५९॥

चम्पूश्चन्दनशुच्यम्बुश्चर्चनीया ऽऽ चिरस्थिरा ।
चारुचम्पकमालाढ्या ऽऽ चमिताशेषदुष्कृता ॥६०॥

चिदाकाशवहाऽचिन्त्या चञ्चच्चामरवीजिता ।
चोरितानेकवृजिना चरिताशेषमण्डला ॥६१॥

छेदिताखिल पापौघा छद्मघ्नी छलहारिणी ।
छन्दत्रिविष्टपतला छेदिताशेषबन्धना ॥६२॥

छुरितामृतधारौघा छातैना छन्दगामिनी ।
छत्रीकृतमरालौघा छाटीकृतनिजामृता ॥६३॥

जाह्नवीज्या जगन्माता जप्या जङ्घालवीचिका ।
जया जनार्दनप्रीता जुषणीया जगद्धिता ॥६४॥

जीवनं जीवनप्राणा जगज्जेष्ठा जगन्मयी ।
जीवजीवा तु लतिका जन्मिजन्मनिबर्हिणी ॥६५॥

जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।
जगदानन्दजननी जलजा जलजेक्षणा ॥६६॥

जनलोचनपीयूषा जटातटविहारिणी ।
जयन्ती जञ्जपूगघ्नी जनितज्ञानविग्रहा ॥६७॥

झल्लरीवाद्यकुशला झलझालजलावृता ।
झिण्टीशवाद्यझाङ्कारकारणी झर्झरावती ॥६८॥

टीकिताखिलपाताला टङ्किकैनोद्रिपाटने ।
टङ्कारनृत्यकल्लोला टीकनीयमहातटा ॥६९॥

डबरप्रवहोड्डीनराजहंसकुलाकुला ।
डमड्डमरुहस्ता च डामरोक्तमहाडका ॥७०॥

ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ।
ढुण्ढिविघ्नेशजननी ढणड्ढुणितपातका ॥७१॥

तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ।
त्रिलोकगोप्त्री तापेशी त्रैलोक्यपरिवन्दिता ॥७२॥
तापत्रितयसंहन्त्री तेजोबालविवर्द्धिनी ।
त्रिलक्ष्या तारिणी तारा तारापतिकरार्चिता ॥७३॥
पा.लि.प.सं.५ त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।
तृषाक्षेत्री तीर्थमाता त्रिविक्रमपदोद्भवा ॥७४॥
तपोमयी तपोरूपा तपस्तोमफलप्रदा ।
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्वरूपिणी ॥७५॥
त्रैलोक्यसुन्दरी तुर्य्या तुर्यातीतफलप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ॥७६॥
तेजोगर्भा तपःसारा त्रिपुरारिशिरोरुहा ।
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतिनुत् ॥७७॥
तरिस्तरणिजामित्रं तर्पिताऽऽशेष पूर्वजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥७८॥
दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥७९॥
दर्शितानेककुतुका दुष्टदुर्जयदुःखकृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ॥८०॥
दन्दशूकविषघ्नी च दारिताघौघसन्ततिः ।
द्रुता देवद्रुमाच्छन्ना दुर्वाराघविनाशिनी ॥८१॥

दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रिया देवी दिक्पालपददायिनी ॥८२॥

दीर्घायुष्कारिणी दीर्घा दोग्ध्री द्वेषणवर्जिता ।
दुग्धाम्बुदोहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥८३॥

द्युनदी दीनशरणं देहीदेहनिवारिणी ।
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ॥८४॥
दूरदेशान्तरचरी दुर्गाभा देववल्लभा ।
दुवृत्तघ्नी दुर्विगा .................................... ।

**पादटिप्पणि**

१. स्कान्दन्यो ।
२. ह्याख्या ।
३. उपमण्डल ।

# गङ्गास्नानविधिः (चित्रकौमुद्याम्)

।। श्रीगणेशाय नमः ।।

नत्वा विष्णुं च विश्वेशं गणेशं गिरिजां रविम्।
कुर्वे लोकहितार्थाय गङ्गास्नानविधिं शुभम्।।१।।

**विधिवत् शौचविधिं कृत्वा, 'शौचमूला क्रिया सर्वा'**

शौचं कृत्वा यथान्यायं शुचिर्भूत्वा समाहितः।
स्पृशेद्गङ्गां नरः प्राज्ञो अन्यथा दोषभाग् भवेत्।।२।।

इति वचनात् दन्तान् संशोध्य पर्णैश्च काष्ठैर्जिह्वां च शोधयेत् इति। कङ्कत्या केशान् शोधयेत् तत्र स्मृतिः–

अशोधितेषु केशेषु स्नानं यः कुरुते नरः।
सम्यक् पुण्यं न लभते तस्मात् केशाँश्च शोधयेत्।।३।।

कटिं प्रक्षाल्याचम्य 'कटिः स्नानं पुरीषे(क) तु' इति वाक्यात्। पुण्ड्रधारणं-कृत्वा 'व्यर्थं भवति तत् सर्वं विना पुण्ड्रेण यत्कृतम्, स्नानसामग्रीं गृहीत्वा हरिनाभोच्चरन् गच्छेत्। तीर्थे गत्वा हस्तौ पादौ प्रक्षाल्य, शिखां बध्वा, कुशां संगृह्य, 'द्वौ कुशौ दक्षिणे हस्ते वामे त्रीणीति' वचनात् संकल्पं कुर्यात्–

विष्णुमासे विष्णुपक्षे विष्णुवासरे अमुकगोत्रोत्पन्नोऽहं अमुकशर्माऽहं गङ्गास्नानमहं करिष्ये। गङ्गायै नमः इति दण्डवत् प्रणमेत्।

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग उच्यते।।४।।

**ततोऽनुज्ञाग्रहणमन्त्रः–**

नमस्ते देवदेवेश! शङ्खचक्रगदाधर!।
देव देहि ममानुज्ञां युष्मत्तीर्थनिषेवणे।।५।।

**अर्घ्यदानम्–**

द्रवरूपेण देवेश! वर्तसे गाङ्गवारिषु।
इदमर्घ्यं गृहाण त्वं स्वीकृत्य करुणां कुरु।।६।।

---

**विषयः– कर्मकाण्डम्, ग्रन्थकारः– रामकृष्ण गौर, पत्र संख्याः– १-२, पूर्णः, लिपिः– दे.ना., स.भ.पु.पा.लि.सं. ७२३४, १०९१३ 'ख'।**

**'गङ्गास्नानविधिः' नामकं पाण्डुलिपिद्वयमुपलब्धं, प्रथमं मूलपाठे उद्धृतम्, द्वितीयस्य 'ख' संकेतेन तस्यपाठभेदातिरिक्तपाठाश्च तत्तत् स्थाने निवेशिताः। हस्तलेखे प्रमादजन्याः पाठाः अस्माभिः संशोध्य मूल पाठे निवेशिताः; प्रमादपाठास्तु तत्तत्स्थाने पादटिप्पण्यां निदर्शिताः।**

**[1]मृल्लेपनम्– अश्वक्रान्ते रथक्रान्तेति मन्त्रेण ।**

नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।
दक्षा पृथ्वी च विहगा विश्वनाथा शिवा सती ॥७॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।
क्षेमावती जाह्नवी च शान्ता शान्तिप्रदायिनी ॥८॥
एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ।
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥९॥
इति गङ्गां प्रार्थयेत् ।

**ततः पादन्यासमन्त्रः–**

स्वर्गारोहणसोपानं त्वदीयमुदकं शिवे ! ।
अतः स्पृश्यामि पादाभ्यामपराधं क्षमस्व मे ॥१०॥

**त्रयोदशापराधान् संवर्ज्य स्नायात्, स्कन्दपुराणे–**

गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् ।
शौचमाचमनं चैव निर्माल्यं मलकर्षणम् ॥११॥
तैलसंवाहनं निन्दां प्रतिग्रहमथो रतिम् ।
अन्यतीर्थाभिलाषं च ह्यन्यतीर्थप्रशंसनम् ॥१२॥
वस्त्रत्यागं तथा धौतं सन्तारं चैव वर्जयेत् ॥१३॥
गण्डूषादिकं तटादौ न कुर्यात् ।

**गर्भलक्षणम्–**

भाद्रशुक्लचतुर्दश्यां यावत्संक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥ इति ॥१४॥

**स्मृत्यन्तरे स्नानाङ्गतर्पणं तदशक्तौ विष्णुपुराणोक्तं कुर्यात्–**

विस्तरेण यदा कर्तुं न शक्नोति नरः सदा ।
आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ॥१५॥

**आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति एकाञ्जलिः,**
**ततो यक्षाणां तर्पयेत्, तत्र मन्त्रः–**

यन्मया दूषितं तोयं शारीरमलसम्भवात् ।
तद्दोषपरिहारार्थं यक्षाणां तर्पयाम्यहम् ॥१६॥
इत्येकाञ्जलिः॥

लोपे दोषमाह-तस्य रक्तं पिबन्ति तेति वचनात्[2] (?) ।

सन्ध्यादिकं कृत्वा तीर्थे गन्धादिभिः सम्पूज्य ब्राह्मणाय यथासम्भवं दद्यात् । 'यद्ददाति सा दक्षिणा' इति श्रुतेः ।

**अथ क्षमापनमन्त्रः—**

मया कृतं मूत्रपुरीषशौचं, स्नानं च गण्डूषणमेहनं च ।
वस्त्रस्य संक्षालनमेव दोषान्, क्षमस्व गङ्गे ! मम सुप्रसीद ॥१७॥

अपराधसहस्राणीति क्रियन्त इति प्रार्थयेत् ।
अनेन विधिना यावत् स्नानं यः कुरुते नरः ॥१८॥

**सम्यक् फलं स लभत इति वचनात् गीतायाम्—**

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥१९॥

**अन्यच्च—**

असनं वसनं वासः येषां चैवाप्यमार्गतः ।
मगधेन समा काशी गङ्गाप्यङ्गारवाहिनी[3] ॥२०॥

**स्कन्दपुराणे—**

सर्वे धर्माः कष्टसाध्याः सापायाश्च कलौ युगे ।
गङ्गास्नानं भवेन्नाम निरपायमिदं द्वयम् ॥२१॥

संकल्पः कुण्डमिति चाहूततीर्थाग्निरुच्यते ।
पापमेव पशुः प्रोक्तस्तर्पणं होम उच्यते ॥२२॥

तीर्थस्थाश्चैव ये विप्रा यज्ञाचार्या प्रकीर्तिताः ।
यज्ञे यो यो विधिः प्रोक्तः स स्नानविधिरुच्यते ॥२३॥

संश्रवः प्राशनं यच्च उपस्पर्शविधिः स्मृतः ।
दक्षिणामन्त्रदानादि गङ्गास्नानाद्धरेः स्मृताः ॥२४॥

इति गङ्गास्नानरूपकम् ।

अर्घ्यदानं शिरः प्रोक्तं पादः संकल्प उच्यते ।
फलोद्देशः स्तनानि स्युः पुण्यं दुग्धमितीरितम् ॥२५॥

दक्षिणा पुच्छमित्याहुर्धर्मो वत्सः प्रकीर्त्तितः ।
गङ्गास्नानस्वरूपा च धेनुः सर्वफलप्रदा ॥२६॥

---

**पादटिप्पंणि**

१. मृदलेपनम्
(क) एको लिङ्गे गुदे पञ्च दश वामकरे तथा । उभयोः सप्त दातव्याः पादयोश्च सकृत्-सकृत् ॥
अष्टौ पुरीषे गण्डूषा मैथुन षोडश स्मृताः । चत्वारो मूत्रके ज्ञेया नृणां शुद्धिप्रदा मताः ॥
२. 'ख' पुस्तके नास्ति !
३. इति श्रीरामकृष्णगौरविरचितायां चित्रकौमुद्यां गङ्गास्नानविधिः । 'ख' पुस्तके अधिकः पाठः—

# गङ्गासाम्राज्यकवचम्

॥ श्रीगणेशाय नमः ॥

**श्रीदेव्युवाच–**

देवेश ! परमेशान ! भक्तानुग्रहकारक ! ।
गङ्गायाः कवचं ब्रूहि यद्यहं तव वल्लभा ॥१॥

**श्रीशिव उवाच–**

शृणु देवि ! प्रवक्ष्यामि गङ्गायाः कवचं शुभम् ।
यस्य स्मरणमात्रेण भवेत्साक्षान्महेश्वरः ॥२॥

पुत्रप्रदमपुत्राणां दरिद्राणां धनप्रदम् ।
मोक्षप्रदं मुमुक्षूणां शृणु चैकमना प्रिये ! ॥३॥

ॐ ॐकारी ब्रह्मरूपा ब्रह्महत्यापहारिणी ।
तारिणी सर्वलोकानां दायिनी सर्वसम्पदाम् ॥४॥
सर्वसौख्यकरी सत्यं कवचं तद्वदामि ते ।

ॐ अस्य श्रीगङ्गासाम्राज्यकवचमन्त्रस्य श्रीभगवान् महादेव ऋषिरनुष्टुपूछन्दः श्रीगङ्गापरमेश्वरी देवता ॐ ऐं बीजं हिलि हिलि मिलि मिलि शक्तिः, गङ्गे मां पावय पावय स्वाहा इति कीलकम्, धर्मार्थकाममोक्षार्थे जपे विनयोगः ।

ॐ शिरो मे प्रणवः पातु सर्वसिद्धिकरीश्वरी ॥५॥
ऐं बीजं में शिखां पातु गङ्गा त्रैलोक्यसुन्दरी ।
'हिंकारी मस्तके मेऽव्याल्लिकारं मे ललाटके ॥६॥
पुनः पातु महामाया हिकारी परदेवता ॥७॥

मिकारी मुखमध्ये तु लिकारी श्रोत्रयो र्मम ।
कण्ठमध्ये सदा पातु मिकारी वाग्विलासिनी ॥८॥

लिकारी हृदयं रक्षेद्गङ्गे पापापहारिणी ॥
स्तनद्वन्द्वे सदा मेऽव्यान्मांकारी परमेश्वरी ॥९॥

---

**विषय–** तन्त्रं, **पत्र संख्या–** १, **लिपिः–** शारदा, पूर्ण– पाण्डुलिपिसंख्या–२३४०६

पाकारी पार्श्वयोः पातु वकारं नाभिदेशके ।
यकारं मे कटिं पातु पाकारी लिङ्गदेशके ॥१०॥

पुनः पाकारं मे पातु गुह्यदेशे निरन्तरम् ।
वकारं जङ्घयोः पातु पकारं मम जानुनी ॥११॥

स्वाकारं गुल्फयोः पातु हाकारं पादयोः सदा ।
सर्वाङ्गं मे सदा पातु गङ्गा सवार्थसिद्धिदा ॥१२॥

इतीदं कवचं दिव्यं ब्रह्मविद्याकलेवरम् ।
पठनाद्ब्रह्मसायुज्यं प्राप्नुयान्नात्र संशयः ॥१३॥

सप्तम्यां वा चतुर्दश्यां संक्रान्तौ ग्रहणे तथा ।
यः पठेन्नित्यकृद् भक्त्या सर्वसिद्धीश्वरो भवेत् ॥१४॥

इदं कवचमज्ञात्वा गङ्गां यो भजतेऽधमः ।
जन्मजन्म भवेन्मूर्खो दरिद्रो व्याधिसंयुतः ॥१५॥

तस्मादवश्यमेतत्तु यः पठेन्नित्यमेव हि ।
सर्वसम्पद्युतो भूत्वा ब्रह्मसायुज्यमाप्नुयात् ॥१६॥

**इति श्रीशिवशिवानन्दनाथविरचितं श्रीगङ्गासाम्राज्यकवचम् ।**



# गङ्गाभक्ति-प्रकाशः[१]

## ।। श्रीगणेशाय नमः ।।

श्रीगोविन्दं[२] गुरुं गङ्गां गणेशं च सरस्वतीम् ।
ग्रन्थनिर्विघ्नपूत्यर्थं वयमेतानुपास्महे ।।१।।

वैश्यः खण्डेलवालाख्यः हलद्यागोत्रसम्भवः ।
श्रीमज्जयपुरे[३] रम्ये ह्यस्ति नाम्ना चतुर्भुजः ।।२।।

सैकदा[४] हरिनन्दाद्यान्द्विजान्पप्रच्छ सादरम् ।
ये शास्त्रज्ञानसम्पन्नास्ते कृतार्था कलौयुगे ।।३।।

मादृशास्त्वधमाः सन्ति शास्त्रज्ञानविवर्जिताः ।
तेषां गतिविचारे हि नावकाशः[५] कथञ्चन ।।४।।

विधात्राऽब्दशतं नृणां परमायुर्निरूपितम् ।
तस्य नैवास्ति विश्वासः शरीरे क्षणभङ्गुरे ।।५।।

ज्ञानिनो योगिनः पुण्याः भगवद्भक्तिसंयुताः ।
तेषां वयः प्रमाणं तु न कृतं च क्वचिद् द्विजाः ।।६।।

ज्ञानिनो योगिनः पुण्या[६] भगवद्भक्ति संयुताः ।
तेषां वयं प्रमाणं[७] तु न कृतं च क्वचिद्द्विजाः ।।७।।

इति श्रुतं मया लोके दृश्यते [८]ह्यधिकं वयः ।
मादृशानां न सत्सङ्गः योगो ज्ञानं. कथञ्चन ।।८।।

तस्मादायुर्वृथा याति दिवारात्रौ सुनिश्चितम् ।
निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ।।९।।

---

१. **विषयः**– पुराणेतिहासम्, **ग्रन्थकारः**– खण्डेलवालः, **पत्र**– १-८७, ८९-१९० पूर्ण, स.भ.पु.पा.लि.सं. ५०६१२ रचनाकाल संवत् १८५२, **लिपि**– दे.ना. ।

२. श्रीगङ्गायै नमः ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थ श्रीगोविन्दादीन्प्रणमति श्री शब्दस्य प्रत्येकं गुर्वादिषु संबन्धः ।।२।।

३. शोभातिशयद्योतनार्थं श्रीमत्प्रयोगः तथा च समृद्धया आपणराजमार्गवीथ्यादिभिश्च शोभितजयपुरे ।।३।।

४. 'स एकदा' इत्युचितः पाठः ।।४।।

५. अवकाशः अवसरो नास्ति तदेव दर्शयति विधात्रेत्यादि सार्द्धेपञ्चभिः ।।५।।

६. पुण्याः पुण्यकर्मणः भगवद्भक्तिसंयुक्ताः इति त्रयाणां विशेषणम् ।

७. आयु प्रमाणं हे द्विजाः ।

८. इष्टं च ह्यधिकं वयः इति वा पाठः ।

दिवा चार्थेहया नित्यं कुटम्बभरणेन वा ।
वाल्यपौगण्डकैशोरैस्तथासीति परं वयः ॥१०॥

वृथैवाज्ञानमोहाभ्यां याति कालो दिवानिशम् ।
अवकाशो[९] यदि भवेच्छास्त्रज्ञानं तथापि न ॥११॥

पा.लि.प.सं. २ शास्त्रे[१०] बहूनि मार्गाणि कथितानि मनीषिभिः ।
निर्गुणोपासनं केचित्सगुणोपासनं तथा ॥१२॥

सगुणस्यापि कथिताः भेदाः शास्त्रेष्वनेकशः ।
अवतारानुचरितं[११] पञ्चदेवप्रपूजनम् ॥१३॥

यज्ञो दानं तपश्चैव व्रतं तीर्थाभिषेचनम् ।
देवार्चनं कर्मयोगं ज्ञानं वैराग्यमेव च ॥१४॥

साधनानि तथान्यानि गौणप्राधान्यभेदतः ।
निगमेनैव विज्ञातुं शक्याः भेदास्तु पण्डितैः ॥१५॥

मन्दैस्सुमन्दमतिभिः[१२] मन्दभाग्यैरुपद्रुतैः ।
किमनुष्ठेयमस्माभिः घोरतापपरिप्लुतैः ॥१६॥

साधनेषु महत्कृच्छ्रं विघ्नं वैगुण्यतो[१३] भवेत् ।
तस्मादेकं विनिश्चित्य सर्वशास्त्रेषु सम्मतम् ॥१७॥

तं सारं च समुद्धधृत्य भवन्तः [१४]शास्त्रवित्तमाः ।
सर्वेऽत्र सम्मतं कृत्वा कृपयोपदिशन्तु माम् ॥१८॥

इत्येतद्वचनं श्रुत्वा विप्राः प्रोचुश्चतुर्भुजम् ।
गुरूणां च हरेश्चैव भक्तानां कृपया तथा ॥१९॥

सगुणोपासनाऽस्माभिः निश्चिता तां ब्रुवामहे ।
यदुक्तं हि निराकारं स्मरन्त्येके त्वयेति च ॥२०॥

तत्र ध्यानस्य विरहात् क्लेश[१५] एवावशिष्यते ।
अत्र प्रमाणं भगवानित्याह सव्यसाचिनम् ॥२१॥

---

९. अवकाशे सत्यपि शास्त्रज्ञानं न तदेव दर्शयति शास्त्र इति ।
१०. शास्त्रेणैव भेदा ।
११. अवतारानु चरितमित्याद्याः विशेषणं पण्डितैः ज्ञातुं वाक्यायोग्याः पण्डितैरेव इत्यत्र ।
१२. एव इत्यस्य वाऽन्वयः मन्दैः अलसैः तत्रापि सुमन्दमतिभिः तत्रापि मन्दभाग्यैर्विघ्नाकुलैः तत्रापि उपद्रुतैः रोगादिभिः ।
१३. वैगुण्यतः वैपरीत्यात् विघ्नम् ।
१४. हे शास्त्रवित्तमाः अत्र सारोद्धारे संमतं ऐकमत्यं कृपया मां उपदिशन्तु तत्र निराकारे ध्यानाभावात् ।
१५. क्लेश एव अत्रप्रमाणं क्लेशेप्रमाणम् ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
पा.लि.प.सं. ३ श्रीमद्भागवते ग्रन्थे प्रमाणं चावगम्यते ॥२२॥
—गीता १२/५

श्रेयः स्मृतिं भक्तिमुदस्य ते विभोः
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम् ॥२३॥

पूजाभक्तिः कथं शून्ये साकारे कथ्यते बुधैः ।
साकारः सूर्यवन्मूर्त्तिर्निराकारस्तु धर्मवत् ॥२४॥

एक एव न भेदोऽस्ति निर्गुणः सगुणस्तथा ।
सगुणस्यापि ये भेदाः बहवः समुदीरिताः ॥२५॥

तत्रोत्तरं श्रृणुष्वात्र यथा शास्त्रेषु निश्चितम् ।
यस्मिन्यस्य मनो लग्नं तं सेवेत ह्यनन्यधीः ॥२६॥

अन्यस्य निन्दां च त्यजेत्तदा शुभफलं लभेत् ।
सर्वेषां कारणं कृष्णः श्रीमद्भागवते स्फुटम् ॥२७॥

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
निर्गुणब्रह्मणो धाम सगुणब्रह्म एव हि ॥२८॥

गीतायामर्ज्जुनायाह भगवान्देवकीसुतः ।
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥२९॥

**सनत्कुमार-संहितायाम् :—**

अनादियुग्मं कुशलमेकमेव द्विसंज्ञकम् ।
राधाभिधा च कृष्णश्च पृथग्देहे न तिष्ठतः ॥३०॥

चक्रे युग्मेन केलिश्च महानन्दमयी ध्रुवा ।
नूपुराज्जनितो रावः स शब्दः ब्रह्मसंज्ञकः ॥३१॥

ततो जातश्च पुरुषः यः शुद्धः प्रकृतेः परः ।
ततः प्रकृतिपुरुषौ ततो नारायणोऽभवत् ॥३२॥

पा.लि.प.सं. ४ तत्कला कोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः ।
सृष्टिस्थित्यादिना युक्ता तिष्ठन्ति तस्य वैभवाः ॥३३॥

तद्देहमञ्जुसौन्दर्याश्चर्यातुलनिरूपमाः ।
तत्प्रिया प्रकृतिस्त्वाद्या राधिका यस्य वल्लभा ॥३४॥

तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः ।
तस्याङ्घ्रिरजसंस्पर्शात् कोटिविष्णुः प्रजायते ॥३५॥

**ब्रह्मवैवर्त्ते प्रकृतिखण्डे सृष्टिप्रकरणे नारदं प्रति ब्रह्मवाक्यम्–**

स च स्वेच्छामयः कृष्णः साकारश्च निराकृतिः ।
तेजो रूपं निराकारं ध्यायन्ते योगिनः सदा ॥
वदन्ति च परं ब्रह्म परमात्मानमीश्वरम् ॥३६॥

**वाराहीसंहितायां भूमिवाराहसम्वादे–**

परमं कारणं कृष्णं गोविन्दं च परात्परम् ।
वृन्दावनेश्वरं नित्यं निर्गुणस्यैककारणम् ॥३७॥
तस्याद्भुतं च माहात्म्यं किमैश्वर्यं च सुन्दरम् ।
तद् ब्रूहि देवदेवेश श्रोतुमिच्छाम्यहं प्रभो ! ॥३८॥
यदङ्घ्रिनखचन्द्रांशुमहिमान्तो न विद्यते ।
तन्माहात्म्यं कियद्देवि ! प्रोच्यते त्वं तदा शृणु ॥३९॥
नखेन्दुकिरणं श्रेणी पूर्णब्रह्मैककारणम् ।
केचिद्वदन्ति तद्रश्मिर्ब्रह्मचिद्रूपमव्ययम् ॥४०॥
तदंशांशं महाविष्णुं प्रवदन्ति मनीषिणः ।
योगीन्द्रैः सनकाद्यैश्च तदेव हृदि चिन्त्यते ॥
अनन्तकोटिब्रह्माण्डे ह्यनन्तत्रिगुणाश्रये ॥४१॥
पा.लि.प.सं. ५ अदृश्यं सर्वद्रष्टारं सर्वं सर्वस्य कारणम् ।
गुणरूपमरूपं च वैष्णवै स्तत्र मन्यते ॥४२॥
वदन्तीति च ते कस्य तेजस्तेजस्विनं विना ।
तेजो मण्डलमध्यस्थं ब्रह्म तेजस्विनं परम् ॥४३॥
स्वेच्छामयं सर्वरूपं सर्वकारणकारणम् ।
अतीव सुन्दरं रूपं ब्रिभतं सुमनोहरम् ॥४४॥
किशोरवयसं शान्तं सर्वकान्तं परात्परम् ॥४५॥

नवीननीरदाभासमित्यादिविशेषणानि ब्रह्मवैबर्त्ते बहूनि सन्ति। तथा च वृहद्वामनपुराणे ब्रह्मणा भृगुं प्रत्युक्तं, पुत्र भृगु त्वं किमपि न जानासि यतस्त्वं ब्रह्मज्ञाने निगमचित्तः त्वममृतरसफलं त्यक्त्वा शुष्कपर्णेषु रसबुद्धिं करोषि । अन्तःकरण-हीनतुषेषु धान्यबुद्धिं करोषि। तस्मात् क्लेश एव फलं नत्वन्यत् रसास्वादं न जानासि। त्वं रसास्वादं शृणुष्व। सर्वदैकरसं वृन्दावनं धाम यत्र गुणमयी माया तस्याः दोषाः कामादयो यत्र न प्रभवन्ति। यत्र ललितादिसखीभिः सह श्रीवन्दा-वनेश्वरो नित्यं विहरति, यत्र सर्वेऽवताराः वसन्ति। चतुर्दिक्ष्ववस्थिताः सेवन्ते तदेव नित्यं धाम। यावन्ति ब्रह्माण्डानि उत्पत्य प्रलयवन्ति तथा नैतद्वृन्दावनं धाम

यथा जलनिष्क्रमणार्थं निर्मिता मृद्घटी उपर्यधो भ्रमति तथा अत्र धाम्नि वृन्दावनेश्वरः नवयुवाघनश्यामः स्वतन्त्रः सर्वेश्वरो नित्यं निवसति। तदिच्छयैव सृष्ट्यादिकौतुकं भवति। तेनैवादौ स्वेच्छया काचिदनिर्वचनीया सखी प्रकटीकृता। तया चित्ततः श्रीपतिराविर्बभूव। स च तयाज्ञप्तः। सृष्टिकार्या अन्येऽवतारा ब्रह्मादयः सृष्टिकर्मणि नियुक्ताः स्वस्वावसरे समुद्युक्ता भवन्तु। तत्रैव धर्मराजोप्याहूतः। तयोक्तं धर्मराज त्वया भक्तिहीनाः दण्डयाः न तु भक्तियुक्ताः।

एवं सर्वेषु शास्त्रेषु पुराणेषु स्मृतिष्वपि।
निर्गुणब्रह्मणः स्थानं सगुणः कृष्ण ईरितः ॥४६॥

रामकृष्णौ परं तत्वं त्रय्या चापि न गोचरम्।
ऐक्यं प्रोक्तं संहितायां शुकेन रामकृष्णयोः ॥४७॥

अप्रतर्क्योंह्यनिर्देश्यः भगवान् भूतभावनः।
प्रत्यक्षं दर्शनं दत्ते भक्तानुग्रहकाम्यया ॥४८॥

तस्माच्च निर्गुणस्त्यक्तः सेवितः सगुणो बुधैः।
अत्र प्रमाणं विज्ञेयं श्रीमद्भागवतादिषु ॥४९॥

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥५०॥

पा.लि.प.सं. ६ उक्तसंसारसम्बन्धा ज्ञाततत्वा अपि भृशम्।
लीलया विग्रहं कृत्वा सेवन्ते परमेश्वरम् ॥५१॥

तस्मात्त्वमपि सद्बुद्धे विचार्य सगुणं भज।
इतिश्रुत्वा चतुर्बाहुः पुनः पप्रच्छ सादरम् ॥५२॥

भजनं किमिह प्रोक्तं तत्प्रकारान् ब्रुवन्तु मे।
भजनार्थस्तु सेवायां भजधातोः प्रवर्तते ॥५३॥

सेवाप्रकारा बहवः कीर्त्तनश्रवणादयः।
चतुःषष्टिगुणैर्युक्ता[१६] द्वात्रिंशदघवर्जिताः ॥५४॥

---

१६. चतुःषष्टि गुणानाह-गुरुपादाश्रय कृष्णादीक्षाशिष्या विश्रम्भेन गुरुसेवा, साधुमार्गानुसारभजनरीतिप्रश्न-भोगत्याग तीर्थवासस्वभक्तिनिर्वादरूपभोजनादिस्वीकारः, एकादशीव्रतम्। अश्वत्थतुलसीधात्रीगोब्राह्मण-वैष्णवसम्मानम्। असाधुसङ्गत्यागः। खह्वारम्भत्यागः। बहुशिष्यसङ्गत्या बहुशास्त्रविवादत्यागः। व्यवहारस्याकार्प्यण्यम्। शोकक्रोधादित्यागः अन्यदेवतानिन्दात्यागः प्राणिमात्रे उद्वेगत्यागः। सेवापराध-नामापराधत्यागः। गुरुकृष्णभक्त निन्दात्यागः। हरिनामाक्षरधारणम्। अभ्युत्थानम् अनुव्रजाश्रीमूर्त्ति-स्थानगमन पूजासेवागीतं संकीर्त्तनं जपाज्ञप्तिः स्तवपाठः महाप्रसादसेवा चरणामृतपानं धूपमाल्यादि सौरभ्यं श्रीमूर्त्तिदर्शनं स्पर्शआरार्त्तिकादर्शनं श्रवणं कृपाभावना स्मरणं ध्यानं दास्यं सख्यं आत्मनिवेदनं निजप्रियवस्तुसमर्पणं कृष्णार्थेसर्वकर्मकरणं सर्वथाशरणापित्तः विशेषतः श्रीतुलसीसेवा वैष्णवशास्त्रसेवा मथुरामण्डलवासः निर्माल्यधारणं नृत्यं दण्डवत्प्रणामः वैष्णवसेवा यथाशक्ति दोलोत्सवादिकरणं कार्त्तिकव्रतं जन्माष्टमीयात्रादिदर्शनादि एव एकोनषष्टिभक्त्यंगानि तत्र पञ्चाङ्गानिश्रेष्ठानि। श्रीमूर्त्तिसेवाकौशलं श्रीभागवतकथास्वादनं सजातीयस्निग्धसाधुसङ्गः नामकीर्तनं श्रीवृन्दावनवास एवं चतुः षष्टिः।

सा सेवानुष्ठिता पुंभिः यथार्थफलदा भवेत्।
तदप्यशक्या यदि चेन्नाम संकीर्तनं हरेः ॥५५॥

अर्द्धमुच्चारितं विष्णोर्नाम सन्तारयेद्ध्रुवम्।
सम्पूर्णं कथितं येन तस्य भाग्यञ्च को वदेत् ॥५६॥

दशाघहरितं[१७] ग्राह्यं सद्यः सर्वार्थदं नृणान्।
यदि तत्राघरहितमनुष्ठातुं जपं हरेः ॥५७॥

शक्यं नैव भवेत्पुंसामिति चेत्तत्कथं भवेत्।
तत्रोच्यते विधौ दौषः प्रेम्णि तेषां न सम्भवः ॥५८॥

न देशकालनियमो न शौचाशौचनिर्णयः।
परं संकीर्त्तनादेव रामनामेति प्रोच्यते ॥५९॥

प्रेम किं कथ्यते विप्राः कथयन्तु सविस्तरम्।
त्वं सावधानेन शृणु वच्मः प्रेम्णो हि लक्षणम् ॥६०॥

आत्मनोप्यधिकस्नेहो यत्र वै क्रियते नृभिः।
प्रेमलक्षणमेतद्धि प्रह्लादाद्यभिधारितम् ॥६१॥

सतां निन्दानाम्नः परममपराधं वितनुते।
यतः ख्यातिं यातं कथमु सहते तद्विगर्हाम्।
शिवस्य श्रीविष्णोर्य इह गुणनामादिसकलम्।
धियाभिन्नं पश्येत्स खलु हरिनामाहितकरः ॥१॥

गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं
तथार्थवादो हरिनाम्नि कल्पनम्।
नाम्नो बलाद्यस्य हि पापबुद्धिर्न
विद्यते तस्य यमैर्हि शुद्धिः ॥२॥

धर्मवृत्ति त्यागहुतादिसर्वसुभक्तिक्रियासाम्यमपि प्रसादः[(क)]।
अश्रद्दधानो विमुखोप्यशृण्वयंश्चोपदेशः शिवनामापराधः ॥३॥

श्रुत्वापि नाममाहात्म्यं यः प्रीतिरहितोऽधमः।
अहंमदादिपरमो नाम्नि सोप्यपराधकृत् ॥४॥

इत्यपराधा ज्ञेयाः एतैः रहितं नाम गृह्णीयात्। तर्हि सद्यः सर्वकामप्रदं अन्यथा तु विलम्बेनेति भावः। यत्र परमात्मनि वै परानिश्चयेन प्रह्लादनारदपराशर

१७. दशाघानि पाद्मे नारदं प्रति सनत्कुमारेणोक्तानि।
(क) प्रमादः, शु० पा०

पुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मकाद्या रुक्माङ्गदार्जुनवसिष्ठविभीषणाद्या एतानहं परमभागवतान् नमामि ।

पा.लि.प.सं. ७ अन्ये च विविधा भक्ता: गोप्यो गोपा: सहस्रश: ।
प्रेमसंयुक्तचित्रास्ते संसारं नाभिमेनिरे ॥६२॥

तत्प्रेमरससंसक्त: शिव: सर्वेश्वरोऽपि सन् ।
गोपीरूपं समासाद्य गतो वै रासमण्डले ॥६३॥

श्रीमद्भागवते प्रोक्ता प्रेमावस्था यथा शृणु ।
एवं व्रत: स्वप्रियनामकीर्त्या
जातानुरागोद्धुतचित्त उच्चै: ।
हसत्यथो रोदति गायति स्म
उन्मादवन्नृत्यति लोकवाह्य: ॥६४॥

प्रेमी देहानुराधानं स्वात्मानं विजहाति च ।
इति श्रुत्वा चतुर्बाहु: पुन: पप्रच्छ ब्राह्मणान् ॥६५॥

यदेतत्कथितं प्रेम मादृशानां सदुद्धरम् ।
तस्माच्च सुलभं मार्गं सर्वशास्त्रेषु सम्मतम् ॥६६॥

सर्वोपास्यं च सुगमं तदेवोपदिशन्तु माम् ।
एवं भाग्यनिधे: प्रश्नं श्रुत्वा सर्वे तमब्रुवन् ॥६७॥

सारं तस्य महाप्रेम्ण: सुसिद्धं कथयामहे ।
श्रेयस्करं च सर्वेषामिहामुत्र च मोक्षदम् ॥६८॥

शिवप्रेमवश: कृष्ण: गोलोकेश: स्वयं विभु: ।
राधया सहित: श्रीमान् एवंरूपो बभूव ह ॥६९॥

श्रीमान्नारायणोऽप्येवं वैकुण्ठे च समास ह ।
भक्तप्रेमातिरेकेण जगाम जलरूपताम् ॥७०॥

विष्णुस्तथैव कैलासे सृष्टिरक्षणतत्पर: ।
जलरूपमवापाग्रे शिवप्रेमनियन्त्रित: ॥७१॥

पा.लि.प.सं. ८ तस्मात्तत्सच्चिदानन्दं रसं ब्रह्मद्रवं जलम् ।
गङ्गां विद्धि महाभाग सुसिद्धं प्रेमरूपिणीम् ॥७२॥

यस्य द्रवं तमेवाशु प्रापयेत्सेविता नृभि: ।
तद्रवं प्रेमसारं हि तत्र नास्ति परिश्रम: ॥७३॥

तत्सेवनं सुसुगमं ज्ञानतोऽज्ञानतोऽपि वा।
विधिनाथाप्यविधिना सुलभं सर्वसिद्धिदम् ॥७४॥

सर्वार्थसाधनं सर्वशास्त्रसारमलौकिकम्।
तदेवेदं शिवा गङ्गा साक्षान्नारायणी परा ॥७५॥

यं यं लोकं कामयते भक्तस्तं तं ददाति हि।
ब्रह्मस्वरूपा श्रीगङ्गा तथा ब्रह्मद्रवीति च ॥७६॥

गङ्गा विष्णुपदी प्रोक्ता जाह्नवी कथिता तथा।
ब्रह्मा कमण्डलौ धत्ते शिवो मूर्द्धिन दधाति च ॥७७॥

भगीरथेन ह्यानीता भुवि गङ्गाघनाशिनी।
यत्र पूजाविधिर्नास्ति नैषा श्रद्धामपेक्षते ॥७८॥

पापिनामस्थिकेशादीन्यमेध्यान्यपि जाह्नवी।
प्रतिगृह्णाति सायुज्यं ददाति परमात्मनः ॥७९॥

माहात्म्यमस्या राधाग्रे कृष्णेन कथितं यथा।
पुराणे ब्रह्मवैवर्त्ते खण्डे प्रकृतिसंज्ञके ॥८०॥

मुक्तिप्रदा मुमुक्षूणां भक्तानां हरिभक्तिदा।
कोटिजन्मार्जितं पापं विविधं पापिनामहो ॥८१॥

यस्याः संस्पर्शवायोश्च सम्पर्केण विनश्यति।
किं वा न जाने प्राणेशि स्पर्शदर्शनयोः फलम् ॥८२॥

किमुत स्नानजन्यं च कथयामि निरूपणम्।
सनत्कुमारमित्याह नारदो भगवान् ऋषिः ॥८३॥

**नारदीये नारदवाक्यम् :—**

गङ्गाया महिमां ब्रह्मन् वक्तुं वर्षशतैरपि।
न शक्यते विष्णुनापि किमन्यैर्बहुभाषितैः ॥८४॥

**महाभारते च :—**

पा.लि.प.सं. ९ मेरो समुद्रस्य च सर्वयत्नैः
संख्योपलानामुदकस्य वापि।
शक्यं वक्तुं नेह गङ्गाजलानां
गुणाख्यानं परिमातुं तथैव ॥८५॥

भागीरथ्यास्तु महिमा वक्तुं नैव च शक्यते।
विष्णुना च महेशेण ब्रह्मणा वा विपश्चिता ॥८६॥

सर्वेष्वेव पुराणेषु संहितोपनिषत्सु च ।
भारतादिप्रबन्धेषु तंत्रयामलकेषु च ॥८७॥

गङ्गामाहात्म्यममलं कथितं पापनाशनम् ।
प्रभावश्च महानस्याः सर्वशास्त्रेषु निश्चितः ॥८८॥

यथोक्तश्च तथा सद्यो नैव दृश्येत जन्तुषु ।
तत्र किं कारणं विप्राः कथयन्तु ममाग्रतः ॥८९॥

इत्येतद्वचनं श्रुत्वा विप्राः प्रोचुश्चतुर्भुजम् ।
प्रेमभक्त्या यदि युतो लभेत् सद्यः फलं जनः ॥९०॥

इति चेत्सर्वदेवानां पुराणानि पृथक् पृथक् ।
सर्वदेवप्रधानायाः गङ्गाया न कुतः कृतम् ॥९१॥

तीर्थानि देवा यज्ञाश्च गङ्गायाः न पृथग्यतः ।
पुराणं भगवान् व्यासः ततो वै न चकार ह ॥९२॥

प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ।
तेषां वैयर्थ्यामाशंक्य पुराणं न पृथक्[१८] कृतम् ॥९३॥

**यद्यपि भागीरथ्या स्तुतिर्भवत्येव सर्वत्र नैकत्र सेति कृच्छ्रादेकीभावार्थमारम्भः ।**

एवं द्विजवचः श्रुत्वा यजमानोऽब्रवीदिदम् ।
कथं ब्रह्मस्वरूपेयं विप्राः कथयता चिरम् ॥९४॥

ब्रह्मद्रवी कथं जाता कथं विष्णुपदी स्मृता ।
कथं वा जाह्नवी ख्याता कथं धात्रा कमण्डलौ ॥९५॥

धृता किमर्थमीशेन मूर्ध्नि सम्वत्सरान् बहून् ।
भुव्यानीता कथं देवी सगरेण महीभृता ॥९६॥

कलालीलादिभिश्चास्या ह्युच्यतामुद्भवो भुवि ।
जाह्नव्या यदुपाख्यानं यत्र यत्रास्ति पुण्यदम् ॥९७॥

आनीय तत्पुराणेभ्यः श्रावयध्वं पुनीत माम् ।
पा.लि.प.सं. १० अस्या देव्या महिम्नो न पारं गन्तुं सुरैरपि ॥९८॥

शक्यं तथापि भूदेवाः स्वबुद्धेरनुसारतः ।
विधीयतां द्विजश्रेष्ठा यत्स्थानकुलदेवता ॥९९॥

---

१८. इदानीं पृथक्करणे कारणमाह– सा स्तुतिः एकत्र न यदि प्राप्यते तर्हि कृच्छ्रात्, अतः एकत्र करणार्थमारम्भः, अत्र प्रमाणम्—

यथेक्षुदण्डामूलाग्ररसं संस्थाप्य तिष्ठति । पृथक् कृते भवेत् स्वादु शर्करादिसुखावहम् ॥

इत्यादि बहूनि प्रमाणानि सन्ति ।

कलिग्राहग्रहीतानां नृणामत्यल्पमेधसाम् ।
नान्यां गतिं प्रपश्यामि विना ब्रह्मद्रवं बुधाः ॥१००॥

एवं श्रुत्वा द्विजाः प्रोचुस्तवेदमुचितोचितम् ।
साधु साधु महाभाग ! वैश्यवंशविभूषण ! ॥१०१॥

सम्यग्व्यवसितं ह्येतजगागुणसंग्रहे ।
शृणुष्व भो महाप्राज्ञ ! तव प्रश्नानुसारतः ॥१०२॥

वर्णयिष्यामहे ग्रन्थं गङ्गाभक्तिप्रकाशकम् ।
श्रीमल्लम्बोदरं गां फणिवरवलयं चन्द्रचूडं मृडानीं
कृष्णं राधाविलासं निगमगणनुतं भास्करं श्रीगुरूँश्च ।
शश्वत्पापिष्ठजन्तूत्तरणसरणिकां स्वर्धुनीं रामचन्द्रं
सीतादोर्वल्लिजुष्टं नमनमहंरहः कुर्महे ग्रन्थभूत्यै ॥१०३॥

वयं च हरिनन्दन प्रवर वाग्मिनः कामकृच्-
चतुर्भुजमुखोद्गतां मधुरगां समाकर्ण्य वै ।
सुजह्नुतनयागुणग्रथननोदयन्त्रीं मुदा
भगीरथरथानुगाविततभक्तिरत्नाकराम् ॥१०४॥

रविकुलाब्धिसुधांशुभगीरथः
स्वतपसा परितोष्य समानयत् ।
भुवि च यां कलिदोषहरां महा
त्रिपथगामिह तां सततं भजे ॥१०५॥

परोपकारकरणानच्छिद्रान्वेषणे रतान् ।
नमस्कुर्मः साधुवर्यान्विद्याव्यासङ्गतत्परान् ॥१०५॥

पा.लि.प.सं. ११ विधातारं नमस्कृत्य व्यासवाल्मीकनारदान् ।
सनत्कुमारं च शुकं सूतं पौराणिकं तथा ॥१०६॥

नानापुराणान्यथसंहितांश्च
दृष्ट्वा स्वबुद्धेरनुसारतस्तु ।
तेनाप्रमाणत्वममुष्य नैव
शङ्क्यं तु सर्वे सुधियो जुषन्ताम् ॥१०७॥

गङ्गामाहात्म्यममलं शृण्वतां पापनाशनम् ।
गङ्गायाः ब्रह्मरूपत्वं यत्पृष्टं च त्वयानघ ॥१०८॥

तत्र पाद्मोत्तरेखण्डे सम्बादः पापनाशकः ।
वज्राख्यस्य ऋषेर्विष्णोः प्रमाणं परिकीर्त्यते ॥१०९॥

**तद्यथा विष्णुवाक्यम्–**

यद्वै ब्रह्म न सन्देहो निर्गुणं प्रकृतेः परम्।
तेन किं समतां गच्छेदपि ब्रह्माण्डगोचरे ॥११०॥

श्रद्धा धर्मश्च मोक्षश्च श्रद्धया च प्रसीदति।
परब्रह्मस्वरूपा च गङ्गा च मुनिसत्तम ॥१११॥

**विप्रोक्तिः–**

शिववाक्यमपि स्कान्दे विष्णुं वाराणसीस्तुतौ।
ममैव सा परामूर्त्तिस्तोयरूपा शिवात्मिका ॥११२॥

ब्रह्माण्डानामनेकानामाधारः प्रकृतिः परा।
सुविद्या सुखरूपा च त्रिशक्तिः कारणात्मिका ॥११३॥

आनन्दामृतरूपां च शुद्धधर्मस्वरूपिणीम्।
यामेतां जगतां धात्रीं धारयामि स्वलीलया ॥११४॥

विश्वस्य रक्षणार्थाय परब्रह्मस्वरूपिणीम्।
त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राणि यानि च ॥११५॥

सर्वत्र सर्वे ये धर्माः सर्वे यज्ञाः सदक्षिणाः।
तपांसि विष्णोः सर्वाणि श्रुतिः साङ्गा चतुर्विधा ॥११६॥

अहं च त्वं च ब्रह्मापि देवतानां गणाश्च ये।
पुरुषार्थाश्च सर्वे वै शक्तयो विविधाश्च याः ॥११७॥

गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिता।
वेदान्तवेद्यं यत्तत्वं परब्रह्मस्वरूपिणीम् ॥११८॥

पश्यध्वं तदिमां गङ्गां प्रत्यक्षं पुरतः स्थिताम्।
विधूतपापा ये मर्त्याः परंज्योतिःस्वरूपिणीम् ॥११९॥

सहस्रसूर्यप्रतिमां गङ्गां पश्यन्ति ते भुवि।
इयं हि सर्वसत्वानामिहामुत्र सुखप्रदा ॥१२०॥

सर्ववेदमयी चैव परब्रह्मस्वरूपिणी।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥१२१॥

चिदानन्दमयं यत्तु निर्विकल्पं निरञ्जनम्।
अणोरणुतरं यच्च महतोऽपि महत्तरम् ॥१२२॥

सूक्ष्मं सर्वविदभ्यास्यमप्रमेयमनूपमम्।
सर्वसारं च यन्नित्यं सन्मात्रं सर्वसंस्थितम् ॥१२३॥

ब्रह्मणाप्यपरिच्छेद्यमुपरिष्टात्परं पदम् ।
तदेवेदं शिवं गङ्गा साक्षान्नारायणी परा ॥१२४॥
यस्यास्तु दर्शनादेव विष्णुमाया विनश्यति ।

**भगवती-भागवते शिवां प्रति शिववाक्यम् :–**

त्वं तु मन्दाकिनी पुण्या महापातकनाशिनी ।
त्वत्प्रसादान्मया प्राप्तं शिवत्वं च महेश्वरि ! ॥१२५॥

**विप्रोक्तिः–**

ब्रह्मसंज्ञे पुराणे च संवादं द्रवरूपिणः ।
विष्णोर्विधातुर्ब्रह्मात्र तदाकर्णय सादरम् ॥१२६॥

**तद्यथा ब्रह्मवाक्यम्–**

अनेनामृतरूपेण लोकं मे पावनं कुरु ।
पा.लि.प.सं. १३ त्वमेव जगतां नाथ सृष्टिकर्त्ता च पालक ॥१२७॥
संहर्त्तृरुद्ररूपेण संहर्त्ता च जगत्पते ! ।
चतुर्दशानां लोकानां रक्षणाय कृपानिधे ! ॥१२८॥
जलरूपेण निर्याता साक्षाद्ब्रह्मस्वरूपिणी ।

**कृष्णवाक्यं राधां प्रति ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे :–**

स्वयं देवी च वैकुण्ठं वेष्टयित्वास्ति संततम् ।
अस्या विनाशः प्रलये नास्त्येव दुहितुर्मम ॥१२९॥

**विप्रोक्तिः–**

अगस्त्यसंहितायां च मम वाक्यमथो शृणु-
काश्यां कदाचिल्लोलार्के मनुं प्राप्य षडक्षरम् ।
राममाराधयामास विधिवाक्याद् हरिं मृडः ॥१३०॥
स च मन्वन्तरशतं जजाप मुदितो भृशम् ।
तदा प्रसन्नः श्रीरामः शिवायैतद्वरं ददौ ॥१३१॥

**तद्यथा शिवं प्रति श्रीरामवाक्यम्–**

गङ्गायां वा तटे वापि यत्र कुत्रापि वा शिव !
प्राणान्परित्यजन्तश्च मुक्तिस्तेषां फलं भवेत् ॥१३२॥
क्षेत्रेऽत्र देवदेवेश यत्र कुत्रापि वा मृताः ।
कृमिकीटादयोप्याशु मुक्ताः सन्तु न चान्यथा ॥१३३॥

**ब्रह्मपुराणे श्रीरामवाक्यं वानरान् प्रति–**

अयोध्यामगमन्सर्वे गच्छतां गामपश्यत।
रामो विरामः शत्रूणां शरण्यः शरणार्थिनाम्॥१३४॥

गौतमीं च जगत्पुण्यां सर्वकामविवर्द्धिनीम्।
मनोनयनसन्तापनिवारणपरायणाम्॥१३५॥

तां दृष्ट्वा नृपतिः श्रीमान् गङ्गातीरमथाविशत्।
हरीन् सर्वान् यथामन्त्र्य हनुमत्प्रमुखान्मुने॥१३६॥

अस्या प्रभावाद्धरयो योऽसौ मम पिता प्रभुः।
सर्वपापविनिर्मुक्तो मृतो याति त्रिविष्टपम्॥१३७॥

इयं जनित्री सकलस्य जन्तो-
भुक्तिप्रदा मुक्तिमथोऽपि दद्यात्।
पापानि हन्यादपि दारुणानि
कान्यानयास्त्यत्र नदीसमाना॥१३८॥

सेयं जनित्री सकलेप्सितानाममंगलानामपि संनिहन्त्री।
जगत्पवित्रीकरणैकदक्षाघशातनी सा सरितां सवित्री॥१३९॥

कायेन वाचा मनसा सदैनां
व्रजामि गङ्गां शरणं शरण्याम्।
पूजां च चक्रुर्विविधां पृथक् पृथक्
पुष्पैरनेकैः सर्वभावोपयुक्तैः॥१४०॥

**श्रीरामवाक्यं लक्ष्मणं प्रति–**

अहो गङ्गाप्रभावोऽयं त्रैलोक्ये नोपमीयते।
वयं धन्या यतो गङ्गा दृष्टास्माभिश्च पावनी॥१४१॥

**विप्रोक्तिः–**

मूर्ध्ना महाशम्भुरपि गङ्गां धत्तेऽतिपावनीम्।
पा.लि.प.सं. १४ गोलोकसन्निधौ पुर्य्यां ध्यायन्कृष्णपदाम्बुजम्॥१४२॥

**तदुक्तं ब्रह्मवैवेर्त्त ब्रह्मखण्डे निशामय–**

तद्यथा— प्रतप्तहेमाभजटाधरं विभुं गङ्गाधरं निर्मलचन्द्रशेखरम्।
मन्दाकिनीपुष्करबीजमालया कृष्णेति
नामैव मुदा जयन्तम्।
ददर्श देवर्षिरथो महेश्वरं
प्रणम्य पादौ प्रयतः कृताञ्जलिः॥१४३॥

**विप्रोक्तिः-**

विष्णुशंकरधातॄणां तथा वै रामकृष्णयोः ।
ब्रह्मस्वरूपतां यान्तु वाक्यानि कथितानि ते ॥१४४॥
प्रसङ्गेश्च पुराणद्रवत्वं ब्रह्मणः शृणु ॥१४५॥

**॥ इति श्रीमत्पुराणसारोद्धारे गङ्गाप्रकाशे ब्रह्मस्वरूपप्रतिपादनं नाम द्वितीयप्रकरणम् ॥**

## अथ तृतीय-प्रकरणम्

**विप्रोक्तिः-**

पुराणे ब्रह्मवैवर्त्ते खण्डे प्रकृतिसंज्ञके ।
प्राह नारायणो देवो देवर्षिंबदरीवने ॥१॥

तच्छृणुष्व महाबाहो गोलोके रासमण्डले ।
राधाकृष्णाङ्गसम्भूता गङ्गेति द्रवरूपिणी ॥२॥

**तद्यथा, नारायण उवाच**

कार्त्तिकीपूर्णिमायां तु राधायाः सुमहोत्सवे ।
कृष्णः सम्पूज्य तां राधामुवास रासमण्डले ॥३॥

कृष्णेन पूजितां तां तु सम्पूज्य हृष्टमानसाः ।
ऊचुर्ब्रह्मादयः सर्वे ऋषयः सनकादयः ॥४॥

एतस्मिन्नन्तरे कृष्ण ! संगीतं च सरस्वती ।
जगौ सुन्दरतालेन वीणया च मनोहरम् ॥५॥

तुष्टो ब्रह्मा ददौ तस्यै रत्नेदं हारसारकम् ।
शिवो मणीन्द्रसारं च सर्वब्रह्माण्डदुर्लभम् ॥६॥

कृष्णः कौस्तुभरत्नं च सर्वरत्नात्परं वरम् ।
अमूल्यरत्ननिर्माणं हार सारं च राधिकाम् ॥७॥

नारायणश्च भगवान् वनमालां मनोहराम् ।
अमूल्यरत्ननिर्माणं लक्ष्मीः कनककुण्डलम् ॥८॥

विष्णुमाया भगवती मूलप्रकृतिरीश्वरी ।
दुर्गानारायणीशाना विष्णुभक्तिं सुदुर्ल्लभाम् ॥९॥

धर्मबुद्धिं च धर्मश्च यशश्च विपुलं भवेत् ।
वह्निशुद्धांशुकं वह्निर्वायुश्च मणिनूपुरम् ॥१०॥

एतस्मिन्नन्तरे शम्भुर्ब्रह्मणा प्रेरितो मुहुः ।
जगौ श्रीकृष्णसङ्गीतं रासोल्लाससमन्वितम् ॥११॥

मूर्च्छां प्राप्ताः सुराः सर्वे चित्रपुत्तलिका यथा ।
क्षणेन चेतनां प्राप्य ददृशुः राधिकेश्वरम् ॥१२॥

गतश्च श्रधया सार्द्धं श्रीकृष्णो द्रवतामिति ।
ततो ब्रह्मादयः सर्वे तुष्टुवुः परमेश्वरम् ॥१३॥

स्वमूर्त्तिं दर्शय विभो वाञ्छितं परमेव नः ।
एतस्मिन्नन्तरे तत्र वाग्वभूवाशरीरिणी ॥१४॥

पा.लि.प.सं. १५ तामेव शुश्रुवः सर्वे समुक्तां मधुरान्विताम् ।
सर्वात्माहं प्रियाशक्तिर्भक्तानुग्रहविग्रहः ॥१५॥

ब्रह्मादिदेवा देहेन कर्त्तव्यं च किमावयोः ।
मनवो मानवाः सर्वे मुनयश्चैव च वैष्णवाः ॥१६॥

मन्मन्त्रपूतां मां द्रष्टुमागमिष्यन्ति मत्पदम् ।
मूर्त्तिं द्रष्टुं च सुव्यक्तां यूयं यदि सुरेश्वराः ॥१७॥

करोतु शम्भुस्तत्रैव मदीयवाक्यपालनम् ।
स्वयं विधाता त्वं ब्रह्मज्ञानं गुरुजगद्गुरो ॥१८॥

कर्त्तुं शास्त्रविशेषं च वेदाङ्गं सुमनोहरम् ।
अपूर्वमन्त्रनिकरैः सर्वाभीष्टफलप्रदैः ॥१९॥

स्तोत्रैश्च निकरैर्ध्यानैर्युतं पूजाविधिक्रमैः ।
मन्मन्त्रकवचं स्तोत्रं कृत्वा यत्नेन गोपितम् ॥२०॥

भवन्ति विमुखा येन जनानां तत्करिष्यति ।
सहस्रेषु शतेष्वेको मन्मन्त्रोपासको भवेत् ॥२१॥

त एव जना मन्त्रपूताः चागमिष्यन्ति मत्पदम् ।
अन्यथा च भविष्यन्ति सर्वे गोलोकवासिनः ॥२२॥

निष्फलं भविता सर्वं ब्रह्माण्डं चैव ब्रह्मणः ।
जनाः पञ्चप्रकाराश्च युक्ता स्रष्टुं भवे भवे ॥२३॥

पृथिवीवासिनः केचित् केचित् स्वर्गनिवासिनः ।
तच्छ्रुत्वा जगतां धाता तमुवाच शिवो मुदा ॥२४॥

ब्रह्मणो वचनं श्रुत्वा ज्ञानेशो ज्ञानिनां वरः ।
गङ्गातोयं करे कृत्वा स्वीकारं च चकार ह ॥२५॥

स युक्तं विष्णुमायया मन्त्राद्यैः शास्त्रमुत्तमम् ।
यदसारं करिष्यामि पततां पालनाय च ॥२६॥
गङ्गातोयमुपस्पृश्य मिथ्यां यदि वदेज्जनः ।
स याति कालसूत्रं च यावद्वै ब्रह्मणो वयः ॥२७॥
इत्युक्ते शङ्करे ब्रह्मन् गोलोके सुरसंसदि ।
आविर्बभूव श्रीकृष्णो राधया सहितस्ततः ॥२८॥
पुरो दृष्ट्वा च संहृष्टास्तुष्टुवु पुरुषोत्तमम् ।
परमानन्दपूर्णाश्च चक्रुश्च पुनरुत्सवम् ॥२९॥
कालेन शम्भु र्भगवान् शास्त्रदीपं चकार सः ।
इत्येवं कथितं सर्वं सुगोप्यञ्च सुदुर्लभम् ॥३०॥
एवं सा द्रवरूपा च गङ्गा गोलोकसम्भवा ।
राधाकृष्णाङ्गसम्भूता भुक्तिमुक्तिफलप्रदा ॥३१॥
स्थाने स्थाने स्थापिता सा कृष्णेन परमात्मना ।
कृष्णस्वरूपपरमा सर्वब्रह्माण्डपूजिता ॥३२॥

**विप्रोक्तिः–**

कृष्णस्यैव द्रवोह्येष न रामस्येति संशयः ।
चेज्जल्प्यतेऽज्ञैः शृण्वन्तं जनकं वादरायणे ॥३३॥
एवं कृष्णोऽविशद्रामे पूर्णस्वानन्दविग्रहः ।
पा.लि.प.सं. १६ कृष्णं रामः परं तत्वं वर्णादपि न गोचरः ॥३४॥
नित्यं वृन्दावने रासमाधुरीं कुञ्जमध्यगे ।
आगामिनि द्वापरान्ते कंसादिभिरुपद्रुते ॥३५॥
लोके धर्मस्य रक्षार्थं वसुदेवस्य वेश्मनि ।
प्रादुर्भूय व्रजेन्द्रस्य गोकुले विहरिष्यति ॥३६॥

**विप्रोक्तिः– एवं प्रोक्ता संहितायां शुकेन ।**

रामे कृष्णे चैकताऽसीत्रकेतुं तस्माद्गङ्गा कृष्णरूपा ।
गङ्गा कृष्णरूपाप्यभिज्ञैः पूज्या पुण्या रामरूपापि चेयम् ॥३७॥
इत्येवं ते महाबाहो गङ्गालोकनिवासिनी ।
राधाकृष्णाङ्गसम्भूता प्रोक्ताऽतङ्कप्रणाशिनी ॥३८॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे ब्रह्मद्रवनिरूपणं नाम तृतीयप्रकरणम् ॥३॥**

# अथ चतुर्थ-प्रकरणम्

**विप्रोक्तिः-**

**पुराणे ब्रह्मवैवर्त्ते श्रीकृष्णो वृषभानुजाम् ।**
**प्रोवाच जन्मखण्डे च गङ्गां ब्रह्मद्रवं शृणु ॥१॥**

ब्रह्मणो दर्पभङ्गान्ते वैकुण्ठे त्वीशनृत्यतः ।

**तद्यथा श्रीकृष्णवाक्यम्-**

एकदा मोहिनी सुभ्रुःस्वर्वेश्या चकमे विधिम् ।
अकामस्तां सकामां च नैव प्रत्याददे ह्रिया ॥२॥

सा क्रुद्धा प्रददौ शापमपूज्यस्त्वं भविष्यसि ।
अचिराद्दर्पभङ्गस्ते भविष्यति न संशयः ॥३॥

स दुःखितः सुरज्येष्ठो जगाम निलयं हरेः ।
वृत्तान्तं कथयामास लज्जितः शापकारणम् ॥४॥

आश्वासितस्तु हरिणा स्थितस्तत्राप्यवाङ्मुखः ।
मा खिदस्त्वं महाभाग उपायं करवाण्यहम् ॥५॥
एतस्मिन्नन्तरे कश्चिदाजगाम हरेः पुरः ॥६॥

द्वारपालः शीघ्रागमच्च उवाच नतकन्धरः ।
अन्यब्रह्माण्डाधिपति र्ब्रह्मा दशमुखः स्वयम् ॥७॥

द्वारे तिष्ठन्महाभक्त त्वां द्रष्टुं स्वयमागतः ।
द्वारपालवचः श्रुत्वा स चैवानुमतिं ददौ ॥८॥

द्वारपालाज्ञया ब्रह्मा तुष्टावागत्य भक्तितः ।
स्तोत्रैरतिविचित्रैश्च चतुर्वक्त्राश्रुतैरहो ॥९॥

स्तुत्वोवासाज्ञया विष्णो र्नत्वा तं तु चतुर्मुखम् ।
नारायणो द्वारपालानित्युवाच चतुर्भुजान् ॥१०॥

आगन्तुकमजं वापि प्रवेशयत सादरम् ।
एतस्मिन्नन्तरे तत्र वृन्दावनविनोदिनि ॥११॥

आजगामातिप्रणतो ब्रह्मा शतमुखः स्वयम् ।
देव्यै स्तोत्रैः स तुष्टाव निगूढमतिसुन्दरैः ॥१२॥

स्तुत्वोवाच तयोरग्रे भक्त्या दशमुखाश्रुतैः ।
जगद्विधौ सभायां च तत्र तिष्ठति तत्क्षणे ॥१३॥

पा.लि.प.सं. १२ आजगामातिब्रह्माण्डा धियो ब्रह्मा हरे पुरः ।
सहस्रवदनः श्रीमान् भक्तिनम्रात्मकन्धरः ॥१४॥

स्तुत्वोवास वरै स्तोत्रैः सर्वेषामश्रुतैरहो ।
तं च पप्रच्छ सर्वेषां ब्रह्माण्डानां च ब्रह्मणाम् ॥१५॥

वार्त्ता विषयिणां चैव सुराणां च क्रमेण च ।
चतुर्मुखस्य तां दृष्ट्वा दर्पभङ्गो बभूव ह ॥१६॥

आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः ।
दृष्ट्वा च त्रपया तत्र मृततुल्यं चतुर्मुखम् ॥१७॥

अन्यान्सन्दर्शयामास ब्रह्माण्डस्थान् पितामहान् ।
यावन्ति गात्ररोमाणि सन्ति नारायणस्य हि ॥१८॥

तत्प्रमाणाश्च ब्रह्माण्डा ब्रह्मणः सन्ति सन्ततम् ।
नारायणं प्रणम्याशु जग्मुस्ते स्वालयम्प्रति ॥१९॥

पप्रच्छ प्रणतं विष्णुर्लज्जानम्रं चतुर्मुखम् ।
वद तत्किमिदं दृष्टं स्वप्नवद् भवताऽधुना ॥२०॥

नारायणवचः श्रुत्वा विधिवदुत्तरं ददौ ।
भूत भव्यं भविष्यं वा तव मायासमुद्भवम् ॥२१॥

इत्येवमुक्त्वा स विधिः स्थितः संसदि लज्जया ।
सर्वान्तरात्मा भगवांस्तस्योपायं विनिर्ममे ॥२२॥

एतस्मिन्नन्तरे तत्र शंकरः समुपस्थितः ।
सस्मितो वृषभेन्द्रस्थो विभूतिभूषणः स्वयम् ॥२३॥

व्याघ्रचर्माम्बरधरो नागयज्ञोपवीतकः ।
स्वर्णाकृतिजटाभारमर्द्धचन्द्रं च सन्दधन् ॥२४॥

त्रिशूलपट्टिशकरं विभ्रत्खट्वाङ्गमुत्तमम् ।
सुरत्नसाररचितस्वरयन्त्रं करैर्मुदा ॥२५॥

वाहनादवरुह्याशु भक्तिनम्रात्मकन्धरः ।
प्रणम्य कमलाकान्तं पद्मां चोवाच हर्षितः ॥२६॥

आजग्मुर्मनयः सर्वे सुराः शक्रादयस्तथा
आदित्या वसवो यक्षाः मानवाः सिद्धचारणाः ॥२७॥

पुलकाञ्चितसर्वाङ्गास्तुष्टुवुः पुरुषोत्तमम् ।
प्रणम्य तं शिवं पद्मामूचुरानतकन्धराः ॥२८॥

एतस्मिन्नन्तरे भक्त्या संगीतं शंकरो जगौ ।
कृत्वातीवसुतारं च स्वरंयन्त्रं समन्वित: ।।२९।।

आवयोश्च गुणाख्यानं राससम्बन्धिसुन्दरम् ।
समं च चित्तरागेण मनोमोहनकारणम् ।।३०।।

तदेव श्रुतिमात्रेण मूर्च्छां प्रापुर्विचेतना: ।
बभूवुर्द्रवरूपाश्च मुनय: पुरत: प्रिये ।।३१।।

द्रवरूपा: सुरा: सर्वे विधातृहरिपार्षदा: ।
नारायणश्च लक्ष्मीश्च गायन्नधिशिवं स्वयम् ।।३२।।

पा.लि.प.सं. १२ जलपूर्णं च वैकुण्ठं दृष्ट्वा त्रस्तोहमीश्वरी ।
गत्वा मूर्त्तीविनिर्माय सर्वाश्च तादृशीरिति ।।३३।।

तत्स्वरूपास्तदस्त्राश्च तत्स्ववाहनभूषणा: ।
तत्स्वभावास्तन्मनस्कात्तत्तद्विधेयमानसा: ।।३४।।

स्थानं निर्माय परितो वैकुण्ठस्य चतुर्द्दिशम् ।
तादृशीं तदधिष्ठात्री आजगाम स्वमालयम् ।।३५।।

शरीरजा सुराणां सा बभूव सुरनिम्नगा ।
सहस्रयोजनामध्ये दैर्घ्ये च लक्षयोजना ।।३६।।

नानारत्नकरं दिव्यं तत्तीरं सुमनोहरम् ।
स्वयं देवी च वैकुण्ठे वेष्टयित्वाऽस्ति सन्ततम् ।
तस्या विनाश: प्रलये नास्त्येव हि यथा मम ।।३७।।

वैकुण्ठं ब्रह्मणो लोकं तत: स्वर्गं समागता ।
योजनायुतविस्तीर्णा प्रस्तरे योजना स्मृता ।।३८।।

क्षीरतुल्यजला शश्वत् स्फुरत्तुङ्गतरङ्गिणी,
स्वर्गाद्धेमाद्रिमार्गेण पृथिवीमागता मुदा ।।३९।।

सा धारालकनन्दाख्या लवणोदेन मिश्रिता ।
मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा ।।४०।।

कोटिजन्मार्जितं पापं विविधं पापिनामहो ।
यस्या: संस्पर्शवायोश्च सम्पर्केण विनश्यति ।।४१।।

किं वा न जाने प्राणेशि ! स्पर्शदर्शनयो: फलम् ।
किमुत स्नानजन्यं च कथयामि निरूपणम् ।।४२।।

सर्वतीर्थात्परं पृथ्व्यां पुष्करं परिकीर्त्तितम् ।
वेदोक्तं च तदेवास्याः कलां नार्हति षोडशीम् ।।४३।।

नारायणश्च ब्रह्माणमुवाच कृपया पुनः ।
उत्तिष्ठ गच्छ भद्रन्ते भविष्यति चतुर्मुख ।।४४।।

अत्र स्नात्वाभिशप्तस्त्वं पूतो भव ममाज्ञया ।
शीघ्रं त्वं गच्छतो लोकमालयं मे परात्परम् ।।४५।।

प्रकृत्त्यंशां मङ्गलदां तत्र द्रक्ष्यसि भारतीम् ।
तदा ममाज्ञया ब्रह्मा स्नात्वा च जाह्नवीजले ।।४६।।

शीघ्रं जगाम गोलोकं मां प्रणम्य जगद्गुरुः ।
विधिरागत्य गोलोकं सम्प्राप्य भारतीं सतीम् ।।४७।।

सर्वविद्याधिदेवीं तां मद्वक्त्राब्जविनिर्मिताम् ।
आजगाम ब्रह्मलोकं पुनरेव निजालयम् ।।४८।।

**विप्रोक्तिः—**

एवं कृष्णः प्रियां प्राह गङ्गा ब्रह्मद्रवो यथा ।
वैकुण्ठे प्राकृताण्डानामूर्ध्वगेनावृतात्मके ।।४९।।

वृन्दावने च रहसि गोपीभी रमयन् हरिः ।
मलयाद्रौ गतो राधामादाय व्यहरत्ततः ।।५०।।

अत्रैवाष्टावक्रऋषिं प्रेषयित्वा स्वमन्दिरम् ।
प्रोवाच पूर्ववृत्तान्तं राधामृषिवरस्य वै ।।५१।।

तत्प्रस्तावे च गङ्गाया उद्भवं समुवाच ह ।
सोऽप्यत्र कथितस्त्वेतच्चतुर्भुजगुणाकरः ।।५२।।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे वैकुण्ठे ब्रह्मद्रवनिरूपणं नाम चतुर्थप्रकरणम् ।।४।।**

# अथ पञ्चम-प्रकरणम्

**विप्रोक्तिः–**

यदन्यकल्पभेदेन तच्चाख्यानं ब्रुवामहे।
महाविष्णो र्द्रवो जातो महेशस्यैव नृत्यतः ॥१॥

कैलासे भूभृतां श्रेष्ठे सभायां शंकरस्य च।
प्रार्थयित्वा विधिर्विष्णुं सैवानीता स्वसद्मनि ॥२॥

वक्ष्यमाणेतिहासेन ज्ञातव्यं सर्वमेव हि।
ब्राह्मे प्रीत्या शिवेनोक्तं पार्वत्यै भुक्तिमुक्तिदम् ॥३॥

**पार्वत्युवाच–**

ब्रह्मद्रवीति विख्याता गङ्गा सर्वत्र गीयते।
तत्कथं त्रिदशेशान कथयाशु सविस्तरम् ॥४॥

**शिव उवाच।**

सर्वं भवानि शृणु गोपनीयं वदामि मत्प्राणसमेति सम्यक्।
पुरा सभायां मम देवसङ्घाः शक्रादयोऽष्टौ वसवश्चरुद्राः ॥५॥

एकादशादित्यगणास्तथान्ये साक्षाद्गिरीशः कमलोद्भवोऽपि।
नारायणः सर्वजगन्निवासः सिद्धाश्च साध्या ऋषयश्च मुख्याः ॥६॥

गन्धर्वयक्षोरगसिद्धसङ्घाः नत्वा प्रबद्धाञ्जलयः सकामाः।
तदास्तुवन्तःश्रुतिशेखराणां वाक्यैरनेकैर्बहुशोऽतिभक्त्या ॥७॥

**देवा उचुः–**

त्वं प्रेरकोऽसि जगतामखिलेश साक्षात्
सर्वेश शंकर तवापि कदापि कश्चित्।
स प्रेरको भुवि ततः कृपया त्वमेव
सम्प्रेरयाश्रु नयनस्य विलोकनाय ॥८॥

**महादेव उवाच–**

एवं सम्प्रार्थितो देवैर्बहुशः कृपया स्वहम्।
अकरोत्ताण्डवं दिव्यं सरसम्मोहकं सताम् ॥९॥

**वीणामृदङ्गनिनदघनडिण्डिमनिस्वनैः।**
**अनुकूलै गायनैश्च चारुचंक्रमणैस्तथा ॥१०॥**

**तत्तद्रसानुगुण्यैश्च कटाक्षैर्भ्रूप्रकम्पनैः।**
**विचित्राभिनयेनायं मोहकं परमेशितुः ॥११॥**

ब्रह्मादयोऽपि तद्वीक्ष्य तत्क्षणे विस्मयं गताः ।
अन्येपि रेजिरे तत्र सभायां प्रतिमा इव ॥१२॥

आनन्दमूर्तिरमलः श्रीमन्नारायणोऽपि तत् ।
संवीक्ष्य परमानन्दं द्रवरूपो बभूव ह ॥१३॥

**ब्रह्मोवाच–**

तदा ब्रह्मादयो विष्णुमस्तुवञ्जलरूपिणम् ।
नारायणस्त्वमेवासि सर्वभूतहिते रतः ॥१४॥

परमात्मा स्वयंज्योतिः सिद्धः सात्विकविग्रहः ।
त्वमेव सर्व देवानां श्रेष्ठोसि जगतां पतिः ।
पा.लि.प.सं. २० **त्वमेवासि रमानाथ जलरूपस्त्वमेव हि ॥१५॥**

**ज्ञानविज्ञानरूपस्त्वं जगतां त्वं पितामहः ।**
**त्वत्तः कमलपत्राक्ष नान्यत्पश्यामि दैवतम् ॥१६॥**

जगतां रक्षणायैव त्वमेव जलरूपधृक् ।
तवामृतमिदं रूपं ये स्मरन्त्यनघा जनाः ॥१७॥

स्पृशन्ति ये पतङ्गाद्यास्तेषां मुक्तिः करे स्थिता ।
स्नानं कुर्वन्ति ये मर्त्याः साक्षान्नारायणस्य हि ॥१८॥

एवं स्तुवन्तस्तं देवाः स्नानं चक्रुः शुभोदके ।
कल्पद्रुमप्रसूनैश्च पूजां चक्रुर्यथाविधि ॥१९॥

तदा ब्रह्मा स्वयं विष्णुं प्रार्थयामास भक्तितः ।
अनेनामृतरूपेण लोकं मे पावनं कुरु ॥२०॥

त्वमेव जगतां नाथः सृष्टिकर्त्ता च पालकः ।
संहर्तृरुद्ररूपेण संहर्त्ताऽसि जगत्पते ! ॥२१॥

भवतः सन्निधानेन प्रजानां सृजनं भवेत् ।
न चेत्कथं मया देव जगतां सृजनं भवेत् ॥२२॥

**शिव उवाच–**

सम्प्रार्थितो विधात्रैवं देवो नारायणः स्वयम् ।
महादेवाननं विष्णुः सानुकूलं ददर्श ह ॥२३॥

तदा पशुपतिः साक्षादवादीज्जलरूपिणम् ।
दयानिधे भवान् स्रष्टुः करोत्वद्य मनोरथम् ॥२४॥

नारायण भवान् सृष्टिर्गङ्गायां च यतो मुहुः ।
अलङ्कुरुष्व लोकं तं सृष्टिकर्ता यतो भवेत् ॥२५॥

आज्ञप्तः शम्भुना विष्णुर्जलरूपेण तत्र हि ।
उवास ब्रह्मणो लोके नदीरूपेण पावनः ॥२६॥

एतस्याः सन्निधानेन स भवेत् सृष्टिकारकः ।
तदाप्रभृति चिद्रूपो गङ्गारूपेण माधवः ॥२७॥

ब्रह्मलोकेऽकरोद्वासं सच्चिदानन्दविग्रहः ।
तदाप्रभृति तत्रैव - सर्वेऽमी ब्रह्मवादिनः ॥२८॥

प्रचक्रुर्वासमनिशं ज्ञाननिर्धूतकल्मषाः ।
एवं गिरीशो गिरिजां ब्रह्मद्रवमुवाच ह ॥२९॥

एकमेव परं तत्त्वं निर्गुणं प्रकृतेः परम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥३०॥

स एव द्रवतां यातस्तस्माद्ब्रह्मद्रवः स्मृतः ।

**तद्यथा स्कन्दपुराणे च–**

योऽसौ सर्वगतो विष्णुश्चित्स्वरूपी जनार्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥३१॥

**इति श्री नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे पञ्चमं प्रकरणम् ॥५॥**

# अथ षष्ठ-प्रकरणम्

**विप्रोक्तिः–**

शृणु चान्यन्महाबाहो यद्गौर्यङ्गुलिनिःसृताम्।
प्राह दक्षं विधिर्गङ्गां सहितायां शिवस्य च ॥१॥

पार्श्वे शिरसि भार्ये द्वे वहतीति महेश्वरः।
यदुक्तं निन्दया पूर्वमुत्तरं शृणु तत्र च ॥२॥

पुरा कैलासशिखरे पार्वती परमेश्वरम्।
छादयामास नयने पाणिभ्यां नयनच्छदा ॥३॥

तदा जगदिदं सर्वं तिमिरेण परीवृतम्।
उन्मील्य नयनं पश्चाल्ललाटे परमेश्वरः ॥४॥

प्रकाशयामास जगत् प्रकाशात्मा तमोवृतम्।
सा दृष्ट्वैतदद्भुतं भीतभीता तदा भृशम् ॥५॥

मुमोच पाणी तौ देवो नयनाच्छादकावुभौ।
स्वेदोद्गमस्तदा तत्र महानासीत्कराब्जयोः ॥६॥

स्रोतोभिर्दशभिर्गौर्याः क्षिप्तं तत्स्वेदजं जलम्।
तदिदं क्षणमात्रेण व्यानशे सकलं जगत् ॥७॥

तदा विष्णुमुखा देवा सर्वेऽपि भयकम्पिताः।
अकाण्डे प्रलयः कोऽयमिति चिन्तापरायणाः ॥८॥

महादेवं समाराध्य दृष्ट्वा च परया मुदा।
रक्ष रक्ष महादेव जगदेतच्चराचरम् ॥९॥

अकाण्डप्रलयग्रस्यमानं शम्भो दयानिधे !।
इति स्तुतः सुरैः सर्वैर्लोकसंरक्षणोद्यमैः ॥१०॥

शम्भुस्तेषु दयां कृत्वा तदादाय जलं महत्।
पा.लि.प.सं. २१ जटायां रोम्नि चैकस्मिन् बभार जलविन्दुवत् ॥११॥

दृष्ट्वैतदद्भुतं विष्णुब्रह्मेन्द्राद्याः सुरास्तथा।
प्रणम्य दण्डवच्छम्भुं स्तुत्वा बहुविधैः स्तवैः ॥१२॥

भगवन्पावनी सेयं नदी गौरीकरोद्भवा।
विधृता भवता यस्माज्जटायां परमेश्वर ! ॥१३॥

तद्दर्शनात्स्पर्शनाच्च प्राशनान्मज्जनादपि ।
सर्वेषामपि जन्तूनां सदा पापप्रणाशिनी ॥१४॥

अस्माकमस्या देवेश जलं किञ्चित्प्रयच्छत ।
इति ते ब्रह्मविष्णिवन्द्राः पृथक् शम्भोर्जलं मुदा ॥१५॥

गृहीत्वा स्वेषु लोकेषु कल्पयामास रञ्जसा ।
वैष्णवी प्रथिता लोके विष्णोः सेयं सरिद्वरा ॥१६॥

कमण्डलौ परं तद्वत् ब्रह्मापि यां दधौ सदा ।
आकाशगङ्गा विख्याता स्वर्लोके या व्यवस्थिता ॥१७॥

ततः कालेन महता ब्रह्मलोकस्थितां नदीम् ।
भगीरथप्रयत्नेन नयति स्म क्षितौ यदा ॥१८॥

तदा बभार तां शम्भुः कल्लोलावलिभीषणाम् ।
शोषयामास तां दृप्तां जटायामेव शङ्करः ॥१९॥

पुनस्तां प्रार्थितस्तेन तत्याजेशः सुरापगाम् ।
निर्ययौ सुमहावेगा महदुर्मिसमाकुला ॥२०॥

भागीरथी महीमाप मुक्तमात्रे च शम्भुना ।
सागरांस्तारयामास संसृत्याब्धेरपाकात् ॥२१॥

स्नान्ति तस्यामिदानीं ये गङ्गायां शङ्करसृजि ।
ते मुक्तकिल्विषा मोक्षमाप्नुवन्ति प्रजापते ॥२२॥

। इति गङ्गाधरस्यैतत्पत्नीधारणमीरितम् ।

**विप्रोक्तिः–**

एवं विधिः पुरा प्राह दक्षं ब्राह्मणसत्तमम् ।
संहितायां शंकरस्य गङ्गाया उद्भवो यथा ॥२३॥

**विप्रोक्तिः–**

अथ विष्णुपदी गङ्गा यथा ख्याता तथा शृणु ।
ज्ञातव्या कल्पभेदेन कथेयं पापनाशिनी ॥२४॥[१]

श्रीमद्भागवते प्रोक्ता विष्णुरातं शुकेन या ।
तथा पाद्मोत्तरे खण्डे नारदं शूलिना पुरा ॥२५॥[२]

कलांशांशेन जानीहि यदि किञ्चिद्विशिष्यते ।

कथिता नैमिषारण्ये वायवीये च वायुना ।
त्रिषु चैव पुराणेषु न विशेषोऽस्ति कर्हिचित् ॥२६॥[३]

तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डविवरेणान्तःप्रविष्टाया वा स्वजलधारातच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिर्धीयमानातिमहता कालेन युगसाहस्रलक्षणेन दिवो मूर्द्धन्यवततार यत्तद्विष्णुपदमाहुः ॥१॥

यत्र ह वा व वीरव्रत औत्तानपादिपरमभागवतोस्मत्कुलदेवताचरणारविन्दोदकमिति यामनुसवनमुत्कथ्यमानो भगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कण्ठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलवाष्पकलयाभिव्यज्यमानरोमपुलककुलकोऽधुनापि परमादरेण शिरसा बिभर्त्ति ॥२॥

ततः ऋषयस्तत्प्रभावाभिज्ञा इयं तु तप आत्यन्तिकी सिद्धिरेतावती भगवति सर्वात्मनि वासुदेवेनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिव तां मुमुक्षव इव सबहुमानमद्यापि जटाजूटैरुद्वहन्ति ॥३॥

ततोऽनेकसहस्रकोटिविमानानीकसङ्कुलदेवयानेनावतरन्तीन्दुमण्डलमावार्य ब्रह्मसदने निपतति ॥४॥

तत्र चतुर्विधा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिष्यन्दति नदनदीपतिमेवाभिनिविशति सीतालकनन्दावंक्षुर्भद्रेति ॥५॥

तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटादतिरभसतररंहसा लुठन्ती भारतमभिवर्षं दक्षिणस्यां दिशि जलमभिप्रविशति यस्यां स्नानार्थं पानार्थं वा गच्छतः पुंसः पदे पदेऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति ॥६॥

अन्ये च नदा नद्यश्च वर्षे वर्षे सन्ति बहुशो मेर्वातिगिरिदुहितरः शतशः ॥७॥ तत्रापि भारतमेव कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति ॥८॥

इत्थं तु पञ्चमस्कन्धे बादरायणिनोदितम् ।
श्रीवामनपदाङ्गुष्ठनिर्भिन्नाण्डकटाहके ॥९॥

विवरे तु प्रविष्टाया बाह्यधारासमागता ।
तत्रैवं विचिकित्सा चेज्जलमावरणोद्भवम् ॥१०॥

तत्किमप्राकृतं वारि प्रमाणं तत्र संहिता ।
तज्जलं प्राकृतं नैव किंत्वप्राकृतमेव हि ॥११॥

अन्ततो भगवान्प्राह संहितायां शिवस्य तु ।
श्रुतिभ्यः प्राकृताण्डेऽस्मिन् यथा गङ्गा समागता ॥१२॥
तत्वं शृणु महाभाग ! जाह्नव्यवतरं शुभम् ॥१३॥

**तद्यथा शेष उवाच-**

महर्ल्लोकं क्षितेरुद्धर्वमेककोटिप्रमाणतः।
कोटिद्वयेन विख्यातो जनलोकस्ततः परम्।
चतुःकोटिप्रमाणं तु तपोलोकस्ततः परम् ॥१४॥

उपरिष्टात्ततः सत्यमेककोटिप्रमाणतः।
तदूर्द्धं परिसंख्यात उमालोकः सुनिष्ठितः ॥१५॥

शिवलोकं तदूर्द्धं तु प्रकृत्या वशमागतम्।
एतस्माद्बहिरावर्त्ते सप्तावरणसंज्ञका।
तदूद्धर्वं सर्वतत्वानां कार्यकारणमानिताम् ॥१५॥[क]

निलयं परमं दिव्यं महावैष्णवसंज्ञकम्।
अनन्तयोजनोच्छ्रायमनन्तयोजनायुतम् ॥१६॥

यत्र शेते महाविष्णुर्भगवान् जगदीश्वरः।
सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥१७॥

यन्निमेषाज्जगत्सर्वं लीयते च व्यवस्थितम्।
कारुण्यरूपतो यस्माद्गङ्गा भूगोलतां गता ॥१८॥

**विप्रोक्तिः-**

स्कान्दे चापि शिवेनोक्तं गङ्गामप्राकृतं जलम्।

**शिव उवाच-**

वहिः स्थितं जलं यद्वन्नारिकेलान्तरे स्थितम् ॥१९॥
तथा ब्रह्माण्डवाह्यस्थं परब्रह्माम्बुजाह्नवी।

**विप्रोक्तिः-**

अङ्गुष्ठाग्रक्षताण्डे तु प्रविष्टं जलमव्ययम् ॥२०॥
प्राप्तं देवनदीत्वं च तस्माद्विष्णुपदी स्मृता।
पुराणे ब्रह्मवैवर्त्ते कृष्णः प्राह प्रियामपि ॥२१॥

**कृष्ण उवाच-**

स्वयं देवी च वैकुण्ठं वेष्टयित्वास्ति सन्ततम्।
तस्या विनाशप्रलये नास्त्येव हि यथा मम ॥२२॥

**विप्रोक्तिः-**

यथा विष्णुपदी गङ्गा त्रैलोक्यं व्याप्य तिष्ठति।
तथा तव महाभाग सर्वमेतत्प्रकीर्त्तितम् ॥२३॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे विष्णुपदीवर्णनं नाम सप्तमं प्रकरणम् ॥७॥**

## अथ अष्टमं-प्रकरणम्

**विप्रोक्तिः–**

यथा विष्णुपदी प्रोक्ता तथा कृष्णपदीं शृणु ।
पुराणे ब्रह्मवैवर्त्ते खण्डे प्रकृतिसंज्ञके ॥१॥
प्राह नारायणो देवो देवर्षिं बदरीवने ।

**तद्यथा; नारद उवाच–**

केनोपायेन देवी सा विष्णुपादाब्जसम्भवा ॥२॥
विधे:कमण्डलुस्था च श्रुता सैव शिवप्रिया ।
बभूव सा मुनिश्रेष्ठ ! गङ्गा नारायणप्रिया ॥३॥
अहो केन प्रकारेण तन्मे व्याख्यातुमर्हसि ।

**नारायण उवाच–**

पुरा बभूव गोलोके सा गङ्गा द्रवरूपिणी ॥८॥
राधाकृष्णाङ्गसम्भूता तदंशा तत्स्वरूपिणी ।
द्रवाधिष्ठात्रिदेवी सा रूपेणाप्रतिमा भुवि ॥५॥

नवयौवनसम्पन्ना सर्वाभरणभूषिता ।
शरन्मध्याह्नपद्मा सात्यस्मिता सुमनोहरा ॥६॥

तप्तकाञ्चनवर्णाभा शरच्चन्द्रसमप्रभा ।
स्निग्धप्रभाऽतिसुस्निग्धा शुद्धसत्वस्वरूपिणी ॥७॥

सुपीनकठिनश्रोणीं सुनितम्बं युगाम्बरम् ।
पीनोन्नतं सुकठिनं स्तनयुग्मं सुवर्त्तुलम् ॥८॥

सुचारुनेत्रयुगलं सुकटाक्षं सुचङ्किमम् ।
कंकिमं कबरीभारं मालतीमाल्यसंयुतम् ॥९॥

सिन्दूरविन्दुललितं सार्द्धं चन्दनविन्दुभिः ।
कस्तूरीपत्रिकायुक्तं गण्डयुग्ममनोरमम् ॥१०॥

बन्धूककुसुमाकारं मधुरोष्ठं च सुन्दरम् ।
पक्वदाडिमबीजाभां दन्तपंक्तिसमुज्वलाम् ॥११॥

वाससा वह्निशुद्धे च नीवीयुक्ते च बिभ्रती ।
पा.लि.प.सं. २५ सा सकामा कृष्णपार्श्वे समुवास सुसज्जिता ॥१२॥

वाससा मुखमासाद्य लोचनाभ्यां विभो मुखम् ।
निमेषरहिताभ्यां च पिबन्ती सततं मुदा ॥१३॥

एतस्मिन्नन्तरे तत्र विद्यमाना च राधिका ।
गोपीत्रिंशत्कोटियुक्ता कोटिचन्द्रसमप्रभा ॥१४॥
कोपेन रक्तपद्मास्या रक्तपङ्कजलोचना ।
पीतचम्पकवर्णाभा गजेन्द्रमदगामिनी ॥१५॥
अमूल्यरत्ननिर्माणनानाभूषणभूषिता ।
अमूल्यरत्नरचितममूल्यं वह्निशौचकम् ॥१६॥
पीताभवस्त्रयुगलं नीवीयुक्तं च बिभ्रती ।
स्थलपद्मप्रभामुष्टा कोमलं सुचिरं जितम् ॥१७॥
कृष्णदत्तार्धसंयुक्तं विपश्यन्ती पदाम्बुजम् ।
रत्नेन्द्रसारनिर्माणविमानमवरुह्य च ॥१८॥
सेव्यमाना च सखिभिः श्वेतचामरवायुना ।
कस्तूरीविन्दुभिर्युक्तं चन्दनेन्दुसमन्वितम् ॥१९॥
दीप्तदीपप्रभाकारं सिन्दूरविन्दुसुन्दरम् ।
दधती भालमध्यञ्च समन्ताधः स्थलोज्वलैः ॥२०॥
पारिजातप्रसूनानां माल्ययुक्तं सुवक्रिमम् ।
सुचारुकबरीभारं कम्पयन्ती च कम्पिता ॥२१॥
सुचारुरागसंसक्तमोष्ठं कम्पयती रुषा ।
गत्वोवास कृष्णपार्श्वे रत्नसिंहासने वरे ॥२२॥
सतीनां च समूहैश्च परिपूर्णविभोः सभाः ।
तां च दृष्ट्वा समुत्तस्थौ कृष्णां सादरपूर्वकम् ॥२३॥
सम्भाष्य मधुरालापैः सस्मिताश्च ससम्भ्रमाः ।
प्रणेमुर्मूर्त्तिसंत्रस्ता गोपा नम्रात्मकन्धराः ॥२४॥
तुष्टुवुस्ते च भक्त्या च तुष्टाव परमेश्वरीम् ।
उत्थाय गङ्गा सहसा संभाषं च चकार सा ॥२५॥
कुशलं परिपृच्छन्ती भीतातिविनयेन च ।
नम्रभागस्थिता त्रस्ता शुष्ककण्ठोष्ठतालुका ॥२६॥
ध्यानेन शरणापन्ना श्रीकृष्णचरणाम्बुजे ।
तद्धृत्पद्मस्थितः कृष्णो भीतायै त्वभयं ददौ ॥२७॥
बभूव स्थिरचित्ता सा सर्वेश्वरवरेण च ।
ऊर्ध्वसिंहासनस्थां च राधां गङ्गा ददर्श सा ॥२८॥

सुस्निग्धां सुखदृश्यां च ज्वलन्तीं ब्रह्मतेजसा।
असंख्यब्रह्मणश्चाद्यां चादिसृष्टेः सनातनीम् ॥२९॥

यथा द्वादशवर्षीयां कामिनीं न च यौवनाम्।
विश्ववन्द्यां निरुपमां रूपेण च गुणेन च ॥३०॥

पा.लि.प.सं. २६ शान्तां कान्तामनन्तां तामाद्यन्तरहितां शुभाम्।
सुभद्रां शुभगां शान्तां स्वामिसौभाग्यसंयुताम् ॥३१॥

सौन्दर्यसुन्दरीश्रेष्ठां सर्वासु सुन्दरीषु च।
कृष्णार्द्धाङ्गां कृष्णसमां तेजसा वयसा त्विषा ॥३२॥

पूजितां च महालक्ष्मीं लक्ष्म्या लक्ष्मीश्वरेण च।
प्रच्छाद्यमानां प्रभया सभामीशस्य सुप्रभाम् ॥३३॥

सखिदत्तं भुक्तवन्तीं ताम्बूलमन्यदुर्ल्लभम्।
अजन्यां सर्वजननीं धन्यां मान्यां च मानिनीम् ॥३४॥

कृष्णप्राणाधिदेवीं च मनःप्राणप्रियोत्तमाम्।
दृष्ट्वा राशेश्वरीं तृप्तिं न जगाम सुरेश्वरी ॥३५॥

निमेषरहिताभ्यां च लोचनाभ्यां पपौ च ताम्।
एतस्मिन्नन्तरे राधा जगदीशमुवाच सा ॥३६॥

वाचा मधुरया शान्ता विनीता सस्मितानना।

**राधिकोवाच-**

केयं प्राणेश कल्याणी सस्मिता त्वन्मुखाम्बुजम् ॥३७॥

पश्यन्ती सस्मितं पार्श्वे सकामा वक्रलोचना।
मूर्च्छां प्राप्नोति रूपेण पुलिकांचितविग्रहा ॥३८॥

वस्त्रेण मुखमाच्छाद्य निरीक्षति पुनः पुनः।
त्वं चापि तां संनिरीक्ष्य सकामः सस्मितः सदा ॥३९॥

जीवत्यां मयि गोलोके भूता दुर्वृत्तिरीदृशी।
त्वमेव चैव दुर्वृत्तं वारं वारं करोषि च ॥४०॥

क्षमां करोमि प्रेम्णा च स्त्रीजातिः स्निग्धमानसा।
संगृह्येमां प्रियामिष्टां गोलोकाद् गच्छ लम्पट ! ॥४१॥

अन्यथा न हि ते भद्रं भविष्यति व्रजेश्वर !।
दृष्टस्त्वं विरजायुक्तो मया चन्दनकानने ॥४२॥

क्षमा कृता मया पूर्वं सखीनां वञ्चनादहो।
त्वया मच्छब्दमात्रेण तिरोधानं कृतं पुरा ।।४३।।

देहं संत्यज्य विरजा नदीरूपा बभूव सा।
कोटियोजनविस्तीर्णा ततो दैर्घ्ये चतुर्गुणा ।।४४।।

अद्यापि विद्यमाना सा तव सत्कीर्त्तिरूपिणी।
इत्येवमुक्त्वा सा राधा रक्तपङ्कजलोचना ।।४५।।

गङ्गां वक्तुं समारेभे नम्रास्यां लज्जितां सती।
गङ्गारहस्यं विज्ञाय योगेन सिद्धियोगिनी ।।४६।।

तिरोभूय सभामध्यात् स्वजलं प्रविवेश सा।
राधा योगेन विज्ञाय सर्वत्रावस्थितां च ताम् ।।४७।।

पानं कर्त्तु समारेभे गण्डूषात्सिद्धयोगिनी।
गङ्गारहस्यं विज्ञाय योगेन सिद्धयोगिनी ।।४८।।

श्रीकृष्णचरणाम्भोजे विवेश शरणं ययौ।
गोलोकं सा च वैकुण्ठं ब्रह्मलोकादिकं तथा ।।४९।।

ददर्श राधा सर्वत्र नैव गङ्गां ददर्श सा।
सर्वत्रजलशून्यं च शुष्कपङ्कजगोलकम् ।।५०।।

जलजन्तुसमूहैश्च मृतदेहैः समन्वितम्।
ब्रह्मविष्णुशिवानन्तधर्मेन्द्रेन्दुदिवाकराः ।।५१।।

मनवो मुनयः सर्वे देवाः सिद्धास्तपस्विनः।
गोलोकं च समाजग्मुः शुष्ककण्ठौष्ठतालुकाः ।।५२।।

सर्वे प्रणेमुर्गोविन्दं सर्वेशं प्रकृतेः परम्।
प्रणम्य तुष्टुवुः सर्वे भक्तिनम्रात्मकन्धराः ।।५३।।

सगद्गदाः साश्रुनेत्राः पुलकाञ्चितविग्रहाः।
सर्वे संस्तूय सर्वेशं भगवन्तं परात्परम् ।।५४।।

ज्योतिर्मयं परं ब्रह्म सर्वकारणकारणम्।
प्रहृष्टमानसाः सर्वे जग्मुः परमविस्मयम् ।।५५।।

परस्परं समालोच्य ते समूचुश्चतुर्मुखम्।
निवेदितुं जगन्नाथं साभिप्रायमभीप्सितम् ।।५६।।

ब्रह्मा तद्वचनं श्रुत्वा विष्णुं कृत्वा स्वदक्षिणे ।
वामतो वामदेवं च जगाम कृष्णसन्निधिम् ॥५७॥

परमानन्दयुक्तं च परमानन्दरूपिणम् ।
सैव कृष्णमयं धाता ददर्श रासमण्डलम् ॥५८॥

द्विभुजं मुरलीहस्तं वनमालाविभूषितम् ।
मयूरपुच्छचूडं च कौस्तुभेन विराजितम् ॥५९॥

अतीव कमनीयं च सुन्दरं शान्त विग्रहम् ।
गुणभूषणरूपेण तेजसा वयसा त्विषा ।
वयसा यशसा कीर्त्या मूर्त्या भूषितया समम् ॥६०॥

परिपूर्णतमं सर्वं सर्वैश्वर्यसमन्वितम् ।
ते सेव्यं सेवकं वापि दृष्ट्वा निर्वक्तुमक्षमाः ॥६१॥

क्षणं तेज:स्वरूपं च तत्र देवैः स्थितं क्षणम् ।
निराकारं च साकारं ददर्श द्विविधं क्षणम् ॥६२॥

एकमेव क्षणं कृष्णं राधया रहितं परम् ।
प्रत्येकासनसंस्थं च तया च सहितं क्षणम् ॥६३॥

राधारूपधरं कृष्णं कृष्णरूपकलत्रकम् ।
किं स्त्रीरूपं च पुरुषं विधाता ज्ञातुमक्षमः ॥६४॥

हृत्पद्मस्थं च श्रीकृष्णं कृत्वा ध्यानेन चक्षुषा ।
चकार स्तवनं भक्त्या परिहारमनेकधा ॥६५॥

ततः स्वचक्षुरुन्मील्य पुनश्च तदनुज्ञया ।
ददर्श कृष्णमेकं च राधावक्षस्थलस्थितम् ॥६६॥

स्वपार्षदैः परिवृत्तं गोपीमण्डलमण्डितम् ।
पुनः पुनः प्रणेमुस्तं तुष्टुवुश्च पुनश्च ते ॥६७॥

विज्ञाय तदभिप्रायं तामूचे परमेश्वरः ।
सर्वात्मा स च सर्वज्ञः सर्वेशः सर्वभावनः ॥६८॥

**श्रीभगवानुवाच ।**

पा.लि.प.सं. २८ आगच्छ कुशलं ब्रह्मन्नागच्छ कमलापते ।
इहागच्छ महादेव शश्वत्कुशलमस्तु वः ॥६९॥

आगता:स्थ महाभागा गङ्गानयनकारणात् ।
गङ्गा मच्चरणाम्भोजे भयेन शरणं गता ॥७०॥

राधेमां पातुमिच्छन्ती दृष्ट्वा मत्सन्निधानतः।
दास्यामीमां वहिः कृत्वा यूयं कुरुत निर्भयाम् ॥७१॥
श्रीकृष्णस्य वचः श्रुत्वा सस्मितः कमलोद्भवः।
तुष्टाव राध्यां तां राधां श्रीकृष्णपरिपूजिताम् ॥७२॥
वक्रैश्चतुर्भिः संस्तूय भक्तिनम्रात्मकन्धरः।
धाता चतुर्णां देवानामुवाच चतुराननः ॥७३॥

**ब्रह्मोवाच :–**

गङ्गा त्वदङ्गसम्भूता प्रभोश्च रासमण्डले।
युवयोर्द्रवरूपा सा मुग्धयोः शङ्करस्वरात् ॥७४॥
कृष्णांशा च त्वदंशा च त्वत्कन्यासदृशी प्रिया।
त्वन्मन्त्रग्रहणं कृत्वा करोतु तव पूजनम् ॥७५॥
भविष्यति पतिस्तस्या वैकुण्ठेशश्चतुर्भुजः।
भूगतायाः कलायाश्च लवणोदश्च वार्निधिः ॥७६॥
गोलोकस्था निराधारा सर्वत्रस्था तथाम्बिके।
तदम्बिका त्वं देवेशि सर्वदा सा त्वदात्मजा ॥७७॥
ब्रह्मणो वचनं श्रुत्वा स्वीचकार च सस्मिता।
बहिर्बभूव सा कृष्णपादाङ्गुष्ठनखाग्रतः ॥७८॥
तथैव संवृता शान्ता तस्थौ तेषां च मध्यतः।
उवास तोयादुत्थाय तदधिष्ठात्रिदेवता ॥७९॥
तत्तोयं ब्रह्मणा किंचित् स्थापितं च कमण्डलौ।
किञ्चिद्दधार शिरसि चन्द्रार्द्धं चन्द्रशेखरः ॥८०॥
अथ तं सस्मितः कृष्णो ब्रह्माणं समुवाच सः।
सर्वं कालस्य वृत्तान्तं दुर्बोधमविपश्चितम् ॥८१॥

**श्रीकृष्ण उवाच–**

गृहाण गङ्गां हे ब्रह्मन्! हे विष्णो! हे महेश्वर!।
शृणु कालस्य वृत्तान्तमतो ब्रह्म निशामय ॥८२॥
यूयं च येऽन्ये देवाश्च मुनयो मनवस्तथा।
सिद्धास्तपस्विनश्चैव ये येऽत्रैव समागताः ॥८३॥

एते जीवन्ति गोलोके कालचक्रविवर्जिते ।
जलप्लुतं सर्वविश्वं सागतं प्राकृतं जलम् ॥८४॥

ब्रह्माणो येऽन्य विश्वस्थास्ते च लीनाधुना मयि ।
वैकुण्ठं च विना सर्वे जले पश्य च पद्मज ! ॥८५॥

गत्वा सृष्टिं कुरु पुनर्ब्रह्मंल्लोकादिकं भवम् ।
स्वब्रह्माण्डं विरचय पश्चाद्गंगा प्रयास्यति ॥८६॥

एवमन्येषु विश्वेषु सृष्टा ब्रह्मादिकं पुनः ।
पा.लि.प.सं. २९ करोम्यहं पुनः सृष्टिं गच्छ शीघ्रं सुरैः सह ॥८७॥

मच्चक्षुषो निमेषेण ब्रह्मणः पतनं भवेत् ।
गताः कतिविधास्ते च भविष्यन्ति च वेधसः ॥८८॥

इत्युक्त्वा राधिकानाथो जगन्मातः पुरन्तु ते ।
देवा गत्वा पुनः सृष्टिं चक्रुरेव प्रयत्नतः ॥८९॥

गोलोके च स्थिता गङ्गा वैकुण्ठे शिवलोकके ।
ब्रह्मलोके यथान्यत्र यत्र यत्र पुरस्थिता ॥९०॥

तत्रैव सा गता गङ्गा चाज्ञया परमात्मनः ।
निर्गता कृष्णपादाब्जात् तेन कृष्णपदी स्मृता ॥९१॥

इत्येवं कथितं ब्रह्मन् गङ्गोपाख्यानमुत्तमम् ।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥९२॥

**विप्रोक्तिः–**

एवं कृष्णपदी गङ्गा नरनारायणाश्रमे ।
एतद्गुह्यतमं प्राह नारदं श्रीहरिः स्वयम् ॥९३॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे कृष्णपदीवर्णनं नाम अष्टमप्रकरणम् ॥८॥**

## अथ नवम-प्रकरणम्

**विप्रोक्तिः-**

कैलासे चैव गोलोके विधात्रा विधृता यथा।
समाप्ता ब्रह्मवैवर्त्ते ब्रह्मवाक्यैस्तवोदिता ॥१॥
पुनः पितामहेनैषा धृता गङ्गा कमण्डलौ।
पाद्मे पुराणे विज्ञेयमेतदाख्यानकं शुभम्।
तच्छृणुष्व महाबुद्धे मोक्षैकफलसाधनम् ॥२॥
नारदाय पुरा प्रोक्तं विधिना शत्रुसूदन!।
ब्रह्मलोके पर्यपृच्छन्नारदः पितरं विधिम् ॥३॥

**तद्यथा नारद उवाच-**

किं सृष्टं च त्वया तात! सम्मतं शम्भुकृष्णयोः।
सर्वलोकहितार्थाय स्थाने तत्र समाहितम् ॥४॥
देवी वा देवता का वा सर्वासामुत्तमोत्तमा।
यामासाद्य च देवाश्च दैत्याःमानुषपन्नगाः।
अण्डजा स्वेदजा वृक्षाः ये चान्ये तूद्भिजादयः।
सर्वेषां च शिवं ब्रह्मन् समाश्रित्य भवेद्ध्रुवम् ॥५॥

**ब्रह्मोवाच-**

सृज्यन्तां च मयोक्ता वै पुरा प्रकृतिरूपिणी।
अर्थान् भरस्व लोकानां त्वत्तो भावान्सृजाम्यहम् ॥६॥
एतच्छ्रुत्वा परा सा च सप्तधा समभूत्तदा।
गायत्री वाक् च स्वर्लक्ष्मीः सर्वसस्यवसुप्रदा।
ज्ञानविद्यानुमोदिनी शक्तिबीजा तपस्विनी ॥७॥
स्वर्णदी धर्मबीजा च एताः सप्त प्रकीर्त्तिताः।
षड्भिः प्रकृतिभिर्ब्रह्मन्कृतमेतज्जगत्त्रयम् ॥८॥
धर्मद्रवीस्वरूपा या सर्वधर्मप्रतिष्ठता।
पा.लि.प.सं. ३० महतीं तां समालोक्य मया कमण्डलौ धृता ॥९॥
तस्याः प्रसादतो यज्ञं विततं वेदसंमितम्।
अस्माभिश्च त्रिभिर्युक्ता ब्रह्मविष्णुमहेश्वरैः ॥१०॥
धर्मद्रवी परिख्याता जलरूपा कमण्डलौ।
बलियज्ञेसु संभूता विष्णुना प्रभविष्णुना ॥११॥

छद्मना छलितं पूर्वं बलिं वा त्ववताम्बरः।
त्रिपदव्याजतो लोका हत्वा सत्यमगात्पदम् ॥१२॥
प्रक्षाल्यैवार्चितं पूर्वं हेमकूटे पतज्जलम्।
तत्कूटाद्दुष्करं प्राप्य भ्रमन्ती सा स्थिरा स्थिता ॥१३॥
ततो भगीरथेनैव समाराध्य दिवं प्रति।
वल्कलं च समानीय तपसा गजपुङ्गवम् ॥१४॥
तेन भिन्नो नगो वीर्यात् त्रिभिर्दन्तैः कृताः बिलाः।
ततस्त्रिविलगा यस्मात् त्रिःस्रोता लोकविश्रुता ॥१५॥
हरब्रह्महरेर्योगात्पूता लोकत्रिपावनी।
गङ्गातोयास्थिसंयोगात्सुतानां सगरस्य च ॥१६॥
ते च धाम्नि गताः विष्णोः स्वपूर्वापरजैः सह।
एतदाख्यानकं पुण्यं महापातकनाशनम् ॥१७॥
यः शृणोति नरो भक्त्या विष्णुलोकं स गच्छति।

**विप्रोक्तिः–**

ब्रह्माकमण्डलव्याप्तां पाद्मे प्राप्ता च जाह्नवी ॥१८॥
तथा ब्रह्मपुराणे तु नारदं पूजितो विधिः।
कथयामास वृत्तान्तं विस्तरात्स्नेहयन्त्रितः ॥१९॥
विशेषकल्पभेदांस्तु जानीया ह्यत्र रञ्जन!।

**तद्यथा ब्रह्मोवाच।**

शिवगौरीविवाहे च हिमाचलगृहे पुरा ॥२०॥
सर्वे देवाः समायाताः ऋषयः सिद्धचारणाः।
नृत्यन्त्यप्सरसः सर्वा जगुर्गन्धर्वकिन्नराः ॥२१॥
लाजान् धृत्वापि मैनाको बभूव मुनिसत्तम!।
पुण्याहवाचनं वृत्तमन्तर्वेश्मनि नारद! ॥२२॥
वेदिकायामुपाविष्टौ दम्पती सुरसत्तमौ।
प्रक्षिप्य चाग्निं विधिवन्मया चैव तु पुत्रक! ॥२३॥
हुत्वा लाजांश्च विधिवत्प्रदक्षिणमथाकरोत्।
अश्मनः स्पर्शहेतोश्च तस्याङ्गुष्ठं करेऽस्पृशत् ॥२४॥

विष्णुना प्रेरितः शम्भुर्दक्षिणस्य पदस्य च।
दद‍र्श तमहं तत्र होमं कुर्वन् हरान्तिके ॥२५॥

दृष्टेऽङ्गुष्ठे दुष्टबुद्ध्या वीर्यं मुस्राव मे तदा।
विडंबितो हि कामेन न कोऽस्मिन्भुवनत्रये ॥२६॥

लज्जया कलुषीभूतस्कन्त्रं वीर्यमचूर्णयत्।
मद्वीर्याच्चूर्णिता सूक्ष्मा बालखिल्यास्तु जज्ञिरे ॥२७॥

पा.लि.प.सं. ३१ ततो महानभूत्तत्र हाहाकारः सुरोदितः।
लज्जया परिभूतोऽहं निर्गतस्तु तदासनात् ॥२८॥

पश्यत्सु सर्वदेवेषु तूष्णींम्भूतेषु नारद!।
गच्छन्तं मां महादेवो दृष्ट्वा नन्दिनमब्रवीत् ॥२९॥

ब्रह्माणमाह्वयस्वेह गतपापं करोम्यहम्।
कृतापराधेऽपि जने सन्तः सुकृतमानसाः ॥३०॥

मोहयन्त्यपि विद्वांसो विषयाणामियं स्थितिः।
एवमुक्त्वा स भगवानुमया सहितः शिवः ॥३१॥

ममानुकम्पया चैव लोकानां हितकाम्यया।
तावच्चकार लोकेशः शृणु नारद! यत्नतः ॥३२॥

पापिनां पापमोक्षाय भूमिरापो भवेदिह।
तयोश्च सारसर्वस्वमाहरिष्यामि पावनम् ॥३३॥

एवं निश्चित्य भगवान् तयोः सारं समाहरन्।
भौमं कमण्डलुं कृत्वा तत्रापः सन्निवेश्य च ॥३४॥

पावमान्यादिभिः सूक्तैरभिमन्त्र्य च यत्नतः।
त्रिजगत्पावनीं शक्तिं तत्र सस्मार तापहाम् ॥३५॥

मामुवाच स लोकेशो ह्यतज्ज्ञो ज्ञसनातनः।
अत्र भुक्तिश्च मुक्तिश्च स्थावरं जङ्गमं च यत् ॥३६॥

श्रवणान्मानसं पापं वन्दनाद्वाचिकं तथा।
स्नानपानाभिषेकाच्च किं न नश्यति कायिकम् ॥३७॥

एतदेवामृतं लोके नैतस्मात्पावनं परम्।
मयाभिमन्त्रितं ब्रह्मन् गृहाणेमं कमण्डलुम् ॥३८॥

अत्रत्यं वारि यः कश्चित् स्मरेदपि पिबेद्यदि ।
स सर्वकामम्भाप्नोति गृहाणेमं कमण्डलुम् ॥३९॥

भूतेभ्यश्चापि पञ्चभ्यः आपोभूतं महोदयम् ।
आसामुत्कृष्टमेतत्स्यात् गृहाणेमं कमण्डलुम् ॥४०॥

अक्षयद्वारिशोभिष्टं पुण्यपावनमेव च ।
स्पृष्ट्वा स्मृत्वा च दृष्ट्वा च ब्रह्मन्पापाच्च मुच्यते ॥४१॥

एवमुक्त्वा महादेवः प्रत्यदान्मे कमण्डलुम् ।
ततः सुरगणाः सर्वे भक्त्या प्रोचुः सुरेश्वरम् ॥४२॥

आह्लादश्च महांस्तत्र जयशब्दो व्यवर्धत ॥४३॥

देवोत्सवे मातुरजो यदाङ्घ्रिं समीक्ष्य पापात्पतितत्वमाप ।
प्रादात् कृपालुः स्मरणात्पवित्रीं गङ्गामहो पुण्यकमण्डलुस्थाम् ।
एतस्मिन्नन्तरे तत्र पदं प्रागात्सुरार्चितम् ॥४४॥

द्वितीयं तु पदं विष्णोः पितुर्मम महामते ! ।
तत्पदं समनुप्राप्तं दृष्ट्वा कृत्येष्वचिन्तयन् ॥४५॥

किं कृतं यच्छुभं मेऽस्मात्पदं विष्णोः समागतम् ।
पा.लि.प.सं. ३२ सर्वस्वं च समालोक्य यच्छ्रेष्ठं स्यात्कमण्डलौ ॥४६॥

यद्वारि यत्पुण्यतमं दत्तं च त्रिपुरारिणा ।
वरं वरेण्यं वरदं शान्तं शान्तिकरं परम् ॥४७॥

शुभं शुभतरं नित्यं भुक्ति-मुक्ति-प्रदायकम् ।
मातृ-स्वरूपं लोकानाममृतं भेषजं शुचि ॥४८॥

पवित्रं पावनं पूज्यं ज्येष्ठं श्रेष्ठं शुभावहम् ।
स्मरणादेव लोकानां पावनं किन्नु दर्शनात् ॥४९॥

तादृग्वारि शुचिर्भूत्वा कल्पयार्घ्याय मे पितुः ।
इति सञ्चिन्त्य तद्वारि गृहीत्वार्घ्याय कल्पितम् ॥५०॥

विष्णोः पदे तु पतितमर्घ्यं वारि सुमन्त्रितम् ।
तद्वारि पतितं मेरौ चतुर्द्धा व्यगमद्भुवम् ॥५१॥

पूर्वं च दक्षिणं चैव पश्चिमं चोत्तरं तथा ।
दक्षिणे यन्निपतितं जटाभिः शङ्करो मुने ॥५२॥

जग्राह पश्चिमे यत्तु पुनः प्रायात्कमण्डलुम् ।
उत्तरे पतितं चैव विष्णु र्जग्राह तज्जलम् ।।५३।।

पूर्वस्मिन्नृषयो देवाः पितरो लोकपालकाः ।
जगृहुः शुभदं वारि तस्माच्छ्रेष्ठत्वमागतम् ।।५४।।

प्रदक्षिणादिसंप्राप्ता आपस्त्रैलोक्यमातरः ।
महेश्वरजटाग्रस्था एवंजाताः शुभोदयाः ।।५५।।

तासां प्रभावं संस्मृत्य सर्वान्कामानवाप्नुयात् ।

**विप्र उवाच–**

इत्येवं विधिना पूर्वमुक्तं यन्नारदाय च ।।५६।।

तदेवाख्यानकं पुण्यं तवास्माभिरुदीरितम् ।
सुखदं मोक्षदं सारं सर्वाभीष्टप्रदायकम् ।।५७।।

**विप्रोक्तिः–**

वायवीये पुराणे च यो विशेषः स कीर्त्यते ।
सत्यलोकात्पपातैषा मेरुमूर्ध्नि चतुर्दिशम् ।।५८।।

सीता चालकनन्दा च चक्षुर्भद्रेति पावनैः ।
चतुर्भिर्नामभिर्याता चतुर्दिक्षु महोदधिम् ।।५९।।

स्थिता या ब्रह्मणः पात्रे चरणस्य मधुद्विषः ।
क्षालनाय पदो योगात् सैवागान्मेरुमूर्द्धनि ।।६०।।

द्वयोः पुराणयोरैक्यमेवं ज्ञेयं विचक्षणैः ।।६१।।

**इति नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे ब्रह्मकमण्डली नाम नवमप्रकरणं समाप्तम् ।।९।।**

## अथ दशमं-प्रकरणम्

अथेयं जाह्नवी चोक्ता यथा भागीरथी स्मृता।
यथा पशुपतेः स्वच्छजटाजूटविहारिणी ॥१॥
श्रूयतां तन्महाबाहो मोक्षैकफलसाधनम् ॥२॥

भगीरथस्य राजर्षेर्जन्मकर्म शृणुष्व नः।
समुद्रपूरणार्थाय गङ्गावतरणं भुवि ॥३॥

ब्रह्मब्रह्माण्डपाद्मानांभारतारण्यपर्वणः।
आर्षरामायणीयं यदाख्यानं वर्णयामहे ॥४॥

यच्छ्रुत्वा त्रिविधैः पापैः वाङ्मनःकायसम्भवैः।
मुच्यते श्रद्धया मर्त्यः संलभेद्वाञ्छितं फलम् ॥५॥

लोमशेन यदाख्यातं धर्मपुत्राय धीमते।
तत्तुभ्यं कथयिष्यामः सावधानतया शृणु ॥६॥

**तद्यथा भारते-लोमश उवाच-**

कालेया दितिजाः पूर्वमबाधन्त ऋषीन् सुरान्।
समुद्रं शरणं कृत्वा दैतेयास्ते महाबलाः ॥७॥

तदा देवर्षयः सर्वे दितिजेभ्योऽतिदुःखिताः।
समुद्रशोषणार्थाय ह्यगस्तिं शरणं ययुः ॥८॥

समुद्रं स समासाद्य वारुणिर्भगवानृषिः।
उवाच सहितान्देवानृषींश्चैव समागतान् ॥९॥

अहं लोकहितार्थे वै पिबामि वरुणालयम्।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥१०॥

एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः।
समुद्रमपिबत् क्रुद्धः सर्वलोकस्य पश्यतः ॥११॥

पीयमानं समुद्रन्तं दृष्ट्वा सेन्द्रास्तदामराः।
विस्मयं परमं जग्मुः स्तुतिनम्रा अपूजयन् ॥१२॥

पा.लि.प.सं. ३३ सम्पूज्यमानस्त्रिदशैर्महात्मा गन्धर्वतूर्येषु नदत्सु सर्वैः।
दिव्यैश्च पुष्पैरवकीर्यमाणो महार्णवं निःसलिलं चकार ॥१३॥

दृष्ट्वा कृतं निःसलिलं महार्णवं सुराः समस्ताः परमप्रहृष्टाः।
प्रगृह्य दिव्यानि वरायुधानि तान् दानवान् जघ्नुरदीनसत्वाः ॥१४॥

निहतान् दानवान् दृष्ट्वा त्रिदशा मुनिपुङ्गवम् ।
तुष्टुवुर्विविधैर्वाक्यैरिदं वचनमब्रुवन् ॥१५॥
त्वत्प्रसादान्महाबाहो ! लोकैः प्राप्तं महत्सुखम् ॥१६॥

त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ।
पूरयस्व महाबाहो ! समुद्रं लोकभावन ॥१७॥
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥१८॥

एवमुक्तः प्रत्युवाच भगवान्मुनिपुङ्गवः ।
जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यताम् ॥१९॥

पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ।
एतच्छ्रुत्वा तु वचनं महर्षे र्भावितात्मनः ॥२०॥

विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः ।
परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ॥२१॥

प्रजाः सर्वाः महाराज विप्रजग्मुर्यथागतम् ।
पा.लि.प.सं. ३४ त्रिदशा विष्णुना सार्द्धमुपजग्मुः पितामहम् ॥२२॥

पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः ।
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥२३॥

तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
गच्छध्वं विबुधाः सर्वे यथा कामं यथेऽप्सितम् ॥२४॥

महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ।
ज्ञातीन् वै कारणं कृत्वा महाराज्ञो भगीरथात् ॥२५॥

पितामहवचः श्रुत्वा सर्वे विबुधसत्तमाः ।
कालयोगं प्रतीच्छन्तो जग्मुश्चापि यथागतम् ॥२६॥

**युधिष्ठिर उवाच-**

कथं वै ज्ञायते ब्रह्मन् कारणं चात्र किं मुने ! ।
कथं समुद्रः पूर्णश्च भगीरथप्रतिश्रयात् ॥२७॥

**लोमश उवाच-**

इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्वबलोपेतः सत्ययुक्तः प्रतापवान् ॥२८॥

स हैहयान् समुत्साद्य तालजङ्घांश्च भारत ! ।
वशे कृत्वा च राजन्यान्स्वराज्यमन्वशासत ॥२९॥

तस्य भार्येत्वभवतां रूपयौवनदर्पिते ।
विदर्भदुहिता राजन् केशिनी नाम नामतः ॥३०॥

ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥३१॥
द्वितीया सगरस्यासीत् पत्नी सुमतिसंज्ञिता ॥३२॥

स पुत्रकामो नृपतिस्तपतिस्म महत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥३३॥

**विप्र उवाच–**

भृगुमाराधयामास नृपः प्रस्रवणे गिरौ ।
एतदस्ति महाबाहो ! चार्षरामायणेऽधिकम् ॥३४॥

**पुनः भारते च, लोमश उवाच–**

स तप्यमानः सुमहत्तपो योगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्द्दनम् ॥३५॥

शंकरं भवमीशानं पिनाकिं शूलपाणिनम् ।
अन्तकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥३६॥

स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थे समयाचत ॥३७॥
तं प्रीतिमान् हरः प्राह सभार्यं नृपसत्तमम् ॥३८॥

षष्टिः पुत्रसहस्राणि शूराः परमदर्पिताः ।
एकस्यां सम्भविष्यन्ति पत्न्यां नरवरोत्तम ॥३९॥

ते चैव सर्वे सहिता क्षयं यास्यन्ति पार्थिव ! ।
एको वंशधरः शूरः एकस्यां सम्भविष्यति ॥४०॥

एवमुक्तस्तु तं रुद्रस्तत्रैवान्तरधीयत ।
पा.लि.प.सं. ३५ स चापि सगरो राजा जगाम स्वं निवेशनम् ॥४१॥

पत्नीभ्यां सहितस्तत्र सोऽतिहृष्टमना तदा ।
तस्य ते मनुजश्रेष्ठ भार्ये कमललोचने ॥४२॥

वैदर्भी चैव शैव्या च गर्भिण्यौ सम्बभूवतुः ।
ततः कालेन वैदर्भी गर्भालाम्बु व्यजायत ॥४३॥

शैव्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ।
तदा लाम्बु समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ॥४४॥

अथान्तरिक्षाच्छुश्राव वाचं गम्भीरनिःस्वनाम्।
राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि ॥४५॥

अलाम्बुमध्यान्निष्कृष्य बीजं यत्नेन गोप्यताम्।
सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागसः ॥४६॥

ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि भारत!।
महादेवेन दिष्टं ते पुत्रजन्म नराधिप ॥४७॥

अनेन क्रमयोगेन मा ते बुद्धिरतोन्यथा।
एतच्छ्रुत्वान्तरिक्षाच्च स राजा नरसत्तम ॥४८॥

यथोक्तं तच्चकाराथ श्रद्दधद् भरतर्षभ!।
एकैकशस्ततः कृत्वा बीजं बीजं नराधिपः ॥४९॥

घृतपूर्णेषु कुम्भेषु तान्भागान् विदधे ततः।
धात्रीस्त्वैकैकशः प्रादात् पुत्ररक्षणतत्परः ॥५०॥

ततः कालेन महता समुत्तस्थुर्महाबलाः।
षष्ठिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ॥५१॥

रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव!।
ते सर्वे क्रूरकर्माण आकाशपरिसर्पिणः ॥५२॥

बहुत्त्वाच्चावमानन्तः सर्वलोकान् सहामरान्।
त्रिदशांश्चापि धावन्तः तथा गन्धर्वराक्षसान् ॥५३॥

सर्वाणि चैव भूतानि शूराः समरशालिनः।
वध्यमानास्ततो लोकास्सागरैर्मन्दबुद्धिभिः ॥५४॥

ब्रह्माणं शरणं जग्मुस्सहिताः सर्वदैवतैः।
तानुवाच महाभागः सर्वलोकपितामहः ॥५५॥

गच्छध्वं त्रिदशाः सर्वे लोकैः सार्द्धं यथागतम्।
नातिदीर्घेण कालेन सागराणां च यो महान् ॥
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥५६॥

एवमुक्तास्तु ते देवा लोकाश्च मनुजेश्वर!
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥५७॥

ततः काले बहुतिथे व्यतीते भरतर्षभ!।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ॥५८॥

**तद्यथा रामायणे श्रीरामं प्रति विश्वामित्रवाक्यम्–**

शंकरश्वसुरो नाम्ना हिमवानिति विश्रुतः।
विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ॥५९॥

तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम!
पा.लि.प.सं. ३६ तस्याश्वो व्यचरद्भूमिं पुत्रैः स परिरक्षितः ॥६०॥

समुद्रं स समासाद्य निस्तोयं भीमदर्शनम्।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥६१॥

तस्य पर्वणि तं यज्ञं यजमानस्य वासवः।
राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत् ॥६२॥
स चाश्वं यज्ञियं नीत्वा बबन्ध कपिलाश्रमे।

**तद्यथा; भारते च युधिष्ठिरं प्रति लोमशवाक्यम्–**

ततस्ते सागरास्तात हतं मत्वा हयोत्तमम् ॥६३॥

आगम्य पितुराचक्षुरदृश्यन्तुरगं हतम्।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥६४॥

श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥६५॥

अनागमाय गच्छध्वं भूयो मार्गत वाजिनम्।
यज्ञियं तं विना त्वश्वं नागन्तव्यं हि पुत्रकाः ॥६६॥

प्रतिगृह्य तु सन्देशं पितुस्ते सगरात्मजाः।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥६७॥

अथापश्यन्त ते वीराः पृथिवीमवदारिताम्।
समासाद्य विलं तच्चाप्यखनन् सगरात्मजाः ॥६८॥

एवं हि खनतां तेषां समुद्रं वरुणालयम्।
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत ॥६९॥

**तद्यथा; रामायणे श्रीरामं प्रति विश्वामित्रः- ।**

खन्यमाने ततस्तस्मिन् ददृशुः पर्वतोपमम् ॥७०॥

दिशां गजं विरूपाक्षं धारयन्तं महीतलम्।
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ॥
यदा पर्वणि काकुस्थ विश्रमार्थं महागजः ॥७१॥

खेदाच्चालयते शीघ्रं भूमिकम्पस्तदा भवेत्।
ते तं प्रदक्षिणं कृत्वा दिशां पालं महागजम् ॥७२॥
मानयन्तो हि ते राम जग्मुर्भित्वा रसातलम्।
ततः पूर्वां दिशं भित्वा दक्षिणां विभिदुः पुनः ॥७३॥
दक्षिणस्यामपि दिशि ददृशुस्ते महागजम्।
महापद्मं महात्मानं सुमहत्पर्वतोपमम् ॥७४॥
शिरसा धारयन्तं गां विस्मयं जग्मुरुत्तमम्।
ततः प्रदक्षिणं कृत्वा सागरस्य महात्मनः ॥७५॥
षष्ठिपुत्रसहस्राणि पश्चिमां विभिदुर्दिशम्।
पश्चिमायामपि दिशि महान्तमचलोपमम् ॥७६॥
दिशां गजं सौमनसं ददृशुस्ते महाबलाः।
ते तु प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ॥७७॥
पा.लि.प.सं. ३७ खनन्तः समुपाक्रान्ता दिशं सोमवतीं तदा।
उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डुरम् ॥७८॥
भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम्।
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् ॥७९॥
षष्ठिपुत्रसहस्राणि विभिदुर्वसुधातलम्।

**तद्यथा भारते च युधिष्ठिरं प्रति लोमशवाक्यम्–**

ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ॥८०॥
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः।
अपश्यन्त हयं तत्र विचरन्तं महीतले ॥८१॥
कपिलं च महात्मानं तेजोराशिमनुत्तमम्।
तेजसा दीप्यमानं तु ज्वालाभिरिव पावकम् ॥८२॥
ते तं दृष्ट्वा हयं राजन् संप्रहृष्टतनूरुहाः।
अनादृत्य महात्मानं कपिलं कालचोदिताः ॥८३॥
संक्रुद्धाः संप्रधावन्त अश्वग्रहणकाङ्क्षिणः।
ततः क्रुद्धो महाराज! कपिलो मुनिसत्तमः ॥८४॥
वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवम्।
स चक्षुर्विकृतिं कृत्वा तेजस्तेषु समुत्सृजन् ॥८५॥

ददाह स महातेजा मन्दबुद्धीन्ससागरान्।
तान् दृष्ट्वा भस्मसाद्भूतान् नारदः सुमहातपाः ॥८६॥
सगरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत्।
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ॥८७॥
मुहूर्त्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत्।
अंशुमन्तं समाहूय असमञ्जसुतं तदा ॥८८॥
पौत्रं भरतशार्दूल! इदं वचनमब्रवीत्।
षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम् ॥८९॥
कापिलं तेज आसाद्य मत्कृते निधनं गताः।
तव चापि पिता तात परित्यक्तो मयानघ! ॥९०॥
धर्मं संरक्षमाणेन पौराणां हितमिच्छता।
पितुश्च ते तत्त्यागेन पुत्राणां निधनेन च ॥९१॥
अलाभेन तथाश्वस्य परितप्यामि पुत्रक!।
तस्माद्दुःखाभिसन्तप्तं यज्ञविघ्नाच्च मोहितम् ॥९२॥
हयस्यानयनात्पौत्र नरकान्मां समुद्धर।
अंशुमानेवमुक्तस्तु सगरेण महात्मना ॥९३॥
जगाम दुःखान्तरेण यत्र वै दारिता मही।
स च तेनैव मार्गेण समुद्रं प्रविवेश ह ॥९४॥
अपश्यच्च महात्मानं कपिलं तुरगं च तम्।

**तद्यथा रामायणे च श्रीरामं विश्वामित्रः—**

भस्मराशिकृता यत्र पितरस्तत्र सागराः ॥९५॥
स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा।
चुक्रोश परमार्त्तस्तु वधात्तेषां सुदुःखितः ॥९६॥
स तेषां राजपुत्राणां कर्त्तुकामो जलक्रियाम्।
स जलार्थी महाराज न चापश्यज्जलाशयम् ॥९७॥
विस्तार्य निपुणां दृष्टिं ततो पश्यत्खगाधिपम्।
पितृणां मातुलं राम सुपर्णमचलोपमम् ॥९८॥
स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः।
मा शुचः पुरुषव्याघ्र! वधोऽयं लोकसम्मतः ॥९९॥

कपिलेनाप्रमेयेण दग्धा होमे महाबला: ।
सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ।।१००।।
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ !
तस्यां कुरु महाबाहो पितॄणां सलिलक्रियाम् ।।१०१।।
भस्मराशिकृतानेतान् प्लावयेल्लोकपावनी ।
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ।।१०२।।
षष्ठिपुत्रसहस्राणि स्वर्गलोकं नयिष्यति ।
गच्छ चाश्वं महाभाग संगृह्य पुरुषर्षभ ।।१०३।।
यज्ञं पैतामहं वीर संवर्त्तयितुमर्हसि ।

**तद्यथा महाभारते च युधिष्ठिरं लोमशवाक्यम्–**

स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ।।१०४।।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ।
तत: प्रीतो महाराज कपिलोऽशुमतोऽभवत् ।।१०५।।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ।
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।।१०६।।
द्वितीयं च वरं वव्रे पितॄणां पावनेच्छया ।
तमुवाच महातेजा: कपिलो मुनिपुङ्गव: ।।१०७।।
ददामि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ।
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।।१०८।।
त्वया कृतार्थ: सगर: पुत्रवांश्च त्वया पिता ।
तव चैव प्रयत्नेन स्वर्गं यास्यन्ति सागरा: ।।१०९।।
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ।।११०।।
हयं त्रायस्व भद्रन्ते यज्ञियं नरपुंगव ।
यज्ञ: समाप्यतां तात सगरस्य महात्मन: ।।१११।।
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मन: ।।११२।।
सोऽभिवाद्य तत: पादौ सगरस्य महात्मन: ।
तेनाश्रुकलयाघ्रातस्तस्मै सर्वमवेदयत् ।।११३।।

यथादृष्टं श्रुतं चापि सागराणां क्षयं तथा।
यत्तस्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥११४॥

पा.लि.प.सं. ३९ तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत्।
अंशुमंतं च सम्पूज्य समापयत तं क्रतुम् ॥११५॥

समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥११६॥

प्रशास्य तु चिरं कालं राज्यं राजीवलोचनः।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥११७॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे सगरयज्ञोपाख्याने वर्णवर्णना नाम दशमप्रकरणम् ॥१०॥**

## अथ एकादश-प्रकरणम्

**लोमश उवाच–**

अथांशुमांश्च धर्मात्मा महीं सागरमेखलाम्।
प्रशशास महाराज यथा तस्य पितामहः ॥१॥

तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित्।
तस्मै राज्यं समाधाय अंशुमानिति संस्थितः ॥२॥

हिमवच्छिखरे रम्ये तपस्तेपे सुदारुणम्।
स त्रिंशच्छतसाहस्र्यं वर्षाणि सुमहायशाः ॥३॥

तपोवनगतो राजा स्वर्गं लेभे तपोधनः।
दिलीपस्तु ततः श्रुत्वा पितृणां निधनं महत् ॥४॥

पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत्।
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ॥५॥

न चावतारयामास चेष्टमानो यथाबलम्।
त्रिशंद्वर्षसहस्राणि राजा राज्यमकारयत् ॥६॥

**तद्यथा ब्रह्मपुराणे सूतवाक्यं शौनकं प्रति–**

तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः।
नाम्ना भगीरथो धीरः सत्यवादी जितेन्द्रियः ॥७॥

रणे जित्वा रिपून्सर्वान्सर्वलोकांश्च पालयन्।
अश्वमेधं ततस्सोऽपि कर्तुं चक्रे महामनाः ॥८॥

निगमागमतत्वज्ञं सर्वेषां हितकारिणम् ।
सत्यवाचं शुचिष्मन्तं प्रतिहर्त्तारमापदाम् ।।९।।

पुरोहितं मुनिश्रेष्ठं वसिष्ठं च ऋषिं तथा ।
अन्यानपि बहून् विप्रान् वेदवेदाङ्गपारगान् ।।१०।।

समाहूय यथान्यायं समभ्यर्च्याथ भक्तिमान् ।
चिकीर्षितं तदा वक्तुं सोत्साहमुपचक्रमे ।।११।।

एतस्मिन्नन्तरे राजा दग्धानां मुनिशापतः ।
पितॄणां दुर्गतिं श्रुत्वा तप्यमानस्ततोऽभवत् ।।१२।।

निक्षिप्य कर्णयोर्हस्तौ शोकसंविग्नमानसः ।
अश्रुपूर्णेक्षणो दीनः सगद्गदरवोऽभवत् ।।१३।।

धिंग्राज्यं मम शौर्यं च चतुरङ्गबलं पुनः ।
धनानि च शरीरं च पुत्रदारादिकं तथा ।।१४।।

भानुवंशसमुत्पन्नाः भानुवंशप्रकाशकाः ।
पा.लि.प.सं. ४० तेजसा सर्वशत्रून्मे रणे जित्वार्थसम्पदः ।।१५।।

धार्मिकाः सत्यशीलाश्च पितरो मे दृढव्रताः ।
दानवीरा दयावीरा रणधीरा विचक्षणाः ।।१६।।

मुनिशापेन निर्दग्धाः न गृह्णन्त्युदकाञ्जलिम् ।
न श्राद्धं नो हविष्यं च भुञ्जन्ते शापपीडिताः ।।१७।।

दुरवस्थामुपगता पितृदेवे तु कः पुनः ।
सिंहासने कथं तिष्ठेच्छोभितश्छत्रचामरैः ।।१८।।

तृणाय मन्ये राज्यं च प्राणानि च धनानि च ।
सर्वं त्यक्त्वा वने वासः श्रेयसे नः प्रतीयते ।।१९।।

साधयामि पितृमुक्तिकारणं यत्नतोऽहमथवा द्वयं पुनः ।
पातयामि तृणवद्धुताशने पापशोकनिलयं कलेवरम् ।।२०।।

तरणिरुचिरकीर्त्तिर्धर्ममूर्त्तिर्जितार्त्तिः
सकलनिगमवेत्ता सद्गुणानां समुद्रः ।
सकलभुवनभारं सारहीनं विलोक्य
स्वयमपि निजगेहात्प्रस्थितो धर्मसेतुः ।।२१।।

ततो मन्त्रिवरैर्विप्रैः सर्वैः पौरजनैर्वृतः ।
सम्प्रार्थितोऽपि बहुशो नाददे तद्वचस्तदा ।।२२।।

राज्यं संस्थाप्य सकलं मन्त्रिषु स्वयमेककः ।
दुःसाध्यं च तपः कर्त्तुं जगाम गहनं वनम् ॥२३॥
कथं साध्यमिदं कार्यं वक्तुं श्रोतुं च दुर्द्धरम् ।
साधयामि कथं हन्त तेषां मुक्तिर्भवेत् कथम् ॥२४॥
क्वाहं मनुष्यो गङ्गा क्व तपः कार्यं मया कथम् ?
सर्वं दुःसाध्यमेवास्ति देहपात इतो चिरम् ॥२५॥
एवं चिन्ताकुले तस्मिन् धार्मिके चक्रवर्त्तिनि ।
अमानवीं तदा वाचं शुश्रावामृतवर्षिणीम् ॥२६॥
भगीरथ महाभाग चिन्तां मा कुरु सर्वथा ।
ब्रह्मलोकनिवासिन्या पितॄंस्तर्पय गङ्गया ॥२७॥
सद्यस्ते पितरो मुक्तिमाप्नुवन्ति न संशयः ।
त्वमेवेदं महाभाग कर्त्तुं योग्योऽसि केवलम् ॥२८॥
अतस्त्वं सर्वथा शीघ्रं यत्नं कुरु भगीरथ ! ।
त्वमेव वंशतिलकस्तवकीर्त्तिर्भविष्यति ॥२९॥
श्रुत्वैवं देववाणीं तां निश्चितात्मा बभूव ह ।
तत्र प्रशस्तं विजनं स जलाय समाप सः ॥३०॥
नात्युच्छ्रिते नाति नीचे सन्तिष्ठन्नासने स्थिरे ।
वध्वा जटां वल्कलेन तापसानां सुखावहे ॥३१॥
तीर्थेन सम्यगाचम्य स पवित्रो दृढव्रतः ।
गणनाथं समभ्यर्च्य सर्वान्देवानसौ पुनः ॥३२॥
विष्णुं रुद्रं चतुर्वक्त्रं भास्करं कुलदैवतम् ।
तमभ्यर्च्य तदा सम्यक् प्राणायामांश्चकार ह ॥३३॥
पा.लि.प.सं. ४१ नासाग्रन्यस्तनयनो विवृतास्यपुटस्तदा ।
ऊरो विष्टम्भनं कृत्वा ब्रह्माणं मनसा स्मरन् ॥३४॥
पञ्चाग्निमध्यमध्यस्थः परित्यज्याशनादिकम् ।
अथाबलेन निद्रां च तेजोराशिरिवाबभौ ॥३५॥
धूमवायुव्रतो राजा जितक्रोधो जितेन्द्रियः ।
अन्तरायसहस्राणि तृणवत्तपसाकरोत् ॥३६॥

दुःसाध्यमिति गूढं हि सवैश्वर्यप्रदं तथा ।
भगीरथतपो मत्वा शक्रो विघ्नं प्रचक्रमे ॥३७॥
तेनैव प्रेरितां रम्भां केवलं विघ्नरूपिणीम् ।
धैर्यं पृथ्वीधरो राजा संवीक्ष्य न चचाल ह ॥३८॥
बहुकाले तथातीते तत्तपोद्भवहव्यवाट् ।
ददाह निखिलान् लोकान् न चास्माच्चलति क्रिया ॥३९॥
तदुष्मणाथ संतप्तास्सर्वलोकनिवासिनः ।
सर्वलोकविधातारं ब्रह्माणं शरणं गताः ॥४०॥
प्रणिपत्याथ तं सम्यक् शिरसा प्रपितामहम् ।
स्तवनं चक्रिरे वाक्यैर्नैगमैर्मुनिसत्तमाः ॥४१॥
पाहि पाहि समस्तेश कर्त्ताऽसि जगतां पुनः ।
भगवन्भानुवंश्यानां दग्धानां मुनिशापतः ॥४२॥
महात्मनां गतिं कर्त्तुं प्रवृत्तोऽत्र भगीरथः ।
तापसानामशक्येन तापसेनाथ वह्निना ॥४३॥
नव पञ्च च लोकांस्त्वं तप्यमानान्न पश्यसि ।
असाध्ये तपसि प्राज्ञः तिष्ठमानो भगीरथः ॥४४॥
विना कथं तत्कृपया कृतार्थोऽसौ भवेत्पुनः ।
इति श्रुत्वा मुनीनां च वचनं तत्पितामहः ॥४५॥
सुप्रीतो भगवान्ब्रह्मा प्रजानां प्रभुरीश्वरः ।
ततः सुरगणैः सार्द्धमुपागम्य पितामहः ॥४६॥
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ।
तमुवाच महातेजाः सर्वलोकपितामहम् ॥४७॥
भागीरथो महाबाहुः कृताञ्जलिपुटस्थितः ।
यदि मे भगवन्प्रीतो यद्यस्ति तपसः फलम् ॥४८॥
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ।
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ॥४९॥
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ।
देया च संततिर्देव नावसीदेत् कुलञ्च नः ॥५०॥

इक्ष्वाकूणां कुले देव एष मे स्तु वरः परः ।

**आर्षरामायणे च श्रीरामं प्रति विश्वामित्रवाक्यम्–**

उक्तं वाक्यं च राजानं सर्वलोकपितामहः ॥५१॥

प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ।
पा.लि.प.सं. ४२ मनोरथो महानेष भगीरथ महारथ ॥५२॥

एवं भवतु भद्रं ते इक्ष्वाकुकुलमव्ययम् ।
इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता ॥५३॥

तां वै धारयितुं राजन् हरस्तत्र नियुज्यताम् ।
गङ्गायाः पतनं राजन् पृथिवी न सहिष्यते ॥५४॥

तां वै धारयितुं राजन् नान्यं पश्यामि शूलिनः ।
तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ॥५५॥

जगाम त्रिदिवं देवैः सर्वैः सह मरुद्गणैः ।
देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् ॥५६॥

कृत्वा वसुमतीं राम सम्वत्सरमुपासत ।
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ॥५७॥

उमापतिः पशुपती राजानमिदमब्रवीत् ।
प्रीतस्तेहं नरश्रेष्ठ करिष्यामि तव प्रियम् ॥५८॥

शिरसा धारयिष्यामि शैलराजसुतामहम् ।
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ॥५९॥

तदा सा सुमहद्रूपं कृत्वा वेगं च दुःसहम् ।
आकाशादपतद्गंगा महावर्त्ततरङ्गिणी ॥६०॥

**तद्यथा; ब्रह्मपुराणे च सूतवाक्यं शौनकं प्रति–**

तस्या कल्लोलशब्देन कम्पमानं जगत्रयम् ।
प्रकम्पन्तौ पुष्पवन्तौ नक्षत्राणां च मण्डलम् ॥६१॥

संवीक्ष्य देवदेवेशं तद्भीत्या शरणं ययुः ।
मृत्युञ्जय महादेव लोकानामभयङ्कर ॥६२॥

त्वमेव भयसंत्रस्तानस्मात्पालय तद्भयात् ।
त्वमेव रक्षकोऽस्माकं नान्यज्जानीम दैवतम् ॥६३॥

चतुर्णामपि सिन्धूनां प्रवाहो ब्रह्मलोकतः ।
भयङ्करः समस्तानां परितः प्रवहत्यधः ॥६४॥

ध्वनिना कम्पिता देवाः सर्वे लोकाधरा धराः ।
त्वमेव रक्ष भीतान्नः प्रणतानिति तेऽब्रुवन् ॥६५॥

आश्वास्य प्रणतानेताल्लीलया स्वर्गनिम्नगाम् ।
कल्लोलनिकरोद्भासिसौवर्णजलजावृताम् ॥६६॥

जलमानुषमत्स्यौघैश्चलितैश्चाप्यधोमुखैः ।
देवदारः समानीतदेवदारूतरुद्भवैः ॥६७॥

प्रसूनैः शोभमानां तां जगतां भीतिदायिनीम् ।
तरङ्गाकृष्टजीमूतनीलोत्पलविराजिताम् ॥६८॥

स्वर्धुनीं तां समालोक्य वाचमूचे महेश्वरः ।

**ईश्वर उवाच–**

गङ्गे ! त्वद्वेगसम्भ्रान्ताः पर्वताश्च वसुन्धरा ॥६९॥

त्वां वोढुं नाभवन्शक्ता मूर्ध्नि तिष्ठ ममाधुना ।
त्वमेव सर्वलोकानां मुक्तिदा ब्रह्मरूपिणी ॥७०॥

इत्युक्त्वा तां महादेवः शिरसा सहसा दधौ ।

**मार्कण्डेयेत्वेष विशेषोऽस्ति :–**

पा.लि.प.सं. ४३ तस्मात्तु पर्वतान् सर्वान् दक्षिणे तु क्रमोदितान् ॥७१॥

तान् प्लावयित्वा सम्प्राप्ता हिमवन्तं महागिरिम् ।
दधार तत्र तां शम्भुर्न मुमोच वृषध्वजः ॥७२॥

भगीरथेनोपवासैर्भक्त्या चाराधितो विभुः ।
तत्र मुक्ता च वर्षेण सप्तधा दक्षिणोदधिम् ॥७३॥

**पुनर्ब्राह्मे च सूतवाक्यं शौनकं प्रति–**

जटाजूटनिबद्धां तामविज्ञाय धरापतिः ॥७४॥
क्व गङ्गा केन नीता सा किं जातं करवाणि किम् ?
इति चिन्तासमाक्रान्तः स्थाणुवत्समभूत्तदा ॥७५॥

विचार्य मनसा शीघ्रं धीमान् धैर्यधराधरः ।
गङ्गाधरं समुद्दिश्य तपः कर्त्तुं समारभे ॥७६॥
एतस्मिन्नन्तरे लोको ब्रह्मणः समभूत्क्षणात् ॥७७॥

सर्वेऽपि म्लानवदना ब्रह्मलोकनिवासिनः ।
कम्पमाना महातङ्काः प्रम्लानवदनाश्रियः ॥७८॥

दृष्ट्वा सर्वान् स्वर्लोकञ्च राजहीनपुरोपमम्।
कल्पद्रुमान् फलैर्हीनान् स्वयम्भू र्विस्मयं गतः ॥७९॥

ततो नारायणं देवं ध्यात्वा स्तोतुं प्रचक्रमे।
भगवन्सर्वलोकेश! रमानाथ! जगत्पते! ॥८०॥

अकुण्ठितैव ते शक्तिः लोकान् सृजति लीलया।
पालयत्यखिलाधारं संहरत्यपि तान्पुनः ॥८१॥

स माया शम्भुना वापि विज्ञेया न कदाचन।
इत्येवं प्रवदन् ब्रह्मा नारायणपदाम्बुजे ॥८२॥
साष्टाङ्गं प्रणिपत्याथ करान्बद्ध्वा स्थितः पुरः ॥८३॥

एवं तिष्ठति लोकेशः दयासिन्धुर्महाप्रभुः।
श्रीमन्नारायणः किञ्चिदुवाच सरसं वचः ॥८४॥

शृणु ब्रह्मन् रहस्यं त्वं दैवं नान्येन विश्रुतम्।
सर्वलोकहितं वत्स त्वत्प्रीत्या प्रवदामि तम् ॥८५॥

मद्रूपा पावनी गङ्गा तव शक्तिप्रदायिका।
पितृभ्यो याचमानेन प्रेषिता सहसा बलात् ॥८६॥

तदा प्रभृति ते शक्तिः कुण्ठिता सृष्टिकारिणी।
समस्तकार्यनिपुणा ममैवात्मा यतो हि सा ॥८७॥

निर्गता सातिवेगेन न क्वचित्पुण्यनिम्नगा।
न च पञ्चापि सा लोकान्पालयन्त्यथ लीलया ॥८८॥

तदा शम्भुः कृपामूर्त्तिर्लोकानां हितकाम्यया।
बभार मूर्द्धा तां वत्स! लज्जयान्तर्दधे ततः ॥९०॥

महादेवं समुद्दिश्य करिष्यति तपो यदा।
नृपस्तदा तत्कृपया गङ्गां तां प्रेषयिष्यति ॥९१॥

यदा गङ्गा ततो भूमिं समाप्य शुभकारिणी।
त्वां द्रक्ष्यति तदा वत्स! तव क्षेमं भविष्यति ॥९२॥

पा.लि.प.सं. ४४ ध्रुवक्षेत्रं महापुण्यं प्रशस्तं लोकविश्रुतम्।
अनेकजन्मतपसा लभ्यं क्षेमकरं सदा ॥९३॥

इन्द्रादयोऽपि तपसा यत्र जाता दिगीश्वराः।
तत्र त्वं निवसन्शम्भोः पूजां कुरु यथाविधि ॥९४॥

महादेवस्त्वयि प्राज्ञ दयां सम्यक् करिष्यति ।
इत्युक्त्वाथ कृपामूर्त्तिः श्रीमन्नारायणः स्वयम् ॥९५॥
शासयित्वा ततस्तूर्णमन्तर्द्धिमकरोत्क्षणात् ।
ततो ब्रह्मा ध्रुवं क्षेत्रं पवित्रं प्राप्य भक्तिमान् ॥९६॥
तथैव शम्भुमुद्दिश्य पूजां चक्रे यथाविधिः ।
अश्वमेध-सहस्राणि वाजपेयशतानि च ॥९७॥
अन्यानपि क्रतून् सर्वान् शिवं सन्तुष्टिहेतवे ।

**इति श्रीनानापुराणसारोद्धारे गङ्गा भक्तिप्रकाशे ब्रह्मलोकादवतरणवर्णनं नाम एकादशप्रकरणम् ।।११।।**

## अथ द्वादश-प्रकरणम्

**तद्यथा; ब्रह्मपुराणे सूतवाक्यं शौनकं प्रति—**

भगीरथस्तु राजर्षिस्तपस्यन्नपि यत्नतः ।
तदलब्ध्वा तदा चक्रे श्रीहरोपासनां सुधीः ॥१॥
हृत्पुण्डरीकं विरजं विशुद्धं जगदात्मकम् ।
कोटिसूर्यप्रतीकाशं भास्वरं तदधोमुखम् ॥२॥
कुम्भकाद्यैस्तदा सम्यक्कुर्वन्नूर्द्धमुखं क्रमात् ।
उद्घाट्य योगकलया ध्यायन्तं स्वमहेश्वरम् ॥३॥
निधाय बहुशस्सम्यक् सम्पूज्य च यथाविधि ।
साष्टाङ्गं प्रणिपत्याथ सम्यक् स्तोतुं प्रचक्रमे ॥४॥
देव देव जगन्नाथ भक्तानामार्तिभंजन !
भूतिभूषितसर्वाङ्ग व्यघ्राघ्रचर्मोत्तरीयक ॥५॥
पार्वतीप्राणनिलय पाहि मां करुणानिधे ।
अर्चाविभुपरव्यूहाश्चतस्रस्तव मूर्तयः ॥६॥
अर्चा तु कोटिरूपा ते वैभवा भैरवादिकाः ।
परा तु निर्गुणा सा स्याद्वचसामप्यगोचरा ॥७॥
व्यूहमूर्त्तिविराड्रूपा सर्वलोकात्मिका तव ।
ब्रह्माण्डखर्परान्तं ते व्योममूर्द्धा महेश्वर ॥८॥
चन्द्रसूर्यौ भवन्नेत्रे दिशा शब्दग्रहौ पुनः ।
अन्तरिक्षं भवन्नासा पृष्टवंशः सुरालयः ॥९॥

शिखरं तस्य ते कण्ठः पार्श्वोऽस्थीन्युपपर्वताः ।
रुधिरं सागरा शम्भो लतावृक्षास्तनूरुहाः ॥१०॥
दिग्गजाः दन्तपङ्क्तिस्ते शेषः सेप्सो महेश्वर ।
कूर्मः पादौ महादेव द्रष्टुं वक्तुं च कः क्षमः ! ॥११॥
त्वत्तोऽन्यं नैव जानामि त्रिषु लोकेषु कश्चन ।
इन्द्राद्या अपि दिक्पालास्तवांशाः परमेश्वरः ॥१२॥
अनेकपादकमलमनेकभुजभास्वरम् ।
अनेकवदनं शान्तं कोटिनेत्रप्रकाशकम् ॥१३॥
पा.लि.प.सं. ४५ चन्द्रसूर्याग्निनक्षत्रमण्डलं तेजसा तव ।
प्रकाशतेऽथ वाय्वाद्यास्तवैवाज्ञावशंवदाः ॥१४॥
अक्षिव्याजेन सर्वांस्त्वं पश्यसि श्रोत्रदम्भतः ।
शृणोषि शब्दांस्त्वग्व्याजात्सकलं स्पृशसि प्रभो ॥१५॥
मनोर्व्याजेन मनुषे घ्राणव्याजेन जिघ्रसि ।
आत्मारामोऽसि भगवन्स गुरुस्त्वं गुरोरपि ॥१६॥
अणिमाद्यष्टसिद्धीनां दाताऽसि परमेश्वर ।
सर्वे समुद्राः सरितः पर्वता दिग्गजा अपि ॥१७॥
इन्द्राद्या लोकपालाश्च कुक्षौ तिष्ठन्ति ते विभो ।
ब्रह्माविष्णुश्चरुद्रश्च वसवोऽष्टौ तथाश्विनौ ॥१८॥
स्वरूपं ते न जानन्ति जानीते मनुजः कथम् ।
त्वं साक्षी जगतां कर्ता केवलश्चानुमोदकः ॥१९॥
अकर्त्तापि त्वमेवासि ज्ञानरूपः पुरातनः ।
अप्रमेयो मुनीनां त्वं सदा हृदयमध्यगः ॥२०॥
सर्वज्ञः सत्पथाचारः सर्वेशः सर्वलक्षणः ।
शुभदो विपदां हर्त्ता महावीरो जयप्रदः ॥२१॥
धनदो वासुदेवश्च त्वमेव परमेश्वरः ।
धर्मसेतुर्धर्मरूपो धार्मिकाणां सुखप्रदः ॥२२॥
श्रान्तोऽस्मि तव दासोऽस्मि वत्सोऽस्मि तव शङ्कर ! ।
चराचरस्य लोकस्य प्रेरकस्त्वं महेश्वरः ॥२३॥
त्वयैव प्रेरितो देव ! दुःस्साध्ये तपसि स्थितः ।
श्रान्तोऽस्मि मम नैवास्ति सामर्थ्यं करुणानिधे ॥२४॥

इत्येवं प्रवदन् सम्यक् नत्वा तत्पादपद्मयोः ।
बद्धाञ्जलिपुटो दीनः समतिष्ठत भूपतिः ॥२५॥

इति वदति दिनेशवंशभानौ
रुचिर तपः समवीक्ष्य तस्य देवः ।
त्रिभुवनहितकारि तद्विदित्वा
त्रिदिवधुनीं चकमे च तां विस्रष्टुम् ॥२६॥

कपर्द्दकूलेन निबद्धगङ्गा
भूषां स्वमूर्द्धनों रुचिरां विलोक्य ।
लोभादनिच्छन्नपि तां प्रदातुं
स्वल्पां ददौ तां दयया दयाद्रिः ॥२७॥

एकं केशं परित्यज्य ददौ त्रिपथगां शिवः ।
अलकनन्देति विख्याता नाम्ना गङ्गा प्रकीर्त्तिता ॥२८॥

**तद्यथा–**

**श्रीमद्रामायणे श्रीरामं प्रति विश्वामित्रश्चाह–**

विससर्ज ततो गङ्गां हरो विन्दुसरः प्रति ॥२९॥
तस्यां विसर्जमानायां सप्तश्रोतांसि जज्ञिरे ॥३०॥
ह्लादिनी पावनी चैव नलिनी च तथैव च ।
तिस्रः प्राची दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥३१॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥३२॥

सप्तमी चान्वगता सा भगीरथमथो नृपम् ।
भगीरथोऽपि राजर्षिर्दिव्यस्यन्दनमास्थितः ॥३३॥

पा.लि.प.सं. ४६ प्रायादग्रे महातेजा गङ्गा तच्चाप्यनुव्रजन् ।
गगनाच्छङ्करशिरस्ततो धरणिमागता ॥३४॥

व्यसर्प्य तज्जलं तत्र तीव्रशब्दपुरस्कृतम् ।
मत्स्यकच्छपसंघैश्च शिशुमारगणैस्तथा ॥३५॥

पतद्भिः पतितैश्चैव व्यरोचत वसुन्धरा ।
ततो देवर्षिगन्धर्वा यक्षसिद्धगणास्तथा ॥३६॥

विलोकयन्तस्ते तत्र गगनाद् गां गतां तदा ।
कृताभिषेको गङ्गायां बभूव गतकिल्विषः ॥३७॥

भगीरथो हि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
यतो भगीरथो राजा ततो गङ्गा यशस्विनी ॥३८॥
जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ।

**तद्यथा ब्रह्माण्डे च पराशरवाक्यं ऋषीन्प्रति–**

ततो गङ्गाऽतिवेगेन प्लावयन्ती धरातलम् ॥३९॥
बदरीनामकक्षेत्राद्विष्णुद्वारमुपागता ।
ब्रह्मकुण्डं हरिद्वारे ज्वलद्भास्करसन्निभम् ॥४०॥
वटमूले तटे तस्य जह्नुनामावसदृषिः ।
हविष्यान्नैः कियत्कालं फलाहारैस्ततः कियत् ॥४१॥
पक्कपत्रानिलाहारैर्जलैर्वर्षसहस्रकम् ।
एकदा ब्रह्मकुण्डे तु कृताह्निकजपो मुनिः ॥४२॥
भगीरथसमानीता गङ्गा गच्छति सागरम् ।
ताम्रपात्रं स्थितं कुण्डे दूरे नीतं शनैः-शनैः ॥४३॥
प्रवाहेन तु गङ्गायाः दृष्ट्वा किमिति चाब्रवीत् ।

**जह्नुरुवाच–**

नीतं पात्रमगाधेऽस्मिन् जले गन्तुं न शक्यते ॥४४॥
कुण्डं मग्नं प्रवाहेण किमेतद्विकृतं कृतम् ।
एवमुक्त्वा मुनिश्रेष्ठा कुपितस्तृषितः क्षणात् ॥४५॥
गण्डूषं पाणिना कृत्य सोऽपिबद्धोजने[१९] यथा ।
ततो हाहाकृतं सर्वैः भगीरथपुरोगतैः ॥४६॥
प्राञ्जलिस्तं बभाषेदं नत्वा तस्य पदाम्बुजम् ।

**भगीरथ उवाच–**

स्वामिन्भो ! तपसादीप्त हुताशपवनाशन ॥४७॥
मुञ्च मन्युं कृपालो में बाले मयि कृपां कुरु ।
षष्टिः शतसहस्राणि पूर्वजाः सगरात्मजाः ॥४८॥
विप्रनेत्राग्निना दग्धास्त्वधोगतिपुरःसराः ।
ततः स्वर्गे मया गत्वा तपसा तोष्य शङ्करम् ॥४९॥

---

१९. गङ्गायाः स्वभाव एव दर्शनादिना कोपयुक्तानामपि सर्वेषां मनोवाञ्छितं ददातीति प्रसिद्धम् । कामाद्वेषाद्भयाद्वापीति नारदोक्तिवत् कृत्वा रूपत्वात् कोपयुक्तेन मुनिना एवं मनसि कृतं पानं करोमि, तस्मात् संकुचितरूपं कृतं यथापानं भवतीति गङ्गायाः एवोत्कर्षः ।

तन्मौलेरानिता देवी गङ्गा पापविनाशिनी ।
व्रजते पावनी पुण्या यत्रासन्सगरात्मजाः ।।५०।।
मुक्तिर्भवति तेषां भो ह्येनां मुञ्च सरिद्वराम् ।
तच्छुत्वा तत्क्षणाज्जह्नुर्मुक्तकोपः कुशैस्ततः ।।५१।।
स्वजानुं खनयामास पथेयन्तेन निसृतिः ।
मुखतो वमनं प्रोक्तं पायोश्चैवापवित्रता ।।५२।।
तेन तज्जानुमार्गेण निःसृता जाह्नवी मता ।
पितरं पुरतो दृष्ट्वा जाह्नवी प्रेमविह्वला ।।५३।।
नमस्कृत्य परिक्रम्य समुद्रं सा ययौ चिरात् ।

**विप्र उवाच–**

आर्षरामायणे जह्नुः श्रोत्राभ्यामसृजत्पुनः ।।५४।।
गङ्गा भागवते चैवं यज्ञवाटस्य प्लावनम् ।
तत्कल्पभेदैर्जानीहि ब्राह्ममाख्यानकं शृणु ।।५५।।

**तद्यथा ब्रह्मपुराणे सूत-वाक्यम् शौनकं प्रति :–**

जगाम च पुनर्गङ्गा ध्रुवक्षेत्रमुपागता ।
जलेनाप्लावितान् सर्वान् मोचयन्त्यथ दुष्कृतान् ।।५६।।
इयाय ब्रह्मणः क्षेत्रं कान्यकुब्जं सुशोभनम् ।
तपस्यन्तो मुनिगणाः मृगाश्चाश्रमवासिनः ।।५७।।
महाभयङ्करं श्रुत्वा ध्वनिं प्रार्थुश्चतुर्मुखम् ।
सोऽपि निध्याय विश्वेशं वाचमूचे चतुर्मुखः ।।५८।।
मा भैष्ट विबुधश्रेष्ठाः साक्षाद्गङ्गा समागता ।
सद्यस्तद्दर्शनेनैव यूयं पूताः भविष्यथ ।।५९।।
इत्युक्त्वा तूर्णमुत्थाय मुनिभिः सह लोकराट् ।
त्रयीवाक्यैश्च पौराणैःस्तुवन्तः सुरनिम्नगाम् ।।६०।।
दृष्ट्वा तत्र नमस्यन्तः पूजां चक्रुर्यथाविधि ।
आयाहि गङ्गे मां पाहि साक्षान्नारायणात्मके ।।६१।।
निर्गतासि यदा लोकान् मम शक्तिः प्रकुण्ठिता ।
त्वां विना सत्यलोकेऽहं न स्थास्ये सुरनिम्नगे ।।६२।।
सृजनं सम्परित्यज्य प्रजानामहमेककः ।
आज्ञप्तो वासुदेवेन दर्शनाय तवानघे ।।६३।।

ध्रुवक्षेत्रं समास्थाय ध्यायंस्त्वामनघे स्थितः।
रमानाथो महेशश्च आदित्या वसवस्तथा ॥६४॥

नदा नद्यश्च तीर्थानि सर्वे यत्र समागताः।
मानवाः पशवो नागा व्याघ्राश्च मृगपक्षिणः ॥६५॥

तव दर्शनमात्रेण पदं गच्छन्त्यनामयम्।
श्रान्तासि गङ्गे बहुशः शैलकाननगह्वरान् ॥६६॥

उत्तीर्य धरणीं सर्वामरूपीकृत्य धारया।
तिष्ठ तिष्ठ ध्रुवक्षेत्रं पावनं कुरु सर्वदा ॥६७॥

त्वां प्रतीक्ष्य सदा गङ्गे तपस्यन्ति मुनीश्वराः।
श्रुत्वातिदूरं क्षेत्रस्य साकुलं संस्थिता तदा ॥६८॥

समालोक्य सुरश्रेष्ठः सभयं प्राप्य विस्मयम्।
तदा शक्रादयो देवा ऋषयो मुनयो नराः ॥६९॥

अचलां तां समालोक्य बभूवुर्भयविह्वलाः।
निश्चलां पर्वताकारां गङ्गां दृष्ट्वातिविस्मिताः ॥७०॥

केचित्पलायिताः भीत्या सञ्जाता भयनिःस्वनाः।
परस्परं भीषयन्तः पृच्छन्तश्च परस्परम् ॥७१॥

इतिकर्त्तव्यतामूढाः निश्चलाश्च पुनः पुनः।
सञ्जाता म्लानवदनास्तत्रारेजुः सभासदः ॥७२॥

एतस्मिन्तरे विष्णुः संवीक्ष्य भयविह्वलान्।
गङ्गाया अपि तात्पर्यं ज्ञात्वा प्रोवाच संसदि ॥७३॥

यूयं शृणुध्वं गङ्गायाः भावं सम्यक् सभासदः।
पृथिव्यां सन्ति तीर्थानि पुष्कराद्यानि भूतले ॥७४॥

तन्मध्ये मां नदीमेकां जानन्ते मनुजाः पुनः।
अतो मयात्र न स्थेयमिति तस्याः सुनिश्चयः ॥७५॥

अतो यूयं प्रयत्नेन गङ्गां प्रार्थयतेति च।
एवं वदन्तं तं विष्णुं नमस्कृत्य दयानिधिम् ॥७६॥

ब्रह्मादयस्तदा गङ्गां शौनकाद्या ऋषीश्वराः।
नद्यो नदाः समुद्राश्च पुष्करप्रमुखानि च ॥७७॥

तदालोच्य प्रयत्नेन स्तोत्रं चक्रुर्यथोचितम्।

**ब्रह्मादय उचुः—**

जय गङ्गे महादेवि लोकानामभयङ्करि ॥७८॥
अमोघं तव सामर्थ्यं को वा जानाति मानुषः।
चतुर्दशानां लोकानां रक्षणाय कृपानिधे ॥७९॥
जलरूपेण निर्याता साक्षाद्ब्रह्मस्वरूपिणी।
महादेवोऽपि भक्त्या त्वां दधाति शिरसा ततः ॥८०॥
प्रवक्तुं महिमा केन शक्यते सुरनिम्नगे।
रत्नाकरोऽपि सततं काङ्क्षते तव दर्शनम् ॥८१॥
पादांस्यपि तदा गङ्गे प्रयातु परमां गतिम्।
इति श्रुत्वा तु गम्भीरां वाचं नारायणः स्वयम् ॥८२॥
गङ्गामुवाच कृपया ब्रह्माण्डाखिलपावनीम्।

**नारायण उवाच—**

यदुक्तं तीर्थनिवहैस्तद्वचः सुरनिम्नगे ॥८३॥
धर्म्यं किञ्च जलेशस्य शक्रादीनां पुरस्तथा ॥८४॥
अस्यापि ब्रह्मणोऽत्यन्तं शम्भोरपि कृपानिधेः।
ममापि सम्मतं सम्यक् ऋषीणां च तथैव हि ॥८५॥
नान्यथा कुरु गङ्गे त्वं वचनं सर्वसम्मतम्।
भगीरथोऽप्यतिश्रान्तः त्वदेकशरणः पुनः ॥८६॥
ब्रह्मणोप्याद्यसाशक्तिर्जायते तव शक्तितः।
एवं ब्रुवन्तं सा गङ्गा प्रणम्य परमेश्वरम् ॥८७॥
तदाज्ञां शिरसा धृत्वा तथा कर्तुं प्रचक्रमे।
एकया कलया गङ्गा ब्रह्मणा सह निर्गता ॥८८॥
सागरान् शीघ्रमुर्द्धर्तुमेकया सागरं गता।
गङ्गा कलाभिरन्याभिर्वर्षद्वीपे विभागशः ॥८९॥
एतस्मिन्नन्तरे ब्रह्मा तामादाय गतो दिवम्।
शङ्खदुन्दुभिनिर्घोषैः पूजयामासुस्तां सुराः ॥९०॥
भगीरथोऽपि राजर्षिर्निन्ये तां लोकपावनीम्।
पितामहान्समुद्धर्तुं रसातलमुपागमत् ॥९१॥
सागरं पूरयामास पीतं यदृषिणा पुरा।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे समुद्रपूर्त्तिवर्णनं नाम द्वादशं प्रकरणम् ॥१२॥**

## अथ त्रयोदश-प्रकरणम्

**तद्यथा रामायणे श्रीरामं प्रति विश्वामित्रवाक्यम्—**

स गत्वा सागरं राजा गङ्गयानुगतस्तदा।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृता: ॥१॥

भस्मन्यथाप्लुते राम गङ्गाया: सलिलेन वै।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥२॥

तारिता नरशार्दूल दिवं याताश्च देववत्।
षष्टिपुत्रसहस्राणि सगरस्य महात्मन: ॥३॥

सागरस्य जलं लोके यावत् स्थास्यति पार्थिव।
सगरस्यात्मजा: सर्वे दिवि स्थास्यन्ति देववत् ॥४॥

इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति।
त्वत्कृतेन च नाम्नाऽथ लोके स्थास्यति विश्रुता ॥५॥

गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च।
त्रिपथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥६॥

पितामहानां सर्वेषां त्वमत्र मनुजाधिप।
कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय ॥७॥

पूर्वं केनापि ते राजँस्तेनातियशसा तदा।
धर्मिणां प्रवरेणाथ नैष प्राप्तो मनोरथ: ॥८॥

तथैवांशुमता वत्स लोकेऽप्रतिमतेजसा।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥९॥

राजर्षिणा गुणवता महर्षिसमतेजसा।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥१०॥

दिलीपेन महाभाग तव पित्रातितेजसा।
पुनर्न शङ्कितो नेतुं गङ्गां प्रार्थयताऽनघ ॥११॥

सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ।
प्राप्नोषि परमं लोके यश: परमसंमतम् ॥१२॥

यच्च गङ्गावतरणं त्वया कृतमरिन्दम।
अनेन भगवान्प्राप्तो धर्मस्यायतनं महत् ॥१३॥

प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते।
मलिने पुरुषश्रेष्ठ शुचिं पुण्यफलो भव ॥१४॥

पितामहानां सर्वेषां कुरुष्व सलिले क्रियाम्।
स्वस्ति तेऽस्तु महाभाग स्वलोकं गम्यतां नृप ॥१५॥
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः।
यथागतं तथागच्छद्देवलोकं महायशाः ॥१६॥
भगीरथस्तु राजर्षिः कृत्वा सलिलमुत्तमम्।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥१७॥
कृतोदकः शुची राजा स्वपुरं प्रविवेश ह।
समृद्धार्थो नरः श्रेष्ठः स्वराज्यं प्रशशास ह ॥१८॥
प्रमुमोद च लोकस्तं नृपमासाद्य राघव।
नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥१९॥
एष ते राम गङ्गाया विस्तरोऽभिहतो मया।
स्वस्ति प्राप्नुहि भद्रं ते सन्ध्या कालोऽतिवर्त्तते ॥२०॥
धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमथापि च।
यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥२१॥
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च।
इदमाख्यानमायुष्यं गङ्गावतरणं शुभम् ॥२२॥
यः शृणोति च काकुस्थ सर्वान्कामानवाप्नुयात्।
सर्वे पापा विनश्यन्ति आयुः कीर्त्तिश्च वर्द्धते ॥२३॥

**विप्रोक्तिः—**

पुराणे ब्रह्मवैवर्त्ते खण्डे प्रकृतिसंज्ञिते।
तथा शिवपुराणे यदधिकं शृणु चापि तत् ॥१॥
भगीरथनृपाख्यानमवेहि कल्पभेदतः।

**तद्यथा श्रीकृष्णवाक्यं राधां प्रति—**

तपश्चकारासमञ्जो गङ्गानयनकारणम् ॥२॥
लक्षवर्षतपः कृत्वा ममार कालयोगतः।
अंशुमांस्तस्य पुत्रश्च गङ्गानयनकारणम् ॥३॥
लक्षवर्षं तपः कृत्वा ममार कालयोगतः।
भगीरथस्तस्य पुत्रो महाभागवतः सुधीः ॥४॥
वैष्णवो विष्णुभक्तश्च गुणवानजरामरः।
तपः कृत्वा लक्षवर्षं गङ्गानयनकारणम् ॥५॥

ददर्श कृष्णं ग्रीष्मस्य सूर्यकोटिसमप्रभम्।
द्विभुजं विरलं हस्तं किशोरं गोपवेषकम् ॥६॥
परमात्मानमीशं च भक्त्यानुग्रहविग्रहम्।
स्वेच्छामयं परं ब्रह्म परिपूर्णतमं प्रभुम् ॥७॥
तुष्टाव दृष्ट्वा नृपतिः प्रणम्य च पुनः पुनः।
लीलया च वरं प्राप्य वाञ्छितं वेशतारणम् ॥८॥
तेन दत्तां च तां गङ्गामानीय कपिलाश्रमे।
स्तुत्वा नत्वाऽतिभक्त्या च पितॄन्सन्तर्प्य सागरान् ॥९॥
प्रेषयामास वैकुण्ठं सर्वलोकनमस्कृतम्।

**अन्यत्समानम्। अथ च शिवपुराणे सूतशौनकसंवादस्तथा–**

तस्य पुत्रो महाप्राज्ञः भगीरथ इति श्रुतः ॥१०॥
पितामहानां सर्वेषां गतिं श्रुत्वाऽति दुःखितः।
सगरं नृपशार्दूलं पप्रच्छ विनयान्वितः ॥११॥
सागराणां च सर्वेषां निष्कृतिः स्यात्कथं भवेत्।
भगीरथं नृपं प्राह कपिलो वेति पुत्रक ॥१२॥
तस्य तद्वचनं श्रुत्वा नृपः प्रायाद्रसातलम्।
कपिलं च नमस्कृत्य सर्वं तस्मै न्यवेदयत् ॥१३॥
स मुनिः सुचिरं ध्यात्वा प्रत्युवाच भगीरथम्।
आराध्य तपसा देवं शंकरं लोकशंकरम् ॥१४॥
जटाजलेन स्वपितृनाप्लाव्य नृपसत्तम।
कृतः कृतार्थो भविता त्वं च ते पितरस्तथा ॥१५॥
कैलासं तु नगश्रेष्ठं गत्वा स्तुहि महेश्वरम्।
एवं श्रुत्वा तु कैलासं गत्वा शिवमतोषयत् ॥१६॥
दशवर्षसहस्राणि तपः कृत्वा ह्यतन्द्रितः।
याचयित्वा त्रिपथगामादाय प्रयतः शुचिः ॥१७॥
गतो भस्मीकृता यत्र सागराः कपिलाग्निना।
ताँस्तर्पयित्वा विधिवत्कृतार्थः स बभूव ह ॥१८॥
एवं भगीरथो राजा ब्रह्मलोकादवातरत्।
गङ्गां पुण्यां महाभाग तेन भागीरथी स्मृता ॥१९॥

यथा रसातलं याता पूरयित्वा महोदधिम्।
एष ते कथितः सर्वो वृत्तान्तः पूर्वसम्भवः ॥२०॥

इदमाख्यानकं पुण्यं गङ्गाभक्त्या पठेच्च यः।
अभीष्टं लभते नित्यं श्रवणात्सुखमाप्नुयात् ॥२१॥

य इदं शृणुयान्नित्यं यः पठेद्भक्तिसंयुतः।
स सर्वसिद्धिमाप्नोति दीर्घमायुश्च विन्दति ॥२२॥

**विप्र उवाच–**

अथ गङ्गा यथा देवी कलया भुवि मानद।
नृपस्य शान्तनोर्गेहे भार्या चासीत्तथा शृणु ॥१॥

वसूनां शापमोक्षाय तथा महाभिषस्य च।
देवानां कार्यसिद्ध्यर्थं शान्तनोः प्रियकाम्यया ॥२॥

भूभारमपहर्त्तुं वै विष्णोराविर्भवो यथा।
तथा पावयितुं लोकानाविर्भूता कलादिभिः ॥३॥

वैशम्पायन आहस्म राजानं जनमेजयम्।
यथा तत्ते वदिष्यामो भारतारण्यपर्वणि ॥४॥

**तद्यथा वैशम्पायन उवाच–**

इक्ष्वाकुवंशप्रभवो राजाऽऽसीत्पृथिवीपतिः।
महाभिष इति ख्यातः सत्यवाक् सत्यविक्रमः ॥५॥

सोऽश्वमेधसहस्रेण राजसूयशतेन च।
तोषयामास देवेशं स्वर्गं लेभे ततः प्रभुः ॥६॥

ततः कदाचिद्ब्रह्माणमुपासाञ्चक्रिरे सुराः।
तत्र राजर्षयोऽप्यासन् स च राजा महाभिषः ॥७॥

अथ गङ्गा सरिच्छ्रेष्ठामुपायात्प्रपितामहम्।
गङ्गावासः समुद्धूतं मारुतेन शशिप्रभम् ॥८॥

ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा।
महाभिषस्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥९॥

सोऽवध्यातो भगवता ब्रह्मणा तु महाभिषः।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥१०॥

चिन्तयित्वा तु नृपतिः नृपानन्यांस्तपोधनान्।
प्रतीपं रोचयामास पितरं भूरितेजसम् ॥११॥

महाभिषं तु तं दृष्ट्वा नदी धैर्याच्च्युतं नृपम्।
तमेव मनसा ध्यायत्युपावर्त्तत्सरिद्वरा ॥१२॥

सा तु विध्वस्तवपुषः कस्मलाभिहतान्नृप।
ददर्श पथि गच्छन्ती वसून्देवान् दिवौकसः ॥१३॥

तथारूपाँश्च तान् दृष्ट्वा पप्रच्छ सरिताम्वरा।
किमिदं नष्टरूपाश्च कच्चित्क्षेमं दिवौकसाम् ॥१४॥

तामूचुर्वसवो देवाः शप्ता स्मो वै महानदी।
अल्पेऽपराधे संरम्भाद्वशिष्ठेन महात्मना ॥१५॥

विमूढाः यद्वयं सर्वे प्रच्छन्नमृषिसत्तमम्।
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ॥१६॥

तेन कोपाद्वयं शप्ताः नृयोनौ सम्भवन्त्विह।
न तच्छक्यं निवर्त्तयितुं यदुक्तं ब्रह्मवादिना ॥१७॥
त्वमस्मान्मानुषी भूत्वा सृज पुत्रान्वसून्भुवि ॥१८॥

न मानुषीणां जठरं प्रविशामो वयं शुभे।
इत्युक्ता तैश्च वसुभिःतथेत्युक्त्वाऽब्रवीदिदम् ॥१९॥

**गङ्गोवाच—**

मर्त्येषु पुरुषः श्रेष्ठः को वः कर्त्ता भविष्यति ॥२०॥

**वसव ऊचुः—**

प्रतीपस्य सुतो राजा शन्तनुर्लोकविश्रुतः।
भविता मानुषे लोके स नः कर्त्ता भविष्यति ॥२१॥

**गङ्गोवाच—**

ममाप्येवं मतं यस्मात् यथा मां वदतानघाः।
प्रियं तस्य करिष्यामि युष्माकं चैतदीप्सितम् ॥२२॥

**वसव ऊचुः—**

जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि।
यथा न चिरकालं नो निवासः स्यात्त्रिलोकगे ॥२३॥

**गङ्गोवाच—**

एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम्।
तस्यामोघः सङ्गमस्स्यात्पुत्रहेतोर्मया सह ॥२४॥

**वसव ऊचुः—**

तुरीयार्द्धं प्रदास्यामो वीर्यस्यैकैकशो वयम्।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितम् ॥२५॥

न सम्पत्स्यति मर्त्त्येषु पुत्रस्तस्य तु सन्ततिः।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥२६॥

एवं ते समयं कृत्वा गङ्गया वसवः सह।
जग्मुः संहृष्टमनसो यथा संकल्पमञ्जसा ॥२७॥

**विप्रोक्तिः—**

गङ्गायाश्च वसूनां च सम्बादः कथितस्तव।
प्रतीपस्य च गङ्गायाः सम्वादं कथयामहे ॥२८॥

**तद्यथा वैशम्पायन उवाच—जनमेजयं प्रति—**

एवमुक्त्वा वसूनां सा स्त्रीरूपा सुमनोहरा।
आगत्योवाच राजानं भजमानां भजस्व माम् ॥२९॥

दक्षिणं शालसंकाशमूरुं भेजे शुभानना।

**प्रतीप उवाच—**

प्राप्य दक्षिणमूरुं मे त्वयाऽऽश्लिष्टा वरानने ॥३०॥

अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम्।
स्नुषा मे भव सुश्रोणि पुत्रार्थे त्वां वृणोम्यहम् ॥३१॥

तथेत्युक्त्वा तु सा देवी तत्रैवान्तरधीयत।
एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ॥३२॥

तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन।
तयोः समभवत्पुत्रो वृद्धयोः स महाभिषः ॥३३॥

शान्तस्य जज्ञे सन्तानः तस्मादासीत्स शान्तनुः।
प्रतीपः शान्तनुं पुत्रं यौवनस्थं ततोऽन्वशात् ॥३४॥

त्वामाव्रजेद्यदि रहः काचित्कान्ता मनोहरा।
सा त्वया नावमन्तव्या पुत्रार्थे वरवर्णिनी ॥३५॥

एवं सन्दिश्य तनयं प्रतीपः शान्तनुन्तदा।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ॥३६॥

स राजा शान्तनुर्धर्मान् गङ्गामनुचचार ह।
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ॥३७॥

त्तां दृष्ट्वाऽतिप्रहृष्टोऽभून्नैवातृप्यन्नराधिपः।
तामुवाच ततो राजा सान्त्वयन् श्लक्ष्णया गिरा ॥३८॥

याचे त्वां सुरगर्भा मे भार्या मे भव शोभने।
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदुलं वचः ॥३९॥

वसूनां समयं स्मृत्वाऽथाभिगच्छदनिन्दिता।
भविष्यामि महीपाल महिषी ते वशानुगा ॥४०॥

यत्तु कुर्यामहं राजन् शुभं वा यदि वाऽशुभम्।
न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम् ॥४१॥

एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥४२॥

तथेति राज्ञा सा तूक्ता तदा भरतसत्तम।
राजानं रमयामास यथा रेमे तथैव सः ॥४३॥

रममाणस्तया सार्द्धं यथाकामं नरेश्वरः।
अष्टावजनयत्पुत्राँ स्तस्याममरसन्निभान् ॥४४॥

जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत।
न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः ॥४५॥

अथैनामष्टमे पुत्रे जाते प्रजहतीमिव।
उवाच राजा दुःखार्त्तः परीप्सन् पुत्रमात्मनः ॥४६॥

मानवीयस्य दासीति किं हिनस्ति सुतानिति।
पुत्रघ्नसुमहत्पापं सम्प्राप्तं ते सुगर्हितम् ॥४७॥

**गङ्गा उवाच—**

पुत्रकाम न ते हन्मि पुत्रं पुत्रवताम्वर।
जीर्णस्तु मम चासायं यथा स समयः कृतः ॥४८॥

अहं गङ्गा जह्नुसुता महर्षिगणसेविता।
देवकार्यार्थसिद्ध्यर्थमुषिताऽहं त्वया सह ॥४९॥

इमेऽष्टौ वसवो देवा महाभाग महौजसः।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥५०॥

तेषां जनयिता नान्यस्त्वदृते भुवि विद्यतें
मद्विधा मानुषी धात्री, लोकेस्तीह न काचन ॥५१॥

तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षया: ॥५२॥
तत्ते शापाद्विनिर्मुक्ता वसिष्ठस्य महात्मनः ।
स्वस्ति तेस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥५३॥
एतत्पर्यवसानं मे वसूनां सन्निधौ कृतम् ।
मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ॥५४॥
एवमुक्त्वा तु राजानं तत्रैवान्तरधीयत ।
आदाय च कुमारं स जगामाथ यथेप्सितम् ॥५५॥

**विप्र उवाच–**

भारते चावगन्तव्यं शेषमाख्यानकं शुभम् ।
एवं सा कलया देवी महिषी शन्तनोरभूत् ॥५६॥
समुद्दधार राजानं [२०]समुद्रांशन्तथा वसून् ।
इति तच्छन्तनोर्जन्म श्रुत्वा विस्मितमानसः ॥५७॥
भूयः पप्रच्छ भूदेवान्प्रश्रयावनतः सुधीः ।
कथं महाभिषो राजा समुद्रांशो बभूव ह ॥५८॥
स एव शन्तनुः ख्यातस्तत्सकारणमुच्यताम् ।
नैव तृप्यति मे चित्तं शृणुतो जाह्नवीकथाम् ।
तस्माद्भवन्तः सर्वज्ञाः कथयन्तु सविस्तरम् ॥५९॥

**विप्र उवाच–**

धन्योऽसि त्वं महाभाग तवैतादृङ्मतिर्भवेत् ।
यन्नूतनयसीशायाः शृण्वन्नपि कथां मुहुः ॥६०॥
श्रूयतामिदमाख्यानं हरिवंशे प्रकीर्तितम् ।
परीक्षिते महापुण्यं व्यासशिष्येण धीमता ॥६१॥

**तद्यथा वैशम्पायन-वाक्यं जनमेजयं प्रति–**

एकदा धरणी देवी दैत्यसम्भारपीडिता ।
ब्रह्मणः सदसि प्राप्ता स्वदुःखं सन्न्यवेदयत् ॥६२॥
तच्छ्रुत्वा पृथिवीवाञ्छां सर्व एव दिवौकसः ।
तदर्थकृत्यं संचिन्त्य पितामहमथाब्रुवन् ॥६३॥

---

२०. समुद्रस्य नारायणांशत्वात् नारायणस्य गङ्गा भार्या इति युक्तमेव । तदुक्तं ब्रह्मवैवर्ते–
भविष्यति पतिस्तस्या वैकुण्ठेशश्चतुर्भुजः ।
भूगतायाश्च गङ्गायाः पतिश्च लवणोदधि रिति ॥

देवा ऊचुः–

भगवन्क्रियतामस्याः पृथिव्या भारसन्नतिम्।
शरीरकर्ता लोकानां त्वं हि नः परमा गतिः ॥६४॥

यत्कर्त्तव्यं महेन्द्रेण यमेन वरुणेन च।
यद्वा कार्यं धनेशेन स्वयं नारायणेन च ॥६५॥

गङ्गामुखाभिर्दिव्याभिःसरिद्भिर्वा सुरेश्वर।
क्षिप्रमाज्ञापय विभो कथमंशः प्रयुज्यताम् ॥६६॥

सुराणामेककार्याणां श्रुत्वैतन्निश्चितं वचः।
देवैः परिवृतः प्राह वाक्यं लोकपितामहः ॥६७॥

ब्रह्मोवाच–

रोचते मे सुरश्रेष्ठाः युष्माकमपि निश्चयः।
सृजध्वं स्वशरीरांशात् तेजसा तत्समान् भुवि ॥६८॥

सर्व एव सुरश्रेष्ठास्तेजोभिरवरोहत।
समुद्रेऽहं पुरा पूर्वे वेलामासाद्य पश्चिमाम् ॥६९॥

आसं सह तनूजेन कश्यपेन महात्मना।
कुर्वतस्तु कथास्ता मे समुद्रः सह गङ्गया ॥७०॥

शमाय मानयामास युक्तस्तोयदमारुतैः।
स वीचीविषमाकुञ्चन् गतिवेदतरङ्गिणीम् ॥७१॥

समं परिभवन्नेव स्वां वेलां समतिक्रमन्।
क्लेदयामास पवनैश्चपलैरम्बुनिर्झरैः ॥७२॥

तं च देशं व्यवसितं समुद्रोर्मिभिरन्दितुम्।
उक्तः संरब्धया वाचा शान्तोऽसीति ततो मया ॥७३॥

शान्तोऽसीत्युक्तमात्रस्तु तनुत्वं सागरो गतः।
स हि शान्ततरङ्गौघः स्थितो राजश्रिया ज्वलन् ॥७४॥

भूयश्चापि मया शप्तः समुद्रः सह गङ्गया।
सकारणां मतिं कृत्वा युष्माकं हितकाम्यया ॥
यस्मात्त्वं राजतुल्येन वपुषा समुपस्थितः।
गच्छार्णव महीपालो राजा वै त्वं भविष्यसि ॥७५॥

एवमप्यायतापाङ्गी गङ्गा सर्वाङ्गशोभना।
रूपिणी वै सरिच्छ्रेष्ठा तत्र त्वामुपयास्यति ॥७६॥

एवमुक्तः स संक्रुद्धः सोऽभिगम्यार्णवोऽब्रवीत्।
मां प्रमोदे च देवेश किमर्थं शप्तवानसि ॥७७॥
अहं तव विधेयात्मा त्वत्कृतस्त्वत्परायणः।
शप्तवान् सद्रसैर्वाक्यैरात्मजं मां किमात्मना ॥७८॥
भगवन् त्वत्प्रसादेन वेला पर्वणि वर्धिता।
यद्यहं चलितो ब्रह्मन् कोऽत्र दोषो ममात्मनः ॥७९॥
क्षिप्ताभिः पवनैरद्भिः क्षिप्तो यद्यपि पर्वणि।
अत्र में किन्तु भगवन् विद्यते शापकारणम् ॥८०॥
एवं यद्यपराधोहं कारणैस्त्वत्प्रकल्पितैः।
क्षन्तुमर्हसि वै ब्रह्मन् शापोऽयं विनिवर्त्तताम् ॥८१॥
अस्यादेशेन गङ्गाया गाङ्गतायास्त्वदाज्ञया।
मद्दोषसमदोषायाः प्रसादं कर्त्तुमर्हसि ॥८२॥

**ब्रह्मोवाच—**

तमहं श्लक्ष्णया वाचा प्रत्युवाच महार्णवम्।
शान्तिं व्रज न भेतव्यं प्रसन्नोऽस्मि महोदधे ॥८३॥
शापेस्मिन्सरितां नाथ भविष्यं शृणु कारणम्।
त्वं गच्छु भारते वंशे स्वदेहं स्वेन तेजसा ॥८४॥
आधत्स्व सरितां नाथ त्यक्त्वेमां सागरीं तनुम्।
महोदधे महीपालस्तत्र राजश्रियावृतः ॥८५॥
पालयंश्चतुरो वर्णान् रंस्यसे सलिलेश्वर।
इयं च ते सरिच्छ्रेष्ठा बिभ्रन्ती मानुषीं तनुम् ॥८६॥
तत्कालं रमणीयाङ्गी गङ्गा परिचरिष्यति।
वसवः प्रच्युताः स्वर्गात् प्रविष्टाः धरणीतलम् ॥८७॥
तेषामुत्पादनार्थाय त्वं मया विनियोजितः।
अष्टौ ते जाह्नवी गर्भानपत्यार्थं ददाम्यहम् ॥८८॥
उत्पाद्य तं बहून् शीघ्रं कृत्वा कुरुकुलं महत्।
प्रविष्टासि तनुं त्यक्त्वा पुनः सागरगामिनी ॥८९॥

**वैशम्पायन उवाच—**

इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत।
ओमित्युक्त्वा समुद्रोपि तथैव च चकार ह ॥९०॥

**विप्र उवाच–**

स शन्तनुरिति ख्यातः प्रतीपस्य सुतो भवत्।
स्त्री च गङ्गा विधेर्वाक्याद्बभूव प्रमदोत्तमा ।।९१।।
सा च त्वां चकमे वीरं स च तां जगृहे मुदा।
एवं महाभिषो राजा समुद्रांशेन शन्तनुः ।।९२।।
सोमवंशे समुत्पन्नो रिपुवंशदवानलः।
आख्यानमेतच्छृणुयात्पठेद्वा भक्तिमान्नरः ।।८३।।
प्राप्नोति कीर्त्तिमतुलां सर्वदुःखात् प्रमुच्यते।
धर्मार्थकाममोक्षाणां प्रापकं पापनाशनम् ।।९४।।
कथितं यत्त्वया पृष्टं किमन्यच्छ्रोतुमिच्छसि।
इति श्रुत्वा पुनः प्रष्टुं समारेभे चतुर्भुजः ।।९५।।

**इति नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे कलांशाविर्भावर्णनं नाम चतुर्दश-प्रकरणम् ।।१४।।**

## अथ पञ्चदश-प्रकरणम्

हे भूमिदेवाः श्रणुताधुना मम मनोगतम्।
संशयं शृण्वतो गङ्गां प्राकृताण्डविभेदिनीम् ।।१।।
या सागरान् समुद्धर्तुं ब्रह्मलोकादिहागता।
सैव किं गौतमी वाऽन्या केनानीतात्र भूतले ।।२।।
एतदिच्छाम्यहं श्रोतुं चरितं परमाद्भुतम्।
अव्यक्तरूपिणो विष्णोः स्वरूपं ब्रह्मणा भुवि ।।३।।
इति सत्यं महाभाग ! येभ्यो लोकहितं भवेत्।
येषां प्रसादाद्भगवानाशु तुष्यति केशवः ।।४।।
सर्वान्कामान् ददातीह गङ्गा चाशु प्रसीदति।

**विप्र उवाच–**

या गौतमी महाबाहो ! सैव गङ्गा न संशयः ।।५।।
कथयामास यत्सर्वं नारदाय चतुर्मुखः।
ब्राह्मे पुराणे गौतम्या माहात्म्यं तच्छृणुष्व नः ।।६।।

**तद्यथा, नारद उवाच–**

कमण्डलुस्थिता देवी महेश्वरजटागता ।
श्रुतं देव यथा मर्त्यमागता तद्व्रवीहि मे ॥७॥

**ब्रह्मोवाच–**

महेश्वरजटास्थायाश्चापोदेव्या महामते ।
तासां च द्विविधो भेद आहर्त्तृद्वयकारणात् ॥८॥
एकोऽसौ ब्राह्मणेनेज्याव्रतदानसमाधिना ।
गौतमेन शिवं पूज्य आहृतो लोकविश्रुतः ॥९॥
अपरस्तु महाप्राज्ञ क्षत्रियेण बलीयसा ।
आराध्य शंकरं देवं तपोभिर्नियमैस्तथा ॥१०॥
भगीरथेन राज्ञा च आहृतो ह्यपरस्तथा ।
एवं द्वैरूप्यमभवद् गंगाया मुनिसत्तम ॥११॥

**नारद उवाच–**

महेश्वरजटास्थाया हेतुना केन गौतमः ।
आहृतो क्षत्रियेणापि हेतुना केन तद्वद ॥१२॥

**ब्रह्मोवाच–**

यथानीता पुरा वत्स ! ब्राह्मणेनेतरेण च ।
तत्सर्वं विस्तरेणाहं वदिष्ये प्रीतये तव ॥१३॥
महेश्वरजटां स्थातुं गङ्गां दृष्ट्वा शिवप्रियाम् ।
सापत्न्यदोषतो ब्रह्मन ! द्वेषाक्रान्ता बभूव ह ॥१४॥
विनायकं जयां स्कन्दं रहो वाक्यमथाब्रवीत् ।
नैवायं त्रिदशेशानो गङ्गां त्यजति पुत्रकौ ॥१५॥
साऽपि प्रिया शिवस्याद्य कथं त्यजति तं प्रियम् ।
एतच्छ्रुत्वा तु तद्वाक्यं मातरं प्राह विह्वलाम् ॥१६॥
गणः स्कन्देन जयया सम्मन्त्र्येह च युज्यते ।
तत्कुर्मो मस्तकाद्गङ्गां यथा त्यजति मे पिता ॥१७॥
एतस्मिन्नन्तरे ब्रह्मन्ननावृष्टिरजायत ।
द्विर्द्वादश समा मर्त्ये सर्वप्राणिभयावहा ॥१८॥
स्रष्टुकामः पुरा पुत्र स्थावरं जङ्गमं तथा ।
कृतयज्ञो मया पूर्वं मद्देवयजनङ्गिरिः ॥१९॥

मन्नाम्ना स तु विख्यातस्ततो ब्रह्मगिरिः स्मृतः ।
तमाश्रित्य नरश्रेष्ठः सर्वदाऽऽस्ते स गौतमः ॥२०॥

तस्याश्रमे महापुण्ये श्रेष्ठे ब्रह्मगिरौ शुभे ।
आधयो व्याधयोऽद्यापि दुर्भिक्षं चाप्यवर्षणम् ॥२१॥

भयं शोकोऽथ दारिद्र्यं न श्रयन्ते कदाचन ।
यदैव गौतमो विप्रो ददाति च जुहोति वा ॥२२॥

तदैवाप्ययनं स्वर्गे सुराणामपि नान्यतः ।
तच्छ्रुत्वा मुनयः सर्वे नानाश्रमनिवासिनः ॥२३॥

गौतमाश्रममाद्रष्टुमागच्छन्ति यतस्ततः ।
तेषां मुनीनां सर्वेषामागतानां च गौतमः ॥२४॥

शिष्यवत् पुत्रवद्भक्त्या पितृवत्पोषकोऽभवत् ।
कृताञ्जलिः सवितरि गौतमस्तु तपोबलात् ॥२५॥

सर्वाः समृद्धयस्तस्य संसिद्ध्यन्ति ऋषेस्तदा ।
एवं च सन्स मुनिषु त्रैलोक्यख्यातिमाप्तवान् ॥२६॥

ततो विनायकः प्राह मातरं भ्रातरं जयाम् ।
देवानां सदने मातर्गीयते गौतमो द्विजः ॥२७॥

यत्नसाध्यं सुरगणै गौतमः कृतवानिति ।
एवं तद्गीयते देवि ब्राह्मणस्य तपोबलम् ॥२८॥

स विप्रश्चालयेदेनां गङ्गां हरजटाप्रियाम् ।
तपसा वाऽन्यतो वाऽपि पूजयित्वा च त्र्यम्बकम् ॥२९॥

तत्र नीतिर्विधातव्या तां विप्र ! श्रावयेद्यथा ।
इत्युक्त्वा मातरं भ्राता जयया च स विघ्नराट् ॥३०॥

जगाम गौतमो यत्र ब्रह्मरूपधरः कृशः ।
तत्र स्थित्वा कियत्कालमाश्रमे ब्राह्मणैः सह ॥३१॥

स्कन्देन सम्मतिं कृत्वा जयां प्राह गणेश्वरः ।
यथाऽन्यो नाभिजानाति कृत्वा गोरूपमात्मनः ॥३२॥

गौतमस्याश्रमं गत्वा शालिं खाद विनाशय ।
निवार्यमाणा तेन त्वं मृतकल्पाऽत्र निष्पत ॥३३॥

तथा चकार रूपं सा विघ्नस्वामिमते स्थिता ।
तस्यां निपतितायान्तु ब्राह्मणास्ते विनिर्ययुः ॥३४॥
दृष्ट्वा तु गौतमं क्लिष्टं ब्राह्मणाश्च तमब्रुवन् ।
तीर्थदेवस्वरूपिण्यां यस्यां गां च विधेर्बलात् ॥३५॥
पतितायां मुनिश्रेष्ठ गन्तव्यमवशिष्यते ।
चीर्णव्रतं पुनीतं त्वामेष्यामः पुनरेव हि ॥३६॥
अभ्यर्हितास्ततः सर्वे वन्द्यास्ते गौतमेन हि ।
निष्कृतिं मे वदन्त्वत्र पवित्रः स्यामथैनसः ॥३७॥
गणेशस्त्वब्रवीत्तत्र गौतमं मुनिवेशधृक् ।
महेश्वरजटाजूटे यदेतद्वारि तिष्ठति ॥३८॥
अवतार्य तु तद्भूमौ तपोबलविशेषतः ।
तेनाभिषिच्य चात्मानं ततः पूतो भविष्यति ॥३९॥
इत्युक्त्वा निर्ययुः सर्वे गणेशाद्याः स्वमाश्रमम् ।
निश्चित्य गङ्गानयनं गौतमोऽपि महायशाः ॥४०॥
कैलासं पर्वतं श्रेष्ठं गत्वा शिवमतोषयत् ॥
देवीं च विविधैस्तोत्रैर्जपहोमार्चनादिभिः ॥४१॥
ततस्तुष्टो महादेवस्तमुवाच मुनीश्वरम् ।
किन्तेऽभीष्टं करोम्यद्य ब्रूहि विश्रब्धमानसः ॥४२॥

**गौतम उवाच–**

जटास्थां सजटां गङ्गां देहि मे त्रिदशार्चित ! ।
यदि तुष्टोऽसि मे देव ! त्रयीधाम ! नमोऽस्तु ते ॥४३॥
इत्येवं प्रार्थितः शम्भुरन्यानपि तथा चरान् ।
लोकोपकारहृदयो यतस्वेति तमब्रवीत् ॥४४॥

**गौतम उवाच–**

इमां जटास्थां प्रभवां भाविनीं लोकमातरम् ॥४५॥
तव प्रियां जगन्नाथ उत्सृजन् ब्रह्मणो गिरौ ।
सर्वतस्तीर्थभूताऽस्तु यावद्गच्छति सागरम् ॥४६॥
ब्रह्महत्यादिपापानि मनोवाक्कायजानि तु ।
स्नानमात्रेण सर्वाणि विलयं यान्तु शङ्कर ! ॥४७॥

यदन्यत्रकरं पुण्यं स्नानदानादि संयमैः।
अस्यास्तु स्मरणादेव तत्पुण्यं जायतां हर! ॥४८॥

यत्र यत्र त्वियं याति यावत्सागरगामिनी।
तत्र तत्र त्वया भाव्यमेष मेऽस्तु वरः परः ॥४९॥

एकतः सर्वतीर्थानि स्वर्गे मर्त्ये रसातले।
एषा तेभ्यो विशिष्टाऽस्तु, अलं शम्भो! नमोऽस्तु ते ॥५०॥

तद्गौतमवचः श्रुत्वा तथास्त्वित्यब्रवीच्छिवः।
अस्याः परतरं तीर्थं न भूतं न भविष्यति ॥५१॥

इति सत्यं तपः सत्यं वेदे च परिनिष्ठितम्।
सर्वेषां गौतमी पुण्या इत्युक्त्वाऽन्तरधीयत ॥५२॥

**तद्यथा च शिवपुराणे विशेषः—**

ततस्तु शङ्करो देवः पृथिव्याश्च दिवश्च सः।
सारं चैव समुद्धृत्य रक्षितं पूर्वमेव यत् ॥५३॥
विवाहे ब्रह्मणो दत्तं यद्विशिष्टं च किञ्चन ॥५४॥

तत्तस्मै दत्तवान् शम्भुः भक्तवत्सलतां गतः।
स्थापयन् भुवने तस्य गौतमस्य महात्मनः ॥५५॥

**ब्राह्मे तु,**

आदाय गौतमो गङ्गां शुचिः प्रयतमानसः।
पूजितो देवगन्धर्वैः तथा गिरिनिवासिभिः ॥५६॥

गिरेर्मूर्ध्नि जटां स्थाप्य स्मरन्देवं च त्र्यम्बकम्।
उवाच प्राञ्जलिर्भूत्वा गङ्गां स द्विजसत्तमः ॥५७॥

त्र्यम्बकस्य जटोद्भूते! सर्वकामप्रदायिनि!
क्षमस्व मातः श्रान्तासि सुखं व्रज हितं कुरु ॥५८॥

एवमुक्त्वा गौतमे च गङ्गा प्रोवाच गौतमम्।
दिव्यरूपधरा देवी दिव्यवस्तुविलेपना ॥५९॥

गच्छेयं देवसदनमथवापि कमण्डलुम्।
रसातलं वा गच्छेयं ततस्त्वं सत्यवागसि ॥६०॥

**गौतम उवाच—**

त्रयाणामुपकारार्थं लोकानां याचिता मया।
शम्भुना चापि दत्ता त्वं देवि! तन्नान्यथा भवेत् ॥६१॥

तद्गौतमवचः श्रुत्वा गङ्गा मेने द्विजेरितम्।
त्रिधाऽऽत्मानं विभज्यैषा स्वर्गे मर्त्ये रसातले ॥६२॥
स्वर्गे चतुर्द्धा न्यगमत् सप्तधा मर्त्यमण्डले।
रसातले चतुर्द्धैव सैवं पञ्चदशाकृतिः ॥६३॥
उत्सृष्टा गौतमेनैव प्रायात्पूर्वार्णवं प्रति।
त्रियम्बकं सुरेशानं प्रथमं पूज्य गौतमः ॥६४॥
उभयोस्तीरयोः स्नानं करोमीति मतिं दधौ।

**विप्र उवाच–**

ब्राह्मे पुराणे चैतस्या माहात्म्यमतिविस्तरात् ॥६५॥
गदितं विधिना त्वत्र कथितं ते समासतः।
श्रूयतां महिमा सोऽस्या शैवे यः समुदीरितः ॥६६॥

**तद्यथा शैवे सूतः शौनकं प्रति–**

गङ्गां चैव तदा दृष्ट्वा पञ्चवट्यां हरिः स्वयम्।
जगतः पावनार्थं च स्मितोऽसौ रघुनन्दनः ॥६७॥
पूर्वं गङ्गा ततो विष्णुः शिवः किं दुर्लभं भवेत्।
आजन्ममरणाद्वासाद्वाराणस्यां च यत्फलम् ॥६८॥
तत्फलं याममात्रेण पञ्चवट्यां निवासिनः।

**विप्र उवाच–**

एवं सा गौतमीनाम्ना गङ्गा त्रैलोक्यपावनी ॥६९॥
तदा प्रभृति विख्याता भुवि गौतमपूजिता।
य इमं शृणुयान्मर्त्यो सम्बादं सुरपूजितम् ॥७०॥
भुक्तिमुक्तिप्रदं पुण्यं गङ्गास्नानफलं लभेत् ॥७१॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे गौतमीवर्णनं नाम पञ्चदशप्रकरणम् ॥१५॥**

## अथ षोडश-प्रकरणम्

**विप्र उवाच—**

**यथेयं गौतमी प्रोक्ता तथैवं काश्यपी स्मृता।**
**खण्डे पाद्मोत्तरेत्वीशः पार्वतीं प्रोक्तवानिदम् ॥१॥**

**तद्यथा शिववाक्यं पार्वतीं प्रति— शिव उवाच—**

कदाचित्कश्यपमुनिः गतोऽसौ निमिषं प्रति।
तदा तै ऋषिभिः सार्धं कथाश्चक्रुरनेकशः ॥२॥
तदा द्विजवरैः साकं सम्यगुक्तं वरानने!
भो कश्यप! शृणुष्व त्वं गङ्गामानीय तां प्रभो! ॥३॥
तव नाम्ना तु सा गङ्गा भविष्यति सरिद्वरा।
तेषां वाक्यमुपाकर्ण्य नमस्कृत्वा द्विजांश्च तान् ॥४॥
आगतो ह्यर्बुदारण्ये भारतीतीरसन्निधौ।
तत्र तप्तं तदा तेन तपः परमदुर्द्धरम् ॥५॥
आराधितो ह्यहन्तेन कश्यपेन द्विजेन वै।
प्रत्यक्षोऽहं तदा जातस्तस्य द्विजवरस्य च ॥६॥
वरं वरय भद्रन्ते यत्ते मनसि वर्तते।

**कश्यप उवाच—**

वरं दातुं समर्थोऽसि देवदेव जगत्पते! ॥७॥
शिरःस्थितेयं गङ्गा या पवित्रा पापहारिणी।
मम देहि विशेषेण महादेव नमोस्तु ते ॥८॥
यदा देवि! मयोक्तं च गृहीष्व त्वं द्विजोत्तम!
जटामेकां परित्यज्य दत्ता गङ्गा तदा मया ॥९॥
तां गृहीत्वा द्विजश्रेष्ठः स्वस्थानमग्रतो ययौ।
कासरन्ध्रं नामतीर्थं वासो वै कश्यपस्य च ॥१०॥
गतस्तत्र तु देवेशो मुनिभिः परिवारितः।
कश्यपेन समानीता काश्यपी या सरिद्वरा ॥११॥
यस्या दर्शनमात्रेण ब्रह्महा मुच्यते किल।
पूर्वं भगीरथेनैव याचितोऽहं तु पार्वति! ॥१२॥
तदा दत्ता मया गङ्गा विष्णो र्लोकमभीप्सुना।
कश्यपाय पुनर्दत्ता ऋषीणां वचनाद्यतः ॥१३॥
कृते कृतवती नाम त्रेतायां गिरिकर्णिका।
द्वापरे चन्दना ख्याता भ्रमन्ती सा स्मृता कलौ ॥१४॥

दिने दिने विशेषेण स्नानार्थं च नराश्च ये।
सर्वपापविनिर्मुक्ता यान्ति विष्णोः परम्पदम् ।।१५।।
लक्षावतरणे तीर्थे सरस्वत्यां तथेश्वरि !
केदारे च कुरुक्षेत्रे यत्फलं स्नानतो भवेत् ।।१६।।
तत्फलं लभते नित्यं भ्रमन्त्यां च दिने दिने।
भवतीति न सन्देहो व्यासस्य वचनं यथा ।।१७।।

**विप्रा ऊचुः—**

शृणुयाद्यः पठेद्वापि शुद्धचित्तः समाहितः।
सर्वान्कामानवाप्नोति गङ्गास्नानफलं लभेत् ।।१८।।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे काश्यपीवर्णनं नाम षोडशप्रकरणम् ।।१६।।**

## अथ सप्तदश-प्रकरणम्

इतिहासमिमं गाङ्गं श्रुत्वा कौतूहलान्वितः।
प्राञ्जलिः प्रणतो विप्रानपृच्छत्कुलनन्दनः ।।१।।
श्रुतो यो दण्डकारण्ये नाम्ना ह्यत्रीश्वरो हरः।
तत्सन्निधौ समायाता यथा गङ्गा ब्रुवन्तु तत् ।।२।।

**विप्रा ऊचुः—**

सूतशौनकसंवादः शैवे यः समुदीरितः।
तत्त्वं शृणु महाप्राज्ञ ! यथा ह्यत्रीश्वरान्तिगा ।।३।।

**तद्यथा; सूत उवाच—**

दक्षिणस्यां दिशि यच्च कामदं नाम वै वनम्।
तत्र च ब्रह्मणः पुत्रोह्यत्रिनामा ऋषिः स्वयम् ।।४।।
तपस्तपति यत्साक्षादनुसूयासमन्वितः।
पूर्वं कदाचित्तत्रैवानावृष्टिः शतवार्षिकी ।।५।।
जलं नैव पृथिव्यान्तु, दृश्यन्ते ऋषिसत्तमाः।
वृक्षाः शुष्का यदा सर्वे पल्लवानि फलानि ह ।।६।।
आवर्तं चैव भूतानां दृष्ट्वा च ऋषिसत्तमः।
समाधौ च विलीनोऽभूदासने संस्थितः स्वयम् ।।७।।
स्वामिनि ध्यानलीने च शिष्यास्ते दूरतो गताः।
अन्नं विना तदा ते तु मूर्च्छानां च गताः क्षणात् ।।८।।
तदा चैकाकिनी पत्नी सेवयामास तं मुदा।
पार्थिवं सुन्दरं कृत्वा मन्त्रेण विधिपूर्वकम् ।।९।।

मानसैरुपचारैश्च पूजयामास शङ्करम्।
दैत्याश्च दानवाः सर्वे दृष्ट्वा तां सुन्दरीं तदा ॥१०॥
विकलाश्चाभवँस्तत्र तेजसा दूरतः स्थिताः।
तस्य वै तपसा सर्वे तस्याश्च भजनेन च ॥११॥
देवाश्च ऋषयश्चैव गङ्गाद्याः सरितस्तथा।
विस्मयं परमं गत्वा दर्शनार्थं समाययुः ॥१२॥
धन्येयञ्च तथा धन्यश्चाभ्यां च क्रियते तपः।
तयोरेवं प्रशंसां च कृत्वा ते तु यथागतम् ॥१३॥
गतास्ते च यदा तत्र गङ्गा च गिरिशं विना।
गङ्गा च भजते प्रीता साध्वी धर्मविमोहिता ॥१४॥
अस्याश्चैवोपकारञ्च मत्वा गच्छाम्यहं पुनः।
शिवोऽपि ध्यानबद्धोऽपि गतो नैव कृपां विना ॥१५॥
कदाचिच्च ऋषिश्रेष्ठो ह्यत्रिर्ब्रह्मविदाम्बरः।
अग्रतश्च जलं देहीत्युवाच स प्रियां प्रति ॥१६॥
साऽपि साध्वीत्यवश्यं च गृहीत्वाऽस्य कमण्डलुम्।
जगाम च वने तत्र जलं चानीयते कुतः ॥१७॥
किं करोमि क्व गच्छामि दृश्यते नैव मे जलम्।
इति विस्मयमापन्नां दृष्ट्वा गङ्गा सरिद्वरा ॥१८॥
प्रसन्नाऽस्मि च ते देवि! तवाज्ञां च करोम्यहम्।
तद्वचश्च तदा श्रुत्वा ऋषिपत्नी वचः स्वयम् ॥१९॥
बभाषे विस्मयाविष्टा दधती तं कमण्डलुम्।

**अनुसूयोवाच–**

का त्वं कमलपत्राक्षी कुतो वा त्वं समागता ॥२०॥
इत्युक्ते तु तया तत्र गङ्गा वाक्यमथाब्रवीत्।

**गङ्गोवाच–**

स्वामिनो सेवनं दृष्ट्वा शिष्यस्य च तथैव च।
साध्वी धर्मं च ते वीक्ष्य स्थिताऽस्मि तव सन्निधौ ॥२१॥
अहं गङ्गा समायाता भज मां त्वं शुचिस्मिते!।
वशीभूता ह्यहं जाता यदिच्छसि वृणुष्व तत् ॥२२॥
इत्युक्ते गङ्गया साध्वी नमस्कृत्य पुरः स्थिताम्।
उवाच च जलं देहि प्रसन्ना त्वं ममाधुना ॥२३॥
इत्येतद्वचनं श्रुत्वा गर्तं कुर्विति साब्रवीत्।
शीघ्रं यावत्कृतो गर्त्तः स्थिता च क्षणमात्रतः ॥२४॥

तत्र सा तु प्रविष्टा च जलरूपमभूत्तदा ।
आश्चर्यं च परं मत्वा गृहीतं च तया जलम् ॥२५॥
उवाच वचनं ह्येतल्लोकानां सुखहेतवे ।
यदि त्वं च प्रसन्ना मे कृपा च वर्त्तते मयि ॥२६॥
तावत्त्वया च स्थातव्यं यावत्स्वामी समाव्रजेत् ।

**गङ्गोवाच–**

तदा तां च मया च स्थीयते यदा ॥२७
यदा त्वं वर्षमात्रस्य फलं दास्यसि मेऽनघे !
इत्युक्ते च तया तत्र ह्यनयाऽपि कृतं तथा ॥२८॥
गृहीत्वा च जलं तच्च दुर्लभं सर्वदेहिनाम् ।
आनीय स्वामिने दत्तं दत्वा च पुरतः स्थिता ॥२९॥
ऋषिश्चापि जलेनैव स्वाचम्य विधिपूर्वकम् ।
पपौ शुभं जलं तच्च पीयते तज्जलं न हि ॥३०॥
इति विचार्य तेनैव परितश्चावलोकितम् ।
शुष्कान्वृक्षान् तथाऽऽलोक्य दिशो वीक्ष्यान्तरा स्थिताः ॥३१॥
उवाच तां ऋषिश्रेष्ठः न जातं वर्षणं पुनः ।
कुतस्त्वयेदमानीतं जलं देवैश्च दुर्लभम् ॥३२॥
तदुक्तं तत् समाकर्ण्य नैवाहेति प्रिया तदा ।
तामुवाच पुनः सोपि जलं नीतं कुतस्त्वया ॥३३॥
इत्युक्तं च तदा तेन विस्मयं परमं गता ।
निवेदिते मया चेद्वै तदोत्कर्षो भवेन्मम ॥३४॥
निवेद्यते यदा नैवं व्रतभङ्गो भवेन्मम ।
नोभयं च यथा स्याद्वै निवेद्यं तद्यथा मया ॥३५॥
इति यावद्विचार्यैतत्तावत्पृष्टा पुनः पुनः ।
उवाच श्रूयतां स्वामिन् यथावत् कथयामि ते ॥३६॥

**अनुसूयोवाच–**

शंकरस्य प्रतापाच्च तवैव पूजनात्तथा ।
गङ्गा समागताऽत्रैव तदीयन्तु जलं शुभम् ॥३७॥
एवं तस्याः वचः श्रुत्वा पुनर्विस्मितमानसः ।
उवाच सुन्दरि त्वं च सत्यं चाप्यव्यलीककम् ॥३८॥
ब्रवीषि च यथार्थं त्वं न मन्ये दुर्लभं त्विदम् ।
असाध्यं योगिभिर्यच्च देवैरपि सदा शुभे ! ॥३९॥

तच्चैवाद्य कथं जातं विस्मयः परमो मम।
यद्येवं दृश्यते चेद्वै तन्मन्येऽहं च नान्यथा ॥४०॥
इति तस्य वचः श्रुत्वा स्वामिनो वचनं पुनः।
उवाच मनसा साध्वी स्मृत्वा देवीं त्रिलोकगाम् ॥४१॥
आगम्यतां त्वया नाथ! द्रष्टुमिच्छा भवेद्यदि।
इत्युक्त्वा तु समादाय गता यत्र सरिद्वरा ॥४२॥
दर्शयामास तां तत्र गर्ते च संस्थितां स्वयम्।
तत्र गत्वा ऋषिश्रेष्ठः गर्तं च जलपूरितम् ॥४३॥
आकण्ठं सुन्दरं दृष्ट्वा धन्येयमिति चाब्रवीत्।
किं मदीयं तपश्चैव किमन्येषां पुनस्तथा ॥४४॥
साध्वीव्रतप्रभावश्च येन गङ्गा समागता।
यस्याम्बुकणसंस्पर्शान्महापापलयो भवेत् ॥४५॥
इन्द्रादयो लोकपाला यां वाञ्छन्त्यनिशं सदा ॥४६॥
एवं स्तुत्वा च संस्नातः सुभगे सुसुखं जले।
आचम्य पुनरेवाथ स्तुतिं चक्रे पुनः पुनः ॥४७॥
अनुसूया च संस्नाता सुन्दरे च जले तदा।
नित्यं कृत्वा पुनः सोऽपि सापि चैव तथा पुनः ॥४८॥
तदोवाच पुनर्गङ्गा गम्यते च मयाऽधुना।
इत्युक्ते च पुनः साध्वी तामुवाच सरिद्वराम् ॥४९॥
यदि प्रसन्ना देवेशि! यद्यस्ति च कृपा मयि।
नैनं गर्तं परित्यज्य गङ्गे! मा याहि साम्प्रतम् ॥५०॥
तदीयं तद्वचः श्रुत्वा गङ्गा वाक्यमथाब्रवीत्।
शङ्करार्चनसम्भूतं फलं वर्षस्य यच्छसि ॥५१॥
स्वामिनश्च फलं चैव यच्छसि पूजनोद्भवम्।
तदा स्थास्ये वरारोहे! लोकानामुपकारणात् ॥५२॥
यथा दानैर्न सन्तुष्टिः स्नानेनैव पुनः पुनः।
यज्ञेनैव तथा योगैः यथा पातिव्रतेन च ॥५३॥
पतिव्रतां यथा दृष्ट्वा मनसः प्रीणनं भवेत्।
तस्माच्च यदि लोकस्य हितार्थं त्वं प्रयच्छसि ॥५४॥
तस्माच्च स्थिरतां यास्ये यदि कल्याणमिच्छसि।
इत्येवं वचनं श्रुत्वा ददौ वर्षसमुद्भवम् ॥५५॥
तद्दिनं हि समारभ्य गङ्गा वासं चकार ह।
तत्रैव ऋषयो दिव्याः समाजग्मुः सहाङ्गनाः ॥५६॥

सर्वाणि यानि तीर्थानि सर्वे देवाः समागताः ।
अत्रीश्वरश्च नामासीदीश्वरः परदुःखहा ॥
अत्रीश्वरस्य माहात्म्यं श्रुत्वा कल्याणमाव्रजेत् ॥५७॥

**इति नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे अत्रीश्वरीमाहात्म्यवर्णनं नाम सप्तदशप्रकरणम् ॥१७॥**

## अथ अष्टादश-प्रकरणम्

**विप्रा ऊचुः–**

कथिता ते महाभाग ! गङ्गा ह्यत्रीश्वरान्तिगा ॥१॥
वैश्यवंशावतंसाथ किमन्यच्छ्रोतुमिच्छसि ।
निशम्य गदितं विप्रैः प्रत्युवाच चतुर्भुजः ।
श्रुतं यैर्यैस्तदाख्यानं गङ्गायाः पावनं शुभम् ।
तथापि नैव तृप्तिर्मे जायते द्विजसत्तमाः ।
तथान्यं कृष्णगङ्गायाश्चरितं वक्तुमर्हथ ।

**विप्रा ऊचुः–**

माहात्म्यं कृष्णगङ्गाया वाराहो भगवानिदम् ।
पुराणे शौकरे पुण्यं धरणीं प्रत्युवाच ह ॥२॥
कथयिष्यामहे सर्वं पवित्रं प्रयतः शृणु ।

**वाराह उवाच–**

शृणु चान्यद्वरारोहे ! कृष्णागङ्गासमुद्भवम् ॥३॥
यमुनास्रोतसि स्नात्वा कृष्णद्वैपायनो मुनिः ।
ध्यात्वा मनसि गङ्गां तां कालिन्द्यां पापहारिणीम् ॥४॥
नित्यकालं च कुरुते तत्र तीर्थजलाप्लुतिम् ।
सोमवैकुण्ठयोर्मध्ये कृष्णगङ्गेति कथ्यते ॥५॥
यत्रातप्यत्तपो व्यासो मथुरायां स्थितोऽमलः ।
पञ्चालस्तु द्विजः कश्चिद्वाणिज्यं तृत्तिमास्थितः ॥६॥
समागतो मधुपुरीं क्रयविक्रयकाम्यया ।
भगिनीं बालविधवां वेश्याभिः सह सङ्गताम् ॥७॥
स वै चकार तां भार्यां साऽपि तं चकमे किल ।
एवं तयोर्निवसतोः स्वेच्छया रममाणयोः ॥८॥
व्यतीयाय महान् कालो भीष्मेनाङ्गीकृतश्च यत् ।
एकदा कृष्णागङ्गायास्तीरे स्नातुं गतो द्विजः ॥९॥

तं ददर्श समायान्तं सुमन्तुर्ऋषिसत्तमः।
कृमिभिर्व्याप्तसर्वाङ्गं दृष्ट्वा तं मुनिरब्रवीत् ॥१०॥
कस्त्वं कस्यास्ति सुभग ! का जातिः कश्च ते पिता।
किं करोषि दिवारात्रौ ब्रूहि त्वं पृच्छतो मम ॥११॥
तस्मिंस्तु पितरौ मे हि वसन्तौ स्म यदृच्छया।
दुर्भिक्षपीडिते राष्ट्रे गतौ तौ दक्षिणापथम् ॥१२॥
आश्चर्यं तव देहेऽस्मिन् नित्यं पश्यामि निःसृतम्।
अस्नाते कृमिसम्पूर्णं स्नाते निर्मलवर्चसम् ॥१२॥
अस्ति किञ्चिन्महत्पापं तव प्रच्छन्नसम्भवम्।
अत्र तीर्थप्रभावाच्च स्नानाद् गच्छति दूरतः ॥१३॥
इति तस्य मुनेः श्रुत्वा त्रिकालज्ञस्य भाषितम्।
किञ्चिन्नोवाच पृष्टोऽपि एवमेव गतः पुनः ॥१४॥
तस्यां रात्र्यां स चैकान्तं तां तु पप्रच्छ सादरम्।
अतिनिर्बन्धपृष्ठा सा किञ्चिन्नोवाच तं प्रति ॥१५॥
पुनः पुनश्च पप्रच्छ सा चोवाच न किञ्चन।
त्यक्ष्यामि हि प्रियान् प्राणान् यदि सत्यं न वक्ष्यसि ॥१६॥
निर्बन्धं तस्य तं ज्ञात्वा दुःखेनोवाच तं प्रति।
पञ्चाल ! पितरौ मे हि वसन्तौ स्म यदृच्छया।
दुर्भिक्षपीडिते राष्ट्रे गतौ तौ दक्षिणापथम् ॥२०॥
नर्मदादक्षिणे कूले ब्राह्मणानां पुरोत्तमे।
तस्मिन् स्थाने मम पितुःपञ्चपुत्राः मया सह ॥२१॥
जाता तेषामहं षष्ठा कनिष्ठा विधवाऽभवम्।
योऽसौ कनिष्ठको भ्राता श्रीमज्जेष्ठश्च पञ्चमः ॥२२॥
बाल एव गतो देशं धनतृष्णाप्रलोभतः।
तस्मिन् गतेऽथ पितरौ कालधर्ममुपागतौ ॥२३॥
तीर्थेऽस्मिन्नस्थिपातार्थमहमेका समागता।
अत्र स्नानपरा नित्यं देवब्राह्मणवन्दनम् ॥२४॥
कुर्वती वा समापन्ना आसां च वशमागता।
आश्रिता कुलटाधर्मं कुलनाशो मया कृतः ॥२५॥
कुलद्वये च पुरुषा एकविंशतिसंख्यया।
नीता नरकमत्युग्रं मया पापिष्ठया भृशम् ॥२६॥
एतच्छ्रुत्वा च पञ्चालो मूर्च्छितो धरणीं गतः।
ततः स विमना जातो अगम्यागमनेन च ॥२७॥

प्रायश्चिते मतिरभूत् निर्विण्णस्य दुरात्मनः ।
ब्रह्महा च सुरापी च ब्राह्मणो यदि जायते ॥२८॥
प्रायश्चित्तं विनिर्दिष्टं मुनिभिर्देहनाशनम् ।
मातरं गुरुपत्नीं च स्वसारं पुत्रिकां वधूम् ॥२९॥
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ।
इत्युक्तो मुनिभिस्तत्र मरणे कृतनिश्चयः ॥३०॥
रत्नं वस्त्रं धनं धान्यं यत्किञ्चित्तत्र संस्थितम् ।
तत्सर्वं ब्राह्मणेभ्यश्च दत्त्वाऽशेषं ददौ धनम् ॥३१॥
कृष्णागङ्गोद्भवे तीर्थे चितां कृत्वा विधानतः ।
आत्मनश्च विशुद्ध्यर्थे प्रजज्वाल हुताशनम् ॥३२॥
सुमन्तोः प्रवरस्याथ पादौ जग्राह धर्मवित् ।
प्रत्युवाच मुनिं भद्रे ! दुष्कृतं मनसा स्मर ॥३३॥
अगम्यागमनाच्चैव पापं जातं मम प्रभो !
भगिन्या सह संयोगो जातोऽयं कुलनाशकः ॥३४॥
त्वया निर्मलदृष्ट्या च वीक्षितोऽहं पुरा मुने !
कृमयो मम गात्रात्तु निर्गच्छन्तो हि नित्यदा ॥३५॥
कृष्णागङ्गाप्रभावेण पुनर्निर्मलतां गतम् ।
तत्सर्वं मम सञ्जातमगम्यागमपातकम् ॥३६॥
तत्पापस्य विशुद्ध्यर्थं देहत्यागं करोमि वै ।
अनुज्ञां देहि भो स्वामिन् ! ते पादावभिवन्दये ॥३७॥
एवं विश्राव्य तत्पापं चितां दीप्य घृतोक्षिताम् ।
प्रवेष्टुकामं तत्राग्नौ तत्रोवाचाशरीरिणी ॥३८॥
मैवं कार्षीः साहसं च विपाप्मा त्वं तु सुव्रत !
कस्माद्वा कस्य सन्त्रासान्मरणे कृतनिश्चयः ॥३९॥
यत्र कृष्णस्य सञ्चारः क्रीडितञ्च यथासुखम् ।
चक्राङ्कितपदा तेन स्थानं ब्रह्मसमं शुभम् ॥४०॥
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे च यत्कृतं पापं वज्रलेपो भविष्यति ॥४१॥
द्वावेतौ च यथावश्यं गङ्गासागरसङ्गमे ।
सकृदेव नरः स्नात्वा मुच्यते ब्रह्महत्यया ॥४२॥
पृथिव्यां यानि तीर्थानि सर्वाण्येवाभिषेचनात् ।
तत्पञ्चतीर्थस्नानेन समं नास्त्यत्र संशयः ॥४३॥

एकादश्यां च विश्रान्तौ द्वादश्यां सौकरे तथा ।
त्रयोदश्यां नैमिषे च प्रयागे च चतुर्दशी ॥४४॥
कार्तिक्यां पुष्करे चैव कार्तिकस्य सितासिते ।
कालेष्वेषु नरः स्नात्वा सर्वपापं व्यपोहति ॥४५॥
मथुरायां पञ्चतीर्थे विश्रान्तौ पञ्चसंज्ञिके ।
सरस्वत्या मसीकुण्डे तथा कालिञ्जरस्य च ॥४६॥
पंचतीर्थेऽभिषेकाच्च यत्फलं लभते नरः ।
कृष्णागङ्गादशगुणं लभते च दिने दिने ॥४७॥
इत्येतद्वचनं श्रुत्वा सुमन्तुर्ऋषिसत्तमः ।
सान्त्वयन्मधुरालापैः पाञ्चालं प्रत्युवाच ह ॥४८॥

**सुमन्तुरुवाच—**

आकाशवाग्वदति यत्तत्सत्यं नानृतं क्वचित् ।
मया प्रत्यक्षतः पूर्वं तव गात्रेषु पातकम् ॥४९॥
दिने दिने च तत् स्नानाद् द्रुत्या गच्छति नित्यशः ।
आश्रमे त्वं स्थितश्चात्र निर्मलश्च शशी यथा ॥५०॥
तिष्ठ परमतः पापात् भविष्यसि न संशयः ॥५१॥

**वाराह उवाचः—**

इत्युक्तौ तेन मुनिना तत्र वासं प्रचक्रतुः ।
अनिवर्त्तिगतिं यातौ तत्तीर्थस्य प्रभावतः ॥५२॥
एष प्रभावो तीर्थस्म मथुरायां वसुन्धरे !
कृष्णागङ्गोद्भवस्यापि तथा कालिञ्जरस्य च ॥५३॥
सप्तजन्मकृतं पापं नरः स्नानाद्व्यपोहति ।
श्रुत्वा च गोशतस्यापि दत्तस्य फलमाप्नुयात् ॥५४॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे कृष्णागङ्गावर्णनं नाम सप्तदशप्रकरणम् ।।१७।।**

## अथ अष्टादश-प्रकरणम्

**विप्रा ऊचुः—**

श्रुतं त्वयैतन्माहात्म्यं कृष्णगङ्गासमुद्भवम् ।
यथा लोहार्गले गङ्गा कोटिका नाम तच्छृणु ॥१॥
सूतशौनकसंवादं पाद्मं ते वर्णयामहे ॥२॥

**ऋषय ऊचुः—**

तिस्रः कोट्योऽर्धकोटी च तीर्थानां द्विजसत्तम !
ये देशा मेध्यतां प्राप्तास्तीर्थख्यातिं समागताः ॥३॥
चतुर्भेदसमुत्पन्नाः क्षेत्रारण्यनदीह्रदाः ।
तेषां ब्राह्मणशार्दूल ! सुविख्याताः जगत्त्रये ॥४॥
तेषां मध्ये महाभाग ! सम्यग्वीक्ष्य तदुच्यताम् ।
क्षेत्रं वा यदि वाऽरण्यं नदी वा यदि वा नदः ॥५॥
एतेषामिह सर्वेषां यत्पुण्यं तत् प्रकीर्तय ।

**सूत उवाच—**

पृथिव्यां सर्वतीर्थानि पवित्राणि जगत्त्रये ॥६॥
नैमिषं भगवत्क्षेत्रं पुष्करं द्विजसत्तमाः !
लोहार्गलं तथा तीर्थं सर्वपापहरं परम् ॥७॥
एतत्तीर्थत्रयं विप्राः ! सद्यः पातकनाशनम् ।
दर्शनादेव मर्त्यानां किं पुनः स्नानकर्मणा ॥८॥
यतः श्रेष्ठं प्रवक्ष्यामि त्रयाणां कतमन्तु वः ।
एतेषां मध्यतस्तीर्थं सर्वपातकनाशनम् ॥९॥

**ऋषय ऊचुः—**

यदेतद्भवता प्रोक्तं तीर्थानां तीर्थमुत्तमम् ।
लोहार्गलं कथं जातं पवित्रं हि जगत्त्रये ॥१०॥
यथोत्पन्नं कृतं येन यत्प्रमाणं यथा स्थितम् ।
तदस्माकं वद स्वामिन्सूतपुत्र ! महामते ! ॥११॥

**सूत उवाच—**

अनाद्यमेतद्विप्रेन्द्राः साकारं तपसा कृतम् ।
पुरा पृष्टेन विधिना देवानामुक्तमादरात् ॥१२॥
अमायां सोमयुक्तायां शाकमूलफलैः द्विजाः ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥१३॥

**ऋषय ऊचुः—**

यदेतद् भवता प्रोक्तं सर्वकोटिगुणं भवेत्।
अमायां सोमयुक्तायां किं तीर्थे न द्विजोत्तम ! ॥१४॥
स्वरूपं तस्य योगस्य तद्वत्तस्य प्रकीर्त्तय।
कस्मिन् काले महाभाग सर्वं कोटिगुणं भवेत् ॥१५॥

**सूत उवाच—**

अमार्कश्रवणोपेता युक्ता वै पौषमाघयोः।
लोहार्गले कृतं स्नानं दत्तं कोटिगुणं भवेत् ॥१६॥
अमायां फाल्गुने मासि कर्त्तव्यः शिवजागरः।
रुद्रकुण्डे कृतं स्नानं काममोक्षहितार्थदम् ॥१७॥
संक्रान्तौ विप्र ! यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः।
कुह-कुण्डे कृते स्नाने तत्सर्वं प्रतिलभ्यते ॥१८॥

**ऋषय उचुः—**

सूतपुत्र ! त्वया प्रोक्तं सत्यं च कथयस्व नः।
किं तीर्थं स्नानयोगं च उत्पन्नं कस्य मण्डले ॥१९॥
आराध्यते कथं देवैः किं पापं च हरत्यसौ।
अल्पकष्टं बहुफलं सुतीर्थं शुभकर्मदम् ॥२०॥
कथयस्व महाभाग ! लभ्यते किं फलं तथा।

**सूत उवाच—**

श्रूयतां च द्विजाः ! सर्वे पूर्ववृत्तान्तरं यथा ॥२१॥
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥२२॥
एतस्मिन्नन्तरे काले ब्रह्मलोकागतं मुनिम्।
ददृशुः सर्वदेवास्तं नारदं स्वयमागतम् ॥२३॥
प्रणिपत्य सुराः सर्वे सत्यं सम्भाष्यते सदा।
धन्यस्त्वं तु ऋषिश्रेष्ठ ! विष्णुभक्तिपरायण ! ॥२४॥
यत्र गच्छति कल्याण ! कल्याणं भवते सदा।
एवं वदत्सु देवेषु ब्रह्मा प्रोवाच नारदम् ॥२५॥

**ब्रह्मोवाच—**

भो नारद ऋषिश्रेष्ठ ! सत्यधर्मपरायण !
मर्त्यधर्मं समासाद्य किं पुनः श्रूयते त्वया ॥२६॥
यत्किञ्चित्सर्वलोकानां पापसम्बन्धनाशनम्।
स्नानं कस्मिन्कदा काले सुपुण्यं कथयस्व मे ॥२७॥

**नारद उवाच–**

श्रृणु तात ! प्रवक्ष्यामि पृथ्वीधर्मं समाश्रितः ।
यं धर्मं मानवाः सर्वे धारयन्ति सखेचराः ॥२८॥
एकं स्थानं प्रवक्ष्यामि नाम्ना लोहार्गलं च यत् ।
यत्तत्समाधियोगेन तपो घोरं महेश्वरः ॥२९॥
तत्र स्थानेष्वगस्त्याद्यै मुंनिभिः सहितेन च ।
पार्वतीप्राणनाथेन तपस्तप्तं सनातनम् ॥३०॥
पञ्चभार्याः महादेव सेवां कुर्वन्त्यहनिर्शम् ।
गङ्गा[२१] सगिरिजा तत्र क्रीडते च सदैव हि ॥
सन्ध्या सरस्वती गौरी ताभिस्तत्र कृतस्थितिः ॥३१॥
सर्वसौभाग्यदायिन्यः परस्परविवादतः ।
गृणन्ति तत्र भूतानि सर्वं तेभ्यः पृथक् पृथक् ॥३२॥
तस्मिन् काले गतश्चाहं नागपर्वतरोधसि ।
दृष्ट्वा तु ऋषयः सर्वे नारदं मां समागतम् ॥३३॥
प्रणम्य शिरसा पादौ स्वागतं च तथाब्रुवन् ।
भो नारद ! कथां सत्यां स त्वं भाषयसे यथा ॥३४॥
सन्ध्या सरस्वती देवी गौरी गङ्गा च पार्वती ।
परस्परविरोधेन काऽपि सौभाग्यदायिनी ॥३५॥
का नारी गुणसम्पन्ना सरूपा चाभिमानिनी ।
सौभाग्यं कस्य दत्तं च सत्यमेतद्वदस्व नः ॥३६॥

**नारद उवाच–**

श्रूयतां च द्विजाः सर्वे मम वाक्यं हितप्रदम् ।
अत्रैवायान्ति लोकास्ते ये चात्र स्थितिकारिणः ॥३७॥
सर्वपापविमुक्तानां तेषां सौभाग्यदा सदा ।
परस्परविवादेन तेषां वाक्यानि मे श्रृणु ॥३८॥

**सन्ध्योउवाच–**

षट्कर्मनिरता विप्रा वेदशास्त्रविशारदाः ।
ये मन्यन्तेऽत्र सन्ध्यां वै तेषां पापं प्रणश्यति ॥३९॥

---

२१. महादेवः गङ्गां 'मातृरूपेण' सेवते भार्यात्वकथनमयुक्तं तत्राह अर्द्धनारीमाहेश्वरवत् हरिहरात्मकरूपं शिवस्य तत्र हरिहररूपेभार्येति ज्ञेयम् । तदुक्तं हरिवंशे बाणासुरयुद्धे– पितामह उवाच–

मन्दरस्य गिरेः पार्श्वे नलिन्यां रात्रौ । स्वधान्तरे ब्रह्मन् दृष्टौ हरिहरात्मकौ ॥
हरिं च हररूपेण हरं च हरिरूपिणम् । शङ्खचक्रगदापाणिं पीताम्बरधरं हरम् ॥
त्रिशूलपट्टिशधरं व्याघ्रचर्मधरं हरिम् । इत्यादि बहुविशेषणानि ग्रन्थान्तरूपि हंरिहरात्मकत्वम् ॥

**सरस्वत्युवाच–**

ये मे गुणाँस्तु गुणिनः कथयन्ति नित्यम्
शास्त्रे रताः बहु नराः किल भाषयन्ति।
त ते समस्तनिगमं मम चिन्तनेन
कामाँस्तथातिसुलभाँश्च लभन्तु ऐन्द्रान्॥४०॥

**गौर्युवाच–**

याचन्ते मां नराः नार्यः कौमारीं कामरूपिणीम्।
स्वयमेव वरं दद्यां यद्यद्याचयते नरः॥४१॥

**गङ्गोवाच–**

यो मानवः पापरतश्च सर्वदा, यो वै दुराचाररतो ह्यधर्मा।
विमज्जनं चेन्मयि कुर्वते वै, स पापमुक्तो मम लोकसंस्थितः॥४२॥

**पार्वत्युवाच–**

भजमानेषु मानुष्यं सेवां कृत्वाऽपि शङ्करम्।
निरोधस्तत्र कालेन न भवेत् सेवया मम॥४३॥

**नारद उवाच–**

पञ्चभार्या इदं प्रोचुः श्रूयतां च ततः परम्।
या च राज्यं ददात्यद्धा श्रुतं मे कथयामि वः॥४४॥
यस्या परं नाम जगत्प्रदीपं पापं हरेत्सर्वगुणा च लोके।
ददाति राज्यं सरिता च गङ्गा, प्रक्षालिनी पापमलान्तराणाम्॥४५॥
अत्र तिष्ठति या नित्यं कूटपर्वतसंस्थिता।
सर्वपापहरा देवी कोटिका नाम भामिनी॥४६॥
तस्याः स्नानाद्भवेन्मर्त्यः पवित्रो निर्मलो जले।
कोटिका नाम सा देवी कोटिपापप्रणाशिनी॥४७॥
राज्यकामस्य मर्त्यस्य श्रेष्ठराज्यप्रदायिनी।
पिण्डदाने गयातुल्या अमा सोमे यदा भवेत्॥४८॥
सर्वदानानि धर्माणि सर्वतीर्थानि चात्र हि।
यज्ञपुण्यप्रदा यस्मात्स्नातव्या कोटिका नदी॥४९॥

**सूत उवाच–**

इत्युक्त्वा नारदो विप्राः! पितरं भूरितेजसम्।
अनुज्ञाप्य विधातारं महीमेतां चचार ह॥५०॥
अत्र श्लोका मया गीताः देवर्षेर्मुनिसत्तमाः!
यैः कैश्चिद्वा श्रुता लोके हरेत्तेषां तु पातकम्॥५१॥

**विप्र उवाच–**

तस्मात्तीर्थवरं लोके लोहार्गलमिति श्रुतम् ।
यत्र गङ्गा वहत्यद्धा कोटिका पापनाशिनी ।।५२।।
कोटिजन्मार्जितं पापं स्नानाद्धरति वै नृणाम् ।
तस्याख्यानमिदं पुण्यं महापातकनाशनम् ।।
पठनाच्छ्रवणाद्भक्त्या सर्वपापैः प्रमुच्यते ।।५३।।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे कोटिकावर्णनं नामाष्टादशप्रकरणम् ।।१८।।**

## अथ एकोनविंशति-प्रकरणम्

**विप्रा ऊचुः–**

एवं ते कथितं सर्वं कोटिकायाः समुद्भवम् ।
अन्यच्च कथयिष्यामस्तत्वं श्रोतुमिहेच्छसि ।।१।।
एतदाकर्ण्य विप्रोक्तं प्रणम्य प्रयताञ्जलिः ।
विप्रानुवाच गोमत्याश्चरितं वक्तुमर्हथ ।।२।।

**विप्र उवाच–**

स्कान्दे माहात्म्यमेतस्या द्वारकायाः प्रसंस्तुतौ ।
प्रह्लादऋषिसंवादे प्रोक्तं तत्कथयामहे ।।३।।
ब्रह्मलोकादिहागत्य वसिष्ठानुमतेन सा ।
पश्चिमाब्धिं सम्प्रविष्टा वासिष्ठी तेन सा स्मृता ।।४।।

**ऋषय ऊचुः–**

दैत्येन्द्र ! संशयोऽस्माकं हर्त्तुमर्हस्यशेषतः ।
इयं का गोमती तत्र केनानीता महामते ! ।।५।।
महापापक्षयकरं कुगतीनां गतिप्रदम् ।
पूर्वपुण्यवशात्प्राप्तं श्रुतं तद् गोमतीजलम् ।।६।।
केन कार्यवशेनेह सम्प्राप्ता वरुणालयात् ।
सर्वभागवतश्रेष्ठ ! ह्येतद्विस्तरतो वद ।।७।।

**प्रह्लाद उवाच–**

एकार्णवे पुराहृते नष्टे स्थावरजङ्गमे ।
तदा ब्रह्मा समुद्भूतो विष्णोर्नाभिसरोरुहात् ।।८।।

आदिष्टः प्रभुणा ब्रह्मा सृजस्व विविधाः प्रजाः ।
इति धाता समादिष्टो हरिणा सृष्टिकारणे ॥९॥
उक्त्वा बाढमिति ब्रह्मा तपस्तप्तुं मनो दधे ।
ससर्ज मानसान्सद्यः सनकाद्यान्कुमारकान् ॥१०॥
उवाच वचनं ब्रह्मा प्रजाः सृजत पुत्रकाः !
ब्रह्मणो वचनं श्रुत्वा कृताञ्जलिसमब्रुवन् ॥११॥
भगवन्भगवद्रूपं द्रष्टुकामाः शिवस्य ते ।
न बन्धमनुवर्त्तामः सृष्टिरूपं दुरासदम् ॥१२॥
इत्युक्त्वा ते ययुः सर्वे सनकाद्याः कुमारकाः ।
पश्चिमां दिशमास्थाय तस्य तीरे नदीपतेः ॥१३॥
तेजोमयस्य रूपस्य द्रष्टुकामा महात्मनः ।
तस्मिन्मनः समाधाय तेपिरे परमन्तपः ॥१४॥
बहुवर्षसहस्रैस्तु प्रसन्नो धरणीधरः ।
भित्वा जलं समुत्तस्थौ तेजोरूपं दुरासदम् ॥१५॥
अनेकदैत्यदमनं बहुमन्त्रनिवारणम् ।
सूर्यकोटिप्रभाभासं सहस्रारं सुदर्शनम् ॥१६॥
ते दृष्ट्वा विस्मिताः सर्वे ब्रह्मपुत्राः परस्परम् ।
वीक्षमाणा भगवतः परमायुधमुत्तमम् ॥१७॥
तान्विलोक्य तथाभूतान् वागुवाचाशरीरिणी ।
भो ब्रह्मपुत्रा ! भगवान् शीघ्रमेव समेष्यति ॥१८॥
अर्हणार्थं भगवतः शीघ्रमर्घ्यं प्रतीक्ष्यताम् ।
आयुधं लोकनाथस्य शीघ्रमत्र प्रसाद्यताम् ॥१९॥
श्रुत्वा तु वचनं तस्याः तुष्टुवुस्ते सुदर्शनम् ।
ज्योतिर्मय ! नमस्तेऽस्तु नमस्ते हरिवल्लभ ॥२०॥
सुदर्शन ! नमस्तेऽस्तु सहस्राराक्षराव्ययः ।
नमस्ते सूर्यरूपाय वह्निरूपाय ते नमः ॥२१॥
अमोघाय नमस्तुभ्यं शास्त्राङ्गाय नमोनमः ।
एवं ते पूजयामासुः सुमनोभिस्तथाक्षतैः ॥२२॥
स्तवैर्नानाविधैः स्तुत्वा ब्रह्मा गङ्गामथाब्रवीत् ।
याहि याहि सरिच्छ्रेष्ठे ! पृथिव्यां हरिकारणात् ॥
गाङ्गता त्वं महाभागे ! ततो बहुमताऽसि मे ॥२३॥
उर्व्यान्ते गोमती नाम सुप्रसिद्धं भविष्यति ।
वसिष्ठस्यानुगा भूत्वा याहि शीघ्रं धरातलम् ॥२४॥

गच्छ शीघ्रं महाभागे! वसिष्ठतनया भव।
बाढमित्येव सा देवी प्रस्थिता वरुणालयात् ॥२५॥
वसिष्ठस्त्वग्रतो याति तं गङ्गा पृष्ठतोऽन्वगात्।
तां दृष्ट्वा मनुजा: सर्वे वसिष्ठतनयां सतीम् ॥२६॥
नमश्चक्रुर्महागङ्गां गच्छन्तीं पश्चिमार्णवम्।
द्रष्टुकामा हरे रूपस्थिति चावनताश्च ते ॥२७॥
अवाकिरन्महाभागां सुमनोभिश्च सर्वश: ॥२८॥
दिव्यैर्माल्यै: सुगन्धैश्च गन्धधूपैस्तथाक्षतै:।
साधु साधु महाभागे! सर्वेषां देहपावनि ॥२९॥
वसिष्ठं तत्र ते दृष्ट्वा उत्तस्थु: सर्वतो द्विजा:।
अर्घ्यादिसत्क्रियां कृत्वा प्रहृष्टा इदमब्रुवन् ॥३०॥
संहृष्टमनसो मूर्ध्नि साधु साध्विति चाब्रुवन्।
यस्मात्त्वया समानीता ह्यस्मिँल्लोके सरिद्वरा ॥३१॥
तस्मात्तव सुतेयञ्च ख्यातिं लोके गमिष्यति।
गां स्वर्गादागता यस्मादेतत् स्थानमितो गता ॥३२॥
तस्माद्धि गोमती नाम्ना ख्यातिं लोके गमिष्यति।
तस्या दर्शनमात्रेण मुक्तिं यास्यन्ति मानवा: ॥३३॥
किं पुन: स्नानदानेन कृत्वा यान्ति हरे: पदम्।
तामेव चार्घ्यं दत्वा ते योगीन्द्रा ईडिरे हरिम् ॥३४॥
परं पुरुषसूक्तेन पुरुषं शेषशायिनम्।
इति संस्तुवतां तेषां हरिराविर्बभूव ह ॥३५॥
पीतकौशेयवसनो वनमालाविभूषण:।
दिव्यमाल्यानुलिप्तांगो दिव्याभरणभूषित: ॥३६॥
शेषासनगतं देवं दिव्यानेकोद्यतायुधम्।
ज्वलत्किरीटमुकुटं स्फुरन्मकरकुण्डलम् ॥३७॥
भक्त्याऽभयप्रदं शान्तं श्रीवत्साङ्कं महाभुजम्।
सदा प्रसन्नवदनं धनश्यामं चतुर्भुजम् ॥३८॥
पादसम्वाहनपरलक्ष्मीजुष्टं मनोहरम्।
तं दृष्ट्वा मुनय: सर्वे हर्षोत्कर्षसमन्विता: ॥३९॥
विष्णुं च विष्णुसूक्तैश्च तुष्टुवुर्वेदसम्भवै:।
एवं संस्तुवतां तेषां विष्णुर्दीनानुकम्पक: ॥४०॥
उवाच सम्प्रसन्नेन मनसा द्विजसत्तमान्।
सुखं कुमारास्तुष्टोऽहं प्रदास्यामि यथेप्सितम् ॥४१॥

भविष्यथ यथाज्ञानपूताश्च मम मायया।
यस्मान्मोक्षार्थिभिर्विप्रा ! जलमेतत्प्रसादितम् ॥४२॥
तस्मादिदं परं तीर्थं सर्वकामप्रदं मतम्।
अनुग्रहाय भवतां यत्र चक्रं सुदर्शनम् ॥४३॥
निःसृतं प्रथमं विप्रा ! जलं भित्वा ममाग्रतः।
तस्मात्तीर्थमिति ख्यातं चक्रनाम्ना भविष्यति ॥४४॥
ममापि नियतं वासो भविष्यति महार्णवे।
यत्र स्नानं प्रकुर्वन्ति प्रसङ्गेनापि मानवाः ॥४५॥
चक्रतीर्थे द्विजश्रेष्ठास्तेषां मुक्तिः करे स्थिता।
भवन्तोऽपि सदेत्यत्र स्नातव्ये च द्विजर्षभाः ॥४६॥
वायुभूतान्तरिक्षस्थाः सर्वे कामस्य दायकाः ॥४७॥

**प्रह्लाद उवाच–**

तच्छ्रुत्वा हृष्टमनसः कृत्वाऽर्घ्यं सुरपावनीं।
अवमृज्य हरे पादौ मूर्ध्ना चैवमधारयत् ॥४८॥
प्रक्षाल्य सा हरेः पादौ प्रविष्टा वरुणालये।
तस्मिन्महापापहरा गोमती सागरे गता ॥४९॥
इत्युक्त्वा भगवान्विष्णुः तत्रैवान्तरधीयत।
सनकाद्याः ब्रह्मसुतास्तस्थुस्तत्र समाहिताः ॥५०॥
एवं सा गोमती तत्र सञ्जाता सागरं गता।
सर्वपापहरा प्रोक्ता पूर्वगङ्गेति विश्रुता ॥५१॥

**विप्रा ऊचुः–**

अन्याऽपि गोमतीनाम्ना नैमिषारण्यपावनी।
गङ्गैवोक्त्वा च ब्रह्माण्डे शौनकं सौतिना पुरा ॥५२॥

**तद्यथा ब्रह्माण्डे सूत उवाच–**

पृष्टवन्तो विशिष्टास्ते मुनयो धर्मकाङ्क्षिणः।
देशं पुण्यमभीप्सन्तः विभुं ब्रह्माणमादरात् ॥५३॥
सुमाभं दिव्यरूपाभं सहस्रांशुसमप्रभम् ॥५४॥
अनौपम्यमिदं चक्रं वर्तमानमधिश्रिताः।
प्रस्थिता यान्ति नियताः ततः प्राप्स्यथ यावनम् ॥
गच्छतस्तस्य चक्रस्य यत्र नेमिर्विशीर्यते ॥५५॥
पुण्यः स देशो मन्तव्यः प्रत्युवाच तदा प्रभुः।
उक्त्वा चैवं ऋपीन् सर्वानदृश्यत्वमुपागमत् ॥५६॥

ततो वै ऋषयः सर्वे नैमिषारण्यमागमन्।
गङ्गा यत्र नदी पुण्या गोमती नाम सा स्मृता ॥५७॥
तं पुण्यदेशमासाद्य तत्र चक्रं व्यशीर्यत।
तमेव देशं मन्वानाः पुण्यं सत्रमथारभन् ॥५८॥

**विप्रा ऊचुः—**

एवं सा गोमतीगङ्गा तीर्थद्वयविहारिणी।
कुशस्थल्यां नैमिषे च कथिता पापनाशिनी ॥५०॥

**इति श्री नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे गोमत्युपाख्यानवर्णनं नामैकोनविंशतितमं प्रकरणम् ॥१९॥**

## अथ विंश-प्रकरणम्

**विप्रा ऊचुः—**

पुष्करेऽपि महातीर्थे गङ्गा तिष्ठत्युदङ्मुखी।
पङ्कजाख्ये पुराणेऽस्या माहात्म्यं समुदीरितम् ॥१॥
सूतेन शौनकं पुण्यं तत्त्वं चैकमनाः शृणु।

**तद्यथा सूत उवाच—**

यच्चोद्भेदं यत्र गङ्गा सम्प्राप्ता सरितांवरा ॥२॥
सरस्वती द्रष्टुकामा प्रकृत्या वरुणात्मिका।
पुरा स्वयम्भुवा प्रोक्ता भारती गच्छ भारतम् ॥३॥
देवकार्यमिदं भद्रे शीघ्रं कुरु न चान्यथा।
ओमित्युक्त्वा तदा देवी पितरं गमनोन्मुखी ॥४॥
अवलोक्य दिशं पूर्वां क्व गङ्गेति सखि त्वया।
एकाकिनी वियुक्तासि क्व यास्येऽहमबान्धवा ॥५॥
एकाकिनी मन्दभाग्या क्व गमिष्याम्यबान्धवा।
रुदन्ती शोकसन्तप्ता हा गङ्गेति त्वया विना ॥६॥
तावाज्ञाय ततो गङ्गा रुदन्तीं[२२] शोककर्शिताम्।
पूर्वदेशसमायातां द्रष्टुं तां दीनमानसाम् ॥७॥
दृष्ट्वा च तां महाभाग्यां परिष्वज्य च पीडिताम्।
नेत्रे प्रभृज्य तत्तस्या प्राह गङ्गा वचस्तदा ॥८॥
मा रोदीस्त्वं महाभागे! दुष्कृतं ते कृतं सखि।
देवकार्यं यदन्यैर्न कर्त्तुं शक्यं त्वया कृतम् ॥९॥

२२. रुदती, शु.पा. (रुदतीं)

एवमाश्वास्य तां गङ्गा तत्रावासं व्यरोचत ।
ज्येष्ठमध्यमयोर्मध्यं सङ्गमो लोकविश्रुतः ॥१०॥
पश्चान्मुखी ब्रह्मसुता जाह्नवी सा ह्युदन्मुखी ।
ततस्ते विबुधाः सर्वे पुष्करं द्रष्टुमागताः ॥११॥
विदित्वा पुष्करं धर्म्यं तस्याः स्तुतिमकारयन् ॥१२॥

**विप्रा ऊचुः—**

ततः प्रभृति सा गङ्गा नन्दाख्यातिमुपागता ।
या संस्नानाम्बुपानाभ्यां पापिनां पापनाशिनी ॥१३॥
अन्यद्विचित्रं शृणुतां गङ्गायाः पौष्करे जले ।
आवाहनं स्नानकाले कर्त्तव्यं नित्यदा बुधैः ॥
पाद्मे पुष्करमाहात्म्ये स्वयम्भूश्चोक्तवानृषीन् ॥१४॥

**तद्यथा— ब्रह्मोवाच—**

निर्मलीभाव्यशुद्धिश्च विना स्नानं न जायते ॥१५॥
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ।
नाभिमात्रे जले स्थित्वा पुष्करे स्नानमाचरेत् ॥१६॥
तीर्थं प्रकल्प्य यद्धीमान् मूलमन्त्रेण मन्त्रवित् ।
ॐ नमो नारायणायेति मूलमन्त्र उदाहृतः ॥१७॥
सदर्भपाणिर्विधिना आचान्तः प्रयतः शुचिः ।
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ।
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥१८॥
विष्णोः पादप्रसूताऽसि वैष्णवी सुरपूजिता ।
त्राहि नस्त्वेनसस्तस्मादाजन्मरणान्तिकात् ॥
तिस्रः कोट्योऽर्ध कोटी च तीर्थानां वायुरब्रवीत् ॥१९॥
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि ॥२०॥
नलिनीत्येव ते नाम देवेषु नलिनीति च ।
दक्षा पृथ्वी च सुभगा विश्वकाया शिवा सिता ॥२१॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥२२॥
एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ।
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥२३॥
सप्तवाराभिजप्तेन करसम्पुटयोजितम् ।
स्नानं कुर्यान्मृदा तद्वदामन्त्र्य तु विधानतः ॥२४॥

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मर्त्यके हर मे पापं यन्मया दुष्कृतं कृतम् ॥२५॥
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।
नमस्ते सर्वलोकानां प्रभवारणि ! सुव्रते !
एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः ॥२६॥
उत्थाय वाससी शुभ्रे शुद्धे तु परिधाय वै ।
कृत्वा चावश्यकं कर्म भवेद्विगतकल्मषः ॥२७॥
दशकोटिसहस्राणि तीर्थानां ज्येष्ठपुष्करे ।
तथापि गङ्गा संश्रित्य पुनाति भुवनत्रयम् ॥२८॥

**विप्रा ऊचुः—**

इत्थं पाद्मोत्तरे प्रोक्तं ब्रह्मणा ऋषिसत्तमान् ।
पुष्करेऽपि महातीर्थे गङ्गैवाघविनाशिनी ॥२९॥
गङ्गाया विधिना जले निगदितं चावाहनं पौष्करे
यस्मिँश्चाण्डकटाहतीर्थनिकरैर्वासोऽनिशं कल्प्यते ।
तत्तेऽदः कथितं ह्यतः सुरवरे ! तीर्थत्वमस्याः क्वचित्
नोद्गीतं तु किमस्ति चेदनघ यद्ब्रह्मैव साक्षात्परम् ॥३०॥

**इति श्री नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे पुष्करगङ्गावर्णनं नाम विंशतितमं प्रकरणम् ॥२०॥**

## अथ एकविंशति-प्रकरणम्

**विप्रा ऊचुः—**

क्षेत्रे प्रभासके गङ्गा विख्याता या चतुर्विधा ।
तदाख्यानं महाभाग ! शृणु पापप्रणाशनम् ॥१॥
स्कान्दे शिवेन चाख्यातं पार्वतीप्रीतये पुरा ॥२॥

**तद्यथा शिव उवाच—**

ततो गच्छेन्महादेवि लिङ्गं त्रैलोक्यविश्रुतम् ।
गङ्गेश्वर इति ख्यातं सङ्गमेश्वरपश्चिमे ॥३॥
यदा गङ्गा समाहूता विष्णुना प्रभविष्णुना ।
[२३]अन्तकालेऽभिषेकार्थं स्वकायस्य वरानने ! ॥४॥

२३. कैश्चिदुक्तं पूर्णरूपेणापि भगवताऽप्रकटकाले गङ्गाया आह्वानं किमर्थं कृतमिति चेत्तत्राह– मनुष्येनाद्येन सर्वजीवसेवनार्थमाह्वानं अथ चातिप्रियतममन्तसमये आविर्भवतीति आनन्दद्रवरुपत्वादाह्वानं, अथ चानेकवर्णने कृते सत्यं ते सिद्धान्तो भवतीत्यन्ते आह्वानं, अथ च द्वारकानाथस्य गोलोकनाथोद्भूतत्वात् गोलोकनाथ रूपाया गङ्गाया आह्वानं कृतमिति सिद्धान्तो दर्शितः ।

ततो दृष्ट्वा तु तत् क्षेत्रं पुण्यं तद्विनिषेवितम्।
सर्वत्र व्यापितं लिङ्गैराश्रमैश्च तपस्विनाम् ॥५॥
ततो गङ्गा सुरश्रेष्ठा पूर्वसागरगामिनी।
स्थापयामास तल्लिङ्गं शिवभक्तिपरायणा ॥६॥
तं दृष्ट्वा तु वरारोहे! गङ्गास्नानफलं लभेत्।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥७॥

**तथा च—**

तस्यैव दक्षिणे देवि! तस्माद्गव्यूतिमात्रतः।
पातालगामिनी गङ्गा संस्थिता पापनाशिनी ॥८॥
विश्वामित्रेण चानीता स्नानार्थं वरवर्णिनि!
तत्र स्नात्वा महादेवि! मुच्यते सर्वपातकैः ॥९॥
तत्र गङ्गेश्वरं दृष्ट्वा विश्वामित्रेश्वरन्तथा।
बालेश्वरं च सम्प्रेक्ष्य सर्वान्कामानवाप्नुयात् ॥१०॥

**तद्यथा—**

ततो गच्छेन्महादेवि! गङ्गां त्रिपथगामिनीम्।
अनर्केश्वरतो दैवाद् ईशानदिशि संस्थिताम् ॥११॥
स्वयम्भूता धरामध्यात् आनीता विष्णुना पुरा।
यादवानां तु मुक्त्यर्थं सर्वपापोपशान्तये ॥१२॥
यस्तत्रकुरुते स्नानं कथञ्चित्पुण्यसञ्चयम्।
श्राद्धं चैव विधानेन सत्यं शौचकृतः सुधीः ॥१३॥
ब्रह्माण्डं सकलं दद्यात् यत्पुण्यं फलमाप्नुयात्।
तत्पुण्यं प्राप्नुयाद्देवि! कार्तिक्यां जाह्नवीजले ॥१४॥
कलौ युगे तु सम्प्राप्ते दुर्लभं स्याच्च दर्शनम्।
किं पुनः स्नानदानं च प्रभासे जाह्नवीजले ॥१५॥
वातापी भक्षितः पूर्वमगस्त्येन महात्मना।
शरीरपापशुद्ध्यर्थं दैत्यसम्भक्षणोद्भवम् ॥१६॥
ततो देवैः समायाता गङ्गा पातकनाशिनी।
शुद्धिं चकार तस्यर्षेः तत्र स्थाने स्थिताऽभवत् ॥
अगस्त्यस्याश्रमे पुण्ये सर्पपापभयावहे ॥१७॥

**विप्रोक्तिः—**

क्षेत्रे प्रभासे गङ्गैवं चतुर्भुजचतुर्विधा।
कृष्णकौशिकवृष्णीनामगस्त्यस्य शुभाय तु ॥१८॥

पातालब्रह्मलोकाभ्यामेताः प्राप्तास्तवोदिताः ।
सर्वपापहरा देव्यः स्तुताः सम्पूजिताः नृणाम् ॥१९॥

**इति श्री नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे प्रभासक्षेत्रे गङ्गावर्णनं नामैकविंशतिप्रकरणम् ॥२१॥**

## अथ द्वाविंश-प्रकरणम्

विष्णुधर्मोत्तरे गङ्गा सर्वब्रह्माण्डगामिनी ।
मार्कण्डेयो यथा प्राह वज्राख्यं नृपसत्तमम् ॥
तत्त्वं शृणु महाबाहो ! सुगोप्यं कथयामहे ॥१॥

**तद्यथा, वज्र उवाच–**

देव ! विष्णुपदी गङ्गा त्रैलोक्यं व्याप्य तिष्ठति ।
यथा तथा भृगुश्रेष्ठ ! सर्वमेव प्रकीर्तय ॥२॥

**मार्कण्डेय उवाच–**

प्रविश्य देवी ब्रह्माण्डं विष्णुलोकमुपागता ।
ब्राह्मीं सभां प्लावयित्वा तपोलोकमुपागता ॥३॥
स्वर्गलोकं समासाद्य प्रविष्टा चन्द्रमण्डलम् ॥४॥
चन्द्रमण्डलविभ्रष्टा भुवर्लोकमुपागता ।
आकाशगङ्गा कथिता तत्र सा रतिवर्धिनी ॥५॥
तथा तु दृश्यते पन्था सततं व्योम्नि निर्मले ।
आकाशगङ्गामध्ये सा मेरौ निपतिता गिरौ ॥६॥
मेरुमध्याददृश्यन्ती[२४] पश्यन्ती च तथा क्वचित् ।
प्रयाता सर्ववर्षाणि द्वीपानि चं महामते ! ॥७॥
सां तु देवी जया नाम कुरुवर्षे ह्रदा स्तुते ।
तेभ्यः शान्ता च मध्वी च द्विधा गङ्गा विनिःसृता ॥८॥
ज्योत्स्ना च मृगमन्दा च स्मृत्वा हेरण्वती शुभा ।
पुण्डरीका पयोदा च रम्ये वर्षे निगद्यते ॥९॥
भद्रा च कथिता देवी गान्धर्वी च मनोनुगा ।
इलावृते तथा सैव प्रोक्ता जम्बुवती शुभा ॥१०॥
यस्यास्तीरभवं मूर्ध्नि कनकं धार्यते सुरैः ।
केतुमाले च कथिता निर्मला नडुला तथा ॥११॥

---

२४. पश्यन्ती, शु. पा.

मनस्विनी ज्योतिवती हरिवर्षे निगद्यते ।
तथा किम्पुरुषाख्ये तु रम्भचन्द्रवती शुभा ॥१२॥
इन्द्रद्युम्नपयोदामाकाशकामतिपावनी ।
मनोजवा ताम्रपर्णी गभस्तिमतिमालिनी ॥१३॥
नागद्वीपे नागवती सौम्ये सोमा प्रभा स्मृता ।
रुद्रलोकं ततः प्राप्ता ब्रह्मलोकं ततो गता ॥
गान्धर्वे चैव गान्धर्वी वारुणे वारुणो ह्रदः ॥१४॥
ह्रादिनी ह्लादिनी चैव पुण्यतोया च वर्द्धिनी ।
सीता चक्षुश्च सिन्धुश्च गङ्गा चास्मिन्प्रकीर्तिता ॥१५॥
अमरान्निषधान्सर्वान् धीवरानृषिकांस्तथा ।
घृष्टप्रावरणान्सौम्यान्कम्बप्रावरणाँस्तथा ।
कालोदरान्विकर्णांश्च ह्लादिनी परिषेचते ॥१६॥
इन्द्रनाम्नस्तथा पुण्यादुपचाराद्व्जायन ।
तथा खरपदान् देशाँश्चैत्रशङ्कुपदानि च ॥१७॥
उद्यानं काननं चैव ह्लादिनी परिषेचते ।
हंसमार्गानिश्वमुखाँस्तामसाँश्च सहूहुकान् ॥१८॥
तूर्णं देशाँश्च सेवन्ती भित्वा च बहुधा गिरीन् ।
विद्याधरगणान्सर्वान् पावनी तु निषेचते ॥१९॥
मिलिन्द्रान्मुस्तराक्षीनान्वर्वर्चान्यवनान्तकान् ।
पुष्कलाँश्च कुलस्थाँश्च अङ्गुलेयाँश्च वर्वरान् ॥२०॥
तथा सिंहसमं चैव सीतपुण्या निषेचते ।
अवर्चीनामकं चैव कालकाँश्च समूलिकान् ॥२१॥
तुषारां पह्लवाँश्चैव राक्षसानूकतान् लहान् ।
एतांञ्जनपदान् चक्षुः सर्वानेव निषेचते ॥२२॥
वरदाञ्जुहुडाँश्चैव काश्मीरानौरसान्कुलान् ।
गान्धारान् दरदाभीतान् कूपकान् भीमरौरवान् ॥२३॥
शिवपर्वानिन्द्रप्रथान् सिन्धुरेतान्निषेचते ।
देवान्दैत्यान्कालकेयान् गन्धर्वान्किन्नराँस्तथा ॥२४॥
विद्याधराँस्तथा नागान् सुपर्णान् समहोरगान् ।
कलापग्रामकाँश्चैव नरनारायणाश्रमान् ॥२५॥
किराताँश्च पुलिन्दाँश्च मयस्य नगरीस्तथा ।
कुरून्सभारताँश्चैव पुलिन्दाँश्चैव भागशः ॥२६॥
पाञ्चालान् काश्यपेयांश्च मागधाँस्ताम्रलिप्तकान् ।
सहोत्तराँश्च वङ्गाँश्च तथा श्रावस्तिवासिनः ॥२७॥

अङ्गान् वंङ्गान्सपुण्ड्राँश्च गङ्गा प्लावयते शुभा।
गङ्गाव्याप्ति स्तव प्रोक्ता जम्बूद्वीपे मयाऽनघ ! ॥२८॥
लोकेषु च तथा राजन् द्वीपेष्वन्येषु मे शृणु।
सुकुमारी कुमारी च सुकृता सेविनी तथा ॥२९॥
इक्षुश्च वेण्डका नन्दा शाकद्वीपे च सप्तधा।
शाल्मले त्वथ गोमेदे द्वीपे पुष्करसंज्ञिते ॥३०॥
नदीत्वं सा समुत्सृज्य उद्भिदित्वमुपागता।
तस्मिन् द्वीपत्रये नद्यो न सन्ति यदुनन्दन ! ॥३१॥
तदा तान्युद्भिदान्येव येषु सन्ति सहस्रशः।
एवं भूमितलं प्राप्य पातालं कृष्णमन्तिकम् ॥३२॥
एकीभूय प्रविष्टाऽसीद्भोगवत्याः समीपतः।
श्वेतभौमं गता तस्माद्रुक्मभौमं ततो गता ॥
रुक्मभौमद्वीपगता रौद्रं तेजः सुदारुणम् ॥३४॥
तत्राप्यविलयं याता वाराहं लोकमागता।
वाराहलोकाद्ब्रह्माण्डं तदूर्ध्वं सितवाहनी ॥३५॥
छिद्रेण तेन सा देवी स्वां योनिं पुनरागता ॥३६॥
एवं नरेन्द्रेन्द्र ! जगत्समग्रमाक्रम्य गङ्गा सततं स्थिता सा।
तस्याः प्रभावश्रवणादशेषं पापं नराणां समुपैति नाशम् ॥३७॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे ब्रह्माण्डव्यापिनीवर्णनं नाम द्वाविशंतिप्रकरणम् ।।२२।।**

## अथ त्रयोविंश-प्रकरणम्

**विप्रा ऊचुः–**

यत्र यत्रातिपुण्यानि तीर्थानि भुवि मानद !
तत्र तत्रापि कलया गङ्गातीर्थं शुभावहम् ॥१॥
यथा सर्वेषु देवेषु हरिरेव फलप्रदः।
तथा सर्वेषु तीर्थेषु गङ्गातीर्थं फलप्रदम् ॥२॥
नैव गङ्गां विना तीर्थं दिवि भुव्यन्तरेऽप्यधः।
तस्मात्सर्वत्र सैवास्ति तत्तत्तीर्थापदेशतः ॥३॥
मन्दाकिनी चित्रकूटे कुरुक्षेत्रे च धेनुका।
मानसीति समाख्याता तथा गोवर्धने गिरौ ॥४॥

**तद्यथा वाराहे–**

स्नात्वा मानसगङ्गायां दृष्ट्वा गोवर्धने हरिम्।
अन्नकूटे परिक्रम्य पुनर्जन्म न विद्यते ॥५॥

श्री शुक उवाच–

द्वितीये दिवसे बाला राधिका वरवर्णिनी ।
सखीद्वितयसंयुक्ता दोलां सम्प्राप्य सौख्यदा ॥६॥
तद्वत् स्नात्वा विशालाक्षी कृत्वाऽलङ्करणद्युतिः ।
चिक्रीडे रसदा पत्युः कृष्णेन सहिता भृशम् ॥७॥
सुखयित्वा पतिं भावैरनेकैः कामदीपनैः ।
एवं साऽखिलशरदि कदाचिद्राधिका शुभा ॥८॥
काचिद् गता वने गोपी सुखदा घोरदर्शना ।
नामतः कथ्यते गोपैः हरिलीलाप्रभञ्जिनी ॥९॥
तया दृष्टा विशालाक्षी कीर्तिदात्रिकया युता ।
ललिता च विशाखा च कृष्णेन रमिता दृढम् ॥१०॥
तत्रागत्य तु सा दृष्टा राधां सम्पश्य दोलने ।
कृष्णगृहीतचिबुका विशाखाललितायुता ॥११॥
सौगन्धिकं शिलापीठं स्नानीयैः रुचिरैः युतम् ।
भक्ष्यभोज्यादिकं दृष्ट्वा शय्यां किसलयैः कृताम् ॥१२॥
दृष्ट्वा सा घोररूपा वै गोचारणगताय वै ।
गोवर्धनाय गोपाय ललिता सह सम्भृते ॥१३॥
आचक्षे तिसृणां चैव राधादीनां च संरतम् ।
कृष्णेन नन्दपुत्रेण यथेत्थं व्यजने सुखम् ॥१४॥
तच्छ्रुत्वा क्रोधताम्राक्षी ललितायाः सहोदरा ।
कृष्णं हन्तुं मनश्चक्रे हुङ्कृत्या घोररूपया ॥१५॥
कार्तिके मासि शुक्ले वै पक्षे वारे विधोरपि ।
नन्दायां च कृते पूज्ये गिरौ गोवर्धने तथा ॥१६॥
मध्याह्ने च समागत्य राधया सहितो हरिः ।
तस्मिन् स्थाने च चिक्रीडे दोलायां च यथासुखम् ॥१७॥
गोवर्धनोऽपि तज्ज्ञात्वा कृष्णेन रमतां स्वसुः !
आरुह्य च गिरौ तस्मिन्निःशोको विगतत्रपः ॥१८॥
राधिकासहितं कृष्णं दृष्ट्वा चण्डी चुकोप ह ।
कण्ठे जग्राह श्रीकृष्णं हन्तुकामो महाखलः ॥१९॥
हुंङ्कृत्याथ पराहत्य तं खलं च महाभुजः ।
सुरभ्यो दृष्ट्वा पतनं वेष्टनं च महात्मनः ॥
हुङ्कृत्य धावयामासुर्ममृदुस्तस्य गात्रकम् ॥२०॥

गोवर्धनं मृतं दृष्ट्वा राधिका वार्षभानवी।
ललितां विमनां दृष्ट्वा पतिमूचे शुभानना ॥२१॥
मद्भ्रातुर्नाशनादेव ह्यधोजातस्तव प्रभो!
द्युनदीं च यदा स्नासि संस्पर्शो मे भविष्यसि ॥२२॥
स्मृतमात्रे कृते चैवं गङ्गाऽऽगत्य महानदी।
तुष्टाव कीर्तिदां पुत्रीं व्रजवासस्य दायिनीम् ॥२३॥
अथ गङ्गाकृतं स्तोत्रं श्रुत्वा सा राधिका शुभा।
मानसी नाम गङ्गा त्वं व्रजभूमौ भविष्यसि ॥२४॥
कार्तिके मासि शुद्धिर्नन्दायां स्नाति यो नरः।
कोटिगङ्गास्नानफलं कृष्ण! शुद्धिर्भविष्यति ॥२५॥
अङ्गीचकार कृष्णं च वचो यच्च हितार्थदम्।
मम भ्राता तु भो प्रेष्ठ! घातितो मनुजार्तिहन्! ॥२६॥
वार्षिकी चैव पूजा च कर्तव्या मम हेतवे।
मम स्नेहस्तु रोधेन भ्रातुः स्नेहस्य कारणात् ॥२७॥

**नारद उवाच—**

इति श्रुत्वा विशालाक्षीं श्रीकृष्णः प्राह स्वप्रियाम्।
तव वाक्यं सदा कुर्वे यत्त्वं ब्रूषे मम प्रिये! ॥२८॥
वार्षभानवि! महाभागे! ममोपरि कृपां कुरु।
सदृशं तव देहस्य परं चैव विभेम्यहम् ॥२९॥
क्षणमेकं न संब्रूषे त्यक्षेऽहं स्वकलेवरम्।
एनमाशंशसे भीरु! तत्करोमि सदानघे! ॥३०॥
न त्वं भिन्ना ममांशस्य नाहं भिन्नस्तवांशकः।
तरङ्गजलयोर्यद्वद्द्वैविध्यं नावलोक्यते ॥३१॥
कृष्णो राधा सदा सत्या राधा कृष्णः सदापतिः॥
द्वैविध्यं योऽवमन्येत स भवेत् ब्रह्मघातकी ॥३२॥
इत्यादिवचनैः प्रेष्ठां सम्मान्याखिलकार्यकृत्।
व्यादिदेश स्वपूजां वै ललिताभ्रातुरेव च ॥३३॥
श्रीकृष्णं स्नापयामास लोकयात्रार्थहेतवे।
स्नापयित्वा महाभागा सौहार्दं तस्य चिन्तयन् ॥३४॥
निविडो मोहपाशोयं मुनिभिः कथितोऽनघ!
ये निवृत्तास्तु मुनयः जन्मगोत्रं स्मरन्ति ते ॥३५॥
वार्षिकी चैव पूजा च कर्तव्या च त्वया हरे!
मम स्नेहानुरोधेन भ्रातुः स्नेहस्य कारणात् ॥३६॥

**नारद उवाच—**

इति सम्प्रार्थितः कृष्णः प्रियया स्नेहयुक्तया।
वार्षिकी चैव पूजाऽस्य प्रोक्ता भगवता स्वयम् ॥३७॥
कार्तिके शुक्लपक्षे तु नन्दायां चैव राधिके!
गोमयेन यथा कृत्वा गोपं गोवर्धनं तथा ॥३८॥
वृक्षच्छायासमायुक्तं रक्तवस्त्रेण छादितम्।
मन्थनस्य तु दण्डेन संयुक्तं दीपकैः सह ॥३९॥
बहुसत्कामिकाश्चैव मोदकाः घृतसंयुताः।
पूजनीयो विशालाक्षि! वनितापुरुषैः सह ॥४०॥
पुत्रपौत्रयुता नारी वधूपुत्रीसमन्विता।
गोपश्रेष्ठं पूजयन्ति तेषां वै वार्षिकी शिवा ॥४१॥
इति येन भवन्तीह पशुरोगाः भयानकाः।
पुत्रपौत्राश्च वर्धन्ते लूताविस्फोटकादयः ॥४२॥
न भवन्ति कदाचिद्वै ममाज्ञाकृतसाधनात्।
लेखा कार्या गोमयेन गृहकोणेषु राधिके! ॥४३॥
मेदोहा नाम राक्षस्यो बालविघ्नप्रकारकाः।
दूराद्दूरं पलायन्ते मम वाक्यप्रसादतः ॥४४॥
गोभिः सम्मर्द्धनीयो हि भद्राधस्ते हि राधिके।
गिरिराजस्य पूजा वै दीपदानं विशेषतः ॥४५॥
परिक्रम्य चान्नकूटे मानसीस्नानमेव च।
कृतपुण्यास्तु लभ्यन्ते नात्र कार्य विचारणा ॥४६॥
एवं कृष्णेन संदिष्टा राधिका वार्षभानवी।
मुदिता चाप सन्तोषं पतिना सुखिता क्षिते ॥४७॥
कुंरुक्षेत्रसमा गङ्गा यत्र कुत्रावगाहिता।
कुरुक्षेत्रात्कोटिगुणं यत्र विन्ध्येन सङ्गता ॥४८॥
विन्ध्याच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी।
काश्याः शतगुणा प्रोक्ता प्रयागस्य तु मण्डले ॥४९॥
प्रयागाच्छतगुणा विप्र मानसी व्रजमण्डले।
वैकुण्ठे परिगीयेत मानसी क्रीडनं हरेः ॥५०॥
महाभागास्तु ते जीवा ये पश्यन्तीह क्रीडनम्।
ये पिबन्ति हितं तोयं पावनं सर्वदा क्षितौ ॥५१॥
श्रीकृष्णो वश्यतां याति वृषभानसुतादरात्।
मानस्याश्चैव माहात्म्यं ये शृण्वन्ति नरोत्तमाः ॥५२॥

तेषां गङ्गासमं स्नानं श्रीकृष्णे रतिदायकम् ।
वृषभानसुता देवी व्रजमण्डलशोभिनी ॥
निवासं प्रददात्येषा पत्युरादरदानतः ॥५३॥

**इत्यादिपुराणसपादनियुक्तसंहितायां शुकनारदसम्वादे**
**मानसीगङ्गामाहात्म्यं सम्पूर्णम् ।**

**विप्रा ऊचुः—**

वैराज्यां वाणगङ्गेति नाम्ना च भुवि संस्थिता ।

**तद्यथा भारते विराटपर्वणि—**

अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।
संस्मृत्य मनसा गङ्गादेवीं वाणेन चास्पृशत् ॥५४॥

**भविष्योत्तरपुराणे, ब्रह्मोवाच—**

मत्स्यदेशं परं पुण्यं विराजस्तु महीपतेः ।
वाणगङ्गा महापुण्या तदन्तिकसमुद्भवा ॥५५॥
सा तु गङ्गैव देवेश पातालादुद्गमिष्यति ।
दुर्योधनः क्रूरमतिर्यदागश्च ग्रहीष्यति ॥५६॥
उत्तरेण पुरीं वत्स ! विराजस्तु महीपतेः ।
विराजिसानुगे शक्रगते दक्षिणगोग्रहे ॥५७॥
तदा तस्यात्मजो नाम्ना उत्तरो वीर्यवान्नरः ।
षष्ठरूपेण पार्श्वेन सह निर्यास्यते पुरात् ॥५८॥
युद्धाय कौरवेन्द्रं च सूतं कृत्वा धनञ्जयम् ।
ततस्तु कौरवीं सेनां दृष्ट्वा भयमुपैष्यति ॥५९॥
ततः पराङ्मुखं तं च गुडाकेशो ग्रहीष्यति ।
सारथित्वं विहायाशु स्वयमेव धनञ्जयः ॥६०॥
रथी भविष्यति क्षिप्रं तं संशाम्य भयातुरम् ।
ततस्तदन्तिकस्थं सः स्वमस्त्रं गाण्डिवं धनुः ॥६१॥
शाखोटस्थमादातुमुद्यमं हि करिष्यति ।
तं बोधयिष्यति तदा व्योमवागशरीरिणी ॥६२॥
पार्थ ! युक्तं त्वया नेदं स्पृश्यं दिव्यं महद्धनुः ।
गतेन शठतां शापात् पापस्तिष्ठेत वर्ष्मणा ॥६३॥
तस्मात्पार्थ महाभाग सर्वपापप्रमोचनीम् ।
गङ्गां भोगवतीं वाणेनोद्धर त्वं रसातलात् ॥६४॥

तस्यां स्नात्वा च पीत्वा च त्यक्त्वा षण्ढत्वमुल्वणम् ।
गाण्डीवग्रहणे शक्तो भविष्यसि धनञ्जय ! ॥६५॥
वाणगङ्गेति विख्याता सा भविष्यति भूतले ।
यावत्स्थास्यति लोके सा तावत्ते कीर्तिसत्तमा ॥६६॥
भविष्यति गुडाकेश यावच्चन्द्रार्कतारकाः ।
तत्र स्नास्यन्ति ये मर्त्या माघे प्राप्य रवेर्दिनम् ॥६७॥
सप्तजन्मार्जितं पापं ध्रुवं यास्यति संक्षयम् ।
अपि कल्पशतै षण्ढा न भविष्यन्ति ते नराः ॥६८॥
सत्यलोके गमिष्यन्ति ये त्यक्त्वाऽत्र कलेवरम् ।
इत्याकर्ण्य गुडाकेशो धनुरादाय स्वं महत् ॥६९॥
विभिदे पातालतलं ततो गङ्गा समुत्थिता ।
धर्मद्रवा भोगवती दिव्यगन्धा महानदी ॥७०॥
ततः स्नात्वा च वीभत्सुः त्यक्त्वा षण्ढत्वमुल्वणम् ।
गृहीत्वा गाण्डिवं चापं विजयाय प्रयास्यति ॥७१॥
इत्येवं कथितः शक्र वाणगङ्गासमुद्भवः ।
पुण्यः पापहरो वत्स पठतां शृण्वतां तथा ॥७२॥

**इति भविष्योत्तरपुराणे ब्रह्मनारदसम्वादे वाणगङ्गोत्पत्तिः ।**

एवमन्येषु द्वीपेषु खण्डेषु च विभागशः ।
गङ्गा पुनाति तत्रत्यान् सप्तभिर्नामभिः स्थिता ॥७३॥

**मात्स्ये च—**

गौरी कुमुद्वती चैव संध्या रात्रिर्मनोज.. ।
ख्यातिश्च पुण्डरीका च क्रौंञ्चद्वीपे प्रकीर्तिता ॥७४॥
धूतपापा च सीता च निशा चैव वितृष्णका ।
ह्लादिनी चैव विद्युच्च खण्डद्वीपे कुशे स्मृता ॥७५॥
सुकुमार्यनुतप्ता च सिद्धा नन्दा शिवेलका ।
अमृता सुकृता चैव शाकद्वीपे विभागशः ॥७६॥

**विप्रोक्तिः—**

एवमन्येषु द्वीपेषु सप्तधा जाह्नवी स्थिता ।
नान्तं गुणानां गायन्तो जग्मुर्ब्रह्मादयः सुराः ॥७७॥
यद् यद्दृष्टं पुराणेषु तत्सर्वं सम्प्रकीर्तितम् ।
चतुर्भुज ! महाबाहो ! किं भूयः श्रोतुमिच्छसि ॥७८॥

एवं श्रुत्वा कथां रम्यां जाह्नवीगुणसंयुताम्।
प्रोवाचेदं वचो भूयो भूदेवान्धनिनां वरः ॥७९॥

**निर्मथ्य पौराणकदम्बकं मे भूमौ यथा विष्णुपदी समागात्।**
**संश्रावितं तत्कृपया भवद्भिः पापौघकक्षज्वलनं मनोज्ञम्॥८०॥**

अतः परं पूजनपद्धतिं च नाम्नां सहस्रं पटलं च वर्म।
स्तोत्रं समस्ताङ्गमिदं द्विजेशाः प्रकीर्त्यतां पापविमुक्तये मे ॥८१॥

**इति नानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे द्वीपनिरूपणं नाम त्रयोविंशतिप्रकरणम् ॥२३॥**

## अथ चतुर्विंशतिप्रकरणम्

**विप्रा ऊचुः—**

समीचीनं साधो निगदितमिदं सर्वसुखदं-
सुपञ्चाङ्गं गाङ्गं शृणु गिरिश ऊचे यदगजाम्।
प्रसन्नः सन् शैवागमजलधिजातं शुभकरं-
समस्तानन्दात्मन्नवहितमनास्त्वं मनुमयम् ॥१॥

तत्रेह पटलं ब्रूमः प्रथमं तव सत्तम।
यद्विज्ञाय नरो गङ्गां प्रयोगाद्यैः प्रतोषयेत् ॥२॥

**श्रीमहादेव उवाच—**

अधुना देवि ! वक्ष्यामि रहस्यं परमाद्भुतम्।
यन्न सर्वेषु तन्त्रेषु यामलादिषु भाषितम् ॥३॥

गङ्गादेवीरहस्याख्यं यन्त्रं मन्त्रौघविग्रहम्।
अप्रकाश्यमदातव्यं परमोच्चफलप्रदम् ॥४॥

भोगापवर्गदं लोके साधकानां सुखावहम्।
मन्त्रोद्धारं ब्रवीम्यादौ गङ्गामोक्षैकसाधनम् ॥५॥

कारणं सर्वसिद्धीनां वारणं सकलापदाम्॥
येन वाञ्छितमाप्नोति यशस्वी नियतो भवेत् ॥६॥

दुरितौघप्रविध्वंसं सौभाग्यं शीघ्रनिश्चितम्।
सेवितं सन्ततिकरं तथा निगडमोचनम् ॥७॥

समस्तेषु च शास्त्रेषु पाण्डित्यमधिकं भवेत्।
किमत्र बहुनोक्तेन वचसां पतिरेव सः ॥८॥

तस्या मन्त्रं तथा यन्त्रं लयाङ्गं वक्ष्यतेऽधुना ।
तारं नमो भगवति ब्रूयादम्ब ततोऽम्बिके ॥९॥
अम्बालिके महामालिन्येह्येहि भगवत्यथ ।
अशेषतीर्थालवाले मायाश्रीर्वीजयोरथ ॥१०॥
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विज ! ।
गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ॥११॥
न विघ्नो न च वा दोषो न कायक्लेशविप्लवः ।
नाशौचशङ्का देवेशि न विपर्ययतो भयम् ॥१२॥
सिद्धसाध्यारिदोषो न न पुरश्चरणभीरपि ।
मनुर्व्यासोमुनिश्छन्दोह्यत्रिगङ्गाऽस्य देवता ॥१३॥
ईश्वरो जगतां बीजमाद्यब्रह्म तदुच्यते ।
तस्य माया समाख्याता शक्तिर्गुणमयी तु या ॥१४॥
जप्त्वा स्तुत्वा मनुं देवि पुनर्येन स गोपितः
निस्तेजस्तु पुनर्जातः कीलकं तदिदं स्मृतम् ।
जपकाले महादेवि राक्षसा भूतप्रेतकाः ॥१५॥
दिशो दश पलायन्ते तेन दिग्बन्धनं च तत् ।
दिग्बन्धने विना देवि जपपाठोऽपि वा तथा ॥१६॥
निष्फलो विघ्नकृन्नित्यं तेन दिग्बन्धनं चरेत् ।
ऋषिश्छन्दो देवता च बीजं शक्तिश्च कीलकम् ॥१७॥
पुराकल्पे समुत्पन्नाः मन्त्रकर्मार्थमेव च ।
अनेन चेदं कर्त्तव्यं विनियोगं तदुच्यते ॥१८॥
धर्मार्थकाममोक्षेषु शास्त्रमार्गेण योजयेत् ।
सिद्धिमन्त्रस्तु सम्प्रोक्तो विनियोगो विचक्षणैः ॥१९॥
आदावङ्गं समुच्चार्य पश्चान्मन्त्रं न्यसेत्सुधीः ।
अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः शतादिभिः ॥२०॥
ध्यानमस्याः प्रवक्ष्यामि सर्वाभावविवर्जितम् ।
सर्वतन्त्रेषु गुप्तं च सर्वेन्द्रियविनिग्रहम् ॥२१॥
उत्फुल्लामलपुण्डरीकरुचिरा कृष्णांशविध्यात्मिका ।
कुम्भेष्टा भयतोयजं विदधती श्वेताम्बरालङ्कृतिः ॥२२॥
हृष्टास्या शशिशेखराऽखिलनदी शोणादिसंसेविता ।
ध्येया पापविनाशिनी मकरगा भागीरथी साधकैः ॥२३॥
एवं भागीरथीं ध्यायेत् सर्वपापविघातिनीम् ।
एतन्मन्त्रं गुरोर्लब्ध्वा तस्मै दत्वा च दक्षिणाम् ॥२४॥

आशिषं च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयात् ।
यन्त्रोद्धारं प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।।२५।।
अष्टपत्रं सरोजं तु चतुरस्रत्रयावृतम् ।
चतुर्द्वारसमायुक्तमर्चापीठं विधाय च ।।२६।।
जयादिशक्तिभिर्युक्ते पीठे भागीरथीं यजेत् ।
यजेत केशरेष्वङ्गे दले रुद्रं हरिं विधिम् ।।२७।।
सूर्यं हिमाचलं मैनां भगीरथमपां पतिम् ।
दलाग्रतो मीनकूर्ममण्डूकमकरानपि ।।२८।।
हंसान् कारण्डवाँश्चक्रवाकान् सारसकान् यजेत् ।
चतुरस्रे शक्रमुख्यान् आयुधैः संयुतान् यजेत् ।।२९।।
गन्धं पुष्पं तथा धूपं दीपमन्येन तर्पणम् ।
माल्यानुलेपनञ्चैव भूषणानि च सर्वशः ।।३०।।
प्रसन्नार्चां विधायाथ कुर्यादारार्तिकं बुधः ।
ततः पुष्पाञ्जलिं दद्यात् गुरुमभ्यर्च्य यत्नतः ।।३१।।
कुमारिकाः सुवासिन्यः पूजनीयाश्च ब्राह्मणाः ।
दीनानाथविशिष्टेभ्यः सर्वेभ्यश्च यथाक्रमम् ।।३२।।
अन्नदानविशिष्टं च कुर्याद्गङ्गाप्रियो नरः ।
दक्षिणां च ददेत्पश्चाद्धेमवस्त्रादिकाँस्तथा ।।३३।।
भूरिदानं ततो दद्याद्दीनानाथपुरःसरम् ।
नानया सदृशी विद्या न गङ्गासदृशी नदी ।।३४।।
न वैकुण्ठात्परं धाम न मुक्तिः काशिकां विना ।
शृणु प्रिये प्रवक्ष्यामि पौरश्चरणकं विधिम् ।।३५।।
होमतर्पणमार्जादिविप्रभोजनसंयुतम् ।
लक्षं जपेद्दशांशेन जुहुयाच्च घृतैस्तिलैः ।।३६।।
मधुरत्रययोगेन गुरुणोक्तविधानतः ।
मूलमन्त्रेण देवेशि चतुर्थ्यन्तेन होमयेत् ।।३७।।
शृणु देवि प्रवक्ष्यामि मानं हि वनसिद्धिदम् ।
पुष्पं समग्रं जुहुयात्कमलं वापि पुष्करम् ।।३८।।
कुसुम्भवानि पुष्पाणि यथेष्टानि हुनेत् प्रिये ।
शतसंख्यास्तिला देवि राजिका शतसंख्यकाः ।।३९।।
लाजा मुष्टिप्रमाणाः स्युः घृतं च कर्षमात्रकम् ।
चुलुकार्द्ध पयः क्षीरं मधु तत्संमितं भवेत् ।।४०।।
स्थूलं स्थूलं महेशानि कूष्माण्डं मातुलिङ्गकम् ।।४१।।

मनःप्रियकरैः खण्डैः फलं भवति निश्चयात्।
रम्भाफलं चतुःखण्डं लघु चेत्खण्डितं न हि ॥४२॥
नारिकेलस्य खण्डञ्च स्थूलं कुर्यान्मनःप्रियम्।
पर्वस्थाने चेक्षुखण्डं मनःसन्तोषकारकम् ॥४३॥
द्राक्षाफलं समग्रं स्यात् नार्गि खर्जूरसम्भवम्।
गुग्गुलं क्रमुकार्धं च कुंकुमं हि तथा भवेत् ॥४४॥
मनःप्रियाणि सर्वाणि फलानि हवनाद् भवेत्।
गुञ्जासमं तु कर्पूरं कस्तूरीघुसृणं तथा ॥४५॥
चन्दनं चागुरुं देवि क्रमुकेन समं भवेत्।
लाक्षागुग्गुलसंख्या स्याद्यद्यदघहरं भवेत् ॥४६॥
मनः प्रियाहुतीः कुर्यात् तद्दशांशेन होमयेत्।
एतदाहुतिमानं तु कथितं सर्वसिद्धिकृत् ॥४७॥
एवं संसाधितो मन्त्रोऽभीष्टं यच्छति मन्त्रिणाम्।
अथ वक्ष्यामि देवेशि विशेषं पर्वणोदितम् ॥४८॥
ज्येष्ठशुक्लदशम्यां तां विशेषेण भजेद्बुधः।
दद्याद्दशभ्यो विप्रेभ्यो दशप्रस्थमितांस्तिलान् ॥४९॥
जप्त्वा सहस्रं हुत्वा चोपोष्यतश्च विकल्मषः।
सर्वभोगसमायुक्तो जायते मानवो भुवि ॥५०॥
तारा नमो भगवति वाक् सदा गगनं लिहि।
क्रिया तंत्री पिता कीशो विशालाः सूक्ष्मसंयुताः ॥५१॥
गङ्गा मां पावयेद्द्वन्द्वमन्ते हुतवहाङ्गना।
गिरिनेत्राक्षरी विद्या स्मृता पातकसंघहृत् ॥५२॥
रामवेदाङ्कवन्ध्नेत्रार्णैरङ्गतीरितम्।
इयमादिमसप्तार्णत्यक्तोक्तानखराक्षरी ॥५३॥
वाणवेदाग्निरामाग्नियुग्मार्णैः स्यात् षडङ्गकम्।
तारो हिलिमिलिद्वन्द्वं गङ्गेदेवि नमो मनुः ॥५४॥
तिथिवर्णैयमश्वाग्निनेत्राक्ष्यक्षिभिरङ्गकैः।
तारो माया रमा हार्दं ततो भगवतीति च ॥५५॥
गां स्मृत्यत्रीसदृग्वायुस्ते नमो वर्मफट् मनुः।
त्रिनेत्रवेदपञ्चाक्षियुग्मार्णैरङ्गमीरितम् ॥५६॥
एषां चतुर्णां मन्त्राणामुपास्तिः पूर्ववन्मता।
वाङ्मायाकमलाकामवेदाद्यो वियदिन्दुयुक् ॥५७॥

मणिकर्णिभगी ब्रह्मा हृदयं ध्रुवसंपुटः ।
मन्त्रः पञ्चदशार्णोस्य मुनिर्व्यासेति शङ्करी ।।५८।।
छन्दः श्रीमणिकर्णा तु देवता सुखपुत्रदा ।
चन्द्रनेत्राक्षिनेत्रेषु वह्निवर्णैः षडङ्गकम् ।।५९।।
फुल्लेन्दीवरनिर्मितां करतले मालामसव्ये परे ।
बीजापूरफलं सिताम्बुजमयीं मालां दधाना हृदि ।।६०।।
श्वेतक्षौमरता शरद्विधुनिभा रक्षानिबद्धाञ्जलि ।
ध्यातव्या मणिकर्णिका रविसमा तोयेशकाष्ठामुखी ।।६१।।
लक्षत्रयं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
पुण्डरीकैस्त्रिमध्वक्तैर्यजेत्तां गङ्गया समम् ।।६२।।
अयं मनुर्जनैर्जप्तो मोक्षलक्ष्मीं प्रयच्छति ।
सुखं समस्तं सन्तानसौभाग्यं धनसञ्चयम् ।।६३।।
प्रणवो बिन्दुयुग्मान्तो मण्यन्ते मणिकर्णिके !
हृन्मन्त्रोऽयं समाख्यातो मनुवर्णेऽस्मि पूर्ववत् ।।६४।।
विधेयोपासना सर्वा मणिकर्ण्या उपासकैः ।
कुदेशेऽपि मृतो याति ब्रह्मैवामलमव्ययम् ।।६५।।
न चास्याः सदृशी विद्या त्रिषुलोकेष्वभीष्टदा ।
एतत्ते सर्वमाख्यातं गङ्गामन्त्रौघविग्रहम् ।।६६।।
कामदं मोक्षदं सारं गोपनीयं प्रयत्नतः ।
बहुनात्र किमुक्तेन तव स्नेहात्प्रकीर्तितम् ।।६७।।
सकृज्जप्त्वाऽपि मनुजः सर्वपापैः प्रमुच्यते ।
संलभेद्वाञ्छितं मर्त्यो यजन्भोगापवर्गदाम् ।।६८।।
स्वयमेव वरं दद्याद्गङ्गा सर्वजगद्धिता ।
न मोघमस्या यजनं नृणामिह कलौ युगे ।।६९।।
भवेत्प्राणेशनियतं यद्यच्चिन्तयते नरः ।
तत्तदाप्नोति वै गङ्गां यजन्वाञ्छितदायिनीम् ।।७०।।
राज्यकामो धनकामः पुत्रकामस्तथैव च ।
स्मृतिकामो यजन्नित्यं संलभेद्वाञ्छितं फलम् ।।७१।।

**विप्रोक्तिः—**

एतद्द्युनद्याः पटलं विमुक्तिदं शिवोक्तमाराज्जपतां सुखप्रदम् ।
न यत्र षट्कर्मविधानमल्पदं प्रकीर्त्तितं ते भवरोगनाशनम् ।।७२।।

विद्वेषोच्चाटनादीनि षट्कर्माणि मनीषिणः।
पटले यानि शंसन्ति देवताराधनेष्विह।
तानि त्वं हि महाबुद्धे स्वभावामलमोक्षदे।
गङ्गार्चनविधौ पुण्ये न दृष्टानि कथञ्चन ॥७३॥
न सम्भवन्ति चैतानि मोक्षतत्त्वप्रदे शुभे।
शास्त्रे गङ्गार्चनपरे निषिद्धानि मनीषिभिः ॥७४॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे आगमोक्तं गङ्गापटलवर्णनं नाम चतुर्विंशतिप्रकरणम् ॥२४॥**



## पञ्चविंशति-प्रकरणम्

**विप्र उवाच—**

अथागमोक्तां जाह्नव्याः पूजापद्धतिमुत्तमाम्।
वक्ष्यामस्ते महाबाहो! शृणुष्वैकमनाः शुभाम् ॥१॥

तद्यथा— तत्र श्रीमान् साधको ब्राह्मे मुहूर्त्ते समुत्थायावश्यकं कृत्वा शुचिर्भूत्वा धौते वाससी परिधायाचम्य स्वमूर्धनि श्रीगुरुं शुभ्रवसनाभरणभूषितं ध्यात्वा तत्पदपङ्कजनिःसृतामृतधारया स्वशरीरं सिक्तं सञ्चित्य श्रीगुरुभ्यो नमः इति गन्धाद्यैः सम्पूज्य—

प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्।
वराभयकरं शान्तं स्मरेत्तन्नामपूर्वकम् ॥२॥

इति ध्यात्वा प्रणम्य स्वहृदि लयं भावयेत्। वक्ष्यमाणमूलमन्त्रेण प्राणायामादिऋष्यादिकरषण्डगं न्यासं विधाय हृदयारविन्दे गङ्गां ध्यात्वा मानसोपचारैरभ्यर्च्य गङ्गामन्त्रं यथाशक्ति जप्त्वा जपं गुह्येति समर्प्य श्रीगुरुं प्रणम्य।

त्रैलोक्यचैतन्यमयादिगङ्गे श्रीशैलजे त्वच्चरणाज्ञयैव
प्रातः समुत्थाय तव प्रियार्थम् संसारयात्रामनुवर्त्तयिष्ये।
संसारयात्रामनुवर्तमानं त्वदाज्ञया श्रीपरदेवि! गङ्गे!
स्पर्द्धा- तिरक्तासकलिप्रमादभयानि मां माऽभिभवन्तु मातः ॥३॥

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः।
भागीरथी देवि! हृदि त्वयाऽहं यथानियुक्तोऽस्मि तथा करोमि ॥४॥

**इति श्लोकत्रयं पठित्वा देव्याज्ञामादाय ततः—**

समुद्रमेखले ! देवि ! पर्वतस्तनमण्डले ।
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।।५।।

इति भूमि प्रार्थ्य बहिर्निर्गत्य यथाविधि मलमूत्रोत्सर्गशौचाभ्यङ्गनादिकं कृत्वा दन्तकाष्ठमादाय क्लीं कामदेवाय सर्वजनप्रियाय नमः इति मन्त्रेण दन्तकाष्ठं गृहीत्वा दन्तधावनं कृत्वा मुखं प्रक्षाल्य नद्यादौ स्वगृहे वा स्नात्वा धौते वाससी परिधायाचम्य कुङ्कुमेन त्रिपुण्ड्रधारणं कृत्वा वैदिकीं सन्ध्यां निर्वर्त्य तान्त्रिकी सन्ध्यां कुर्यात् ।

यथा, मूलेनाचम्य मूलेनैव शिखां बद्ध्वा प्राणायामपूर्वकं वक्ष्यमाणऋष्यादिकरन्यासान्विधाय जलं वमिति धेनुमुद्रयाऽमृतीकृत्य मूलेनाष्टवारमभिमन्त्र कुशोत्पतज्जलसविन्दुभिः बिन्दुभिरकाराद्यक्षरान्तैरेकपञ्चाशदक्षरैः स्वशिरः प्रोक्ष्य मूलेन च त्रिः प्रोक्ष्य भानुमण्डले यथोक्तरूपां श्रीगङ्गां ध्यात्वा दक्षहस्ते जलं गृहीत्वा वामहस्ताग्रेण स्पृशन् इति पाञ्चभौतिकबीजैः सप्तवारमभिमन्त्र्य मूलेन च त्रिरभिमन्त्र्य तज्जलं वामपाणौ निधाय तद्विन्दुभिर्मूलेन दक्षिणहस्ताग्रेण निजमस्तके त्रिः प्रोक्ष्य अवशिष्टं वामहस्तस्थजलं वामघ्राणान्तिकं नीत्वा तेजोरूपं वामघ्राणरन्ध्रेण स्वशरीरान्तःप्रविष्टं ध्यात्वा तेन जलेन स्वशरीरमध्यस्थं सकलदुरितं प्रक्षाल्य श्यामवर्णं तज्जलं दक्षिणनासाविवरेण निर्गतं विभाव्य दक्षिणपाणिनाऽऽदाय निजवामभागे वज्रशिलां ध्यात्वा 'ॐ क्लीं हुँ फट्' इति पाशुपतास्त्रमन्त्रेण तस्यामास्फाल्य करौ प्रक्षाल्य मूलेन त्रिराचम्य अञ्जलिना जलमादायोत्थाय मूलं समुच्चार्य, गङ्गे एष तेऽर्घः स्वाहेति त्रिरर्घाञ्जलिं सूर्याभिमुखमुत्क्षिप्य मूलमुच्चार्य श्रीगङ्गां तर्पयामि नमः इति त्रिः सन्तर्प्य वक्ष्यमाणप्राणायामादिकं कृत्वा भानुमण्डले देवीं ध्यायन् यथाशक्ति मूलमष्टोत्तरशतं जपित्वा जपं समर्प्य स्तुत्वा प्रणम्य सूर्यमण्डलाद्देवीं स्वहृदि विधृत्य श्रीगुरुं प्रणमेदिति कालत्रयेऽपि तान्त्रिकसन्ध्याविधिः ।

## अथ तर्पणम्

वैदिकतर्पणं निर्वर्त्य तान्त्रिकतर्पणं कुर्यात् । तद्यथा, मूलेन प्राणायामं कृत्वा वमिति धेनुमुद्रया जलममृतीकृत्य तत्र सचक्रां साङ्गावरणां देवीं ध्यात्वा मूलमुच्चार्य श्रीपरदेवतां तर्पयामि नमः इत्यष्टोत्तरशतवारं तदर्धमष्टाविंशतिवारं वा देवताया मुखपद्मेऽमृतधिया तीर्थजलैः सन्तर्प्य स्तोत्राणि पठन् स्वगृहं गच्छेत् ।

**ततो द्वारि स्थित्वा स्वपापं मनसा सञ्चिन्त्य—**

देवि त्वं प्राकृतं चित्तं पापाक्रान्तमभून्मम ।
तन्निसारय चित्तान्मे पापं फट् फट् ते नमः ।।६।।

सूर्यः सोमो यमः कालो महाभूतानि पञ्च च।
एते शुभाशुभस्येह कर्मणो नव साक्षिणः ।।७।।

इति पठित्वा हुँ फडिटि क्रोधदृष्ट्या पार्श्वद्वयमूर्ध्वमधश्चावलोक्य सुमना भूत्वा गृहान्तःप्रविश्य अङ्गणे स्थित्त्वा पादौ प्रक्षाल्याचम्य आसने समुपविश्य ह्रीं आधारशक्तिकमलासनाय नमः, इत्यासनं सम्पूज्य तत्र सूर्यमन्त्रेण सूर्यार्घं दत्वा सूर्यमन्त्रं यथाशक्ति जप्त्वा स्तुत्वा प्रणम्य पूजामण्डपद्वारं गत्वा ताम्रादिपात्रस्थं जलं धेनुमुद्रयाऽमृतीकृत्य तेन जलेन पूजामण्डपं प्रोक्ष्य पश्चिमद्वारं गत्वा द्वारं प्रोक्ष्य तस्योद्ध्वशाखायां मध्ये ॐ विप्राय नमः तद्दक्षिणे महालक्ष्म्यै नमः वामे सरस्वत्यै नमः पुनः मध्ये द्वारश्रियै नमः द्वारस्य वामदक्षिणशाखयोः गं गणपतये नमः, क्षं क्षेत्रपालाय नमः, शं शङ्खनिधिवसुधाभ्यां नमः, पं पद्मनिधिवसुमतीभ्यां नमः, मां मायाशक्तये नमः चिं चिच्छत्त्यै नमः गं गङ्गायै नमः, यं यमुनायै नमः, धं धात्र्यै नमः, वं विधात्रे नमः इति द्वन्द्वक्रमेणाधोऽधः सम्पूज्य अधः दन्देहल्यै नमः तस्यां वामदक्षिणयोः ब्राहम्यै नमः माहेश्वर्यै नमः इति सम्पूज्य ततः उत्तरपूर्वदक्षिणपर्यन्तं प्रतिद्वारं पूर्ववत् सम्पूज्य द्वाराग्रे कौमार्यादिमहालक्ष्म्यन्तं द्वन्द्वं क्रमेण सम्पूज्य अशक्तश्चेद् द्वारदेवताभ्यो नमः। पुनः पश्चिमद्वारं गत्वा अस्त्रमन्त्रेण तालत्रयपूर्वकं द्वारमुद्घाट्य सर्षपाक्षतभस्मकुसुमान्यादाय अस्त्रमन्त्रेण सप्तधाऽभिमन्त्र्य–

अपसर्पन्तु भूतानि पिशाचाः प्रेतगुह्यकाः।
ये चान्ये निवसन्त्यन्ये देवता भुवि संस्थिताः ।।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।।८।।

इत्यन्तेऽस्त्रमन्त्रं जपन् नाराचमुद्रया मण्डपान्तः प्रक्षिप्य तस्मान्निर्गच्छतां विघ्नानां स्ववामाङ्गसङ्कोचेन मार्गं दत्त्वा त्रिविघ्नानुत्सारयेत्। वामपादपुरःसरं मण्डपान्तःप्रविश्य वस्त्रेण द्वारमाच्छाद्य घण्टावादनपूर्वकमस्त्रेण मण्डपान्तः प्रोक्ष्य दीपान् प्रज्वालयेत्। वामे घृतदीपं दक्षिणे तैलदीपं कालागुर्वादि धूपयित्वा निऋतिकोणे वास्तुपुरुषाय नमः, वास्त्वधीश्वराय ब्रह्मणे नमः ईशानभागे कुलनाथश्रीपादुकां पूजयामि नमः, रक्तवर्णद्वादशशक्तिसहिताय दीपनाथाय नमः। इति दीपनाथं सम्पूज्य भैरवाय नमः इति भैरवाज्ञां गृहीत्वा अः फडिति पूजावेदिं गत्वा आसनस्थानं मूलेन वीक्ष्य अस्त्रेण प्रोक्ष्य ॐ आधारशक्तिकमलासनाय नम इत्यासनं सम्पूज्य पीठोपरि पूजायन्त्रं संस्थाप्य मूलमन्त्रेण पुष्पाञ्जलिं दत्वा स्वदक्षिणभागे गन्धादिकं निधाय हाँ हूँ फडिति नाराचमुद्रया दिव्यदृष्ट्या संवीक्ष्य वामभागे जलपूर्णं कुम्भं 'आँ' इति वामपाणिना स्पृष्ट्वा रमिति दीपशिखां स्पृष्ट्वा

करौ प्रक्षाल्य वामे गुरुभ्यो नमः दक्षिणे गणपतये नमः, अग्रे श्री गङ्गादेव्यै नमः मूर्द्धेति शिखादिस्वगुरुपर्यन्तं पारम्पर्यं स्मृत्वा सम्पूज्य प्रणम्य रमिति अग्नि-प्रकारत्रयं विधाय तन्मध्यगतमात्मानं विचिन्त्य भूतशुद्धिं कुर्यात्। भूतशुद्धि-प्राणप्रतिष्ठा अन्तर्वाह्यमातृकाश्रीकण्ठादियोगपीठादियोगपीठन्यासान्ते मूलमन्त्रन्यासं कुर्यात्। अत्र विस्तृतभयान्नेह प्रपञ्च्यते तन्त्रान्तरे प्रसिद्धम्।

## अथ मूलमन्त्रन्यासः

तत्रादौ मूलमन्त्रोद्धारं प्रदर्श्यते। तारं नमो भगवति ब्रूयादम्ब ततोऽम्बिके अम्बालिके महामालिन्येह्येहि भगवत्यथ अशेषतीर्थालवाले मायाश्रीबीजयोरथ **शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विज। गङ्गाविद्येयमाऽऽख्याता त्रिपञ्चा-शद्भिरक्षरैः। इति मन्त्रेण प्राणायामत्रयं कृत्वा अस्य श्रीगङ्गामन्त्रस्य वेदव्यासऋषिः** अतिजगतीच्छन्दः श्रीगङ्गादेवता 'ह्रीँ' बीजं श्री शक्तिः स्वाहा कीलकं मम चतुर्विधपुरुषार्थसिध्यर्थे जपे विनियोमः इति कृताञ्जलिर्वदेत्। शिरसि वेदव्यास ऋषये नमः। मुखे अतिजगतीच्छन्दसे नमः। हृदये श्रीगङ्गायै देवतायै नमः। गुह्ये ह्रीँ बीजाय नमः पादयोः 'श्रीँ' शक्तये नमः, नाभौ स्वाहा कीलकाय नमः, मम चतुर्विधपुरुषार्थसिध्यर्थे जपे विनियोगः, इतिकृताञ्जलिर्वदेत् अङ्गुष्ठयोः ॐ नमो भगवति ? हृदयाय नमः तर्जन्योः अम्बाम्बिके अम्बालिके शिरसे स्वाहा मध्यमयोः महामालिनि एह्येहि शिखायै वषट् अनामिकयो- रशेषतीर्थालवाले ? कवचाय हुँ, कनिष्ठयोः हीं श्रीं नेत्राय वषट् करतलकर पृष्ठयोः शिवजटाधिरूढे ? गङ्गे गङ्गाम्बिके ? स्वाहा, अस्त्राय फट्। इति षडङ्गमन्त्रानङ्गुष्ठादि तलान्तं करयो-र्विन्यस्य हृदयादि षडङ्गेष्वपि विन्यसेत्।

## अथ ध्यानम्

उत्फुल्लामलपुण्डरीकरुचिरा कृष्णोश विध्यात्मिका। कुम्भेष्टाभयतोयजं विदधती श्वेताम्बरालङ्कृतिः। हृष्टास्या शशिशेखराऽखिलनदी शोणादिसंसेविता ध्येया पाप-विनाशिनी मकरगा भागीरथी साधकैः ॥९॥

**तन्त्रान्तरे (ध्यानम्)–**

वराभयकरां सौम्यां सोमकोटिसमप्रभाम्।
भजेद् गङ्गां महादेवीं पादोदकतरङ्गिणीम् ॥१०॥
वरपद्मवामयोः कुम्भाभय दक्षयोः

केचिन्मते द्विभुजं रूपं ध्यायेत् यथोपदेशं कार्यं इत्युक्तत्वान्नारायणनारद-सम्वाद-प्रणीत-ब्रह्मवैवर्त्तप्रकृतिखण्डे यदुक्तं तद्ध्यायेत्तद्यथा–

**नारायण उवाच–**

ध्येयामनेन ध्यानेन तद्ध्यानं शृणु नारद !
ध्यानं च कौथुमोक्तं वै सर्वपापप्रणाशनम् ।।११।।
सामवेदे च सम्प्रोक्तं सम्वादं विष्णुब्रह्मणोः ।
श्वेतचम्पकवर्णाभां गङ्गां पापप्रणाशिनीम् ।।१२।।
कृष्णविग्रहसम्भूतां कृष्णतुल्यां परां सतीम् ।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ।।१३।।
शरत्पूर्णेन्दुशतकमुष्टशोभावरावराम् ।
ईषद्हास्यप्रसन्नास्यां शश्वत्सुस्थिरयौवनाम् ।।१४।।
**नारायणप्रियां शान्तां तत्सौभाग्यसमन्विताम् ।**
**बिभ्रतीं कवरीभारं मालतीमाल्यसंयुताम् ।।१४।।**
सिन्दूरबिन्दुललितां सार्द्धचन्दनबिन्दुभिः ।
कस्तूरीपत्रकं गण्डे नानाचित्रसमन्विताम् ।।१५।।
पक्वबिम्बविनिन्द्यैकचार्वोष्ठपुटमुत्तमाम् ।
मुक्तापङ्क्तिप्रभामुष्टदन्तपङ्क्तिमनोरमाम् ।।१६।।
सुचारुवक्रनयनां सकटाक्षमनोहराम् ।
कठिनश्रीफलाकारस्तनयुग्मां सपत्रकाम् ।।१७।।
वृहच्छ्रोणीं सुकठिनरम्भास्तम्भविनिन्दिताम् ।
स्थलपद्मप्रभामुष्टपादपद्मयुगाम्बराम् ।।१८।।
रत्नपादुकसंसक्तकुङ्कुमोक्तसयावकाम् ।
देवेन्द्रमूलमन्दारमकरन्दकणारुणाम् ।।१९।।
सुरसिद्धमुनीन्द्रैश्च दत्तार्घ्यसंयुतां सदा ।
मुक्तिप्रदां मुमुक्षूणां कामिनां स्वर्गभोगदाम् ।।२०।।
वरां वरेण्यां वरदां भक्तानुग्रहकातराम् ।
श्रीविष्णोः पददात्रीञ्च भजेद्विष्णुपदीं सतीम् ।।२१।।
इत्यनेनैव ध्यानेन ध्यात्वा त्रिपथगां शुभाम् ।
दत्वा सम्पूजयेत् ब्रह्मन्नुपचाराणि षोडश ।।२२।।

इति ध्यात्वा मानसोपचारैः सम्पूज्य अष्टोत्तरशतवारं मूलमन्त्रं जपित्वा **जपं समर्प्य प्रणम्य पीठे चतुरस्रत्रयोपेतं अष्टदलपद्मं विलिख्य इति पूजाचक्रं निर्माय तत्र मूलेन पुष्पाञ्जलिं दत्वाऽर्घ्यादिपात्रस्थापनं कुर्यात् । यथा– स्वपुरतः किञ्चिद्वामाग्रे चतुरस्रवृत्तत्रिकोणात्मके मण्डले चन्दनानुलिप्ते मूले मत्स्यमुद्रया कृत्वा श्रीगङ्गाया अर्घमण्डलाय नमः, इति मण्डलं सम्पूज्य तत्र वायव्यनैरृतेशानाग्नेयकोणे हृदयाय नमः शिरसि नमः शिखायै नमः कवचाय नमः, इति सम्पूज्य पुरतः**

नेत्राय नमः, स्वाग्रादिचतुर्दिक्षु अस्त्राय नमः इति पूर्वोक्तानि षडङ्गानि सम्पूज्य तत्र मूलमन्त्रेण प्रक्षालितमर्घ्यपात्राधार श्रीगङ्गायाः अर्घपात्राधारं स्थापयामीति संस्थाप्य धर्मप्रददशकलात्मने वह्निमण्डलाय श्री गङ्गायाः अर्घाधाराय नमः इति सम्पूज्य धूम्रार्चिरादिदशकलाः इहागच्छतेहतिष्ठतेति तत्र वह्निकलाः आवाह्य स्वाग्रादिप्राग् दक्षिणेन वृत्ताकारेण यं धूम्रार्चिषे नमः ॐ उष्मायै 'लं' ज्वलिन्यै 'शं' विस्फुलिङ्गिन्यै नमः, 'षं' सुश्रियै 'सं' सुरूपायै 'हं' कपिलायै 'लं' हव्यवाहायै 'क्षं' कव्यवाहायै नमः, इति वह्निकलाः सम्पूज्य अस्त्रमन्त्रेण शङ्खं प्रक्षाल्य श्रीगङ्गाया अर्घपात्रं प्रतिष्ठापयामीति तस्मिन्नाधारे संस्थाप्य अं हं अर्घ्यप्रदद्वादशकलात्मने सूर्यमण्डलाय श्रीगङ्गाया अर्घपात्राय नमः। इति तत्पात्रं सम्पूज्य तत्र सूर्यकलाः इहागच्छेह-तिष्ठेत्यावाह्य वृत्ताकारेण प्रादक्षिण्येन 'कं मं' तपिन्यै नमः 'खं वं' तापिन्यै, 'गं फं' धूम्रायै 'घं पं' मरीच्यै, 'डं नं' ज्वालिन्यै, 'चं घं' रुच्यै, 'छं दं' सुषुम्नायै, 'जं थं' भोगदायै, 'मं तं' विश्वायै 'त्रं णं' बोधिन्यै, 'टं ठं' धारिण्यै, 'ठं डं' क्षमायै नमः इति सम्पूज्य क्षं लं हं सं षं लं वं रं यं मं भं वं झं पं नं धं दं थं तं णं ढं डं ठं लं झं जं छं चं डं घं गं खं कं अः अं औं ओं ऐं एं ल्हं लृं ॠं ऋं ऊं उं ईं इं आं अं इत्यन्ते मूलमन्त्रं त्रिर्जपन् शुद्धोदकैः श्रीगङ्गार्घपात्रं पूरयामीति बिन्दुस्रुतपीयूषभावनयाऽऽपूर्य 'ॐ सं' कामप्रदषोडशकलात्मने सूर्यमण्डलाय श्रीगङ्गा-यार्घपात्रामृताय नमः इति तज्जलं सम्पूज्य तत्र सोमकलाः समावाह्य वृत्ताकारेण प्रादक्षिण्येन 'अं' अमृतायै नमः, आं मानदायै नमः 'इं' पूषायै नमः, 'ईं' तुष्ट्यै नमः, 'ॐ' पुष्ट्यै 'ॐ' रत्यै 'ऋं' धृत्यै, 'ॠं' शशिन्यै 'लृं' चन्द्रिकायै 'लॄं' कान्त्यै 'एं' ज्योत्स्नायै, 'ऐं' द्विश्रियै, 'ओं' प्रीत्यै, 'औं' अङ्गदायै, 'अं' पूर्णायै नमः, 'अः' पूर्णायै नमः इति सम्पूज्य शिखामन्त्रेण गालिनीं मुद्रां प्रदर्श्य 'वमिति' धेनुमुद्रयाऽमृतीकृत्य मूलमन्त्रेणाष्टवारमभिमन्त्र्य मत्स्यमुद्रयाऽऽच्छादयेत्।

इत्यर्घपात्रं संस्थाप्य तस्योत्तरतः पङक्त्याकारेण त्रिकोणमण्डलत्रयं कृत्वा तेषु मण्डलेषु पाद्याचमनीयमधुपर्कपात्रादिसंस्थाप्य दक्षिणंप्रोक्षणीपात्रं स्थापयेत् गन्धादिपुष्पाक्षतादिकन्निक्षिप्य प्रोक्षणीपात्रे जलेन स्वात्मानं पूजाचक्रं च पूजाद्रव्यादींश्च प्रोक्ष्य स्वदेहे गङ्गादिमलङ्कृत्य स्वेष्टदेवतारूपं सञ्चिन्त्य मूलमन्त्रं यथाशक्ति जपित्वा जपं समर्पयेदिति आत्मपूजा।

## ततः पीठपूजामारभेत

मण्डूकादिपरतत्त्वान्तं सम्पूज्य अष्टदलकेसरेषु स्वाग्रादिप्रादक्षिण्येन जयायै अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै, मङ्गलायै इति मध्यान्तं सम्पूज्य ह्रीं सर्वशक्तिकमलासनाय नमः इति समस्तं पीठं सम्पूज्य मूलमन्त्रमुच्चार्य श्रीगङ्गामूर्तिं कल्पयामीतिपीठमध्ये पुष्पादिकं निक्षिप्य ध्यानोक्तां मूर्तिं भावयन् मूलमन्त्रमुच्चार्य गङ्गामूर्त्तये नमः, इति कल्पितां मूर्त्तिं पूजयेत्।

ततः पुनर्मूलेन प्राणायामत्रयं ऋष्यादिकरखड्गन्यासं कृत्वा हस्ताभ्यां पुष्पाञ्जलिं गृहीत्वा पद्ममुद्रां बध्वा मातृकापद्मत्वेन ध्यात्वा देवीरूपं तेजःकरस्थपुष्पाञ्जलौ संयोज्य मूलमुच्चार्य श्रीगङ्गे इह तिष्ठ तिष्ठेति स्थापनमुद्रां प्रदर्श्य—

देवेशि भक्तिसुलभे सर्वाभरणसंयुते।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥२३॥
इति प्रार्थ्य आवाहनादि सप्तमुद्रां प्रदर्श्य प्राणप्रतिष्ठां कुर्यात्।

आसनपाद्यार्घ्याचमनादिमधुपर्कपुनराचमनीयस्नानवस्त्राभरणदिव्यगन्धपुष्पान्तं सम्पूज्य आवरणपूजामारभेत। हृदयादिषडङ्गस्यासनस्थानेषु षडङ्गानि लयाङ्गत्वेन सम्पूज्य देव्याः पृष्ठभागे गुरुपंक्ति सम्पूज्य कर्णिकायां मूलेन त्रिवारं गन्धाद्यैः सम्पूज्य केसरेषु आग्नेयकोणे—

ॐ नमो भगवति हृदयाय नमः ईशानकोणे अम्बेऽम्बिकेऽम्बालिके शिरसे नमः। नैऋत्यकोणे महामालिनि एह्येहि शिखायै नमः, वायव्यकोणे अशेषतीर्थालवाले कवचाय नमः मध्ये ह्रौं श्रीं नेत्राभ्यां नमः, चतुर्दिक्षु शिवजटाधिरूढे गङ्गे गङ्गाम्बिके नमः स्वाहा अस्त्राय नमः। अर्घोदकं गृहीत्वा एता षडङ्गाद्यावरणदेवताः पूजितास्तर्पिताः सन्तु नमः। पुष्पाञ्जलिं गृहीत्वा, श्लोकः– "अभीष्टसिद्धिं मे मेहि शरणागतवत्सले भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्" इति पुष्पाञ्जलिं दत्वा प्रणम्य इति प्रथमावरणन्ततः अष्टदलेषु देव्यग्रदलमारभ्य प्रादक्षिण्येन रूद्राय नमः विष्णवे, ब्रह्मणे सूर्याय, हिमाचलाय, मेनायै भागीरथ्यै, समुद्राय नमः। अर्घोदकेन पूर्ववन्निवेद्य अभीष्टेति पुष्पाञ्जलिं दद्यात्। दलाग्रेषु देव्याग्रादि मत्स्याय नमः कूर्माय मण्डूकाय हंसाय कारंण्डवाय चक्रवाकाय सारसाय, अर्घोदकं पुष्पाञ्जलिं च पूर्ववन्निवेद्य चतुरस्रे 'लं' इन्द्राय नमः, 'रं' अग्नये नमः, 'टं' यमाय, 'क्षं' निऋतये नमः, 'वं' वरुणाय, 'वं' वायवे नमः, 'स्रं' सोमाय नमः, 'हं' ईशानाय नमः, अधः अनन्ताय नमः इति स्वस्वदिक्षु सम्पूज्य तत्समीपे वज्राय नमः शक्तये नमः दण्डाय खड्गाय पाणये अंङ्कुशाय गदायै त्रिशूलाय नमः पद्माय चक्राय नमः।

अर्घोदकं गृहीत्वा एते इन्द्रादिलोकपालाः पूजितास्तर्पिताः सन्तु नमः। पुष्पाञ्जलिं– "अभीष्टसिद्धिं मे देहि शरणागतवत्सले। भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्। ततो मूलमुच्चार्य साङ्गायै सपरिवारायै श्रीगङ्गायै नमः।

इति त्रिः सम्पूज्य अस्त्रगन्धेन धूपभाजनं प्रोक्ष्य गन्धादिभिर्धूपभाजनमभ्यर्च्य तत्र सारङ्गारान्निधाय 'वमिति' धेनुमुद्रयाऽमृतीकृत्य 'क्लीं' सुरभितेजसे स्वाहा इति मन्त्रेण गुग्गुलादि विनिक्षिप्य गन्धर्वदेवतायै धूपाय नमः इति धूपं सम्पूज्य मूलमुच्चार्य–

वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्धउत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥२४॥

इति धूपमुत्सृज्य 'घं' घण्टायै नमः इति वामभागे घण्टां निधाय अस्त्रमन्त्रेण प्रोक्ष्य घण्टायै नमः, इति त्रिरभ्यर्च्य।

ॐ जगध्वनिमन्त्रमातः स्वाहेति घण्टामन्त्रेण तामभिमन्त्र्य वामकरेण घण्टां वादयन्। ॐ हं हं हमिदमिदं गृहाण स्वाहेति मन्त्रेण नोचैर्धूपं निवेद्य धूपभाजनं देवता-वामभागे निवेद्य ह्रां इति दीपं प्रज्वाल्य दैवत्याय घृतदीपाय नमः। इति सम्पूज्य 'वमिति' धेनुमुद्रयाऽमृतीकृत्य मूलमुच्चार्य,

सुप्रकाशो महादीप सर्वत्र तिमिरापहः।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥२५॥

इत्युच्चार्य श्रीगङ्गे एष ते दीपो नमः, इति दीपमुत्सृज्य घण्टां वादयन् देवतायाः पादादिमूर्द्धान्तं उच्चैर्दीपं प्रदर्श्य देव्या दक्षिणभागे निवेश्य पाद्याचमनीये दत्वा स्वर्णादि पात्रे नैवेद्यमानीय विष्णुदैवत्याय नैवेद्याय नमः इति नैवेद्यं सम्पूज्य देव्याः पुरतश्चतुरस्रमण्डले साधारं तत्पात्रं निधाय धेनुमुद्रया प्रदर्श्य मूलेनाष्टवारमभिमन्त्र्य दक्षिणहस्तेन जलं गृहीत्वा

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ! ॥२६॥

इति नैवेद्यस्योपरि चुलुकोदकं निक्षिप्य मूलमुच्चार्य श्रीगङ्गे ! एतत्ते नैवेद्यं नमः इत्युत्सृज्य नैवेद्यं पात्रान्तरं धेनुमुद्रयाऽमृतीकृत्य अमृतोपस्तरणमसिस्वाहेति स्वेष्ट-देवतामाचम्य वामहस्तेन विकचोत्पलसन्निभां ग्रासमुद्रां प्रदर्श्य धेनुमुद्रया जलममृतीकृत्य–

नमस्ते देवि देवेशि सर्वतृप्तिकरं परम्।
आत्मसंवर्द्धितं शुद्धं प्रकृतिस्थं सुशीतलम्।
परमानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥२७॥

इति देव्या वामभागे जलपात्रं निवेशयन् जलं निवेद्य पुष्पाञ्जलिमादाय।

सत्पात्रं चिद्धविः सौख्यं विविधानेकभक्षणम्।
निवेदयामि ते देवि सानुगायै जुषाण तत् ॥२८॥

इति पुष्पाञ्जलिं दत्वा मूलमन्त्रं दशधा जपित्वा नित्यहोमं कुर्यात्।

## नित्यहोम विधिः

तत्र कुण्डादग्निं प्रज्वाल्य तत्र देवीं ध्यात्वा गन्धादिभिः सम्पूज्य घृतपुष्पतिलतण्डुलादिद्रव्येन मूलमन्त्रेण पञ्चविंशत्याहुतीर्हुत्वा होमाशक्तौ पञ्चसप्त-

तिवारं मूलमन्त्रं जपित्वा पूजाचक्रस्येशानकोणे चतुरस्त्रवृत्तत्रिकोणमण्डलं कृत्वा तत्र साधारं सव्यञ्जनान्नोदकपूरितताम्रादिपात्रं निधाय सर्वभूतानि इहागच्छतागच्छतेह तिष्ठतेत्यावाह्य सर्वभूतेभ्यो नमः इति पुष्पादिभिः सम्पूज्य—

ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ।।२९।।
भूचरा खेचराश्चैव तथा चैवान्तरिक्षगाः ।
सर्वे ते प्रीतिमनसो भूत्वा गृहणन्त्विमं बलिम् ।।३०।।

इति वामकराङ्गुलिभिरर्घपात्रात्पात्रान्तरोद्धृतजलधारां वलिपात्रे निक्षिपन् वलिमुत्सृज्य पुष्पाञ्जलिमादाय ।

भूतानि यानीह वसन्ति भूतले वलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
सन्तोषमादाय व्रजन्तु सर्वे क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ।।३१।।

इति पुष्पाञ्जलिं दत्वा प्रणम्य, यथासुखं विहरन्तु भूतानि इति नाराचमुद्रया विसृज्य अस्त्रमन्त्रेण शुद्धजलैः स्वात्मानं प्रोक्ष्य देवतां तृप्तां ध्यात्त्वा पात्रान्तरे 'वमिति' धेनुमुद्रया जलममृतीकृत्य अमृतापिधानमसि स्वाहेति गङ्गायै उत्तरापोशनं दत्वा नैवेद्यं गतसारमाधृत्य देव्यै करशोधनार्थं सुगन्धचूर्णं च जलं दत्वा ताम्बूलमादाय मूलमुच्चार्य—

तमालदलकर्पूरपूगभागतरङ्गितम् ।
संशोधितं सुगन्धं च ताम्बूलं प्रतिगृह्यताम् ।।३२।।

एतत्ते ताम्बूलं नमः इति ताम्बूलं समर्प्य प्रागवन्निवेद्य मूलमन्त्रमुच्चार्थ सुप्रसन्नायै श्रीगङ्गायै नमः इति त्रिः पुष्पाञ्जलिना सम्पूज्य आरार्तिकं ह्रीमिति प्रज्वाल्य चक्रमुद्रया संरक्ष्य श्रीं ह्रीं ग्लूं स्त्रूं प्लूं ह्रीं श्रीं इति श्लेश्वरी विद्ययासम्पूज्य तत्कराभ्यामादाय मूलमुच्चरन् देव्याश्चरणान्मूर्द्धान्तमूर्द्धादिचरणान्तं च पुनर्भ्रामयन् नवकृत्वो नीराजयेत् । इति नीराजनं कृत्वा प्रणम्य मूलमन्त्रेण प्राणायामत्रयं ऋष्यादिकरषडङ्गन्यासं च कृत्वा मूलमन्त्रमष्टोत्तरसहस्रं तदर्धं त्रिशतमष्टोत्तरशतं वा नित्यं जपित्वाऽऽधाय पुनः प्राणायामऋष्यादिन्यासपूर्वकमर्घोदकमादाय ।

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्त्वयीष्यते ।।३३।।

श्रीगङ्गाया दक्षिणहस्ते गृहीतोदकदानेन जपं समर्प्य गङ्गासहस्रनामस्तोत्रेण स्तुत्वा प्रदक्षिणानमस्कारैः सन्तोष्य—

ॐ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ।।३४।।

आवाहनं न जानामि न जानामि विसर्जनम्।
पूजार्चनं न जानामि त्वं गतिः परमेश्वरि ॥३५॥
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम।
अन्तश्चारेण भूतानां दृष्टा त्वं परमेश्वरि ॥३६॥
देवि योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषुतेष्वचला भक्तिरच्युताऽस्तु सदा त्वयि ॥३७॥

**इति कृताञ्जलिः प्रार्थ्य अर्घपात्रमुद्धृत्य—**

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देवि गृहाणाराधनं मम ॥३८॥

**इति कृतमाराधनं किञ्चिदुदकदानेन समर्प्य पुष्पाञ्जलिमादाय मूलमुच्चार्य—**

रश्मिरूपा महादेव्याः पूजिता याश्च देवताः।
श्रीदेव्यङ्गे विलीनास्ताः सन्तु सर्वसुखावहाः ॥३९॥

इति पुष्पाञ्जलिं निक्षिप्य श्रीगङ्गे क्षमस्वेति तालत्रयं दत्वा संहारमुद्रां वध्वा।

ॐ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि।
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥४०॥

इति पठित्वा निर्माल्यपुष्पेण सह तेजसः समुद्धृत्याघ्राय वहन्नासाध्वना तत्तेजो ब्रह्मरन्ध्रं नीत्वा सौषुम्नेन मार्गेण हृदयकमलमानीय—

तिष्ठ तिष्ठ परे स्थाने स्वस्थाने परमेश्वरि।
यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ॥४१॥

संस्थाप्य श्रीगङ्गां ध्यात्वा मानसोपचारैः सम्पूज्य ईशानकोणे चण्डेश्वरायै नमः इति निर्माल्यं निक्षिप्य नैवेद्यं शेषं किञ्चिदादाय।

लेह्यचोष्यान्नपानानि ताम्बूलं स्रग्विलेपनम्।
निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया ॥४२॥

इति तत्रैव निक्षिप्य करं प्रक्षाल्य मूलमन्त्रेण निर्माल्यपुष्पाञ्जलिं शिरसि निधाय मूलेन चरणोदकं प्राप्य देवतारूपः सुखं विहरेति नित्यपूजा विधिः।

इत्थं सम्पूजयेद्देवीं साक्षाद्वैश्रवणो भवेत्।
पूज्यते सकलैर्देवैस्तेजसा भास्करोपमः ॥४३॥
अनेनाधिष्ठितं गेहं निशि दीपसमाकुलम्।
दृश्यते प्राणिभिः सर्वैः मन्त्रस्यास्य प्रभावतः ॥४४॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे आगमोक्तपूजनपद्धतिवर्णनं नाम पञ्चविंशतितमप्रकरणम् ॥२५॥**

## षड्विंशतितमप्रकरणम्

**विप्रा ऊचुः—**

स्तोत्रे शृणु यथाप्रोक्ते खण्डे प्रकृतिसंज्ञके ।
शिवागमे च गङ्गाया; महापापप्रणाशने ॥१॥

**श्रीनारायण उवाच—**

शिवसङ्गीतसंमुग्धश्रीकृष्णाङ्गसमुद्भवाम् ।
राधाङ्ग इव संयुक्तां तां गङ्गां प्रणमाम्यहम् ॥२॥
यज्जन्म सृष्टेरादौ च गोलोके रासमण्डले ।
सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम् ॥३॥
गोपैर्गोपिभिराकीर्णे शुभे राधामहोत्सवे ।
कार्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम् ॥४॥
कोटियोजनविस्तीर्णा दैर्घ्यैर्लक्षगुणा ततः ।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम् ॥५॥
षष्टिलक्षयोजना या ततो दैर्घ्ये चतुर्गुणा ।
समावृता या वैकुण्ठं तां गङ्गां प्रणमाम्यहम् ॥६॥
त्रिंशल्लक्षयोजना या दैर्घ्ये पञ्चगुणा ततः ।
प्रावृता शिवलोकं या तां गङ्गां प्रणमाम्यहम् ॥७॥
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः ।
आवृता ध्रुवलोकं या तां गङ्गां प्रणमाम्यहम् ॥८॥
लक्षयोजनविस्तीर्णा दैर्घ्ये दशगुणा ततः ।
आवृता चन्द्रलोकं या तां गङ्गां प्रणमाम्यहम् ॥९॥
षष्टिसहस्रयोजना या दैर्घ्ये दशगुणा ततः ।
आवृता सूर्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥१०॥
लक्षयोजनविस्तीर्णा दैर्घ्ये पञ्चगुणा ततः ।
आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥११॥
दशलक्षयोजना या दैर्घ्ये पञ्चगुणा ततः ।
आवृता तपोलोकं या तां गङ्गां प्रणमाम्यहम् ॥१२॥
सहस्रयोजना या दैर्घ्ये दशगुणा ततः ।
आवृता जनलोकं या तां गङ्गां प्रणमाम्यहम् ॥१३॥
सहस्रयोजनायामा दैर्घ्ये सप्तगुणा ततः ।
आवृता या च कैलासं तां गङ्गां प्रणमाम्यहम् ॥१४॥

शतयोजनविस्तीर्णा दैर्घ्ये दशगुणा. ततः ।
मन्दाकिनी येन्द्रलोकं तां गङ्गां प्रणमाम्यहम् ॥१५॥
पाताले या भोगवती विस्तीर्णा दशयोजना ।
ततो दशगुणा दीर्घे तां गङ्गां प्रणमाम्यहम् ॥१६॥
क्रोशैकमात्रविस्तीर्णा ततः क्षीणा च कुत्रचित् ।
क्षितौ याऽलकनान्दाख्या तां गङ्गां प्रणमाम्यहम् ॥१७॥
सत्ये या. क्षीरवर्णा च त्रेतायां क्षीरसन्निभा ।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम् ।
जलप्रभा कलौ या च नान्यत्र पृथिवीतले ॥१८॥
स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ।
यस्या प्रभावमतुलं पुराणे च श्रुतौ श्रुतम् ॥१९॥
या पुण्यदा पापहन्त्री तां गङ्गां प्रणमाम्यहम् ।
यत्तोयकणिकास्पर्शं पापिनां च पितामह !
ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत् ॥२०॥
इत्येवं कथितं ब्रह्मन् गङ्गापद्यैकविंशतिः ।
स्तोत्ररूपं च परमं या पुण्यं पुण्यबीजकम् ॥२१॥
नित्यं यो हि पठेद्भक्त्या सम्पूज्य च सुरेश्वरीम् ।
सोऽश्वमेधफलं नित्यं लभते नात्र संशयः ॥२२॥
अपुत्रो लभते पुत्रं भार्याहीनो लभेत्प्रियाम् ।
रोगात्प्रमुच्यते रोगी बन्धान्मुक्तो भवेद्ध्रुवम् ॥२३॥
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ।
यः पठेत्प्रातरुत्थाय नित्यं स्तोत्रमिदं शुभम् ॥२४॥
शुभं भवेच्च दुःस्वप्नो गङ्गास्नानफलं लभेत् ।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे ब्रह्मवैवर्तोक्तस्तोत्रवर्णनं नाम षड्विंशतितमं प्रकरणम् ।।२६।।**

# सप्तविंशतिप्रकरणम्

## अथागमोक्तं स्तोत्रम्

ॐ नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमो नमः ॥१॥
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ।
सर्वदेवीस्वरूपिण्यै नमो भेषजमूर्तये ॥२॥
सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठयै नमोऽस्तु ते ।
स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमोऽस्तु ते ॥३॥
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ।
तापत्रितयसंहन्त्र्यै प्राणेश्यै ते नमोऽस्तु ते ॥४॥
शान्तिसन्तापकारिण्यै नमस्ते शुद्धमूर्तये ।
सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्तये ॥५॥
भक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ।
भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ॥६॥
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ।
नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ॥७॥
नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ॥८॥
नन्दायै लिङ्गधारिण्यै सुधाधारात्मने नमः ।
नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥९॥
वृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोऽस्तु ते ।
नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥१०॥
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ।
परापरशताद्यायै तारायै ते नमो नमः ॥११॥
पाशजालनिकृन्तन्यै अभिन्नायै नमोऽस्तु ते ।
शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥१२॥
अस्त्रायै सुखदायिन्यै सञ्जीविन्यै नमोऽस्तु ते ।
वह्निष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥१३॥
प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते ।
सर्वापत्प्रतिपक्षिण्यै मङ्गलायै नमो नमः ॥१४॥
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥१५॥

निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ।
परापरपरायै च गङ्गे निर्वाणदायिनि ।।१६।।

गङ्गे ममाग्रतो भूयाः गङ्गे मे देवि पृष्ठतः ।
गङ्गे मे पार्श्वयोरेधि गङ्गे त्वय्यस्तु मे स्थितिः ।।१७।।

आदौ त्वमन्ते मध्ये च सर्वं त्वं गाङ्गते शिवे !
त्वमेव मूलप्रकृतिस्त्वं पुमान् पर एव हि ।
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ।।१८।।

य इदं पठति स्तोत्रं शृणुयाच्छ्रद्धयाऽपि यः ।
दशधा मुच्यते पापैः कायवाक्वित्तसम्भवैः ।।१९।।

रोगस्थो मुच्यते रोगाद्विपद्भ्यश्च विपद्युतः ।
मुच्यते बन्धनाद्बद्धो भीतो भीतेः प्रमुच्यते ।।२०।।

सर्वान् कामानवाप्नोति प्रत्यक्षं त्रिदिवं व्रजेत् ।
दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितम् ।।२१।।

गृहेऽपि लिखितं यस्य सदा तिष्ठति धारितम् ।
नाग्निचौरभयं तस्य न सर्पादिभयं क्वचित् ।।२२।।

ज्येष्ठे मासे सिते पक्षे दशमीहस्तसंयुता ।
संहरेत् त्रिविधं पापं बुधवारेण संयुता ।।२३।।

तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वाऽपि चाक्षमः ।।२४।।

सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य. यत्नतः ।
पूर्वोक्तेन विधानेन यत्फलं सम्प्रकीर्तितम् ।।२५।।

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे आगमोक्तस्तोत्रसप्तविंशतितमप्रकरणम् ।।२७।।**



# अष्टाविंशतिप्रकरणम्

## गङ्गाकवचम्

**विप्र उवाच—**

कवचं ते प्रवक्ष्यामः पार्वत्यै यच्छिवोऽब्रवीत।
यस्य सन्धारणान्मर्त्यः साक्षाद्वैश्रवणो भवेत् ॥१॥

**तद्यथा—**

ॐ कैलासशिखरे रम्ये सुखासीनं सुरार्चितम्।
गिरिशं गिरिजा नत्वा स्तोत्रैर्वेदार्थगर्भितैः ॥२॥
प्रणम्य परया भक्त्या ततोऽपृच्छत् कृताञ्जलिः।

**श्रीमहादेव्युवाच—**

महादेव सुराध्यक्ष करुणासागर प्रभो ॥
भवद्भिः शतसाहस्रकोटिवारं निवारिता।
मह्यं किं किं न दत्तं ते तदिदानीं वदाम्यहम् ॥३॥
गाणपं शाक्तसूरं च शैवं वैष्णवमुत्तमम्।
मन्त्रयन्त्रादिजालं हि मह्यं सामान्यतस्त्वया ॥४॥
दत्तं विशेषतो यद्यत्तत्सर्वं कथयामि ते।
श्रीरामतारको मन्त्रः कोदण्डस्यापि मे प्रियः ॥५॥
नृहरेः श्यामराजो हि कालिकाद्याः प्रियम्वद।
दशविद्या विशेषेण षोडशी मन्त्रनायिका ॥६॥
दक्षिणामूर्त्तिसंज्ञोऽन्यो मन्त्रराजो धनाधिपः।
सहस्रार्जुनकस्यापि मन्त्रा येऽन्ये हनूमतः ॥७॥
किं बहूक्तेन गिरिश प्रेमयन्त्रितचेतसा।
अर्द्धाङ्गमिति मह्यन्ते दत्तं किं ते वदाम्यहम् ॥८॥
अपि पृच्छामि कवचं श्रीगङ्गाया अनुत्तमम्।
मे मनस्तद्विना श्रीमन् न तुष्यति ततो वद ॥९॥
रहस्यं रक्षणकरं सर्वसम्पत्करं परम्।

**श्रीपरमशिव उवाच—**

सत्यं सत्यं वरारोहे सर्वं दत्तं मया तव ॥१०॥
परन्तु गिरिजे तुभ्यं कथ्यते शृणु साम्प्रतम्।
कलौ पाखण्डबहुला नानावेशधरा नराः ॥११॥
ज्ञानलब्धा हीनकामा वर्णाश्रमबहिष्कृताः।
वैष्णवत्वेन विख्याताः शैवत्वेन वरानने ॥१२॥

शाक्तत्वेन च देवेशि सौरत्वेनेतरे जनाः ।
गाणपत्येन गिरिजे शास्त्रज्ञानविवर्जिताः ॥१३॥
गुरुत्वेन समाख्याता विचरिष्यन्ति भूतले ।
ते शिष्यसंग्रहं कर्त्तुमुद्युक्ता यत्र कुत्रचित् ॥१४॥
मन्त्राद्युच्चारणे तेषां नास्ति सामर्थ्यमम्बिके ।
तच्छिष्याणां च गिरिजे तथापि जगतीतले ॥१५॥
पठन्ति पाठयिष्यन्ति विप्रद्वेषपराः सदा ।
विप्रद्वेषरतानां हि नरके पतनं ध्रुवम् ॥१६॥
शृणु देवि प्रवक्ष्यामि रहस्यातिरहस्यकम् ।
गङ्गायाः कवचं दिव्यं गोपनीयं त्वया सदा ॥१७॥
न कस्यापि प्रवक्तव्यं वक्तव्यं स्वात्मिकाय तत् ।
प्रदर्शयति सर्वाङ्गं भर्तुर्वै स्त्रीजनो यथा ॥१८॥
तस्मात्त्वया न वक्तव्यं कवचं लोकसुन्दरि ।
गङ्गायाः कवचस्यास्य वेदव्यासो ऋषिः स्मृतः ॥१९॥
छन्दोऽतिजगती प्रोक्तं देवता तु सरित्स्मृता ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥२०॥
प्रणवो मे शिरः पातु नमः पातु ललाटके ।
भगवति मे दृशौ पाहि कर्णौ ह्यम्बे ततोम्बिके ॥२१॥
अम्बालिके महामालिनि पाहि नासापुटद्वये ।
कपोलौ मे सदा पाह्येह्येहि भगवत्यथ ॥२२॥
मुखं में सततं रक्षेत् द्रवरूपा शुचिप्रभा ।
अशेषतीर्थालवाले हनुमेव सदाऽवतु ॥२३॥
जिह्वामूले च जिह्वाग्रे ह्रीं श्रीं बीजौ सदाऽवताम् ।
शिवजटाधिरूढ़े च गङ्गे चोष्ठद्वयेऽवतु ॥२४॥
दन्तपङ्क्तौ च कण्ठे च पातु गङ्गाम्बिके द्विठः[२६] ।
स्कन्धौ मे ॐ नमः पातु शिवायै करयोर्मम ॥२५॥
नारायण्यै च पार्श्वौ मे पायात्पापहरा सदा ।
स्वान्ते दशहरायै मे गङ्गायै चोदरेऽवतु ॥२६॥
स्तनौ स्वाहा सदा पातु देवीर्भिहावतोषिता ।
ॐ नमो भगवति पाहि कुक्षिं मे सर्वदा सुखम् ॥२७॥
ऐं बीजं मध्यदेशे च बीजविद्या सदाऽवतु ।
हिलिः पृष्ठं सदा पातु पातु नाभिं हिलिर्मम ॥२८॥

२६. 'सदा' शु. पा.

मिलिमिलीति पदद्वन्द्वं कटिं सक्थिनीद्वयम् ।
गङ्गे मां पावयेदव्याद्गुह्ये जानुद्वये मम ॥२९॥
जङ्घे स्वाहा सदा पातु गिरिनेत्राक्षरी सदा ।
सप्तार्णसहिता विद्या पादौ पातु नखाक्षरी ॥३०॥
ॐ हिलि-हिलि-मिलि-मिलि गङ्गे देविनमोभृशम् ।
मूर्धादिपादपर्यन्तं पातु पञ्चदशाक्षरी ॥३१॥
तारा माया रमा हार्दं प्राच्यां रक्षतु मे सदा ।
आग्नेयां मां भगवती पातु मे चक्रसंस्थिता ॥३२॥
दक्षिणे गाङ्गदयिते नैऋत्यां वर्मपूर्ववत् ।
प्रतीच्यामस्त्रतो रक्षेद्रिपुभारनिकृन्तनी ॥३३॥
वाग्भवं पातु वायव्यां माया रक्षतु चोत्तरे ।
ईशान्यां कमला रक्षेत् कामबीजं नभोऽवतु ॥३४॥
अधस्तात्पवनो रक्षेत्सर्वत्र सर्वमन्त्रराट् ।
मणिकर्णिभगी ब्रह्मा हृदयं ध्रुवसंयुता ॥३५॥
विषमिन्दुद्युक: पूर्वं मन्त्रश्रीमणिकर्णिका ।
सर्वत्र मे सदा पातु बाह्याभ्यन्तरभेदत: ॥३६॥
इति ते कथितं देवि सारात् सारतरं परम् ।
सर्वार्थसाधनं नाम कवचं परमाद्भुतम् ॥३६॥
अस्यापि पठनात्सद्य: कुबेरोऽपि धनेश्वर: ।
इन्द्राद्या:सकला देवा धारणात्पठनाद्यत: ॥३७॥
सर्वसिद्धीश्वरा: सन्त: सर्वैश्वर्यमवाप्नुयु: ।
पुष्पाञ्जल्यष्टकं दत्वा मूलेनैव पठेत्सकृत् ॥३८॥
संवत्सरकृतायास्तु पूजाया: फलमाप्नुयात् ।
प्रीतिमन्योन्यत: कृत्वा कमला निश्चला गृहे ॥३९॥
वाणीयं निवसेद्वक्रे सत्यं सत्यं न संशय: ।
यो धारयति पुण्यात्मा सर्वार्थसाधनाभिधम् ॥४०॥
कवचं परमं पुण्यं सोऽपि पुण्यवतां वर: ।
सर्वैश्वर्ययुतो भूत्वा त्रैलोक्यविजयी भवेत् ॥४१॥
पुरुषो दक्षिणे बाहौ नारी वामभुजे तथा ।
बहुपुत्रयुतो भूयाद्वन्ध्यापि लभते सुतम् ॥४२॥
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति नाशनम् ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नत: ॥४३॥

**इति श्रीरुद्रयामले पार्वतीश्वरसम्बादे सर्वार्थसाधनाभिधं श्रीगङ्गाकवचवर्णनं नाम अष्टाविंशतितमं प्रकरणम् ॥२८॥**

नारद उवाच–

ब्रह्मन्! केन विधानेन सर्वपापक्षयो भवेत्।
कथं रक्षेत्सुरश्रेष्ठ साधकानां सुरापगा ॥१॥

ब्रह्मोवाच–

साधु साधु त्वया पुत्र! साधु कर्म प्रकाशितम्।
कवचं जह्नुकन्याया त्रिषु लोकेषु दुर्लभम् ॥२॥
अप्रकाश्यं च यद्गोप्यमतस्तत्त्ववधार्यताम्।

अस्य श्री गङ्गाकवचमन्त्रस्य नारायणऋषिरनुष्टुप्छन्दः सर्वतीर्थोत्तमा गङ्गादेवता गं बीजं गाः शक्तिः अव्यक्तं कीलकं श्रीगङ्गाप्रसादसिद्ध्यर्थे जपे विनियोगः।

अथ ध्यानम्

शुभ्राम्भोजशशिप्रभां शशिमुखीं स्वक्षाम्बुजाक्षीं पराम्।
मुक्ताहारलसत्कुचां मणिमयैराभूषितां भूषणैः।
कञ्जस्वर्णघटीवराभयकरां श्वेताम्बराडम्बरां।
पद्मोत्पीठगतां सुधासमुदितां श्रीदेवभूषां भजे ॥१॥
वन्दे देवतरङ्गिणीं प्रतिदिनं ब्रह्माण्डमाखण्डिनीं।
शम्भोर्मस्तकमण्डिनीं मुररिपोरङ्घ्य्म्बुजासेविनीम्।
कल्याणोत्सवकारिणीं कलिमलोन्मूलत्वनिर्मूलिनीं।
मोक्षद्वारकपाटपाटनकरीं नित्यं चिदानन्दिनी ॥२॥
शिरो मे पातु सा गङ्गा दिव्याच्युताङ्घ्रिच्युता।
भालं भागीरथी पातु नेत्रे च जह्नुनन्दिनी ॥३॥
श्रुती मे जाह्नवी पातु घ्राणयुग्मं सुरापगा।
रसनां पातु मे नित्यं गङ्गा पापप्रणाशिनी ॥४॥
वदनं सकलं पातु सदा मन्दाकिनी मम।
स्कन्धौ पातु च मे बाहू गङ्गा सागरगामिनी ॥५॥
करौ रक्षतु सा गङ्गा शम्भुमस्तकमण्डिनी।
हृदयं नाभिमध्यं च पातु देवनदी मम ॥६॥
कटिद्वयं सदा पातु ब्रह्माण्डखण्डिनी मम।
जानुनी जह्नुजा पातु पायादूरू त्रिमार्गगा ॥७॥
गुल्फयुग्मं सदा पातु सा मे शर्मप्रदायिनी।
प्रपदं पातु मे नित्यं कलिकल्मषनाशिनी ॥८॥

काशीतलगता या च कालिन्दीसङ्गमा च या।
सा पातु मम सर्वाङ्गं गङ्गा गगनमेखला ॥९॥
निर्जरैर्वन्दिता या च चतुर्वर्गफलप्रदा।
तस्या इदं च गङ्गायाः कवचं परमाद्भुतम् ॥१०॥
अनन्तव्याधिविध्वंसि कीर्तिबुद्धिप्रवर्द्धनम्।
शोकदुःखप्रशमनं सर्वरक्षाकरं नृणाम् ॥११॥
शत्रोर्विनाशनं शश्वत्सुखसम्पत्प्रवर्धनम्।
योऽधीयात् कवचं चैतन्मुक्तपापो भवेच्च सः ॥१२॥
एककालं द्विकालं च त्रिकालं च पठेत्तु यः।
पठेद्यो वै शतावृत्त्या मासमेकं निरन्तरम् ॥१३॥
धृत्वेदं कवचं कण्ठे गच्छेद्यो यत्र कुत्रचित्।
स्वप्ने मूर्तिमयीं गङ्गां वरदां सोऽपि पश्यति ॥१४॥
धनधान्यसमायुक्तः पुत्रपौत्रसमन्वितः।
त्रिषु लोकेषु पूज्यः स्यादस्य पाठान्न संशयः ॥१५॥
शृणुयात्परया भक्त्या वाच्यमानं नरोत्तमः।
सोऽप्यघौघविनिर्मुक्तो जीवन्मुक्तो भवेच्च यः ॥१६॥

दुर्भिक्षे दुर्गबन्धे विषमजलचये कानने दुष्टचौरैः,
दीप्ते वह्निप्रदाहे प्रबलरिपुभये राज्यदुःखे प्रवृत्ते।
स्मृत्वा देवीं च गङ्गां त्रिभुवनजननीं वा पठेद् यो हि चैतत्
तैस्तैर्दुःखैर्विमुक्तो सपदि स मनुजो जायते सत्यमेतत् ॥१७॥

कुलीनाय च दातव्यं गङ्गाभक्तिपराय च।
विष्णुभक्ताय शान्ताय श्रद्दधानाय सर्वदा ॥१८॥
कुशिष्याय न दातव्यं दुष्टाय च विशेषतः।
दत्वाऽभक्ताय पुत्राय नेदं फलप्रदं भवेत् ॥१९॥
साधकाय च शान्ताय गुरोराज्ञानुवर्तिने।
दातव्यं च त्वया तात दत्वाऽनन्तफलं भवेत् ॥२०॥

**इति श्रीब्रह्माण्डपुराणे ब्रह्मनारदसम्वादे श्रीगङ्गाकवचवर्णनं नामाष्टाविंशतितमप्रकरणं समाप्तम् ॥२८॥**

## ऊनत्रिंशत्प्रकरणम्

**अगस्त्य उवाच–**

विना स्नानेन गङ्गाया नृणां जन्म निरर्थकम्।
उपायान्तरमस्त्यत्र येन स्नानफलं लभेत् ॥१॥
अशक्तानां च पङ्गूनामालस्योपहतात्मनाम्।
दूरदेशान्तरस्थानां गङ्गास्नानं कथं भवेत् ? ॥२॥
दानं वाऽथ व्रतं वाऽथ मन्त्रः स्तोत्रं जपोऽथवा।
तीर्थान्तराभिषेको वा देवतोपासनं तु वा ॥३॥
यद्यस्ति किञ्चित् षड्वक्त्र ! गङ्गास्नानफलप्रदम्।
विधानान्तरमत्रेश ! तद्वद प्रणताय मे ॥४॥
त्वत्तो न वेद स्कन्दान्यो गङ्गागर्भसमुद्भव !
परं स्वर्गतरङ्गिण्या महिमानं महामते ! ॥५॥

**स्कन्द उवाच–**

सन्ति पुण्यजलानीह सरांसि सरितो मुने !
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ॥६॥
इष्टप्रत्ययकारीणि महामहिमभाञ्ज्यपि।
परं स्वर्गतरङ्गिण्याः कोट्यंशोऽपि न तत्र वै ॥७॥
अनेनैव विधानेन बुध्यस्व कलशोद्भव !
दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना ॥८॥
स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः।
विना विष्णुपदीं क्वान्यत्समर्थमघशोधने ॥९॥
गङ्गास्नानफलं ब्रह्मन् ! गङ्गायामेव लभ्यते।
यथा द्राक्षाफलस्वादो द्राक्षायामेव लभ्यते ॥१०॥
अस्त्युपाय इह त्वेकः स्याद्येनाविकलं फलम्।
स्नानस्य देवसरितो महागुह्यतमो मुने ! ॥११॥
शिवभक्ताय शान्ताय विष्णुभक्तिपराय च।
श्रद्धालवे त्वास्तिकाय गर्भवासमुमुक्षवे ॥१२॥
कथनीयं न चान्यस्य कस्यचित्केनचित्क्वचित्।
इदं रहस्यं परमं महापातकनाशनम् ॥१३॥
महाश्रेयस्करं पुण्यं मनोरथकरं परम्।
द्युनदीप्रीतिजनकं शिवसन्तोषसन्ततिः ॥१४॥
नाम्नां सहस्रं गङ्गायाः स्तवराजेषु शोभनम्।
जप्यानां परमं जप्यं वेदोपनिषदा समम् ॥१५॥

जपनीयं प्रयत्नेन मौनिना वाचकं विना ।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ॥१६॥

**स्कन्द उवाच—**

ॐकाररूपिण्यजराऽतुलानन्तामृतश्रवा ।
अत्युदाराभयाशोकाऽलकनन्दामृताऽमला ॥१७॥
अनाथवत्सलाऽमोघाऽपां योनिरमृतप्रदा ।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नापराजिता ॥१८॥
अनाथनाथाभीष्टार्थसिद्धिदानन्दवर्द्धिनी ।
अणिमादिगुणाधारा गण्या लोकविहारिणी ॥१७॥
अचिन्त्यशक्तिरनघाद्भुतरूपाऽघहारिणी ।
अद्रिराजसुताष्टाङ्गयोगसिद्धिप्रदाऽच्युता ॥२०॥
अक्षुण्णशक्तिरतुलानन्ततीर्थामृतोदका ।
अनन्तमहिमापाराऽनन्तसौख्यप्रदाऽन्नदा ॥२१॥
अशेषदेवतामूर्तिरघोरामृतरूपिणी ।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ॥२२॥
अशेषविघ्नसंहन्त्री त्वशेषगुणगुम्फिता ।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ॥२३॥
अभिरामानवद्याङ्ग्यनन्तसाराऽकलङ्किनी ।
आरोग्यदाऽऽनन्दवल्ली त्वापन्नार्त्तिविनाशिनी ॥२४॥
आश्चर्यमूर्तरायुष्या ह्याढ्याद्याऽऽप्तार्यसेविता ।
आप्यायिन्याप्तविद्याख्या त्वानन्दाश्वासदायिनी ॥२५॥
आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी ।
इरावतीष्टदात्रीष्टा त्विष्टापूर्त्तफलप्रदा ॥२६॥
इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा ।
इज्याशीलसमिज्ज्येष्ठा त्विन्द्रादिपरिवन्दिता ॥२७॥
इलालङ्कारमालेद्धा त्विन्दिरारम्यमन्दिरा ।
इन्दिन्दिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ॥२८॥
ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत् ।
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी ॥२९॥
उदिताम्बरमार्गोस्त्रोरगलोकविहारिणी ।
वक्षोवरोत्पलोत्कुम्भा उपेन्द्रचरणद्रवा ॥३०॥
उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ।
उद्वेगाद्युष्मशमनी ह्यस्मरश्मिसुताप्रिया ॥३१॥

उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्जंवहन्त्यूर्जधरोर्जावती चोर्मिमालिनी ॥३२॥
ऊर्ध्वरेत:प्रियोर्ध्वाध्वा ह्यूर्मिलोर्ध्वगतिप्रदा ।
ऋषिवृन्दस्तुतर्द्धिश्रीऋणत्रयविनाशिनी ॥३३॥
ऋतम्भरार्तिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चि ऋजुमार्गप्रदर्शिनी ॥३४॥
एधिताखिलधर्मार्था त्वेकैकामृतदायिनी ।
एधनीयस्वभावेज्या त्वेजिताशेषपातका ॥३५॥
ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्याह्यैन्दवीद्युति: ।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥३६॥
ओष्ठामृतौन्नत्यदात्री औषधं भवरोगिणाम् ।
औदार्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपिणी ॥३७॥
अम्बराध्ववहाऽम्बष्ठा वरमालाम्बुजेक्षणा ।
अम्बिकाम्बुमहायोनिरन्धोदान्धकहारिणी ॥३८॥
अंशुमाला ह्यंशुमाली त्वङ्गीकृतषडानना ।
अन्धतामिस्रहन्त्यन्धुरञ्जना ह्यञ्जनावती ॥३९॥
कल्याणकारिणी काम्या कमलोत्पलगन्धिनी ।
कुमुद्वती कमलिनी कान्ति: कल्पितदायिनी ॥४०॥
काञ्चनाक्षी कामधेनु: कीर्तिकृत्क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी ॥४१॥
कमलाक्षी क्लमहरा कृशानुतपनद्युति: ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥४२॥
कामरूपा क्रियाशक्ति: कमलोत्पलमालिनी ।
कूटस्था करुणा कान्ता कूर्मयाना कलावती ॥४३॥
कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दिका ॥४४॥
कालकूटप्रशमनी कदम्बकुसुमप्रिया ।
कालिन्दी केलिललिता कलकल्लोलमालिका ॥४५॥
क्रान्तलोकत्रया कण्डू: कण्डूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधारिणी ॥४६॥
खेखेलगामिनी खस्था खण्डेन्दुतिलकप्रिया ।
खेचरी खेचरीवन्द्या ख्याति: ख्यातिप्रदायिनी ॥४७॥

खण्डितप्रणताघौघा खलुबुद्धिविनाशिनी ।
खातैनःकन्दसन्दोहा खड्गखट्वाङ्गखेटिनी ॥४८॥
खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ॥४९॥
गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया ।
गणनाथाम्बिकागीतागद्यपद्यपरिष्टुता ॥५०॥
गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥५१॥
गोत्रप्रवर्द्धिनी गुण्या गुणातीता गुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ॥५२॥
गुणनीयचरित्रा च गायत्री गिरिशप्रिया ।
गूढरूपा गुणवती गुर्वी गौरववर्द्धिनी ॥५३॥
ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला ।
घर्महन्त्री घृतवती घृतपुष्टिप्रदायिनी ॥५४॥
घण्टारवप्रिया घोराघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥५५॥
घातुकाघूर्णितजला घृष्टपातकसन्ततिः ।
घटकोटिप्रणीता च घटिताशेषमङ्गला ॥५६॥
घृणावती घृणमयी घस्मरा घूकनादिनी ।
घुसृणा पिञ्जरतनूर्घर्घरा घर्घरस्वना ॥५७॥
चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चला पाटलद्युतिः ।
चिन्मयी चित्स्वरूपा च चन्द्रायुतशतानना ॥५८॥
चाम्पेयलोचना चारुश्चार्वङ्गी चारुगामिनी ।
चार्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ॥५९॥
चम्पूश्चन्दनशुच्यम्बुश्चर्चनीया चिरस्थिरा ।
चारुचम्पकमालाढ्या शमिताशेषदुष्कृता ॥६०॥
चिदाकाशवहाऽऽचिन्त्या चञ्चच्चामरवीजिता ।
चोरिताशेषवृजिना चरिताशेषमण्डला ॥६१॥
छेदिताखिलपापौघा छलघ्नी छलहारिणी ।
छिन्नत्रिविष्टपतला छेदिताशेषबन्धना ॥६२॥
छुरितामृतधारौघा छिन्नैनाश्छन्दगामिनी ।
छत्रीकृतमरालौघाच्छटीकृतनिजामृता ॥६३॥

जाह्नवीज्या जगन्माता जप्या जङ्घालवीचिका ।
जया जनार्दनप्रीता जुषणीया जगद्धिता ॥६४॥
जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी ।
जीवजीवातुलतिका जन्मिजन्मनिवर्हिणी ॥६५॥
जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।
जगदानन्दजननी जलजा जलजेक्षणा ॥६६॥
जनलोचनपीयूषा जटातटविहारिणी ।
जयन्ती जञ्जपूकघ्नी जनितज्ञानविग्रहा ॥६७॥
झल्लीशवाद्यकुशला झलञ्झलिजलावृता ।
झिण्टीशवन्द्या झांकारकारिणी झर्झरावती ॥६८॥
टीकिताखिलपाताला टङ्किकैनोद्रिपाटने ।
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा ॥६९॥
डम्बरप्रवहोड्डीनराजहंसकुलाकुला ।
डमड्डमरुहस्ता च डामरोक्तमहाण्डका ॥७०॥
ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ।
ढुण्ढिविघ्नेशजननी ढणण्ढुणितपातका ॥७१॥
तर्पणी तीर्थतीर्था या त्रिपथा त्रिदशेश्वरी ।
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता ॥७२॥
तापत्रितयसंहन्त्री तेजोबलविवर्द्धिनी ।
त्रिलक्ष्या तारणी तारा तारापतिकरार्चिता ॥७३॥
त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।
तृष्णाक्षेत्री तीर्थमाता त्रिविक्रमपदोद्भवा ॥७४॥
तपोमयी तपोरूपा तपस्स्तोमफलप्रदा ।
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत् तत्वरूपिणी ॥७५॥
त्रैलोक्यसुन्दरी तुर्या तुर्यातीतफलप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ॥७६॥
तेजोगर्भा तपःसारा त्रिपुरारिशिरोगृहा ।
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतनुत् ॥७७॥
तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥७८॥
दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥७९॥

दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाध्वजा ॥८०॥
दन्दशूकविषघ्नी च दारिताघौघसन्ततिः ।
द्रुता देवद्रुमच्छन्ना दुर्वाराऽघविनाशिनी ॥८१॥
दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रिया देवी, दिक्कालपददायिनी ॥८२॥
दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्जिता ।
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥८३॥
द्युनदी दीनशरणं देही देहनिवारिणी ।
द्राघीयसी दाहहन्त्री धुतपातकसन्ततिः ॥८४॥
दूरदेशान्तरचरी दुर्गमा देववल्लभा ।
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ॥८५॥
दुरासदा दानशीला द्राविणी द्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ॥८६॥
दानसारा दयासारा द्यावाभूमिविदारिणी ।
दृष्टादृष्टफलप्राप्तिर्देवतावृन्दवन्दिता ॥८७॥
दीर्घवृत्ता दीर्घदृष्टिर्दीप्ततोया दुरालभा ।
दण्डयित्री दण्डनीतिर्दुष्टदेवधराचिता ॥८८॥
दुरोदरघ्नी दावार्चिर्द्रवद्रव्यैकशेवधिः ।
दीनसन्तापशमनी दात्री द्रवसुवैरिणी ॥८९॥
दरीविदारणपरा दान्ता दान्तजनप्रिया ।
दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी ॥९०॥
धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा ।
धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ॥९१॥
धर्मोर्मिवाहिनी धुर्या धात्री धात्रीविभूषणा ।
धर्मिणी धर्मशीला च धन्विकोटिकृतावना ॥९२॥
ध्यातृपापहरा ध्येया धावनी धूतकल्मषा ।
धर्मधारा धर्मसारा धनदा धनवर्द्धिनी ॥९३॥
धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया ।
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ॥९४॥
धर्मलभ्या धर्मजला धर्मप्रसवधर्मिणी ।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ॥९५॥

धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती ।
नन्दा निर्वाणजननी नन्दिनी नुन्नपातका ॥९६॥
निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी ।
नभोङ्गणचरी नूतिर्नम्या नारायणी नुता ॥९७॥
निर्मला निर्मलाख्याना नाशिनी तापसम्पदाम् ।
नियता नित्यसुखदा नानाश्चर्यमहानिधिः ॥९८॥
नदीनदसरोमाता नायिका नाकदीर्घिका ।
नष्टोद्धरणधीरा च नन्दनानन्ददायिनी ॥९९॥
निर्लिप्ताशेषभुवना निःसङ्गा निरुपद्रवा ।
निरालम्बा निष्प्रपञ्चा निर्णाशितमहाबला ॥१००॥
निर्मलज्ञाजननी निःशेषक्षणतापहृत् ।
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरञ्जना ॥१०१॥
निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका ।
निरवद्या निरीहा च नीललोहितमूर्धगा ॥१०२॥
नन्दिभृङ्गिगणस्तुत्या नागानन्दा नगात्मजा ।
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ॥१०३॥
पुण्यप्रदा पुण्यगर्भा पुण्या पुण्यतरङ्गिणी ।
पृथुः पृथुफला पूर्णा प्रणतार्त्तिप्रभञ्जिनी ॥१०४॥
प्राणदा प्राणजननी प्राणेशी प्राणरूपिणी ।
पद्मालया पराशक्तिः पुरजित्परमप्रिया ॥१०५॥
परापरफलप्राप्तिः पावनी च पयस्विनी ।
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा ॥१०६॥
पुराणपठिता प्रीता प्रणवाक्षररूपिणी ।
पार्वतीप्रेमसम्पन्ना पशुपाशविनाशिनी ॥१०७॥
परमात्मस्वरूपा च परब्रह्मस्वरूपिणी ।
परमानन्दनिष्पन्ना प्रायश्चित्तस्वरूपिणी ॥१०८॥
पानीयरूपनिर्वाणा परित्राणपरायणा ।
पापेन्धनदवज्वाला पापारिः पापनामनुत् ॥१०९॥
परमैश्वर्यजननी प्रज्ञा प्राज्ञा परावरा ।
प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतश्रवा ॥११०॥
प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता ।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः ॥१११॥

पद्मनाभपदार्धेण प्रसूता पद्ममालिनी ।
पराधेंहा पुष्टिकरी पथ्या पूर्तिः प्रभावती ॥११२॥
पुनाना प्रीतिपरमा पापपर्वतनाशिनी ।
फलनी फलहस्ता च फुल्लाम्बुजविलोचना ॥११३॥
फालितैनोमहाक्षेत्रा फणिलोकविभूषणम् ।
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी ॥११४॥
फेनिलाच्छाम्बुधाराभा फडुच्चाटितपातका ।
फेनितस्वादुसलिला फाण्टपथ्यजलाविला ॥११५॥
विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया ।
ब्रह्मण्या ब्रह्मविद्ब्राह्मी ब्रह्मेष्टा विमलोदका ॥११६॥
विभावरी च विरजा विक्रान्तानेकविष्टपा ।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया ॥११७॥
विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी
विपाशा वैबुधी वेद्या वेदाक्षररसश्रवा ॥११८॥
विद्या वेगवती वन्द्या वृंहणी ब्रह्मवादिनी ।
वरदा विप्रकृष्टा च वरिष्ठा च विशोधनी ॥११९॥
विद्याधरी विशोका च वयोवृन्दनिषेविता ।
बहूदका बलवती व्योमस्था विबुधप्रिया ॥१२०॥
वाणी वेदवती वित्ता ब्रह्मविद्या तरङ्गिणी ।
ब्रह्माण्डकोटिव्याप्ताम्बुर्ब्रह्महत्यापहारिणी ॥१२१॥
ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्द्धिनी ।
विलासिसुखदा वश्या व्यापिनी च वृषारणिः ॥१२२॥
वृषाङ्कमौलिनिलया विपन्नार्तिप्रभञ्जनी ।
विनीता विनता ब्रह्मतनया विनयान्विता ॥१२३॥
विपञ्चीवाद्यकुशला वेणुश्रुतिविचक्षणा ।
वर्चस्करी बलवती बलोन्मूलितकल्मषा ॥१२४॥
विपाशा विगतातङ्का विकल्पपरिवर्जिता ।
वृष्टिकर्त्री वृष्टिजला विधिविच्छिन्नबन्धना ॥१२५॥
वृत्तरूपाऽवित्तरूपा बहुविघ्नविनाशकृत् ।
वसुधारा वसुमती विचित्राङ्गी विभावसुः ॥१२६॥
विजया विश्वबीजं च वामदेवी वरप्रदा ।
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी ॥१२७॥

भव्या भोगवती भद्रा भवानी भूतभावनी ।
भूतधात्री भयहरा भक्तिदारिद्रघातिनी ॥१२८॥
भुक्तिमुक्तिप्रदा भेषी भक्तस्वर्गापवर्गदा ।
भागीरथी भानुमती भाग्यभोगवती भृतिः ॥१२९॥
भवप्रिया भवद्वेष्ट्री भूतिदा भूतिभूषणा ।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥१३०॥
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा ।
भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरा ॥१३१॥
भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।
भिक्षणीया भिक्षुमाता भावाभावस्वरूपिणी ॥१३२॥
मन्दाकिनी महानन्दा माता मुक्तितरङ्गणी ।
महोदयः मधुमती महापुण्या मुदाकरी ॥१३३॥
मुनिस्तुता मोहहन्त्री महातीर्था मधुस्त्रवा ।
माधवी मानिनी मान्या मनोरथपथातिगा ॥१३४॥
मोक्षदा मतिदा मुख्या महाभागजनाश्रिता ।
महोवेगवती मेध्या महामहिषभूषणा ॥१३५॥
महाप्रभावा महती मतिचञ्चललोचना ।
महाकारुण्यसम्पूर्णा महर्द्धिश्च महोत्पला ॥१३६॥
मूर्तिमन्मूर्तिरमणी मणिमाणिक्यभूषणा ।
मुक्ताकलापनेपथ्या मनोनयननन्दिनी ॥१३७॥
महापातकराशिघ्नी महादेवार्द्धहारिणी ।
महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी ॥१३८॥
महापुण्योदयप्राणा मायातिमिरचन्द्रिका ।
महाविद्या महामाया महामेधा महौषधम् ॥१३९॥
मालाधरी महोपाया महोरगविभूषणा ।
महामोहप्रशमनी महामङ्गलमङ्गलम् ॥१४०॥
मार्त्तण्डमण्डलचरी महालक्ष्मीर्मदान्विता ।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता ॥१४१॥
योगसिद्धिप्रदा याज्या यज्ञेशपरिपूजिता ।
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ॥४१२॥
यमिसेव्या योगयोनिर्योगिनी युक्तबुद्धिदा ।
योगज्ञानप्रदा युक्ता यमघण्टाङ्गयोगयुक् ॥१४३॥

यन्त्रिताघौघसञ्चारा यमलोकनिवारिणी ।
यातायातप्रशमनी यातनानामकृन्तनी ॥१४४॥
यामिनीशहिमाच्छोदा युगधर्मविवर्जिता ।
रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः ॥१४५॥
रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी ।
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी ॥१४६॥
रत्नार्ची रत्नरमणी रागद्वेषविनाशिनी ।
रामा रमा रम्यरूपा रोगजीवानुरूपिणी ॥१४७॥
रुचिकृद्रोचनी रम्या रुचिरा रोगहारिणी ।
राजहंसा रत्नवती राजत्कल्लोलराजिका ॥१४८॥
रमणीयकरेखा च रुगरी शेषशोषिणी ।
रागा रङ्कार्त्तिशमनी रम्या रोलम्बराविणी ॥१४९॥
रागिणी रञ्जिरूपा च रूपलावण्यशेवधीः ।
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमालिनी ॥१५०॥
लीलावती लोकभूमिर्लोकलोचनचन्द्रिका ।
लेखस्रवन्ती लटभी लघुवेगा लघुत्वकृत् ॥१५१॥
लास्यत्तरङ्गहस्ता च ललिता लयभङ्गगा ।
लोकबन्धुर्लोकधात्री लोकोत्तरगुणोर्जिता ॥१५२॥
लोकत्रयहिताऽलोका लक्ष्मीर्लक्षणलक्षिता ।
लीलालक्षितनिर्वाणा लावण्यामृतवर्षिणी ॥१५३॥
वैश्वानरी वासवेड्या वन्ध्यत्वपरिहारिणी ।
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥१५४॥
शुभावती शुभफला शान्तिः शन्तनुवल्लभा ।
शूलिनी शैशववयाः शीतलामृतवाहिनी ॥१५५॥
शोभावती शीलवती शोषिताशेषकल्मषा ।
शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ॥१५६॥
शक्तिः शशाङ्कविमला शमनस्वसृसम्मता ।
शमा शमनमार्गघ्नी शितिकण्ठमहाप्रिया ॥१५७॥
शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीशुभव्रता ॥१५८॥
शुद्धविद्या शुभावर्ता श्रुतानन्दा श्रुतिस्तुतिः ।
शिवेतरघ्नी शबरी शाम्बरीरूपधारिणी ॥१५९॥

श्मशानशोधनी शान्ता शश्वच्छतधृतिस्तुता ।
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ॥१६०॥
शंसनीयचरित्रा च शमिताशेषपातका ।
षड्गुणैश्वर्यसम्पन्ना षडङ्गश्रुतिरूपिणी ॥१६१॥
षण्ढताहारिसलिलाष्ट्यायन्नदनदीशता ।
सरिद्वरा च सुरसा सुप्रभा सुरदीर्घिका ॥१६२॥
स्वःसिन्धुः सर्वदुःखघ्नी सर्वव्याधिमहौषधम् ।
सेव्या सिद्धिः सती सूक्तिः स्कन्दप्रसूः सरस्वती ॥१६३॥
सम्पत्तरङ्गिणी स्तुत्या स्थाणुमौलिकृतास्पदा ।
स्थैर्यदा सुभगा सौख्या स्त्रीषु सौभाग्यदायिनी ॥१६४॥
स्वर्गनिःश्रेणिका सूक्ष्मा स्वधा स्वाहा स्वधा जला ।
समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी ॥१६५॥
स्मृताघहारिणी सीता [२७]संसाराब्धितरण्डिका ।
सौभाग्यसुन्दरी सन्ध्या सर्वसारसमन्विता ॥१६६॥
हरप्रिया हृषीकेशी हंसरूपा हिरण्मयी ।
हृताघसङ्घा हितकृद्धेला हेलाघगर्वहृत् ॥१६७॥
क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा ।
इति नामसहस्रं हि गङ्गायाः कलशोद्भव !
कीर्तयित्वा नरः सम्यग् गङ्गास्नानफलं लभेत् ॥१६८॥
सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ।
सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ॥१६९॥
हृद्द्वयाभीष्टफलदं चतुर्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोति ह्येकीकृत्तु फलं मुने ॥१७०॥
सर्वतीर्थेषु यः स्नातः सर्वेयज्ञेषु दीक्षितः ।
यस्य यत्फलमुद्दिष्टं त्रिकालपठनात्सकृत् ॥१७१॥
सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषु वाडव !
तत्फलं समवाप्नोति त्रिसन्ध्यं नियतः पठेत् ॥१७२॥
स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये ।
तत्र सन्निहिता नूनं गङ्गा त्रिपथगा मुने : ॥१७३॥
श्रेयोऽर्थी लभते श्रेयो धनार्थी लभते धनम् ।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥१७४॥

---

२७. 'सुतारिणी' शु. पा.

वर्षं त्रिकालपठनाच्छ्रद्धया शुचिमानसः ।
ऋतुकालाभिगमनादपुत्रः पुत्रवान् भवेत् ॥१७५॥
नाकालमरणं तस्य नाग्निचौराग्निसाध्वसम् ।
नाम्नां सहस्रं गङ्गाया योजयेच्छ्रद्धया मुने ॥१७६॥
गङ्गानामसहस्रन्तु जप्त्वा ग्रामान्तरं व्रजेत् ।
कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाविशेत् ॥१७७॥
तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा ।
यदा जप्त्वा व्रजेदेतत्स्तोत्रं ग्रामान्तरं नरः ॥१७८॥
आयुरारोग्यजननं सर्वोपद्रवनाशनम् ।
सर्वसिद्धिकरं पुंसां गङ्गानामसहस्रकम् ॥१७९॥
जन्मान्तरसहस्रेषु यत्पापं सम्यगर्जितम् ।
गङ्गानामसहस्रस्य जपनात्तत्क्षयं व्रजेत् ॥१८०॥
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा मुने ! ॥१८१॥
विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः ॥१८२॥
महापातकयुक्तोऽपि संयुक्तोप्युपपातकैः ।
मुच्यते श्रद्धया जप्त्वा गङ्गानामसहस्रकम् ॥१८३॥
आधिव्याधिपरिक्षिप्तो घोरतापपरिप्लुतः ।
मुच्यते सर्वदुःखेभ्यः स्तवस्यास्यानुकीर्तनात् ॥१८४॥
संवत्सरेण युक्तात्मा पठन्मुक्तिपरायणः ।
अभीप्सितां लभेत्सिद्धिं सर्वैं पापैः प्रमुच्यते ॥१८५॥
संशयाविष्टचित्तस्य धर्मविद्वेषिणोऽपि च ।
दाम्भिकस्यापि हिंस्रस्य चेतो धर्मपरं भवेत् ॥१८६॥
वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः ।
यत्फलं लभते ज्ञानी तदाप्नोत्यस्य कीर्त्तनात् ॥१८७॥
गायत्र्ययुतजप्येन यत्फलं समुपार्जितम् ।
सकृत्पठनतः सम्यक् तदशेषमवाप्नुयात् ॥१८८॥
गां दत्वा वेदविदुषे यत्फलं लभते कृती ।
तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ॥१८९॥
गुरुशुश्रूषणं कुर्वन् यावज्जीवं नरोत्तमः ।
यत्पुण्यमर्जयेत्तद्भाग्वर्षं त्रिषवणं जपेत् ॥१९०॥

वेदपारायणात्पुण्यं यदत्र परिपठ्यते।
तत्षण्मासेन लभते त्रिसन्ध्यं परिकीर्त्तनात् ॥१९१॥
गङ्गायास्तवराजस्य प्रत्यहं परिशीलनात्।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ॥१९२॥
यः कीर्त्तयेदनुदिनं गङ्गानामसहस्रकम्।
तत्समीपे सहचरी गङ्गादेवी सदा भवेत् ॥१९३॥
सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत्।
सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ॥१९४॥
सदाचारी स विज्ञेयः सशुभस्तु सदैव हि।
कृतसर्वसुरार्चः सन् कीर्तयेद्य इमां स्तुतिम् ॥१९५॥
तस्मिँस्तृप्ते भवेत्तृप्ता जाह्नवी नात्र संशयः।
तस्मात्सर्वप्रयत्नेन गङ्गाभक्तं समर्चयेत् ॥१९६॥
स्तवराजमिमं गाङ्गं शृणुयाद्यश्च वै पठेत्।
श्रावयेदथ तद्भक्त्या दम्भलोभविवर्जितः ॥१९७॥
मुच्यते त्रिविधैः पापैः मनोवाक्कायसम्भवैः।
क्षणान्निष्पापतामेति पितृणां च प्रियो भवेत् ॥१९८॥
सर्वदेवप्रियश्चापि सर्वर्षिगणसम्मतः।
अन्ते विमानमारुह्य दिव्यस्त्रीशतसम्वृतः ॥१९९॥
दिव्याभरणसम्पन्नो दिव्यभोगसमन्वितः।
नन्दनादिवने स्वैरं देववत्स प्रमोदते ॥२००॥
भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः।
जपन्निदं महास्तोत्रं पितृणां तृप्तिकारकम् ॥२०१॥
यावन्ति तत्र सिक्थानि यावन्तोऽम्बुकणाः स्थिताः।
तावन्त्येव हि वर्षाणि मोदन्ते स्वः पितामहाः ॥२०२॥
यथा प्रीणन्ति पितरो गयायां पिण्डदानतः।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुकीर्तनात् ॥२०३॥
एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते।
तत्र पापभयं नास्ति शुचि तद्भवनं भवेत् ॥२०४॥
आगस्त्य किं बहूक्तेन शृणु मे निश्चितं वचः।
संशयो न प्रकर्तव्यः सन्दिग्धारिफलं न हि ॥२०५॥
यावन्ति मर्त्ये स्तोत्राणि मन्त्रजालान्यनेकशः।
तावन्ति स्तवराजस्य गाङ्गेयस्य समानि न ॥२०६॥

यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम् ।
स कीकटेष्वपि मृतो न [२८]पुनर्गर्भमाविशेत् ॥२०७॥
नित्यं नियमवानेतद्यो जपेत्स्तोत्रमुत्तमम् ।
अन्यत्रापि विपन्नः सः गङ्गातीरे मृतो भवेत् ॥२०८॥
एतत्स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना ।
विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम् ॥२०९॥

॥ इति श्रीगङ्गासहस्रनाम सम्पूर्णं समाप्तम् ॥

**विप्रोक्तिः—**

एतन्महामन्त्रयुतं महामते ! महीभृतां गाङ्गमनल्पसिद्धिदम् ।
पञ्चाङ्गमायुःप्रदमौषधं परं संतारितं ते भवरोगिणः शुभम् ॥१॥
अतः परं यच्छ्रवणीयमस्ति ते तदुच्यते मानव मज्जतां नृणाम् ।
भवाम्बुधौ सुप्रतरीव तारिणी वाणी कलौ गाङ्गगुणानुबन्धिनी ॥२॥
या कीर्तिता पापविनाशिनी नृणां या सर्वदा लोकजनस्य पावनी ।
सा ते सदा संस्मरतो महाद्युते ! भवत्ववश्यं समभीष्टदायिनी ॥३॥
श्रुत्वेति गङ्गापञ्चाङ्गं नत्वा विप्रान् सुविस्मितः ।
प्रोवाचेदं महाप्राज्ञः स्मरन् गङ्गागुणावलिम् ॥४॥
पावितो हि विबुधापगा गुणश्रावणेन दुरितौघनाशिनी ।
जाह्नवीगुणगुणावलीं पुनर्मां वदन्तु कृपयाऽवनीसुराः ॥५॥

**विप्रोक्तिः—**

श्रूयतां कथयिष्यामस्त्वत्प्रश्नोत्तरं शुभम् ।
यथा वै सोढदेवेन पुरा माहात्म्यमीरितम् ॥६॥
तथैवात्र पुराणानि सेतिहासस्मृतिस्तथा ।
रामायणं संहिताश्च दृष्ट्वा बुद्ध्यनुसारतः ॥७॥
गङ्गागुणप्रयुक्तानि वाक्यानि यानि यत्नतः ।
वर्णयामो महाप्राज्ञ यच्छ्रुत्वा मोक्षमाप्नुयात् ॥८॥
भागीरथीगुणानान्तु देवैरपि न शक्यते ।
प्रमितिः कर्तुमीशाया मर्त्यानां तत्र का कथा ! ॥९॥
तथापि संशोधयितुमात्मजिह्वां जडामिह ।
कथयामः प्रकरणान्यग्निवेदमितानि ते ॥१०॥

---

२८. 'पुनर्योनिमाविशेत्' शु. पा.

**तत्रेयं गणना, प्रभावोऽथ सर्वामरादिस्वरूपं, तथा–**

सर्ववैशिष्ट्यमस्याः स्वभावः श्रवोऽथ स्मृतिः कीर्तनं।
संनतिश्च, फलं चाम्बुपानस्य मृत्स्पर्शनस्य ॥११॥

प्रशंसाम्बुनो धारणं चाथभक्तिस्तथा विघ्नकृत्पुण्यकालस्तथैव।
न मेयो विधिर्यत्फलं क्षेत्रमानं ह्यभक्तावघं वायुसंस्पर्शपुण्यम् ॥१२॥

फलं दर्शनं स्पर्शनं चावगाहो, विनाकृच्छ्रचान्द्रादिभिस्तत्र शुद्धिः।
यथा स्नानतश्चान्यथास्नानतोऽपि, फलं पूजने यज्जपे यच्च दाने ॥१३॥

प्रतिग्रह्यघं यत्फलं तर्पणे वा, फलं श्राद्धपिण्डप्रदाने व्रते च।
तथाकृत्यता चाभयं चाश्रयस्तु, गतिः स्यान्नखादिप्रपातास्थिपातौ ॥१४॥

तनुत्यागपुण्यं च मोक्षाविभेदौ पुराणोक्तिभिः सप्रमाणस्फुटानि।
श्रुतान्येव भक्त्या नराणां च पापं, निहन्त्येव वह्निर्यथा तूलराशीन् ॥१५॥

**अथ प्रभावप्रकरणं प्रथमं महाभारते–**

महापुण्यां हि गगमात्पतन्तीं यां महेश्वरः।
दधार शिरसा गङ्गां तामेव दिवि सेवते ॥१॥

**ब्रह्माण्डे–**

महारुद्रस्य या शम्भोरुत्तमाङ्गोद्भवा शिवा।
विनिःसृता महानन्दा दक्षिणेक्षणतः शुभा ॥२॥

**विष्णु पुराणे–**

ततः प्रभृति भो ब्रह्मन् सर्वपापहरा सरित्।
गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥३॥

विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम्।
समन्ताद्ब्रह्मणः पुर्याः गङ्गा पतति वै दिवि ॥४॥

सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत।
सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ॥५॥

**मात्स्ये–**

क्षितौ तारयते मर्त्यान्नागाँस्तारयतेऽप्यधः।
दिवि तारयते देवाँस्तेन त्रिपथगामिनी ॥६॥

**भविष्ये–**

सर्वेश्वरस्य या शम्भोमूर्तिरेषा सनातनी।
त्रैलोक्यपावनार्थाय दयया धरणीं गता ॥७॥

**ब्रह्माण्डे—**

षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत्।
यावत्पुनरमावास्या दिनानि दश नित्यशः ॥८॥
शुक्लप्रतिपदारभ्य दिनानि दशसंख्यया।
पाताले सन्निधानं तु करोति स्वयमेव च ॥९॥
शुक्लैकादशकादीनि गङ्गा स्वर्गतरङ्गिणी।
पञ्चम्यन्ता निशा सर्वा सदा सन्निहिता भवेत् ॥१०॥

**वृहन्नारदीये धर्मराजवाक्यम्—**

आत्मघातकपाप्मानो राजँस्तव पितामहाः।
ते सन्ति नरके तेन दग्धाः कपिलकोपतः ॥११॥
तानुद्धर महाभाग! गङ्गाजलनिषेवणैः।
गङ्गा सर्वाणि पापानि नाशयत्येव भूरिशः ॥१२॥
एवं सम्पद्यमानेन यमेन परिनिन्दिताः।
त एव पूजितास्तेन गङ्गाजलपरिप्लुता ॥१३॥
गतपापान् स विज्ञाय ताँस्तान् सागरसम्भवान्।
प्रणम्याभ्यर्च्य विधिवदित्याह विनयान्वितः ॥१४॥
भो भो राजसुता! यूयं नरकाद्भृशदारुणात्।
एतावन्तं तु समयं भुक्तवन्तः स्वकर्मभिः ॥१५॥
धन्यस्त्वदन्वये जातो भगीरथ इति श्रुतः।
ततोऽस्मात्तारिता यूयं नरकाद्भृशदारुणात् ॥१६॥
आरुह्य च विमानानि सर्वलोकोत्तमोत्तमम्।
इत्युक्तास्ते महात्मानो यमेन गतकल्मषाः ॥१७॥
शतकोटिकुलैर्युक्ताः विष्णुलोकं प्रपेदिरे।
एवं प्रभावा सा गङ्गा हरिपादाग्रसम्भवा ॥१८॥
सर्वलोकेषु विख्याता महापातकनाशिनी।
तस्या माहात्म्यमखिलं वक्तुं नैवेह शक्यते ॥१९॥

**स्कान्दे धर्मराजवाक्यं दूतान्प्रति—**

या काऽप्युक्ता परा शक्ति; शिवस्य मूर्ध्नि शायिनी।
तामेव गौतमीं सन्तो वन्दन्त्यम्भःस्वरूपिणीम् ॥२०॥
हरिब्रह्ममहेशानां मान्या वन्द्या च सैव यत्।
सोऽनेन सर्वनिरयान्निर्गतो मुक्ततां व्रजेत् ॥२१॥
निस्तीर्य तेन केनापि गङ्गातिक्रमजं त्वघम्।
पापिनोऽप्यात्मनः कश्चिद्यश्च मङ्गामनुस्मरेत् ॥२२॥

ममैव सा परामूर्तिस्तोयरूपा शिवात्मिका।
ब्रह्माण्डानामशेषाणामाधारप्रकृतिः परा ॥२३॥
शुद्धविद्या सुरूपा च त्रिशक्तिः कारणात्मिका।
आनन्दामृतरूपा च शुद्धा धर्मस्वरूपिणी ॥२४॥
तामेव जगतां धात्रीं धारयामि स्वलीलया।
शक्तिं ह्यनन्यां गायत्रीं परब्रह्मस्वरूपिणीम् ॥२५॥
विश्वस्य रक्षणार्थाय देवकार्यार्थमेव च।
त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ॥२६॥
पर्वताश्चाथ पुण्यानि पुण्यक्षेत्राणि यानि च।
धर्मश्च सर्वदेवाश्च सर्वयज्ञतपांसि च ॥२७॥
अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्वितः।
अष्टाविंशतिकोट्यश्च देवतानां तु वै सदा ॥२८॥
गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः।
ध्याने कृते मोक्षहेतुस्त्रेतायां तत्र वै तपः ॥२९॥
द्वापरे तु कृतो यज्ञः कलौ गङ्गैव केवलम्।
कान्तिर्लक्ष्मीर्धृतिः सत्यं मेधा विद्या बलं च धीः ॥३०॥
यत्र लोका न दूष्यन्ते भूतानि विषयास्तथा।
इन्द्रियाणि च सर्वाणि ब्रह्माद्या देवतागणाः ॥३१॥
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
चिदानन्दमयं यत्तु निर्विकल्पं निरञ्जनम् ॥३२॥
शब्दादिरहितं यत्तु विज्ञानरहितं तथा।
अणोरणुतरं यच्च महतोऽपि महत्तरम् ॥३३॥
सूक्ष्मं सर्वविदभ्यासमप्रमेयमनूपमम्।
सर्वसारं च यन्नित्यं सन्मात्रं सर्वसंस्थितम् ॥३४॥
ब्रह्मणाप्यपरिच्छेद्यमुपरिष्टात्परं पदम्।
तदेवेदं शिवा गङ्गा साक्षान्नारायणी परा ॥३५॥

**हरिवंशे वैशम्पायनवाक्यं भौमाख्याने—**

एतच्छ्रुत्वा तु गरुडो वासुदेवस्य भाषितम्।
**चक्रे मुखसहस्रं हि कामरूपी महाबलः ॥३६॥**
**गङ्गामुपागमत्तूर्णं वैनतेयस्ततो बली।**
आप्लुत्य चाशु गङ्गायां प्रपीय सलिलं बहु ॥३७॥
**सर्ववर्णोपरि** गतो वैनतेयः प्रतापवान्।
तेनाग्निं शमयामास बुद्धिमान् विनतात्मजः ॥३८॥

अग्निराहवनीयश्च ततः शान्तिमुपागतः ।
एवं प्रभावा सा गङ्गा साक्षान्नारायणी परा ॥३९॥

**निकुम्भसंग्रामे भानुमतीहरणे–**

अवष्टभ्य मुहूर्त्तं तु हरिः कौमोदकीं गदाम् ।
तस्थौ जगद्गुरुर्धीमान् मुमोह पतितः क्षितौ ॥४०॥
हा हा भूतं जगत्सर्वं तत्कालमभवत्तदा ।
तथा गते वासुदेवे नरदेवे महात्मनि ॥४१॥
आकाशगङ्गातोयेन शीतयन् स सुगन्धिना ।
सिषेचामृतवर्षेण कृष्णं देवेश्वरेश्वरम् ॥४२॥
कृष्णः प्रत्यागतप्राणः चक्रमुद्यम्य भारत ।
प्रतीक्ष्य तं दुरात्मानं जघान रिपुसूदनः ॥४३॥
ईदृक्प्रभावो गङ्गायाः सर्वकाले सुखप्रदः ।

## अथ सर्वामरादिरूपत्वप्रकरणं द्वितीयम्

**भविष्ये शिववाक्यम्–**

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
धर्मश्च सर्वदेवाश्च सर्वयज्ञतपांसि च ॥४४॥
अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्वितः ।
अष्टाविंशतिकोट्यश्च देवतानां च वै सदा ।
गङ्गायां सर्व एवैते सूक्ष्मरूपेण वै स्थिताः ॥४५॥

**स्कान्दे–**

तिस्रः कोट्येऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ।
सर्वदा सर्वकालेषु गङ्गायां नात्र संशयः ॥४६॥

**हाभारते–**

सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ।
सर्वशास्त्रमयी गीता सर्ववेदमयो मनुः ॥४७॥
ज्ञानयोगक्रियायोगसारभूता महर्द्धिदा ।
**वेदविद्यान्तविद्यानां सारभूता हि जाह्नवी ॥४८॥**
**द्विसप्तभुवनादन्तर्बहिश्चापि प्रयत्नतः ।**
**सारमुद्धृत्य धर्मस्य ज्ञानस्य च महेश्वरः ॥४९॥**
**सर्वसारमयीं यां तु स्वकीयानन्दवर्द्धिनीम् ।**
**प्रीत्यैव लीलया धत्ते स्वमूर्ध्ना परमेश्वरः ॥५०॥**

## अथ सर्वोत्तमताप्रकरणं तृतीयम्

**स्कान्दे–**

भूतेश्वरादिह परो न हि पूजनीयो
नैवाश्वमेधसदृशः क्रतुरस्ति तात।
गङ्गासमं त्रिभुवनेऽपि न तीर्थमस्ति
नान्यद्व्रतं हि शिवरात्रिसमं तथास्ति ॥१॥
सद्यःपाप हरा चैव सद्यः सिद्धिकरी परा।
महत्पुण्यप्रदा सद्यः स्वर्गमोक्षफलप्रदा ॥२॥
देवानां च महादेवो यथा श्रेष्ठतमस्तथा।
सर्वेषामेव तीर्थानां गङ्गादेवी विशिष्यते ॥३॥

**महाभारते–**

न गङ्गासदृशं तीर्थं न देवः केशवात्परः।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥४॥
विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शुभैः ॥५॥
स्वायम्भुवं यथा स्थानं सर्वेषामुपरि स्थितम्।
तीर्थानां सरितां श्रेष्ठा गङ्गा तद्वदिहेष्यते ॥६॥
कलौ तु सर्वतीर्थानि स्वं स्वं वीर्यं स्वभावतः।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित् ॥७॥
प्रभासे गोसहस्रेण राहुग्रस्ते निशाकरे।
यत्फलं पाण्डवश्रेष्ठ ! गङ्गायां च दिन दिने ॥८॥

**नारदीये–**

कोटिष्वष्टादशसु च यत्तीर्थानां फलं भवेत्।
तत्समस्तमिहैकत्र गङ्गायां लभते नरः ॥९॥
अनुभूतिप्रमाणा हि भक्तिग्राह्या महेश्वरि !
भावानुरूपफलदा गङ्गा सर्वजगद्धिता ॥१०॥

**दानधर्मे–**

ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः।
येषां भागीरथी पुण्या मध्ये याति सरिद्वरा ॥११॥

**मात्स्ये–**

तीर्थानां परमं तीर्थं नदीनामुत्तमा नदी।
मोक्षदा सर्वभूतानां महापातकिनामपि ॥१२॥

**भविष्ये–**

ध्यानं कृते मोक्षहेतु स्त्रेतायां तत्र वै तपः ।
द्वापरे तदयं यज्ञः कलौ गङ्गैव केवलम् ॥१३॥
चिन्तामणिगणेभ्यश्च गङ्गायास्तोयबिन्दवः ।
विशिष्टा ये प्रयच्छन्ति भक्तेभ्योऽचिन्तितं फलम् ॥१४॥
सर्व एव शुभः कालः सर्वदेशस्तथा शुभः ।
सर्वे जनपदाः पात्रं स्नानादौ जाह्नवीजले ॥१५॥

**शिवपुराणे–**

नास्ति गङ्गासमं तीर्थं कलिकल्मषनाशनम् ।
नास्ति दानसमं पुण्यं नास्ति देवसमा स्मृतिः ॥१६॥
नास्मि मृत्युसमः पन्था नास्ति भूतिसमन्तपः ।

**कौर्ममात्स्ययोः–**

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम् ॥१७॥
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् ।

**वनपर्वणि–**

यत्र गङ्गा महाराज ! स देशस्तत्तपोवनम् ॥१८॥
सिद्धिक्षेत्रं हि तज्ज्ञेयं गङ्गातीरसमाश्रयम् ।

**स्मृतिरपि–**

प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम् ।
गङ्गां प्राप्य न दुष्यन्ति सा हि धर्मद्रवा यतः ॥१९॥
न मन्त्रो न विधिश्चैव न मृदो न च गोमयम् ।
न स्थाननियमः कश्चिद् प्राप्य गङ्गां सरिद्वराम् ॥२०॥

**पाद्मे–**

धर्मद्रवो ह्ययं बीजं वैकुण्ठचरणच्युतम् ।
धृतं मूर्ध्नि महेशेन यद् गाङ्गममलं जलम् ॥२१॥
तद्वै ब्रह्म न सन्देहो निर्गुणं प्रकृतेः परम् ।
तेन किं समतां गच्छेदपि ब्रह्माण्डगोचरे ॥२२॥
गङ्गा गङ्गेति यो ब्रूते योजनानां शतैरपि ।
नरो न निरयं याति किं तया सदृशो भवेत् ॥२३॥
गङ्गायाः सदृशं तीर्थमपि ब्रह्माण्डगोचरे ।
इति यो वक्ति मूढात्मा सर्वधर्मबहिष्कृतः ॥२४॥

## अथ गङ्गायाः स्वभावकथनप्रकरणं चतुर्थम्

पापिनां पापहन्त्री च स्वर्गमोक्षाप्तिहेतुता।
स्वभाव एव गङ्गायाः शैत्यं शीतरुचो यथा ॥२५॥

**भविष्ये—**

पापखण्डनशीला हि सद्यो गङ्गा जगद्धिता ॥२६॥
उपपातकराशीनां सा हि हन्त्री यतः स्मृता।
संसारमोक्षको देवो जनानामनुकम्पया ॥२७॥
गङ्गावतारारूपेण सोपानं निर्ममे भुवः।
अलक्ष्यानामस्वर्ग्याणां नराणां मूर्ध्नि संस्थितान् ॥२८॥
गङ्गायाः शक्तिरेवात्र तान्विनाशयितुं ध्रुवम्।

**स्कान्दमात्स्ययोः—**

क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम्।
कामिनां च तथाऽन्यत्र तपोयज्ञादि निष्फलम् ॥२९॥
गङ्गायां तु कृतं सर्वं सफलं नात्र संशयः।
परब्रह्मस्वरूपायां गङ्गायां तु स्वभावतः ॥३०॥
तिलोदके तु पतिते तृणपर्णादिकं तथा।
शिलात्वं भजते तत्र वस्तुशक्त्या तथैव हि ॥३१॥
सर्वदेवमयी गङ्गा सर्वधर्मस्वरूपिणी।

**अतः श्रीमद्गीतायाम्— स्रोतसामस्मि जाह्नवी।**

तीर्थानां परमं तीर्थं नदीनां परमा नदी।
मोक्षदा सर्वभूतानां स्वभावाज्जाह्नवी यतः ॥३२॥

**कल्पतरौ च—**

यथा भगवद्विष्णुपदाङ्गुष्ठाद्विनिःसृतजलस्यैतस्य माहात्म्यं यन्न केवलमभिसन्धिपूर्वकं स्नानाद्युपयोगे उपकारकमनभिसंहितमेतत् प्राणिनोऽस्थिचर्मस्नायुकेशाद्युपकृष्टशरीरजमपि तदुपरि पतितं सद्यः शरीरिणं स्वर्गं नयति।

## अथ गङ्गागुणश्रवणप्रकरणं पञ्चमम्

**स्कान्दे—**

श्रुताऽभिलषिता दृष्टा पीता स्पृष्टाऽवगाहिता।
या पावयति भूतानि कीर्तिता च दिने दिने ॥१॥
माहात्म्यं ये च गङ्गायाः शृण्वन्ति च पठन्ति च।
तेऽप्यशेषैर्महापापैर्मुच्यन्ते नात्र संशयः ॥२॥

जन्मान्तरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः ।
इह जन्मनि गङ्गाया माहात्म्यश्रवणे रतिः ॥३॥

**भविष्ये—**

पापपांशुमहावात्या पापद्रुमकुठारिका ।
पापेन्धनदवाग्निश्च श्रुतेयं पुण्यवाहिनी ॥४॥
शृण्वन्ति महिमानं ये गङ्गाया नित्यमादरात् ।
गङ्गास्नानफलं तेषां वाचकप्रीणनाद्धनैः ॥५॥
पितॄनुद्दिश्य यः श्राद्धे गङ्गाया गौरवं नरः ।
शृणुयाद्भक्तिसंयुक्तः तृप्ताः स्युस्तस्य पूर्वजाः ॥६॥

**मात्स्ये—**

गङ्गायाः महिमानं तु शृणुयाद्यश्च वै पठेत् ।
श्रावयेदथ तद्भक्त्या दम्भलोभविवर्जितः ॥७॥
मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवैः ।
क्षणान्निष्पापतामेति मोक्षोपायं च विन्दति ॥८॥
माहात्म्यं ये च शृण्वन्ति गायन्ति च पठन्ति च ।
तेऽप्यशेषैर्महापापैर्मुच्यन्ते नात्र संशयः ॥९॥

**भविष्ये—**

योजनानां सहस्रेषु गङ्गां यः शृणुते नरः ।
अपि दुष्कृतकर्मापि लभते परमां गतिम् ॥१०॥

**ब्रह्माण्डे—**

गङ्गासंश्रयणान्मर्त्यो यावज्जीवप्रतिज्ञया ।
करोति नियतात्माऽसौ स देवो नात्र संशयः ॥११॥

## अथ गङ्गास्मरणफलस्यषष्ठ प्रकरणम्

**ब्राह्मे—**

दिव्या त्रिधारा दृष्टा या पुण्या त्रिपथग नदी ।
स्मरणादेव सर्वेषामंहसां या विभेदिनी ॥१२॥

**ब्रह्माण्डे—**

मनसा संस्मरेद्यस्तु गङ्गां दूरस्थितो नरः ।
चान्द्रायणसहस्रन्तु लभते नात्र संशयः ॥१३॥
यत्र तत्र स्थितो वाऽपि मरणे समुपस्थिते ।
भक्त्या गङ्गां स्मरन् याति नरः शिवपुरं परम् ॥१४॥

**भविष्ये—**

स्मरणादेव गङ्गायाः पापसंघातपञ्जरम्।
भेदं सहस्रधाऽप्नोति गिरिर्वज्रहतो यथा ॥१५॥
शतयोजनसंस्थां तु गङ्गां भक्त्या स्मरन्ति ये।
गङ्गा गङ्गेति ब्रूयुर्ये मुच्यन्ते नात्र संशयः ॥१६॥
भुवनानि विचित्राणि विचित्राभरणा स्त्रियः।
आरोग्यं सर्वसम्पत्तिर्गङ्गास्मरणजं फलम् ॥१७॥
गच्छँस्तिष्ठन् स्वपन् जाग्रद्ध्यायन् भुञ्जन् श्वसन वदन्।
यः स्मरेत् सततं गङ्गां सोऽपि मुच्येत् किल्विषात् ॥१८॥
क्रोधेन च तपस्तद्वत् कामेन च यथा मतिः।
स्मयेन च यथा लक्ष्मीर्विद्या मानोदयैर्यथा ॥१९॥
दम्भकौटिल्यमायाभिर्यथा धर्मो विनश्यति।
तथा नश्यन्ति पापानि गङ्गायाः स्मरणेन च ॥२०॥
ये स्मरन्ति च वै गङ्गां गङ्गाभक्तिप्रियाश्च ये।
तेऽप्यशेषैर्महापापैः मुच्यन्ते नात्र संशयः ॥२१॥

## अथ गङ्गागुणकीर्तनप्रकरणं सप्तमम्

**विष्णुपुराणे—**

गङ्गागङ्गेति यैर्नाम योजनानां शतैरपि।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥१॥

**आग्नेये—**

यो गृहे वर्तमानोऽपि त्वां नाम्ना कीर्त्तयिष्यति।
स च याति दिवं नित्यमित्याह भगवान् भवः ॥२॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्।
गङ्गेति शब्दमाकर्ण्य नश्यन्त्येतानि निश्चितम् ॥३॥
अलं ध्यानेन विप्रेन्द्राः! व्रतेनाध्ययनेन च।
इदं च स्वर्गसोपानं गङ्गागङ्गेति कीर्तनम् ॥४॥
गङ्गां भागीरथीं पुण्यां श्रद्धया प्रवदन्नरः।
योजनानां शतस्थोऽपि मुच्यते सर्वकिल्विषैः ॥५॥
सहस्रयोजनस्थोऽपि त्रिसन्ध्यं सुसमाहितः।
गङ्गा गङ्गेति यो ब्रूते स याति परमां गतिम् ॥६॥

**ब्रह्माण्डे—**

शतयोजनसंस्थोऽपि त्रिसन्ध्यं सुसमाहितः ।
गङ्गा गङ्गेति यो ब्रूयात्स याति परमां गतिम् ॥७॥
दर्शनात् स्पर्शनात्पानात् स्मरणादेव कीर्तनात् ।
सद्यः पापैः प्रमुच्येत महापापयुतो नरः ॥८॥
सप्तावरान्सप्तपरान् पितॄँस्तेभ्यस्तथाऽपरान् ।
गङ्गा तारयते पुंसां प्रसङ्गेनापि कीर्तनात् ॥९॥
अश्रद्धयाऽपि गङ्गाया योऽसौ नामानुकीर्तयेत् ।
करोति पुण्यवाहिन्या स वै स्वर्गस्य साधनम् ॥

**तथा—**

गङ्गेति कीर्तनादेव सद्यः पापात्स मुच्यते ॥१०॥

**नारदीये—**

गङ्गा गङ्गेति यो ब्रूयाद्योजनां विदूरतः ।
मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवै ॥११॥
सर्वावस्थां गतो वाऽपि सर्वधर्मविवर्जितः ।
गङ्गायाः कीर्तनादेव शुभाङ्गतिमवाप्नुयात् ॥१२॥
गङ्गा गङ्गेति यैर्नाम त्रिसन्ध्यं त्रिरुदाहृतम् ।
नृणां यत्त्रिविधं पापं हन्ति जन्मत्रयार्जितम् ॥१३॥

**वैष्णवे—**

अलं दानेन विप्रेन्द्राः ! श्रुतेनाध्ययनेन च ।
इदं च स्वर्गसोपानं गङ्गागङ्गेति कीर्तनम् ॥१४॥

## अथ गङ्गानमस्कारफलप्रकरणं अष्टमम् ।

**भविष्ये—**

सर्वतत्त्वमयीं गङ्गां परमार्थस्वरूपिणीम् ।
त्रैलोक्यतारणार्थाय गङ्गामभिगतां सदा ॥१॥
प्रणम्य प्रातरुत्थाय गङ्गां पुण्यजलां शुभाम् ।
धर्मार्थकाममोक्षार्थं मर्त्यमायुष्यभाजनम् ॥२॥

**हरिवंशे च—**

दिव्या देवनमस्कार्या पुण्या त्रिपथगा नदी ।
नमनादेव सर्वेषामघः सद्यो विनाशिनी ॥३॥

**पाद्मे—**

प्रातरुत्थाय यो गङ्गां प्रणमेदतिभक्तितः।
तस्य पापभयं नास्ति शुचिरेव न संशयः ॥४॥
गङ्गां दिव्यनदीं देवैर्मान्याममृतवाहिनीम्।
नमस्कुर्वन्ति ये नित्यं ते वै विगतकल्मषाः ॥५॥

**ब्राह्मे—**

अपि पापरतो नित्यं कामासक्तोऽजितेन्द्रियः।
उपपातकयुक्तोऽपि गङ्गां नत्वा दिवं व्रजेत् ॥६॥

## अथ गङ्गाजलपानफलप्रकरणं नवमम्

**भविष्ये—**

अन्नदानैश्च गोदानैः स्वर्णदानादिभिस्तथा।
तथाऽश्वगजदानैश्च यत्पुण्यं परिकीर्तितम् ॥
ततः शतगुणं गङ्गातोयपानादवाप्नुयात् ॥१॥

**महाभारते—**

चान्द्रायणसहस्राणि यच्च वै देहशोधनम्।
यः पिबेच्च यथेष्टं तु गङ्गाम्भः स विशिष्यते ॥२॥

**ब्रह्माण्डे—**

गङ्गातीरे वसेन्नित्यं गङ्गाम्भः पिबते सदा।
दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने ॥३॥
गङ्गातोयातिसंसिक्तां भिक्षामश्नाति योगवित्।
सर्पवत्कञ्चुकं त्यक्त्वा पापानीह नरोत्तमः।
स्वर्गापवर्गिणीं सिद्धिं प्राप्नोत्येव न संशयः ॥४॥

**दानधर्मे—**

सर्वाणि येषां गङ्गायास्तोयैर्भोज्यानि देहिनाम्।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति तेऽमलाः ॥५॥
चन्द्रव्रतसहस्रन्तु यश्चरेत्कायशोधनम्।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वाऽसमौ ॥६॥
यस्तु सूर्यांशुसन्तप्तं गाङ्गेयं पिबते जलम्।
गवामाहारनिर्मुक्ताद्यावकात्स विशिष्यते ॥७॥

**स्कान्दे—**

गण्डूषमात्रपानेन वाजिमेधफलं लभेत्।
स्वच्छन्दं यः पिबेच्चापः तस्य मुक्तिः करे स्थिता ॥८॥
त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनैः।
नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यते ॥९॥
अभ्यन्तर्गततोयानां मृतानां क्वापि देहिनाम्।
तत्र तीर्थफलावाप्तिर्नात्र कार्या विचारणा ॥१०॥

## अथ गङ्गामृत्तिकास्पर्शफलप्रकरणं दशमम्

**तत्र दानधर्मे ब्रह्माण्डाग्नेयेषु—**

गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः।
विभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥१॥

**स्कान्दे—**

गङ्गातटोद्भवां मृत्स्नां मौलौ यो विभृयान्नरः।
विभर्ति सोऽर्कविम्बं वै तमोनाशाय निश्चितम् ॥२॥
अपि पापपरो नित्यं सुदूरस्थोऽपि यो नरः।
आलभ्य विबुधान् याति मूर्ध्ना तत्तीरमृत्तिकाम्।
विलिप्य सर्वदेहे तु गोसहस्रफलं लभेत् ॥३॥

**ब्रह्मवैवर्त्ते प्रकृतिखण्डे श्रीकृष्णवाक्यं गङ्गाम्प्रति—**

त्वद्रेणुस्पर्शमात्रेण पूतो भवति पातकी।
रेणुप्रमाणवर्षं च स वैकुण्ठे वसेदिति ॥४॥

**भविष्ये—**

गङ्गातीरमृदं मूर्ध्ना यो विभर्त्ति नरोत्तमः।
स देवैः पूजनीयो हि जीवन्मुक्तः स एव हि ॥५॥
जाह्नवीमृत्तिकां देहे लेपयित्वा नरः क्वचित्।
म्रियते पापयुक्तोऽपि स हि स्वर्गमवाप्नुयात् ॥६॥
गङ्गातीरमृदं यस्मिन् गृहे तिष्ठति चानघ।
तद्देवसदनं ज्ञेयं तीर्थरूपं प्रचक्षते ॥७॥

## अथ गङ्गाजलमहिमाप्रकरणमेकादशम्

**स्कान्दे—**

योऽसौ विश्वम्भरो देवश्चित्स्वरूपी जनार्दनः।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥१॥

जलकृत्यानि सर्वाणि गङ्गातोयेन यः सदा।
नियमेनैव कुरुते यावज्जीवप्रतिज्ञया ॥२॥
स एव जीवन्मुक्तस्तु स मुनिः स च पण्डितः।
तेनैव साक्षात्सम्प्राप्तं मोक्षाख्यं परमं पदम् ॥३॥

**लैङ्गे—**

ब्रह्महा गुरुहा गोघ्नः स्वर्णहृद् गुरुतल्पगः।
गङ्गाम्भसा तु पूयन्ते नात्र कार्या विचारणा ॥४॥

**ब्राह्मे—**

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान्।
संसेवते मासमेकं गङ्गाम्भः स विशिष्यते ॥५॥

**दानधर्मे—**

देवाः सोमार्कसंस्थानि यथा शक्रादयोऽमराः।
अमृताध्युपजीवन्ति तथा गङ्गाजलं नराः ॥६॥
मेरोः समुद्रस्य च सर्वयत्नैः संख्योपलानामुदकस्य वाऽपि।
शक्त्या वक्तुं नेह गङ्गाजलानां गुणाख्यानं परिमातुं तथैव ॥७॥

**स्कान्दमात्स्ययोरपि—**

तीर्थयात्राविधिं कृत्स्नमकुर्वाणोऽपि यो नरः।
गङ्गातोयस्य माहात्म्यात्सोऽप्यत्र फलभाक् भवेत् ॥८॥

**देवलयमौ—**

क्षेत्रस्थमुद्धृतं वाऽपि शीतमुष्णमथापि वा।
गङ्गाया हरते तोयं पापमामरणान्तिकम् ॥९॥
वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं जलम्।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥१०॥

**नारदीये—**

हिमवद्विन्ध्यसदृशा राशयः पापकर्मणाम्।
गङ्गाम्भसा ते नश्यन्ति विष्णुभक्तिप्रतापवत् ॥११॥
गङ्गाजलस्वरूपेण तत्त्वज्ञानं व्यवस्थितम्।
तस्मात्तज्जलमेवात्र मोक्षमात्रप्रदर्शकम् ॥१२॥

**स्कान्दे—**

वस्तुशक्तिविचारार्थमद्भुतः कोऽपि कुम्भज!
द्रवरूपेण कोऽप्येषा शक्तिः सादाशिवी परा ॥१३॥

करुणामृतपूर्णेन देवदेवेन शम्भुना ।
एषा प्रवर्तिता गङ्गा जगदुद्धरणाय वै ॥१४॥
यथान्याः सरितो लोके वारिपूर्णाः सहस्रशः ।
तथैषा नानुमन्तव्या सद्भिस्त्रिपथगामिनी ॥१५॥
श्रुत्यक्षराणि निश्चोत्य कारुण्याच्छम्भुना मुने !
निर्मिता तद्रसैरेषा गङ्गा गङ्गाधरेण च ॥१६॥
योगोपनिषदामेतं सारमाकृष्य शङ्करः ।
कृपया सर्वजन्तूनां चकार सरिताम्वराम् ॥१७॥

## अथ गङ्गाजलधारणफलप्रकरणं द्वादशम्

**पाद्मोत्तरखण्डे शिववाक्यं पार्वतीम्प्रति–**

तां दृष्ट्वा मेरुमध्ये तु प्रश्नवन्तीं शुभानने !
आत्मनः पावनार्थाय शिरसा तामधारयम् ॥१॥
दिव्यं वर्षसहस्रं तु धृत्वा गङ्गाजलं शुभम् ।
शिवत्वमाप्नुवन्देवि ! सर्वलोकेषु पूजितः ॥२॥
यो वहेत् शिरसा गङ्गातोयं विष्णुपदोद्भवम् ।
सर्वदेवैः सदा पूज्यो भविष्यति न संशयः ॥३॥

**देवीपुराणे शिववाक्यम्–**

त्वं तु मन्दाकिनी पुण्या मया च शिरसि धृता ।
दशवर्षसहस्राणि शिवत्वं प्राप्तवानहम् ॥४॥
अष्टाशीति सहस्रैस्तु ऋषिभिरूर्ध्वरेतसैः ।
धार्यते सततं देवि ! तपः सिद्धैस्तपोधनैः ॥५॥

**श्रीभागवते–**

तत ऋषयस्तत्प्रभावाभिज्ञा इयं तु तप आत्यन्तिकी सिद्धिरेतावती भगवति सर्वात्मनि वासुदेवेनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतामनुसव इव सबहुमानमद्यापि जटाजूटैरूद्वहन्ति ॥

**स्कान्दे–**

विष्णुपादोदकं नित्यं शिरसा धारयेत्तु यः ।
पादोदकं च गाङ्गोदं द्वादशाब्दफलप्रदम् ।
चातुर्मासे विशेषेण तत्फलं द्विगुणं भवेत् ॥७॥

## अथ गङ्गाभक्तिकरणफलप्रकरणं त्रयोदशम्

निर्धूतमलपङ्कानां स्वभावामलचेतसाम् ।
परलोकप्रभीरूणां चास्तिकानां महात्मनाम् ॥१॥
श्रुतिस्मृतिपुराणार्थदृष्टविश्रम्भचेतसाम् ।
गङ्गायां जायते भक्तिरित्येवं वसवोऽब्रुवन् ॥२॥

**स्कान्दे—**

सर्ववर्णाश्रमेभ्यश्च वेदविद्भ्यस्तथैव च ।
शास्त्रार्थपारगेभ्यश्च गङ्गाभक्तो विशिष्यते ॥३॥
पूर्वजन्मान्तराभ्यासवासनावशतो हर !
गङ्गायां जायंते भक्तिर्मदनुग्रहतः परात् ॥४॥
जन्मान्तरकृतैर्दानैस्तपोभिर्नियमव्रतैः ।
इह जन्मनि गङ्गायां नृणां भक्तिः प्रजायते ॥५॥
गङ्गाभक्तिमतामर्थे महेन्द्रादिपुरेषु च ।
हर्म्याणि रम्यभोगानि निर्मितानि स्वयम्भुवा ॥६॥
समातृपितृदाराणां कुलकोटिमनन्तरम् ।
गङ्गाभक्तिस्तारयते संसारार्णवतो ध्रुवम् ॥७॥
सन्तोषपरमैश्वर्यं तत्त्वज्ञानं शुभात्मता ।
विमलाचारसम्पत्तिर्गङ्गाभक्तस्य जायते ॥८॥
कृतकृत्यो भवेन्मर्त्यो गङ्गां प्राप्यैव केवलम् ।
तद्भक्तस्तत्परश्चेत्स्यान्मुक्त एव न संशयः ॥९॥
भक्त्या तज्जलपङ्कानि तज्जलं सेवते तु यः ।
अनायासेन हि नरो मोक्षोपायं च विन्दति ॥१०॥
विष्णोः परं पदं प्राप्तः पुंसां यज्ञाय यत्फलम् ।
गङ्गां प्राप्य तथा स्पृष्ट्वा तत्फलं भक्तितो भवेत् ॥११॥

**पाद्मे—**

गङ्गां तु भक्तिभारेण सेवते यस्तु मानवः ।
स कोटिकुलमुद्धृत्य स्वर्गलोके महीयते ॥१२॥

## अथ गङ्गास्नानावरोधकप्रकरणं चतुर्दशम्

**स्मृतिः—**

षष्टिर्विघ्नसहस्राणि गङ्गां रक्षन्ति सन्ततम् ।
निवारयन्ति तत्तीर्थं यावत्तद्धनमश्नुते ॥१॥

**भविष्ये–**

काम: क्रोधस्तथा ह्यर्थ: लोभादिनिशितै: शरै: ।
प्रहरन्ति मनस्तेषां स्थितिं च नाशयन्ति च ।।२।।

**कालिका पुराणे–**

रुद्रेण रक्षते देवि ! मोहयित्वा तु मानवान् ।
येन साधारणी बुद्धिर्गङ्गायामपि जायते ।।३।।

**स्कान्दे–**

रक्षपालाँस्ततो मुक्त्वा शतसाष्टविनायकान् ।
क्षेत्रपाला: शतं सन्त: सन्द्रक्ष्यन्ति प्रयत्नत: ।।४।।
विघ्नास्तस्योपजायन्ते यस्तत्र स्नातुमिच्छति ।
केचित्ते कुण्डचिन्ता सुव्यग्रा: केचित्कृषीषु च ।।५।।
परोक्षवादं कुर्वन्ति केऽपि हिंसारता: सदा ।
परिवाररता: केचित्केचिद्भूतविहिंसका: ।।६।।
अन्ये केचिद्वदन्त्येवं कथं तीर्थेषु गम्यते ।
क्षुधया पीड्यते भार्या पुत्रभृत्यादयस्तथा ।।७।।
मोहजालेषु योज्यन्त एवं देवगणैर्नरा: ।
पापाचाराश्च ये मर्त्या: स्नानं तेषां न जायते ।
संरक्ष्यन्ते च तत्तीर्थं दैवभृत्यगणैस्तथा ।।८।।

## अथ गङ्गायां पुण्यकालप्रकरणं पञ्चदशम्

**भविष्ये–**

द्वादश्यां श्रवणर्क्षे च ह्यष्टम्यां पुण्ययोगत: ।
आर्द्रायां च चतुर्दश्यां गङ्गास्नानं सुदुर्लभम् ।।१।।
वैशाखे पूर्णिमायां च माघे वै कार्तिके तथा ।
तथा माघे त्वमायां च गङ्गायां तु सुदुर्लभम् ।।२।।
कृष्णाष्टम्यां सहस्रं तु शतं स्यात्सर्वपर्वसु ।
अमावास्यायां तथा हि सहस्रं तद्दिनक्षये ।।३।।
सोमसूर्यग्रहे लक्ष्यं व्यतीपाते त्वनन्तकम् ।
संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययो: ।।४।।
पुष्ये स्नात्वा तु गङ्गायां कुलकोटिं समुद्धरेत् ।
जन्मनां च कृतं स्नानं गङ्गायां भक्तिभावत: ।।५।।
जन्मप्रभृति वै पापं तत्क्षणाद्देव नश्यति ।
चतुर्दश्यां यदा युक्तो व्यतीपातेन चन्द्रमा: ।।६।।

तदा पुण्यतमः कालो देवानामपि दुर्लभः ।
तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात् ॥७॥
कृष्णाष्टम्यां यदा त्वार्द्रा व्यतीपातश्च वै भवेत् ।
गङ्गायां दुर्लभं स्नानं स योगो ह्यतिदुर्लभः ॥८॥
यो माघे दैवयोगेन गङ्गायां स्नानमालभेत् ।
लभते चेत् स सद्यो हि जातिं स्मरति पौर्वकीम् ॥९॥
सर्वदानतपोयोगफलमाप्नोति तत्समम् ।
सर्वशास्त्रार्थविज्ञानादरोगश्च तथा भवेत् ॥१०॥
नैरन्तर्येण गङ्गायां मासं यः स्नाति मानवः ।
स हि शक्रसमो लोके चिरं स्थित्वा स्वगोत्रजैः ॥११॥
ततो ब्रह्मपुरे तिष्ठेत्कल्पकोटिशतैरपि ।
षण्मासं स्नाति गङ्गायां नैरन्तर्येण यो नरः ॥१२॥
सर्वपापविनिर्मुक्तः समस्तकुलसंयुतः ।
समभोगसमायुक्तो विष्णुलोके महीयते ॥१३॥
परार्धं द्वितयं यावन्नात्र कार्या विचारणा ।
षण्मासमेकस्त्वपर सकृदेवोत्तरायणे ॥१४॥
तयोः स्नानं भवेत्तुल्यं विषुवे च तथैव च ।
संक्रान्तिषु च सर्वासु चातुर्मास्यफलं लभेत् ॥१५॥
संक्रान्त्या पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः ।
गङ्गास्नानान्नरः कामाद् ब्रह्मणः सदनं व्रजेत् ॥१६॥
प्रातः स्नानं दशगुणं मध्याह्ने समुदाहृतम् ।
सायं काले शतगुणमनन्तं शिवसन्निधौ ॥१७॥

**प्रकृति खण्डे—**

सामान्यदिवसस्नानं संकल्पं शृणु सुन्दरि !
पुण्यं दशगुणं चैव मौसलस्नानतः परम् ॥१८॥
ततस्त्रिंशद्दशगुणं रविसंक्रमणे दिने ।
अमायां चापि तत्पुण्यं द्विगुणं दक्षिणायने ॥१९॥
चातुर्मास्यां पूर्णिमायामनन्तं पुण्यमेव च ।
अक्षयायां च तत्तुल्यां नैतद्वेतन्निरूपितम् ॥२०॥
असंख्यपुण्यफलदमेतेषु स्नानदानतः ।
मन्वन्तरायां देवेशि ! युगाद्यायां तथैव च ॥२१॥
माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च ।
तथाऽप्यशोकाष्टम्यां तथा पुण्यतिथौ हरेः ॥२२॥

ततो वै द्विगुणं पुण्यं नन्दायां तव दुर्लभम्।
दशहरादशम्यां च युगाद्यादिसमं फलम् ॥२३॥
नन्दासमं च वारुण्यां महत्पूर्वे चतुर्गुणम्।
ततश्चतुर्गुणं पुण्यं तन्महत्पूर्वके सति।
पुण्यं कोटिगुणं चैव सामान्यस्नानतो भवेत् ॥२४॥

**तथा—**

मासि ज्येष्ठे सुरश्रेष्ठ! कृतानन्तफला स्मृता।
तस्यां तु जाह्नवीस्नानं सूर्यग्रहशताधिकम् ॥२५॥
माससंज्ञे यदा पुष्ये चन्द्रे सम्पूर्णमण्डले।
गुरुणा याति संयोगं तन्महत्त्वं तिथेर्मतम् ॥२६॥
पितृनुद्दिश्य यो देवान् स्नापयेद् गाङ्गवारिणा।
तृप्तास्तु तस्य पितरो नरकस्था अपि क्षणात् ॥२७॥
मृत्कुम्भैस्ताम्रकुम्भैस्तु स्नानं दशगुणं स्मृतम्।
रौप्यैर्दशगुणं प्रोक्तं हैमैः कोटिगुणं भवेत् ॥२८॥
संक्रान्तौ पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययो; ।
गङ्गास्नातो नरः कामं ब्रह्मणः सदनं व्रजेत् ॥२९॥
पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैघृतौ।
अमायां चैव गङ्गायाः स्नानं हरति दुष्कृतम् ॥३०॥
जन्मर्क्षे यत्कृतं स्नानं गङ्गायां भक्तिभावतः।
जन्मप्रभृति वै पापं तत्क्षणादेव नश्यति ॥३१॥
शनैश्चरस्य वारेण वारेणाङ्गारकस्य च।
कृष्णाष्टमीचतुर्दश्योरीप्सितं फलमाप्नुयात् ॥३२॥
उभयोः पक्षयोर्जाता तिस्रो यास्तिथयः शुभाः।
एकादशी तथा षष्ठी प्रतिपच्च निबोधिताः।
नन्दा तु कथिताऽस्माभिः सर्वपापहरा शुभा ॥३३॥

**पाद्मे—**

ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोके।
पापान्यस्यां हरति हि तिथौ सा दशम्याहुरार्याः।
पुण्यं दद्यादधिशतगुणं वाजिमेधायुतस्य ॥३४॥
महापातकसंख्यानि यानि पापानि सन्ति वै।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ॥३५॥

चन्द्रसूर्यग्रहे चैव योऽवगाहति जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥३६॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं तथा ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥३७॥

**तथा च–**

गवां कोटिसहस्रस्य सम्यग् दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे ॥३८॥
अरुणोदयवेलायां शुक्लमाघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥३९॥
वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥४०॥

**ब्रह्माण्डे–**

प्रभासे गोसहस्रेण राहुग्रस्ते निशाकरे ।
यत्फलं पाण्डवश्रेष्ठ ! गङ्गायां तु दिने दिने ।
रात्रौ दिवा च सन्ध्यायां गङ्गायां च प्रसङ्गतः ।
स्नात्वाऽश्वमेधजं पुण्यं गृहेषु धृततज्जलैः ॥४१॥
वैशाखे मासि राजेन्द्र ! शुक्लपक्षे तृतीयका ।
अक्षया सा तिथिः प्रोक्ता कृत्तिका रोहिणीयुता ॥४२॥
तस्यां तु जाह्नवीस्नानं पुण्यमक्षयमश्नुते ।
वैशाखे पूर्णिमायां च माघे वै कार्तिके तथा ।
तथा माघी त्वमावस्या गङ्गायां तु सुदुर्लभा ॥४३॥

## अथ गङ्गायात्राविधि-प्रकरणम् ।

**पाद्मे सुमतिराजानं प्रति ब्राह्मणवाक्यम्–**

शृणु राजन्प्रवक्ष्यामि तीर्थयात्राविधिं शुभम् ।
येन सम्प्राप्य देवः सुरासुरनमस्कृतः ॥१॥
वलीपलितदेहो वा यौवनेनान्वितोऽपि वा ।
ज्ञात्वा मृत्युमतिस्तीर्थं हरिं शरणमाश्रयेत् ॥२॥
तत्कीर्तने तच्छ्रवणे वन्दने तस्य पूजने ।
मतिरेव प्रकर्तव्या नान्यत्र वनितादिषु ॥३॥
तीर्थेषु लभ्यते साधुः रामभद्रपरायणः ।
यद्दर्शनं नृणां पापराशिदाहाशुशुक्षणिः ॥४॥

तस्मात्तीर्थेषु गन्तव्यं नरैः संसारभीरुभिः ।
पुण्योदकेषु सततं साधुश्रेणिविराजिषु ॥५॥
तानि तीर्थानि विधिना दृष्टानि प्रहरन्त्यघः ।
तं विधिं नृपशार्दूल ! कुरुष्व श्रुतिगोचरम् ॥६॥
विरागं जनयेत्पूर्वं कलत्रादिकुटुम्बके ।
असत्यभूतं तं ज्ञात्वा हरिं तं मनसा स्मरेत् ॥७॥
तीर्थयात्रां समुद्युक्तो पूर्वेद्युर्ह्युपवासकृत् ।
शुचिः प्रयत्नतः पूज्यं देवं लम्बोदरं तथा ॥८॥
देवान् पितृन्समभ्यर्च्य ब्राह्मणान् शक्तितोऽर्चयेत् ।
अधनेनापि कर्त्तव्यो ह्येषोंर्च्याविधिः शुभः ॥९॥
शक्तिश्चेद्दश गाः दद्यात्सम्पूर्णफलमश्नुते ।
ततो गच्छेन्निरीहेन मनसा संस्मरन् हरिम् ॥१०॥
पान्थां देवीं च सम्पूज्य ग्रामोपवनसन्निधौ ।
स्तुत्वा नत्वा प्रगच्छेत्तु पादचारी दृढव्रतः ॥११॥
ऐश्वर्यमदमोहेन यस्तु यानं समाचरेत् ।
निष्फलं तद्भवेत्तीर्थं तस्माद्यानं विवर्जयेत् ॥१२॥
गोयाने गोवधः प्रोक्तो हययाने च निष्फलः ।
नरयाने तदर्धं स्यात्पद्भ्यां तच्च चतुर्गुणम् ॥१३॥
गच्छतो पादुकाभ्यां च श्रमप्रावणकं तथा ।
तीर्थयात्रा फलस्यार्धं नश्यतीति श्रुतौ श्रुतम् ॥१४॥
तस्मात्पद्भ्यां प्रगन्तव्यं सम्पूर्णफलहेतवे ।
ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् ॥१५॥
शनैः शनैः प्रगच्छेतु मिताहारो जितेन्द्रियः ।
क्रोशमात्रं ततो गत्वा रामरामेति चाब्रुवन् ॥१६॥
तत्र तीर्थादिषु स्नात्वा क्षौरं कुर्याद्विधानवित् ।
मनुष्याणां च यत्पापं तीर्थानि प्रतिगच्छति ॥१७॥
केशमाश्रित्य तिष्ठन्ति तस्मात्तद्वपनं चरेत् ।
ततो दण्डं तु निर्ग्रन्थि कमण्डलुमथाजिनम् ॥१८॥
विभृयाल्लोभनिर्मुक्तः तीर्थवेषधरो नरः ।
विधिना गच्छतां नृणां फलावाप्तिर्विशेषतः ॥१९॥
तस्मात्सर्वप्रयत्नेन तीर्थयात्राविधिं चरेत् ।
यस्य हस्तौ च पादौ च मनश्चैव सुसंहितम् ॥२०॥

विद्या तपःश्च कीर्तिश्च स तीर्थफलमश्नुते ।
हरे कृष्ण हरे कृष्ण भक्तवत्सल गोपते ॥२१॥
शरण्य ! भगवन् ! विष्णो ! मां पाहि बहुसंसृतेः ।
इति ब्रुवन् स सततं मनसा च हरिं स्मरन् ॥२२॥
पादचारी गतिं कुर्यात् तीर्थं प्रति महोदयः ।
तत्र स्नानं प्रकुर्वीत मन्त्रतन्त्रैर्विधानवित् ॥२३॥
आवाहनविशेषज्ञो गङ्गातीर्थे समुद्धरेत् ।
पुष्करादिषु तीर्थेषु हृत्सु सर्वसरित्सु च ।
गङ्गामावाहयेन्मन्त्रैः स्नानकाले विचक्षणः ॥२४॥
स्नात्वा तीर्थेन सन्तर्प्य पितृन् देवाँस्तथाऽर्चयेत् ।
ऋषींश्च दीनानाथेभ्यः यथाशक्त्या प्रदापयेत् ॥२५॥
गोभूहिरण्यवस्त्वादेर्दानं कुर्यान्महामनाः ।
उषित्वा रजनीं तत्र सोपवासः समाहितः ॥२६॥
उत्थायावश्यकं कृत्वा तीर्थे स्नानं समाचरेत् ।
ब्राह्मणान् भोजयित्वाऽथ तेभ्यो दत्वा च दक्षिणाम् ॥२७॥
नत्वा तीर्थं परिक्रम्य गृहान् गच्छेत्प्रसन्नधीः ।
सर्वभूतहितात्माऽसौ व्रती मौनी समाहितः ॥२८॥
गृहप्रवेशे वादित्रान्वादयन्बान्धवैः सह ।
तत्रापि ब्राह्मणान् देवान्पूजयित्वा विधानतः ॥२९॥
यथा शक्त्या भोजयित्वा ब्राह्मणान् भक्तिसंयुतः ।
विसर्जयेत्तीर्थबुद्ध्या सम्पूर्णफलमाप्नुयात् ॥३०॥
एवं तीर्थविधिः प्रोक्तः समासेन नृपोत्तम !
स एवं तीर्थयात्रां च कुर्याद्वै गुरुणोदिताम् ।
यावज्जन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥३१॥
सर्वेषु तीर्थेषु वसन्ति मत्स्या देवालये पक्षिगणाश्च नित्यम् ।
भावोदितास्ते न फलं लभन्ते तीर्थाच्च देवायतनाच्च मुख्यात् ॥३२॥
तस्मात्तीर्थाभिगमनं कुर्वतां भावशुद्धिता ।
करणीया प्रत्यनेन भावा हि फलदोषतः ॥३३॥
गङ्गायान्तु त्रिदैवत्यां न कालनियमस्तथा ।
न विधिर्न च भावो हि स्नात्वैव फलभाग् भवेत् ॥३४॥
यस्या संस्पर्शवायोश्च पापानि पापिनामहो ।
संस्पर्शादेव नश्यन्ति किमतः स्नानकर्मणाम् ॥३५॥

अनुषङ्गेण सङ्गेन वाणिज्येन च सेवया।
कामासक्तोऽपि हि नरो गङ्गां प्राप्य दिवं व्रजेत् ॥३६॥
गङ्गास्नानसमायुक्तो गङ्गास्नानोद्यतः सदा।
विनायकोक्तविधिना लभते परमां गतिम् ॥३७॥

## अथ गङ्गास्नानयात्राफलप्रकरणं सप्तदशतमम्

योगवृद्धिं शुभां देवाः प्रयच्छन्ति महात्मनाम्।
तेऽभिगच्छन्ति नियमैर्गङ्गामभिगतां सुरैः ॥१॥
यमो वैवस्वतो देवो यस्तवैव हृदि स्थितः।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥२॥
बहुनात्र किमुक्तेन गङ्गायाश्चैव भक्तितः।
महापातकिनो ये वा गमनाद्ब्रह्मलोकगाः ॥३॥

गच्छध्वं हि बुधाः ! गङ्गां मत्त्वा विश्वमशाश्वतम्।
सुघोरे च कलौ प्राप्ते मुक्तिर्वो वाञ्छिता यदि ॥४॥
तेषामुपनयो नान्यः कल्पकोटिशतैरपि।
ये तु संत्यक्तदम्भाश्च गङ्गां ध्यायन्ति यान्ति च ॥५॥
तेषां न परिवर्तोऽस्ति कल्पकोटिशतैरपि।
ये न सन्त्यक्तदम्भाश्च गङ्गां नैव प्रयान्ति च ॥६॥
वृथा कुलं वृथा विद्या वृथा यज्ञो वृथा तपः।
वृथा दानानि तस्येह कलौ गङ्गां न याति यः ॥७॥
गङ्गां स्नातुं समुद्युक्तो विधिना स्वग्रहात्ततः।
निर्गत्य मध्ये च नरः कुदेशे म्रियते यदि।
गङ्गास्नानफलं सोऽपि नियतात्मा लभेत वै ॥८॥

**ब्रह्माण्डे–**

स्नानं भक्त्या तु गङ्गायां कर्त्तुकामस्य गच्छतः।
पदे पदेऽश्वमेधस्य फलं मर्त्यस्य जायते ॥९॥
निर्गत्य मध्ये तु नरः कुदेशे म्रियते यदि।
गङ्गास्नानफलं सोऽपि नियतात्मा लभेत वै ॥१०॥
ये गच्छन्ति स्वतो गङ्गां पराँश्च प्रेरयन्ति च।
गृहे तु सर्वभोगानामन्ते मुक्तेश्च भाजनम् ॥११॥

**वाराहे–**

अर्घादिकं गृहीत्वा तु सेन्द्रा देवाः समासते।
आगच्छन्ति कदेत्यार्याः गङ्गामभिगताः नराः ॥१२॥

**दानधर्मे–**

गङ्गां गता ये त्रिदिवं गतास्ते ।
ऋषिस्तुतां ब्रह्मपथावतारिणीम् ॥१३॥
गङ्गास्नानं करोमीति मनसा यस्तु चिन्तयेत् ।
अशक्तस्तु स्वयं गन्तुं सामग्री यस्य नास्ति वै ॥१४॥
स तया श्रद्धया भक्त्या विमुक्तः सर्वपातकैः ।
ब्रह्मलोकमवाप्नोति देहान्ते नात्र संशयः ॥१५॥
क्रन्दन्ति सर्वपापानि संक्रान्ता सर्वपातकाः ।
अनिष्टानि पलायन्ते गङ्गास्नानोद्यतस्य वै ॥१६॥
सर्वभावाविशुद्धोऽपि गङ्गायां कुरुते मनः ।
सम्पूर्णफलमाप्नोति हेलया नात्र संशयः ॥१७॥

**भागवते–**

यस्यां स्नानार्थं पानार्थं वा गच्छतः पुंसः पदे पदे राजसूयाश्वमेधादीनां फलं न दुर्लभमिति ।

## अथ क्षेत्रप्रमाणफलप्रकरणमष्टादशतमम्

सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते ।
न मन्त्रो न विधिः कालो न मृदो न च गोमयम् ॥१॥
यत्र गङ्गा महाराज ! शंभुस्तत्र तपोधनः ।
सिद्धिक्षेत्रं हि तद् ज्ञेयं समन्ताच्च त्रियोजनम् ॥२॥
प्रवाहमवधिं कृत्वा यावद् हस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥३॥

**स्कान्दे–**

तीराद्गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ।
अत्रस्थाश्च दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥४॥

**दानधर्मे–**

भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भो विजानीयात्तदूर्ध्वं तीरमुच्यते ॥५॥

**भविष्ये–**

गङ्गासीमां न लङ्घन्ति सर्वपापान्यशेषतः ।
दिशो दश पलायन्ते सिहं दृष्ट्वा यथा मृगाः ।
एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयात् ॥६॥

## अथ गङ्गायामभक्तिदूषणप्रकरणमेकोनविंशतितमम्

गङ्गाया महिमानं तु न मन्यन्ते नराधमाः।
कुतार्किका नास्तिकाश्च ते वै निरयगामिनः ॥१॥
गङ्गां प्राप्यापि ये मर्त्याः प्रीयन्ते न नमन्ति च।
ताँश्चापि तारयेद् गङ्गा भक्तान् पापरताँस्तथा ॥२॥
गङ्गातोयं परित्यज्य येऽन्यतोयाभिलाषिणः।
तोयान्तरे रतिर्येषां ते वै निरयगामिनः ॥३॥
अज्ञानपटलच्छन्ननेत्रास्ते प्राज्ञमानिनः।
अन्ते तु नास्तिका दुष्टाः पश्यन्ति भ्रष्टचेतसः ॥४॥
गङ्गा तु पुण्यदं वारि साधारणजलं यथा।
गङ्गाभक्त्या तु गङ्गाप्सु श्लेष्मासृग्रोमसञ्चयान् ॥५॥
उत्संगेन क्षिपेच्चापो हस्तपादौ न ताडयेत्।
गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् ॥६॥
शौचमाचमनं स्नानं निर्माल्यं मलघर्षणम्।
गात्रसंवाहनं क्रीडां प्रतिग्रहमथो रतिम् ॥७॥
अन्यतीर्थरतिश्चैव अन्यतीर्थप्रशंसनम्।
वस्त्रत्यागमघोद्घातं सम्भारांश्च विशेषतः ॥८॥
मानुषं दुर्लभं प्राप्य शक्तियुक्तोऽप्यशक्तितः।
यस्तु भागीरथीं गङ्गां स्वसुसेव्यां न पश्यति ॥९॥
किमन्यैः कर्मभिः षट्भिस्तस्य किं श्लाघ्यजन्मना।
किं श्रियाऽतिविकासिन्या यस्तु गङ्गां न पश्यति ॥१०॥

**कालिकापुराणे—**

गङ्गां प्राप्यापि ये मर्त्याः श्रद्धां भक्तिं न कुर्वते।
तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः ॥११॥
गङ्गातीर्थं परित्यज्य येऽन्यतीर्थाभिलाषगाः।
ब्रह्महत्याफलं तेषां सततं संशयात्मनाम् ॥१२॥

**स्कान्दे—**

नाभ्यङ्गितः प्रविशेत्तु गङ्गायां च मलार्दितः।
न सम्पश्यन् मृषा जल्पन्न वदन्नानृतं नरः ॥१३॥
आधिक्यं सर्वतीर्थेभ्यो गङ्गाया न वदन्ति ये।
अल्पविद्यामदोन्मत्तास्ते वै निरयगामिनः ॥१४॥

शिवं विष्णुं च गङ्गां च यो द्वेष्टि पुरुषाधमः ।
स्वकीयपितृभिः सार्द्धं स घोरं नरकं व्रजेत् ॥१५॥
तथैव गौरी लक्ष्मी च गङ्गां भानुं सरस्वतीम् ।
ब्रह्माणं चैव यो द्वेष्टि स घोरं नरकं व्रजेत् ॥१६॥
गङ्गां ये वै न सेवन्ते मूढास्ते तमसावृताः ।
ते वै सज्वरमूत्रासृक्पुरीषश्लेष्मसंचये ॥१७॥
पुनः पुनः प्रजायन्ते श्रद्धया रहिताः सदा ।
गङ्गायां वैष्णवीशक्तौ परब्रह्मविभावनम् ॥१८॥
न कुर्वन्ति च ये भक्तिं न तैः सह तु संवदेत् ।
ज्ञात्वा कलियुगं घोरं गङ्गाभक्तिः सुगोपिता ॥१९॥
गङ्गाम्भो भक्तितो नित्यं पूजयेत्प्रीतिपूर्वकम् ।
त एव सिद्धा मुक्ताश्च तेषां प्रज्ञाफलं नृणाम् ॥२०॥
गङ्गां प्राप्य तु ये मर्त्याः श्रद्धां भक्ति न कुर्वते ।
तीर्थान्तरे रतिंकुर्युस्ते वै निरयगामिनः ॥२१॥
सर्वोत्तमां महादेवीं सर्वोत्कृष्टां वरप्रदाम् ।
अन्यतीर्थसमां कुर्युस्ते वै निरयगामिनः ॥२२॥
भागीरथीं महापुण्यां गङ्गां त्रिपथगामिनीम् ।
अन्यतीर्थसमां कृत्वा कुम्भीपाके निमज्जति ॥२३॥
अन्यतीर्थसमां गङ्गां यो ब्रवीति नराधमः ।
स याति नरकं घोरं रौरवं दारुणं महत् ॥२४॥
स्तुतिवादोऽप्ययमिति ये मन्यन्ते पुरुषाधमाः ।
कुतार्किका मूढधियस्ते वै निरयगामिनः ॥२५॥

**स्कान्दे–**

नैवात्मवादनिपुणाम् मिथ्यादृष्टान्तहेतुकान् ।
गङ्गाभक्तिविहीनाँस्तु वाङ्मात्रेणापि नार्चयेत् ॥२६॥
अनृजुर्नास्तिकः कामी किल्विषी वेदनिन्दकः ।
कुहको हेतुनिष्ठश्च न गङ्गाभक्तिभाग्भवेत् ॥२७॥
स्वधर्मं यः परित्यज्य परधर्मरतो नरः ।
स चौरस्तस्य गङ्गायां भक्तिर्नैवोपजायते ॥२८॥
शठाश्च मानिनः क्रूराः नास्तिकाः क्रोधनाः खलाः ।
असूयकाः कुतर्काश्च गङ्गाभक्तेर्न भाजनम् ॥२९॥

## अथ गङ्गावायुस्पर्शफलप्रकरणम्

**ब्रह्मवैवर्त्ते प्रकृतिखण्डे कृष्णवाक्यं गङ्गां प्रति–**

सगरस्य सुतान् सर्वान् पूतान् कुरु ममाज्ञया।
त्वत्स्पर्शवायुना पूता यास्यन्ति मम मन्दिरम्॥१॥
बिभ्रतो दिव्यमूर्त्तिं मे दिव्यस्यन्दनगामिनः।
मत्पार्षदा भविष्यन्ति सर्वकालं निरामयाः॥७॥
समुच्छिद्य कर्मभोगं कृतं जन्मनि जन्मनि।
कोटिजन्मार्जितं पापं भारते यत्कृतं नृणाम्॥८॥
गङ्गायाः स्पर्शवातेन तन्नश्यति श्रुतौ श्रुतम्।
मुक्तिप्रदा मुमुक्षूणां भक्तानां हरिभक्तिदा॥९॥
कोटिजन्मार्जितं पापं विविधं पापिनामहो।
यस्य संस्पर्शवायोश्च सम्पर्केण विनश्यति॥१०॥
गङ्गायाः जलदग्धो यः पवनः पुरुषं प्रति।
स्पृशते सोऽपि पापानां सर्वमेव व्यपोहति॥११॥

## अथ गङ्गादर्शनफलप्रकरणम्

**दानधर्मे–**

जात्यन्धैरिह तुल्यास्ते मृतपङ्गुभिरेव च।
समर्था ये न गच्छन्ति गङ्गासौख्यं यथा भवेत्॥१॥

**भविष्ये–**

भवन्ति निर्विषा सर्पा यथा तार्क्ष्यस्य दर्शनात्।
गङ्गायाः दर्शनात्तद्वन्मर्त्यः पापैः प्रमुच्यते॥२॥
वापीकूपतडागादिप्रपासत्रादिभिः शुभैः।
अन्यत्र यद्भवेत्पुण्यं तद्गङ्गादर्शने भवेत्॥३॥
यत्फलं जायते पुंसां दर्शने परमात्मनः।
तद् भवेदेव गङ्गायाः दर्शने भक्तिभावतः॥४॥

**स्मृतिश्च–**

वर्तमानमतीतं च ज्ञानतोऽज्ञानतोऽपि वा।
कृतं यदशुभं कर्म गङ्गां दृष्ट्वा प्रणश्यति॥५॥

**ब्रह्माण्डे–**

ज्ञानमैश्वर्यमायुश्च प्रतिष्ठा सर्वमान्यता।
शुभानामाश्रयत्वं हि गङ्गादर्शनजं फलम्॥६॥

**स्कान्दे–**

विधूतपापा ये मर्त्याः परंज्योतिःस्वरूपिणीम् ।
सहस्रसूर्यप्रतिमां गङ्गां पश्यन्ति वै कलौ ॥७॥
कदा द्रक्ष्यामि गङ्गायां कदा स्नानं करोम्यहम् ।
इत्याभिलषतां गङ्गा कुलानां शतमुद्धरेत् ॥८॥
वेदान्तवेद्यं यत्तत्त्वं परं ब्रह्म सनातनम् ।
पश्यन्त्वनुदिनं गङ्गां प्रत्यक्षं पुरतः स्थिताम् ॥९॥
तदेवेदं शिवं गङ्गा साक्षान्नरायणी परा ।
यस्यास्तु दर्शनादेव विष्णुमाया प्रणश्यति ॥१०॥

**पाद्मे च–**

स्वर्गङ्गां तु प्रपश्येत्तु स्पृशेद्वापि पुनः पुनः ।
भक्त्या परमया याति शाश्वतं चामृतं पदम् ॥११॥
यथा मेघा महावातैस्ताक्ष्यं दृष्ट्वा यथोरगाः ।
तत्त्वज्ञानैर्यथा मौढयं सिंहं दृष्ट्वा यथा मृगाः ॥१२॥
तथा पापानि सर्वाणि गङ्गां दृष्ट्वा प्रयान्त्यलम् ।
मुहुर्मुहुस्तथा पश्येत् स्पर्शं चैव मुहुर्मुहुः ॥१३॥
भक्त्या यदिच्छति नरः शाश्वतं चामृतं यदि ।
परापवादशीलत्वं परद्रव्याभिकांक्षितम् ।
परधर्ममतिर्गङ्गादर्शनादेव नश्यति ॥१४॥

नैमिषे च कुरुक्षेत्रे नर्मदायां च पुष्करे ।
मासं संसेवनाच्चापि यत्फलं लभते नरः ॥१५॥
गङ्गाया दर्शनादेव कलौ प्राहुर्महर्षयः ।
यावद्भ्रमति संसारे तावद् गङ्गां न पश्यति ॥१६॥

**तथा च–**

वापीकूपतडागादिप्रपासत्रादिभिस्तथा ।
अन्यत्र यद्भवेत्पुण्यं तद्गङ्गादर्शनाद् भवेत् ॥१७॥
ख्यातिलाभात्मपूजादौ यथार्थत्वं सदा तथा ।
गङ्गायाः दर्शने तत्स्यात् सर्वैश्वर्यस्य भाजनम् ॥१८॥

**तथा च–**

अशोकता कीर्तिमत्त्वं दमनिष्ठा दयान्वितिः ।
धनधान्यसमृद्धिश्च गङ्गादर्शनजं फलम् ॥१९॥

**महाभारते—**

लावण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।
यथा प्रसादो भवति गङ्गां वीक्ष्य यथा भवेत् ॥२०॥
सर्वेन्द्रियाणां चापल्यं व्यसनाशक्तिवाग्भवैः ।
निर्विण्णत्वं नृणां गङ्गादर्शनादेव नश्यति ॥२१॥

**दानधर्मे—**

मनोवाक्कायजैः पापैः नरो बहुविधैरपि ।
वीक्ष्यमाणे च गङ्गायाः पूतो भवति तत्क्षणात् ॥२२॥

## अथ गङ्गायाः स्पर्शफलप्रकरणम्

**ब्रह्माण्डे—**

अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ।
अभक्त्याऽपि महापापो गङ्गां स्पृष्ट्वा शुचिर्भवेत् ॥१॥
जीवितं न कृतार्थं हि यस्य मूर्खस्य पापिनः ।
तस्यापि स्वर्गहेतुः स्याद्गङ्गास्पर्शोऽतिपुण्यदः ।
गङ्गासंस्पर्शनैर्धूतपापः स्वर्गं प्रयाति हि ॥२॥

**नारदीये—**

यद्यकार्यशतं कृत्वा कृतं गङ्गाम्बुस्पर्शनम् ।
सर्वान् पापान् दहत्येव तूलराशिमिवानलः ॥३॥
तथैव गङ्गां संस्पृश्य ब्रह्मघ्नाः पुण्यदां शुभाम् ।
भवन्ति पूताः ते सर्वे सर्वथैव न संशयः ॥४॥
यथोक्तस्तामसो लोके मलीमसपरोऽपि च ।
गङ्गासंस्पर्शनात् सद्यो हेमत्वं प्रतिपद्यते ॥५॥

**वाराहे च—**

ब्रह्मघ्नो गुरुहाः गोघ्नः स्पृष्टो वा सर्वपातकैः ।
यस्यास्तोयैर्नरः स्पृष्टः सर्वपापैः प्रमुच्यते ॥६॥
गङ्गायाः कणदिग्धानामपां संस्पर्शनादपि ।
पापशीला अपि नराः शुभां गतिमवाप्नुयुः ॥७॥

**वैष्णवे च—**

शुष्कपर्णानि दावेन यथा नश्यन्ति तत्क्षणात् ।
तथा दोषाः प्रणश्यन्ति गङ्गायाः स्पर्शनेन च ॥८॥

अश्वत्थनिम्बचूतादिवृक्षारोपैश्च यत्फलम् ।
वटपुष्पादिभिश्चापि स्पर्शनात्स्यात्ततोऽधिकम् ॥९॥

**ब्रह्मवैवर्ते– कृष्णवाक्यम्–**

मुक्तिदा च मुमूक्षूणां भक्तानां हरिभक्तिदा ।
कोटिजन्मार्जितं पापं विविधं पापिनामहो ॥१०॥
यस्याः संस्पर्शवायोश्च सम्पर्केण विनश्यति ।
किं वा न जाने प्राणेशि स्पर्शदर्शनयोः फलम् ॥११॥
किमुक्तः.. स्नानजन्यं च कथयामि निरूपणम् ।
सर्वतीर्थात्परं पृथ्व्यां पुष्करं परिकीर्तितम् ।
वेदोक्तं च तदेवास्याः कलां नार्हति षोडशीम् ॥१३॥

**स्कान्दे–**

गङ्गायास्तीरसञ्जाताः सरलार्जुनपादपाः ।
गङ्गायास्तोयसंस्पर्शात्तेऽपि यान्ति परां गतिम् ॥१४॥
दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्तनात् ।
पुनाति पुरुषान्नित्यं मातेव जगतो हिता ॥१५॥

## अथ गङ्गावगाहनप्रकरणम्

यद्यकार्यशतं कृत्वा कृतं गङ्गावगाहनम् ।
सर्वं दहति गङ्गाम्भः तूलराशिमिवानलः ॥१॥
अपकृत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथापकृत्य पापानि भाति गङ्गाजलोक्षितः ॥२॥

**ब्रह्माण्डे–**

यैः पुण्यवर्द्धिनी गङ्गा सकृद्भक्त्याऽवगाहिता ।
तेषां कुलानि भक्त्या च शक्त्या तारयते शिवः ॥३॥

**भविष्ये–**

भक्त्या गङ्गावगाहस्य फलं वक्तुं न शक्यते ।
स्वर्गमोक्षौ फलं तस्याप्येतदाह पितामहः ॥४॥

**तत्रैव गङ्गादुर्वाससोः प्रश्नोत्तरम्–**

मज्जन्ति मुनयः सर्वे त्वमेकः किं न मज्जसि ।
मुक्तिश्च दर्शनाद्देवि ! न जाने स्नानजं फलम् ॥५॥

**ब्रह्मपुराणे—**

वर्णेषु ब्राह्मणो यद्वत् तद्वत् तीर्थेषु जाह्नवी।
स्वर्गस्थैर्गगनस्थैश्च तथा पातालवासिभिः ॥६॥
अवगाह्या सदा गङ्गा पूज्या वन्द्या च सर्वदा।

## अथ गङ्गायां प्रायश्चित्तनिषेधप्रकरणम्

चान्द्रायणपराकश्च प्राजापत्यमथापि वा।
प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ॥१॥

**तथा—**

प्रायश्चितानि दीयन्ते यत्र गङ्गा न विद्यते।
यत्र गङ्गा महाराज! प्रायश्चित्तं तु तत्र सा ॥२॥
कृत्वा तु दुस्तरं कर्म मज्जद् गङ्गाम्भसि प्रिये।
तत्क्षणादेव नश्यन्ति पापमुद्दिश्य मज्जनात् ॥३॥
नान्येन दह्यते लोके क्रिया नरकगामिनी।
गङ्गाम्भसि प्रयत्नेन स्नातव्यं तेन मानवैः ॥४॥
ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी।
सर्वतो निष्कृतिं याति गङ्गास्नानान्न संशयः ॥५॥

**तथा—**

तावन्न पातकं कर्तुं शक्ताः पातकिनो नराः।
गङ्गा यत्र भवेत्पुंसां प्रायश्चित्तं शिवोऽवदत् ॥६॥
सर्वापराधिनं राम एक एव समुद्धरेत्।
नामापराधिनं गङ्गे त्वमेवैका सुतारका ॥७॥

## पद्मपुराणे अथ स्नानफलप्रकरणम्

स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति।
अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते ॥१॥

**भविष्ये—**

सक्तस्य पण्डितस्यापि गुणिनो दानशीलिनः।
गङ्गास्नानविहीनस्य ध्रुवं जन्म निरर्थकम् ॥२॥
पितरो योगिनश्चापि गाथां गायन्ति सादरात्।
अपि नः स कुले कश्चिद्गङ्गास्नायी भविष्यति ॥३॥
देवेभ्यश्च पितृभ्यश्च दास्यते स जलांञ्जलिम्।
अस्माकं सकुटुम्बानां मुक्तिः स्यादनपायिनी ॥४॥

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः।
गङ्गास्नानेन दग्धस्य तूलराशिरिवाग्निना ।।५।।
अप्सु नारायणं देवं स्नानकाले सदा स्मरेत्।
साक्षाद्ब्रह्मस्वरूपायां गङ्गायां तु विशेषतः ।।६।।
प्रवेशादेव गङ्गायां स्नानार्थे भक्तितो नृणां।
ब्रह्महत्यादयो दोषा हाहेत्युक्ता प्रयान्त्यलम् ।।७।।
ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी।
सर्वे ते निष्कृतिं यान्ति गङ्गास्नानात्र शंसयः ।।८।।
कपिलाकोटिदानेभ्यः गङ्गास्नानं विशिष्यते।
सकृद्गङ्गावगाहे तु कुलकोटिं समुद्धरेत् ।।९।।
सर्वतीर्थेषु यत्पुण्यं सर्वेष्वायतनेषु च।
तत्फलं लभते शीघ्रं गङ्गास्नानात्र शंसयः ।।१०।।
पापपांशुमहावात्या पापमूलकुठारिका।
पापेन्धनदवज्वाला गङ्गा स्नानेन मुक्तिदा ।।११।।
तथा सर्वासु वेलासु गङ्गास्नानं सुपुण्यदम्।
तिथिनक्षत्रयोगादि नापेक्षास्तीरवासिभिः ।।१२।।
स्नानमात्रेण गङ्गायां पातकौघः प्रणश्यति।
अपूर्वधर्मावाप्तिश्च तदानीमेव जायते ।।१३।।
तथा चान्यानि तीर्थानि स्नानकाले जपेत्स्मरेत्।
गङ्गायां स्नानकाले तु गङ्गामेव जपेत्स्मरेत् ।।१४।।
गङ्गास्नानरतो नित्यं महापाकजैरपि।
सर्वदोषैर्न लिप्येत पद्मपत्रमिवाम्भसा ।।१५।।
गङ्गा तु नित्यमैश्वर्यं यदा सौख्यं ददाति च ।।१६।।

**ब्रह्माण्डे—**

अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति।
स्नानमात्रेण गङ्गायां सद्यः पुण्यमनुत्तमम् ।।१७।।
प्रभासे गोसहस्रेण राहुग्रस्ते दिवाकरे।
यत्पुण्यं लभ्यते मर्त्यैः गङ्गायां च दिने-दिने ।।१८।।
अन्यस्थाने कृतं पापं गङ्गातीरे विनश्यति।
गङ्गातीरे कृतं पापं गङ्गास्नानाद्विनश्यति ।।१९।।
यमोपि दृष्ट्वा भीतस्तं सम्भ्रमात्प्रणिपत्य च।
न शक्नोति तथा स्थातुं तस्याग्रे शुभकर्मणः ।।२०।।

रात्रौ दिवा च सन्ध्यायां मध्याह्णे च प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहे शुद्धृत्यतज्जलम् ॥२१॥
अलक्ष्म्या किल संयुक्तो वृत्तं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यो गङ्गायां सत्यमुच्यते ॥२२॥
स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा ज्ञानमवाप्नुयात् ।
गङ्गास्नानेन भक्त्या तु परमाप्नोति पूरुषम् ॥२३॥
एकेन स्नानमात्रेण विधिना भक्तिमान्नरः ।
अश्वेमेधफलं सद्यो गङ्गायामाप्नुयाद्ध्रुवम् ॥२४॥
अनेकजन्मसम्भूतं पुंसा पापं प्रणश्यति ।
स्नानमात्रेण गङ्गायाः सद्यः स्यात्स्वर्गभाजनम् ॥२५॥
गङ्गास्नानरता ये च गङ्गामाहात्म्यभाषिणः ।
यथा क्षिप्रं प्रमुच्यन्ते तथा तीर्थान्तरे न हि ॥२६॥
महापातकसंयुक्तो युक्तो वा सर्वपातकैः ।
गङ्गास्नानेन विधिना मुच्यते सर्वपातकैः ॥२७॥
क्रन्दन्ति सर्वपापानि सम्भ्रान्ताः सर्वपातकाः ।
अरिष्टानि पलायन्ते गङ्गास्नानोद्यतस्य हि ॥२८॥

**कालिकापुराणे—**

वाञ्छन्ति देवता नित्यं मानुष्यं प्राप्नुयामहे ।
सम्यक्श्रद्धापरा भूत्वा गङ्गास्नानं लभेमहि ॥२९॥

**ब्रह्माग्नेये दानधर्मेषु—**

स्नातानां च शुचिस्तोयैः गाङ्गेयैः पुण्यकर्मणां ।
तुष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥३०॥

**आग्नेये सूर्यवाक्यम्—**

ये तु सूर्यांशुसंतप्ते जले स्नानादिकं क्रियां ।
करिष्यन्ति च यास्यन्ति भित्वा ते मम मण्डलम् ॥३१॥

**ब्राह्मे—**

गङ्गास्नानात्परं स्नानं न भूतं न भविष्यति ।
विशेषतस्तु कलियुगे पापं हन्तीति जाह्नवी ॥३२॥
दुष्कुलीनो कुलीनो वा युक्तश्च सर्वपातकैः ।
गङ्गास्नानेन भक्त्या वा पूज्योऽसौ राजवल्लभः (राजवज्जनः) ॥३३॥
शक्तस्य पण्डितस्यापि गुणिनो दानशीलिनः ।
गङ्गास्नानविहीनस्य तस्य जन्म निरर्थकम् ॥३४॥

निहत्य कलिजान् दोषान् कायवाचिकसम्भवान् ।
गङ्गास्नानेन भक्त्या तु मोदते दिवि देववत् ॥३५॥
यानि कानि च पापानि प्रोक्तानि च महीतले ।
तानि पापानि नश्यन्ति गङ्गाविन्द्वभिषेकत: ॥३६॥

**पैठीनसि :—**

प्रतिकृतिं कुशमयीं कृत्वा वारिणि मज्जयेत् ।
कृत्वा प्रतिकृतिं यस्य कौशीं तत्तीर्थवारिणा ॥३७॥
मज्जयेत्तु यमुदिश्य सोष्टभागफलं लभेत् (मश्नुते) ।
कुशोसि त्वं पवित्रोसि ब्रह्मणा निर्मित: पुरा ॥३८॥
त्वयि स्नाते तु यो स्नात: यस्येदं ग्रन्थिबन्धनं ।
स्नानं चतुर्विधं प्रोक्तं दिव्यं भौमञ्च मान्त्रिकम् ।
तथा प्रतिनिधिस्नानं कुशपुत्तलनिर्मितम् ॥३९॥

**तत्र दिव्यं विष्णुपुराणे मैत्रेयं पराशरश्चाह—**

चतु:प्रकारै भगवानादत्ते सविता मुने ।
सरित्समुद्रभौमाश्च तथाप: प्राणिसम्भवा: ॥४०॥
आकाशगङ्गासलिलं तथादाय गभस्तिमान् ।
अनभ्रगतमेवोर्व्यां सद्य: क्षिपति रश्मिभि: ॥४१॥
तस्य संस्पर्शनिर्द्धूतपापपङ्को द्विजोत्तम ।
न याति नरकं मर्त्यो दिव्यं स्नानं हि तत्स्मृतम् ॥४२॥
दृष्टसूर्यो हि यद्वारि पतत्यभ्रैर्विना दिव: ।
आकाशगङ्गासलिलं दिव्यस्नानं महामुने ॥४३॥
आतपे सति यद्वृष्टि: दिव्यं स्नानं तदुच्यते ।
सत्र आपस्तु वैमात्रं मृदालम्भंन्तु पार्थिवम् ॥४४॥
यत्तु मेघै: समुत्सृष्टं वारि तत्प्राणिनां द्विज ।
पुष्णात्यौषधय: सर्वा जीवनायामृतं हि तत् ॥४५॥
तुर्यं कुशपुत्तलजं ज्ञातव्यं पुण्यदं नृणाम् ।
तेषां श्रेष्ठश्च पर्जन्य: चत्वारश्चैव दिग्गजा: ॥४६॥
गजानां पर्वतानां च मेघानां भोगिभि: सह ।
पर्ज्जन्या: दिग्गजाश्चैव हेमन्ते शीतसम्भवा: ॥४७॥
तुषारवर्षं वर्षन्ति वृद्धा: ह्यन्नविबृद्धये ।
षष्ठ: परिभवो नाम वायुस्तेषां परायण: ॥४८॥
यो सौ विभर्त्ति भगवान् गङ्गामाकाशगोचरीं ।
दिव्यामृतजलां पुण्यां त्रिपथस्योपरि च्युताम् ॥४९॥

तस्या विस्पन्दितं तोयं दिग्गजाः पृथुभिः करैः ।
शीकरं सम्प्रमुच्यन्ति नीहार इति स स्मृतः ॥५०॥

## अथ गङ्गायामविधिस्नानफलप्रकरणम्

अनुसङ्गेन मौल्येन वाणिज्येनापि सेवया ।
कामासक्तोपि वा मर्त्यो गङ्गास्नातो दिवं व्रजेत् ॥१॥
अनिच्छयापि संस्पृष्टो दहनो हि यथा दहेत् ।
अनिच्छयापि संस्नाता गङ्गा पापं तथा दहेत् ॥२॥
अश्रद्धयाभक्तियुक्तः गङ्गां स्नात्वा विधानतः ।
ब्रह्महापि विशुद्ध्येत किं पुनस्त्वन्यपातकी ॥३॥
तिथिनक्षत्रपर्वादि नापेक्षं जाह्नवी जले ।
स्नानमात्रेण गङ्गायां सञ्चिताघं विनश्यति ॥४॥

**कृष्णवाक्यं ब्रह्मवैवर्ते–**

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
जन्मासंख्यार्जितान्येव कामतो निष्कृतानि च ॥५॥
तानि सर्वाणि नश्यन्ति मौशलस्नानतो नृणां ॥६॥

**मनुस्मृतौ–**

तीर्थयात्रादिकं कृत्स्नमकुर्वाणोपि मानवः ।
गङ्गातोयस्य माहात्म्यात् सोप्यत्र फलभाग् भवेत् ॥७॥
न मन्त्रो न विधिश्चैव न मृदो नैव गोमयम् ।
न कालनियमः कश्चिद्गङ्गां प्राप्य सरिद्वराम् ॥८॥
सर्व एव शुभः कालः सर्वे देवा स्थिताः सदा ।
सर्वे जनास्तथा पात्रं स्नानादौ जाह्नवीजले ॥९॥

**ब्रह्माण्डे–**

केवलं स्नानमात्रेण विधिना भक्तिमानपि ।
अश्वमेधफलं सद्यो गङ्गायां प्राप्नुयाद् ध्रुवम् ॥१०॥
अनेकजन्मसम्भूतं पुंसां पापं प्रणश्यति ।
स्नानमात्रेण गङ्गायाः सद्यः स्यात्पुण्यभाजनम् ॥११॥

**आग्नेये–**

कपटेनापि गङ्गायां स्नानदानादिकर्म यत् ।
यो लोभार्थेपि पूजायां कुर्यात् सोऽपि दिवं व्रजेत् ॥१२॥

**अन्ये पठन्ति च–**

गङ्गायां मौशलं स्नानं महापातकनाशनम् ।

**मत्स्य पुराणे—**

क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम् ।
कामिनां च तथान्यत्र तपोयज्ञादि निष्फलम् ॥१३॥
गङ्गायां तु कृतं सर्वं सफलं नात्र संशयः ।

**ब्रह्माण्डे—**

सर्वभावाविशुद्धोपि गङ्गायां कुरुते च यत् ॥१४॥
सम्पूर्णफलमाप्नोति हेलया नात्र संशयः ।

## अथ गङ्गादिदेवपूजनफलप्रकरणम्

**गाङ्गेये—**

पूजितायां तु गङ्गायां पूजिताः सर्वदेवताः ।
तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥१॥
स्मृताऽऽर्च्चिता स्तुता ध्याता भाविता त्वनुमोदिता ।
गङ्गा तारयते पुंसां उभौ वंशौ भवार्णवात् ॥२॥
यः प्रदद्याद्गवां लक्षं दोग्ध्रीणां वेदपारगे ।
अन्यत्र विधिना यस्तु नरो गङ्गावगाहकृत् ॥३॥
एकाहमर्चयेद्भानुं शिवामप्यथ केशवम् ।
सम्भवे पुष्पपत्राद्यैस्तस्य पुण्यं ततोऽधिकम् ॥४॥

वैशाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा ।
क्रोधात्पीता पुनः त्यक्ता कर्णरन्ध्रातु दक्षिणात् ।
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ॥५॥

गङ्गातीर्थे महादेवं बिल्वपत्रेण ये नराः ।
पूजयिष्यन्ति सुप्रीताः तेऽपि स्वर्गस्य भाजनाः ॥६॥
नीलोत्पलं शितं पद्मं गङ्गायाः सर्वदा प्रियम् ।
तत्पुष्पैः पूजयेद्यस्तु गङ्गां भक्त्या नरोत्तमः ॥७॥
तस्य गङ्गा सदा तुष्टा सर्वान्कामान्प्रयच्छति ।
इह श्रियं परां दत्वा मुक्तिमन्ते ददाति च ॥८॥

**भविष्ये—**

चतुर्भुजां त्रिनेत्रां च सर्वाभरणभूषितां ।
रत्नकुम्भसिताम्भोजवरदानाभयङ्कराम् ॥९॥
श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ।
ततो ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥१०॥

चामरैर्वीज्यमानां च श्वेतच्छत्रोपसेविताम् ।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ॥११॥
सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम् ॥१२॥
दिव्यरूपविभूषां च दिव्यगन्धानुलेपनाम् ।
ध्यात्वा जले यथाप्रोक्तं तथार्च्चायां प्रपूजयेत् ॥१३॥

'ॐ गङ्गायै विश्वमुख्यायै शिवामृतायै शान्तिप्रदायिन्यै नारायण्यै नमो नमः, इति गङ्गापूजनमन्त्रः ।

**तथा च–**

गङ्गायां तु नरः स्नात्वा योऽनिशं शिवमर्च्चयेत् ।
एकेन जन्मना मुक्तिं परामाप्नोति स ध्रुवम् ॥१४॥

**तथा–**

अग्निहोत्राश्च वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
गङ्गायां लिङ्गपूजायाः कोट्यंशेनापि नो समाः ॥१५॥

**शिवधर्मे–**

ॐ नमः शिवायेति मन्त्रः सर्वार्थसाधकः ।
सर्वमन्त्राधिपश्चैव प्रणवादिषड्क्षरः ॥१६॥

**तथा–**

गङ्गातीरसमुद्भूतमृदा लिङ्गानि भक्तितः ।
सल्लक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ॥१७॥
मन्त्रैस्तु गन्धपुष्पाद्यैः सम्पूज्याथ सुभक्तितः ।
गङ्गायां प्रक्षिपेन्नित्यं तस्य पुण्यं ततोऽधिकम् ॥१८॥

**तथा–**

विभवे सति यो लोभान्न कुर्याद् विधिविस्तरम् ।
नैतत्फलमवाप्नोति गङ्गायां तु न दोषकृत् ॥१९॥

**तथा–**

गङ्गामज्जनशीलस्य गङ्गातीरनिवासिनः ।
सर्वं कृत्वा यथान्यायं अश्वमेधफलं लभेत् ॥२०॥
गुणवत्पात्रपूजायां न स्याद्वै तादृशं फलम् ।
यथा गङ्गाजलस्थानां पूजयेद् विधिना कृती ॥२१॥

## अथ गङ्गायां जपप्रकरणं, फलप्रकरणञ्च

**स्कान्दे च–**

त्वन्नामजापी सततं सर्वदुःखान्तमेष्यति ॥१॥

**भविष्ये–**

सर्वानन्दप्रदायिन्यां गङ्गायां मानवोत्तमः ।
अष्टाक्षरं जपेन्मन्त्रं तस्य मुक्तिः करे स्थिता ॥२॥
गङ्गायां विधिवत्स्नात्वा जपेदष्टाक्षरं यदि ।
सर्वयज्ञफलं तस्य सर्वदानफलं तथा ॥३॥
सर्वव्रतफलं चैव भवेत् सर्वतपःफलं ।
षण्मासादणिमाद्यास्तु सिद्धयोऽत्र भवन्ति वै ॥४॥
एकान्ते विजनस्थाने गङ्गायाः सुजलोक्षितः ।
अष्टाक्षरं जपेन्मन्त्रं विष्णुसायुज्यमाप्नुयात् ॥५॥
अष्टाक्षरो महामन्त्रः सर्वपापहरः परः ।
भक्तानां जपतां साक्षात्स्वर्गमोक्षफलप्रदम् ॥६॥
सर्वमन्त्राधिकश्चैव मोक्षोपायः षडक्षरः ।
ॐ नमः शिवायेति । अपवित्रः पवित्रो वा सर्वावस्थां गतोपिवा ।
महापातकयुक्तोपि मन्त्रः स्यात्सजपा तथा ॥७॥
अधिकारी भवेत्सद्य इति देवो ब्रवीच्छिवः ॥८॥

**ब्रह्माण्डे–**

स्नानं दानं तपो जाप्यं श्राद्धं देवप्रपूजनं ।
गङ्गायां तु कृतं यद्यत् सर्वं कोटिगुणं भवेत् ॥९॥

**विष्णुधर्मोत्तरे–**

मन्त्रमन्तर्ज्जले जाप्यं ध्यायतां मन्त्रदेवताम् ।
नरो मोचयते पापं महापातकसम्भवम् ॥१०॥

## अथ गङ्गायां दानफलप्रकरणम्

**दानधर्मे भविष्ये च–**

वासो हिरण्यरौप्यानि पत्रपुष्पफलानि च ।
अन्नपानादिकं चैव यः प्रदद्यादतिप्रियम् ॥१॥
तत्तथैव हि गङ्गायै यः प्रयच्छति मानवः ।
तत्तत्सुखमनन्तं हि सम्प्राप्नोतीह जन्मनि ॥२॥

प्रेत्य चाप्नोति निर्वाणं परमं स निरञ्जनम्।
गङ्गायां कुशदानेन ब्रह्मलोकमवाप्नुयात् ॥३॥
वैष्णवं यवदानेन रुद्रलोकमवाप्नुयात्।
प्राप्नोति तिलदानेन हैमेनैश्वर्यमाप्नुयात् ॥४॥
सदाशिवपदं साक्षादाज्यदानेन चाप्नुयात्।
गोभूहिरण्यदानेन भक्त्या गङ्गातटे सकृत् ॥५॥
नरो न जायते भूयः संसारे दुःखसंकटे।
दीर्घायुष्यं हि वा सोऽपि रत्नदानेन सम्पदः ॥६॥
विद्यादानेन वै ज्ञानं कीर्तिं कन्याप्रदानतः।
यज्ञो दानं तपो जाप्यं श्राद्धं च सुरपूजनम्।
गङ्गायां तु कृतं सर्वं सफलं स्यान्न संशयः ॥७॥

**भविष्ये—**

शिवस्य विष्णोः सूर्यस्य दुर्गायाः ब्रह्मणस्तथा।
गङ्गातीरे प्रतिष्ठां तु यः करोति नरोत्तमः ॥८॥
तथैवायतनं तेषां कारयित्वा तु भक्तितः।
अन्यतीर्थेषु करणात्कोटिकोटिगुणं भवेत् ॥९॥
तथा गङ्गातीरे नरो यस्तु जम्ब्वाम्रबकुलाकुलम्।
कदलैर्नारिकेलैश्च कपित्थाश्वत्थचम्पकैः ॥१०॥
विचित्रं कारयेच्चैवमारामं पुष्पशोभितं।
शिवाय विष्णवे वापि दुर्गायै भास्कराय च ॥११॥
यः प्रयच्छति भक्त्या च सर्वार्थं परिकल्प च।
तस्य पुण्यफलं वक्ष्ये संक्षेपान्नतु विस्तरात् ॥१२॥
यावन्ति तेषां वृक्षाणां यत्र पुष्पफलानि च।
वीजानि च विचित्राणि तेषां मूलानि वै तथा ॥१३॥
तावत्कल्पसहस्राणि तेषां लोके स मोदते।
तथा गुञ्जार्द्धमात्रं तु सुवर्णं रौप्यमेव च ॥१४॥
चन्दनागुरुकर्प्पूरं कुंकुमादि च गुग्गुलम्।
विचित्रमाल्यपत्राणि रोचनाशितसर्षपम् ॥१५॥
नीलोत्पलस्य पत्राणि पत्राभावे 'दलानि च।
यथाशक्ति महाभक्त्या गङ्गाम्भसि विनिक्षिपेत् ॥१६॥
मासे मासे पूर्णिमास्यां दले च ग्रहणद्वये।
श्रद्धयानेन मन्त्रेण यावत्संवत्सरं यथा ॥१७॥

ॐ गङ्गायै नारायण्ये शिवायै ते नमो नमः ।
इति मन्त्रेण सततं शतमष्टोत्तरं जपेत् ।
गङ्गाजलान्तरः स्थित्वा तु तन्मना मुक्तसंशयः ॥१८॥

**स्कान्दे–**

चिन्तामणिगणेभ्यश्च गङ्गायास्तोयविन्दवः ।
विशिष्टा ये प्रयच्छन्ति भक्तेभ्योऽभ्यधिकं फलम् ॥१९॥

## अथ गङ्गाया प्रतिग्रहदोषप्रकरणम्

यः तीर्थे प्रतिगृह्णीयात् क्षेत्रेष्वायतनेषु च ।
हिरण्यं रजतं ताम्रं यच्चान्यद्वस्तु किञ्चन ।
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ॥१॥

वरं विक्रयणं मातुः वरं विक्रयणं पितुः ।
न तु गङ्गातटस्थस्तु प्रतिगृह्णीयात्कदाचन ॥२॥
गङ्गाविक्रयणद्राजन्विक्रीतः स्याज्जनार्दनः ।
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥३॥
स्वकीये देवकार्ये च पितृकार्ये तथैव च ।
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ॥४॥

**भविष्ये–**

तीर्थे यः प्रतिगृह्णीयाद्धिरण्यं रजतादिकम् ।
निष्फलं तस्य तत्तीर्थं विक्रीतं त्वकृतं भवेत् ॥५॥

## अथ तर्पणफलप्रकरणम्

**दानधर्माग्नेयेषु–**

यदिच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितृंस्तर्प्ययेद्गङ्गामभिगम्य परांस्तथा ॥१॥

**विष्णुपुराणे–**

दत्वा पितृभ्यो यत्रापः तनयैः श्रद्धयान्वितैः ।
समास्त्रयं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्ल्लभाम् ॥२॥

**भविष्ये–**

चत्वारः सुलभा वेदाः सषडङ्गपदक्रमाः ।
सुलभानि कुरुक्षेत्रे दानान्यपि विधानतः ॥३॥

चान्द्रायणातिकृच्छ्राणि तपांसि विविधानि च।
अग्निष्टोमादयो यज्ञाः सुलभाश्चाप्तदक्षिणाः।
गङ्गातोयैस्तु शुभदैः दुर्ल्लभं पितृतर्पणम्॥४॥

**तथा च—**

मासं तर्पणमात्रेण पिण्डानां पातनेन च।
गङ्गायां पितरः सर्वे विमाने सूर्यवर्च्चसे॥५॥
यान्ति विष्णोः पदं नित्यं संतृप्ताः श्राद्धपिण्डकैः।
यावन्तश्च तिला मर्त्यैः गृहीताः पितृतर्पणे॥६॥
तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः।
स्वर्गसंस्थाश्च ये केचित्पितरः पुण्यशालिनः॥७॥
गङ्गाजलैस्तथा पुंसां तर्पिता विधिना सकृत्।
तेऽपि मोक्षं प्रपद्यन्ते यथा देवोऽब्रवीद्वचः॥८॥

**भविष्ये—**

देवेभ्यश्च पितृभ्यश्च दास्यते यः तिलाञ्जलिम्।
अपि न स कुले भूयात् शिवे विष्णौ च भक्तिमान्।
नानारूपाश्च पितरो गाथां गायन्ति सर्वदा॥९॥

**स्कान्दे—**

पितृवंशे मृता ये च मातृवंशे तथैव च।
गुरुश्वसुरबन्धूनां ये चान्ये बान्धवाः मृताः॥१०॥
अजातदन्ता येकेचिद्ये च गर्भे प्रपीडिताः।
अग्निविद्युच्चौरहताः व्याघ्रदंष्ट्रिभिरेव च॥११॥
असिपत्रगता ये च कुम्भीपाके च ये गताः।
रौरवेप्यन्धतामिस्त्रे कालसूत्रे च ये गताः॥१२॥
जात्यन्तरसहस्त्रेषु भ्राम्यन्ते ये स्वकर्मभिः।
स्त्रीबालविधवादीनां घातकाः विषदायिनः॥१३॥
असत्यहिंसानिरताः सदा पापरताश्च ये।
अश्वविक्रयिणो ये च परद्रव्यहराश्च ये॥१४॥
अनाथाः कृपणा दीनाः मानुष्यं प्राप्तुमक्षमाः।
तर्पिताः जाह्नवीतोयैः पूर्णेन विधिना सकृत्॥१५॥
प्रयान्ति स्वर्गतिं तेऽपि स्वर्गिणो मुक्तिमाययुः।
एतान्मन्त्रान्समुच्चार्य यः कुर्यात्पितृतर्पणम्।
श्राद्धं पिण्डप्रदानं च स विधिज्ञ इहोच्यते॥१६॥

## अथ गङ्गायां श्राद्धफलप्रकरणम्

गयाश्राद्धं कृतं तेन समुत्सृष्टो वृषस्तथा ।
येन त्वद्दिविसंसिक्ते तीरे श्राद्धमकारि च ॥१॥

**तथा च–**

पितृनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम् ।
गुडसर्पिसमायुक्तं गङ्गाम्भंसि विनिःक्षिपेत् ॥२॥
तृप्ता भविन्त पितरः तस्य वर्षशतत्रयम् ।

**देवीपुराणे–**

अकालेप्यथ वा काले तीर्थे प्राप्ते महात्मभिः ॥३॥
प्राप्तैरेव सदा सम्यक् कर्तव्यं श्राद्धतर्पणम् ।
देवाश्च पितरश्चैव गङ्गायां तु सदाश्रिताः ।
आवाहनविसृष्टिश्च तत्र तेषां न विद्यते ॥४॥

**वृहद्विष्णुः–**

गङ्गायमुनयोस्तीरे तथा ह्यमकरकण्टके ।
नर्मदायां गयातीर्थे सर्वदानन्त्यमश्नुते ॥५॥

**पाद्मे–**

अन्यतीर्थे तु यच्छ्राद्धं तत्कोटिगुणितं भवेत् ।
गङ्गायां यत्कृतं श्राद्धं तच्छ्राद्धमपवर्गदम् ॥६॥

## अथ गङ्गायां पिण्डदानफलप्रकरणम्

साक्षाद्गङ्गाभिगमनं कृत्वा पिण्डं ददाति यः ।
तारिताः पितरस्तेन भवाम्भोधेस्तिलोदकैः ॥१॥

**तथा–**

गङ्गायां च गयायां च पिण्डदानं समं मतम् ।
विशेषतः कलियुगे गङ्गापिण्डं प्रशस्यते ॥२॥

**ब्रह्माण्डे–**

गङ्गायां पिण्डदानेन पितरस्तु तिलोदकैः ।
नरकस्थाः दिवं यान्ति स्वर्गस्थाः मोक्षमाप्नुयुः ॥३॥
गङ्गायां विजने चैव माहेन्द्रे जाह्नवीतटे ।
अत्र पिण्डप्रदो याति ब्रह्मलोकमनामयम् ॥४॥
सकृद्गङ्गाभिगमनं कृत्वा पिण्डान्ददाति यः ।
तारिता पितरस्तेन भवाम्भोधेर्न संशयः ॥५॥

देवाः स पितरो ये च गङ्गायां सर्वदा स्थिताः।
आवाहनं विसर्जनं तेषां तत्र ततो न हि ॥६॥

## अथ गङ्गाव्रतकरणफलप्रकरणम्

शालितण्डुलप्रस्थेन द्विप्रस्थपयसा तथा।
पायसं पाचयित्वा तु मधुखण्डं घृतं तथा।
प्रत्येकं पलमात्रं तु तत्र प्रक्षिप्य भक्तितः।
तत्पायसमयांश्च मण्डकान्मोदकानि च ॥१॥
तथा गुञ्जार्द्धमात्रन्तु सुवर्णं रौप्यमेव च।
चन्दनाऽगुरुकर्पूरकुङ्कुमानि च गुग्गुलम् ॥२॥
विल्वपत्राणि दूर्वाश्च रोचनं शिववर्ष्मणा।
नीलोत्पलस्य पुष्पाणि पुष्पालाभे दलानि च ॥३॥
यथाशक्त्या महामत्स्यान् गङ्गाम्भसि विनिक्षिपेत्।
मासे मासे पौर्णिमायां दर्शे च पक्षयोर्द्वयोः।
श्रद्धयानेन मन्त्रेण यावत्संवत्सरं तथा।
मन्त्रेण सततं नित्यमष्टोत्तरशतं जपेत् ॥४॥
गङ्गाजलान्तः स्थित्वा तु तन्मनाः त्यक्तसत्रपः।
हविष्यान्नमिंताहारो गमितेषु दिनेषु च ॥५॥
सवत्सरान्तं तस्यैषां गङ्गा दिव्यवपुर्धरा।
दिव्यमाल्याम्बरधरा दिव्यगन्धानुलेपना ॥६॥
चारुरत्नधरा देवी दिव्यरूपविभूषणा।
प्रत्यक्षरूपा पुरतस्तिष्ठत्येव वरप्रदा ॥७॥
एवं प्रत्यक्षतः साक्षाद् गङ्गां दिव्यवपुर्धरां।
दृष्ट्वा तु चक्षुषा मर्त्यो वरदानसमुद्यताम् ॥८॥
यान्यान्कामयते कामांस्तांस्तांन्सर्वानवाप्नुयात्।
शृणुध्वं भक्तितो यूयं वक्ष्यामि नरपुङ्गवाः।
सर्वव्रतानां राजानं धर्मव्रतमनुत्तमम् ॥९॥
वृषध्वजेन कथितं शिवेनापि च यत्पुरा।
गङ्गातीरे माघमासे यः कुर्यान्नक्तभोजनम् ॥१०॥
शिवस्य तन्मध्ये तु कृशरं घृतसंयुतम्।
नैवेद्यं विनिवेद्यैव कृशरान्नं शिवस्य तु ॥११॥

काष्ठमौनेन भुञ्जीत जिह्वालौल्यं विवर्जयेत् ।
पलाशपत्रे भुञ्जानः शिवं स्मृत्वा विशेषतः ।
धर्मराजस्य देव्याश्च घृतपिण्डांस्तु कल्पयेत् ॥१२॥

सोपवासश्चतुर्दश्यां भवेदुभयपक्षयोः ।
पूर्णमास्यां तु गन्धैश्च गङ्गायाः सलिलैस्तथा ॥१३॥
स्नापयित्वा विशेषेण मधुना च सुशक्तितः ।
तथैव हेमपट्टं च लिङ्गमूर्ध्नि विसर्जयेत् ॥१४॥
ततो दद्यात्स्वशक्त्यैव शिवाय कृष्णकम्बलम् ।
एकाङ्गांश्च कृष्णतिलान् शिवलिङ्गे विनिक्षिपेत् ।
नीलोत्पलैश्च सर्वैश्च पूजयेत्पङ्कजैरपि ।
अलङ्कारैर्धेनुना वासा मात्रेण चोत्पलम् ॥१५॥
पायसं चात्र विधिना घृतयुक्तं च गुग्गुलम् ।
घृतप्रदीपं च तथा चन्दनाद्यैर्विलेपनम् ॥१६॥
दद्यात्स्वशक्तितो भक्त्या तथा पत्रफलादिकम् ।
कृष्णं गोमिथुनं चैव सरौप्यं च निवेदयेत् ॥१७॥
भोजयेद्ब्राह्मणानष्टौ मासान्तेषु सदक्षिणम् ।
वर्जयेन्मधुमासं च तन्मासे ब्रह्मचर्यवान् ॥१८॥
एवं कृत्वा यथोद्दिष्टमेकवारमिदं व्रतम् ।
यमनियमसम्पन्नः श्रद्धाभक्तिसमन्वितः ॥१९॥
इह भोगानवाप्नोति प्रेत्य चात्युत्तमाङ्गतिम् ।
इन्द्रनीलप्रतीकाशैः विमानैः शिखिसंयुतैः ॥२०॥
दिव्यरत्नमयैश्चैव दिव्यभोगसमन्वितैः ।
गत्वा शिवपुरे रम्ये स सर्वकुलसंयुतः ॥२१॥
सुहृद्भिर्बहुभिश्चैव तस्य फलमभीप्सितम् ।
भुक्त्वा भोगानशेषांश्च यावदाभूतसंप्लवम् ॥२२॥
ततो भवति धर्मात्मा जम्बूद्वीपपतिर्यथा ।
तत्र भुङ्क्ते समस्तांश्च भोगान् निहतकण्टकान् ।
सुरूपः सुभगश्चैव अतिरस्कृतशासनः ।
सर्वरोगविनिर्मुक्तः सोऽपीह फलभाग् भवेत् ॥२३॥

इदं धर्मव्रतं नाम न देयं यस्य कस्यचित् ।
गङ्गाभक्तिव्रतानीह श्लेष्मासृक्मूत्रसञ्चयम् ।
उच्छिष्टं न क्षिपेच्चापि स्वहस्तैर्न च ताडयेत् ॥२४॥

नारायणं भवं चापि न निन्देच्च प्रपूजयेत्।
गङ्गाभक्तेषु वात्सल्यं गङ्गासेवानुमोदनम् ॥२५॥
गङ्गायाः दर्शनं चैव स्नानपानादिकं तथा।
गङ्गाकथायां प्रीतिं च कुर्याद्गङ्गां सदा स्मरेत्।
एवमादि व्रतान्याहुः गङ्गाभक्तस्य सूरयः ॥२६॥

## अथ गङ्गाया कृतकृत्यफलप्रकरणम्

गंङ्गा संसृत्य यस्तिष्ठेत्तस्य कृत्यं न विद्यते।
कृतकृत्यः स वै युक्तो जीवन्मुक्तो भवेन्नरः ॥१॥
अन्योपायं च यस्त्यक्त्वा मोक्षकामसमाहितः।
गङ्गातीरे सुसन्तिष्ठेत्कृतकृत्यत्वमाप्नुयात् ॥२॥
न तपो न समाधिश्च प्रत्याहारादि किञ्चन।
वास एव हि गङ्गायां कृतकृत्यंस्य कारणम् ॥३॥
सकृद्गङ्गां नरः स्नात्वा देवं पूज्य महेश्वरम्।
गङ्गाम्भसा पितॄँस्तर्प्य कृतकृत्यो भवेद्ध्रुवम् ॥४॥
कामासक्तोपि यो मर्त्यो दुराचारोपि वा सकृत्।
गङ्गाम्भसा भवेत्पूतो कृतकृत्यो न संशयः ॥५॥

## गङ्गाश्रितानामभयफलत्वकारणम्

**दानधर्मे–**

न भयं यमदूतेभ्यो न भयं रौरवादिकम्।
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः।
न रोगादेश्च यो गङ्गामादेहान्तं तु सेवते।
अप्रतिष्ठाश्च ये केचिद् त्वधर्मचरणाश्चये ॥१॥
तेषां प्रतिष्ठा गङ्गा हि शरणं धर्म वर्म च।
गङ्गाम्भःकणदिधांगा गङ्गासंस्पर्शनादपि ॥२॥
पापशीला अपि नरा शुभां गतिमवाप्नुयुः।
ते धन्यास्ते जितात्मानो नरा वात्महितैषिणः ॥३॥
भयेभ्यो न भयं तेषां ये वै गङ्गां समाश्रिताः।

**मात्स्ये च–**

ते धन्यास्ते जितात्मानस्ते वै सर्वहितैषिणः।
ये सेवन्ते नरा नार्यः गङ्गामभयदायिनीम् ॥४॥

## अथ गङ्गाश्रयाश्रमकरणफलप्रकरणम्

**दानधर्मे–**

स्वर्गावतीं महापुण्यां मधुमतीं त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं गङ्गां च आश्रितास्ते दिवं गताः ।
यो वत्स्यसि द्रक्ष्यति वापि मर्त्यः ।
तस्मै शुभानि प्रदिशन्ति देवाः ॥१॥

**अर्द्धमन्यपुराणे–**

उत्तारिताः दर्शनस्पर्शनेन ।
कृत्स्नां गतिं तस्य सुराः दिशन्ति ॥२॥
लम्वेदर्वाक्शिरा यस्तु युगानामयुतं पुमान् ।
यस्तिष्ठति यथेष्टं तु गङ्गायां स विशिष्यते ॥३॥

**तथा च–**

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न चासमौ ॥४॥

**नारदीये–**

किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
वास एव हि गङ्गायां ब्रह्मयज्ञस्य कारणम् ॥५॥
स एव देवैर्मर्त्यैश्च पूजनीयो महर्षिभिः ।
यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः ॥६॥
लम्बेदर्वाकशिरा यस्तु युगकोटिसमाहितः ।
यः वसेद्याममात्रं तु गङ्गायां स विशिष्यते ॥७॥
पितृमातृसुतैः सर्वैः स त्यक्तः पतितोपि वा ।
महारौरवयोग्यस्तामाश्रितश्चेद्दिवं व्रजेत् ॥८॥
गङ्गासेवापरस्येह दिवा सार्द्धेन यत्फलम् ।
न तच्छक्यं प्रयत्नेन प्राप्तुं क्रतुशतैरपि ॥९॥
अहो किं बहुनोक्तेन गङ्गा सेव्या नरैर्मुदा ।
नान्यत् संसारदुःखस्य नाशकं मोक्षदायकम् ॥१०॥
महापातकिनो ये च मर्त्याः सेवन्ति जाह्नवीम् ।
पातकेभ्योऽपि पञ्चभ्यो मुच्यन्ते तस्य का कथा ॥११॥
त्रिरात्रं सप्तरात्रं वा स्थितिमात्रेण भक्तितः ।
गङ्गातीरे नरो यस्तु नरकं नाशयत्यपि ॥१२॥
कलौ तत्परमं ब्रह्मप्राप्तये सत्वरं नृणां ।
गङ्गाजलस्य सेवा तु महोपायो महर्षयः ॥१३॥

परभूम्यपहर्त्तारः परद्रव्यापहारकाः ।
परस्त्रीषु रताश्चैव देवब्रह्मस्वहारिणः ॥१४॥
महापातकिनो ये च सर्वपापेसु शालिनः ।
अष्टाविशंतिकोटिषु नरकाणां क्रमेण तु ॥१५॥
वासनाष्वतितीव्रासु यन्त्रयोगसृताग्निषु ।
ये कल्पान्ते समुत्तीर्णा वृक्षकीटादियोनिषु ॥१६॥
यावत्कल्पं तु संसारे भ्रमितुं योग्यतां गताः ।
तेपि वार्द्धिकमासाद्य विविक्ताः प्राप्य जाह्नवीम् ॥१७॥
पश्चात्संचितवित्तास्तु प्रपद्यन्ते शुभां गतिम् ।
स्नात्वैव तावद्गङ्गायां ब्रह्महत्योत्थपापकृत् ॥१८॥
विमुक्त एवमिन्द्रोपि गङ्गाङ्को नाम नाश्रयेत् ।
अन्यत्रापि च संङ्कल्पात्तपः कृत्वा समास्त्रयम् ॥१९॥
यत्फलं लभते भक्त्या गङ्गायां घटिकार्द्धतः ।
यो देहपतनाद्यावद्गङ्गातीरं न मुञ्चति ॥२०॥
स हि वेदान्तविच्छ्रेष्टो ब्रह्मचर्यव्रती सदा ।
गङ्गासेवां हि मोक्षस्य हेतुं यो वेत्ति तत्त्वतः ।
स एव परयोगी च छिन्नापायो नरोत्तमः ॥२१॥
गङ्गां सेवयते विष्णुर्गङ्गां सेवयते हरः ।
गङ्गां सेवयते ब्रह्मा को वा गङ्गां न सेवते ॥२२॥
स्वशक्तिमनतिक्रम्य तपोयोगक्षमादिभिः ।
शमितानिन्द्रियान्यत्र समाहृत्य स्वशक्तिभिः ।
गङ्गां सेवेच्च नियतः सर्वसिद्धिं च गच्छति ।
तत्र ततः सर्वेवर्णाश्रमयुता नराः ॥२३॥
महापातक्यपि पुनः सद्यो मुच्चेत किल्विषात् ।
पूर्वे वयसि सर्वाणि कृत्वा पापानि सर्वशः ॥२४॥
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ।

## अथ गङ्गाश्रितानां परमगतिफलप्रकरणम् ।

**महाभारते—**

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां गङ्गैव परमा गतिः ॥१॥
परदारपरद्रव्यवाञ्छाद्रोहरतात्मनाम् ।
सुखदा मोक्षदा गङ्गा गङ्गैव परमागतिः ॥२॥

इन्द्रियाख्यमहाचौरैर्हृतचित्तमहाधनः ।
विषयाख्यमहाचौरैर्दृश्यमानोपि नित्यशः ॥३॥
यो नरः पुत्रभृत्याद्यैत्यक्तश्चैव कुमार्गगः ।
इतस्ततो धावमानः सर्वक्लेशसमावृतः ॥४॥
तस्य नान्यदिह त्राणं तं गङ्गैवात्र रक्षति ।
तपसा ब्रह्मचर्येण यज्ञैः स्नानेन वा पुनः ॥५॥
गतिं न लभते जन्तुर्गङ्गां प्राप्य यदाप्नुयात् ।
सद्यः पातकसंहन्त्री सद्यो दुःखविनाशिनी ।
गतिमन्वेषमाणानां गङ्गैव परमा गतिः ॥६॥
गङ्गातीरसमुत्पन्नाः सरलार्जुनपादपाः ।
गङ्गायाः तोयसंस्पर्शात्तेपि यान्ति परां गतिम् ॥७॥
तत्वज्ञानं लब्धवन्तो गङ्गाजलनिषेवणात् ।

## अथ गङ्गायां नखलोमभस्मादिपातनफलप्रकरणम्

**ब्रह्माण्डे—**

केशभस्मनखादीनि येषां पुंसां तु वायुना ।
निक्षिप्यन्ते च गङ्गायां तेषां च स्याद्दिवि स्थितिः ॥१॥

**रामायणे—**

भस्मन्यथाप्लुते तेन राघवेण महात्मना ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥२॥
तारितानि नरश्रेष्ठ दिवं याताश्च देववत् ।

**विष्णुपुराणे—** षष्ठिपुत्रसहस्राणि सगरस्य महात्मनः ।
मुक्तप्राणस्यास्थिभस्मस्नायुकेशादिमुत्सृष्टं ।
शरीरिणो यच्च पतितं तत्स्वयं स्वर्गं नयति ॥३॥

**महाभारते—**

भस्मीभूतस्थिता येन स्वर्याताः सगरात्मजाः ।
किं पुनः श्रद्धया देवीं ये सेवन्ते दृढव्रताः ॥४॥
यावन्ति नखलोमानि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणां पुण्यकारिणाम् ॥५॥

**वृहनारदीये—**

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
केशश्चास्थि नखं दन्तः भस्म वापि महामते ।
गङ्गायाः स्पर्शमात्रेण तान्नयत्यच्युतं पदम् ॥६॥

यदा संप्लावितं भस्म सागराणां तु गङ्गया।
तदैव नरके मग्नाः सागरास्ते गतैनसः ॥७॥

## अथ गङ्गायामस्थिपतनफलप्रकरणम्

**विष्णुपुराणे—**

शम्भोर्जटाकलापाच्च विनिष्क्रान्तास्थिपञ्जरान्।
प्लावयित्वा दिवं निन्ये या पापात्सगरात्मजान् ॥१॥

**कौर्म्मे—**

यावदस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥२॥

**ब्रह्माण्डे—**

गङ्गातोयेषु यस्यास्थि प्लाव्यते शुभकर्म्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ॥३॥

**ब्रह्माण्डे—**

गङ्गातोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरैः।
वर्षाणां च सहस्राणि तस्य स्वर्गे भवेत् स्थितिः ॥४॥
यस्मिन्काले नृणामस्थि गङ्गायां क्षिप्यते नरैः ॥५॥

तत्कालमादितः कृत्वा तस्य स्वर्गे भवेत् स्थितिः।
तावद्युगसहस्राणि नात्र कार्या विचारणा।
स्नात्वा तु सिक्तात्वथ पञ्चगव्यैर्हिरण्यमध्वाज्ययुतैश्च तण्डुलैः ॥६॥
प्रायोज्य मृत्पिण्डपुटे निधाय पश्यन् दिशः प्रेतगणोपगूढाः ॥७॥
नमोऽस्तु धर्माय वदन्प्रविश्य जले समे प्रीतमना क्षिपेच्च।
एवं कृतं प्रेतपुरे स्थितस्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ॥८॥

**यमः—**

दशाहाभ्यन्तरे यस्य गङ्गातोयेस्थि मज्जति।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥९॥
यावदस्थि मनुष्यस्य गङ्गायाः संस्पृशेज्जलम्।
तावत्स पुरुषो मज्जन्स्वर्गलोके महीयते ॥१०॥
अन्यस्यापि यदात्वस्थि गङ्गातोये पतिष्यति।
तस्यापि स्वर्ल्लोकगतिर्भविष्यति न संशयः ॥११॥

**स्कान्दे शिववाक्यं विष्णुं प्रति—**

अत्रार्थं कथयिष्यामि पुरावृत्तमधोक्षज।
श्रणुष्वैकमना विष्णो वाहीकस्य द्विजन्मनः ॥१२॥

पुरा कलिङ्गविषये द्विजो लवणविक्रयी ।
सन्ध्यास्नानविहीनश्च वेदाक्षरविवर्जितः ॥१३॥
वाहीको नामतो यज्ञसूत्रमात्रपरिग्रहः ।
परिग्रहश्च तस्यासीत्कोविन्दी विधवागृहे ॥१॥
दुर्भिक्षपीडिते राष्ट्रे वृषलीपतिरेव सः ।
प्राणाधारमपश्यश्च देशाद्देशान्तरं ययौ ॥२॥
मध्येपि दण्डकारण्ये क्षुधार्त्तः सङ्गवर्जितः ।
व्याघ्रेण घातितस्तत्र नरमांसप्रियेण सः ॥३॥
तस्य वामपदं गृद्घ्रो गृहीत्वोदयतत्वतः ।
मांसासिनान्यगृध्रेण तत्तु युद्धमभूदिति ॥४॥
गृघ्नयोरामिषं गृघ्नो परस्परजयैषिणोः ।
आवापतत्पादगुल्फं कंकचञ्चुपुटात्तदा ॥५॥
तस्य वाहीकविप्रस्य व्याघ्रव्यापादितस्य ह ।
मध्येगङ्गां दैवयोगाद्गगने द्वन्द्वकारिणोः ॥६॥
यदैव हतवान्द्वीपी तं वाहीकमरण्यगम् ।
तस्मिन्नेव क्षणे बद्धः सपाशैः क्रूरकिंकरैः ॥७॥
कशाभिर्घातितोत्यन्तमाराभिः परतोदितः ।
वमन् रुधिरमास्येन नीतस्तैः स यमाग्रतः ॥८॥
आपृच्छ्य धर्मराजेन चित्रगुप्तो महामतिः ।
धर्माधर्मं विचार्यास्य कथयासु द्विजन्मनः ॥९॥
वैवस्वतेन पृष्टोऽथ चित्रगुप्तो विचित्रधीः ।
सर्वदा सर्वजन्तूनां वेदिता सर्वकर्मणाम् ॥१०॥
जगाद यमुनाबन्धुं वाहीकस्य द्विजन्मनः ।
कर्म जन्मदिनारभ्य दुर्वृतस्याशुभे रतेः ॥११॥

**चित्रगुप्त उवाच—**

अदत्तदानः पिशुनः शिश्नोदरपरायणः ।
किं बहूक्तेन रविज ! साक्षात्पातकमूर्तिमान् ॥१२॥
रौरवेष्वन्धतामिस्रे कुम्भीपाके च रौरवे ।
कालसूत्रे कृमिभुजे पूयशोणितकर्दमे ॥१३॥
असिपत्रवने घोरे यन्त्रपीडेसुदंष्ट्रके ।
अधोमुखे पूतिगन्धे विष्ठापूतेश्च भोजने ॥१४॥

सूचीरन्ध्रेथ सन्देशे लालयेक्षुरधारके ।
प्रत्येकं नरके ह्येव पात्यतां कल्पसंख्यया ॥१५॥
धर्मराजः समाकर्ण्य चित्रगुप्तमुखादिति ।
निर्भत्स्य तं दुराचारं किङ्करानादिदेश ह ॥१६॥
भूसंज्ञयाथ तैर्नीतः स बध्वा निरयालयम् ।
आक्रन्दरावो यत्रोच्चैः पापिनां रोमहर्षणः ॥१७॥

**ईश्वर उवाच–**

यातनास्वतितीव्रासु वाहीके संस्थिते तदा ।
तत्कालपुण्यफलदे गाङ्गेयेऽम्भसि निर्मले ॥१८॥
पतन्ति तद्धि गृध्रास्याद्वाहीकस्य द्विजन्मनः ।
हरेर्विमानं तत्कालमा सुरसत्तमाः ॥१९॥
घण्टावलम्बितं दिव्यं दिव्यस्त्रीशतसङ्कुलं ।
आरुह्य देवयानं स दिव्यवेशधरो द्विजः ॥२०॥
वीज्यमानोप्सरोवृन्दैर्दिव्यगन्धानुलेपनः ।
जगाम स्वर्गभुवनं गङ्गास्थिपतनाद्धरेः ॥२१॥

## अथ गङ्गातीरे देहत्यागफलप्रकरणम्

**आग्नेये– श्रीकृष्णवाक्यम्–**

यदि गङ्गाजलौघेन प्लावयेच्च कलेवरम् ।
तदेतन्मेध्यतां याति मृत्युकाले विशेषतः ॥१॥
ये मुच्यन्ति नराः प्राणांस्तिष्ठन्ति तव सन्निधौ ।
ते मे लोकं प्रयास्यन्ति पूज्यमानाः दिवौकसाम् ॥२॥
शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे ।
धन्याः देहं विमुञ्चन्ति हृदयस्थे जनार्दने ॥३॥
ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोपि वा ।
गङ्गायां तु मृतो मर्त्यो स्वर्गलोकं च विन्दति ॥४॥
ब्रह्मविष्णव्वादिदेवानां लोकानाप्नोति मानवः ।
स्नानेन भक्त्या गङ्गायां मरणात् मोक्षमाप्नुयात् ॥५॥
अपि भोजनपर्यन्ते गङ्गां स्मृत्वा तनुं त्यजेत् ।
वैवस्वतोपि तस्यार्धं दत्वा स्वर्गं प्रयच्छति ॥६॥
या गतिर्योगयुक्तस्य या गतिर्याजिनामपि ।
ज्ञानविज्ञाननिष्ठानां सा गङ्गायां मृतस्य च ॥७॥

अर्द्धोदके तु गङ्गायां म्रियतेऽनशनेन यः।
स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च ॥८॥

**भविष्ये—**

कृमिकीटपतङ्गानां ये मृता जाह्नवीतटे।
कुलाच्च पतिता वृक्षास्तेपि यान्ति परां गतिम् ॥९॥
गङ्गायां ज्ञानतः स्थित्वा मुक्तिमाप्नोति पूरुषः।
अज्ञानी ब्रह्मणो लोकं याति नास्त्यत्र संशयः ॥१०॥
गङ्गायां मरणमात्रेण मुक्तिज्ञानमपूर्वकम्।

**वृहस्पतिः—**

अनशनं च गृहीत्वातु गङ्गातीरे नरो मृतः।
स एव परमं स्थानं प्राप्नोति पितृभिः सह ॥११॥
गङ्गाया मरणं प्रायः संसारं त्यक्तुमिच्छति।
शतानि बहुजन्मानि यत्र तत्र मृतस्य च ॥१२॥
महांश्चापि गतः कालो यत्र तत्रापि गच्छतः।
दूरे समीपे च सदृशं योजनं द्वयम्।
गङ्गायां मरणं ज्ञेयं नात्र कार्या विचारणा ॥१३॥
प्राणेषूत्सृज्यमाणेषु गङ्गां यो वै स्मरेन्नरः।
दुष्टो वा पापशीलो वा स याति परमां गतिम् ॥१४॥
गङ्गायां मरणान्मुक्तिर्नात्र कार्या विचारणा।
परब्रह्मस्वरूपिण्यामित्याह जगताम्पतिः ॥१५॥
गङ्गायां त्यजतः प्राणान्कथयामि वरानने।
कर्णे तत्परमं मन्त्रं ददामि परमं पदम् ॥१६॥

## अथ मोक्षप्रकरणम्

**तत्र स्कान्दमात्स्ययोः—**

ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम्।
गङ्गा च परमो हेतुः कलिकाले विशेषतः ॥१॥

**भविष्ये—**

गङ्गाजलस्वरूपेण तत्वज्ञानं व्यवस्थितम्।
तस्यात्तज्ज्ञानसेवा च कर्तव्या मोक्षकांक्षया ॥२॥

**ब्रह्माण्डे—**

प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता।

**स्कान्दे–**

गङ्गातीरे वसेन्नित्यं गङ्गातोयं सदा पिबेत्।
एकेन जन्मना मुक्तिं लभते नात्र संशयः ॥३॥

## अथाभेदोपासनप्रकरणम्

**स्कान्दे– शिववाक्यम्–**

यथाहन्त्वं तथा विष्णुर्यथा त्वं च यथा ह्युमा।
उमा यथा तथा गङ्गा चतू रूपं न विद्यते ॥१॥
विष्णुरुद्रान्तरं चैव श्रीगौर्योरन्तरं तथा।
गङ्गागौर्यन्तरं चैव यो ब्रूते मूढधी स्तु सः ॥२॥
यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने।
विधिर्यो विहितः सम्यक् सोपि गङ्गाप्रपूजने ॥३॥
गङ्गा तु वैष्णवीमूर्त्तिः त्रिषु लोकेषु विश्रुता।
हरेर्यश्चावयोर्भेदं न करोति महामतिः ॥४॥
शिवभक्तः स विज्ञेयः महापाशुपतश्च सः।
मां च त्वाञ्चैव यो द्वेष्टि गङ्गां च पुरुषाधमः ॥५॥
स्वकीयैः पुरुषैः सार्द्धं स घोरनरकं व्रजेत्।
परमात्मा शिवो ह्यन्यस्तथाह्यन्या च जाह्नवी ॥६॥
इति भेदधियं कुर्यात् स घोरं नरकं व्रजेत्।
यतो विष्णुस्ततो गङ्गा यतो गङ्गा ततो वृषः ॥७॥
यतो धर्मस्ततो ज्ञानं यतो ज्ञानं ततः सुखम्।
यत्र गङ्गा हरिस्तत्र यत्र विष्णुस्ततो जयः।
इदं ब्रह्मा इदं विष्णुः इदं साक्षात्पुरो हरः ॥८॥
एतद्ब्रह्म निराकारं केवलं जाह्नवीजलम्।
यतो गौरी स्थिता पुण्या तत्र सन्तः समागताः ॥९॥
यत्र नारायणो देवः कृष्णः साक्षात्स्वयं हरिः।
परमात्मा हरिस्त्वन्यस्तथा ह्यन्या च जाह्नवी ॥१०॥
इति यः सेवते गङ्गां न स मोक्षस्य भाजनम्।
गङ्गामाहात्म्यमतुलं ज्ञातुं वक्तुं न च क्षमः ॥११॥
इन्द्रादयो न शक्ता हि दिव्यैर्वर्षशतैरपि।
माहात्म्यं ये तु गङ्गायाः शृण्वन्ति च पठन्ति च।
तेप्यशेषैर्महापापैर्मुच्यन्ते नात्र संशयः ॥१२॥

एतत्ते सर्वमाख्यातं यद्यत्पृष्टं त्वयानघ ।
सेतिहासपुराणेभ्य: समानीय च सर्वश: ।।१३।।
ब्रह्मस्वरूपं गङ्गाया: प्रथमं परिकीर्तितम् ।
त्रिधा समुद्भवो ह्यस्या ब्रह्मद्रव: ततोदित: ।।१४।।

तथैव गौर्यङ्गुलित: उद्भवोऽस्या: प्रकीर्तित: ।
तथैव वामनाङ्गुष्ठनिर्भिन्नाण्डकटाहके ।
कारुण्याच्च महाविष्णोर्लोकादत्र समागता ।।१५।।

ब्राह्मकामण्डलच्व्याद्वा व्यामञ्च कथितं द्विधा ।
भगीरथस्य चाख्यानं तथा गङ्गावतारणम् ।।१६।।
जह्नोस्तथा प्रभावश्च ब्रह्मक्षेत्रस्य पावनम् ।
विरिञ्चिप्रमुखैस्तत्र संस्तुता या त्रिधाऽऽभवत् ।
एका सा ब्राह्मसदनं गता च वेधसा तथा ।।१७।।

द्वितीया सागरं गत्वा पूरयामास निर्जलम् ।
कथितं तन्महावाहो जाह्नवीचरितं तथा ।।१८।।
सागरांणां समुद्धार: सप्रयोगो निरूपित: ।
पुराणे ब्रह्मवैवर्ते शैवं यदधिकं तथा ।।१९।।
यथेयं शन्तनोराज्ञा गङ्गा भार्यात्वमागता ।
तथा सेनावतरणं वसूनां शापमोक्षणम् ।।२०।।

गोतमेन यथानीता ब्रह्मयज्ञगिरौ पुरा ।
तथैव काश्यपी गङ्गा यथा ह्यत्रीश्वरान्तिगा ।
तथैव कृष्णागङ्गाया: प्रभावश्चानुवर्णित: ।।२१।।
लोहार्गलकोटिकाया माहात्म्यं परिकीर्त्तितम् ।
वाशिष्ठ्याश्च तथाख्यानं गोमत्या अपि कीर्तितम् ।।२२।।

पुष्करेपि महातीर्थे यथा गङ्गा समागता ।
भारत्या सह सम्बादो यथावत् परिकीर्तित: ।।२३।।
आवाहनं स्नानकाले तथा मन्त्रविधिश्च य: ।
क्षेत्रे प्रभासके गङ्गा चतुर्द्धा सा तवोदिता ।।२४।।
ततो ब्रह्माण्डव्याप्तिश्च गङ्गाया: कथिता तव ।
जम्बूद्वीपे यथा व्याप्तिर्यत्र तत्र कलादिभि: ।।२५।।
ततस्ते पटलं प्रोक्तं तथा पूजनपद्धति: ।
स्तोत्रं च कवचं दिव्यं गङ्गानाम्नां सहस्रकम् ।।२६।।

चत्वारिंशत्प्रकरणैस्त्रिभिश्च महिमा स्मृतः ।
सारं सारं समुद्धृत्य पुष्पेभ्य इव षट्पदः ॥२७॥

श्रीब्रह्मद्रवताद्यकर्ममहिमा पौराणपाथोधितो ।
गाङ्गेयः कथितः प्रयत्ननिचयैरुद्धृत्य सत्प्रातये ॥२८॥

नान्तं यस्य गता विधीरमुखरा श्चान्ये कुतो मानवाः ।
तत्पादाम्बुजनःसमाश्रयतया संक्षेपतो वर्णितः ॥२९॥

भगीरथेनेह यथा पुरेयं शिवं समाराध्य दिवोवतारिता ।
गङ्गा यदम्भः समुपास्य पापाः प्रयान्ति विष्णोः पदमाशु जन्तवः ॥३०॥

तथैवशास्त्रामृतवारिधेरिदं विप्रान्समाराध्य समुद्धृतं त्वया ।
गङ्गागुणाख्यानमनुत्तमं यतो भागीरथीभक्तिविकाशनं भवेत् ।
यः कीर्त्तनं श्रवणमस्य करोति भक्त्या
गन्ता हरेर्भवनमाप्तसमस्तकामः ॥३१॥

इत्थं सुनिर्मलतरा भवदीयकीर्तिः
भूमौ भविष्यति कलौ विदुषां सभासु ।
यः कामिनां काममभीष्टदायको
भवौषधं मुक्तिमभीक्षतां कलौ ।
प्रगीयतेऽद्यापि विरञ्चिमुख्यैर्गङ्गागुणौघं शृणुयात्र कः पुमान् ॥३२॥

ध्रुवं विजानीहि यथाजसाक्षिणौ संतारयत्यापि जनं सुरापगा ।
तथा न तीर्थक्रतुदानपाटवं अपि क्षमा दुष्कृतसम्भवे कलौ ॥३३॥

त्वं दीर्घजीवी भव शाश्वती समाः सम्पादितं वर्गचतुष्टयं त्वया ।
ब्रह्मैव गङ्गेति सदैव भावयन्संवित्स्वरूपं भज जाह्नवीं सदा ।
य एनं शृणुयान्मर्त्यो गङ्गाभक्तिप्रकाशकम् ॥३४॥

स पुमानिह सत्कीर्त्तिं लभते वाञ्छितं फलम् ।
चतुर्वर्गप्रदं ह्येतत् गङ्गाभक्तिविवर्द्धनम् ॥३५॥

यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ।
यः पठेद्भक्तिसंयुक्तो गङ्गा तस्य प्रसीदति ॥३६॥

प्रसन्नायां तु गङ्गायां प्रसन्नः स्यान्महेश्वरः ।
ब्रह्मविष्णुमहेशाद्याः सर्वे देवाः सवासवाः ॥३७॥

प्रीतास्तस्मै प्रयच्छन्ति सर्वकामवरान् सदा।
रक्षन्ति तमरिष्टेभ्य आत्मजं पितराविव।
सर्वान् कामान् लभेदाशु प्रेत्य वैकुण्ठगो भवेत् ॥३८॥

आख्यानमेकमप्यस्य श्रुत्वा पापैः प्रमुच्यते।
सर्वं संश्रृणुतो भक्त्या किन्नो ब्रूमस्ततः फलम् ॥३९॥
इत्युक्तवन्तः ते विप्राः पूजितास्तेन धीमता।
भूषणैरत्नखचितैर्दानमानैश्च तोषिताः ॥४०॥

राजाधिराजो जयति प्रतापी
प्रतापसिंहोर्थिजनस्य नित्यम्।
भूमौ मरूत्वानिव वाञ्छितार्थ-
प्रवर्षणः सूर्यकुलावतंसः ॥४१॥

हलद्यावैश्यवंशाद्धि चन्द्रो राज्ञः प्रियः सदा।
छाजूरामोऽभवद्गङ्गाभक्तिपारङ्गमः क्षितौ ॥१॥
तस्यासन्नौरसाः श्रेष्ठाः विक्रमे तु ततोधिकाः।
शौर्यौदार्यादिसम्पन्नास्त्रयस्त्रेताग्नितेजसः ॥२॥
ज्येष्ठः खुसालीरामेति नाम्ना तेषां प्रतिष्ठितः।
दिल्लीश्वरप्रसादश्च लब्धोद्योगेन यत्नतः ॥३॥

तस्यानुजो दौलतिरामनामा प्रतापभूपेन्द्रकृपाभिधानम्।
ख्यातः प्रतापैर्भुवि भाग्यशाली स्ववाहुवीर्योछमितारिमाली ॥४॥

ततोनुजो नन्दरामो भ्रातृतुल्यपराक्रमः।
पुत्रवान् भ्रातृपुत्रैस्तु द्विजभक्तिपरायणः ॥५॥
द्वयो पुत्रान् प्रवक्ष्यामि यैर्व्याप्तं मधुमण्डलम्।
ज्येष्टस्यासन् त्रयः पुत्रास्तेषां जेष्ठश्चतुर्भुजः ॥६॥
तस्यानुजो रामलालो ऽवरो वालमुकुन्दकः।
मध्यमभ्रातृपुत्रौ द्वौ तयोर्ज्येष्ठः प्रसन्नधीः ॥७॥
सुखलाल इतिख्यातो हरिनारायणो वरः।
ग्रन्थस्य करणे वच्मि प्रयोजनमतः परम् ॥८॥
चतुर्भुजस्य सञ्जाता गङ्गामाहात्म्यसंग्रहः।
संश्रोतुमिच्छाऽतो विप्रान्नत्वा चातिविनीतवान् ॥९॥
प्राञ्जलिः प्रयतो भूत्वा प्रपच्छ हृदयेप्सितम्।
जाह्नव्या यदुपाख्यानं यत्र यत्रास्ति पुण्यदम् ॥१०॥

आनीय तत्पुराणेभ्यः श्रावयध्वं पुनीत माम्।
इति श्रुत्वा द्विजैः ग्रन्थसंग्रहोयं विनिर्मितः ॥११॥

श्रीमद्व्याससुगीतशास्त्रजलधेरुद्धृत्य यद्भूसुरै-
र्गङ्गाख्यानमनेकधा निगदितं पुण्यं चतुर्वाहवे।
सर्वं तत् क्रमशोऽनुवध्य सुमहान् विद्वज्जनानन्दकृत्
तत्तुष्ट्यै हरिनन्दनेन विदुषा ग्रन्थः कृतो यत्नतः ॥१२॥

तत् क्षम्यतां करुणया मम साहसं तु
यच्छ्रीमतां सुकवितापदवीं समीहे।
दृष्ट्वा श्रमं सुगुणिनो मम संग्रहस्य
न्यूनाधिकं भवति चेत् परिशोधयन्तु ॥१३॥

गङ्गाभक्तिप्रकाशोऽयमेकसप्ततिसन्मितैः ।
शुभैः प्रकरणैर्युक्तः श्रोतुः पूर्णफलप्रदः ॥१४॥

प्रश्नोत्तराणां ये श्लोका ग्रन्थेऽस्मिन्नूतनाः कृताः।
अन्ये तु सर्वशास्त्रेभ्यः समुद्धृत्येह योजिताः ॥१५॥

नेत्रवाणाहिचन्द्रेऽब्दे नभस्यासितपञ्चमी।
गुरुणा संयुता तत्र ग्रन्थोऽयं पूर्णतामगात् ॥१६॥

सर्वे ते सुखिनः सन्तु सर्वे सन्तु निरामयाः।
भक्त्या शृण्वन्ति ये नित्यं गङ्गाभक्तिप्रकाशकम् ॥१७॥

**इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे फलस्तुतिवर्णनं नामैक-सप्ततितमप्रकरणम्। समाप्तोयं ग्रन्थः॥**

**॥ श्रीगुरुः शरणम्॥**



।। श्रीगुरुः शरणम् ।।

# गङ्गाकाव्यतरङ्गः

## गङ्गावतरणचम्पूः

### ।। श्रीगणेशाय नमः ।।

स्रग्विणी छन्दः

लसद्दानकीलालकल्लोलिनीभिः
परिप्लाव्य गण्डस्थलीं लोलमौलिः ।
हसन्हासयन्नेकगङ्गाधरं यः
समव्यादभव्याद् भवानीतनूजः ।।१।।

आर्याछन्दः

प्रविकासिताब्जखण्डः प्रत्यूहध्वान्तखण्डने चण्डः ।
भुवनाभयकरदण्डः स जयति विघ्नेशमार्तण्डः ।।२।।

''

एकं स्तनन्धयन्नपि तिर्यग्वलनोऽर्धमुडुपेन्दुसुधाम् ।
वरदानवदान्यकरः किरतु स विघ्नान् द्विपेशास्यः ।।३।।

शिखरिणी

परीरब्धां स्थाणुं निजसमधिकारुण्यकलितां
त्रयाणां देवानां त्रिगुणपुरुषार्थौघफलिताम् ।
हरन्तीं भक्तौघे भवभुजगदृष्टे[१] विकलतां ।
हिमाद्रावुद्भूतां[२] निजहृदि भजे कामपि लताम् ।।४।।

शार्दूल वि०

कूजत्कोकिलकाकलीकलरवा पीयूषबद्धादरा–
मृद्वीकाविलसद्रसौघगरिमा माधुर्यधुर्योद्धुरा ।
उन्मीलन्मधुमाधुरीपरिचिता मुग्धाङ्गनाजल्पना–
कल्पा कस्य भवेन्न काव्यरचना मातः ! कृपातस्तव ।।५।।

शार्दूल वि०

वेगात् पूरितसिन्धवः सुजनतामुक्ताङ्गनाबन्धवः ।
पापालीपतनान्धवः सुरवधूहारावलीबन्धवः ।
आत्मज्ञापनविन्दवः कलितमस्तोमोद्धृता बिन्दवः ।
स्वस्तीक्रीडनकन्दवस्तव मुदे गाङ्गाः पयोबिन्दवः ।।६।।

आर्याछन्दः

वन्दे सुबन्धुवाणौ कविसम्राट्कालिदासभवभूती ।
शेषाशेषमुखा दिवसेभ्यो वाणी सहस्रधा समभूत ।।७।।

''

वल्मीकभूहरगिरिं वन्दे कविकाव्यकन्दभुवम् ।
यन्मुखकन्दरनिर्गतनिर्झरवाग्जाह्नवी पुनाति जगत् ।।८।।

---

गङ्गावतरणमचम्पूः, **ग्रन्थकारः**– शङ्करः, **विषयः**– काव्यम्, स.भ.पा.लि.सं. ४२३९१, **पत्र संख्या**– १-६८ पूर्ण दे.ना. । पा.लि.प.सं. १(क), **१**. 'दष्टे' इति शुद्धः पाठः ।, **२**. 'हिमाद्रा' इति शुद्धः पाठः ।

आर्याछन्दः
वन्दे सज्जनसङ्घं येषामुपकारकारिणी वाणी।
भूषयति क्ष्मावलयं गाङ्गमिता गाङ्गधारेव ॥९॥

,,
फल्गुमपि वल्गुवचनं स्वानुगतं गौरवान्वितं तन्वन्।
संयुक्तवर्णतुलनां तुलयति न कथं कथं सुजनः ॥१०॥

,,
कर्णपथेषु नयन्ति न धन्यानां पण्डितम्मन्याः।
सरसोक्तीः किमु केकानेकान् शृण्वन्ति वाचाटाः ॥११॥

,,
काव्यसुधासुस्वादः खलसङ्गेनानुभूत एव स्यात्।
यदि नानारसरसेन रसनेर्ष्यादोषदूषिता न स्यात् ॥१२॥

वसुधा काव्यसुधाब्धौ खलसङ्गेनाश्रुमग्नमेव स्यात्।
दैवाद्यदि तद्दोषान्वेषणतुम्बीफलान्वितं न स्यात् ॥१३॥

मालिनीछन्दः
कथमपि कलहंसैस्साकमाधूय पक्षान्
सपदि समभियातो मानसं वायसौघः।
दरदलितमरन्दासारमाराद्विहाय
क्वचिदपि निजभोज्यान्वेषणोत्कः किलास्ते ॥१४॥

आर्याछन्दः
विलसतु खलेषु खलता खलतावत्तापमपनयतु।
एषा यया सुजनता जनतापहरा प्रकाशिता भवति ॥१५॥

शार्दूल वि०
नाना श्लेषवती सुरूपकयुता मिथ्याविरोधान्विता,
संख्याता परिसंख्यया परिकराक्रान्तातिरेकान्विता।
नित्यं तद्गुणसङ्गता ललितयुङ्नानोपमासम्मता,
मुग्धा चन्द्रमुखीव कस्य च महापुण्यैर्भवेद्भारती ॥१६॥

मालिनी.
बहुतररसहीनं भूरिदीनं वचोभि-
स्तदपि हि मम काव्यं नव्यमित्यादरेण।
भवभवभयभङ्गानङ्गदासङ्गिगङ्गा !
स्तुतिरिति बुधसङ्घास्तूर्णमाकर्णयन्तु ॥१७॥

आसीदासीमक्ष्मावलयरक्षणदीक्षाविचक्षणक्षपितारातिततिततिमिस्रमुण्डपुण्डरीकताण्डवितयशःकासारः कुटिलकौशिकगणान्धीकरणमहौषधिः, रिपुग्रीष्मदिवससन्तापभीष्मः प्रचण्डदोर्दण्डाविर्भवत्प्रतापमार्तण्डः सुहृत्कैरवविकासाह्लादितसज्जनक्षत्रनक्षत्रपरिकलितचञ्चद्द्विजचकोरपारणाकारणीभूतामृताशययशःसुधाकरः सकलकलाकुलितः सर्वजनरञ्जनचातुरीधुरीणतासमासादितराजराजोपमानतानतारिमण्डलमुकुट-

पा.लि.प.सं. २, पा.लि.प.सं. २क,

मणिमरीचिनिचयचमत्कारचर्चितचरणनखमयूखप्रकरतिरस्कृतेन्द्रचापसम्पत्सम्पादिताद्भुततमतमः पाटनकरसहस्रकरप्रकाशितसिंहासनधरणिपरिसरः अनवरतवितरणजलतरलतरङ्गिणीनिर्वापितवनीपककुलदारिद्यानलज्वालमालोल्लसितकीर्तिलताप्रतानसंछादितब्रह्माण्डमण्डपः ब्रह्माण्डमण्डपाडम्बरविष्टम्भस्तम्भायमानभुजदण्डः सगरोपममस्मिन्महीमण्डलमनुशासति कुटिलताललनालकेष्वेव, सकलङ्कता चन्द्र एव, निष्कामत्वं मुनिजनेष्वेव, कुटिलान्तःकरणत्वं कम्बुषु लघुगणनं प्रस्तारेष्वेव, भुजङ्गप्रयातं छन्दस्येव, वृश्चिकस्थिती राशिचक्र एव, हृदयस्फोटो दाडिमेष्वेव, त्वगुद्दलनं भूर्जेषु, सूचीभेदः कञ्चुकादीनाम्, अधररसिकत्वं कामिजनेष्वेव, नीचसंसर्गो जलानामेव, विग्रहः समासेष्वेव, कर्णपीडनं महाभारते, नपुंसकत्वं शब्देष्वेव, निपातश्रवणं व्याकरणे, सन्निपातश्रुतिर्वैद्यकशास्त्रे, निक्षुरताडनं लोहेषु, चञ्चलत्वं विद्युल्लतासु, निःसारत्वं शरदभ्रेषु, भ्रमणशीलत्वं भ्रमरेष्वेव, भयभीतत्वं पक्षिषु, अग्निसन्निपातः पतङ्गानामेव, जलसन्निपातः क्षेपणीनाम्, कूपसन्निपातो घटानामेव।

यस्य च–

शार्दूल वि०
प्रत्यर्थिप्रथमानकम्पनकलाकौशल्यशिक्षाप्रदः,
संख्ये सन्मुखवैरिविग्रहगृहस्थायी परासृक्जलैः।
संग्रामाध्वरदीक्षितोऽवभृथभृद्दातुं द्विजेभ्यो धनं,
कोशस्थानमुपैति निर्मलतरः सच्चन्द्रहासः करे॥१७॥(क)

स्रग्धराछन्दः
यस्य प्रौढप्रतापोर्जितगतिविजितस्तेजसां राशिरर्क-
स्ताम्यत्यन्तःसमुद्रं भ्रमति च गगने दृष्टिमूढस्समन्तात्।
यत्कीर्त्तिस्तोमसोमस्त्रिभुवनमखिलं पूरयन्स्वप्रभाभि-
स्त्रासात्संक्षीयमाणं विधुमपि धिनुते स्वप्रकाशार्पणेन॥१८॥

सा सभा यस्य सारैव वरैः साधुगतैर्न सा।
पद्मवन्धः
सानतैरभिसारा वै वैरा सा कामभासमा॥१९॥

स हि सकलवसुमतीं वशीकृत्य निजभुजदण्डप्रभवत्प्रतापमार्तण्डप्रकाशितमित्रततिपुण्डरीककुलसंशोषितारिजातजम्बालसुरचितसत्पथः नयोपार्जितपाथोधितनयाकृतार्थीकरणसमर्थोऽर्थवानिममर्थं विचिन्तयामास। जडजां चञ्चलामप्येनां कृतार्थयामीति। ततश्च वामदेवादिशिष्टवरिष्ठगरिष्ठैर्वसिष्ठादिभिः सम्मन्त्र्य सप्तिसप्तक्रतुं प्रारब्धवान्।

ततश्च कार्तस्वरविचित्रपवित्रपात्रनानाविधान्ननिवहपर्वतान्सर्वतः दधिदुग्धघृतमधुमधुररससमाकुलाः कुल्याः समकल्पयत्। कनकरथहयनगजगजघटाः सम्पा-

---

पा.लि.प.सं. ३क, पा.लि.प.सं. ४, पा.लि.प.सं. ४क

दयामास। ऋषिवर्यधुर्यसम्प्रेर्यमाणः पुण्याहे कनकलाङ्गलाग्रैर्यज्ञभूमिमुल्लिख्य लेखाधिपकल्पोऽनल्पमण्डपमुपकल्पयामास। अनेकजातरूपसुरूपयूपसमूहान् समुत्थापयामास। विचित्रवर्णपर्याणपर्याणितश्यामैककर्णमर्णवोत्थमिव शुद्धवर्णं चतुरङ्गचित्रगमिव विचित्रगन्तुरगमामुमोच।

वंशस्थ-भेदः
पिता यदा मखकरणे समुत्सुकस्-
तदाज्ञया पशुमभितः समभ्ययुः।
बलान्विताः षडयुतसंख्यया मिताः
सुतास्तदा सगरमहामहीभुजः ॥२०॥

**अपि च—**

रथोद्धता छन्दः
छद्मकर्मकरणे महादरस्तं जहार तुरगं पुरन्दरः।
तन्निबध्य कपिलाश्रमे श्रमान्निर्ययौ गगनवीथिकाश्रयः ॥२१॥

**अपि च—**

शिखरिणी
परिभ्रामं भ्रामं चतुरतुरगान्वेषणपर-
श्चखानाधोभूमिं सगरसुतसङ्घोऽपकलितः।
परिप्राप्ते काले कपिलमुनिकोपोत्थदहन-
ज्वलज्ज्वालाजालेऽपतदथ पतङ्गार्पिततनुः ॥२२॥

स्रग्विणी छन्दः
यदाज्ञां समासाद्य सद्योंऽशुमानप्य-
गाद्वाजिनोऽन्वेषणे दत्तचितः।
तदा पूर्वजानामुदन्वन्तमा-
रादुदन्तं सुहृद्वैनतेयादगात्सः ॥२३॥

कथं कपिलशापतो भसितभावसम्भाविताः,
कदा त्रिदिवमाप्नुयुर्निरयवासनायासतः।
वदस्व यदि मां दयालुरसि दीनबन्धुप्रियः,
प्रियं प्रकटयन्ति हि प्रकृतिपुण्यभाजो भुवि ॥२४॥

तदानीमरुणानुजो करुणतया निजपूर्वजपरिचरणपरायणान्तःकरणतया समाकुलचित्तं चित्तान्तर्गतगुरुमखवरसम्पूर्णताकामं कामाभिरामं चरणावनततमं तमंशुमन्तं मातृसम्बन्धितया वैनतेयोऽभ्यवोचत्।

पृथ्वी
अनेकवृजिनावलीवलितजीवसङ्घः क्षणात्,
कथञ्चन समुद्धरेन्निरयवासनायासतः।
कृपाङ्कुरलसद्घनी निगमभावनाभावनी,
कथं पतितपावनी यदि वनावनीं चेदियात् ॥२५॥

मालिनी छन्दः
कपिलनयनवह्निं ज्वालमालावलीढं
सगरनृपसुतानां देहजं भस्मराशिम्।
हिमनगपतिपुत्री चेत् पवित्रीयति द्राक्
तव सुरपतिलोकः पूर्वजानां तदा स्यात् ॥२६॥

अनुष्टुप्
शुद्धशान्तस्वरूपाच्च शुद्धतत्त्वानुभाविनः।
यद्दग्धाः सागराः शङ्के सलिलादग्निरुत्थितः ॥२७॥

ततोऽशुमानपि पितृमातुलादतुलं सुललिततरमुपायमाकर्ण्य वैवर्ण्य-समन्वितोऽपि "रसातलचरोंऽशुमानिव तमोविनाशयानेव भूविवरमाविवेश।

**तत्र च—** असंख्यसांख्यज्ञसंख्यावद्ब्रह्ममुनिदेवमुनिसिद्धमुनिसंसेवितपाद-पङ्कजपरागोपरागश्च यस्य जनकः कर्दमोऽप्यपङ्कः, यश्च— नन्दितदेवहूतिरप्य-नन्दितदेवहूतिः घनश्यामस्वरूपोऽपि कपिलः आधिरहितोऽपि विरचितसमाधिः कर्दमसम्भवोऽप्यपद्मः गङ्गासङ्गोत्सुकोऽप्यसदाशिवः सुन्दरोऽप्यमुग्धः अपलितोऽपि पाण्डुकेशः, अलाञ्छनोऽपि पद्माङ्कुशलाञ्छितचरणः, विरचिततत्वमुद्रोऽपि व्याख्यात-तत्त्वागमः सर्वंसहोऽपि न धरणिमण्डलं क्षमाभृदपि न शैलराजः अबन्धनोऽपि समासादितमुक्तिः जननीतिरहितश्च।

मालिनी छन्दः
भवभवजडजीवान् ज्ञानहीनान् विलोक्य,
प्रचुरकरुणयाऽसौ भूतले प्रादुरासीत्।
कपिल इति समाख्यः शुद्धतत्त्वावबोधं,
विगलितमपि कालात् सांख्यमाख्यन्मुनिभ्यः ॥२७॥(क)

" **अपिच—**

परिगतमवशोधैः शुद्धतत्त्वावबोधै
र्जगदपि परिनेतुं मुक्तिभावं समर्थः।
अपगतभवजालं देहमालं प्रयत्ना—
दगमयदथमुक्तिं देवहूतिं न चित्रम् ॥२८॥

**अपिच—**

अनुष्टुप्.
चिन्तनात् सत्त्वतत्त्वस्य मूर्तिमत्सत्त्वरूपवान्।
न्यायेन भृङ्गकीटस्य कपिलत्वमगात् किमु ॥२९॥

ततस्तच्चरणारविन्दविगलन्मकरन्दविन्दुवृन्दास्वादसम्भावितचित्तवृत्ति सम्भव-त्प्रेमप्रवाहपुलकिततनुः—

---

पा.लि.प.सं. ५

मालिनी. अथ तमभिससार प्रेमभावावबद्ध-
प्रकटितपुलकौघः साञ्जलिः सावधानः ।
अनमदथ धरण्यामंशुमाँस्तत्पदाब्ज-
स्मरणगततमस्को भास्कराभो बभूव ॥३०॥

**ततः—**

शिखरिणी तदाज्ञामासाद्य प्रखरखुरसंक्षोभितमही-
महापृष्ठं तिष्ठेत्यवददथ वल्गां विधृतवान् ।
पुरस्कृत्वा नत्वा मुनिवरमथो वाजितिलकं
कलङ्कान्निर्मुक्तः समगमदयोध्यापुरवरम् ॥३१॥

**ततः—**

स्वागता. अरुणानुजोदितमुदन्तमादराद्,
गुरवे निवेद्य तुरगं च सादरः ।
स चरो मंहामखविधिं समाप्य वै,
प्रशशास भूमिवलयं रिपूञ्जयन् ॥३२॥

मालिनी. अथ कथमसमञ्जाः सागरो नागराणा—
मपृथु पृथुकसङ्घः क्रीडमानं शरद्याम् ।
जवतरजलसङ्घे मज्जयामास सज्जः,
समभवदयशोभिः कज्जलाभः क्रमेण ॥३३॥

,, इति कुचरितसङ्घैः पीडयन् पौरवर्गं,
विदलितबहुगर्वः खर्वितास्यः प्रजाभ्यः ।
सगरनृपतिनाऽसौ धिक्कृतः सर्वलोकैः,
कथमपि निजराज्याद्वै बहिष्कारितोऽपि ॥३४॥

अनु. स्मरन्तं तमुदन्तान्तं पौत्रेणांशुमतोदितम् ।
अनैषीद्बलवान्कालः सगरं नगरं स्वकम् ॥३५॥

इति समुदितराज्यं प्राज्यमासज्य पौत्रे,
सकलगुणविचित्रे चित्रकीर्त्तिश्चिरेण ।
चरमवयसि चिन्तासन्ततिं प्राप्य गङ्गां
चरणशरणभूतो भूपतिः स्वस्समागात् ॥३६॥

**इति श्रीसाहित्यपारावारपारीणकविताकान्तारकण्ठीवरसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित-बालकृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पू-प्रबन्धे गङ्गाचरणाङ्कः प्रथम उच्छासः ॥१॥**



# द्वितीयोच्छ्वासः

॥ श्रीगणेशाय नमः ॥

आर्या. कासरमर्दनसरसा रसाधिपत्वं तनोति या कृपया।
शरणागतसुरवरदा वरदानवनाशिनी जयति ॥१॥

अथ समस्तसामन्तसीमन्तिनीसीमन्तसिन्दूरोद्धरणप्रचण्डभुजदण्डार्जितप्रतापमार्तण्डतिरस्कृतवैरियशस्स्तोमसोमः, सोमकरनिकरविशदयशःस्तोममुक्ताफलस्तबककरम्बितदशदिगङ्गनास्तनाभोगः, भोगाद्रिरज्यमानमनाः सहसा संस्मृतवैनतेयवचसा सुरसिन्धुसमानयनोत्सुकमनाः–

अंशुमत्तुलितकान्तिसमूहोऽप्यंशुमानभवदस्य तनूजः।
रञ्जयन्निजगुणैः स्वजनौघं सज्जनाम्बुजविकासनशीलः ॥२॥

मण्डलक्षितिभुजः पुरलोकाः पालनाय नृपतिं परिवव्रुः।
तं तदैव सगरात्मजराज्ये मौलमन्त्रिविमलाश्च सिसिञ्चुः ॥३॥

प्राज्यराज्यमधिगम्य तदाऽसौ राजराजतुलितः परिरेजे।
शैलराजमुदयाचलमारादंशुमानिव वियत्परिभोगम् ॥४॥

स च सप्तसमुद्रामुद्रितमहीमण्डलपुरन्दरो दरोद्रिक्तमनाः सुमनोभिराकलितः कलितन्तुच्छिदपि विकलितवैरिवृन्दः, वृन्दारकवृन्दवन्द्यमानमानससम्मानितसज्जनराजहंसो हंसोपमप्रतापसन्तापितवैरिकैरवसमूहः समूहोल्लसितसकलशास्त्रार्थसारविचारपारावारपारीणचतुरचित्तः चित्तान्तर्गतगङ्गावतारविचारसारतिरस्कृतसंसारः, यश्च–

पृथ्वी. अनेकनृपमण्डलीमणिकिरीटकूटोच्छलत्-
सहस्रकरभानुभिर्विकसिताङ्घ्रिपद्मद्वयः।
प्रजाजनसुरञ्जनोल्लसितराजशब्दो यश-
स्तिरस्कृतविधुस्तदा धरणिमण्डलाखण्डलः ॥५॥

यश्च राजराज इव रक्षितसन्निधिः सुललितालकालङ्कृतश्च, सुरराज इव महिषीप्रियवाहनः, दक्षिणाशाप्रपूरकश्च, जलराज इव समुद्राभिरामः, जलजालङ्कृतश्च,

**अपिच–**

खरदूषणविप्लवेन सद्यः सुजनस्थानमनामयं चकार।
अथ वानरवद्धवार्द्धिसेतुर्न कथं स्याद्रघुनन्दनाभिरामः ॥६॥

---

पा.लि.प.सं. ७, पा.लि.प.सं. ७क, पा.लि.प.सं. ८

**यश्च—** विमलतरवारिधारानिर्वापितवैरिवृन्दरञ्जनः पल्लवितसज्जनावलीसलीलनवलवलीलतालसितलास्यहास्यहेतुः द्विजचातकपोतकपारणाकारणीभूतमुक्तिनवजीवनसमूहः ।

इत्थं चामलगुणगणैः सन्नर्तितनीलकण्ठः सनाभोप्यघनाशकरः समभवत् । यस्मिन् शासति धरणिमण्डले नवरससङ्कुलाः वापिकाः कवयश्च, प्रचुरतरदानदाः पौरजनाः गजाश्च, चन्द्रकशोभिता रजन्यो मयूराश्च, कृष्णामुखाः कामिनीकुचाः खलाश्च, नवविकाशराजितः कुसुमसमूहः शरदृतुश्च ।

**यस्य च—** प्रचुरतरवारिधाराखण्डितधर्मसेतुर्देशः शत्रुवर्गश्च, आवर्त्तशुक्ति[१]-युक्तास्सम्भ्रमकलिताः सुरोचमानाश्च देशे यस्य विशेषात्तुरगाः नद्यश्च राजन्ते ॥७॥

**यश्च—** प्रजारञ्जनचातुरीधुरीणतया तिरस्कृतपृथुनलनहुषययातिमान्धातृभरतः, भरतानुसारिरामचन्द्रचरणपरिचरणसमासादितसद्भक्तिकल्पलताप्रतानसञ्छादितमानसनिकुञ्जः, कुञ्जरतुरगपत्तिशताङ्गचतुरङ्गवाहिनीसहस्रसमुच्छलज्जनपदसमुद्रः समुद्रशायिचरणपरिचरणबद्धाशयः समभवत् ।

प्रौढप्रतापसम्भवद्यशःपूरकर्पूरपूरितदशदिगङ्गनाङ्गणपरिसरः सरणिर्धर्मागमस्य तरणिः संसारसमुद्रतरणस्य निवासः सकलकलाकलापानां प्रवासः सकलदुःश्चरितानाम्, आस्थानं सकलचित्तचमत्कृतीनाम्, आलानं सकलसद्गुणकरिकलभानाम्, वनस्थलं सकलनीतिवल्लरीणां कुलवसतिर्भारतीविभ्रमाणाम्, विष्कम्भो लक्ष्मीविलासभवनस्य ।

स्रग्धरा.

बाढं प्रौढप्रतापानलबहुलमिलज्ज्वालमालावलीढ-
प्रोत्तुङ्गः शत्रुनारीनयनजलसरल्लोलकल्लोलिनीभिः ।
चित्रं सद्बाहुजातः स्थगयति नितरां बाहुजान्वैरिवृन्दा-
न्नाशाः सम्प्लाव्य तेषां जगति विजयते यद्यशोवारिराशिः ॥८॥

**यस्य च—** सञ्चितग्रामाः सुखयन्त्यर्थिजनं तारयन्ति प्रत्यर्थिजनं च । यत्र च, परहितपवनमभिलषन्ति नागा नागाश्च । यत्र च कलोपयुक्तकपोतराजिताः प्रसादाः (प्रासादाश्च) यत्रचोचितपवनं सेवन्ते भुजंगा भुजङ्गाश्च यत्र— विमलतरवितरणजलतरलतरङ्गिणीसन्तर्पितवनीय[२]ककुलजेगीयमानयशःपयोधिसम्भवदगण्यपुण्यकल्पद्रुमफलकुसुमायितकुमुदकान्तनक्षत्रनिकरसम्भूषितनभःपरिभोगः यदगणितानसीमगुणैर्भोगिभोगः कुण्डलनानुकारिचतुरुदधिवलयितं कुवलयं कुवलयमलयजघनसारतुषारमारविधुकान्तरसासारसेकशीतलितान्तःकरणतया पुलकायितभूरूहतनूरुहम् ।

---

पा.लि.प.सं. ८क, पा.लि.प.सं. ९

हरिणी. धरणिवलये कीर्तिर्यस्य प्रकाममनोहरा
हरिगिरिचरा गङ्गेवोच्चैर्जनैः परिसेव्यते।
कमलकुमुदभ्रान्त्या भृङ्गैश्चकोरगणैर्मुहु-
र्हिमकरकरभ्रान्त्या हंसैः पयोधिपयोधिया ॥९॥

**यस्य च—**

वसन्ततिलका. सद्योषितां चमरजार्द्धहरे च राका-
कान्ते सिते त्रिदिवनायकवारणस्य।
लोकैरलोकि भुवनेषु यशोधिरूपं
हारे हरे हिमकरे मकरे करे च ॥१०॥

शिखरिणी यशस्तोमे सोमे धवलयति भूवस्तुनिवहं,
वकी काकं हंसो रसति वलिपुष्टप्रियतमाम्।
मरालेऽतिप्रेम्णा परिसरति वेगात्परभृतं,
विपर्यासे यत्नः फलति किमु कस्य क्वचिदपि ॥११॥

,, इयं भिल्ली पल्लीपतिसदनगा सम्भ्रमभराद्-
गले गुञ्जामालां कलयति लसन्मौक्तिकमयीम्।
लिहन्ति क्ष्मापृष्ठं पय इति च मार्जारशिशवः,
समासीद्यच्छोके धवलयति वस्तुभ्रमकरम् ॥१२॥

ततश्चतुरुदधिवेलाविलसदेलाविमलपरिमलाभोगसम्भावितसुरसरिदवतरणतरणी-पापसम्मोहितकलिकलुषसम्भवभवभयत्रस्तसमस्तजीवजातम्, जीवनजातमिवानन्दा-मन्दमकरन्दसन्दोहसम्भावितभूसुरभासुरम्, सुरञ्जितानेकप्रजाजनजेगीयमानकीर्तिलता-प्रतानवितानसंछादितगगनाजिरपरिसरम्, स्वगुणसुधारसैकसिक्तवसुधातलचञ्चच्चक्रवालम्, बहुकालं पालयन्नरुणानुजोदितमुदन्तं मनसि कृत्वा रसेन निजौरसे सकलप्रजार्तित-मोविनाशनप्रदीपे दिलीपे प्राज्यं साम्राज्यमासज्य—

पञ्चचामर. इदं कार्यमार्येषु संवेद्य धैर्यान्-
नियम्येन्द्रियं हैमवन्तं प्रतस्थे।
नगं चेन्न गङ्गाऽऽगमिष्यत्ययत्ना-
त्तदानीं निजाङ्गानि सन्त्यक्तुमीषे ॥१३॥

,, ततोऽनेकलोकाकुलानेकनीवृल्ल-
ताजालमालाभिरामोपपादान्।
अनुल्लंघ्यकीर्त्तिस्समुल्लङ्घ्य यत्नात्तदानी
स मानी हिमानीप्रदेशान् ॥१४॥

पा.लि.प.सं. ९क

द्रुतविलम्बित. मनसि काञ्चन भक्तिलतां दधत्-
सरसि काञ्चन वारिजसेविताम् ।
समनुभूय सुखं सदधित्यकाम-
धिरुरोह स भूमिपुरन्दरः ॥१५॥

तत्र च विराट्सदनमिव कीचकशतावृतं सवृहन्नलञ्च, धृतराष्ट्रसदनमिव धात्रीशतसंकुलं दुर्योधनसभाकल्पमिव शकुनिकलिताक्षं, लङ्कापुरमिव विविधपलाश-सेवितं समेघनादञ्च सुग्रीवसैन्यमिव शरभालङ्कृतं केसरिशोभितञ्च, रामकृतसेतुमिव नानातरुलताशिखरोपलसहितम्, असत्काव्यमिव सम्बद्धतुहिनं, राघवमिव सलक्ष्मणं हृतसीतं च, युधिष्ठिरसदनमिव सभीमार्जुननकुलं, कंससैन्यमिव सबकं, शक्र-सदनमिव विलसद्रम्भापरीरम्भसम्भावितम्, धानुष्कप्रकोष्ठमिव सगोधम्, रावणसदन-मिव वानरशतसंक्षोभितम्, सुग्रीवसैन्यमिव गजगवयगोलांगूलसहितं सौगन्धिकवणिक्-पथमिव ससौरभं, भागवतकथानकमिव सकृष्णासारक्रीडितं शुकमुखलालितञ्च, सतीर्थमिव मुनितरुराजिराजितं, राजगृहमिव पुन्नागकलितं, नर्तकसदनमिव सतालं, निषादर्षभगान्धर्वसहितञ्च, मुग्धगीतमिव असुरसंग्रामरहितं,

अनु. बिभ्रतं वनमत्युच्चैः शिरसा दैवदारवम् ।
मुञ्चन्तं कन्दरोद्गारैर्निर्झरैश्च सदारवम् ॥१६॥

**वनसमूहं पश्यन् ययौ–**

वसन्तति. कस्तूरिकामृगविमर्दनपङ्किलानि,
भ्राम्यद्द्विरेफकुलगुञ्जितमञ्जुलानि ।
३(क)वीरुच्छलल्लसितपल्लवकोमलानि
पश्यन् ययौ स मिहिकाद्रिवनस्थलानि ॥१७॥

,, उच्चप्रपातपतितानि मरालबाल,–
सञ्चालितानि विकचाम्बुजमालितानि ।
सत्सिद्धकिन्नरवधूस्तनलोलितानि,
पश्यन् ययौ नृपवरो मिहिकाजलानि ॥१८॥

पृथ्वी. दरीभिरुपशोभितो विबुधसुन्दरीभिः क्वचित्,
क्वचित् प्रबलवानरैरपि च कुत्रचिद्वानरैः ।
महामदलसद्गजैर्जनितभूरिशोभोऽगजैः
क्वचिद्धरिणबालकैः क्व च हरिद्वधूपालकैः ॥१९॥

पा.लि.प.सं. १०, पा.लि.प.सं. १०क, (क) वीरुच्छदेरहित, इति शु.पा.

द्रुतविलम्बित क्वचिदहो कलभैश्च मुदा रवः
समरुचिस्फुटिताः सुरदारवः ।
लसति किन्नरगीतिमनोहरः
सरति गन्धवहः सुमनोहरः ॥२०॥

,, विदलिता दलिताम्बुरुहावली
गजवरेण वरेण करेण च ।
सुकुमुदं कुमुदं मधुपावली
परिगतारिगताद्भयतो निशि ॥२१॥

अलिरगो विगणय्य कदम्बकं स्फुरितसौरभसारकदम्बकम् ।
पा.लि.प.सं.११ अनुययौ सुरसिद्धबधूसरस्फुरितलोध्रपरागवधूसरः ॥२२॥

अनु. शङ्खचक्राम्बुजोपेतो वनमालाविभूषितः ।
उमातातोऽपि लक्ष्मीवान् गिरिराजो परो हरिः ॥२३॥

**यश्च—** विविधसमुल्लसच्छिखरकूटाकरजनीलपीतहरितकपिशशोणमणि-मरीचिमञ्जरीनिचयसमुल्लासितेन्द्रचापचयखचितजलधरावलीविलोड्यमानगगणाङ्गण-प्रसरः, प्रसरत्सहस्रभानुनिःसरज्ज्वालमालाजाललालितगगनतलतापनिर्वापणायेव, स्वर्गमार्गावरोहणाय सोपानपरम्परां रचयितुमिव, त्रिजगत्सर्गकारणभूतपितामहचर-णारविन्दमभिनन्दितुमिव, चिरोषितनिजतनूजनिं स्वर्गापगामानेतुमिव, विधुमण्ड-लोच्छलितबहलसुधास्वादमास्वादितुमिव परिवर्द्धितशिखरसहस्रसमुल्लसद्विन्ध्याचल-समीर्ष्ययेव निरवलम्बगमनरविरथतुरङ्गमावलम्बनायेव, सहस्रकरकरसन्तापितानूरुता-पनिर्वापणायेव, आगमिष्यमाणगङ्गाप्रवाहमार्गशोधनायेव, तुषारसारनिष्यन्दामन्द-सन्दोहसुन्दरैः शिखरशिखाशेखरशिखरैरभ्युन्नतः,

पृथ्वी. शरद्धनघनप्रभानरविभावनाभासुरैः
सुरैरुपरिसेवितैः सकलसिद्धसङ्घावृतैः ।
विपच्छिखरशेखरैरभवदावृतं मन्थनो-
च्छलद्बहलभासुराकृतिपयोधिपूरैरिव ॥२३॥(क)

,, महारजतवृत्तिभिः परिवृतो महानीलभू-
र्मयूखनिचयोत्करः क्वचिदहो दरीदृश्यते ।
सहस्रकरभानुभिर्भुवनमध्यसञ्चारिभि-
र्घनान्धतमसोच्चयः किमु विगृह्य वन्दीकृतः ॥२४॥

अनु. प्रहसन् पाशिसंवासपातालं च सदानवम् ।
अनेकरत्ननिचयैर्विललास सदानवम् ॥२५॥

वसन्तति. कैलासवासमपहाय निवस्तुकामा
यत्रास्ति शैलतनयाऽपि सहेश्वरेण ।
अम्भोधिजाजनितवाससमीर्ष्ययेव
को नाम भूधरवरं न समाद्रियेत ॥२६॥

स्वागता. चुम्बनेषु विविधोत्सववन्तः श्लेषसम्भ्रमसुखं न विदन्तः ।
किन्नरा निहतराहुशरीरं लब्धुकाममनसोऽभिननन्दुः ॥२७॥

'' श्लेषसम्भ्रमसुखोत्सववन्तश्चुम्बनाद्भुतरसं न विदन्तः ।
पा.लि.प.सं.१२ किन्नराः सुचतुरा स्तुरगास्या राहुमाप्तुमनसो हरमीयुः ॥२८॥

मालिनी. क्वचिदपि शुशुभेऽसौ यूथिकावीथिकाभिः,
क्वचिदपि कुसुमोघैर्मल्लिकावल्लिकाभिः ।
तटभुवमभिरेजे सुन्दरीभिर्दरीभि-
र्विमलसलिलपूरैर्वापिकौघैः पिकौघैः ॥२९॥

मालिनी क्वचिदपि च वराहप्रौढमुस्ताप्ररोह-
प्रचुरकवलशीलः शीलयत्यम्बुरोधः ।
मणिकिरणसमूहाद्बिभ्यदभ्यर्णमम्भः,
प्रविशति किमु पिण्डीभूय भूयोऽन्धकारः ॥३०॥

मालिनी. क्वचिदपि च कुरङ्गीशृङ्गकण्डूयनेना-
नुभवति सुखमुच्चैरच्छकच्छस्थलीषु ।
तरुणहरिणसङ्घो ऽऽ पूर्वदूर्वाङ्कुराणां
कवलनविवृतास्यः कस्य नानन्दकन्दः ॥३१॥

मालिनी. क्वचिदपि कपिजालं स्वीयकान्ताकपोलं
तरुवरशिखराग्राच्चुम्बितुं लम्बते स्म ।
कुहचिदथ पिशङ्गैरम्बुजानां रजोभि-
श्छुरयति दयितास्यं पाणिना कुञ्चितेन ॥३२॥

मालिनी. क्वचिदपि करिशावः स्तन्यसम्बद्धभावः
स्थगयति चरणाग्रे रेणुमध्ये करेणुं,
अथ कथमपि बालस्नेहसंजातपाशा
निजपदमधिकर्त्तुं नो समर्था बभूव ॥३३॥

स्वागता. सिद्धकिन्नरवधूस्तनकुम्भो-
त्सृष्टकुङ्कुमरजोभिरपीतः ।
श्वेततां न विजहौ गिरिराजः
स्वं गुणं जहति वै किमु सन्तः ॥३४॥

मालिनी. मदजलकणसेकोत्सिक्तकुम्भस्थलेषु
भ्रमदलिकुलगुञ्जापुञ्जसम्बद्धकर्णः ।
अनुसरति करेणुं रूषितां रेणुसङ्घै-
रलसगमनलीलाबन्धुरः सिन्धुरोऽयम् ॥३५॥

पा.लि.प.सं.१३ **तत्र च—** हरिमिव सशङ्खचक्रं वनमालाविभूषितं च, शक्रमिव रम्भोपसेवितपरिसरं, कुबेरमिव यक्षानुचरं, वरुणमिव यादोगणसेवितं, हरमिव निर्मलनीरपरिप्लुतन्नीरजस्कञ्च, ब्रह्माणमिव मरालवाहनं वितमस्कञ्च, हरमालमिव द्विजराजोपसेवितं, युवतिगणमिव कङ्कणकलितं स्ववधूकपोलस्थलमिव विचित्रपत्रलताभिराकलितं, गणेशगण्डस्थलमिव गुञ्जदलिपुञ्जमञ्जुलम्, महासेनमिव मयूरसेवितं शरवणसम्भवं च, भानुमिव कोकनदमोदकरं, चन्द्रमिव निस्यन्ददमृतम्, हनूमन्तमिव सदागतिसेवितं, शमनमिव जीवनमनोहरम् भानुसन्तापहरञ्च, कलङ्कमलं दधदपि कलङ्कमलरहितम्, धनञ्जयमिव वायुसखं, कंसगृहमिव विलसद्वकम्, दानवेन्द्रसैन्यमिव सदानवजीवनदम्, पाण्डवसैन्यमिव निध्यातसज्जनकुलं, संयमनीनगरमिव जीवनाशयमराजम्, शक्रसदनमिव भूदारहितम् ।

**यत्र च—**

स्वागता. फुल्लपङ्कजवनीगतालिनां
सर्वतो जयति नीलिमागुणः ।
राजते स्म किमु वस्तुमागतो
मूर्त्तिमानिव रसो महोज्वलः ॥३६॥

शिखरिणी. परिभ्रामं भ्रामं प्रतिकमलमन्वेषितवता
प्रियां प्रेमौत्कण्ठ्यान्नयनविषयं सत्कृतवता ।
[४]श्रमात्सानुक्रोशं मनसि सहमानं धृतवतां ।
न पीतं न त्यक्तं मधु मधुकरेणाम्बुजवने ॥३७॥

" दरोन्मीलत्कञ्जावलिललितगञ्जास्थितिमता-
भरादोघं पातुं सह सहचरीभिः प्रववृते ।
रतक्लाम्यत्कान्ताधरदलरसं संस्मृतवता
न पीतं न त्यक्तं मधु मधुकरेणाम्बुजवने ॥३८॥

मालिनी. विकचसरसिजालीलोलनोत्सङ्गसङ्गा-
द्विगलितमकरन्दस्यन्दिनो गन्धवाहाः ।
वकुलमुकुलमालाऽनूपनीपप्रसून-
प्रसृतपरिमलालीमुद्वहन्तः प्रयान्ति ॥३९॥

मालिनी. विकचकमलमालाजालमालम्ब्यलम्ब-
ल्लघुतरचलदोलान्दोलिरोलम्बवृन्दः ।
अनुभवति तदालं लोलकल्लोललोल-
ल्ललितचलितनालं नन्दनानन्दमुच्चैः ॥४०॥
एवं गव्यूतिभिरसंख्यातं देवखातमपश्यत् ।

**ततश्च—**

स सिसाधयिषुः सिद्धिं सिद्धाश्रमपदङ्गतः ।
समधावेन्द्रियग्रामं साधने मानसं दधे ॥४१॥

**तस्य च—** नातिविकटाविकटभूमौ मुनिवाटमपश्यत्, देवर्षिराजर्षि-सिद्धर्षिकुलसंकुलं ब्रह्मसदनमिव नानाशाखिशाखाकलितं, राजसदनमिव विभूति-विभूषितं सुजनं दक्षयज्ञमिव विद्रुतमृगं सैन्योपकलितञ्च उद्यानमिव जपासक्त-द्विजकुलाकलितम् ।

**यत्र च—** मुनिकुलं अजपासक्तमपि जपासक्तम्, अरामासक्तमपि रामा-सक्तम्, मुक्तिकामम्, अकाममपि मोक्षकामम् ।

रथोद्धता. चीरवल्कलकरण्डधारिणः क्षीरपां प्रतिदिनं विचारिणः ।
शीतवर्ततपनानुभाविनः सत्तपस्विन इवान्नशाखिनः ॥४२॥

**यत्र च—**

नकुलैर्विहरन्ति पन्नगाः कलभैः केसरिणः कृपालसाः ।
पृषदन्धकुलैः सदुन्दुराः हरिणो व्याघ्रकुलैर्विचारिणः ॥४३॥

मालिनी. अपृथुपृथुकसंघः क्रीडितुं यत्र मृत्स्ना,
विधिहरिहररूपाकारमूर्त्तीर्विधाय ।
कमलकमलजालैरर्चयित्वा कराग्रैः
परिधृतलघुनासो मुद्रिकाक्षो बभूव ॥४४॥

मालिनी. क्वचिदपि शिशुजालं धैर्यमालम्ब्य कालं
गमयति चतुराशामण्डलं पूरयित्वा ।
ललिततरजपाभिर्वह्निकीलप्रभाभि-
र्दिनकृतिकृतनेत्रं सम्बभूवोर्ध्वहस्तम् ॥४५॥

पृथ्वी. जटामुकुटमण्डिता ललितमौलिबन्धावृता:
कुशाक्षवलयोत्करा ललितकृष्णचर्माम्बरा: ।
ब्रुवन्त इह सत्कथा शतपथार्थतत्वाहृता,
वृथा न हि नयन्ति ये समयमालयं सर्वथा ।।४६।।

ततः स क्षितिपालतिलकायमानोंऽशुमानंशुमानिव विकासितसुहृत्पुण्डरीको विनाशितदुर्जनान्धकारोऽन्धकारिचरणबद्धमना मनाक् तदा रमाभोगविनीतसत्त्वजनदर्शनचित्रितचित्रभित्तितदाश्रमदर्शनाह्लादविगतश्रमोऽपि परिसरं ललिततरतरुवरतलमलङ्कारयाञ्चकार।

ततस्तदन्तिकचरमुनिजनशिशुरचञ्चललोचनाञ्चलचलनचमत्कारमधिगतः । तदा सभयकौतुकैस्तैः समभिसृत्य समस्ततपोभारगुरवो गुरवो विज्ञापिताः । ताताः ! कोऽपि शान्तान्तःकरणोऽपि भासुराकृतिः सुरपतिरिव प्रभाभारभासुरो वज्रकरश्च अघनोऽपि नद इव अजटुपतिरपि प्रचेता इव, असंयमनोऽपि धर्मराज इव, ललिततरकोमलकरचरणतलावयवभूषितोभूषितः कोपि देववरः परिसरतरुवरतलमलङ्करोति । पृथुवेपथुप्रथितापृथुपृथुकजनवचनमन्तःकरणचरमाकलय्य तेषामेकः कोपि तमभिसृत्य समवोचत् । (भवता भवतापनिर्वृतः कीतानीवृत् परिसरः समजनि । कश्चाकण्ठोत्कण्ठालुण्ठितचित्तवृत्ति विरचितं किं कार्यमार्याः सधैर्यमुपसर्त्तुमुद्यतास्तरुतलमलञ्चक्रुः, ततोंऽशुमानपि सदशनांशु वचनमवोचत् ।)[५]

अंशुमदुदितवंशाङ्कुरोंऽशुमान्नामाहम्, सन्ततसमाधिधौतमनोमलाः सदार्याः कार्यमवगच्छन्तु इत्युक्त्वोपरराम ।

**ततश्च—** विनतेन तेन सर्वोऽप्युदन्तः सर्वज्ञेन विज्ञापितः, तमुदन्तमालोच्य सम्मुदमाप्नुवन्तः चतुरुदधिवलयमण्डितमहीमण्डलाखण्डलः, किमप्यपूर्वकार्यमार्यानुचरितं हृदयचरं विधायापूर्वोऽयमतिथिः समागतः, तन्नामश्रवणजनितमहानन्दामृतसरसि मग्ना इव, विकचाम्बुरुहावलीललितविलासलास्यकल्पहास्यकलिताननाश्चमत्कारनिचयपरिचयपरिचीयमानहृदयाः सुहृदयास्तदर्थमनवद्यपाद्यमनर्घमर्घममलतरनानावस्तुनिचयजनितसम्पर्कमधुपर्कं सम्पाद्य भयरहितं जगत्रयहितं विमलतरविलसद्गुणगणसहितं तमभिसृतवन्तः । तदालोकजनितानन्दमहार्णवपरिप्लवमानमानसाः सहसामृतनिस्यन्दकल्पानल्पजल्पैर्यशश्चन्द्रचन्द्रिकाप्रकाशितधरणिमण्डलमण्डनायमानं कृतप्रणामं पूरितावनीवनीपकजनकाममानन्दनृस्वरूपं भूपं समवोचन् ।

स्वस्ति समस्तावनीविलासिनीकामुकेभ्यः, स्वागतमस्तु तावत्, इदं पाद्यमयमर्ध्यमधुपर्कादिकं मयाङ्गविलासलास्येनाङ्गीक्रियतामिति । समर्थाश्रममण्डलसनाथो

पा.लि.प.सं. १४क

विधीयताम्, इति प्रार्थयामासुः। तत्प्रसन्नतापन्नतायास्तेन सदैव चञ्चच्चञ्चरीक-कुलनादानुनादितां स्वकुटीराजिरभुवमाराद्विविशुः। राजहंसाद्यशनयोग्यैरमलैः कन्दमूल-फलादिभिः सुरसभोचितगुणैरुपचितं सम्भोजनाय सम्भावयामासुः। ललितसल्लता-पल्लवैरनल्पतल्पमुपकल्पयामासुः। ततश्चांशुमान् तैर्विरचितसभाजनः सभाजनोप-सेव्यमानचरितो विचित्रचरित्रैस्तैरुपरुह्यमानः स्वं निखिलमुदन्तमवोचत्, तैश्चाभ्यधायि, राजर्षिवर्य! सम्पादिततपःकल्पवृक्षाः सर्वथा नानाविधानि फलानि वितरन्त्येव, किमसाध्यं दुश्चरतपसां, तपसैव हरिहरविरञ्च्यादयोऽपि उच्चपदाधिरूढाः तपसैव शेषोऽप्यशेषां महीं शिरसा समुद्वहति, त्वमपि निजकार्यजातं प्रति कारणतां गतः सन् कालान्तरे पुरुषान्तरेण सिद्धिमवाप्स्यसि। इत्युक्त्वा सर्वे स्वं स्वं शयनगृहमाविविशुः।

ततश्चान्येद्युः, अंशुमानपि तपश्चर्याकरणाय कृतपरिकरः, कञ्जोद्भवदेव-प्रसादासादनाय सदनाद्बहिः स्थण्डिलमुपकल्प्य नानाविधदुश्चरतरतपःसमूहमभ्यस्तवान्। तस्य पुत्रः सकलभुवनद्वीपद्वीपायमानो नाम सप्तद्वीपां वसुमतीमनुशासयन्—

समीजे बहुभिर्यज्ञैस्स राजा राजनन्दनः।
प्रशास्य वसुधां कृत्स्नां नन्दनानन्दमन्वभूत् ॥४७॥

पा.लि.प.सं.१६ स चानेकजननार्जितदुर्दैवदुर्विपाकेन राजयक्ष्मणा परिग्रस्तायुः।

इति मनसि विचारं चारयन् सर्वकालं।
सगरसुतशतानां तापनिर्वापहेतुः।
अथ भवति कथं वा भूतले भूरि गङ्गा–
चरणमिति निजान्तर्भावनुन्नस्समागात् ॥४८॥

**इति श्रीसाहित्यपारावारपारीणकविकान्तारकण्ठीवरसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित-बालकृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कः द्वितीय उच्छ्वासः ॥२॥**



---

**पादटिप्पणि**

१. श्रुति।
२. वनीपक।
३. 'वीरुच्छदेरहित' इति शुद्धः पाठः।
४. 'श्रमात्सानुक्रोशं मनसि सह मानं धृतवता' इति शुद्धः पाठः।
५. वाक्योऽयं मूलग्रन्थे द्विरावृत्तिरस्ति।

# तृतीयोच्छ्वासः

॥ श्रीगणेशाय नमः ॥

मिलिन्दमण्डलीमण्डिगण्डमण्डलमण्डितम् ।
वेतण्डतुण्डमवतादतर्क्यं तुन्दिलं महः ॥१॥

प्रेक्षणीयार्द्धमधरं प्रेक्ष्य वार्द्धवपुः स्थिरम् ।
दूरीकरोतु भवतां भवतां भवताण्डवे ॥२॥

पूतनामारणख्यातः स्तवाय भवतां मुदे ।
सितनामा रणप्रीतः शिवाय भवतां सदा ॥३॥

**अस्ति समस्तावनीवनीपककुलदारिद्र्यविद्रावणवर्धितयशःसमुद्रः समुद्रसमुदामुद्रितमहीमण्डलाखण्डलाखण्डनप्रबलप्रतापमार्तण्डप्रविकासितसुहृत्पुण्डरीकः, पुण्डरीकाश्वमेधादिसप्ततन्तुसन्तर्पितसुरलोकः,** लोकरक्षणदीक्षाविचक्षणः, क्षणदापतिरिव **कुमुदवनसुखहेतुः,** संसारसागरसमुत्तरणसेतुः सम्भावितरणभूमिः राम इव शुभलक्ष्मणान्वितः श्रीकृष्ण इव सत्यभामासमन्वितः जामदग्न्य इव खण्डितवैरिसहस्रबाहुः भरत इव रामानन्दजनकः महावराह इव सम्भृतभूमण्डलः भीष्म इवानन्दितसागरः सागरशायीव अनन्तनागाश्रयः श्रीपतिरिव शेषभोगप्रियः भीम इव नाशितदुर्योधनः,

**यश्च–** अवृकोदरोऽपि भीमसेनः, युधिष्ठिरोऽपि न पाञ्चालीप्रियः, धृतराष्ट्रोऽपि न दुश्शासनरतः धनञ्जयोऽपि न कृष्णवर्त्मा असोमोऽपि बुधप्रियः, अगुरुरपि वाचस्पतिः, प्रह्लादोऽपि न जनकदुखदः नृसिंहप्रियश्च सदाशिवोऽप्यहिमकराश्रयः नाशितान्धकश्च, सदागतिरप्यसदागतिः, काव्यप्रियोऽपि न दैत्यराजः धनदोपि न कुबेरः प्रचेता अपि न तटाधिराजः, धर्मराजोप्यतीक्ष्णदण्डः महिषीप्रियवाहनश्च, वज्रकरोऽपि न रम्भाप्रियः सोमपोऽपि न विधुन्तुदः, यश्चाकुञ्चितजरालसगतिरपि कुञ्चितजरालसगतिः यश्चासंयोगपदाभिभूषितोपि संयोगपदाभिभूषितः यश्चापूर्वसुरशत्रुरपि अपूर्वसुरमित्रम्, यस्य च—

क्रूरशूरवरत्रस्तसमस्तः प्रद्रवद्रणे । करनीरधरक्रूरशरपूरसरः परः (चमरबन्धः) ॥४॥

उपजाती. भगीरथो नाम महीमहेन्द्रो महीमहेन्द्रार्चितपादपीठः ।
सप्तार्णवैकावनिचक्रवर्त्ती मोक्षोऽपि यस्यास्ति न दूरवर्त्ती ॥५॥

" तुरङ्गमेधावभृथै रघूणां पुरः पुरस्तात् सरयूः पवित्रा ।
गङ्गावतारोत्सवदत्तचित्तो मेध्यामयोध्यामथ सोऽध्यवात्सीत् ॥६॥

---

पा.लि.प.सं. १७, पा.लि.प.सं. १७क, चमर बन्धः

यस्यां च– प्रजानेककोटिवित्तिर्धनुश्चकोटिद्वयोपेतम्, यत्र च– भुजङ्गत्वं सर्पेष्वेव, पल्लविकत्वं वृक्षेष्वेव, वक्रत्वं धनुःष्वेव, बहुलोहत्वं आयुधेषु तार्किकेष्वेव, या च सपारिजाताऽपि अपारिजाता।

अनु. यन्मन्युभागानद्यापि भुनक्ति स दिवस्पतिः।
मेध्याऽयोध्यापुरी भाति स्वर्गतोऽपि गरीयसी ॥७॥

'' सर्वतः सलिलं भाति वारिजैः सह सारवम्।
क्रीडन्ति यत्र तरुणाः मुञ्चन्तः सहसा रवम् ॥८॥

या च विश्वकर्मणा कर्मणापि व्याकुलमनसा मनसापि कर्तुमशक्या, तस्यामधिवसन्,

स्रग्विणी. कदाचित्समाहूय मन्त्रिप्रधानान-
पृच्छत्कथां विस्तरैः पूर्वजानाम्।
उदन्तं मुदन्ताय संशोचमानः
समाकर्ण्य वैवर्ण्यमन्यच्चकार ॥९॥

'' अहोऽहं महामोहदोलाधिरूढः
कुलाचारहीनो महद्वैभवेषु।
प्रमत्तः सदा पूर्णगर्वेण युक्तः
सुपर्वेशशर्वं समाराधयिष्ये ॥१०॥

'' मुनेः कोपतो लोपभावं प्रपन्ना,
न पुत्रा मतास्तार्णमेषां विभर्मि।
पृथापुत्रतापन्नसंहर्त्तुरद्य,
क्षपानायकास्ये वरं कः कलङ्कः? ॥११॥

'' अतोऽहं ततोऽहं तदुत्सर्गभूता-
न्निजान्पूर्वजान्पङ्क्तःपावयिष्ये।
अहो! देवगङ्गा तदङ्गारकौघं
कथं पावयेदित्ययं व्याकुलोऽभूत् ॥१२॥

'' तदा दीनबन्धुर्दयासिन्धुरीशो
मदीयां विशेषादनोदीन्मनःस्थाम्।
तपोऽहं वरिष्ये हठात्सागराणां
महातापनिर्वापणायाद्य घोरम् ॥१३॥

पा.लि.प.सं. १८

शिखरिणी. इदं कार्यं धैर्यान्निजमनसि कृत्वा नरपतिः,
प्रतीतस्त्रैलोक्ये त्रिभुवनसमुद्धारहितकृत्।
समेत्यामात्यानामनुमतमतः कार्यनिवहं,
वहन् पुण्यारण्यं समगमदथो भूमितिलकः ॥१४॥

**ततश्च—**

अनु. गोकर्णतर्णकालीढं गोकर्णकुशराजितम्।
गोकर्णमगमत्तीर्थं गोकर्णमुनिनिर्मितम् ॥१५॥

तच्चानणिमगुणगणनीयपुण्यनिचयोद्भासितासितागण्यमुनिजनसङ्कुलमाश्रममण्डलमपश्यत्, ब्रह्मसदनमिव परमहंसाकलितं श्रुतिगणाभ्यासपरं च, शक्रसदनमिव विबिधविबुधभूषितम्, हरमिव शिवासक्तचित्तं नाशितमनोभवं च, सुरकुलमिव सेवितगुरुं, गुरुगृहमिव सवकं ताराभ्यासपरं च, उपवनमिव सजपं वर्जितकण्ठकं च, विधुमण्डलमिव सकलकलं, हरिणसहितं च, यमसंयमसहितमपि यमसंयमरहितम्, योगसहितमपि अयोगम्, रामाराधनपरमप्यरामाराधनपरम्, विभूतिभूषितमपि अविभूतिभूषितम्, कुशासनस्थितमपि न कुशासनस्थितम्।

**तत्र च—** केचन दन्तोलूखलिनोऽपि न पक्षिणः, केचन क्षीरपा अपि न वत्साः, केपि च वाताशना अपि न भुजङ्गाः, केऽपि च शीतवातवर्षासहा अपि न गिरयः केचिद् भूमिविवरचरा अपि न अजगराः, नक्तम्भोजिनोऽपि न कौशिकाः केचन अभ्यस्तसमाधयोऽपि आधिरहिताः केचन मरीचिपा अपि न जीवञ्जीवाः केचन भवासक्ता अप्यभवासक्ताः।

**यत्र च—**

आकण्ठसलिले मग्ना भृङ्गमालापवर्त्तिनः।
तपस्विन इवाभान्ति पद्मा पद्माकरेषु वैः ॥१६॥

तत्र तैस्तपस्विभिरभिनन्दितोऽभ्यर्हितस्तपस्तप्तुमना मनागपरितुष्यन्मनाः स्वर्धुन्यवतरणसञ्चितचिन्तालतातातिसन्तन्यमानमानससमूहस्तदाश्रमभूमौ स्थण्डिलमुपकल्प्य नानाविधतपस्समूहमभ्यस्तवान्।

**तत्र च—** विगतसमाधयोप्यविगतसमाधयः, तदद्भुततरतपः समवलोकनजातविस्मयाविस्मया अपि सकलजडजीविनसमुद्धारकारणमवलोकयन्तः, करुणया विलसन्तः, सन्तस्सस्मितमवोचन्।

---

**पा.लि.प.सं. १८क, पा.लि.प.सं. १९, पा.लि.प.सं. १९क,**

ततश्च—

वसन्ततिलकम् त्रैलोक्यवासिजनतायमतापभीति-
निर्वापणाय कृतभूरितरप्रयत्ने ।
भूपे तपस्यति सहस्रसभाजनानां,
पुण्योच्चयेन परितुष्यतु पद्मसद्मा ॥१७॥

" तस्मिँस्तपस्यति महीपवरे वरेण्या,
देवाः शरण्यमथ तं शरणं समीयुः ।
पद्मोद्भवं भयविचित्रितचित्तमारा-
दानम्य पादयुगलं कथयाम्बभूवुः ॥१८॥

" देवा ! भयं न भवति क्षितिपालपुत्रात्-
संभावनीयमिदमित्थमनर्थहेतुः ।
आनन्दकारि भवतां भविताऽचिरेण
गङ्गावतारविधिना विधिनाभ्यवादि ॥१९॥

" आगम्यतां सह मयैव निजान्विमाना-
नारुह्य सत्वरतरैरितरैः स्ववाहैः ।
स्वीयं विमानमधिरुह्य मरालबाल-
पा.लि.प.सं.२० संचालितं तमनु तत्कृपया जगाम ॥२०॥

" दृष्ट्वा रघुं स्थितमथोग्रतपः समाधि-
मारूढमूर्ध्वकृतबाहुमलोलचित्तम् ।
सम्यग्जटातटनिषक्तकपोतपोतं
भोगीन्द्रकञ्चुकधरं धरराजतुल्यम् ॥२१॥

" संवालितं प्रबलभूरिपिपीलिकौघैः,
संबर्द्धिनालमयदेहधरं धराभम् ।
दन्तोत्करप्रवलदश्रुसमूहमारात्,
सम्प्रत्यवोचदचिरेण चिरं विरञ्चिः ॥२२॥

" राजन् ! त्वदीयतपसा परितोषितोऽह-
मन्यैर्दुरापमपि पाहि मम प्रसादात् ।
यत्ते मनोरथगतं मनसा तदाशु,
भूयो भविष्यति वद प्रकटं पुरस्तात् ॥२३॥

" इत्थं निगद्य गगनस्थमरालबाल-
सञ्चालितः पुरि सिषिञ्च कुशोदकेन ।
सोच्छ्वासचित्रधिषणाधिगतप्रमोदः,
स्वस्थो नभःस्थितमजं कलयाञ्चकार ॥२४॥

वसन्त. देवं प्रणम्य मनसा सहसाऽऽदरेण
धातुश्चरित्रमभिवन्द्य स नन्द्यमानः ।
भक्त्यानुरागकलया सलयाभियुक्त्या
प्रेमाश्रुगद्गद्‌गिरा सुरवर्यमैडीत् ॥२५॥

स्रग्विणी. सदा कारणं कारणं नृत्वजाते-
र्निराकारसाकारमात्रस्वरूपम् ।
असत्सत्सरत्सर्वसंसारमूलं[१]
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥२६॥

कुतो तातमात्रं किमर्थं कमर्थं
समर्थो न संसाधितुं चिन्तयानम् ।
भ्रमच्चक्षुषं वक्रचातुष्कमासं,
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (२) ॥२७॥

,, कदाचिन्मुदा चारुवृन्दावनेऽन्त-
स्तटिन्यास्तटे गोपगोपालबालम् ।
भ्रमँस्त्वं पुरं नेतुमुद्युक्तकामं
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (३) ॥२८॥

,, अहोभि र्हरिर्गोपगोपालरूपं
तदापश्यदात्मस्वरूपं स रूपम् ।
मुदा संस्तुवन्तं भ्रमभ्रंशहेतो,
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (४) ॥२९॥

,, पदाराधनासाधनासावधानाः,
सदासिद्धगन्धर्वदेवादिसङ्घाः ।
समाधाय चित्तं तपश्चर्तुकामाः,
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (५) ॥३०॥

,, सदा शारदानारदाद्यैर्मुनीन्द्रै-
र्लसद्गद्यपद्यैरभिष्टूयमानः ।
उपास्ते समस्तं यदापाररूपं,
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (६) ॥३१॥

,, हृदावेदमावेदयन् यद् हृदिस्थो
मुखान्नैगमं सङ्गमाविश्चकार ।
तदर्थावबोधादसावेकविश्वं
विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (७) ॥३२॥

स्रग्विणी. तपस्यन्त्यकामास्सकामाश्च केचित्
कदाचित्कथञ्चित्कुमारादयोऽपि ।
मनोजातमात्रं ददानं शरण्यं
पा.लि.प.सं.२१ विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये (८) ॥३३॥इति॥

अनु. पितामहमभिष्टूय प्रपितामहशोकतः ।
उद्धरामि विधेयत्वाद्वरदानं विधेहि मे ॥३४॥

'' सहस्रकरवंशोऽयं सहस्रकरभुक् क्षितौ ।
आकल्पं कल्पतां कल्पः स्वल्पोऽप्येष वरोऽस्तु मे ॥३५॥

ततस्तदस्त्वित्यनवरतपवित्रतरनिगमोद्गिरणपूततरयाऽनुरणकलाकलितरया गिरा नयेत्युदीर्येदमवादीत् ।

'' त्रिदिवात् निपतन्तीयमवन्यां च रसातलम् ।
जवान्नेष्यति गङ्गेयं कस्तां धारयितुं क्षमः ॥३६॥

'' ब्रह्माण्डधारणे शक्तः शक्तो यः परिपालने ।
महालयविधौ शक्तः स गङ्गां धारणे क्षमः ॥३७॥

'' महत्पदेन महितो महदाद्याश्रयः सदा ।
तेन देवाधिदेवेन विनाऽन्यं न विलोकये ॥३८॥

'' अतो दुस्साध्यतपसा सहसा मनसा हरम् ।
आराधय धराधीश स ते कार्यं विधास्यति ॥३९॥

'' इति वाचमवोचद् वै जगाम जगतां पतिः ।
गङ्गामालब्धुकामैश्च साकं नाकं सुरोत्तमैः ॥४०॥

ततश्च विरञ्चिविचित्रपवित्रवचनमिदमालोचयन् कठिनतरतपस्याप्रासादनसमासादितस्थिरचित्तश्चिन्ताव्रततिमविगणय्य दुश्चरतरतपः समारब्धवान् ।

शार्दूल वि. यत्नाच्छुद्धतरं तदैकचरणाङ्गुष्ठेन भूमीतलं
विष्टभ्याशु सहस्रभानुवरणो दत्तोर्ध्वदृष्टिश्चिरम् ।
मुक्ताहारहरप्रसादनपरः पूर्णंशरत्संमितं
कालं बालमृणालकोमलवपुः क्षत्राङ्कुरोऽकालयत् ॥४१॥

अथ महारथतीव्रमनोरथपरम्परामधिकलय्य [२]तत्कारितामरतपःसमासादितचित्तचञ्चलतालताप्रसरः, निजदयालुवरविरुदस्खलनभावं भ्रान्तमनाः मनाङ्मतां प्रियां सविलोचयन्नवोचत्– प्रिये ! रघुवंशप्रदीपदिलीपसूनुं दुश्चरतपःसमासादित-

चित्तोद्वेगवल्लरीवलितोऽहम्, तदद्भुततरवरप्रदानाय सत्वरतरमुपसंयामि। ननु प्रमथगणास्तानि तानि वाहनान्यधिरुह्य मामनुसरन्तु, इत्युच्चार्य प्रतिदिनमानन्दिनं नन्दिनमारुह्य तमभिसर्त्तुमनाः प्रमथगणैर्गगनाभोगपरिसरमापूरयन्समेत्य दिगम्बरोऽप्यम्बरस्थस्तमवोचत्।

वसन्ततिल. राजन्! सहस्रकरवंशकरीरवीर-
धीरोऽसि दुश्चरतपःस्वसमाधियोगात्।
यत्ते मनोभिलषितं भविताऽधुनैव
नाप्राप्यमस्ति भुवनेषु मयि प्रसन्ने ॥४२॥

अनु. तमपश्यद्वृषस्कन्धो वृषसंस्थं वृषाकपिः।
स्वस्थं स्वस्थस्तदालोकादानन्दस्यन्दतुन्दिलः ॥४३॥

ततश्चानवरततरध्यानधारणादिकलितसमाधिसमासादितस्मरहरचरणारविन्दविगलन्मकरन्दरसासारसेवनविनीतपरिश्रमश्रमनिर्गततमसातमः साध्यकपटयोगिनां प्रचुरतरसमुल्लसत्प्रेमलताललितलास्यसमाकुलितमनसा सहसा प्रणम्य (महेश्वरं)[३] भक्त्युद्रेककलया लयान्वितपरयाऽनेकजन्मार्जितसुकृतपुण्यया वाण्या स्तोतुमुपचक्रमे–

स्रग्विणी. हरिब्रह्मशक्रादिभिः स्तूयमानं
यमादेककल्पादिपर्याप्तिकालम्।
कलां कोमलां वैधवीं धारयन्तं,
पा.लि.प.सं.२२ जगच्छङ्करं शंकरं तं प्रपद्ये (१) ॥४४॥

" अकामं सकामं सदा पूरयन्तं
सदा कामदं कामदम्भापहारं,
सुराणामभीमं सुभीमाभिधानं
जगच्छङ्करं शंकरं तं प्रपद्ये (२) ॥४५॥

" धराधारदेहे दधद्वामदेहं
सदा वामदेहं (नगेशात्मजायाः)[४]।
सदा काशिकाकाशिकामप्रपूरं
जगच्छङ्करं शंकरं तं प्रपद्ये (३) ॥४६॥

" अरूपं परब्रह्मरूपस्वरूपं
गुणातीतमाद्यं गुणातीतशोभम्।
गणेशानसूनुं गणेशानमारा-
ज्जगच्छङ्करं शंकर तं प्रपद्ये (४) ॥४७॥

स्रग्विणी. पुरारातिभूतं पुरारातिभूतै
हरन्तं च मन्युं समन्युं प्रशान्तम्।
विरञ्च्यादिभिस्स्तूयमानं विमानं
जगच्छङ्करं शङ्करं तं प्रपद्ये (५) ॥४८॥

,, भुजङ्गेशभूषाविशेषाभियुक्तं
भवानीपरिष्वक्तवामार्धभागम्।
भवानीतिपीडाहरं भासुराभं
जगच्छङ्करं शंकरं तं प्रपद्ये (६) ॥४९॥

,, सदापादपङ्केरुहासक्तदेवा-
सुरानीकभृङ्गावलीसेव्यमानम्।
अयोगं सदायोगयोगाभियुक्तं
जगच्छङ्करं शंकरं तं प्रपद्ये (७) ॥५०॥

,, दयासागरं सागरं कण्ठदेशे
शरीरे शरीराशराणामगम्यम्।
हिमानीसुतानीयमानैकमानं
जगच्छङ्करं शंकरं तं प्रपद्ये (८) ॥५१॥

**इति स्तुत्वान्यदपि—**

आर्या. भूधरभूभासुर ! भगवन् भविकस्य भाजनीभूत।
पा.लि.प.सं.२३ भवभयभावितभावे ! भव ! भवभय भूयसे भूयः ॥५२॥

स्रग्धरा. शंभुः शं भूभराणां निजभजनजुषामाददद्दीनदीने
दायं दायं दवौघं गिरिवरवसतिः सर्वदानन्दिनन्दी।
कामं कामं दहन् यो रतिविरतिकरः कामिनां कान्तकान्तं
सोमः सोमार्द्धधारी स दहतु दुरितं नाकपाली कपाली ॥५३॥

,, शेषाशेषाननौघोच्चलगुरुरसनागेयनामोपनामा
पद्मा पद्मासनोऽपिस्तवनकृतरुचिर्गोविचारी विचारी।
वामां वामाङ्कसंस्थां रुचिपतिबहुधाचारूदेहोरुदेहः,
सोमः सोमार्धधारी स दहतु दुरितं नाकपाली कपाली ॥५४॥

,, वारीवारीभदाने प्रभवति हरितां भासमानः समानः,
स्वेषु स्वेषूद्यदग्रं हरिवसतिरभूत् सर्वदान्योवदान्यः।
स्वामी स्वामीव हन्ता सुरसरिदवंपन्नीलकान्तालकान्तः,
सोमः सोमार्द्धधारी स दहतु दुरितं नाकपाली कपाली ॥५५॥

अनु. त्वयि प्रसन्ने देवेशे देवेशेच्छितदायके ।
पुण्योच्चयैर्मे दुरापा मेदुरापा कथं भवेत् ॥५६॥

" इति स्तुत्वा धराधीशो धराधीशसुतापतिम् ।
विरराम तदा मन्दं गिरीशो गिरमाददे ॥५७॥

शिखरिणी. स्थिरोदारोदाराद् विमलतरनारायणपदा-
त्पतन्तीं सद्धारां प्रचुरभरमाराच्च शिरसा ।
हरो दध्रे योगात् प्रकटितजटाजूटविहरां
दिशां हाराकारां हिमगिरि विदारां जवभरात् ॥५८॥

मालिनी. हिमशिखरिशिखाग्रं शेखरेन्दुं निबद्ध्य
प्रचलित इह यत्नादूर्ध्वतारीश्वरोऽपि ।
प्रमथगणसमूहैस्सार्धमर्द्धेन्दुमौलिः ।
समवददितिदेवानच्छमच्छासनेन ॥५९॥

अथ महारथधुरन्धरः स्मरहरसम्प्रसादसमासादितामन्दानन्दसन्दोहतुन्दिलितचित्तो विदलितचिन्तानलज्वालजालः, समुल्लसत्प्रमोदप्रफुल्लमुखपुण्डरीकः पुण्डरीकाश्वमेधादिसप्ततन्तुविधानावाप्तफलसमूहः समूहोल्लक्षितस्वमनसा सहसेतिचिन्तयामास—

स्वागता. अंशुमन्नृपतपःपरिणामैः शंकरः सममशंकरणोत्कः ।
यद्बभूव रविवंशजपुण्यारण्यकल्पतरुभिः फलितं तत् ॥६०॥

इति चिन्तयमानः मानसोल्लाससन्तोषितसकलेन्द्रियनिवहो बहोः कालादात्मपरिपूर्णमनोरथः सकलमुनिवर्यधुर्यैस्संस्तूयमानो मानोन्नतकन्धरः समीहितं धरन् लोचनालोचनाञ्चनैस्सार्द्धमर्द्धेन्दुमौलिस्मरणसंजातपुलको विपुलेन कालेनाभ्यगच्छत्। तत्र च तुहिनगिरेरुपत्यकाधित्यकापरम्परामधिरुहन् बालकण्ठीरव इव स्मरहरसमासादितशिखरिशिखरमपश्यत्। एतस्मिन्नेवावसरे सकलसुरसिद्धसमूहैरनुगतः सस्वरेण वचसा सुरसिन्धुं समाहूयाचिरतो विरञ्चिरप्युचितकालमनीषितं सकलसज्जनकुलाभिलषितमजिज्ञपत्—

वसन्ततिल. शून्यं पुरं मम पुरस्य हरेर्हरेश्च
सौख्यायनीर्भवति नो जनताभ्युपैति ।
भूपोऽप्यसौभवभवैर्भवभक्तिभावै
र्वास्तव्यतामगमदश्रुपुरीयमस्य ॥६१॥

पा.लि.प.सं. २४

वसन्ततिल. तस्मादुपेहि वसुधां तु सुधानुकारि-
वारांगणैर्गमय शक्रपुरादिलोकान् ।
लोकानलोलमनसा कलिपङ्कजाले
कालेन पूतमनसः सहसा विधेहि ॥६२॥

'' अष्टाङ्गयोगकलया सलयैस्समाधि-
योगैस्तपोभिरशनादिविवर्जनेन ।
शुद्धिस्तथा भवति नो भवतीव्रताप-
निर्वापिकातिघनवारिनिषेवणेन ॥६३॥

'' तत्र प्रयागमधि तीर्थनृपं ततो नु
वाराणसीं समुपयाहि पुरं पुरारेः ।
तस्योपकण्ठमुपभूषय भूरिवारि-
जालेन शंकरललाटमिवेन्दुलेखा ॥६४॥

'' भवभवभयभाजां यद्ददात्तीह पुंसां
तव जललवसेवा सर्वदेवाधिपत्यं-
किमु भवति विपाकैः कृच्छ्रचान्द्रायणाद्यैः
क्रतुवरहयमेधैर्वह्निभिः किं समेधैः ॥६५॥

'' यमसदनगतानां नारकैराहुतानां
सगरसुतशतानां देहजानामशान्तिः ।
ललिततरमवन्यां याहि वन्यप्रदेशं
चयितुमिह च धन्या का त्वदन्या चकास्ति ॥६६॥

अनु. जटाटव्यां जलोत्पीडैरापतन्ती त्रिविष्टपात् ।
अष्टमूर्त्तिधरः शंभुःकष्टाद् द्वारं पिधाष्यति ॥६७॥

रथोद्धता. इत्युदीर्य गगनस्थसुरादीनभ्यधादचिरतोऽपि विरञ्चिः ।
व्योमयाननिवहानधिरुह्य त्वर्यतां सुरधुनीमनुगन्तुम् ॥६८॥

वसन्ततिल. गङ्गावतारचरितञ्च विदा निबद्धं
गायन्तु मञ्जुसुरकिन्नरसिद्धबध्वः ।
कल्पद्रुमावनितले सविलाससलास्य-
हास्यास्यकम्पनपराः परसौख्यभासः ॥६९॥

'' स्वर्लोकवारवनिता मिलितादरेण
सन्मङ्गलानि भुवि गाङ्गमहे विदध्युः ।
नित्यं नवं नवमहो जनमाप्तुकामा
वामा भवन्ति भुवनेषु मनोभिरामाः ॥७०॥

वसन्ततिल. पुष्पोत्करा नवविनोदवधूसमूहा,
गृह्णन्तु दामगुणधामविधानदक्षाः ।
स्वीयान् विमाननिवहानवसज्जयन्तु,
सज्जीभवन्तु सुरसिन्धुगमाः स्वलोके ॥७१॥

,, शून्यानि पानभवनानि सुशोधयन्तु
कुर्वन्तु नीरववनाश्च तथोपकार्याः ।
गङ्गागमे न भुवि भूरिजनोऽधिगन्ता
तेभ्यः स्थलानि रचयन्तु सुराः ! समन्तात् ॥७२॥

,, वीणामृदङ्गपणवानकगोमुखेभ्यः
इन्द्रारवस्समभवद्द्रुतदुन्दुभिभ्यः ।
इत्थं ध्वनिस्समभवत्तुमुलस्तदानी-
मानीष्टतां स्वबहुनाऽपदिभानुवर्गः ॥७३॥

आर्या. परिवह भूमीत्युक्ता परिवह मार्गं हिमाद्रिशिखरस्य ।
परिवह मुक्तिं लोके परिवह सन्तोषमीशनगरस्य ॥७४॥

वसन्ततिल. वाराणसीविविधतीर्थविलोकनोत्का
सोत्का बभूव सुरसिन्धुरपि क्षणेन ।
पद्मोद्भवप्रकटवागनुमोदनेन
सज्जीबभूव जडजीविनिमज्जनाय ॥७५॥

द्रुतविलम्बित अथ भगीरथभूमिपुरन्दरो दरवरोज्झितमानससुन्दरः ।
हिमगिरेः शिखरे समलोकयत्स्मरहरं हरमिन्दुसमुज्ज्वलम् ॥७६॥

शार्दूल. क्रुद्ध्यच्छ्रीकपिलर्षिलोचनपुटाविर्भूतवह्निस्फुटा-
ज्वालाभस्मितसागरावनिभृतां सम्पूरिताशावटा ।
शंभोः प्रौढजटाटवीन्दुविकटा[५] वासोद्भवत्संकटा
मन्त्रेण प्रकटास्तुभक्तिनिकटा गङ्गातरङ्गच्छटा ॥७७॥

मालिनी. सगरसुतशतानां तापनिर्वापहेतुः
परिसरति कदा मे लोचनालोचनेषु ।
हिमनगवरशृङ्गोत्सङ्गसंसर्गभङ्गः,
कथमपि सुरगङ्गोत्तुङ्गरिङ्गत्तरङ्गः ॥७८॥

---

पा.लि.प.सं. २५

तदानीं तुहिनशिखरिशिखरमवभासयन् चन्द्रशेखरोऽपि—

अनु. हिमाचलेन्द्रकूटाभं जटाजूटं विधाय सः ।
बहुयोजनविस्तारमाह्वयत्तां तरङ्गिणीम् ॥७९॥

'' बहुयोजनविस्तारां तारापतिगणोज्ज्वलाम् ।
धारां व्योमलताधारां कृत्वा खान्निपपात सा ॥८०॥

शार्दूल. भ्राम्यन्मन्दरकन्दरोच्चलपयो डिण्डीरपुञ्जैरिव
प्रोद्यद्रक्तिमशर्वरीश्वरकरोत्फारप्रकारैरिव ।
गङ्गोत्तुङ्गतरङ्गरिङ्गणचमत्कारैर्नमोऽभूत्तदा-
नानाभूरिजनुर्भवैभवभृतां पुण्यप्रकाशैरिव ॥८१॥

श्रीपतेश्चरणपङ्कजजन्मा माकरन्दनिकरो यदि नेदृक् ।
तत् कथं परमहंससमूहैः सेव्यते सुरसरिज्जलसंघः ॥८२॥

शिखरिणी. जटाजालच्छन्ना लघुशफरमालेव तरला
बहिर्गन्तुं नैषीत्ततनिजरयान्तर्गतभयात् ।
तदा भ्रामं भ्रामं शिथिलितशरीरा श्रमवशाद्
बहुं कालं गङ्गाऽगमयदवलम्ब्य स्मरहरम् ॥८३॥

लसत्कनकपिंगलाभिरमितस्तदाधूर्जटेः
जटाभिरभितोऽपि तां किमु विभाति गणपः कथम् ।
किमु परिधिना विधोर्मण्डलं लसत्-
कनकपञ्जरे किमु मरालबालोच्चयः ॥८४॥

किमु कनकलताभिरावृतः किं
दवदहनोज्ज्वलकीलमालया वा ।
किमु गुरुमणिभिस्तुषारसानु
र्लसति जटासु शिवस्य गाङ्गमम्भः ॥८५॥

मालिनी. बहुतरदुरदृष्टैर्दृष्टमत्राद्यमद्य
स्मरहरणकपर्दामर्दितापत् स्थिराऽभूत् ।
अथ कथमसमर्थः साधयेल्लुप्तसंज्ञः
स्तवनरचितशुद्धिर्बुद्धिरागान्नृपस्य ॥८६॥

कामधेनुभवैश्छन्दोविशेषैः सविशेषतः ।
स्तुवेऽहं कामशमनं श्रये कामदुहां प्रियम् ॥८७॥

इति विविधविकल्पाकल्पनानल्पजल्पै
लर्घुतरमथ कालं यापयन् भूपबालः ।
निजमनसि विधाय प्रौढग्रैवेयगङ्गा-
चरणपरिचयार्थं चन्द्रचूडं ववन्दे ॥८८॥

**इति साहित्यपारावारपारीणकविताकान्तारकण्ठीरवसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित-बालकृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कस्तृतीय उच्छ्वासः ।।३।।**

❖❖❖

---

**पादटिप्पणी**

१. अशुद्धः पाठः 'असत्सत्सरत्सर्वसंसारमूलं' इति शुद्धः पाठः ।
२. तत्कारिनमस्तपः ।
३. मूलग्रन्थे नास्ति ।
४. मूलग्रन्थे अंशोऽयं नास्ति ।
५. प्रविकटा ।

# चतुर्थोच्छ्वासः

॥ श्रीगणेशाय नमः ॥

मीलिनी.

प्रतिदिवसमनङ्गारातिमुख्योत्तमाङ्गा–
भरणकमलसङ्गा वारिधावुत्तरङ्गाः ।
शशिधवलभुजङ्गाधीशवर्णोत्तमाङ्गा
प्रभवतु मम भूयः पापभङ्गाय गङ्गा ॥१॥

सदातरं पदं दयाधरासु सदा स्मरम् ।
कृपाशिवावरापरा भवं वलत्सुमं कदा ॥२॥

दान्तं वन्दे सारं कान्तं धारावारा संचारं स्मारम् ।
साराधारं चाचंकारं भीमं चित्तं काशीवासम् ॥३॥

धीरं देवं तारं शान्तं धारं वासं ध्याये स्मारम् ।
वारं धारं चञ्चन् हृष्यत् स्थाणुं मित्रं वासं गङ्गे ॥४॥

त्रिजगति सहृदयकमलजनितहृदि-
धरवर दिशि धृतविकलयतिः ।
हरिहृदि मुनिजनशुभतरकरधृत-
मनसि च निजजनशरणगतटरुहि ॥५॥

सुमूर्त्तिं सुकम्रं करालं वरोष्ठं
सितोरूं सुबाहुं विचारं कृपालम् ।
विषाङ्कं चलेन्दुं सुनालं घनाक्षं
यतोऽहंकृते तं गिरीशं हतारिम् ॥६॥

सुखकरं सुरुचिरं सुरवरं शशिधरं
परिसरं मृतहरं धृतगरं लघुतरं ।
वनचरं दरहरं स्मरहरं शुभकरं
गतजरं हतदरं गुरुतरं जनिहरम् ॥७॥

भवन्तं घनानासमानन्दमग्निं
दधानं विमायं रमार्द्धं परेशम् ।
वदेतं स्ववन्धं कदाऽहं मनोज्ञं
तमोघ्नं स्वपारं कृपौघं पदं तत् ॥८॥

सौख्यानां दातारं हर्तारं दुष्टानाम्
हन्तारं मूढानां मुक्तौघं गङ्गायाः ॥९॥

भूतानां (भूतेशं) हर्तारं धौरेयं पातारं ।
संलक्ष्यं ध्यायेऽहं वर्णौघानामोघम् ॥१०॥

धृतनयन शशिधवल निजशरवद्गुणधनद ।
विमलरुचिसुरसुरभिनिजवपुषि निजशिरसि ॥११॥

परिकलितहृदि भजत करकमलललिततर ।
क्षणदरदलित मरणयुजि निजमनसि ॥१२॥

वह्निं स्मर क्व ते देहं विदधतं भूतं पुरहरम् ।
मित्रे कृतरुचिदेवे कृतमतितुल्यं निजजने ॥१३॥

क्व पत्या परिवृतं नित्यं विदधतं,
काशीपुरवहं देवासुरचरम् ।
रुद्राक्षनिकरं भूतिं विदधतम् ॥१४॥

मायं प्रभुवरं पद्मार्चनहितम् ।
सत्कर्णनिकटे गायन्तमनिशम् ॥१५॥

सुखावासं स्फुरद्भासं लसद्वासं धरावासम् ।
महोल्लासं दिगावासं चितारासं गतायासम् ॥१६॥

धराधीरं शिरोनीरं महावीरं हरिच्चीरम् ।
रिपौभीरं लसद्वीरं मते धीरं समाधीरम् ॥१७॥

मायाहरण जायाधरण दायादरण कायाहरण ।
पापातरण चापावरण नापादरण तापाहरण ॥१८॥

रामाभरण कामाहरण वामाचरण दामादरण ।
धाराधरण साराचरण तारावरण नाराचरण ॥१९॥

विवुधत्राण मदनप्राण सुरभित्राण भुवनश्राण ।
जनतादान शरसन्धान गरलापान गिरिजामान ॥२०॥

मुखसन्धान निजसम्मान बहुधादान वृषभायान ।
कुरुकन्तान चरणध्यान मनुगङ्गान वलितप्राण ॥२१॥

कलये हरणं विलसत्करणी-
चरणं निपुणं रसिकं हरणं ।
चतुरं विपुलं कलिलं यमिनं
सुखदं सुरसं रसिकं वशगः ॥२२॥

पा.लि.प.सं. २७क

सहस्राक्षैस्तुल्यं लसच्छषाभूषं
गलद्गङ्गंध्याये वृषारूढं वन्दे ॥२३॥
समुद्यजेत्राज्वं पराभूताराविं
पृथापुत्रप्रीतं भजे विश्वाघोषम् ॥२४॥
चिरं वै कर्तारं जनानां भर्तारम्।
भवाब्धेः सन्तारं मितं वेदे ॥२५॥
निराबाधं रुद्रं रसाधीशैर्वधम्।
पदेनैजं भक्ते कृपाधीनो दीनः ॥२६॥

नमत गिरिशं त्रिपुरशमनं धरणिधरजागणपतिनुतम्।
तमिह कलये भसितकलितं सुरवरनुतं दितिजदरदम् ॥२७॥

भवभयहरं पुरवरदरं भजत वरदं दमितदितिजम्।
विषमनयनं कनकवलयं लघु विदधतं क्व नु खलु भवे ॥२८॥

शंकरनन्दित वन्दितवासुकिनन्दिनि गायत रावणकामित।
सुन्दर धूनित चेता विवरघोषित भूधर बत तलयापित ॥२९॥

तनु गुरुं वशंकरं गतं शिवं हितं सुकम्।
धरं करं भजे वृतं भवं शरं वरं पदम् ॥३०॥

इति कामदुघैः पद्यैरनवद्यैरभिष्टुतः।
नुतोऽयं शंकरः शीघ्रमनुकम्पापरो हरः ॥३१॥

अद्याहमनवद्याभिर्गद्यपद्याभिरञ्चितः।
गीर्भिर्महीशपुत्रेण पूर्वजत्राणकारिणा ॥३२॥

जटाच्छदौघादुन्मत्तां गङ्गां गमिततापहाम्।
स्तुत्वा कामदुघैः पद्यैः सदाकामदुघैः स्तुता ॥३३॥

अथ स्मरहरजटाजूटविकटावटतटासुरवटीविडम्बनपरम्परापरिचयचतुरां चतुरुदधिकुहरपूरणपरम्पराराधितचरणकमलां कमलावलीललितविलासलास्यकलितां कलितन्तुच्छिदुरमेदुरजलपूरां, पुरारातिशिरस्तनिमश्रीमाल्यानुकल्यामनल्पाभप्रसरसंशोषितभवभवपङ्कां, पङ्कावलीलुठितकमठपाठीनकठोरपृष्ठतटकठिनितजम्बालपरिलम्बालतासन्ततिसङ्गतविकसन्नवकुसुमसमूहसङ्कुलमिलदलिकुलकलमञ्जुगुञ्जारवाकर्णनदत्तकर्णगोकर्णतर्णकावलीलीढनवोपलालङ्कृतसैकतप्रदेशाम्, प्रदेशान्तरागतनानाजीविजनसञ्जीवनोन्मज्जनजर्जरितजीर्णतटीनिकटविकटपाषाणपरम्परास्खलनसन्त्रस्त-

पा.लि.प.मं. २८, पा.लि.प.सं. २८क

समस्तवनचरचयपरिगृहीतगृहसम्भारामाभरणायमानवारिभरभूषितभूवलयां, नानातीर्थनिवहविरचितसङ्गां प्रबलतरङ्गां गङ्गां समवलोकयितुम्—

मालिनी. अथ सुरवरसङ्घैरप्सरोभिः समेतो
विविधकुसुममालाजालमालम्बिनीभिः ।
विविधविबुधवामामन्दसन्दोहकन्दः
समभवदथ सज्जः कञ्जभूरादिदेवः ।।३४।।

द्रुतविलम्बित यमकुबेरजलेशसुराधिपाः सुरसमाकुलसैन्यससमन्विताः ।
शिवजटावटचारुनिवासिनीं समवलोकयितुं समगुस्तराम् ।।३५।।

वसन्ततिल. नानाविमाननिवहेषु मुदा चरन्तो
गङ्गावतारचरितानि विचारयन्तः ।
स्वान्तप्रमोदकलयासलया हसन्त
स्तां लोचने विचरितुं समगुर्हि सन्तः ।।३६।।

,, पाताललोकतलवासिविलासिकल्पाः
सर्पास्तदासमसरन् स्वविलासिनीभिः ।
दैत्या अपि प्रगतचारुविकल्पमत्या-
नत्यादृताः समभिशंसुरमुं सुरेशीम् ।।३७।।

द्रुतविलम्बित सुपटहानकगोमुखझर्झरैःकृतरवैर्बहुनर्तनशीलिनः ।
समसरन्सुरसिद्धमनोहराः नटवराः सुरसिन्धुमुदे तदा ।।३८।।

,, शुकपराशरपर्वतनारदस्मरहरस्तवनेषु विशारदाः ।
समसरन् रभसा विधृतादराः सुरधुनीमनुसप्तमुनीश्वराः ।।३९।।

,, सुकवयः कवयश्च मनोहराः सुललितार्थपदस्थितिकारिणः ।
विमलकोमलमंजुरवास्तदा सुरधुनीमगमश्च पतिव्रताः ।।४०।।

,, इदमुमुदन्तवरं वसुधातले, परिकलय्य वरस्थितजीविनः ।
निजहिताय यथा नवशालयो मुमुदिरे मुदिरेण समुक्षिताः ।।४१।।

अनु. पुरे पुरे जनपदे ग्रामे ग्रामे गृहे गृहे ।
जनाननेषु समभूदुदन्तः कुमुदाकरः ।।४२।।
देशे देशे दुन्दुभिध्वान आसीत्,
ग्रामे ग्रामे डिण्डिमानां निघोषाः ।
घोषे घोषे वेणुनादस्तदानीं,
प्रत्युद्याने स्वर्गलोकाधिसिन्धोः ।।४३।।

पा.लि.प.सं. २९, पा.लि.प.सं. २९क

मालिनी. गिरिपुरवरतुच्छस्थानकुग्रामभाजा-
मपृथुपृथुकसङ्घैः स्त्रीजनैराकुलानाम् ।
भवति निरयगानां देवलोके कुलाना-
मिति कलकलरावः प्रादुरासीज्जनानाम् ॥४४॥

,, अहमहमिकयाग्रे यानगानां प्रहर्षाद्-
दलितवसनभूषाव्याकुलानां जनानाम् ।
तुरगरथसहस्रैरुद्गतानां समन्ता-
दिति कलकलशब्दः प्रादुरासीत्तदानीम् ॥४५॥

तदा निरन्तरनिगमधारणानिर्मलितमेधा वेधाः सुधानिधिधरं समवबोधयत् । निखिलदेवगणचक्रचूडामणिमरीचिनिचयनीराजितपदाम्भोरुह शंभो ! किमेनां नोज्झितुमीहसे । तव जटाजूटकूटावटनिकटे संकटमनुभवन्ती विगतविस्मया विषहरणव्रततिततिभिरवरुद्धा पन्नगीव मन्त्रयन्त्रैर्नियन्त्रिता चन्द्रलेखेव कनकमयशलाकानिर्मितपञ्जरे परिताम्यन्ती दुःखमनुभवन्ती हंसीव वरीवर्त्ति तदेनां सकलजडजीविजनोपकाराय सम्मोचय, त्वन्तु परोपकारमयमूर्त्तिः सुमूर्त्तिभिः परिख्यातोऽसि, विलम्बावलम्बनमयुक्तमित्युक्त्वा तूष्णीमास । स साम्बशिवोऽपि निजार्द्धैकजटाग्रादेनामुत्ससर्ज । ततश्च विमलतरयन्त्रधारानुकारिधारिधारया रयात्, दिवं हिमगिरिभुवं च समाप्लावयत्, तदानीं च सुरसिद्धकिन्नरयक्षगन्धर्वगुह्यकादय उच्चैर्जगुः स्तुवन्तोऽपरे ननृतुः । सुराङ्गना अपि कोमलकरतललालितैः कल्पतरुकुसुमनिकरैराच्छादयामासुः । सुकवयश्च नानावर्णरचनया सम्वर्णयामासुः-

शिखरिणी. दिशां कण्ठे मुक्तामणिविमलहारप्रतिसरा,
परानन्दावेशादधिधरणि काशीं प्रतिसरा ।
तदा मध्येव्योम स्फुरणचतुरा शुभ्रमकरा,
रराजोच्चैर्गङ्गा विमलशरदभ्रभ्रमकरा ॥४६॥

शार्दूल. गर्जद्दिग्गजपुष्करान्तरचरद् यत्फूत्कृतैरुज्झितं
मुक्ताजालमयप्रवालसुषमां धत्तेतरां पुष्करे ।
मल्लीमाल्यसमुल्लसत्सुरनदीवक्षोजभूभृत्तटी-
प्रान्ते शुभ्रपटीयसि प्रतिदिनं तद्भाति गांङ्ग पयः ॥४७॥

शिखरिणी. पयः पूरभ्रान्त्या क्षुधिततरहंसैरभिगता,
शरन्मेघभ्रान्त्या विपुलचपलाभिः परिवृता ।
चिरञ्जीवैर्जीवै[१]र्हिमकरकरभ्रान्तिमनसा,
धरा धाराधारा तव विमलवारामनुसृता ॥४८॥

पा.लि.प.सं. ३०, पा.लि.प.सं. ३०क

पृथ्वी. ज्वलत्कनकसन्निभैर्मणिमरीचिवीचिप्रभै-
महन्मकरकच्छपैर्ललितराजिराजीवकैः ।
रराज जलमुज्वलं विपुलमुच्चलं स्वर्धुनी-
प्रभृततरमम्बरेऽम्बरमणिप्रकाशीकृतम् ॥४९॥

" वशीकरणमौषधं ललितमुक्तिवामभ्रुवः,
कृषीकररसायनं श्वपथु दुष्टपापात्मनां
ऋषीश्वरगणैः सदा निजवृषीतलेऽभ्युक्षितं
हृषीककुलपावनं जयति सावनं ते पयः ॥५०॥

अनु. गङ्गाधारावलोकाय स्वाद्विमानात्समुत्सुकैः ।
विरराजाक्षरीवक्रैः शतचन्द्रं नभस्तलम् ॥५१॥

ततश्च तुहिनशिखरिशिखराग्रनिपतननिर्झरझर्झरझणत्कारमुखनृत्यमान-सलिलसलीलललिततरलास्यकलाविलासनाससंभावितसहसा, सहसा समुत्सर्प्यमाणा मानोन्नतकन्धरा धराधीशविकटतटनिकटसङ्कटगुहागह्वरसुन्दरमन्दिरायमाणकन्दर-कन्दलीलीयमानमिलदलिकुलसङ्कुलचलिततरा, यशःसमूहसमुत्सारणकारणीभूतपयसा प्रस्खलत्प्रस्तरवरसंस्तरत्रस्यमानैणशावचमूरुचमरीचयचञ्चूर्यमाणचारुतरदूर्वाङ्कुरसम्प्ला-व्यमानपयसा परिवृत्य नृत्यावसानोद्धुरधराधीशमलङ्क्रियमाणारण्यानीभुवमुत्ससर्प ।

यस्यां च सङ्कुचत्कीचकचयचञ्चच्चारुतरसमाकर्णनरक्तस्वकर्णचमरीच-यरङ्कुपोतकपोतहरिणाकरिणः समुल्लसन्ति, यस्यां च, घनसाररक्तपीतसारकोविदार-सिन्धुवारसहकारमन्दारशितिसारकर्णिकारवानीरकरवीरजम्बीरपाटीरबीजपूरमालूरखदिर-कदरवदरतमालतालहिन्तालकृमालनक्तमालप्रियालदधिफलनिचुलपिचुलमधुष्ठीलगुड-फलविडलफेनिलोद्दालकदलीलाङ्गलीलवलीशाल्मलीधात्रीचित्रीजम्बूसर्जखर्जूरार्जुनजपान्य-ग्रोधशिग्रुमुनिद्रुमसर्वतोभद्रसप्तपर्णस्वर्णलाक्षादितरुलताजातयः समुल्लसन्ति, यत्रार्जुना अपि गाण्डीवरहिताः कृष्णसारसमवलम्बिनश्च, यत्र सहदेवा अपि न सहदेवानुकारिणः यत्र नकुला अपि न कुलीनाः यत्र कौरवा युधि स्थिरा अपि न युधिष्ठिराः शकुनि-पक्षपातिनोऽपि न कौरवाः यत्र मरुज्जातकम्पिता अपि न रावणानुचराः, द्रोणप्रिया अपि न पाण्डवाः, सोत्कलिका अपि न समुत्सुकाः, अपयोधयश्च कुमुदपनस-शार्दूलकलिता अपि न सुग्रीववानरव्यूहाः पीतरक्तपलाशकलिता अपि न दशाननसेवकाः, मकरन्दसहचरा अपि न माधवाः भुजङ्गप्रिया अपि न भुजङ्गप्रियाः यत्र चावकेशित्वं तपस्विविधवास्वेव, अनेकजटात्वं वटवृक्षेषु मुनिजनेषु च, नवपल्लविकत्वं वृक्षेषु, यत्र च निस्सारत्वं कदलीष्वेव, यत्र च, मदनकला अपि कामरहिताः याश्च सशोका अपि अशोकाः यत्र सप्तच्छदा अपि बहुच्छदावलिकलिताः यत्र सर्वतोभद्रा अपि

पा.लि.प.सं. ३१, पा.लि.प.सं. ३१क

सर्वतः कटुरसाः धार्तराष्ट्रसहिता अपि न दुर्योधनपृतनाः याश्च सदाशिवा अपि न सदाशिवाः, सरलपुन्नागार्जुनसङ्कुला अपि न सरलार्जुनपुन्नागकलिताः, सुररामाप्रिया अपि असुररामाप्रियाः सङ्केतकराजिता अपि न सोत्काः यमलार्जुनसहिता अपि न गोकुलभूपाः, एवं नानाविधभूमिषु विहरन्ती—

स्रग्धरा. शृङ्गाग्रादापतन्ती विकटतटगुहागह्वरेषु स्खलन्ती-
मन्दं मन्दं भ्रमन्ती भुवनहितकृते क्वाप्यमन्दं चरन्ती।
भूमीपृष्ठे लुठन्ती धवलिमविभवैश्चन्द्रकान्तिं हसन्ती
दुःखग्रामं ग्रसन्ती हरतु जनुरघं देवसिन्धुर्लसन्ती ॥५२॥

ततश्चानवरतनिगमगणसमुद्गिरणपरतया वाचा तमभिनन्दयन् विरञ्चिरवोचत्। चतुरुदधिपयःप्राचीरपरिकलितललिततरवसुमतीसीमन्तिनीभुजङ्गभुजदण्डखण्डितारातिमुण्डपुण्डरीकमण्डितयशःकासारः, सरभूतत्रिजगदुद्धारकारणीभूतपतिशिरोऽरण्यानीवल्लीमल्लीप्रसूनस्तवकायमानपयस्सङ्गगङ्गावतरणावितरणाप्रद ! भो राजन्! धन्योऽसि। धराधर सम्भूतधरणिधुरन्धराणां धौरेयोऽसि, मनुरिव प्रियवत्तासादितपुण्यश्लोकोऽसि। उत्तानपाद इव ध्रुवकीर्तिरसि, प्रह्लाद इव सद्गृहोऽसि, श्रीराम इव जनकप्रियोऽसि, कृष्ण इव कृतवसुदेवतर्पणोऽसि, महावराह इव वसुधोद्धारप्रवृत्तोऽसि। महाकच्छप इव विभृतभूमण्डलोऽसि, नृसिंह इव विदारितवैरिवक्षस्थलोऽसि प्रह्लादितचित्तवृत्तिश्च, वलिरिव वैरोचनसम्भवोऽसि सत्त्रिविक्रमाहृतराज्यसम्पद्धरश्च। शिव इव द्विजराजप्रियोऽसि गङ्गाप्रेमलताकलितश्च। शक्र इव शतकोटिदानधारणपरोऽसि, कुबेर इव त्र्यम्बकवर्द्धितप्रेमलताकलितोऽसि, धर्मराज इव जडजीविजनजीवोद्धरणोऽसि, वरुण इव प्रचेताऽसि, सप्तसमुद्राधिपतिश्च। परमदुष्करतरमिमं मनोरथं, महीमहारथ ! त्रिजगज्जय ? सङ्करोसगरोऽपिनाध्यगच्छत्, अंशुमानिवविनाशिततमस्समूहः समूहोल्लसितविविधधिषणासादितदुश्चरतरतपस्समूहोऽशुमानपि द्वात्रिंशत्सहस्रसमास्समाराधिततपसा समाराधितस्मरहरचरणोऽपि नासादितवान्। महाद्वीपप्रकाशनप्रदीपो नानाक्रतुवरसन्तोषितसुराधिपो दिलीपोऽपि नाप्तवान्, अनेकजन्मागण्यपुण्यैरिमं मनोरथं त्रिपथगावतरणरूपं समासादितवानसि,

शार्दूल. यावत्सप्तसमुद्रमुद्रिलमहीमुद्रा दरीदृश्यते,
यावच्चन्द्रदिवाकरौ जगदिदं सम्यक् प्रकाशिष्यतः।
गङ्गोत्तुङ्गतरङ्गरिङ्गणचमत्कारावतारोद्भवा,
कीर्त्तिस्ते नृप ! कृत्तिकापरिवृढस्पर्धाकरी स्थास्यति ॥५३॥

पा.लि.प.सं. ३२, पा.लि.प.सं. ३३क

शार्दूल. कुप्यच्छ्रीकपिलस्वलोचनपुटाविर्भूतवह्निच्छटा-
निर्दग्धस्थपुटापगाल्यबहिर्भूतावटासंकटा ।
तावत्स्वर्गपरम्परोपरिगृहे स्थास्यन्ति ते सागरा,
यावद्गङ्गातरङ्गरिङ्गणचमत्काराभिरामं जगत् ।।५४।।

मालिनी. कनकमणिविभूषाचित्रिताङ्गं रथाङ्गं
नवतरहयहेषाचक्रघोषाभिरामम् ।
रथवरमधिरुह्याग्रेसर क्षोणिपाल !
प्रचुरसुकृतभाजामद्य वाऽग्रेसरोऽसि ।।५५।।

'' बहुतरवरिवस्याभावमस्यास्समन्ताद्-
विचरतु तव सेना प्रेमभूसद्रसेन ।
अहमपि सुरसङ्घैस्साकमालोकनोत्कै-
पा.लि.प.सं.३४ र्द्रुतरयमनुगन्ता भूरिलोकोत्सवाय ।।५६।।

'' धरणितलनिवासाः सोत्सवा भूरिलोका
ग्रहगणभुजगेशा यक्षगन्धर्वसङ्घाः ।
परिकलितखनित्राः प्रौढकुद्दालभाजः
सुललिततरमस्या मार्गमाशोधयन्तु ।।५७।।

अनु. स्वर्गतश्शापपतिताः पतिताश्च महीतले ।
सुरसिन्धुं निरीक्षन्ते राक्षसीं तनुमास्थिताः ।।५८।।

इति विरञ्च्यनुशासनमाकलय्य प्रबलतरपापभञ्जनाय विरचितव्यूहा, दात्यूह-हंससारसचकोरकुररकुक्कुटचक्रवाकवकचक्रवालसकलकलारावसंकुलकूला, अनुकूलस्थ-तरुवरविकसल्लताप्रतानविलसत्कुसुमचयस्तबकसंस्तभ्यमानसलिला, सलीलनील-कण्ठनृत्यविकसच्छङ्खसम्भावितकच्छा, कच्छपमत्स्यकुललीयमानकुहरा, हराङ्कवृषभ-विषाणमण्डलोद्धृतवलितविषमपाषाणशतसंबाधाबाधितकिरणखरकिरणसञ्चारापसंस्थित-चमूरुचयसञ्चरणचञ्चूर्यमाणसानवोपलालङ्कृतसैकतसञ्चरन्मरालबालमालायितडिण्डीर-पिण्डसमलङ्कृता, कृतान्तभयसन्त्रस्यमानानेकजडजीविजनसङ्कुला, कूलस्थितसकल-हंसगणकलकूजनसमाकर्णनस्तब्धकर्णगोकर्णतर्णकानास्वादनप्ररूढदूर्वाप्रतानवितानायमानाच्छकच्छजला, जलान्तर्गतविकटग्रावगणसङ्घर्षणघर्घररवाकर्णनसम्प्रीयमाण-समस्तजीविजननानाविधविलमध्यभरभ्रमभङ्गा प्रससार–

पृथ्वी. क्वचिज्जलजराजिता जलजराजिता भूतले,
पतत्रिगणसेविता त्रिगणसेवितापापहा ।
भगीरथपताकिनी रथपताकिनीरोच्चया,
भवद्भवभयापहा भवभयापहा दृश्यते ।।५९।।

अथ समस्तविषमविषयविषव्याकुलितान्तःकरणासादितदुश्चरतरतपःप्रभावाराधितसमस्तयोगसिद्धिः सिद्धवरपूजितपादपद्मः, पद्मालयालालननिवृत्तचित्तः, चित्तान्तर्हरिचरणस्मरणपरायणान्तःकरणपवित्रतया निरन्तरसन्तन्यमानमानससंस्थापूर्वकमनेकसप्ततन्तुरचनया, हरेरर्चनमाचरन् आर्यावर्त्तान्तर्गतभूमौ यज्ञवाटं विरचयन् निह्नुतसकलकलिकलुषो वर्षीयान् जह्नुराजर्षिरतिष्ठत्। तस्य च यज्ञवाटकेनापि मनोरथेनाकुलिताङ्गा प्रबलतरङ्गा गङ्गाऽभिससार। तं यज्ञवाटमधिलुम्पयन्त्याप्लावयामास। ततस्तदविनयावासकोपसन्तप्यमानमनाः मनाग् विहस्याहोऽस्या गर्वायितं पश्यत समाप्य विनयोपक्रमं तद्देनामेणाङ्कशेखरमौलिमालां मैनाकमेनातुहिनगिरिलालितामपि कुम्भोद्भवः पाथोधिमिव योगकलया पाणौकृत्य नेत्रे निमील्य पीत्वा–

शार्दूल. ताम्यत्तीव्रतिमिङ्गलां समकरामातोभ्यमाणान्तरां
नक्राक्रान्तकठोरकच्छपमिलत्पाठीनपृष्ठाकुलाम्।
भ्रश्यद्भूरिसशोककोकवकयुक्सम्यक्सरत्सारसा-
मास्वाद्यर्षिवरः सरोषकलितापाङ्गामयात्कोपतः ॥६०॥

,, निष्पीतां भुवि जह्नुना त्रिपथगां श्रुत्वातिमात्सर्यतः,
प्रेमस्थानविलासनाशवशतः कौतूहलान्वेषिणः।
गौरी नृत्यति रोदिति स्मरहरो मुञ्चन्ति नाकं सुराः,
सर्वैः सम्भववस्तुनि प्रकटिते किं किन्न सम्भाव्यते ॥६१॥

पृथ्वी. पुरस्सरभगीरथो रथवरेण गच्छन् यदा
रथोल्लिखितमार्गगां त्रिपथगां न चालोकयत्।
तदा श्रमनिरर्थतां परिविभावयन् व्याकुलः,
परावलितकन्धरः कमलजातमालोकयत् ॥६२॥

,, विधे! किमिदमद्भुतं मम हि भूरिदुर्दैवतो,
विलोपमगमत्कथं सुरसरिद्भवो वा मम।
तदा विधिरवीवदत् विविधसान्त्वनाभिर्नृपं
भगीरथ दृढाधिभिः किमिह तथ्यमेवालपत् ॥६३॥

,, यदप्यपथगानुगा त्रिपथगा धुनी सर्वथा,
भविष्यति वृथा श्रमो न भविता श्रयं मा कृथाः।
निगद्य ऋषिनायकं समवदद्विरञ्चिस्तदा
मुने! किमिदमद्भुतं रचितवानसि त्वं क्रुधा ॥६४॥

पृथ्वी. जहीहि जडजीविनां निजहिताय तापापहां
पा.लि.प.सं.३६ तवापि [2]दुहितापदं समुपयास्यतीयं भुवि ।
भवज्वरमनेकधा समनुभूय बाधामिमां
हरिष्यति भवार्णवे जठरसम्भवं पापिनाम् ।।६५।।

'' विलम्बमथ मा कुरु त्यज निजौजसा श्रोत्रतः,
पवित्रयंतु गामियं मम वचोऽभिरामं शृणु ।
भगीरथपथश्रमं परिकलय्य नैजे हृदि
क्षिंतौ क्षपितकल्मषाः किमुत सज्जना नासते ।।६६।।

मालिनी. इति वचनविलासाडम्बरैर्वेधसोऽपि
प्रचुरकरुणयासावाशया वा कुमारी ।
श्रुतनिगमपवित्राच्छ्रोत्रतोऽतीत्यजह्नै,
विपुलकमलसङ्गामाशु गङ्गाक्रमेण ।।६७।।

'' पुनरपि सुरगङ्गा पूर्वसंस्थानरूपा
समगमदथ भूपं कामरूपाभिरूपम् ।
तदवधि भुविधन्या जह्नुकन्याभिधेयं
सुरमुनिकविवृन्दैर्गीयते गीर्भिरुच्चैः ।।६८।।

द्रुतविलम्बित अथ भगीरथभूमिपुरन्दरो दरवरोज्झितमानससुन्दरः ।
परितुतोष यथा दिवसोदये मुकुलभावगताम्बुरुहावलिः ।।६९।।

अनु. स्नात्वाऽन्वगपि पूर्वेषां निर्वापसलिलं कुरु ।
दत्वा दानानि विप्रेभ्यो गच्छायोध्यापुरीं स्वकाम् ।।७०।।

'' प्रयागमनुसृत्यैव काशीं सम्भावयिष्यति ।
इत्युक्त्वा त्रिदिशैस्साकं ययौ नाकं पितामहः ।।७१।।

अथ नरपतिधुर्यो राजधानीं स्वकीयां ।
[1]हयवरमखमेध्यां सोऽप्ययोध्यामयासीत् ।।७२।।

**इति साहित्यपारावारपारीणकविताकान्तारकण्ठीरवसर्वदानदीक्षाविचक्षणश्रीमद्दीक्षितबाल-कृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कः चतुर्थ उच्छ्वासः ।।४।।**

❖❖❖

---

पादटिप्पणि

१. 'कोकैः' इति विकल्प पाठः ।
२. तनुजा' इति शुद्धः पाठः ।

# पञ्चमोच्छ्वासः

## ।। श्रीगणेशाय नमः ।।

आर्या छन्दः श्रृङ्गारहास्यकलितैश्शिशवयाकलितश्शिशवः कटाक्षोघैः ।
व्यक्तं सितासितवपुः पुनातु तीर्थाधिराज इव ।।१।।

अनुष्टुप् ततो मुनिगणैः सार्द्धं स्तुवद्भिः स्तुतिपाठकैः ।
प्रयागमनुलक्ष्यैषा ययौ शेषाहिविभ्रमा ।।२।।

मालिनी विमलतपनपुत्री वारिचित्रीयमानं
हरसरिदभियाने मार्गमुद्वीक्ष्यमाणम् ।
विबिध-विबुधभाजं सर्वतीर्थाधिराजं
विधिविरचितयागं सा प्रयागं ददर्श ।।३।।

**ततश्च—**

शार्दूल वि. भारद्वाजमुनीश्वरस्य विपुलं तत्राश्रमं श्रीयुतं,
शङ्कापङ्कनिरङ्कुरङ्कुरमणीव्याघ्रादिभिस्सङ्कुलम् ।
प्रातःसायमहो हुताग्निविलसद्धूमावलीढद्रुमे,
विन्यस्ताजिनवीरचीवरचयैराच्छन्नमालच्छविः ।।४।।

तत्र सुललितवाग्विलासिनः सुकवयः मागधवन्दिनश्च तीर्थाधिराजं स्तुवन्तो गङ्गामूचुः—

अनुष्टुप् ब्रह्मलोकादपि सुखं प्रयागमवलोकय ।
तं विहाय भरद्वाजः समुपास्तेऽन्यथा कथम् ।।५।।

द्रुतविलम्बितं. स खलु हंसगणैः परिसेवितः
परमहंसगणैरयमन्वहम् ।
निवसते किल तत्र सरस्वती
यमुनया किल सात्र सरस्वती ।।६।।

पा.लि.प.सं.३७ सर्वदा श्रुतिगणैः स उपेतः
सर्वविश्रुतगणैः कलितोऽयम् ।
तस्य दाननिपुणोऽयमृषीणां
नैष दाननिपुणोस्य कथञ्चित् ।।७।।

पूर्व एकजठरश्चतुरास्यस्तत्र चात्र सकलश्चतुरास्यः ।
तत्र पद्मसदनो विधिरेकश्चात्र पद्मसदना जनसङ्घाः ।।८।।

अनुष्टुप् अक्षयो बहुपादत्र लक्षयोजनविस्तृतः ।
महाप्रलयकल्लोले यद्दले स्वपदच्युतः ॥९॥

भूमिस्थतीर्थराजोऽयमत्युच्चैर्भासतेतराम् ।
यत्र स्थितानां निकटे वैकुण्ठोपवनस्थितिः ॥१०॥

मालिनी कुवलयदलमालापुण्डरीकावनद्धा
पिककुलपरिरब्धा राजहंसावलीव ।
वहतु कमपि शोभाभारमुच्चैरिदानीं
भुवि तपनतनूजा देवि ! ते सङ्गमेन ॥११॥
ललितविमलमुक्तामालिका शक्रनीलै-
र्वचनरचनदेव्या सद्गुणैर्गुम्फितेव ।
वह बहुतरशोभां तीर्थराजोपकण्ठे
त्वमपि जनशरण्ये भानुजासङ्गमेन ॥१२॥
भवति यदि तपस्या सेवनं तीर्थराजः ।
किमिह बहुतपस्यायोगयागादिवृन्दैः ।
अपि तरणितनूजा केवला पापहन्त्री
किमु नगपतिपुत्री चेद्विचित्रीकरोति ॥१३॥
तव तरलतरङ्गैर्लोलिता भानुपुत्री
वहतु कमपि शोभाभारमुच्चैरिदानीम् ।
हिमगिरिशिखरौघैः शक्रनीलस्थलीव,
हिमकरकरसङ्घैरङ्कुकायप्रभेव ॥१४॥

पृथ्वीछन्दः तवागमनहेतवे कृशतरा विशेषादियं,
तपस्यति तपस्यति प्रचुरपुण्यलाभेच्छया ।
तव स्तवसरस्वतीकृतसमाश्रयाऽपि ध्रुवं
त्वमप्यतिकृपातुरा त्वरितमद्य सम्भावय ॥१५॥

मालिनी इति कविवरवाचा वर्णनाकर्णनोत्थ-
प्रबलतरतरङ्गा देवगङ्गा क्रमेण ।
विदलितबहुकूलां भूमिमुल्लासयन्ती
विकचमुखसरोजां भानुजामाससञ्ज ॥१६॥

द्रुतविलम्बित. अथ सितासितभावमुपागतं
रचय तीर्थमहीपगृहाजिरम् ।
पा.लि:प.सं.३८ अचिरतश्चिरतः किमु वाञ्छितं
दधति नो विबुधा भुवि भाविताः ॥१७॥

मालिनी
वदति च निजकान्ते काललोपो न भूया-
दिति तपसि सुवेणी कापि वेणीतटस्था ।
उदयशिरसि यान्तं भानुमन्तं विलोक्य
प्रविशति जलमध्ये शीतभीता मृगाक्षी ॥१८॥

स्रग्धरा
काऽसौ संहन्ति शीतं दशवदनशिरश्छेदने हेतुभूता,
वैकल्यार्थेऽप्यथो किं नरहरिहरिणा किम्बिभिन्नं कराग्रैः ।
का कृष्णो भूरिभक्तिर्भवति जनमुदे किं धनात्कर्षकाणां,
गङ्गां कः प्राप्य माघे प्रहरति कलुषं भानुजावारिपूरः ॥१९॥

अथ मार्त्तण्डतनयासंश्लेषसुखिता तीर्थराजदर्शनसम्भवदानन्दसन्दोहतुन्दिलाङ्गा गङ्गा विन्ध्यमभिससार । कवयश्चोचुः–

त्वज्जलौघघनघर्घररावाकर्णनोच्चलितसम्मदधारैः ।
बन्धुराः प्रबलसिन्धुरवर्गैः विन्ध्यकाननभुवः समुपेयाः ॥२०॥

सप्तपर्णरसवासविलुभ्यन्मन्दमन्दमधुपावलिखेलाः ।
हेलया समभिसस्रुरमी त्वां विन्ध्यसिन्धुरघटाघनघोराः ॥२१॥

यश्चानेकमणिगणमयूखनिचयखचितस्वान्तरालतत्सहस्रशिखरसम्भावितसहस्रकराजस्रप्रदक्षिणकनकाचलसंस्पर्शवर्धमानमत्सरसम्बर्धितानेकसहस्रशिखरसमुच्छ्रायसंरुद्धसहस्रकरनिकरमार्गसंरोधव्याकुलदेवासुरगन्धर्वकिन्नरयक्षोरगसिद्धमुनिगणसंस्तूयमानागस्त्यमुनिवरसन्नामितशिखरसहस्रमजस्रं त्वां शिरसा समुद्वोढुकामो घस्रसहस्राण्यतिवाहयतिस्म, तव विमलतरसंकुलकल्लोलमालाजाललालनमभिलष्यमानोत्तमकन्धरो धरोऽयं सुधाधरकरसहोदरदरदलितसरोजावलिसुन्दरतरतरणितनूजातरलतरङ्गधरधाराभिरभिसम्भावनीयः । अयं च, चञ्चच्चन्द्रिकाचयकवलनकुशलललिततरचञ्चलचकोराङ्गनानिचयः विस्फारितचञ्चुचयप्रचलतरवीचिचयमापातुकाम इव विपुलतरप्रस्तरवरपरिसरमनुसरन् सरीसर्ति ।

क्वचिच्च– गुञ्जदलिपुञ्जमञ्जुवञ्जुलनिकुञ्जः मधुरतरतरलतमतरङ्गाभिसरणमभिनन्दयतीव ।

यत्र पुष्पितलतावनितावन्-
मञ्जुगुञ्जितरवैर्भ्रमरीणाम् ।
मङ्गलानि विपुलानि चरन्त्यो
देवि ! तेऽद्य सलिलोद्गमनाय ॥२२॥

पा.लि.प.सं. ३९

श्रीमद्विन्ध्यमदान्धसिन्धुरघटासंघट्टमानद्रुम-
स्कन्धोड्डीनमिलिन्दसुरन्दरगणैराच्छाद्यमानं नभः ।
देवि ! त्वद्गमनावलोककुतुकान्निर्यद्भिरंशुव्रजै-
राच्छन्नं किमु नीलरत्ननिचयोद्भूतैस्तदानीममभात् ॥२३॥

क्वचिच्च– चतुरतुरगसुरवरकिन्नरगीयमानसुस्वरसमाकर्णनस्तब्धोर्ध्वकर्णचमरीचयचमत्कारचर्चितचरणः, क्वचिच्च– उच्चतालतमालाग्रललितप्रवालकरतलाग्रैः बहुदिवसोषितागस्त्यमुनिचरणगुरुमाह्वयतीव, क्वचिच्च, निपतिततालफलावलिविदारणासमर्थकपिकुलकरतललोड्यमानस्फुटितस्यन्दमानरसास्वादनाविर्भूतामन्दानन्दसन्दोहतुन्दिलितप्रेयसीगणपरिवृत्तपरिसरः, क्वचिच्च, विकटकटकचारिखञ्जरीटकुलनिधुवनलीलाविलोकनानन्दितकुद्दालखनित्रहस्तनिषादकुलखन्यमानधरणितलविवरपरिलभ्यमाननिधिसञ्चयचमत्कारकरम्बितकन्दरः, क्वचिच्च पुलिन्दसुन्दर्यः आकुलितभावं शशकशावमालोक्य समवोचन्—

द्रुतविलम्बितं तव पलायनमेव किलोचितञ्जहिहि बालतृणाङ्कुरसञ्चयम् ।
इह हि भिल्लगणः प्रहरत्यहो शशक कष्टमयं कठिनं धनुः ॥२४॥

क्वचिच्च– घनतरतरुवरराजिमिलदलिपुञ्जगुञ्जारवाकर्णनोन्निद्रकण्ठीरववरवाकर्णनसङ्कुचत्करिकलभनिभृतकन्दरः—

आर्या. सुरतानुभोगकलिता विचित्रपलाशनीलचिता ।
विटपीतासवकलिता वारवधूवल्लता यत्र ॥२५॥

द्रुतविलम्बितं विकचवाणदलावलिलोचनः शिखरमूर्धसहस्रसमाकुलः ।
अगणितालघुपादपरीवृतो लसति भूरि विराडिव भूधरः ॥२६॥

क्वचिच्च– प्रौढकण्ठीरवखरनखरवरप्रकरणपाद्यमानमातङ्गकुम्भस्थलोच्छलद्वहलमुक्तागणतारकितगगनाङ्गणपरिसरः, क्वचिच्च, तटनिकटविकटकन्दरामुखनिर्गतनिर्झरझर्झरारवाकर्णनोत्कण्ठनृत्यन्नीलकण्ठाकुण्ठकेकापरित्रस्तभुजङ्गकुललीयमानशिलासहस्रान्तरबिभ्यद्धरिणीशावककूर्दनाधूतविकसन्नवलताप्रतानपुष्पोत्कराच्छादितग्रावगणः, क्वचिच्च, पुष्पितनवकिंशुकशुकमुखहरिनखानुकारिकोरकावलीविलोकनपरित्रस्यमानकरिकलभकुलामर्दितनववल्लरीमञ्जरीपरागणपरिप्लुतः—

अनुकरोतु रुचिं गिरिशायिनो हरिहरार्धतनोर्विधुशेखरः ॥२७॥(क)
फुल्लपङ्कजवनीनवनीपप्रोल्लसद्विविधगन्धसुगन्धिः ।
पा.लि.प.सं.४० वासयन् गिरिभुवः करिकुम्भगन्धवाहनिवहस्सरिसर्त्ति ॥२८॥

क्वचिच्च– मत्तारण्यमहिषविषाणमण्डलोत्क्षिप्तपाषाणशतविषमीकृत-

(क) श्लोकस्य चरणद्वयमेवास्ति ।

वनचरकिराततरुणीगमनमार्गः, क्वचिच्च, प्रौढभल्लुककुलहिक्कापरित्रस्यमानपुलिन्द-कुलकरस्त्रस्तधनुर्वाणपरिवृतारण्यपथः, क्वचिच्च, चपलकपिकुलकमलायमानहस्त-तलमुष्टिगतलम्बायमानसरीसृपशिरोघर्षणशोणपाषाणतलः, क्वचिच्च, भूदारदारित-सरित्कुलमूलपतद्ग्रावगणसंक्षुभ्यत्तिमिमकरनक्रचक्रभयभ्रान्तपिपासुमृगपोतगणः, क्वचिच्च, मत्तकासरगणविलोड्यमानकासारकलुषीकृतजलमज्जमानराजीवकुलोत्पत्ति-भृङ्गावलीमञ्जुगुञ्जितसङ्गीतध्वनिसमाकुलः—

वाहिनीशतपरीवृतदेशः प्रोच्चलच्चमरभूषितवेशः ।
छत्रिकामृतकरोच्चसमाजः, किंन्न विन्ध्यशिखरी गिरिराजः ॥२९॥

उपजातिः
सदाशिवासक्तमनोऽभिलाषा कण्ठीरवोल्लासिकटिप्रदेशा ।
भूभृत्सदङ्कस्थितितोषयोषा भूभृद्दरीयं नृपसुन्दरीव ॥३०॥

सद्विद्रुमोल्लासिसुखप्रदेशा भूभृत्सदङ्कस्थितितोषयोषा ।
भूभृद्दरीयं..............................नृपसुन्दरीव ॥३१॥

,, सद्विद्रुमोल्लासिमुखप्रदेशा सुचित्रपत्रावलिचारूवेशा ।
अहीनभोगाकलिता नितान्तं भूभृद्दरीयं नृपसुन्दरीव ॥३२॥

,, सदानवाभोगविलासयुक्ता पुष्पेषु संसक्तसदालिकान्ता ।
सदन्तकालीलसदास्यदेशा भूभृद्दरीयं नृपसुन्दरीव ॥३३॥

यश्च सहस्राक्षो रम्भाप्रियोऽपि न शचीपतिः, यश्च, सहस्रपादो न सहस्रभानुः, सहस्रशीर्षोऽपि न शेषनागः, अनन्तभोगकलितोऽपि न शेषशायी, यश्च जठरान्त-भुवनोऽपि न विष्णुः, पद्मभूरपि न विरञ्चिः, कमलाकलितोऽपि न हरिः सरिच्छतसेवितोऽपि न समुद्रः, अर्जुनाकलितोऽपि न सिन्धुराजः गौरीप्रियोऽपि न सदाशिवः, रोहिणीप्रियोऽपि सहरिणश्च न चन्द्रः, सन्निधिप्रियोऽपि न कुबेरः कासरसञ्चारोऽपि न धर्मराजः जडजीविजनैः परिवृतोऽपि न वरुणः सदागतिसखोऽपि नानलः नैषधकथेव सनलः भारविकाव्यमिव सार्जुनः रामायणमिव नलकुमुदपनससेवितः, नलकूबर इव रम्भाकलितः, कैलास इव नर्त्तनशीलनीलकण्ठः, ब्रह्मसदनमिव समल्लिकाक्षः मालतीमाधवप्रकरणमिव सकलहंसः रघुवंशकाव्यमिव अजसीतारामलक्ष्मणकुशल-वकलितः वासवदत्ताख्यायिकेव चिन्तामणिकन्दर्पकेतुमाकन्दकलितः, हरिमूर्त्तिरिव सशंङ्कचक्रः शार्ङ्गकलितश्च, स्कन्द इव मयूरसेवितः, राजान्तःपुरमिव कञ्चुकिकलितः यत्र पलाशा अपि न राक्षसाः, यत्र, अशोका अपि न ब्रह्मज्ञाः, यत्र उदुम्बरा अपि न द्विजाः, यत्र धात्र्योऽपि न बालपोषणचतुराः, श्रीफला अपि न राज्यसुखभोगदायिनः, माधव्योऽपि न कृष्णप्रियाः, मालत्योऽपि न भूरिवसुसमुद्भवाः,

पा.लि.प.सं. ४१

शीतवाततपनौघसहिष्णु: सुस्थिरस्थिरतरेन्द्रियजिष्णु: ।
सत्तपस्विगणसाधुसमाज: किन्न विन्ध्यशिखरी मुनिराज: ॥३४॥

तत्र च, सकलदेवासुरमुकुटमणिमयूखमञ्जरीपिञ्जरीकृतचरणा, चरणानततमजनताजनितापसम्भारसंहारविचक्षणा, क्षणदापतिकलाकुलितालिकतलप्रकाशितभक्तजनमानसकुमुदा, कुमुदाकराकरणसंवासितसुरवरशरणा, शरणागतजनमनोवृत्तिपरिपूरणकामा, कामारिहृदयपरिचयप्रवाहपरिपूरितान्त:करणा, रणासादितप्रबलप्रचण्डचण्डमुण्डादिमुण्डविरचितहारा, हारावकरणतप्तहारपरित्रासितपरनिकरा, कराकृष्टकोदण्डनिस्सरदकाण्डशरकाण्डखण्डितारातिततिप्रकरा, करावलिविराजमाननानाशस्त्रसमूहप्रभाभारभासुरा सुराधीशप्रमुखवन्दारुदिविषद्वृन्दसंस्तूयमानविचित्राविचित्रचित्राधिपकरनिकरप्रभाभासुरहासिनी, दंष्ट्राकोटिविसंकटकवलनविदारितदैत्यवरसिंहासिनी विन्ध्यवासिनी विलसति। या च—

भासुरारुणसम्भारभाविताङ्घ्रियुगा सदा।
दारुणद्युतिविद्योतिकाश्यपिप्रस्फुरत्प्रभा ॥३५॥

भाति भूमौ सुलावण्यचञ्चच्चतुरतासभा।
दयादात्री भावुकानां त्रिनेत्रस्य स्वभावना ॥३६॥

इति विचित्रवर्णं कृपाणमाकलयन्ती, या च—

कासुरासुरविमर्दवदान्या, भासुराकृतिधराधरकन्या।
यत्र वासमकरोत् स्वरण्या तादृशी त्रिभुवने वद काऽन्या ॥३७॥

मनोविकासकारिणी दरिद्रतानिवारिणी।
प्रपन्नतापहारिणी चलल्लुलायदारिणी।
सदामनोविनोदिनी सदागमैकबोधिनी,
कृतान्तमार्गरोधिनी मन:प्रकारशोधिनी।
सुरेशमानमण्डिनी सुरारिमानखण्डिनी,
शशाङ्कमौलिवन्दिनी धराधरेन्द्रनन्दिनी।
विकस्वरास्यहासिनी सुपर्वमासिभासिनी,
नितान्तदुःखनाशिनी मुदेऽस्तु विन्ध्यवासिनी ॥३८॥

शिखरिणी.
कदा त्वं मां मूर्ध्ना परिवहसि गङ्गासहचरी।
हिमाद्रेरुद्भूता सकलमुनिसन्मानसचरी।
त्रिलोक्यास्त्वं धात्री सकलगुणपात्री सतरणि-
र्यतस्त्वं लोकानां जगति विदिता तापहरणी ॥३९॥

पृथ्वी. नमद्विबुधनायिका विविधबद्धधम्मिल्लक-
स्थलस्थकुसुमावलीवलयनीलमञ्जीरयोः ।
स्थलाम्बुजकृताश्रयश्रियमलं समीकुर्वतो-
र्भवानि ! तव पादयोर्वसतु मानसालिर्मम ॥४०॥

शिखरिणी. षडास्यः पुत्रोऽभूत्तदनु सगजास्यः स्वयमपि,
प्रसिद्धः पञ्चास्यः स्थितिरखिलशृङ्गेऽस्ति नियता ।
कपर्दीति ख्यातस्तदपि सुखमाले पशुपति-
स्तदेतज्जानीमस्तव जननि ! नैपुण्यमहिमा ॥४१॥

वसन् भाले किञ्चिद् दहति हुतभुङ् नैव सततं
पटीराम्भःसिक्ता भवति फणिफूत्काररचना ।
रविर्नेत्रस्थाने शशिशिशिरगात्रः शिवतनौ
फलं त्वेतत् कान्ते तव जननि ! सिन्दूरलतिका ॥४२॥

,, वलीभङ्गालीढा ललिततरनाभीसरसिका,
सरन्ती रोमाली कुचनलिननालीयति भवे ।
परिभ्राम्यद्भृङ्गावलिललितभावं विदधती,
तदा भोगे शम्भो र्जयति वरनेत्रं विटपिका ॥४३॥

शार्दूल. प्रोद्यत्पादतले बलेन समतां नेतुं निशायां बृहद्-
भानौ भानुसहस्रमाक्षिपदसौ भानुः प्रभाते ततः ।
प्रोद्धृत्यारुणमाकलय्य मुदितः पाथोधिपाथोभर-
स्पर्शात् क्षीणविभं विभाव्य गगनेऽतः सः परिभ्राम्यति ॥४४॥

शिखरिणी. पयोराशौ मग्नस्तदनु वरशुभ्राम्बरधरः
कलाभिः सम्पूर्णः कलिततिलकः कस्य मिषतः ।
नमस्कारं कारं नखशशिनि भावं रचयति,
तदीयास्ये दास्यं रचयितुमयं शीतकिरणः ॥४५॥

शार्दूल. केशौघाः सुयशस्वमौक्तिकमुरोजावास्यमुद्यद्घृणा,
नेत्रे कज्जलमङ्गसङ्गवशतः स्मेराननां नौमि ताम् ।
जम्बूवज्जलनीलवञ्जलजवज्जम्बालवज्जालवद्-
गङ्गावद्गजगण्डवद् गगनवद्गाङ्गेयवद्गेयवत् ॥४६॥

पा.लि.प.सं. ४३

भुजङ्गप्रयातम् त्वदायत्तमेतत्ततं विश्वजालं
तवैवाङ्घ्रियुग्मं भजेऽहं त्रिकालम्।
त्वमेवावलम्बः प्रसादे विलम्बं,
किमर्थं समर्थाऽपि मातस्तनोषि ।।४७।।

अमन्दमकरन्दविन्दुमदमन्दवृन्दारक
प्रमददनुजेन्द्रभृङ्गगणमञ्जुगुञ्जायितम्।
जगज्जननि ! बन्धुजीवसुबन्धुरं तद्भजे,
सदैव ललिते ! भवच्चरणसारसं मानसे ।।४८।।

शिखरिणी. वलद्वालाबालारुणाकिरणजालालससितो-
त्पलोन्मालामालाशशधरकपाला निजजने।
द्विषत्कालाकालामलसुवसनालास्यकरवि-
स्फुरद्धालाहालाहलकवलवालाऽस्तु मनसि ।।४९।।

,, शिवे लासद्गन्धश्वसितकलिता रूपतटिनी
रिपुध्वंसे वह्नि र्यतिवरकुलाग्रेव रचिता।
मुखाब्जैर्नेत्रैः सा शशिरविरुचिर्याज्यधनदा
जनेतीयादीशा धृतवसुशरीरा नगसुता ।।५०।।

इति नानाविधकविवचनमाकर्णयन्ती देवीस्थानमाश्रयन्ती काशीमनुबद्ध-भावा जवादभिससार—

इति विविधवचोभिर्वर्णितो विन्ध्यशैलः,
परिणतजनमूर्त्तिर्गौरिवादेशतोऽपि।
निजपटपरिसङ्गा भङ्गभूमीमगङ्गा-
चरणपरिचयेनोत्कन्धरः सम्बभूव ।।५१।।

**इति साहित्यपारावारपारीणकविताकान्तारकण्ठीरवसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित-बालकृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कः पञ्चमोच्छ्वासः ।।५।।**

पा.लि.प.सं. ४४

❖❖❖

# षष्ठोच्छ्वासः

## ।। श्रीगणेशाय नमः ।।

शार्दूल वि. सिन्दूरारुणगण्डमण्डलगलद्दानाम्बुधारामिलन्
मत्तेन्दिन्दिरसुन्दरारुणरुचिप्राप्तप्रमोदोदयः ।
आरक्तैः किमु जङ्गमैर्विरचितां पुष्पैः शुभामर्हणां-
मन्वानो विदधातु मङ्गलमहो देवो गजेन्द्राननः ।।१।।

अस्ति तावत्सकलवसुमतीचक्रवालचूडामणिविलसदणिममयूखपुञ्जमञ्जुलतरमूर्त्तिः अमूर्त्तिरपि मूर्त्तिः, समस्तवृन्दारकवृन्दवन्द्यमानमानससंसेवितमूर्त्तिः, मूर्त्तिमन्मुक्तिविलासिनीलास्यमदनं सच्चिदानन्दपदाभिधेयाभिन्नस्वरूपभिन्नीकृतसमस्तजगदुद्भवमूलस्तम्भतमःसमूहोल्लसितत्रिभुवनमानन्दवनाभिधेयं अविमुक्तसंज्ञाप्रख्यातं काशीवाराणसीतिसमाह्वासमलङ्कृतं किमपि वस्तुजातं,

**यत्र च—**

रथोद्धता भूरिपापकृततापमातुरं सत्वरं नयति यः स्वकं पदम् ।
जीविजातमुपदिश्य तारकं तारकेश्वरकिशोरशेखरः ।।२।।

मालिनी प्रचुरतरशिलोदस्तम्भमूर्द्धाग्रवंशो-
च्चलतरलपताकाधूननैरग्रहस्तैः ।
लघुपरिसरकाशीमाह्वयन्ती भवन्ती
तरलतरतरङ्गे देवि ! गङ्गे ! क्रमेण ।।३।।

विधिहरिहरलेखाधीशमुख्यालिवृन्दं
परिसृतपरहंसासेव्यमानं समन्तात् ।
तव सलिलमरन्दाशोभिकाशीसरोजं
जननमरणतापं भूरि दूरीकरोतु ।।४।।

भवभवभयभाजां स्वर्गतः पातुकानां
पतितजडजनानां मुक्तभावैकदात्रीम् ।
स्मरहरसितमुक्तायुक्तमुक्तिस्वरूपम्-
अनुभवतु समन्ताद्वारि वाराणसीन्ते ।।५।।

वितरति [१]मणिकर्णी कर्णिकाभावमस्या
विधुरपि शुभनासामौक्तिकाभां बिभर्त्ति ।
त्वमपि रचय मुक्तामालिकाभां विशेषा-
द्धिमकरकरगौरैर्बिन्दुभिः सिन्धुकान्ते ! ।।६।।

१. मनि ।, पा.लि.प.सं. ४५

त्वमपि सलिलसङ्घै भूषयैनां समन्ता-
दियमपि निजतीर्थैस्त्वां मुदाऽलङ्करोतु ।
उभयमिदमशेषं भूतलं लोकशोका-
हरणरचितलोभं भूरिशोभं विदध्यात् ॥७॥

इति कविवचनौघाकर्णनौतप्रमोदाऽऽ
कुलितललितचित्ता लोकहृत्तापहारा ।
विलसदमृतधाराधारया धारयाऽसौ
समसरदथ काशीं सारवासा रयेण ॥८॥

**तदा च—** विविधप्रचलतरतरङ्गा गङ्गा स्वार्थाय प्रार्थयामास—

जटाजूटारण्ये निटिलनयनज्वालसविधे,
तपस्तप्तं शम्भोरपि च भृगुपातः परिचितः ।
तदेतस्य प्राप्तं फलमपि च वाराणसि ! भवत्-
कृपादृष्ट्या दृष्टा तव परिसरेऽहं परिसरे ॥९॥

आर्या
वरुणाशीपरिच्छिन्ना छन्ना मुक्ताविभूषणैः ।
हीरकालङ्कृता काशी काशते वीचिभिस्तव ॥१०॥

गङ्गालवालपूर्णापर्णापर्णा शिवौकसत्कुसुमा ।
काशी कल्पलतैषा फलति सतां मुक्तिमुक्तौघम् ॥११॥

गङ्गागौरीगोपतिगीरिशगणेशादिगीर्वाणैः ।
यत्सेव्यतेऽतियत्नात्तन्मुक्तिदमुक्तिदा काशी ॥१२॥

शार्दूल वि.
वेगाद्वारिधिवामदेववपुषो वात्सल्यभावोद्वह-
द्वारां वायुविहारमावहति या वेलासुवेलासु च ।
विष्वग् विष्णुपदीविभूषितवपुर्वन्दारुवृन्दारके
वेधावाञ्छितदा विलासिविबुधैर्वर्ण्यैव वाराणसी ॥१३॥

ब्रह्मविष्णुशिवशक्रसुरौघः
सर्वदेवपदमाप्तुमनस्कः ।
यां समाश्रयति भूमिगता सा
सर्वतो जयति नोच्चतरा किम् ? ॥१४॥

मालिनी
तटभुवि भववन्यावासिसन्यासिवृन्दै-
र्विरचितबहुवादन्यायजातैरजन्या ।
विविधविबुधगण्यारण्यवासे शरण्या
भुवि विलसति धन्या काप्यसौ जह्नुकन्या ॥१५॥

उपजातिः
कलिन्दकन्या चिकुरौघसन्ततिं
सीमन्तसिन्दूरततिं सरस्वती ।
तनोति तद्वन्मणिकर्णिकाऽप्यहो
त्वकर्णिकाभावमुपैति सत्वरम् ॥१६॥

आर्या
स्वर्गस्थसुधा न सुधा वसुधायां वै सुधा काशी ।
कथमन्यथा विषादी शूली चैनां समाश्रयति ॥१७॥

क्षेत्राणि सन्ति बहुशः काशीक्षेत्राधिकं न सुक्षेत्रम् ।
यत्रैकमुप्तमाराद्वपुरमलं चाष्टधा भवति ॥१८॥

आर्याछन्दः
आनन्दकाननेऽस्मिन् वसतां का वा भवेभतो भीतिः ।
पञ्चाननोऽत्र निवसति दारितदुरितेभलब्धमुक्तौघः ॥१९॥

वाराणसी भवाब्धावद्भुतकलिता कलिता महाशुक्तिः ।
यद्भवमुक्तासङ्गात्पतितजडानां तदात्मता भवति ॥२०॥

तरणेच्छया भवाब्धेः काशीतरणिं समाश्रयतः ।
यद् दक्षिणकर्णधरो विना तरिं तारयति शम्भुः ॥२१॥

शिखरिणी
मया वारं वारं निजहृदि विचारं रचयता ।
स्थिरं किञ्चिन्नाप्तं स्थितिरिह भवेद्यत्र मनसः ॥
अतस्त्वामासाद्यस्थिरचरजनौघाश्रितपदे ।
पदे स्वीये गन्तुं कृतपरिकरः काशि शिवदे ॥२२॥

स्तुमः कं ध्यायामः कमथ मदनारिप्रियतरे !,
जपामः कं मुक्त्यै शरणमपि यामः कमधुना ।
अतस्त्वामासाद्य स्वहृदि निवसामस्त्वयि यतो
विरञ्च्याद्या देवा अपि च तव सेवां विदधते ॥२३॥

पृथ्वीछन्दः
क्वचित् समुपसेवितं मुनिजनैर्जराजर्जरैः,
क्वचिद्धरणिनिर्जरैरपि च कुत्रचिन्निर्जरैः ।
हिमाद्रिगिरिनिर्झरैः क्वचिदराजि राजीवकैः,
पुरारिपुरिजीवनं जयति जह्नुजाजीवनम् ॥२४॥

जगद्वृजिनतर्जनं सकलसम्पदामर्जनम् ।
स्वभक्तरिपुभर्जनं गजघटोल्लसद्गर्जनम्
सदैव जडजीवनं दमनवर्गराजीवनं
पुरारिपुरि जीवनं जयति जह्नुजाजीवनम् ॥२५॥

---

पा.लि.प.सं. ४६क, पा.लि.प.सं. ४७

अनुष्टुप् अथ विश्वेश्वरो राजा राजधानीमुपस्थितः ।
रराज राजराजोऽसौ विमुक्ते राजशेखरः ॥२६॥

तत्र च– उल्लसदनेकवर्णमणिगणस्तम्भसम्भाविसभाभासुरप्रभाजालव्यालम्बमानवियदङ्गणतिरस्कृतकालिकाविलसत्सुराधीशधनुर्विधम्, विलासलास्यासक्तानेकाप्सरोगणशब्दायमाननूपूरमुखरम्, श्रीमद्गौरीचरणपरिचर्यापरायणान्तःकरणसुरसीमन्तिनीगणविलाससम्भूषितपरिसरम् ।

क्वचिच्च– अलकेशकिन्नरीगणगीयमानप्रबन्धम्, क्वचिच्च शक्रसदनमिव सुधाधवलं सुरभिसंश्रितञ्च, क्वचिद्धर्मराजगृहमिव पिशाचबहुलम्, क्वचित्पाशिगृहमिव जलजालङ्कृतम्, क्वचिद्ब्रह्मसदनमिव विलसत्परमहंसम्, क्वचित् पातालमिव सदानवेन्द्रम्, स्वालयमालङ्कुर्वाणः सर्वालङ्कारालङ्कृतो सदसि नानामणिघटितोच्चसिंहासनं कनकगिरिशिखरं सुधादीधितिरिव अधःस्थितपाण्डुकमलञ्चकार ।

बहुललिततराभिर्भूरिमुक्त्यङ्गनाभि-
र्विधुतनिजभुजाभिश्चामरैर्वीज्यमानः ।
शशधरनिभछत्रालङ्कृतोऽलङ्कृतश्री
र्विधृतनृपतिवेषोऽभावि विश्वेश्वरोऽपि ॥२७॥

ततः नानाविधप्रबलप्रख्यातप्रमथसार्थसञ्छाद्यमानबहिरङ्गणभूपरिसरम्, तस्मिन्नेवावसर इन्द्रादयो दशदिक्पालाः स्वस्वाधिकारमाविष्कुर्वाणाः सुरसङ्घसङ्घटितपादपङ्कजा अपि सशङ्कं द्वारदेशभुवमध्यासामासुः । तत्र च शिवाज्ञया प्रविशन्तः सह सुरैः–

वक्रतुण्डकरवेत्रसंहतित्रुट्यमानमुकुटोत्पलमालाः ।
भूरिचित्रमनसः सुरसङ्घाः संस्तुवन्ति मनसा शिवराजम् ॥२८॥

सुरेन्द्रमुकुटोल्लसन्मणिमयूखनीराजिता
जितारिवरयोगिनां हृदि सदैव धीराजिता ।
जटोच्चलतरङ्गिणीतरलनीरतीर्णोर्जिता,
जिता स्वजनसेविभिर्जयति शाम्भवी पादुका ॥२९॥

पृथ्वी चतुर्द्विगुणसिद्धिभिः पदतले रजोभिर्वृता,
चतुर्गुणितमुक्तिभिः विमलकिङ्किणीभिर्युता ।
ग्रहैस्तनुषु कीलिता विमलविज्जनानन्दयुक्
विभातु मम मानसे सपदि शाम्भवीपादुका ॥३०॥

---

पा.लि.प.सं. ४७क

शार्दूल उद्यद्भानुसहस्रभानुविलसच्चिन्तामणीनां गणै-
रानद्धासुरदारुसाररचिता स्वर्गे रसैर्भाविता
तस्माच्चित्रणदानधारणपरा मुक्तौघसारान्तरा,
नित्यं चित्तचमत्कृतौ विलसतां श्रीशाम्भवीपादुका ॥३१॥

संघशः समभिसृत्य सुरेशा यत्नतश्चरणपङ्कजमारात्।
दण्डवन्निपतिताः क्षितिपृष्ठे, सम्प्रणेमुरमराः ! शिवराजम् ॥३२॥

अनुष्टुप् किञ्चित्कृपाकटाक्षेण शिवराजेन वीक्षिताः।
स्वस्थानासनमासीनाः सबद्धकरकुड्मलाः ॥३३॥

तदोवाच महातेजाः शिवराजो गिरं शुभाम्।
राजाधिराजराजाभः प्रसन्नाम्बुरुहेक्षणः ॥३४॥

सर्वे भवन्तो दिक्पालाः पालयन्तः पुरीमिमाम्।
आयान्तु मम पूजार्थं पुरुहूतमुखाः सुराः ॥३५॥

अधिकारप्रयुक्तानां न कालनियमोऽस्ति मे।
स्वाधिकारभवं कार्यमाख्यापयितुमन्वहम् ॥३६॥

मालिनी विलसतु मम पुर्यामन्नदानेऽन्नपूर्णा,
सुरभिसलिलदाने देवसिन्धुर्नियुक्ता।
निजभजनरतानां विघ्ननाशे गणेशो
विलसतु किल दुर्गा ! दुर्गतिध्वंसनेषु ॥३७॥

बहुतरधनदाने विष्णुकान्ता नियुक्ता,
नयननिचयहेतौ नागधीशो विशेषात्।
वृजिनयुतजनानां दण्डने दण्डपाणिः,
दृढतरदुरितौघोत्सादने भैरवोऽपि ॥३८॥

मुनिजनजपसिद्धौ यत्र सिद्धेश्वरीयं
विलसति किल यस्यां संकटा संकटेषु।
सकलभुवनराज्ये राजराजेश्वरीयं
जननमरणदुःखध्वंसने काशिका च ॥३९॥

जननमरणदुःखध्वंसनेच्छाऽस्ति येषां
शमनदमनपीडाव्रीडभावङ्गतानाम्।
भवभुजगविभीषाव्याकुलानां समन्ता-
द्विलसदमलसत्रं सन्दधे काशिकायाम् ॥४०॥

---

पा.लि.प.सं. ४८क, पा.लि.प.सं. ४९

त्रिभुवनवनजातैः पापतापाकुलाङ्गै-
र्भवभवभयभीतैरासितव्यं सुखेन ।
पतितजडजनानां रक्षणे दीक्षितोऽहं
प्रकटितमिति डिण्डीरावमुच्चैश्चकार ॥४१॥

**ततः—**

शिखरिणी
असन्तः सन्तो वा त्रिभुवनगता ये शिवपुरीं-
समासेवन्ते ते निजनिजविमुक्त्यर्थमनिशम् ।
तथा षड्वर्गोऽयं प्रचुरतरकामादिसहितो-
प्यहङ्कारो दम्भान्वितवपुरुपास्ते भवकराम् ॥४२॥

अनुष्टुप्
गोव्याघ्रं सिंहसकलं भुजङ्गनकुलं यथा ।
मुनीनामाश्रमे नैजे जनाः सोत्कं समासते ॥४३॥

मालिनी
बहुतरधनभावाल्लब्धसंस्थानुदुस्थाः,
स्थगितगतिविशेषाद् भाटकान्वेषिणस्ते ।
अथ कथमपि भिन्नीभूय भूयो जनानां
वसतिकृतनिवासास्तस्थुरत्यादरेण ॥४४॥

क्वचिल्लोभो नासीत्प्रचुरतरसङ्कोचकलितः,
तथा दम्भो नासीन्निभृततरमाकुञ्चितवपुः ।
तथा कामः कान्ताकलितमनुजानां गृहवरे,
निवासं चक्रुस्ते क्वचिदपि च तस्मिन् पुरवरे ॥४५॥

तत्र वञ्चकत्वं व्यापारिवरवणिग्जनभवनेषु, पाटवत्वं कार्यनियुक्तभृत्यजनेषु, अस्नेहत्वं बान्धवजनेषु परवित्तापकर्षकत्वं राजाधिकारिषु—

अनुष्टुप्
चत्वारश्चाश्रमा वर्णास्तथा युगचतुष्टयम् ।
विनाऽऽज्ञया स्वस्वधर्मं पालयन्तोऽवसन्सदा ॥४६॥

कालकालकमनीयकथाभिः
क्रान्तकर्णकुहराः कविकल्पाः ।
कालयन्ति कलिकल्मषमाराद्-
यत्र साधिकतरा किल काशी ॥४७॥

मालिनी
किमु सुरवरिवस्या किन्तपस्या समाधिः,
किमु सपरिरहस्यालोचितो मन्त्रवर्गः ।
जननमरणदुःखान्याशु नानाविधानि,
क्षपयति भुवि यद्वद्राजधानी शिवस्य ॥४८॥

भवभयमपहर्तुं जन्ममृत्युं च तर्त्तुं,
निजमुखमनुसर्त्तुं यद्विशेषोऽस्ति लाभः ।
तदभिसर धरण्यामाशु काशीशरण्यां
परमसुखवदान्या का वदान्याऽस्ति लोके ॥४९॥

**या खलु शक्रपुरीव सुधर्माश्रिता मन्दाकिनीकलिता च, संयमनीव दण्डपाणिकलिता सचित्रगुप्तमन्त्रिप्रवरा च, प्रतीचीव सवरुणा नर्मदाशरणा च, अलकेव धनदसेविता त्र्यम्बकप्रिया च, पातालमिव कर्कोटकाऽहिसहिता सदानवसदनभूषिता च, ब्रह्मसदनमिव परमहंससेविता श्रूयमाणश्रुतिपोषणा च,** वैकुण्ठमिव जयविजयासेविजनसंवृता विमानालङ्कृता च। रामसेनेव हनुमत्कलिता, अयोध्याऽन्विता च, राजाङ्गनेव चतुर्षाष्टिकलासमन्विता, सूर्यलोक इव सलोलार्का प्रकाशबहुला च, उत्तरादिगिव सन्मानससेविता, पुष्करान्विता च, विष्णुपुरीव लक्ष्मीनिवासालङ्कृता, यमपुरीव कृमिकुण्डान्विता वाराङ्गनेव सुकामाख्यासेवितमूर्त्तिः, कैलासभूमिरिव सवृषा सगुहा च, महाविद्येव त्रिपुरभैरवीकलिता चं, कृषीवलभूमिरिव केदारसंघटान्विता, जराराक्षसीव जरासन्धानपरा, प्रयागभूरिव दशाश्वमेधाकलिता, सुधर्मेव कविगुरुबुधकलिता, शक्रपुरीव स्वर्गद्वारकलिता च, राजाङ्गनेव अन्तर्गेहान्विता, वैकुण्ठमिव नानाविनायककलिता, आरोचनेव ललिताघट्टनपरा, राजमहिषीव समणिकर्णिका जनकतनयेव रामघट्टपरा।

**यत्र च—**

श्रीरामोऽरातिराजीवदनवनमहद् वातजातस्य तस्य,
स्रग्धरा प्रेमाभूमाविमानः परदरणरतः कोकशोकप्रकर्त्ता।
कौशल्येशप्रसक्तः सकलशुभकरः स्नानदानप्रणद्धः,
पापघ्नो पात्रयामी रतिपतिनुतिदो दोष्णि संस्थापितश्रीः ॥५०॥
अनचमरामनुमी व्रतपरा नराः यं स्तुवन्ति।
(इति द्वाररबन्धः)

भूतसेनेव सवक्रतुण्डा दक्षिणा दिगिव व्यङ्कटेशसेविता, समुद्रोदरमिव शेषशायिकलिता, समुद्रमिवानेकनदान्विता, हरमूर्त्तिरिव दुर्गाघट्टपरा, हिरण्यकशिपुकायमिव नृसिंहदंष्ट्राऽऽकुलिता, नारायणनाभिसरसिजमिव ब्रह्मपदकलिता कान्तारभूमिरिव चोरघट्टपरा, घोष इव गोसंघट्टपरा, नृसिंहमूर्त्तिरिव प्रह्लादसंकटहरा।

एवं सर्वोपमाकलिताऽपि निरूपमा शिवराजराजधानी, यस्यां च— संख्यावन्तोप्यसंख्यावन्तः, तत्र शाब्दिकाः सूत्रगणविचारिणोपि न तन्तुवायाः सन्निपातप्रिया अपि न सन्निपातप्रियाः, लौकिकालौकिकविग्रहकर्तारोऽपि न विग्रहकर्त्तारः।

पा.लि.प.सं. ५०क, पा.लि.प.सं. ५१, शिवगजराजधानी। यस्यां च—

अनुष्टुप् सन्धिविग्रहकर्त्तारो गुणवृद्धिविभाविता: ।
स्त्रीप्रत्ययपुण्यचया शाब्दिका: दधति श्रियम् ।।५१।।

अनुष्टुप् अपशब्दपरित्रस्ता: सिद्धशब्दानुसारिण: ।
विकल्पार्थपराश्चैव धातुवादविचारिण: ।।५२।।

सत्कर्मकारकपरा: समासव्यासकारिण: ।
तद्धितार्थविचारेषु बहु यत्र समन्विता: ।।५३।।

आख्यातार्थकृतोद्योगा: सत्कृत्यार्थपरिग्रहा: ।
अव्युत्पन्ना: शब्दशास्त्रे व्युत्पन्नाश्च तथा परे ।।५४।।

विराजन्ति महीपृष्ठे शब्दा औणादिका इव। यस्यां च–

द्रुतविलम्बितं- घटपटादिपदार्थविचारिण:, सकलकारणकार्यकृतश्रमा: ।
सदनुमानपरा अपि सत्वरं, बहुसपक्षविपक्षविभाविन: ।।५५।।

क्वचिदहो व्यभिचारविचारिण:, कुहचिदेव निजार्थकृतश्रमा: ।
बहुपरार्थपरा अपि कुत्रचिद्विदधति श्रियमाकुलतार्किका: ।।५६।।

**यस्यां च–**

सकलमेतदहो परमार्थत:,
किमपि नास्ति यदस्ति तदस्ति वै ।
इति वदन्ति सदा विषमप्यहो !
तदपि चार्थपरायणमानसा: ।।५७।।

अनुष्टुप् वेदान्तवादिनो दान्ता: सदन्तापकृतश्रमा: ।
सन्यासिनोऽर्थबहुलव्यापिन: पाठयन्त्यमी ।।५८।।

मालिनी सुरसरिदनुतीर्थं तीर्थभूमौ पुरारे:
पुरि निजपरिचर्याचारिण: शिष्यसङ्घान् ।
विविधवचनदीनं भूरिवैराग्यहीनं,
जनमनसि पवित्रं शास्त्रमध्यापयन्ति ।।५९।।

**यत्र च–**

अधिकरणचरित्रं मन्त्रसंस्थापवित्रं ।
परिचितबहुमन्त्रं न्यायजातैर्विचित्रम् ।
रचितकलुषशोधं दुखबोधं जनानां,
नियमितविधिरोधं शास्त्रमध्यापयन्ति ।।६०।।

पा.लि.प.सं. ५१क

अनुष्टुप् मीमांसकाश्च मीमांसाशास्त्रसंसक्तमानसाः ।
साहसेन क्रियाकाण्डवेदतां ताडयन्त्यमी ॥६१॥

संख्यावन्तो ह्यमी योगसांख्यपातञ्जलादिकम् ।
अध्यापयन्ति वचसा मनसा नानुभाविनः ॥६२॥

ते नरा दुर्लभतरा ये शास्त्रार्थानुभाविनः ।
मृगयन्तोऽपि तान्मन्त्रश्रिताः सन्तिततत्पराः ॥६३॥

पा.लि.प.सं.५२ जानतोऽभ्यस्तपापानां प्रायश्चित्तानि चिन्वते ।
काशीं भागीरथीं हित्वा निबन्धेषु निबन्धतः ॥६४॥

पश्चात्तापविहीनानां प्रायश्चित्ताय सत्वराः ।
पावितुं विविधोद्योगाः धर्मशास्त्राधिकारिणः ॥६५॥

तर्ककर्कशधियः प्रतिपक्षक्षेपणाय परिकल्पविकल्पान् ।
धर्मशास्त्रगतमर्थमशेषं वक्तुमुत्सुकतरा बुधधुर्याः ॥६६॥

वसन्ततिलकम् वैद्या अधिप्रचुररोगविनाशनाय
नानौषधानि नियतं समुपार्जयन्ति ।
व्याधेर्विधूननविधौ विविधप्रकारा-
नातन्वते तदपि ते वितता भवन्ति ॥६७॥

अवग्रहविचारिणोऽपि नवग्रहविचारिणः, लीलावतीसेवनतत्परा अपि न समुत्सृष्टबीजाः, मानाङ्कविचारकलिता अपि नाङ्कसङ्कुलाः, भूतभविष्यद्वेत्तारोऽपि स्वगृहस्थितिव्याकुलाः, भूगोलसेवनपरा अपि खगोलविचारिणश्च ।

ज्योतिर्विदश्च गणनाकलनाविधिज्ञाः,
सर्वे नवग्रहविचारपरायणाश्च ।
भूतं भविष्यमथ केनचिदेव पृष्ठे-
कष्टेन ते कथमपि प्रविचारयन्ति ॥६८॥

यत्र वै करगृहीतचन्दनाः
शम्भुपूजनकृते सुरालयम् ।
संविशन्ति किल यत्र साक्षताः
साक्षरा अपि च केऽपि भूसुराः ॥६९॥

रथोद्धता यत्र शम्भुसदनेषु सारिकाः
कीर्तयन्ति रामार्थकारिकाः ।
यत्र कीरनिकरा अपि ध्रुवं
कीर्तयन्ति हि मुदा सदाशिवम् ॥७०॥

वसन्ततिलकम् मन्दाक्षमन्दाक्षरमुद्गिरन्ती
सत्तारकेशं स्वकृतप्रबन्धैः ।
समर्चयामास सरोरुहाक्षी
यतिं स्थितं वीक्ष्य च सञ्चुकोच ॥७१॥

**यत्र च–**

शिवालयेषूर्ध्वविलम्बितानां
कुण्ठं समाशोध्य विनिर्मितानाम् ।
शब्दस्तदाऽश्रावि सुघण्टितानां
ठंठंठठंठं ठठठं ठ ठं ठः ॥७२॥

द्वारका अपि च काव्यकारका
स्तारकाधिपतिशेखरं हरम् ।
गद्यपद्यरचनाभिरन्वहं
संस्तुवन्ति भवमेव पापहम् ॥७३॥

बालिका अपि च शालिकान्तरे
सूक्ष्मनिर्मितगृहाः कुतूहलात् ।
खेलयन्ति शिवयोर्विवाहजं
सन्महं तदनुकारि बालकैः ॥७४॥

संचरन्ति वृषभास्त्रिशूलिनः
सज्जटा अपि वटादयो द्रुमाः ।
यद्गृहा अपि शशाङ्कशेखरा-
कारतोऽधिकतराः सुरावृताः ॥७५॥

**यत्र च–** नानाविधोपमाकलिताः, उपमेयोपमान्विता अनन्विताः प्रतीपार्थरञ्जिताः सुरूपकाकलिताः अन्योत्प्रेक्षाः उल्लेखनचतुराः, प्रकटनिदर्शनाः, तुल्ययोगिताविभावनचतुराः, सदृष्टान्तोक्तयः समासोक्तिकलिताः अप्रस्तुतप्रशंसामुक्ताः, प्रस्तुताङ्कुरिताः तद्गुणकलिताः अपूर्वपूर्वरुपकाकलिताः सोल्लासाः, ललितालङ्कारशालिन्यः लोकोक्तिचारिण्यः कामिन्यः सदीपकाः कार्तिकस्नानार्थं पञ्चनदघट्टमवतरन्ति । सत्कविकविताश्रयाः प्रसरन्ति–

मालिनी असितसितहरिद्भिः शोणिमानं दधद्भि-
र्ललितकुसुमसङ्घैः संवृताङ्गी समन्तात् ।
लघुतरगिरियुग्मालङ्कृताऽलोकि लोकैः,
सुरसरिदनुतीर्थं जङ्गमा हेमवल्ली ॥७६॥

रथोद्धता
यत्र पङ्कजसहोदराननना माधवार्चनविधिं वितन्वती ।
श्रीफलोल्लसितभासुरस्तनाभोगभावितसुहृत्तमा निशि ॥७७॥

फुल्लपद्मवदना मृगेक्षणाः शास्त्रकाव्यरचनाविचक्षणाः ।
सुस्वरैर्मधुरगीतिभिर्हरं संस्तुवन्ति शिशुचन्द्रशेखरम् ॥७८॥

उषसि देवधुनीकृतमज्जनाः
परिसमाप्य यथाविधि सज्जनाः ।
नियतसान्ध्यविधिं शशिशेखरं
निजहृदा कलयन्ति महेश्वरम् ॥७९॥

वसन्ततिलकम्
सूर्योऽस्तमेष्यति समिष्यति रुक्प्रपञ्च-
श्चन्द्रोऽभ्युदेष्यति हसिष्यति कैरवश्रीः ।
कोशस्थितेऽलिनि विचिन्तयन्तीन्दुमौलि-
माल्यार्पणात् कुमुदकुड्मलमुल्ललास ॥८०॥

रथोद्धता
यत्र तूलकृतशम्भुवर्तिका मृत्तिकाविविधधातुयाजकाः ।
तैलभूद्धतसुपूरपूरिता दीपिता अपि च दीपका निशि ॥८१॥

कोटिशः शमनशान्तिकारिका
मोक्षमार्गगमनप्रकारिका ।
यत्र मोक्षललनाविकाशिका
काशिका जयति सौख्यराशिका ॥८२॥

गङ्गातरङ्गतटसत्तृणवेणुकूट
सम्बद्धसत्कटकसङ्गतो विभाति ।
दीपोत्करो जलपथाऽऽगतपन्नगीनां
मूर्द्धन्यरत्ननिकरः सरिसर्त्ति शङ्के ॥८३॥

**अपि च–**

मालिनी
अथ निजमधिकारं पालयित्वा विशेषात्,
क्षितितलमवतीर्णः पञ्चगङ्गावलोकम् ।
कलयितुमिह मन्येऽन्ये वदन्त्वन्यदन्यद्
दिनदिनकरसङ्घोऽसंख्यदीपच्छलेन ॥८४॥

स्थलजलगतदीपभ्रान्तिभाजां नराणा-
मिह कथयति शम्भुः पश्यत ज्ञानदृष्ट्या ।
स्थिरचरवरजीवान्मुक्तिभावं प्रपन्नान्
पा.लि.प.सं.५४ सुललिततरतेजःपुञ्जरूपानमुत्र ॥८५॥

मालिनी विविधमणिसमूहस्वर्णमुक्तामयीयं
विलसति वसुधायां काशिकेति प्रसिद्धम् ।
अनुभवमियमारात्रेतुमूर्जे जनानां
निजसुललितमूर्त्तिं दर्शयत्याशु काशी ॥८६॥

बाहुले बहुलपक्षरजन्यां
या विभर्त्ति सुषमां भुवि काशी ।
तां वशीकृतजगत्रयजीवां
वर्णयेत् कविवरो यदि शेषः ॥८७॥

त्रिभुवनवनजातं वस्तुजातं यदेत-
त्तदखिलमिदमूर्त्तं दृश्यते प्रातरत्र ।
सुरसरिदनुरोधः प्रान्तभूमौ निविष्टं
हरिजठरगतं सद् वस्तुवद्दृश्यमत्र ॥८८॥

तत्र कामादयोऽप्येते तद्विलोकनकौतुकात् ।
सञ्छाद्याधिगतं रूपं निषेदुर्जनतान्तरे ॥८९॥

शार्दूल. केचित्कामपि कामिनीं निजकरैरालिङ्ग्य दूरङ्गताः,
केचित्केचिदचूचूरश्चैंरणतोलङ्कारभूषादिकम् ।
केचिद्वञ्चनतत्पराः सुवचनैराच्छाद्य नैजं मनः,
कण्ठस्थामपि कर्तयन्ति ललितालङ्कारमुक्तास्रजः ॥९०॥

एतस्मिन्नेव समये पिशङ्गाङ्गी दिगप्यभूत् ।
हरेररुणसम्भासा काशयन्तीव काशिकाम् ॥९१॥

पृथ्वीछन्दः पुरन्दरपुरन्ध्रिकादिगवकुण्ठकौसुम्भका-
रुणाम्बरविभास्वरं हरकलत्रपादारुणम् ।
समुद्यदुदयाचलद्विरदकुम्भसिन्दूरितं,
प्रभातसमयोल्लसज्जयति भानवीयं महः ॥९२॥

मालिनी अरुणतरुणतेजो भासि मुक्ताफलेषु,
प्रथयति बहुगुञ्जापुञ्जबुद्धिं जनानाम् ।
भसितकलितदेहान्भूरिसन्यासिनोऽपि,
प्रकटयति तटेऽस्याः कुङ्कुमालिप्तगेहान् ॥९३॥

अहो प्रभातरमणीयता प्रभातरलमणीयदम्बरमणिकरकिरणेन करम्बितस्य कमलकलापस्येव जगज्जालस्य शरद्विकचकुसुमसमूहसुरभितगलदमलजललसदलि-कुलकलकलकलितकमलकुमुदकुलदलचलददलिदलदरलालनललिततरतरलतरङ्ग-सङ्गीतनर्त्तनगुरुः, अगरुसुरभितवातजातः सुरभयति गङ्गापरिसरः ।

**सम्प्रति—**

दलत्पद्मश्रेणीगलितमकरन्दामलजलै-
रलं स्नाताः किञ्चित्कुसुमरजसा लिप्ततनवः ।
स्वरैर्गायन्तस्ते मधुरमधुरं भैरवरवं,
विलोक्यन्ते भृङ्गाः किमुषसि जपासक्तमनसः ॥९४॥

शार्दूलवि. यातः पश्चिमपर्वतं द्विजपतिस्तत्कालमालम्बितुं-
प्रातर्बुद्धगजेन्द्रगर्जनलसत्तूर्यारवः श्रूयते ।
सत्काश्मीरजवारिसिक्तमिव यद्भूमीतलं वर्तते
भानोः पूर्वदिगङ्गनापरिणयः सोऽयं जरीजृम्भते ॥९५॥

शिखरिणी. सरोजाली जाली भवदलिकुलालीकलरवैः,
कलं गायन्तीव प्रचुरमुदमाविष्कलयति ।
तथा मन्ये धन्ये समुदयपदेऽभूद् दिनमणि-
स्तमस्तोमोत्ताम्यत्त्रिजगदहङ्कारकिरणः ॥९६॥

**ततश्च—** उदयाचलचूडचुम्बिभानुमण्डलमवलोक्य अनर्घमर्घपूर्वकं सान्ध्यविधिं परिसमाप्य, एवं च कार्त्तिकविधिमवसाय्य आग्रहायणिके परमाग्रहेण सर्वे पौरजनाः,

मालिनी कलिकलुषकलाभिः कामकोपाकुलाभिः,
कलुषितधिषणाभिर्भीषणाभिः कृताहम् ।
प्रचुरविविधशीलैः शीलितेयं समन्तात्,
(रहसि) सहसि हरति पञ्चक्रोशिका काशिकायाम् ॥९७॥

इति मनसि विधाय प्रातरुत्थाय कृत्वा
निजनिजपरिचारं भारहारं पुरस्तात् ।
अथ कथमभिसस्रुः बद्धपाथेयसाराः,
करलगुडविहारा लोकधारापथेन ॥९८॥

कथमपि च विलम्बव्याकुलः कोपि लोकः
परिकरमपि कृत्वा कम्बलं शम्बलञ्च ।
द्रुततरमथ धावन् धूनयन्हस्तपादं,
दिवसयुगलकेनाहङ्गमिष्याम्यवोचत् ॥९९॥

द्रुतविल. विविधवीधववाहितदारिका
समतिसस्रुरमुं परिचारिकाः ।
निखिलखर्वटखेटनिवासिनः
समसरन् स्वजनोद्धुरहासिनः ॥१००॥

पा.लि.प.सं. ५५, पा.लि.प.सं. ५५क

मालिनी इति विविधविमर्दव्याकुलो लोकसङ्घः,
प्रथमवसतिभूतं कर्दमं भूतनाथम् ।
अहमहमिकयाऽग्रे पातुकः सम्प्रणम्य
प्रथमवसतिभूतं स्थानमासादयन्ति ॥१०१॥
कथमपि निजवर्ग्यानाजुहाव प्लुतेन
प्रबलतरशयाग्रैरुद्धुरैः सुस्वरेण ।
निजपटकुटिकाभिः पूर्णमन्तःपलालै-
र्निजनिवसतिभूतस्थानमभ्याजगाम ॥१०२॥
द्रुततरमथ तीर्थस्नानमासाद्य सद्यः,
सुललिततरपाकव्याकुलः सर्वलोकः ।
कथमपि रचयित्वा हस्तपादैर्विचित्रा-
नतिथिविमलभूताँस्तर्पयित्वा भुनक्ति ॥१०३॥

वसन्ततिलकम् सद्दाक्षिणात्यकुलभूषणभूतभूमी-
भूषायमाणविभवैर्भवभक्तिभावैः ।
भूमीसुरैः समभिशोभियशोभिरुच्चै
र्द्रुत्यै प्रदोषसमये किमु सान्ध्यपेयैः ॥१०४॥

शार्दूलवि. दूराद्दूरतराः पलायनपराः पाटच्चारणां वराः,
गर्जद्दुन्दुभिघोरसद्गतघटाघण्टारवव्याकुलाः ।
सन्त्रस्तास्तृणभारधारणपरा व्याजेन सञ्छादिता-
बद्ध्वा तानथ ताडयन्ति नितरां क्रूराः कृतान्तादपि ॥१०५॥

मालिनी अथ विविधकथाभिः शास्त्रकाव्यादृताभिः,
स्मरहरचरिताभिः काशिकासंश्रिताभिः ।
सुरसरिदवतारध्वस्तपङ्क्तावलीभिः,
कलितकुतुकजातैः कालयन्ति स्म रात्रिम् ॥१०६॥

अनुष्टुप् एवं पञ्चदिनैः पञ्चक्रोशयात्रां विधाय ते ।
विश्वेश्वरं समभ्यर्च्य स्वस्वमाजग्मुरालयम् ॥१०७॥

निजनिजविधिजातं वेदजातं प्रयत्नात् ।
क्षणरचितसमाधिध्यानपूर्वं समाप्य ।
सपदि समभिजग्मुः स्वान्गृहान्भूरिगङ्गा-
पा.लि.प.सं.५६ चरणनतिनमस्का भास्कराभा जनास्ते ॥१०८॥

**इति साहित्यपारावारपारीणकविताकान्तारकण्ठीरवसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षितबाल-कृष्णसूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गावतरणाङ्कः षष्ठ उच्छ्वासः ॥६॥**



# सप्तमोच्छ्वासः

## ।। श्रीगणेशाय नमः ।।

शार्दूलवि. प्रोद्यच्चारुपयोधिभासिततरौ यावर्चनोल्लासिनौ,
हर्षोद्भासिविनायकावहिवरोद्धारौ कलापाङ्कितौ ।
यत्नाद्भूधरभूधरौ धनदहृत्प्रेमप्रवाहप्रियौ
हृत्सौख्यानि वृषाकपी वितनुतां पुष्पेषुदेहप्रदौ ।।१।।

**ततश्च—** सकलं स्नानविधिमवसाद्य विविधविबुधजनसङ्घट्टो निजनिज-घट्टमधिरुह्य शिवालयेषु शिवमभ्यर्च्य,

स्रग्धरा. श्रीकृष्णः कृत्यकृत्यो निजभजनजपस्यावनीवन्द्यवन्द्यो
मां पायात्पापवाटीभटविटनटनाग्रेसरः सत्यसन्धः ।
शम्पावत्पादपानामरिगिरिकरिणां मानदानप्रणद्धो
गोपाटोपांसुपाता सुरवरवरदो दोष्णि संस्थापितश्रीः ।।२।।

इति, नानाविधवर्णमनोहरहारं विरचय्य विन्दुमाधवमानर्चुः ।

रथोद्धता पूजयन्ति कमलापतिं कलङ्कारकङ्कणरवैः करैर्हरिम् ।
कोमलैः कमलकैरवोत्करैः कामकामशमनाय कामुकैः ।।३।।

**ततश्च—**

स्वपौराणिकावस्थितस्थानान्यधिजग्मुः ।
सभाजनाय व्यासाय सभाजनकराः परे ।
सभाजनमुपासेदुः सभाजनकथोत्सुकाः ।।४।।

नानाविधराजकम्बलविराजमानास्तरणविस्तृतानि स्वस्वस्थलान्युपविविशुः ! ततश्चोत्तरसिंहासनमधिरुढमुदयाचलमधिरूढं भानुमन्तमिव नानाविधकथाकथनचतुरास्यं चतुरास्यमिव विविधार्थकल्पनातत्परं सकलजनमनोहरं जनानुरूपवचनरचनाचतुरम् सत्काव्यमिव नानालङ्कारसमलङ्कृतम् अमृतमिव नानारससम्भावनाकलितम् पुराण-वक्तारमभ्यर्च्य समभिविविशुः स्त्रियः पुरुषाश्च—

सत्कथार्थकथनेषु तत्पराः भावदर्शनविधौ लसत्कराः ।
सस्वराः रसविभावनापराः तारणाय भवसागरान्नरान् ।।५।।

कालयन्ति कलिकालमाकुलाः कामकामशमनार्चने रताः ।
कामनीयककलाकलिताङ्गाः कामनीयककथाः कथयन्ति ।।६।।

पा.लि.प.सं. ५७, पा.लि.प.सं. ५७क

**श्रोतारश्च—**

रथोद्धता तत्कथार्थमवलभ्य सुखाढ्यास्ते ततोऽप्यधिगतार्थसमूहाः ।
तोषमापुरुभये विभवेन स्त्रीजनोऽपि निजमर्थमवाप ।।७।।

शाकपत्रनिचयं रचयन्त्यः सत्कथार्थकथनेन हसन्त्यः ।
वाचकाननविलोकविशेषे वक्रितास्यकमलाः कमलाभाः ।।८।।

लड्डुकांश्च दलियाघसोटियान्तोटियाप्रभृतिकान् विरचय्य ।
स्थापयन्ति पुरतः सुरताभा वाचकस्य किल गुर्जरवध्वः ।।९।।

गोमुखीगतकरेण मालिकावर्त्तनं विरचयन्त्यपराश्च ।
तत्र भाति विधवाजनवर्गः स्वर्गमार्गगमनाय समुत्कः ।।१०।।

आर्या दैवाहृतपूर्वभवाक्रमेण सम्पुष्यमाणसर्वाङ्गी ।
कुटिला भाति विभूषा कापि कला वैधवी स्फुरति ।।११।।

रथोद्धता. तत्र वाचकगृहे जनसङ्घः पौरुषेयकलितार्धशरीरः ।
स्त्रीजनेन कलितार्धतनूमच्छाम्भवीतनुरिव प्रतिभाति ।।१२।।

सत्कथापरिसमाप्तिविधाने यान्ति पद्ममुकुलायितहस्ताः ।
तं प्रणम्य नतकन्धरदेशाः सत्वरं सदनतः स्वगृहाणि ।।१३।।

**ततः केचन—**

शार्दूल. शास्त्राध्यापनतत्पराः बुधवराः सच्छिष्यवर्गान्विताः,
दोलारोहपराः परे ससुहृदः सद्वैदिकाः सत्वरम् ।
वेदावर्तनमाचरन्त्यथ परे बालान्बहूनुच्छिर-
श्रोत्रोन्नामपराः स्वरानपि तथा संग्राहयन्त्यादरात् ।।१४।।

असितमणिसुकेशाऽलङ्कृता पद्मरागो-
ल्लसितललितनेत्रा दन्तमुक्ता विचित्रा ।
दशनवसनशोभाकारिसद्विद्रुमाढ्या,
प्रतिगृहमपि दृष्टा जङ्गमा हेममूर्त्तिः ।।१५।।

यन्निशान्तभणितं युवतीनां तत्तदानुकृतिकारिवचोभिः ।
ह्रेपयन्त्युषसि कीरयुवत्यो यौवतं गुरुपदावतिशीलम् ।।१६।।

गेहिन्यो निजकार्यसाधनविधौ व्यग्राश्च मध्याह्निकीं,
सामग्रीमुपपादयन्ति नितरां सच्छाकपाकादिकम् ।
इत्थं सङ्गमकालमाकुलतया नीत्वा विदित्वा निजं,
कृत्यं श्रीमणिकर्णिकापरिसरं सस्नुः समन्तादबुधाः ।।१७।।

पा.लि.प.सं. ५८

स्वर्गाद्देवगणस्तथा सुरगणः पातालतो भूधरात्,
सम्यग्विद्युगणस्तथा मुनिगणः सच्छ्रोत्रियाणां गणः।
सत्सन्यासिगणः शिवार्चनरतस्तत्पार्श्वदीनां गणो
मध्याह्ने मणिकर्णिकापरिसरं सस्नुस्तदा ह्यादरात् ॥१८॥

**तदा च– परस्परमेवं वदन्ति स्म–**

आर्या मणिकर्णिकापरिसरे परिसर किं वा सखे ! सखेदोऽसि।
सर्वस्वदानकर्त्ता त्रिभुवनभर्त्ता प्रतीक्षते जन्तून् ॥१९॥

,, भागीरथीपरिसरे निजपुरि जदुजीविसङ्घानाम्।
स्वसरूपताप्रदानात् कथमयमद्यापि चाष्टतनुः ॥२०॥

गङ्गातरङ्गभङ्गीसङ्गी हिमवालुकासङ्गः।
भवदावानलसम्भवसम्भवतापं विनाशयति ॥२१॥

शार्दूल. सन्तीर्णो हि भवार्णवः सुकृतिनां वृन्दैः समाकर्ण्य तत्।
वर्णात्मा मणिकर्णिकापरिसरे वर्णान्न पर्णायति।
अन्ते संकथयन् कथाः स गमयन्नस्तं समस्तं नृणां।
सेयं जन्तुगणैः कथं भवभयात्सेव्या न वाराणसी ॥२२॥

पृथ्वी. कथं वृजिनमुद्धरेत्सकलजीविनां सत्वरं,
क्षणादुपदिशेत्कथं परमतारकं शंकरम्।
कथं कथय वन्दना पुरहरस्य न स्यादियं
त्वदीयमणिकर्णिका कणिककर्णिका नोद्भवेत् ॥२३॥

अहो जाज्वल्यमानप्रलयानलज्वालजालजाङ्गलितजगज्जाङ्गलजनितजीवजातं, जीवनजातमात्रजीवनजातं जातं कथमप्येनं कालः संकलयति, सम्प्रति हि—

मन्दाक्रान्ता मध्ये व्योम स्फुरति सविता तापयन्सर्वलोकान्;
क्षीणः कालः कलिरिव मुदोद्भासयेत्पादपद्मम्।
काशीवासी जन इव जगत्पादपद्मं जगाम,
प्रौढं पापं स्मरहरपदाम्भोजभाजो यथैव ॥२४॥

वसन्त छाया कृशत्वमगमत्तरुणीजनेन,
सार्धं विदेशगतकान्तसमाकुलेन।
नष्टं तमश्शमनवन्मणिकर्णिकायां
सुस्नातपूतजनतादुरितेन साकम् ॥२५॥

---

पा.लि.प.सं. ५९

वसन्त
छायाऽपि कुत्रचिदहो प्रविलीयतेऽत्र,
माघेव भानुगतमत्र महो विभाति।
ब्रह्मेव भासुरतरं समुपैति तस्मात्-
कस्यार्चने सुकृतपूतजनस्य तद्वत् ॥२६॥

स्रग्धरा
मध्याह्ने मध्यभागे वियत इह कृताबन्ध्यकोपातिरुध्य-
ल्लोकप्राणं प्रबाध्यार्जुननिचयमदाराध्य सम्भ्राजदङ्घ्रेः।
वेगेनाराध्य सान्ध्यं विधिमिह दधतां नैजसान्निध्यमारान्-
मन्देहान्ध्यं सबन्ध्यं कलयति विरुचं मध्यमां चण्डभानुः ॥२७॥

दत्तार्घाः [१]सूत्रयन्तो दिनकरमधिकं येऽभिगेहं द्विजाग्र्याः,
गेहिन्यो वैश्वदेवाद्यखिलगृहविधिव्याकुला सम्प्रतन्ति।
सज्जं ते कामयन्ते प्रसभमतिथयः पावितुं तीर्थपादाः,
गेहं गार्हस्थभाजां भुजि गतमनसः संस्तुवन्तोन्नपूर्णाः ॥२८॥

रथोद्धता
वेणुदण्डकरकाद्यलङ्कृताः सद्गृहस्थजनतानिमन्त्रिताः।
सर्वदा हरहरेतिवादिनः संवसन्ति यतयोऽप्रमादिनः ॥२९॥

आर्या
अभ्यस्तसर्वशास्त्रा वेदाध्ययनाय विरचितोद्योगाः।
विद्यार्थिनोऽपि मधुकरवृत्त्यै भक्त्या प्रधावन्ति ॥३०॥

प्रत्यहं यत्र साहस्रं ब्राह्मणानां सुभुञ्जते।
लक्षं लक्षक्रमेणाशु काशी केनोपमीयते ॥३१॥

**ततश्च—** भोजनादिकं सकलविधिं समवसाय्य प्रक्षालितपाणिपादाः नानाविधताम्बूलादिमुखशुद्धिपराः शयनगृहमाविविशुः।

**तत्र च—** मुहूर्त्तं विश्रम्यापराह्णसमये सत्काव्यनाटकप्रहसनाख्यायिकाचम्पूप्रबन्धबन्धादिकमध्यापयन्तो विविधकथाविलासैः कालं कालयन्तः क्षणं राजमार्गावलोकनाय कुतुकोत्का नानाविधवस्तुक्रयणसमासक्ताः तत्र कामारयोऽप्यभिसरन्ति स्म परस्परं मिलिताङ्केन केचनोचुः—

सहवासेन वास्मासु केऽपि सम्बद्धसौख्यदाः।
अस्मच्छीलानुसरणं कुर्वन्तः केऽपि कोविदाः ॥३२॥

क्वचिदपि पितृनिन्दाकर्णने दत्तकर्णः
कलयति पितृनिन्दां तत्परो दुष्टलोकः।
पलितललितभावे मातृमूर्द्धन्यकस्माद्-
विसृजति सुकृपाणं निष्कृपः कोपि लोके ॥३३॥

शिखरिणी क्वचित्पत्न्या पत्युर्जनकसुतयोः क्वापि जननी-
सुतानां सौहार्दे दलितसहजानां क्वचिदपि ।
विभागार्थं भूयः प्रभवति कलिः केवलमसौ,
तदेतज्जानीत क्षणविलसितं तन्मम कलेः ॥३४॥

**कदाचिन्मुदास्मांभिरापृच्छ्यमानः**
**स्वमुक्त्यर्थमर्थाकुलैर्विश्वनाथः ।**
**तदोदारचन्द्रार्द्धचूडश्चिरेण**
क्षणात्स्यात्कदाचिद्विवेकोदयश्चेत् ॥३५॥

इति संवादपूर्वकनिजवृत्तान्तं कथयतां सायं समयः समगात् । ततः सर्वेऽपि वदन्ति स्म अहो महोभिर्विरहितः सहस्रकिरणोप्यकिरणः संवृत्तः, तिग्मरोचिरप्यतिग्मरोचिः, अहो विचित्रचरित्रजगच्चित्राचरणचमत्कारचर्चितविरिञ्चिः, यच्च रमाचलचूडाञ्चलचुम्बिबिम्बखण्डो मार्त्तण्डोऽपि समजनि पितृप्रसूतोरुणिमारूणयति जगज्जातजातम् । तथाहि–

मालिनी द्विजपतिमथ गोभिः संविधायाश्रुपूर्णं
वरमजलधिनीरोऽनन्तशय्यानिविष्टः ।
असुवसु च यमौ सद्बोधयन् सर्वलोकान्,
प्रविगलितकरौघः साम्प्रतं चण्डभानुः ॥३६॥

कदाचिदपि परैरहन्ता महतामपि श्रियं विगलयति कालः, तथाहि–

ध्वान्तध्वंसनदीक्षितः प्रविलसत्पद्मौघसंवीक्षितः
कोकैः सादरमीक्षितः सकरुणं यः सर्वदाभिक्षितः ।
ध्वान्तैः संप्रति तक्षितः प्रविगलद्भाभिर्न वा लक्षितः
सोऽप्यस्ताचलकुक्षितः परिपतन् लोकैरलं लक्षितः ॥३७॥
–(पद्मबन्धोऽयम्)

अहो ! महोनिधिरपि महोदधौ मग्नः पुरुषायुषजीविनां जीविनां जीवने विविधो योग इति परमाद्भुतम् । अन्यदप्यद्भुतं दरीदृश्यते स्म ।

वञ्चच्चञ्चलचञ्चरीकवलनप्रोद्भूतकम्पोद्दल-
त्पत्रस्रस्तमरन्दविन्दुमिषतः पद्मावलीरोधिभिः ।
पत्यावस्तमितोऽमितस्त्रिजपतावभ्यागमोद्भावना-
त्तस्मादेव मिषादियं कुमुदिनी हर्षाश्रु सम्मुञ्चति ॥३८॥

अहो ! महोद्योतद्योतितदशदिङ्मण्डले अस्तसमयमनुवर्तमाने वर्तमानेषु जगति वस्तुषु किं किञ्चाद्भुतं दरीदृश्यते स्म । तथाहि–

पा.लि.प.सं. ६०

सन्ध्या दर्शयतेनुरागमधिकं कामं द्विजानां गणः,
सम्प्राप्याश्रु निवर्तते किमु नभस्ताराश्रुभी रोदिति ।
कोकाः शोकसमाकुलाः कमलिनी मालिन्यभावं गता,
बह्वावाविविशुस्त्विषः सवितरि प्राप्तेऽस्तपृथ्वीधरम् ॥३९॥

**अन्यच्च–** मलिनानां प्रसरणावसरसञ्जातोऽन्धतमसोलूकखलाखुसर्पचोर-कुलटारिवर्गप्रभृतीनाम् ।

**अन्यच्च-युक्ततरम्–**

पुष्करमगाधमास्तौ तरणीसञ्चालितौ करोघे ।
अप्राप्तावपि परपारं तीरे सम्मज्जतुर्न तद्युक्तम् ॥४०॥

अहो सहसा महसां निधिरपि कालाजगरेण निगीर्णः
कज्जलार्णवप्रवाहरवप्रसवतमातमस्तोमः ।
दैवादुद्गतदशादीप्यपि स्वानुरूपतस्तं
घातं घातयितुमुद्यतासंभवन् ॥४१॥

**तदाहमेवं मन्ये–**

चरमाचलशिखराग्रान्निपतन्संचूर्णितः सहस्रांशुः ।
तद्गात्रसूक्ष्मखण्डा दीपव्याजेन राजन्ते ॥४२॥

अहो महतामप्यनुचितारम्भसम्भावनया नयापगमापभाजां भाज्यत्वरहित-तारतम्यता भवत्येव ।

**यतो–**

वेदत्रय्याकलितः कमलभवाद्यादिदैवतैर्वन्द्यः ।
पतति प्रसङ्गवसतो वारुण्यां भानुमान् कथं नान्यः ॥४२॥

**ततश्च–** नित्यसान्ध्यविधिं समाप्य बहुतराभ्यासतत्परास्तत्तदर्थविचारणा-समर्था विद्यार्थिसार्थाः मुहूर्तमात्रं शास्त्रमाकलयामासुः, काशीं स्तुवन्तोऽप्यूचुः ।

शिखरिणी
अनेकप्रासादोपरिगृहसमाबद्धविलसत्
पताकासंयुक्तो दिवि लसति दीपावलिगणः ।
तमस्तोमप्रध्वंसनविधिनिबद्धादरभरा-
द्रवत्सेवा देवा दधति किमु सद्रत्ननिचयैः ॥४३॥

यदीयप्रासादस्थितशिशुजनोन्मुक्तसुगुणाः,
गता वातोज्जीवाः प्रकृतिमुखरास्संप्रति दिवम् ।
समाख्यातुं काशीपुरवरनिवासीजनगणः
समायातीवाश्रुस्फटिकगिरिवप्रं सुविपुलम् ॥४४॥

मालिनी

शरद्घनघनावलीतुलितकान्तिहर्म्यावली
समुच्छलनलालितो जयति वैजयन्तीगणः ।
परिश्रमपरिभ्रमद् रविरथोद्वहद्वाजिनां
श्रमच्छ्रमनिवारणं किमु करोति संवीजनैः ॥४५॥

यदुपरिवलभीषून्मुक्तसंयन्त्रधारा
जलभरपरिसारा भानुमत्सप्तसप्तीन् ।
जवगमनपिपासून् तोषयत्याशु नूनं
श्रमजनितमुखेन व्याकुलास्योक्षणेन ॥४६॥

शशभृदुपलबद्धा कुट्टिमाकारभूमी
शशिकरपरिरम्भस्यंदिनीस्संविलोक्य ।
तरलतरतरङ्गोत्सर्गसंप्लाव्यमानं
पुरमिति जनसङ्घैर्व्याकुलं संव्यतर्कि ॥४७॥

उपरिगृहगतानां विघ्नराजद्रुतानां
बुधवरवनितानां वारिदूर्वाक्षतौघैः ।
तपसि शिति चतुर्थ्यामर्घ्यदानेन पुष्ट-
स्तरलहरिणशावः कष्टमिन्दोस्तनोति ॥४८॥

यदुपरि गृहभाजां भूरिशोऽपां ततीनां
जनितपरपताकाचीनचीनांशुकेन ।
सततगमनवेगाज्जातसत्स्वेदबिन्दू
रविरथतुरगानां प्रोञ्छतीवेति शङ्के ॥४९॥

पञ्चाननोत्सङ्गमतोऽपि नित्यं
स्विद्यन्मुखं जीवति जीवसङ्घः
मूलं विना देहमहीरुहोऽयं
यस्मिँस्तदानन्दवनं चकास्ति ॥५०॥

समुक्तिवल्लीकलितं समन्तात्
सद्वंसजाताश्रितसर्वदेशम् ।
फलं प्रयच्छन् शिवकल्पवृक्षो
यस्मिँस्तदानन्दवनं चकास्ति ॥५१॥

आनन्दकाननमिदं श्रुतिभिश्चानन्दकाननैः कथितम् ।
यद्भवजनतापङ्कं भवजनितापङ्कमपनयति ॥५२॥

किं वा बहुभिरुपायैरद्वयमाशु द्वयं कुरुत ।
भजत भवं भवनाशनमविमुक्तं मुक्तये श्रयत ।।५३।।

मलिनान्तःकरणत्वात्पुरुषाणां ज्ञानयोगयोरसिद्धत्वात् ।
यदि न भवेदविमुक्तं स्यात्संज्ञा शब्द एव मुक्तिपदम् ।।५४।।

यस्यां च निजकान्तालङ्कृतः कान्ताजनः कामाभिरामरतिरिव रतिश्च कान्ताजन इव, नानाविधार्थशालिनोऽपि धनिनः कवय इव, कवयश्च धनिन इव विविधालङ्कारशालिनो बुधाः, विबुधा इव, विबुधाश्च बुधा इव, गङ्गातीरवासिनो हंसाः परमहंसा इव, परमहंसा हंसा इव, विश्वेश्वरार्चनतत्पराः देवा मानवा इव, मानवा देवा इव विलसन्ति ।

मुरारिगिरिसम्भूता पुरारिजलधिङ्गता ।
गङ्गेव भाति काशीयं काशी गङ्गेव भासते ।।५५।।

**यत्र च–** गङ्गापरमसुषमाभारमुद्वहति गङ्गेव हरसङ्गात् सुखमनुभवन्ती गौरी गौरीव, यत्र राजार्पिततनुः विश्वेश्वर इव यत्र च सौन्दर्यादयो गुणाः गुणा इव विलसन्ति ।

पतितजडजनानामद्वयानन्ददात्री
भवभयदुरितौघध्वान्तविध्वंसकर्त्री ।
इह जगति शरण्या कास्ति धन्या वदान्या,
मम हृदयविचारादस्ति काशीव काशी ।।५६।।

यत्र कान्ताजनस्य वदनानुकारी तुषारकिरणः, तरुणमनोऽनुकारिणो हंसाः, तल्लास्यानुभाविनः शिखिनः तत्कोमलवचनरचनाकलरवाः कलङ्कारास्तत्सौन्दर्यानुकारिणी रतिः तन्नायकप्रेमानुसारिण्यश्चक्रवाक्यस्तद्गतपटुवचनानुकारी सुरगुरुः तद्वत्कविजनवचनानुसरणचतुरः काव्यः इत्थं प्रतीपमुल्लसति सदानन्दप्रदत्वाच्च,

सदाशिवनिवासतः वाराणसी
भवत्तुल्यमस्ति ब्रह्मैव केवलम् ।।५७।।

विगलदमृतविन्दुग्रासि गङ्गामरन्दं
हरपरिचरभृङ्गं गौरगौरीवराटम् ।
मालिनी न हि विलसति काशी किन्नु संसारसारं,
कनकमणिविचित्रं पुष्करं भाति भूमौ ।।५८।।

रथोद्धता सुन्दरेण चरणाम्बुजन्मना कोमलेन करपल्लवेन वा ।
पा.लि.प.सं.६३ सुप्रसन्नवदनेन्दुना जगत्पापतापभयनाशिकाशिका ।।५९।।

मालिनी विलसदमृतवल्लीमूलकन्दं किमेतत्,
किमु शतपथशाखालम्बि सत्पुष्पजालम् ।
किमु जनसुकृतानां पूर्वपुण्यार्जितानां
परिणतफलमेतच्चाविमुक्तं विभाति ॥६०॥

हरिभवनगतानां पूर्वपुण्यान्विताना-
मगणितगुणजालालम्बिवैकुण्ठलोकः ।
सनसनकसुशोभः स्मारयत्याशु नूनं,
भुवि हरिहरभक्तं चापि मुक्तं क्षणेन ॥६१॥

विषमविषयमूर्च्छाच्छादितो जीवलोकः,
सुतगृहबहुवित्तालाभभावात्सशोकः ।
अतिपरिचयदोषादन्यसामान्यदेशां
परिकलयति वित्तं काशिकामाश्रयेण ॥६२॥

विद्यावासपुरीति सर्वविबुधैर्वेदाधिवासस्थली,
वेदाभ्यासपरैर्धनार्चनपरैर्लक्ष्मीविलासास्पदम् ।
कामोल्लासवनीति कामिनिवहैर्मोक्षार्थिभिर्मोक्षभू-
रालोकि क्षितिमण्डले हरपुरी पूर्वोत्थपुण्यैरियम् ॥६३॥

मालिनी भित्वा भूमितलानि सप्त सहसा प्रौढप्रभाभासुरो
मन्ये शेषसमस्तमस्तकमणिः प्रोद्यन्मयूखस्रजैः ।
नानारत्नसमूहभूषितमहा सौधावली विश्रुतां
काशीं कामपि काशिकेतिपदवीं यातः किमप्युद्धुताम् ॥६४॥

मालिनी वलिरधिपरिणद्धो येन मायागुणेन
स्वयमपि परिणद्धस्तद्गुणैर्भावशुद्धैः ।
निजपतिमधिसर्तुं तत्र काशीच्छलेन
क्षितितलमवतीर्णः कोऽपि वैकुण्ठलोकः ॥६५॥

शक्त्या भूमिपतिः शिवार्चनविधिर्भक्त्याऽनुरक्त्या प्रिया-
संसक्त्या निगमेषु भूसुरकुलं नित्यं विरत्या यतिः
शुक्त्या वारिधिर्वीचिभूपरिसरः साधुः सदुत्स्यापरा-
मुत्कर्षां श्रियमादधाति भुवने मुक्त्या च वाराणसी ॥६६॥

मालिनी पतितजडजनानां सेवनं काशिकाया
यदधिगममुदस्ताज्ज्ञानशास्त्रावलोकः ।
निखिलनिगमपाठाभ्यासयोगः सयोगः,
पा.लि.प.सं.६४ परिगलितसमाधिस्सत्समाधिं चकास्ति ॥६७॥

यदपि विमलतीर्थव्रातजातं चकास्ति,
क्षितिवलयविभूषाकारिका काशिकैव।
ग्रहमगणनिषेधाप्रौढभाजः सुराङ्गाः
नभसि तदपि लोकालोकहेतुर्दिनेशः ॥६८॥

वसन्ततिलकम्
यत्सौधसृङ्गवलभीगृहसंस्थितस्य
कान्ताजनस्य मुखकान्तिनिरीक्षणाय।
चन्द्रश्च सन्मुकुरति क्षणदासु नित्यं
तिर्यक्चरोऽपि चरमाचलचूडचुम्बी ॥६९॥

उपजातिः
यदुच्चकुम्भेषु विघट्टिताङ्ग-
निस्यन्दिपर्वक्षणदासु यत्र।
तत्र स्थिता धौतमुखभ्रमेण
पिपीलिका चुम्बति चन्द्रविम्बम् ॥७०॥

मालिनी
सुरसरिदमृतौघस्रावणच्छुद्धवर्णा
शिवशशिकरसङ्घोन्मुक्तपीयूषपूर्णा।
कलिकलुषकलाभिर्व्याकुलानां जनानां
सकलदुरितवह्नेर्नाशिका काशिकैव ॥७१॥

जननमरणदुःखध्वान्तविभ्रान्तचक्षुः-
परिणतभवभाजां व्याकुलानां जनानाम्।
भयसमभिगतानां पीडितानां समन्ताद्,
भवभुजगकरालोत्काशिका काशिकेयम् ॥७२॥

मालिनी
परिकलय पयोधेः सन्ति नानापदार्था-
स्त्वपि निजगतरूपाख्यापने येऽसमर्थाः।
प्रथयति तव कीर्त्तिं तीरभूमौ निषक्ता,
ललितविमलमुक्ता सङ्गिनी शुक्तिकाद्या ॥७३॥

आर्या.
सर्वस्वहारिणी त्वं चरतां समरकानने घोरे।
अनुभव तत्फलमुच्चैरीश्वरशूलाधिरोहणं काशि ॥७४॥

रथोद्धता
साधुपुण्यनिचयैकराशिका, ज्ञानपङ्कजवनीविकाशिका।
सर्वतो जयति दुःखनाशिका काशिका त्रिभुवनप्रकाशिका ॥७५॥

जीविजन्तुनिवहैकतारिका सज्जनाम्बुजवने विहारिका।
पा.लि.प.सं.६५ गाढमोहतमसां विनाशिका काशिका त्रिभुवनप्रकाशिका ॥७६॥

रथोद्धता

जीवजन्तुजनमुक्तिकारिका मुक्तिपङ्कजचरैकसारिका ।
पापवीथि[२]हिमशैलदारिका काशिका त्रिभुवनप्रकाशिका ॥७७॥

चन्द्रशेखररतिप्रदायिका मुक्तिमार्गरचनाविधायिका ।
भक्तवृन्दमवतीति नारिका, काशिका त्रिभुवनप्रकाशिका ॥७८॥

आर्या

विषयाशीविषसम्भवविषयविषव्याकुलो लोकः ।
गङ्गे ! त्वद्विषपानात् निर्विषतां याति तच्चित्रम् ॥७९॥

गङ्गे ! त्वद्विषपानाद्विषयविषव्याकुलो लोकः ।
निर्विषतां गच्छति यद्विषस्य विषमौषधं वचः सत्यम् ॥८०॥

महिमा हिमाचलभवे भवे प्रसिद्धोऽस्ति किं कथये ।
त्वद्विषपानाच्छूली पाण्डुरुगेवाशु जायते पुरुषः ॥८१॥

स्वागता

पातकं हरतु देवधुनी ते या सुहृज्जनमनांसि धुनीते ।
भूषणीयति सदाशिवपुर्या विभ्रती विधिहरीव वपुर्या ॥८२॥

यश्च जह्नुतनयातटभूमानुत्पतिष्णु तनुमाशु विभूमा ।
लभ्यते स्म खलु तेन तनूनां शम्भुसङ्गमवशादतनूनाम् ॥८३॥

शिखरिणी

हरेः पादाम्भोजे तदनु विधिभृङ्गारकगृहे,
जटाजूटे शम्भोस्तदनु हिमकूटेष्वधिगतम् ।
ततो भूमीलोके वृजिनभयशोकेन कलिते
मदङ्गे तद्गङ्गे तव विमलवारि प्रसरतात् ॥८४॥

पृथ्वी.

गलद्गरलभक्षणं वलितवीतिहोत्रेक्षणं
फणीफणसहस्रकैः प्रकुरुते विषाभ्युक्षणम् ।
सहैव विषमेक्षणः त्रितयतापदुःखं कथं,
यदा शुभवती भवेन्न भवति त्रितापापहा ॥८५॥

आर्या.

खड्गीनन्दक खड्गीवत्सः श्रीवत्सलाञ्छनो भवति ।
अधिगङ्गमुद्गीतवपुश्चक्रीवाञ्जायते चक्री ॥८६॥

मालिनी

तवतरलतरङ्गै वीक्षितो भानुमान-
प्यनुभवति बहुत्वं तत्र नो चित्रमस्ति ।
जलशिथिलितपङ्कैरङ्कसंस्थः करङ्कः,
कथमपि गतकष्टोऽप्यष्टधा भावमेति ॥८७॥

---

पा.लि.प.सं. ६६

शिखरिणी सदा पङ्काशङ्काकुलिततनुरङ्काधिपतिरप्य-
यं कस्ते यं काव्यमवति करं कापि तनुषु
तदा सम्भासम्भाविततनुरसं भावनपरं,
परीरम्भादुद्भावयति चिति जंभारिसदने ॥८८॥

महोदारा तारापरिवृढनुसारा भुवि सरा
स्थिरा वाराणस्यां स्मरहरसमाराधनपरा।
दिशं हाराकारा विमलतरनारायणपदा-
त्पतन्ती त्वद्वारा मम जननमारात् शमयतात् ॥८९॥

पृथ्वी विशेषविषयावली विषमसेवनाविर्भवत्-
प्रभूततरपातकावलिविलीनचित्तश्चिरम्।
भवत्तटकुटीगतप्रकटवासविश्वासतो
नयामि दिवसानहं समुचितं कुरुष्वास्पदम् ॥९०॥

अनुष्टुप्. अविमुक्ते ददातीह जन्तूनागभवं भवः।
को विश्वसेज्जह्नुसुते! भवतीं प्रतिभूर्न चेत् ॥९१॥

मालिनी अथ कथमिह काशीं लोभतो लीयमानां,
स्थिरतरवररूपां कोऽप्यकूपारपात्रम्।
कविवर इह कश्चिद् यश्च नोद्भ्रान्तचित्तः,
समवददथ गङ्गां सिन्धुसङ्गाय भूयः ॥९२॥

मालिनी सकलनदनदीनां नायकस्त्वत्प्रतीक्षा-
बहुविलसदनूपः सोत्करूपः किलास्ते।
यमसदनगतानां या हि सन्तापभाजां
सगरसुतशतानां तापनिर्वापणेन ॥९३॥

इति विविधविबुधजनोद्गीर्णवर्णोपमामनुकर्णयन्ती सुरस्रवन्ती, सत्वरतरमान-सचरपयोधिमनोरथपरिपूरणायेव विरचितकामोपभोगसुललितवेशा भानुजातरङ्गविरचित-केशसीमन्तसिन्दूरार्पितवाग्विशेषा, विरचितशोणाधरदला, सरयूप्रवाहप्राकारपरीवृतानना नानापत्रावलीकलितगण्डकीकल्पितकपोला, पुनः पुनः प्रेर्यमाणामिलद्धंसका, उच्चा-मरैश्चामरैर्वीज्यमाना, नानाविधरत्ननिचयालङ्कृता, विलसन्नानाविधा वार्त्ता, सागर-कृतभूवर्त्तानाप्लावयामास।

---

पा.टि.प.सं. ६८

ततः—

मालिनी. कपिलमुनिसुकोपप्रौढदावानलोप-
ज्वलिततरशिखाभिः प्लुष्टसर्वाङ्गसारा ।
भसितलसितदेहा सागरा वल्गुगङ्गा-
चरणशरणचित्ता मुक्तिभावङ्गतास्ते ॥९४॥

**इति श्रीमत्समस्तशास्त्रपारङ्गमदीक्षितडुण्ढिराजात्मना साहित्यपारावारपारीण-कविताकान्तारकण्ठीरवसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षितबालकृष्णसूनुशङ्करविरचिते गङ्गावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कः सप्तमोच्छ्वासः ।**

**समाप्तोऽयं ग्रन्थः ।**

मालिनी सकलगुणभृतायाः स्वर्धुनीसंश्रितायाः,
भुवि मम कविताया नव्यवाङ् नैव दोषः ।
त्रिभुवनजयवन्द्या सर्वथैवाभिवन्द्या
स्थविरहरशिरःस्था चन्द्रलेखा नु वैषा ॥

शिखरिणी ऋतु ब्रह्म ब्रह्माननहरणदेहावनिमिते
सहोमासे सोमान्वितिविशदपक्षे शिवतिथौ ।
लसत्काशीशम्भुस्तवननिभृता शङ्करकृता
गता गङ्गाचम्पू विमलतरसम्पूर्णपदवीम् ॥१॥

गङ्गा-गङ्गाधरपुरं गङ्गाधरपदाम्बुजम् ।
वर्वर्ति मानसे येषां तदर्थमयमुद्यमः ॥२॥

या देवालयजा तथोपवनजा वापीतडागादिजा,
कीर्त्तिः सद्गुणजा च किं चिरमहो भूपायते भूतले ॥३॥

किञ्चैषाप्रतिमप्रबन्धरचना वैदग्ध्यमुग्धाक्षरा,
सम्बद्धा कविभिः पुरातनकथेवाकल्पमाकर्ण्यते ।
भुवि मम वाङ्मयबन्धः कुर्वन्सुधियां सुखं जयतु ।
गुणखण्डननिपुणानां धियः खलानां सुखं जयतु ॥४॥

**॥ शुभं भवतु ॥**

❖❖❖

**पादटिप्पणी**

१. 'स्तूयमाना' इति शु.पा.
२. 'वास्तवीति' इति पा.भे.

# गङ्गाभक्ति-चन्द्रिका

॥ श्रीसरस्वत्यै नमः ॥

॥ श्रीगणेशाय नमः ॥

शार्दूलवि. संसारोरगदंशशंसनपरै [१]र्यः सेव्यते योगिभि-
र्यन्मोहक्षणदाप्रकाशजनकं भक्तोत्पलामोदकम्।
सद्यः क्रोधदवाग्निमग्रजनतासन्तापशान्तिप्रदं
सान्द्रानन्दघनं शिवापतिधनं ध्यायामि गाङ्गं महः ॥१॥

**अपि च,**

उपेन्द्रवज्रा. यदीयसौन्दर्यसरिज्जलान्तर्निमग्नवृत्तिः सुकृती शिवोऽभूत्।
तदीयपादाम्बुजकोशचारीजनो विहारी सततं मुदास्तु ॥२॥

**नाद्यन्ते सूत्रधारः–** पुरतः वसुदेवकुलोद्भूतं सकलबुधजननुतं सौन्दर्यौदार्य-गाम्भीर्यधैर्याद्यनेकगुणाधारभूतया रुक्मिण्याऽ[२]हम्।

भागीरथीचरणसपर्यारतं श्रीकृष्णं विलोक्य, (आत्मगतम्)।

अनुष्टुप् सपर्यारचनासक्ति दृश्यते ह्यस्य चेतसि।
नन्दायाः सुखकन्दायास्तदयं सुकृती नरः ॥३॥

नह्यन्यथा तच्चरणारविन्दमकरन्दास्वादनाभिरुचिर्भवति मन्दानां, मतोऽस्य पुरः बालकृष्णाह्वयेन कृतं निबन्धं दर्शयामीति।

**तावत्प्रविश्य नटः–** अये अलमतिविस्तरेणादिष्टोस्मि निखिलबुधजनाह्लादजनकसल्लापेन अनवरतदानधारासारसम्पातशमितार्थिततितापेन प्रबलतरारिकुलवक्षःस्थलपाटनप्रकटितनृहरिप्रतापेन श्रीकृष्णनाम्ना भूसुराधिपेन।

यदरे विविधविषयरसास्वादकलुषिते मनसि न बोधोदयः सम्भवतीति तज्जनकभक्त्यनुयोगिकानुबन्धेनानुमोदनीयेयं सभेति। तदनेन बालकृष्णाह्वयेन निर्मितं गङ्गाभक्तिचन्द्रिकाभिधानं निबन्धं दर्शयामः। अस्ति चास्य तदवलोकन-कुतूहलमिति।

**सूत्रधारः सहर्षम्–**

सखे नट ! किमन्तर्गतं जानासि ? मन्ये च तदस्य प्रभोः सन्निकर्षेण। नात्राश्चर्यं तद् भक्तसन्निकर्षोत्कर्षः सिद्ध एव। अतएव वाराहे–

---

गङ्गाभक्ति चन्द्रिका, बालकृष्णकृता, विषय– काव्यम्, एकाङ्कीनाटकम्, पत्र सं. १-९, स.भ.पा.लि.सं. ४१४३३।

अनुष्टुप् अर्धादिकं गृहीत्वा तु सेन्द्रा देवाः समासते।
आगच्छन्ति कदेत्यार्या गङ्गामधिगता नराः ॥४॥ इति।
तथा च सिद्ध एवोत्कर्षः गङ्गाभक्तेः।

**नटः—** तत्किमिति न रोचते निखिलजनेभ्यः।

**सूत्रधारः—** अये नट! न हि द्वेषः कस्यचिदस्ति किन्तु सुकृताभाव एवारोचकः।

**उक्तश्च स्कान्दे—**

अनु. गङ्गां प्राप्यासि ये विप्रा श्रद्धां भक्तिं न कुर्वते।
तीर्थान्तरे रतिं कुर्यु स्ते वै निरयगामिनः ॥५॥

**अन्यच्च बीजमस्ति। यतः पाद्मे—**

यत्फलं जायते पुंसां दर्शने परमात्मनः।
तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥६॥

न हि तद्दर्शनजन्यफलभोक्तृत्वं निखिलजनस्य सम्भवति। अन्यथा सर्गोऽप्युच्छिद्येत तदलं अप्रसक्तोक्त्या।

**अये नट! पश्य**

उपेन्द्रवज्रा. गङ्गामनङ्गारिजटातरङ्गां पयोमयाङ्गां निहताघसङ्गाम्।
निरीक्ष्य नोदेति सुभक्तिपूरो मनस्तदीयं दृषदोऽभिजाने ॥७॥

**अपिच।**

अनु. न यस्य हृदयाकाशे काशते जह्नुजातनुः।
जननीयौवनोद्यानमाहरं विद्धि वानरम् ॥८॥

**तदास्तामेतत् किन्तु।**

वसन्ततिल. यो गाङ्गमम्बु सततं समुदीक्षते स
शान्तं पदं समधितिष्ठति वीतशोकः।
मर्त्ये च भूतिलसितः प्रजहाति तापं
भागीरथीं भजत किं सुजनास्ततोऽन्यैः ॥९॥

**तावन्नेपथ्ये।**

आः कोऽयं जल्पति भागीरथीं भजत किं सुजनास्ततोन्यैरिति।

**सूत्रधारः—** अये नट! प्रस्थानान्तरं दृश्यते, तदेतैः सह वाग्विमिश्रणमपि गुरुतरदुरितोदयाय। अतोऽपसर्तव्यम्। इति निष्क्रान्तौ।

ततः प्रविश्य सशिष्यो भेददर्शी वदेद्वः[3]। पुरतः भूदेवं विलोक्य आशिषं पठति।

उपेन्द्रवज्रा. सदागमज्ञैर्गदितोतिसारस्ततोद्य भूदेव! निगूढपारः।
यदीयसूनुत्वमगात्स मारस्त्वां पातु गोपीजनचित्तचारः॥१०॥
भो महाराज कथमयं भवत्सभायामित्थं प्रलपति।

**राजा–** साक्षेपम् (उच्यते)। तदा स्वशिष्यं प्रति।

अये श्रुतं त्वयाऽस्य दुर्विनीतस्य वचो यस्तटिनीं स्तौतीति। शिष्यः सोपहासम्–

आचार्य! कथमित्थं वदन्न लज्जसे।

**वैष्णवः–** लज्जाबीजं किं?

**शिष्यः–** यस्तटिनीं स्तौतीति वाक्यमेव। यतः भगवत्सान्निध्यसौख्यानुभवशालिन्याः सिद्धैव स्तुत्यता।

**वैष्णवः–** रे बाल! तात्पर्यमबुद्ध्वैव कथमित्थम्प्रलपसि?

**शिष्यः (सानुनयम्)**
आचार्य। किं तत्तात्पर्यं?

**वैष्णवः–** किं ततोन्यैरिति वक्तुरेवोपालम्भः न तु कमलाकान्तभक्तिरसोत्पादिकाया गङ्गाया इत्यलमप्रस्तुतालापेनेति तूर्ष्णीम्।

**शिष्यः–** आचार्य! किमित्यनादरोऽप्यत्र बहूनाम्।

**गुरुः–** कुर्वन्त्वनादरम्! किं तावता? पश्य–

उपेन्द्र. भव्येऽपि गव्ये ज्वरिणां न रागः
समुद्भवत्येव यथा तथात्र।
स्तव्येपि दिव्ये मदनोन्मदानां
न तावता श्रीपतिरेष दुष्टः॥११॥

तस्मात्परमेश्वरचरणकमलमकरन्दास्वादनमेव परं मन्ये, किन्तु अलमनया चिन्तया।

**भगवन्तं स्तौमि–**

वसन्तति. मायासरिज्झषगतं भगवन्मुरारे!
मां दीनमुद्धर सदा करुणार्द्रचेतः।
त्वत्सेवनादरवरेण नरेण तौल्यं
कर्त्तुं न शक्त इति मे हृदये वितर्कः॥१२॥

रे **शिष्य** !

मात्राछन्द. यदयं कमलालयालयः कमलं नोद्गिरते जनान्ततः ।
कमलेशय[४] एव सेव्यतां कमलास्यैर्न हि पार्वतीपतिः ॥१३॥

तावदागतो भेददर्शी स शिष्यः शैवः । आगत्याशिषं पठति ।

वंशस्थ संकर शिवं विधाता विदधातु शङ्करः
सुरम्यकीर्तेरवनीसुरस्य ।
तदीयवामाङ्गविलम्बिविम्बा
बाला विलोला विजयाय तेऽस्तु ॥१४॥

**तावच्छिष्यः—** भो आचार्य ! कथमयं दुर्जनः कमलास्यै र्नहि पार्वतीपतिरिति ज़ल्पति । तदयं बुधेतर इवाभाति ।

**शैवः सानन्दम्—** अये सत्यमेवोच्यते । उपनिषत्परिशीलनशून्यानामेवेदृशी मतिरुद्भवति । शिवोत्कर्षस्तु सिद्ध एव । पश्य पश्य ।

वसन्त. तस्येच्छया त्रिभुवनं स्फुटतां विधत्ते
तस्मिन्निदं च विलयं सकलं प्रयाति ।
तेनैव पालितमभूद् वहतीति वेद-
स्तस्माद् भवान्नहि विभुर्भुवनेऽधिकोऽस्ति ॥१५॥

**तावत्पुलकिताङ्गः सन् भगवन्तं स्तौति—**

मात्रा. भवमेव भवान्तकं तमीडे मदनो येन निवारितोऽन्तरायः ।
मतिभेदतमोऽभिवर्धयेद्विदुषां यो न शुभस्मितोऽन्तरायः ॥१६॥

**तावद्वैष्णवशिष्यः—** स्वगुरुं प्रति ।

आचार्य ! प्रस्थानान्तरं दृश्यते । तदपसरणमेव वरम् ।

**वैष्णवः** (सक्रोधम्)

अरे ! किं मां मूर्खमभिजानासि ?

**शिष्यः—** आचार्य ! कलहप्रीत्येत्थमुक्तम् । न तु मूर्खत्वानुरोधेन । इति विवादं कुर्वतोर्गुरुशिष्ययोः सन्निकृष्टः शैवः ।

**तदा वैष्णवः शैवं प्रति—** अरे शैव !

प्रथयसि भक्तिं शम्भो मूढतयैवेति निश्चितं वेद्मि ।
यः [५]प्रेतागणवसतिर्विबुध हृदयजे[६] कथं वसति ।

**शैवः — सक्रोधम्।** आः पाप! कथमित्थं प्रलपसि? यस्य-

उपजातिप्रस्तर आनयद् भुवि यदा भगीरथो गाङ्गवेगविवशस्तदा हरिः।
नेक्षितः सुरवरो महेश्वरस्तां बभार सरितं स्वमूर्द्धनि ॥१७॥

यदि शिवेनेयं न धृता स्यात्तदा सृष्टिविलयोऽपि जातः स्यात्। तस्मादयमेव सुरोत्तमः प्रकाशते।

**वैष्णवः। सगर्वम्—**

शिखरिणी. पयोराशेर्वामा शिरसि विधृता येन तटिनी
श्रुतिप्रोक्तं ध्वंसं गमितमखिलं कर्म सरुषा।
समुल्लङ्घ्याचारं विहितमधिकं ब्रह्महननम्
कथं शम्भुं मूढ प्रथयसि कुकर्माणमनिशम् ॥१८॥

**शैवशिष्यः—** हे गुरो कथमयं दुरात्मा त्वां मूढ इत्याक्षिपति।

**शैवः—** शिष्य- अनयैव रीत्या अबोधकलुषितान्तःकरणाः प्रतारयन्ति। शृणु-

वर्णर्धसमवृत्तभेदः परिधाय समुज्ज्वलांशुकं,
रविसंख्यान् तिलकान् विधाय च।
पुरुषं विवदन्ति सज्जनै-
र्धृतमाला विधवाविमोहकाः ॥१९॥

इत्युक्त्वा वैष्णवं प्रति-रे! पश्य।

शिखरिणी घृतादीनां चोरः प्रथमवयसि स्त्रीवधकरः
सुहृद्गोपालानां तदनु जननीभ्रातृवधकृत्।
स रुक्मिण्या हर्ता शिव! शिव!! परस्त्रीगतमनाः।
कथं शास्त्रातीतो न खलु भवदीयो हरिरयम् ॥२०॥

**वैष्णवः—** किमनेनोपहासेन। पश्य।

अनु. यदा रमा सुरा रामा प्रादुरासीत् पयोनिधेः।
तदा हरे स्मराहारे न बबन्ध रतिं हरौ ॥२१॥

एतेनाप्युत्कृष्टत्वमस्यैव प्रतीयते॥

**शैवः। सोपहासम्** अरे महान्पण्डितोऽसि। यतः स्त्रीमोहकत्वेनेश्वरत्व-मभिमन्यसे। न हि कश्चिल्ललनाप्रियो वेदे ईश्वरत्वेन प्रसिद्धः। शिवस्योत्कृष्ट-क्रियाकारित्वं त्वागमसिद्धम्, पश्य-

यदा हालाहलं शम्भुः पपौ कालानलप्रभम्।
तदा बालामनोयायी व्यालशायी न वीक्षितः ॥२२॥

एतेन शिवस्यैवोत्कृष्टत्वं प्रतीयते– इति विवदमानयोस्तयोः कलहं श्रुत्वा कौतुकदर्शनार्थमागतो गङ्गाभक्तः। (स्वगतम्)

उपजातिप्रस्तर. सांसारदुःखं परिहर्तुकामाः भक्तिं श्रयन्ते गुरुमाप्य बालाः।
तत्रापि जन्मान्तरपापयोगाद्विपक्षभावं सहसा व्रजन्ति ॥२३॥

**यतः–**

'' एकमेव निखिलेषु विम्बितं
तोयकुम्भशतके यथा रविः।
तत्र वादपरिकल्पकान्तरा[७]
स्ते नरा न जनितास्तु वानराः ॥२४॥

शैववैष्णवादयः साश्चर्यम्–

**शैवः–**

अरेऽस्मद्विलक्षणोऽयं महापुरुष इति शङ्के।
तावत् सन्निकृष्टो गङ्गाभक्तः–
भो जनाः! किंमूलकोऽयं कलहः?

**तदा शैवः–** भो महापुरुष! अयं वैष्णवः योगिभिरपि कलहायते।

**वैष्णवः–** भो महापुरुष! अयं स्वयं कलहं कुर्वन्मामधिक्षिपति।

**गङ्गाभक्तः विहस्य–** कथमिदानीमपि कलहः? न हि भक्तिमतां कलहरसिकता युक्ता। न हि ईश्वरत्वमननुगतम्।

**यतः–**

पजातिभेदः एकमेव जिवितोस्ति[८] कारणं
भेद एष परिकल्पितो मुधा।
तेन तां त्यजत भिन्नवृत्तितां
भेद एष कलहादिकारणम् ॥२५॥

**यत उक्तं विष्णुपुराणे–**

अनु. सोऽहं स त्वं जगच्चेदं सदेवासुरमानुषम्।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥
इति विष्णुवचः ॥२५(क)॥

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥२६॥

इति भविष्ये शिववचश्च। तथा चासिद्ध एव भेदः। किन्तु–

एकस्यामपि कस्याञ्चिद्व्यक्तौ रागं समुत्कटम्।
कृत्वा वसथ भो विप्राः किमेतैर्वाग्विजृम्भणैः ॥२७॥

इति वदन् तावदसत्सन्निकर्षादुद्विग्नो गङ्गाभक्तः स्वेष्टदेवताध्यानं नाटयति।

उपेन्द्रवज्रा भजन्तु भर्गं सुकृतैकवर्गं।
जनाश्च विष्णुं सकलारिजिष्णुम्।
वयं तु गङ्गाचरणारविन्द-
मिलिन्दभूताः सततं चरामः ॥२८॥

**अपिच–**

उपजाति या मङ्गलं मङ्गलमङ्गलानाममङ्गलानामपि या निहन्त्री।
मदीयचित्तभ्रमर! प्रकाममवेहि सैव त्रिदशैकवन्द्या ॥२९॥

**तदा शैववैष्णवादयः–** भो महापुरुषः! कथं गङ्गायामेवादरो भवतो दृश्यते?

**गङ्गाभक्तः–** विहस्य आदरे हेतुभूतं पद्यं पपाठ[९]।

पृथ्वीछन्दः शिरोऽङ्घ्रिवसतिर्यतोऽभवदियं मुदा जाह्नवी-
निवारितभवोद्भवा भगवती प्रतीमो वयम्।
उमेशकमलेशयोः प्रसृतभेदहालाहल-
प्रतापितजगत्त्रयप्रशमहेतुभूता त्वियम् ॥३०॥

ईदृशपद्यश्रवणेन शिथिलीकृतभेदाभिनिवेशाः– (स्वगतम्) सत्यमेवोच्यते महापुरुषेणेति। भो महापुरुष! त्वत्सन्निधानाद् गलितोऽस्मदीयो मोहमदिरावेशः। तदिदानीं भुवनवर्तिनो भेदकलुषितान्तःकरणान् गङ्गाभक्तिपुरःसरं बोधयामः। इति, निष्क्रान्तौ।

तावत्प्रविष्टो सशिष्यः शाब्दिको राजानं विलोक्य आशिषं पठति–

शार्दूलवि. लब्धं वादिविनिग्रहक्षमबुधैर्निर्मथ्य भाष्योदधिं
शब्दब्रह्मसुखं ददातु भवते भो! भूमिदेवाधिप।
वादिग्राहयुतं सुसूत्ररचनामीनैः सदाधिष्ठितं
पूर्णं शब्दमयैः सुरत्ननिचयैरौन्नत्यलक्ष्मीसुतम्[१०] ॥३१॥

**ततः पाण्डित्याभिमानं वदन्नुच्चैः सभायाम्—**

मात्राछन्दः. न दिनं सुदिनं कलानिधे
विरहे हन्त निशा विवस्वतः ।
सकलापि न राजते तथा
रहिता व्याकरणेन गीर्नृणाम् ॥३२॥

**तावच्छिष्यः—** आचार्य ! तार्किकादयोऽपि पण्डिताः सन्ति । तत् कथमित्थं ब्रवीषि ?

**शाब्दिकः— शृणु रे मूर्ख !**

अन्तरस्य गुणं ब्रूते धर्मं हि निखिलो जनः ।
द्वेषाधर्मादिकानन्यस्तार्किको विबुधः कथम् ? ॥३३॥

न ह्यस्मत्सदृशैर्विबुधत्वेन तार्किकोऽङ्गीकृतः ।

(तावत्प्रविष्टः सशिष्यस्तार्किकः । राजानं, विलोक्याशिषं पठति ।)

उपजातिभेदः क्षित्यङ्कुरादेर्नहि हेतुभावो
वक्तुं जनस्यादियुतस्य शक्यः ।
यो मानविद्भिर्गदितः परात्मा
स ते विभूत्यै धरणीसुराऽस्तु ॥३४॥

**तार्किकः सोपहासम्—** भो सभासदः ! कथमयं बालः पदार्थबोधरहितान्प्रतारयति ? (सभासदः साश्चर्यम् । तावत् शाब्दिकशिष्यः स्वगुरुं प्रति)

आचार्य ! गालीर्ददन् न याति तदयं तार्किक इति मन्ये । भवद्वचनादुपजातक्रोध इवोपलक्ष्यते ।

**शाब्दिकः—** का चिन्ता ।

**(तावत्सन्निकृष्टस्तार्किकः) । रे मूढ ! पश्य—**

सुसिद्धे शब्दसाधुत्वे विवदन्ते कुबुद्धयः ।
महाजनो निनिन्देति शाब्दिकाः पिष्टपेषकाः ॥३५॥

तथा च सज्जनासम्भावितस्य सज्जनेतरस्य स्वस्य कथं पण्डिततत्वमभिमन्यसे ।

**शाब्दिकः सक्रोधम्—** अरे कथमित्थं प्रलपसि । पश्य पश्य ।

शार्दूल नास्याद्यातिबहिः कथञ्चिदपि सा यातापि चालिङ्गते-
स्तम्भं मोहमयं हृषीकललनावृन्देन नीता सती ।
बालेवाधिसभं ह्रिया नतमुखी ब्रूमस्तदेतद्द्वयं
मुक्ता व्याकरणेन हन्त ! विदुषां वाणी नवोढायते ॥३६॥

तस्माद्व्याकरणमेव प्रधानमिति मन्ये।

**तार्किकः सगर्वम्–**

रे रे शाब्दिक ! मा मुधा कुरु बुधालापप्रतापस्पृहा-
मज्ञानां पुरतः सुबुद्धिरहितो हास्यास्पदं यास्यसि।
मानानामधिपानुमानरचनाधीरैर्न वीरैर्विना
मन्येताखिलमन्दबुद्धिमहित ! प्रस्तौषि यत्त्वं पुरः ॥३७॥

यद्यनुमानप्रामाण्यं न व्यवस्थापितं स्यात्तदा श्रुतिप्रामाण्यं केन सिद्ध्येत। तथा च तव तु न कापि गणना। तस्मात्तार्किक एव स वेत्ति, इति मन्ये।

(इति विवदमानयोः कोलाहलं श्रुत्वा समागतो मीमांसकः)

**राजानं विलोक्याशिषं पठति–**

नृपतित्वं वराकत्वं येनैव लभते जनः।
तत्कर्म फलदं तेऽस्तु नियतं वसुधासुर ! ॥३८॥

भो धरासुर ! कथमयं वैदिकेतरो भक्तसभायामित्थं वदति ? राजा अवचनेनैव भ्रातृत्वं स्फुटयति। तदा स्वशिष्यं प्रति– अये शृणु–

विना मीमांसया नार्थः श्रौतः कश्चित्प्रतीयते।
मीमांसकस्ततो बुद्धो ह्यबुद्धस्त्वितरो जनः ॥३९॥

**(तार्किकशाब्दिकौ स्वगतम्)–**

अहो ! अयमावयोर्मस्तकमारोहति, तदयं वाचःकूटैः पराभवं नेतव्यः। तथा क्रियताम्। तार्किकः–

अरे मीमांसक ! वैदिक ! कथं वादिधुरन्धरैः सह स्पर्धां कुर्वन्न लज्जसे।

**मीमांसकः–** शृणु रे भ्रान्त।

जगत्प्राणो यदा वाति मीमांसाख्यो महाशयः।
कति नोड्डीय गच्छन्ति तदा वादितृणोच्चयाः ॥४०॥

**तार्किकः– (सोपहासम्)**

अरे मीमांसक ! वैदिकेतरमतसागरे निमग्नश्रुतिरत्नोद्धारकैः सह स्पृहा नोचिता।

मीमांसकः– **(सक्रोधम्)**

श्रुत्यर्थबोधहेतुं मीमांसां किं विनिन्दसे पिशुन ! ।
अत्यन्ताभावप्रभवसमर्थो न लज्जसे किमिति ? ॥४१॥

तार्किक ! अत्यन्ताविद्यमानपदार्थनिरूपकत्वात् तव पण्डितेषु तत्त्वविवेचकेषु गणनैव नास्ति, परन्तु देहातिरिक्तात्मनिरूपकत्वात्पण्डितैः स्वीकृतोऽसि।

**शाब्दिकः !** तव तु पण्डितपङ्क्तिनिवेशे वयमेव मूलम्।

**तार्किकः–** अरे मीमांसक ! पदपदार्थावधारणपूर्विका हि वाक्यार्थावगतिः। पदपदार्थावधारणं हि व्याकरणतर्कविद्याभ्यां सिध्यति। तथा च कथमित्थं प्रलपसि।

**मीमांसकः–** अहो भवन्तौ भ्रान्तौ। यदनादिवृद्धपरम्परासिद्धं पदपदार्थाधारणं व्याकरणंतर्कविद्याधीनं मन्येते।

**(तावत् तार्किकः सक्रोधं शाब्दिकं प्रति–)**
अरे अयं दुष्टः मुष्टिघातैरेव शमनीय इति।

(तदा गङ्गातीरस्थो गङ्गाभक्तः शास्त्रेतरकलहोद्युक्तान्निरीक्ष्य राजानं चोद्विग्नं निरीक्ष्य त्वरितमुपाजगाम। उपसृत्य।)

**भो पण्डिताः–**

मात्रा. "कथमीदृशकलहप्रवृत्तिर्भवादृशानाम् ।
न हीदृशकलहरसिकता मनीषिणामुचिता" ॥४२॥

**यतः–** कः पण्डितो विवेकीति शङ्कराचार्योक्तेः। तदहं मन्ये निखिलमुनिमतपर्यालोचनया इयं द्वयी सारभूता निर्णीतेति। (तामेव पद्येन स्फुटयति)

परीक्ष्य शास्त्रोदधिरत्नजातं वसुद्वयीयं विबुधैः प्रपन्ना।
जडेषु रूढिर्द्रविणागमश्च न चेत्कथंस्यात्कलहप्रवृत्तिः ॥४३॥

**अन्यत्रापि–** प्रभुसदसि दृष्टा मत्सदृशानामियमेव रीतिः।

मात्रा. धनिकाश्रयं समधिगम्य वरं,
महितं कलासु समुदीक्ष्य परम् ॥४४॥

व्यथयन्ति लोभकलुषाः सुकरं।
नवसङ्गमेन चपलाः सुनरम् ॥४५॥

गङ्गाभक्तो व्यथय(ती)न्तीत्युक्त्वा इदमनुचितमिति पद्यान्तरेण स्फुटयति।

द्रुतविलम्बित. मुनिमतानि निशम्य गुरोर्मुखात्-
परतराप्तिकृते कथितानि किम्।
कलुषितानि नियुज्य महाजनाः !
हृदयगर्तविपूर्तिकृते मुहुः ॥४६॥

तस्मात्कलहोऽयमनुचित इव। (साश्चर्यम्)।

अहो! अधीतागमेष्वप्येतेषु विवेकिता न दृश्यते तदत्र कलिमहिमा स्फुट एव भाति। तदलमेतैः सह विवादेन (इति स्वदेवतां स्तौति)

भुजङ्गप्र. न जानाति गङ्गे! ह्यनङ्गाहिदष्ट।
श्च योऽयं जनानां चिदानन्दरूपम्।
मदापास्तबुद्धिर्न सिद्धिं प्रयाति
त्वदीयाङ्घ्रिपद्मालिभूतस्ततोऽहम् ।।४७।।

**तदा मीमांसकप्रभृतयः (स्वगतम्)**

अहो अयं कोऽपि महापुरुषो भवति तत्प्रष्टव्य (इति अपसृत्य) भो महापुरुष! त्वत्सन्निधानाद्गलितोऽस्मदीयः कलहावेशः। परन्तु वैदिककर्मपरिहारेणात्रादरस्तावदागमविरुद्धः।

" अहं चिन्तये तावकं रूपमार्ये!
त्रिनेत्रं चतुर्हस्तमब्जायुताभम्।
शिवं श्वेतचैलावृतं शान्तिबीजं
सदानन्दसान्द्रं सुरैः स्तूयमानम् ।।४८।।

" सितच्छत्रकान्तेरपि स्वीयहास-
प्रभाभिर्मुहुर्वर्धयित्रीं जनित्रीम्।
नगाधीशपुत्रीमघानां निहन्त्री-
महं चिन्तये चिन्तितार्थप्रदात्रीम् ।।४९।।

**गङ्गाभक्तः—** भो पण्डिताः निखिलवैदिककर्मफलत्त्वाद् भक्तावादरः, कर्मण्यादरस्त्ववराणाम्।

**(मीमांसक प्रभृतयः)**

भो महापुरुष! आगमोक्तकर्माननुष्ठानात्प्रत्यवायो भवेत्?

**गङ्गाभक्तः—** (इति वचो निशम्योद्विग्नः सन्नात्मगतम्)।

एते द्वेषकलुषितान्तःकरणाः बोधनयोग्या न भवन्ति।
अतोऽत्रावस्थानमनुचितम्। (इत्युद्विग्नः सन्प्रचलितः)।
क्क शास्त्रशस्त्रिणो ह्येते बुधरूपा निशाचराः।
क्क वयं सात्त्विका विप्रा गङ्गाभक्तिपरायणाः ।।५०।।

**इति वदन्। मीमांसकप्रभृतयः (सानुनयम्)**

भो महापुरुष! त्वत्सन्निधानाद्दलितकलहावेशेष्वस्मत्सु (स्मासु) विमुखता नोचिता यतः–

अङ्गीकृतं सुकृतिनः परिपालयन्तीत्यर्थशास्त्रात्। तावद् गङ्गाभक्तः, तेषां करुणोक्तिभिः करुणार्दहृदयः सन्परावृत्य–

भो पण्डिताः! शृणुत। वैदिककर्मण्यभिमानवतां भवतां फलमिन्द्रादिपदावाप्तिः। ते च इन्द्रादयो गङ्गास्नानलालसया मनुजत्वं वाञ्छन्ति। यतः कालिकापुराणे–

वाञ्छन्ति देवता नित्यं मानुष्यं प्राप्नुयामहे।
सम्यक् श्रद्धापरा भूत्वा गङ्गास्नानं लभेमहि ॥५१॥

तथा च विचाररसिकाः भवन्त एव विचारयन्तु।

(इति श्रुत्वोत्पन्नविवेकौ तार्किकशाब्दिकौ गङ्गास्नानार्थं निःक्रान्तौ। (निष्क्रान्तौ)

मीमांसकोऽपि ईदृशवाक्यश्रवणेनात्यन्तशान्तहृदयः सन्महापुरुषमुवाच।

'भो महापुरुष गङ्गाभक्तिनिर्णायकमीदृक् पुनरुच्यताम्।'

**(गङ्गाभक्तः)**

अये मीमांसक नहि महिम्नः इयत्तास्ति या वक्तव्या।

**यतः,**

मेरोः समुद्रस्य च सर्वयत्नैः
संख्योपलानामुदकस्य वापि।
शक्या वक्तुं नेह गङ्गाजलानां
गुणाः ख्यातुं परिमातुं तथैव ॥५२॥

इति भारते।

**मीमांसकः–** भो महापुरुष! एतादृशगुणशालायां भवशिरोमालायां तुहिनाचलबालायां यदि केषाञ्चिदनादरस्तान् दुरितध्वान्ताच्छिन्नानहं जाने।

**गङ्गाभक्तः–** अये मीमांसक, सत्यमेव। यतः कालिकापुराणे–

रुद्रेण रक्ष्यते देवि मोहयित्वा तु मानवान्।
येन साधारणी बुद्धिर्गङ्गायामपि जायते ॥५३॥

**मीमांसकः—** भो महापुरुष ! कथमस्मच्चेतसि शान्त्युदयो भविष्यति ।

**गङ्गाभक्तः— अये,**

वसन्तति भागीरथीचरणपङ्कजकोरकान्त-
लीनो भविष्यति यदा बत चित्तभृङ्गः ।
संसारसारममृतं सहसा निपीय
शान्तिर्भविष्यति तदा सहसेति विद्मः ॥५४॥

गङ्गाभक्तः गङ्गास्मरणेनात्यन्तपुलकिताङ्गः सन् स्वेष्टदेवतोत्कर्षं मीमांसक-बोधनव्याजेन मनसा (?) बोधयति ।

वर्णार्धसमवृत्तभेदः जीवनकुक्षिं लक्षीकुरु कुरु हृदयाश्रुसीतकिरणाक्षीं ।
लोकान्तराभिकांक्षिमाचपलाक्षीविनोदरसिकं भूः ॥५५॥

,, मन्मनोहरिण रे ! सुधामयं तोयमेतदमलं विलोकय ।
धाव मा मृगमरीचिकाजले तत्र नो सुखमयो भविष्यसि ॥५६॥

,, हृदय ! किं परिहाय सुधाजला-
मनिशमिच्छसि रे कमलां चलाम् ।
न हि तया सुखिता भविता सता-
मविरतं भजतां हिमवत्सुताम् ॥५७॥

**मीमांसकः—** भो महापुरुष ! कथमियं स्वर्णदी भूनदीत्वमापन्ना ।

**गङ्गाभक्तः— शृणु,**

,, कलिना बलिना विमोहितं जनचक्रं व्यथितं भवोदधौ ।
प्रसमीक्ष्य तदा नराधिपस्तपसा तामवतारयद्भुवि ॥५८॥

**यतः उक्तं भविष्ये—**

ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः ।
द्वापरे तद्द्वयं यज्ञः कलौ गङ्गैव केवलम् ॥५९॥ इति

**मीमांसकः—** भो महापुरुष ! अत्रापि नादरः केषाञ्चित्तदाश्चर्यम् ।

**गङ्गाभक्तः—** अये मीमांसक ! इदं निश्चितं विद्धि !

वसन्तति. केचिन्मनोभवभुजङ्गमपाशमुक्ताः
संसारसारसलिलां महिलां स्तुवन्ति ।
अन्ये तु मोहपिहिताः किमु तत्र चित्रं-
बुद्धेन्द्रियो न हि फलं लभते मनुष्यः ॥६०॥

**किञ्च,**

प्रत्यक्षेण गृहीतां विहितामपवर्गयागाय।
**योन भजति नरान्धः कामजले मोहसागरे पतति ॥६१॥**

**त्वं तु तस्यामेवासक्तिं कुरु।** यतः

रथोद्धता **सा मलं हरति हृद्गतं नृणां यन्मुखे वसति जह्नुजेति च।**
तद्भवान् भवतु हृद्विमत्सरो गाङ्गवारिपरिसेवनोत्सुकः ॥६२॥

(तावद् गङ्गाभक्तः भक्तिपुलकिताङ्गः सन् करुणया जनान्प्रार्थयते।)

उपेन्द्रवज्रा जनाः शृणुध्वं वचनं मदीयं
स्तवं तदीयं सततं कुरुध्वम्।
मतिं शिवायाश्चरणे निदध्वं
सुखेन शोकाब्धिमथो त्यजध्वम् ॥६३॥

**यतः—**

द्रुतविल. फलति कल्पलतैव विकासयत्यतितरामनुरक्तहृदम्बुजम्।
रविरिवात्र जना गतमत्सरा भजत जह्नुसुतामनिशं ततः ॥६४॥

**मीमांसकः—** भो महापुरुष! फलितोऽद्य मे सुकृतपादपः, यतस्त्वद्वागमृतधाराभिः शान्तिं गमितोस्मि। धन्यश्चायं कृष्णनामा धरासुरः यत्सभायां भवत्सदृशा महापुरुषा विलसन्ति।

वसन्तति. (इत्युक्त्वा मीमांसकोऽपि गङ्गां प्राथयते।)

मात र्जलोदरि! ममास्तु रतिस्त्वदङ्घ्रौ
हीनस्य बुद्धिविभवैः कमलायताक्षि!।
त्वद्दर्शनेन दुरितं त्वरितं प्रयाति,
रे मे मतिर्मम ततस्तव पादपद्मे ॥६५॥

भुजङ्गप्रयातम् भवारण्यभीतं रतिं नाप किञ्चित्
त्वदीयाङ्घ्रिपद्मं मनो मे विहाय।
ततस्त्वां भवानि! प्रपन्नोऽस्मि दीनः
सुधावारिधाराधरे! जह्नुकन्ये! ॥६६॥

,, भवारण्यमध्ये वसन्तं लसन्तं
हरिष्यत्ययं तस्करः कालसर्पः।
ततः शैलकन्ये! तवानन्दकुक्षि-
स्थितिं वाञ्छति स्वान्तभृङ्गो मदीयः ॥६७॥

भुजङ्गप्र. रमणीयं न विलोकयामि किञ्चि-
त्स्मरणीयं पदपङ्कजं विहाय।
करणीयं त्रिपुरारिमौलिमाले!
सरणीयं वशवर्तिनी भवेत् ।।६८।।

,, न मया रचिता कदापि पूजा
सुमनोभिर्मिलितेन हन्त! भद्रे!।
परिपालय मां तथापि मात-
र्जननी किं निजबालकं न पाति ।।६९।।

,, न जानामि ते किं जन: शुद्धतत्त्वं
मदध्वान्तरुद्धेन्द्रियो जह्नुकन्ये।
निमग्नं भवाब्धौ तत: पाहि मात-
र्विशोके विशोको यथाहं भवामि ।।७०।।

,, न मन्ये शिवे! त्वां विहायान्यदेवं
[११]यतोऽहं दृगब्जेन पश्यामि वन्द्ये।
पुर: स्थापितं यत्सदंशं विहाय
मृषामोदकै: किं जनस्तृप्तिमेति ।।७१।।

(तावत्प्रविष्टो समयबोधनार्थमनुचर:) दैव रचितानि सपर्योपकरणानि सन्निहितश्च पूजासमय:। अत: विसर्जनीयेयं सभा। राज्ञा तथा क्रियते।

**गङ्गाभक्त:—** भो मीमांसक तर्हि आगच्छ राज्ञा सह मणिकर्णिकादर्शनार्थं गच्छाव:। (इति निष्क्रान्ता: सर्वे)

उपेन्द्रवज्रा. स दानपाणिर्द्युमणिप्रतापो द्विजेन्द्रकीर्तिर्बुधसम्मतो य:।
सदैव गङ्गाभजनानुरक्तो जयत्यसौ भूसुरभूरुहेन्द्र: ।।७२।।

,, तच्चित्तनीलोत्पलरञ्जनाय
नारायणात्मा द्विजबालकृष्ण:।
बबन्ध पद्यै: सशिखं च दाक्षी
सदा हि गङ्गापदभक्तिचन्द्र: ।।७३।।

शार्दूलवि. या चैतंन्यकला जलाहतमला या मौलिमालामला
शाला या गुणसम्पदां ततजला हालाशिवालाऽनिशम् ।
नित्यानन्दयुता हिमाचलसुता माता जगज्जन्मिनां
सा सीता महिता नुता सुरगणैः कुर्यान्नृणां मङ्गलम् ।।७४।।

**इति नारायणसूनु बालकृष्णकृता गङ्गाभक्तिचन्द्रिका समाप्ता ।।**

**। श्रीगङ्गायैनमः । भगीरथसुतायै नमः । भवमौलिमालायै नमः ।**

**।। दक्षकन्या गौरपुत्र दक्षिणपुत्रवामकन्या ।।**



---

**पादटिप्पणि**

१. 'यत्सेव्यते' इति शुद्धः पाठः ।
२. सह ? इति साधु मन्ये ।
३. 'वैष्णाव:' इति शुद्धः पाठः ।
४. कमलेश ? इति शुद्धः पाठः ।
५. 'प्रेताङ्गन' इति शुद्धः पाठः ।
६. 'हृदयाब्जे' इति शुद्धः पाठः ।
७. कात्तरा ?
८. 'जगतोऽस्ति' इति शुद्धः पाठः ।
९. 'पठति' इति शुद्धः पाठः ।
१०. 'युतम्' इति शुद्धः पाठः ।
११. 'धरायायतो जह्नुकन्ये स्थितिस्ते' इति पाठान्तरम् ।

# गङ्गामृततरङ्गिणी

॥ श्रीगङ्गायै नमः ॥

॥ श्रीगणेशाय नमः ॥

प्रकृत्यात्मक्षोभात्समजनि महांस्तज्जठरजा-
दहंकाराद्व्योमानिलदहनपाथः क्षितिगणः ।
ततोऽभूद्ब्रह्माण्डं तदुदरगतात्स्रष्टुरखिलं
ज़गत्तत्वं तत् त्वं प्रथममसि गङ्गे मम नमः ॥१॥

न मातस्त्वं माता न मितिरथ मानं न च पुनः-
र्न मेयं नाविद्याधिकरणमहंबुद्धिरपि न ।
तथाप्याविर्भूतं चिदनधिकृतानुग्रहवशात्-
तदेव ब्रह्मैकं जयति जगतां साक्षि भवती ॥२॥

निजार्थे याथार्थ्यं स्थगयति कथासु स्तुतिरत-
स्तया[1] तत्वेनोह्यः कथमिव परस्त्वद्गुणगणः ।
प्रमाणत्वं तस्येतरतरसमत्त्वेऽति निपुणः
प्रमाणं यः स्वेनोपदिशति स एको ह्यनुभवः ॥३॥

हरीणामुद्धाराधिगतलहरीणामपि तव
प्रभावाद्वारीणां जननि जलशायित्वमुचितम् ।
परन्तु स्वान् दोषान् शमयितुमशेषानुपगते
करोषि त्वं दोषाकरतिलकमेषा न कृतिता ॥४॥

इहैवापद्धेतोर्दिवि भुवि विपन्मूलमतुलं
निदानान्मोहस्य प्रवहरिपुषड्वर्गजनकः ।
विषाद्वैषम्याणामवधिरधिको येन विषय-
स्ततस्तस्मादस्मात्सुरधुनि ! परित्रातुमुचितम् ॥५॥

अये ! जङ्घाकाण्डाज्जनिरजनि जह्नोर्जननि ! ते
ततो जङ्घालित्वं भगवति भवत्याः समुचितम् ।
नृणां यातायातश्रममपहरन्त्यास्तव पुनः
सुदुर्वारा वारां भ्रमिरिति तु विस्मापयति नः ॥६॥

ग्रन्थकार– रघुनाथः, विषय– स्तोत्रम्, पत्र सं. १-२७, स.भ.पा.लि.सं. २२५६४, लिपि.दे.ना. ।
पा.लि.प.सं. १ख, पा.लि.प.सं. २क ।

वदन्त्यापो नारा इति तव यतस्ताभिरयनं
ततो मज्जन् जन्तुः परिणमति नारायण इति ।
भवोत्पत्तिच्छित्यै भवति भवतीं येऽभ्युपगता
भवोत्पत्तिं नित्यां कथय कथमेभ्यो वितरसि ।।७।।

रयोद्यद्भिण्डोरोल्लसदमलपद्माहितमना
मनाङ् नो विच्छिन्ना चरति कलहंसावलिरिति ।
यशो धत्ते मूर्त्तं किमु यदुपधेर्देवि ! लहरि
र्नरः पाथःस्पर्शात्तव भवति मातर्नरहरिः ।।८।।

फलाल्पानल्पत्वं स्नपनजलपानादिकविधौ-
बुधास्तीरे नीरे विबुधधुनि केचिद्बुबुधिरे ।
स्थितिं धत्तेऽत्यन्तं स्थलजलविवेकासहतया
मम त्वन्तर्मातर्मतिरिति विशेषोऽस्ति न तयोः ।।९।।

निसर्गात्स्वर्गङ्गे ! भुवि कृतदयाः स्वर्गनिलयाः
प्रसीदन्त्यन्येषां समधिगतरूपास्तु समये ।
यदाप्यन्ते रूपं दिवि-भुवि सरूपं सकृदतोऽ-
वलोकाल्लोकानामपहरति शोकान् भवभवान् ।।१०।।

पतन्त्याः स्वर्ल्लोकादधिमहि यदृच्छोच्चपतनो-
च्छलद्वारां वारास्तव वियति ताराः समभवन् ।
महान् स्रोतःपातः समजनि पथा येन वियतः
किमुच्छिद्रं चन्द्रं तदवधि बुधास्तद्बुबुधिरे ।।११।।

त्रयीत्वेन ख्याता त्रिजगति च तीर्थाध्ययनकृत्-
द्विजात्यन्ताभ्यासोच्छ्रितसकलवर्णाधिकरुचिः ।
स्वरानन्दं दत्से श्रुतिरिव सरस्वत्यसि कथं
गुणाभावस्तस्यां गुणगणवती तत्रभवती ।।१२।।

पदद्वन्द्वन्यासक्रमभवजटाटोपमधुरा
पुनाना त्रीँल्लोकान् सपदि पवमानाध्ययनतः ।
समाना त्वं श्रुत्या जननि ! जननाद्विष्णुपदतो
विशेषं [१]वेदम्याथाशयकृतमनाथाशयकृतम् ।।१३।।

पा.लि.प.सं. २ख, पा.लि.प.सं. ३क. पा.लि.प.सं. ३ख ।

कुमारं या ऽसूतोर्जितममरवाहिन्यधि भुवं
गणेश: स्याद्यस्या: सुरधुनि ! वरस्य व्यतिकरात् ।
भवत्या: पार्वत्यप्यनुकृतिमयत्यद्भुतमिदं
गिरीशाद्यात्येका भुवमनुगिरीशं तदपरा ।।१४।।

सुधाया माधुर्या: सुरधुनि ! धुरीणा यदवधि
त्वदीयेयं धारा धरणितलहारावलिरभूत् ।
स्वभावान्निःसारोऽप्यघचयतमश्चन्द्रकलया-
ऽनयासंसारोऽयं तदवधि कृतार्थ: समजनि ।।१५।।

सुखं शेते काल: पुरि कलकलानामपगमाद्
गता: कुम्भीपाकप्रभृतिनिरया: स्वामिनि लयम् ।
नवोद्युक्ता दूता: क्वचिदपि च भूतान्कलयितुं
दयातत्यां सत्यां भगवति ! भवत्यामधिमहि ।।१६।।

बुधै: प्रायश्चित्तप्रकरणविधौ ये त्वभिहिता
निबन्धा: धर्माणां सुरधुनि ! दृढं बन्धनमयु: ।
सुधाया: सोदर्य्य: सकलजगदर्यस्य चरणा-
ल्लहर्य्य स्ते मातर्यदनु भुवि पर्यस्तसलिला: ।।१७।।

सवित्री धर्माणां त्वमसि च पवित्रीकृतजग-
द्यतस्ते शर्मास्तेऽखिलजगति धर्मद्रव इति ।
अपूर्वं मे धर्मं विविधकृतकर्मार्जितमियं
न मुद्रा साधूनां त्रिदशधुनि ! विद्रावयसि यत् ।।१८।।

सकृत्प्रात: स्नात: क्वचिदपि च मातर्दुरितभाग्-
भजत्युच्चैरुच्चै: पदमतुलमम्भोरुहभुव: ।
स्त्रवन्ति त्वत्स्त्रोत: स्त्रुतसलिलमासाद्य सततं
नरोऽध: पाताय प्रभवति विरोध: पुनरयम् ।।१९।।

तवाप: स्वर्गङ्गे ! हिमवति नदीत्वं यदनय-
त्स्वनाम त्वन्नाम्ना जगति सकले वृद्धिमपि य: ।
अहो भागीरथ्यां त्वयि महदिदं कर्म कृतवान्
स एवैको त्वोकोत्तरमथ भगीपूर्वकरथ: ।।२०।।

---

पा.लि.प.सं. ४क, पा.लि.प.सं. ४ख, पा लि.प.स. ५क.।

परावृत्तं चित्तं सुतयुवतिवित्तादिविषया-
दगण्यैः पुण्यैश्च त्वयि जननि ! भक्तिर्दृढतरा ।
भवेद्येषां तेषां हृदि कलितया ज्ञानकलया
कलिध्वान्तध्वंसात्करतलगतं मुक्तिबदरम् ॥२१॥

पुरा पूर्वे पूर्वां पुरमभिययुर्मे पुरभिदोऽ-
नणीयस्यामस्यामजनिषि चिरस्यापि निवसन् ।
न जाने त्वद्भक्तिं विनयमिव युक्तोर्थऽनिचयै-
र्भवत्या सारूप्यं भवतु मम जाड्ये न च परम् ॥२२॥

विनीतं वा नीरं ह्यनुसरति वानीरमपि तेऽ-
वनायः स्वर्ल्लोकादुचितमवनायैव भवति ।
क्षरन्त्वन्यस्मै त्वं स्पृशसि कुतुकायाक्षरपदं
विना यं न न्याय्यो व्यय इति नयोऽयं नयविदाम् ॥२३॥

पुमान् यः पानीयं स्पृशति भवदीयं भगवति !
त्वमप्यस्मै मुक्तिं स्पृशसि ननु युक्तो विनिमयः ।
विशेषः कोऽप्येष स्फुरति कुतुकायेह कुरुते
स्वभावस्य स्पर्शं जननि ! यदभावस्य भवती ॥२४॥

अघानां भङ्गाय प्रभवति हि भङ्गो भवदपां
मरुत्त्वत्संगर्गाद्वितरति मरुत्त्वं तदुचितम् ।
स वर्गं वारीणां हरति तव वारिव्यतिकर-
स्तथा पङ्कः पङ्कं विदुषि ! विदुषामेष न नयः ॥२५॥

निवृत्तिर्दुःखानामविरतसुखानामधिगमोऽ
न्यताख्यातिर्योगः सुरसरिदविद्याक्षतिरिति ।
मतानां नानात्त्वे मम तु मतमेतत् त्रिपथगे-
भवन्नाम्ना मुक्तिर्नियतमपवर्गाकृतिरिति ॥२६॥

परावृत्ताः सिन्धोर्जलनिचयमादाय जलदा
भराक्रान्तास्तीरे जननि ! तव विश्रान्तिमगमन् ।
त्वदम्भःसम्पर्कात्कृतमधुरसं बिभ्रति रसं
प्रकृत्या क्षाराणां कथमपरथाऽपां मधुरिमा ? ॥२७॥

पा.लि.प.सं. ५ख, पा.लि.प.सं. ६क, पा.लि.प.सं. ६ख ।

निवृत्यै क्षाराणां घनपटलनद्धं पृथु नभः
शिलाभाराक्रान्तं जननि ! तव शैवाललुलिम् ।
पयः क्षाराम्भोधेः क्षरति पृषतानिक्षुरसवन्-
न चेदित्थं नीलः कथमिव घनः स्याद् घनरसैः ॥२८॥

प्रवृत्तः पाथोदः पथि वियति पाथोऽध्यधिगमे
भवत्याः स्यान्मध्येपथमतिथिभावं यदि गतः ।
सकृत् सर्वे मुक्ताः स्युरिति मतिमान् सन्तततया
क्रमाद्दुःखोच्छित्तौ यमतनुत हेतुं स विपुलः ॥२९॥

भवेत् कर्मज्ञानान्यतरगततत्त्वेन परमं
भवत्स्नानस्यार्थं प्रति जननि साक्षाज्जनकता ।
यथा वह्नौ जन्येऽरणिमणितृणानां भवति सा
ततस्त्वामौणत्त्वं गतमथ गतश्चाननुगमः ॥३०॥

मुरारिं यो भक्त्या भजति न पुरारिं पुनरसौ
पुरारिं यो मातर्भजति न मुरारिं कलिबलात् ।
मिथोऽत्यन्ताभावैकविषयगधर्मौ त्वयि गते
तयोर्भक्ती दोषान् किमिव हरतः सङ्करभवान् ॥३१॥

द्रवस्त्वं धर्मस्यान्यभविषि च तस्य द्रवमहम्
गता त्त्वं चेन्नीचैरवरमति नीचैरहमपि ।
पतन्ती त्वं गोत्रादहमपि च गोत्रात्समपतं
नदीना त्वं दीनोऽस्म्यहमिह विशेषः पुनरियान् ॥३२॥

पदार्थैस्तैरास्तामपचितिरथारर्थव्ययकरै-
र्नतन्त्रैर्मन्त्रैस्ते जलमपि जलेष्वक्षिपमहम् ।
कवित्वे त्वौन्नत्यं दधदपि नुतौ ते समभवम्
दरिद्रोऽयं वाचामिति तु जनवादस्य विषयः ॥३३॥

पुरः सङ्गाद् गङ्गे हरिरिति सरितामीशितुरभू-
त्तनूजोऽन्तर्वत्न्यां भगवति भवत्यां हिमकरः ।
सदृक् शैत्यश्चैत्यादिभिरपि गुणैर्येन रचिता
त्वया पुत्रप्रीत्या त्रिनयनजटाजूटवसतिः ॥३४॥

---

पा.लि.प.सं. ७क, पा.लि.प.मं. ७ख, पा.लि.प.मं. ८क ।

मुनेरत्रेर्नेत्रादजनिरजनीजानिजननं
ततोऽन्तर्नीलित्वं द्विजकुलपतित्वं च विहितम् ।
शिशुत्वे वैशद्यामृतकिरणतोदध्यधिगमाम्
भवत्याः श्रीशम्भोः शिरसि निवसन्त्याः किमपठत् ॥३५॥

अये गङ्गे ! गङ्गाधरशिरसि वासस्तव न चेत्
कथं जीवोद्धाता हलकलितकण्ठोऽमृतमयि ।
ग्रहः शैव्यां सृष्टाविति यदि तु कालः क्षतिरहो
भवेदात्मव्यूहे भगवति ! भवत्यास्तु गुरुता ॥३६॥

**भवद्वारिस्पर्शाच्छिवगलकपालास्थिषु लसत्-**
**कपालित्वेऽप्यन्यान्यपि यदि कपालानि विभृयुः ।**
**नवीने यस्त्वर्केऽप्यलमनलमत्रातिधिषणोऽ-**
**नवस्थां स्थाणूनां जननि ! परिमार्ष्टुः कथमपि ॥३७॥**

त्वमेवाद्या सृष्टिस्त्वमसि जनयित्री पुनरपा–
मयं भेदाभेदस्तटिनि परमात्माश्रयकरः ।
पतज्जन्तूद्धारव्यसनवति दोषस्त्वयि महा,
न सत्सङ्गाद् गङ्गे रुगिव किमु संक्रान्तिजनितः ॥३८॥

यदि प्राक्पुण्यं स्यादिह जनुषि पुण्यस्य जनकं
प्रवृत्तिर्नो तस्मिन्नथ तदनवस्था न तु फलम् ।
तदुत्पत्तिर्भक्त्येत्यपि न विषयासक्त्यविरते-
र्निरालम्बोऽम्बाया स्तव मयि दयायाः समुदयः ॥३९॥

न संख्या संख्याता न च पुनरियत्ता परिमिता,
नृणां वाक्पारीणाविषिकृतिविहीनास्तवगुणाः ।
जगन्मातर्मातः परमिह विवक्षास्ववसर-
स्ततोऽन्तर्वाणीनां निभृततरमर्चा त्वमुचितम् ॥४०॥

पृथग्भक्तिर्दैन्यं द्वयमपि दयाहेतुरनयोः
समाराध्य ज्ञानं प्रथममसमर्थत्वमपरम् ।
दयालुत्वं भक्ते त्रिदिव नदि ! दीने च सदृशम्
प्रकृत्या यद्यास्ते त्वयि न यमतोऽत्याहितमिदम् ॥४१॥

---

पा.लि.प.सं. ८ख, पा.लि.प.सं. ९क, पा.लि.प.सं. ९ख ।

सदृग्मातर्मात्रोर्द्वयमपि भवत्यर्चनविधौ
पयोभ्यां माधुर्यात्सदृशमनयोर्वा तव पयः ।
परं त्वेको भेदः पयसि हृदि वेदः स्फुरति मे
यदत्राद्यद्वन्द्वं मधुरमपरत्रात्र च परम् ॥४२॥

गुणानामारोपस्तुतिरिति जगुः केचिदसता-
मसत्त्वं तुच्छत्वं जननि ! किमवद्यत्वमनयोः ।
स्वरूपान्नैवाद्यं न सदृशमनाद्यं निगदितुं
ततो वक्तुं युक्तं सततमगुणत्वं त्वयि च सा ॥४३॥

मुहुः स्रावोऽस्राणां न खलु पुनरुक्त्यापगुणभाक्
शिशोर्मातर्मातर्यथ गदवतो यद्गदहृतिः ।
विरुत्योच्चैर्याचे तव च मयि चेच्चेतसि दया
न भूयो भूयासं जठरपिठरान्तःस्थितिरिति ॥४४॥

अवन्त्याः पापौघात्सुरधुनि ! भवत्याश्चरणयोः
समर्थोऽघोच्छित्ताविति मम पुमर्थोऽस्तु विदितः ।
त्वदीयं पानीयं न पुनरपनीयाहमपिबं
तृषार्त्तः सन् कूप्यं न किमपि निरूप्यं परमितः ॥४५॥

अनाश्रित्याप्यन्यद्द्युनदि ! तव निश्रेयससुहृत्
फलाप्तेर्निःश्रेणी जयति जलवेणी जगति या ।
ममालम्बायैषा द्रुतमनवलम्बस्य भवतात्
पतज्जन्तुर्जातु क्षणमपि विलम्बं न सहते ॥४६॥

गताब्दानां षष्टिः करकलितयष्टिः समभव-
न्नचेतस्यन्येषामपि च कर[३] केषामपचितिम् ।
कदाचिच्छ्रीमत्यां भगवति भवत्यामकरवं
निदाघार्त्तः स्नानं शुभफलनिदानं पुनरियत् ॥४७॥

पठन्तः श्रीकण्ठेत्यविरतमटन्तो जनपदान्
लुठन्तः साधूनां चरणकमलोद्धूतरजसि ।
न जातु स्नाता ये पयसि तव मातस्त्रिपथगे !
न चैते रोचन्ते लवणरहितं भोजनमिव ॥४८॥

पा.लि.प.सं. १०क, पा.लि.प.सं. १०ख, पा.लि.प.सं. ११क ।

न पीतं न स्नातं न तव कुतुकाद् रोधसि गतं
सकृद् गङ्गा गङ्गेत्यपि सविनयं यैर्न गदितम् ।
गते प्राणे येषां न जललुलितं चास्थिशकलं
नराँस्तान् जानीमस्त्रिदिवनदि ! शौक्रानिव कृमीन् ॥४९॥

वरं वन्ध्या भूयं दिवि भुवि च दोषैकनिलयं
वरं गर्भस्त्राव: क्षणकलितविद्रावणभर: ।
वरं निद्रा लोकेस्वयमलनयश्चेति न पुन:
सुतोऽपि स्वर्णद्या यदि न कुरुते तर्पणविधिम् ॥५०॥

न चोच्चै: प्रासादोऽप्यकृतकलशारोपणविधि:
कविर्नास्ते यस्यां विदुषि विदुषां सा च परिषत् ।
न युक्ता मुक्तानां स्त्रगपि च विना मध्यमणिना
चरँस्तीर्थं तीर्थं तदिव तव तीर्थं च न गत: ॥५१॥

नृणां प्रायश्चित्तैर्न च भवति चान्द्रायणमुखै-
रशक्यानुष्ठानैर्दुरितनिचयान्निष्कृतिरिति ।
उपाय: कारुण्याज्जननि ! निरमाय्यत्र भवता
विधाता निस्तारद्रुमसलिलसेकाय भवति ॥५२॥

असंख्याता ख्याता दिवि दिविषदां देवि ! परिष-
न्मया त्वत्संस्तुत्या न खलु नमिकर्मीकृतपदाम् ।
उदासीनेदानीं भवति भवती चेदयमहं
समुद्भ्रान्त: शीर्णां तरणिमिव जीर्णां समगमम् ॥५३॥

न धन्या मत्तोऽन्या जगति पतितोद्धारणविधा
वखर्वो गर्वोऽयं तव तु यदि गीर्वाणतटिनि ।
दृढं सज्जीभूय नियमय कचान् संवृणु पटीं
निदानं दोषाणामहमिह पुरस्तादुपगत: ॥५४॥

चय: प्रारब्धानां क्षयमयति भोगेन न विना
तथा क्षीणे पुण्ये क्षितिमयति जन्तुर्द्वय मिति ।
न युक्त्या युक्तं यत् क्षयति दुरितं प्राग्जनिकृतं
प्रसादौच्छ्रेयस्वी श्रयति तव निश्रेयसपदम् ॥५५॥

पा.लि.प.सं. १२क, पा.लि.प.सं. १२ख, पा.लि.प.सं. १३क ।

वरेण्ये पुण्यानामिह तव जले दन्तवलयै
रलङ्कृत्य स्नानं हरिणनयना यस्य करिणः ।
करोति स्वर्गङ्गे ! ऽभ्रमुकुरपरिष्वङ्गमुदितः
स्वभुङ्क्ते स्वर्भोगान्करिणमभियुङ्क्ते बलभिदः ॥५६॥

अये ! यस्मिन्यस्मिन्भवति ममता वस्तुविषये
महांस्तस्मिंस्तस्मिन्नहह ! मम तापोऽति विषमः ।
उदासे यत्राहं सुरधुनि ! [४]मुदासेऽत्र वततः ।
प्रकल्प्य स्वं दास्यं रचय विषयौदास्यमचिरात् ॥५७॥

सुखासीनास्तीरे जननि ! तव नीरेण लुलिते
स्फुरद्वासग्रासाशनजनितमेदस्विवपुषः ।
सगर्वं रोमन्थोचितचपलया प्रोथगतया
कलङ्कं शाशाङ्कं शशमुपहसन्तीव हरिणाः ॥५८॥

चिकीर्षोराश्लेषं सरसमतिवेलोत्कलिकया
वियोगादुक्तस्य प्रथममिलने कृष्टवपुषः ।
पयोधेरुत्सङ्गे मलनिकषपाषाणसदृशे
स्फुरन्ती वैशद्याद्रजतकषलेखेव भवती ॥५९॥

बलाकानां मालां सजलजलदोत्सङ्गलुलितां
हसन्तीवोक्तस्य प्रथममिलने या जलनिधेः ।
नभश्छायश्यामद्युतिभृददसीयाङ्कलुलिता
सुधायाः सध्रीची जननि । तव वीची विजयते ॥६०॥

क्वचिन्नो विच्छिन्ना च्युतचपलभावा हि तरसाऽ-
नुकूला लोकानां सहजतुहिनस्पर्शमधुरा ।
अदभ्राभ्रश्वभ्रादधिधरणि विद्युद्यदि पतेत्
तया स्वर्गङ्गायाः सरणिरुपमीयेत कविभिः ॥६१॥

जनानामन्यस्मिन्नपि जनपदे देवि ! वसतां
तवाल्पोऽप्यब्बिन्दुर्नयति विलयं पातकशतम् ।
स्फुरत्स्फारज्वालज्वलनपवनोत्सारितलसत्-
स्फुलिङ्गः शाल्मल्युद्भवमिव वने तूलमतुलम् ॥६२॥

---

पा.लि.प.सं. १३ख, पा.लि.प.सं. १४क, पा.लि.प.सं. १४ख ।

मरुन्नीतो मोदः किल कुवलयेभ्यो हिमकरं
दधानः श्रीमान्यः सुरभिसुमनो नन्दनवनैः ।
तुलायै स्वर्गस्ते यतत इति यत्तन्न घटते
हरिस्तस्मिन्नेकः प्रभवति भवत्यां तु बहवः ॥६३॥

वरं नक्राण्यत्र त्रिदशधुनि ! ते वारिषु परं
न शक्राण्यन्यत्र त्रिदिवयुवतीसेविततनुः ।
कथं त्यक्त्वा मुक्तिं निरवधिचिदानन्दमधुरां
निसर्गाद्यत्स्वर्गात्पतनमभिलष्यन्तु कवयः ॥६४॥

हिमाद्रेर्माहेन्द्रीदिशमवधि ये ये जनपदा-
जगन्मातस्तापत्रितयमपि ते ते विजहति ।
जलानां नासीरे जलधिमधि गन्तुं समुदिते
कथं पश्चात्तापः प्रविशति सुनासीरहृदयम् ॥६५॥

उदासीनायैकं प्रथमपुरुषस्यात्र भवत –
स्तटच्छाया दत्से परमपि परस्मै पदमिति ।
अपि त्वं चेद्धेतुः सकलगुणवृद्धिप्रकरणे
वदान्यत्वख्यातिस्तव जननि ! न व्याकृतिरियम् ॥६६॥

भवत्यम्भःस्पर्शात्तव जननि ! मुक्तः सकृदिति
प्रशंसा लज्जायै कथय कथमेषा न भवति ।
यतस्तज्जातीयैरपि जलदमुक्तैर्जलजवै-
र्विधीयन्ते मुक्तामरुदुडुनि शुक्तावधिगतैः ॥६७॥

अहो ! गंगागङ्गेत्यपि वदति यो योजनशतै-
रपारात्संसारान्नयसि च तमप्युत्तमपदम् ।
स्थिरान् दूरीकृत्याखिलमुदमुरीकृत्य भवती
समुद्धर्त्तुं चास्मानथ कथमकस्माच्चिरयसि ? ॥६८॥

इमं मे गङ्गे ! इत्यृच इति सितेत्यादि शतशः
श्रुतिः स्तोतुं मातर्भवति भवतीमुद्यमवती ।
विदित्वा ब्रह्मैक्यं तव गुणगणस्यागणिततां
यतो वाचो मुख्यामुपनिषदमाख्यातुमुदिता ॥६९॥

पा.लि.प.सं. १५क, पा.लि.प.सं. १५ख, पा.लि.प.सं. १६क ।

रसोक्त्यैर्नैपुण्यात्करणगणमुख्याऽपि रसना
रसोत्कर्षं वेत्तुं प्रभवति न वक्तुं तव यत: ।
द्रुतिं भक्तप्रीत्या त्वयि नु परमे ब्रह्मणि गते
निवर्त्तन्ते वाचो यत इति यथार्था श्रुतिरभूत् ।।७०।।

जलव्यालायन्ते तव पयसि हालाहलधरा-
जटा शैवालत्वं दधति पुरभित्ताण्डवविधौ ।
भवत्यां नृत्यन्त्यामभिनयमुषन्त्यां लहरिभि-
र्न्न चित्तं तत्रास्ते यदयमुडुपो यात्युडुपताम् ।।७१।।

स्पृशेद्य: पानीयं जननि ! सगदस्तस्य च करो
विशेद्यस्तस्याङ्घ्रि: सततसलिलस्त्रावकृतरुक् ।
पिबेद्य: स्यात्तूर्णं भुवनभरपूर्णं तदुदरं
त्वया मात: ! सत्यं भवति कृतकृत्यं जगदिदम् ।।७२।।

अनौदास्यं मातस्तव यदि ममौदास्यजनकं
भजेयं ताटस्थ्यं सुरधुनि ! तटस्थस्तव कथम् ।
ममत्त्वस्योच्छित्तावपि यदि ममत्वं पुनरलं
न कश्चिद्वेदान्तात्र च जननि ! योगान्गणयिता ।।७३।।

जगज्जननि ! जाह्नवि ! त्वमसि मज्जतां जन्मिनां
सदाशिवशिर:स्थिता शिवकरीति किं ब्रूमहे ।
इदं तु महदद्भुतं जगति जातु नालोचितं
यदच्युतपदच्युतापि ! पदमच्युतं यच्छसि ।।७४।।

अये जननि ! जह्नुजे न च जगत्सु जातं क्वचित्-
स्वयं सहजनिम्नगा नयसि चान्यमुच्चै: पदम् ।
गिरीन्द्रपतिता पुन: पतितपावनी गीयसे
नतेऽम्ब ! महिमा गिरामपि गिरांगुरोर्गोचर: ।।७५।।

अदृष्टकृतमस्तु तज्जननि ! दूरमामुष्मिकं
यदूर्ध्वभुवि भोक्ष्यते परमिहापि मन्दाकिनि ! ।
सकृत् सलिलसीकरं तव ससीत्कृतं ये पुन:-
र्धयन्ति विबुधा: सुधामपि मुधेति ते मेनिरे ।।७६।।

---

पा.लि.प.सं. १६ख, पा.लि.प.सं. १७क, पा.लि.प.सं. १७ख ।

विधाय वसतिं तटे तटिनि ! देवि ! जीवन्नर -
श्चिरं भजति जीवनं जननि ! युक्तमेतत्पुनः ।
विहाय विषयस्पृहां हृदि निधाय तेजः परं
मृतोऽप्यमृतभाग्भवेदिति न साम्प्रतं कल्पते ।।७७।।

करोषि वनरूपिणी त्वमवनं कथं मज्जतां
सितस्य सलिलस्य ते परिणतिः कथं कृष्णता ।
तथान्यदपि कौतुकं जननि ! दुस्तरापि स्वयं
विना नयसि यत्तरिं परतटं भवोदन्वतः ।।७८।।

अवद्यमपि यज्जलं जननि ! कर्मनाशादिकं
भगीरथरथानुगे त्वयि गतं भवेत्पावनम् ।
हुतं हुतभुजि ज्वलत्यहविरिन्धनं स्वर्धुनि !
द्रुतं भवति पावकस्तदुभयोस्तु भेदो न कः ? ।।७९।।

पिनाकिशिरसि स्थिता यदपि नाकिकल्लोलिनी
नृणामघवतां हिताऽपि विहिता स्वयं ब्रह्मणा ।
गिरीशशिखरच्च्युतापि सततं गिरीशस्य यद्
विभूषयसि शेखरं जननि ! तत्र कोऽयं गुणः ? ।।८०।।

विहाय च जपं तपः सुकृतमन्यदुच्चावचं
विहाय सतरङ्गिणि ! त्वदनुषङ्गिणी मे मतिः ।
यतोऽत्र न धनव्ययः फलमथाव्ययं चिन्मयं,
त्वमेव शरणं नृणामिह युगे कलौ केवलम् ।।८१।।

प्रतारितमिदं त्वया सकलपामराणां कुलं
तथापि यतते जडोऽनुभवतीं स्वयं धावितुम् ।
प्रतारयसि मद्विधं जननि ! विप्रवर्णं तदा
कृतात्मविषये समाकलितदेहबुद्धिक्षितिः ।।८२।।

अपद्धतिगतिस्खलत्यथ नवातिथिर्यत्त्वया
वितीर्य पयसां भरान् जननि ! कृष्णतां नीयते ।
घनो हलधरोद्भवप्रमदकृन्महत्संस्तुत
स्ततः पुनरनन्ततोऽवतरतीह तापच्छिदे ।।८३।।

---

पा.लि.प.सं. १८क, पा.लि.प.सं. १९ ।

प्रसीदतु भवानिति त्रिदशहस्तिनिष्पीडित-
त्रिविक्रमपदोच्छलत्सलिलदीर्घधारारयात् ।
स्फुटद्गगनसम्पुटप्रकटविन्दवस्तारका:
पदद्युतिमिलन्नभोविमलभून्महच्चन्द्रमा: ॥८४॥

निजोर्ध्वगतये पतत्परिषदा समासादिता
स्थिता भुवनपूरणै: समभिविध्य या रोदसी ।
सदागतिमतीतुलां समभिलष्यति द्यौस्त्वया
विशेषगुणशालिनी त्वमसि सा परं शब्दत: ॥८५॥

क्वचिद्वितततरश्मिभिस्तरणिभिर्भृशं सम्भृता,
क्वचिद्बहुचकोरकातिरुचिकृद्भिरब्जैर्वृता ।
क्वचित्तु कविभिर्बुधै: सह महर्षिभि: संस्तुता
दिवोऽपि परमां श्रियं श्रयति देवि ! मूर्त्तिस्तत: ॥८६॥

सुरार्च्यचरणाम्बुजा जननि ! शारदेन्दुद्युति-
र्जगत्यसि सरस्वतीति विदिता प्रवीणा गुणै: ।
विलक्षणमिदं पुनर्यदभिवादयत्यम्ब ! सा
करेण परिवादिनीं त्वमभिवाद्य सेव्येतया[५] ॥८७॥

भवज्जलरसंग्रहाद्भवति मेऽत्र सा निर्वृति:
कथञ्चिदपि तामहं कथयितुं न चास्मि क्षम: ।
पृथग्दधिमधूद्भवो रसनया रसो गृह्यते
विशेषमनयोस्तया न च वरीतुमारभ्यते ॥८८॥

एकस्मिन् द्विजराजहंसकलिता या मण्डिता चाण्डजै-
रन्यस्मिन्नुडुपेन भूषिततमा या विप्रयुक्ता च न ।
या वै सारिणमुद्भवं कलयितुं तै: किन्नरैर्धीवरै
राक्रान्ता कविभारतीविलसितैस्त्वं द्यौरिव द्योतसे ॥८९॥

धात्रेन्दोश्चक्रयन्त्रोत्कषणशकलिता: किङ्कला: सृष्टि काले
किं वा नित्यश्रमोद्यच्छ्रमतरलतराश्चन्द्रभासोऽध्यवात्सु: ।
संख्यातुं ते गुणौधान्निचयमरचयच्छाकंरं किं विरिञ्चि
र्विश्रान्तिस्थानमेकं जगति विजयते सैकतं सैकतिन्या: ॥९०॥

---

पा.लि.प.सं. १९क, पा.लि.प.सं. २० ।

त्वत्कच्छात्यच्छदूर्वाकवलकवलनामन्दमेदस्वभावा-
द्देवानां देवि ! गावः सपदि वितरितुं वाञ्छितार्थं समर्थाः ।
मालाकारेण सिक्ताः प्रतिविटपि समानीय पानीयधारां-
मन्दाराद्याद्युनद्या स्तव सुरतरवस्तेन[६] मन्ये वदान्याः ॥९१॥

विन्ध्यप्रालेयशैलस्तनयुगलतटीमध्यलब्धावलम्बो-
योगिन्या देव्यवन्याः स्फटिकमणिमिलद्योगपादानुकारी ।
आवर्त्तैर्यस्य चार्यैः कृतसुकृतचयैर्मध्यमो नीवृदासी-
दार्यावर्त्तो भवत्या स भवतु सततं भूतयेऽम्भःप्रभावः ॥९२॥

मा स्वर्गं सगरः प्रयात्विविधिया चक्रे महातिक्रमं
तस्यैतत्फलमद्य षड्भिरयुतैः शाक्रं पदं भोक्ष्यते ।
त्वन्नासीरविसारिचारिनिनदानाकर्ण्य दूरात्सुराः
कर्णाकर्णिकयेच्छमर्थचपलं शक्रं क्रुधा चुक्रुशुः ॥९३॥

द्रागिन्द्रो मुद्रिताक्षस्तपति न तपनोऽपत्रपिष्णुः स विष्णु-
र्जातशङ्कः शशाङ्को दहति न दहनो देवि ! नो वाति वातः ।
मूर्ध्नो धाता धुनीते प्रलयमिव पुरा मन्यते यौगपद्या-
त्वस्रोतः पातदृप्ते सगरसुतकुले सागरादुत्पतिष्णौ ॥९४॥

आब्रह्माण्डोल्लसन्त्यां त्वयि पुरजयिनस्ताण्डवे चण्डमूर्त्या
स्तौति ब्रह्मा सुधर्माप्यतिभयचकिताः कान्दिशीका दिगीशाः ।
मातः ! सीमन्तसीमाभिमुखमपि मुखं नैव मात्सर्यभावाद्
धत्ते वेणिस्ववेणीं स्पृशति न भुजगीशङ्कयेवाम्बिकायाः ॥९५॥

स्थाणुः कोऽप्यहिभिर्वृतोऽतिवयसोद्भूतः श्मशानोषरे
निर्मूलः कृशयान्तराद्रिलतयाश्लिष्टः [७]कयापर्णया ?
घृष्टाङ्को द्विरदाननेन नितरां यस्योपकण्ठं विषं
सोऽपि स्यादमृतैर्न चेत्त्वदुदितैः सिक्तः कथं जीवतु ॥९६॥

यादृङ्नानाप्रकारैश्चरतु विरचितं भोज्यमाज्येन हीनं
यादृक् प्राज्यं च राज्यं यदवधिरुदधिर्वर्जितं राज्यलक्ष्म्या ।
यादृग्रत्नैर्विचित्रैः खचितमतिलकं मण्डनं खञ्जनाक्ष्या
स्तादृक्तीर्थान्यशेषान्यपि दधति रुचिं त्वां बिना न ह्यवन्याम् ॥९७॥

---

पा.लि.प.सं. २१-२२

आगर्भादभिवर्धितोऽति पतनात्स्नेहाज्जनन्या यया
जाने तां न हितां प्रगल्भयुवतीवाचाऽतिविश्वासित: ।
सोऽहं स्वर्धुनि ! मातरं च जननीत्यस्तत्रपं त्वां प्रति
स्तोतुं प्रस्तुतमुद्यतस्तदुचितं सञ्चिन्त्य सञ्चीयताम् ॥९८॥

दावे दीपिनि मारुते विकिरिणि स्फेरान्स्फुलिङ्गाँस्तपे
तीव्रं तापिनि भानुमालिनि तृषोत्कर्षेऽप्यसूत्कर्षिणि ।
दिष्ट्या दृष्टिजलस्थलीं कलयितुं चक्रुर्महोपक्रमं
सापि स्यान्मृगतृष्णिका यदि मृगैर्मार्ग: कुतो मृग्यताम् ? ॥९९॥

पात्रस्पर्शाज्जनानां कृतसुकृतचया या च भृङ्गातिपातात्
कूलान्युत्खातयन्ति शरणगतमुदे प्रस्रवन्ती पयांसि ।
देशाद्देशं चरन्ती वनजनितरूचिं दिद्युते या व्रजन्ती,
पन्थानं देवि ! भागीरथमथ भवती तार्णकं शृङ्गिणीव ॥१००॥

यस्याश्वैर्मातरिश्वा जितजव इव यं सेवितुं दक्षिणोऽभू-
दूम्भाद्या: कुम्भिकुम्भा हृतकुचरुचयो यस्य शुद्धान्तमीयु: ।
वैपक्षं देवि ! पक्षं क्षिपति भुजबलादूक्षिता य: क्षमाया-
लक्ष्ये क्षीणक्षमस्य त्वयि कृतवसतेर्नैषलीक्षासदृक्ष: ॥१०१॥

नाभ्युत्थानं विधत्त: किमपि न शृणुत:* देवि ! वाचं न वक्त
श्चित्रायोद्घाटिताक्षावपि न कलयत: सन्तमग्रेरुची यौ ।
सत्पात्रे यद्भवत्यां तनुवितरणतोऽप्याप्नुतोऽभीष्टसिद्धिं
सद्भि: साम्ये तयोस्तद्‌घनिधनवतोर्निश्चितो निर्विशेष: ॥१०२॥

अच्छायोऽन्वहमूर्ध्वदृष्टिरसुहृद्धत्ते परेतश्रियं
संकोचं न बिभर्त्ति नेत्रयुगले तुल्यौ मुमूर्षुर्धनी ।
मातस्तुल्यफली भवद्धितरणादिच्छन् विशेषस्तयो
र्विश्वास: प्रथमे भवेन्न चरमे विश्वासलेश: क्वचित् ॥१०३॥

एषा सप्तपुरीस्रजो विजयते काशी मणिर्मध्यमोऽ-
प्याद्य: स्वर्वसतां तथैव भजतां कामप्रद: कामहा ।
तीर्थानां त्वमपि द्युसत्सरिदिति व्यस्तं समस्तार्थकृद्-
येनैतत्त्रयमप्यभूत्समुदितं भाग्याय तस्मै नम: ॥१०४॥

पा.लि.प.सं. २३-२४

केनाप्युत्तपसा किशोरवयसा त्वन्निर्मिताद्वैकृता-
दुद्धर्त्तुं सगरान्महेन्द्रनगरान्मन्दाकिनी नीयते ।
निर्वर्ण्येति सुपर्वणामधिपतिं गीर्वाणगार्वाणभी (सी)
निर्विस्मं भवती तदत्र भवती व्यासज्यवर्त्तिन्यभूत् ॥१०५॥

भालोद्भासितबालशीतकिरणां भास्वज्जटामण्डितां
मूर्त्तिं ते मकरासनां त्रिनयनां व्याचक्षते मान्त्रिकाः ।
मातर्निश्चिनुमो वयं तु भवतीमम्भःस्वरूपां परं
न प्रत्यक्षमुपेक्ष्य कस्यचिदपि प्रत्येपि शब्दं मनः ॥१०६॥

**धन्याग्रेण भगीरथेन विहितस्तोत्रस्य मन्यामहे**
**काऽप्यन्येव सरस्वती यदुदयात्त्वं भूः सरस्वत्यभूः ।**
**अर्थोऽप्यन्यतयाऽस्य येन च पुनश्चक्रे कृतार्थं जगद्-**
पा.टि.प.सं.२५ वागर्थाविव यन्महाकविवचः प्रायस्तदौत्सर्गिकम् ॥१०७॥

वाद्ये तत्स्पर्शसाक्षात्करणविवरणैरन्धकारस्य भावा-
भावत्वापादनैर्वा कृतजहदहजत्स्वार्थभेदाद्दयायाः ।
चिन्ताभिर्लक्षणायाः क्षपितचिरतरानेहसो ये च तेषा-
मेषा पीयूषधारा कलुषितमनसां देवि ! विश्रान्तयेऽस्तु ॥१०८॥

विहितमपि हितं न चाग्निहोत्रं
वियति निलीनदृशां तथा यतीनाम् ।
मतमपि न मतं यतो विरुद्धं
जननि ! कलौ शरणं नृणां त्वमेका ॥१०९॥

सुरनगरसुधाद्रवस्य धारा यदनुनयाद्वसुधां कृतावतारा ।
हरतु दुरितमप्युदारकीर्त्तिः स्मरणगतापि भगीरथस्य मूर्त्तिः ॥११०॥

इति कविरघुनाथसूक्तिमुक्तामणिर-
चितां विबुधा निधाय कण्ठे ।
स्रजमखिलमनोरथं लभन्तां सपदि
भगीरथवत्तव प्रसादात् ॥१११॥

इयममृततरङ्गिणी नराणामुदरदरीभरणैकतत्पराणां-
सुरसरिदवगाहनेऽलसानां घ्नतु दुरितं रसनाञ्चलं वसाना ॥११२॥

पा.लि.प.सं.२६ मध्येगङ्गं निमग्ना भरसि वरतरिः सम्भृता पट्टसूत्रै
स्तोत्रस्यास्य प्रभावात्सहसि च सहसा सैकते साऽऽविरासीत्।
न क्लिन्नं नापि शीर्णं सकलमविकृतं वस्तु चात्रैव लब्धं
यस्तत्कर्त्तव्यमिच्छन्स्वयमपि सुधियां यस्य न स्यात्प्रतीतिः ॥११३॥

यदक्षरपदश्लेषरसानुभवमिच्छथ ।
कुर्वन्तु कवयः कण्ठे गङ्गामृततरङ्गिणीम् ॥११४॥

गङ्गामृततरङ्गिण्या गत्वाऽनायासतोऽन्तरम्।
सदर्थमौक्तिकान्वेषी स्यात्कश्चन सुधीवरः ॥११५॥

कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः।
रघुनाथोऽश्मरीशान्त्यै गाङ्गमष्टोत्तरं शतम् ॥११६॥

**इति श्रीमत्सरसदैवज्ञात्मजरघुनाथकविकण्ठीरवविरचिता श्रीगङ्गामृततरङ्गिणी समाप्ता।**

**॥ शुभमस्तु ॥**

❖❖❖

---

**पादटिप्पणि**

१. 'स्त्वया' इति शुद्धः पाठः।
२. वेद्मि + अथ = वेद्म्यथ इत्यत्र वेद्म्याथाशम...... इति संशयः।
३. करकेषामित्यच सन्देहः– 'कुरु' इति पाठः साधुः स्यात्।
'चकर' इति पाठः कदाचित् भवेत्? कृ, लुङि, उ.प्र. १ च?
४. अत्र सन्देहः (वसतः ?)
५. अत्रार्थ सन्देहः = सेव्या + एतया तम्।
६. स्रग्धरा छन्दो भंगः– 'तव सुर तरव स्तेन' इति समीचीनम्।
७. अपर्णया अद्रिलतया इत्यर्थः अतएव कृशया।
८. (क) न्पृणुतः ?

# गङ्गालहरी

## ।। श्रीमन्महामङ्गलमूर्त्तये नमः ।।

भूमिः श्रियोऽमृतमयः शुचिराशुगन्ताऽ-
नन्तत्वभृत्त्रिपथगे तव वारिपूरः ।
पापानि पञ्च सुमहान्ति पुनर्विधातुं
पञ्चत्वभाञ्जि किमु पञ्च विधो विभाति (तनूर्विभर्त्ति)[१] ।।१।।

भागीरथी त्रिविधतापनिवारिणीति-
श्रद्धाय शास्त्रगिरि यैः क्रियतेऽवगाहः ।
तापान्विहाय सहसा महसावृतास्ते
ब्रह्मीभवन्ति नितरां धुतषड्विकाराः ।।२।।

तापत्रयं त्रिपथगा हरतीति शास्त्रा-
न्निश्चित्य मूर्ध्नि भवतीं विनिधाय भर्गः ।
द्राक्कालकूटदृगिनाग्निजतापमौज्झ-
च्छास्त्रं हि विश्वसितरि त्वरते फलाय ।।३।।

गौरीकराम्बुकुटिलाम्बुजलायिताङ्गः
कृत्स्नः सशक्तिक उपेन्द्रपदच्युताम्बु ।
सम्भूय वैधभुवने स्थितमात्रगङ्गा-
संज्ञं कपर्दभसितैः सितमाप भूपः ।।४।।

एकैकमत्रपुरुषार्थचतुष्टयस्य
सम्पादकं निखिलपातकनाशकञ्च ।
एकीकृतं सकललोकहिताय धात्रा
भागीरथी त्वमधुना किमुत प्रपन्नम् ।।५।।

राधाप्रियो जननि ! राधिकया सहैव
गीतेन खण्डपरशोरुदकत्वमेत्य ।
स्पृष्टां पदेन भवतीमनुनेतुमिच्छ-
न्नन्तस्तवाप्सु विशतीष्वनुगत्वमेति ।।६।।

वैरोचनेरहह वाष्कलिरित्यभिख्या-
भाजोऽध्वरे प्रसरति प्रपदे मुरारेः ।
गौरीकरच्युतजलाढ्यभवत्पयोभिः,
प्रक्षालितेऽम्बुपुलिंने त्रुटितेऽण्डकोशे ।।७।।

---

ग्रन्थकार– पद्मनिधिः, विषय– स्तोत्रम्, पत्र सं. १-८, ग्र.सं.स.भ.पु. १८१४२, लिपि– उड़िया-पूर्ण ।

बाह्यं त्वदम्बुहरिपादरजोम्बुमिश्र-
मन्तःक्षरद्विधिररुद्ध दधौ च पात्रे।
त्रेधा कमण्डलुगतेन जलेन तेन
प्रक्षाल्य विष्णुचरणौ कृतकृत्य आसीत् ॥८॥

युग्मकम्.

पादोदकं तदपि तत्र निधाय पात्रे
स्तब्धां स्वकीयभुवने विधिरार्चिचत्ताम्।
इत्थं सहस्रयुगसम्मितकालमावीत्,
सर्वं दरिद्र इव साधुनिधानकुम्भम् ॥९॥

काले गते बहुतिथे सगरात्मजेषु
नष्टेषु तीव्रतपसाऽथ भगीरथेन।
आराधितः सपदि विष्णुपदीं विधाता
भागीरथीमकृत कारुणिकस्तदादि ॥१०॥

प्रेम्णा शिवेन शिरसि त्वयि निह्नुतायां
संरक्तचेतसि न तारकभीतिभाजः
नापुर्मुदो हिमकराङ्कितमूर्त्तिभाजा
तेन त्वया स्थितिरमा विहिता विभूत्यै ॥११॥

अन्योन्यमीप्सितविधानपटुत्वभाजो-
र्वादश्चिरं विहरणाय विदग्धलीला
गङ्गाधरत्वमधुना कथमन्यथास्य
नापैति सा च कथमद्रिसुता सपत्नी ॥१२॥

चण्ड्यां विरक्तहृदयस्त्वयि सन्नताया
तुष्टः पदं तव तदीयशिरोधिरूढम्।
कर्त्तुं किमात्मवपुर्धहरामकार्षी-
द्वैदग्ध्यशालिगिरिशोऽनुनयच्छलेन ॥१३॥

कायैक्यभाङ्मिथुनमूर्धनि लब्धवासा
साम्नैव तत्कचकलापकृतोर्मिहस्ता।
या शैलराजतनयां विनयं ययाचे
तस्या महत्त्वमनघं विषयो न वाचाम् ॥१४॥

श्लिष्टे शिखाभिरुदधौ वडवानलस्य
या क्रीडतः फणिपतेरिव दिव्यमूर्त्तिः।
सप्रेम बभ्रुणि जटापटले स्फुरन्ती
शम्भोर्विभात्यघमसौ घुधुनी धुनीताम् ॥१५॥

द्यौरत्नमात्ममहसा सहसा भ्रमत्स-
तीव्रं तमः परिनिरस्यति कालमल्पम्।
त्वं तु त्रिलोकपतिमूर्ध्नि कृताधिवासा
नाम्नैव हंसि दुरितान्यनुकीर्त्तितेन ॥१६॥

त्रैलोक्यमातरखिलोद्धृतये भ्रमन्ती
गङ्गे! सदाऽस्यभिशिवं न तथापि रागात्।
धत्ते स्वमूर्ध्नि स पदं तव दास्यकामः
के वा गुणैः सहृदया न वशीभवन्ति ॥१७॥

गङ्गे! त्वदीयपुलिने मणिकर्णिकायां
नामानि कैटभरिपोर्गृणतोऽस्तमोहम्।
प्राणाः प्रयान्तु मम देह उपैतु दोला-
लीलां त्वदंम्भसि पुनर्जननं न येन ॥१८॥

तन्नास्ति पातकमकारि न यन्मयाऽम्ब!
तन्नास्ति पुण्यमपि यन्मयका व्यधायि।
तन्नास्ति दिव्यसरिता न पवित्र्यते य-
दित्याशयाऽस्मि सततं त्वयि बद्धभावः ॥१९॥

गोपायितामृतमयीं विरचय्य धात्रा
स्थानेऽच्युतेन च सदा चरणेन रुद्धा।
प्रेम्णा जटासु विनिगृह्य धृता शिवेन
येन त्रिलोकसुलभा दयया व्यधायि ॥२०॥

या सत्यलोकवसतिं पदमाब्जनाभं
शम्भोः शिरश्च परिहाय वहत्यजस्रम्।
लोकत्रयेऽप्यसुभृतः पुनती दयार्द्रा,
श्रेयाँस्तयोः क इह नाम दयाप्रवीरः? युग्मम् ॥२१॥

पूर्वं त्वया शिरसि वासकृता पुरारे-
रावर्त्तकाः परिचिताः सुरसिद्धसिन्धोः।
नाद्यापि संस्कृतिवशाद्विरमन्ति ते किं,
चक्रे कुलालकलिते भ्रमयो यथाऽन्ते ॥२२॥

मायावृता भ्रमयुजो जनिमृत्युभाजो
यान्यांस्त्वमुद्धृतवती विहितावगाहान्।
नून [२]जलेषु विनिधाय निजान्भ्रमांस्ते
मुक्तिं गतास्तत इमेऽत्र परिस्फुरन्ति ॥२३॥

भागीरथी जयति साऽद्भुतमत्स्यकूर्म-
क्रोडा नृसिंहमहिता पुनती पदैस्त्रीन्।
लोकाँस्त्रिभिः क्षितिभृदङ्गविदारभीमा
रक्षोपकृद्वलयुतासुगता[३] कलिक्रक् ॥२४॥

तीर्थान्तरैरलमलं सुसमाधियोगै-
र्यागैरलं तुरगमेधकराजसूयैः।
सर्वं विहाय सहसा वयसा प्रहीणै-
र्भागीरथीपरिसरः परिसर्त्तुमर्हः ॥२५॥

गङ्गे त्रिविक्रमपदाब्जमृणालवल्लि!
धात्रा निधाय महिते निजकुण्डिकायां।
श्रीकण्ठमौलिविलसन्नवमल्लिमाले!
भागीरथि! त्वरितमुद्धर दुर्गतेर्माम् ॥२६॥

गङ्गे! तवाम्बुकणिका कलिता जनैर्यै
र्भक्त्या कदाचिदपि ते धृतदिव्यदेहाः।
क्रीडन्ति वृत्रहपुरे सुरकन्यकाभि-
र्निःशङ्कमङ्कपरिवर्त्तनलालसाभिः ॥२७॥

पीयूषपूरविशदे! त्वयि मग्नचित्ता
स्तीर्थान्तरेषु विषमेषु कथं रमन्ताम्?
आस्वाद्य कल्पतरुपुष्परसं रसज्ञो
भृङ्गः किमिच्छति करीरतरूप्रसूनम् ॥२८॥

प्राप्ता भुवं यदवधि त्वमगण्यपुण्ये
सिद्धास्ततः प्रभृति पूर्वमुपासितानि।
तीर्थान्तराणि परिहाय तटं श्रितास्ते-
नौचित्यमुज्झति जनो न विशेषकामः ॥२९॥

सर्वंसहा वसुमती वसुधा यथेह
नार्थान्तरं स्फुरति सत्यपि शब्दभेदे।
तद्वद्धरो हरिरुमाकुटिलारमात्र
गङ्गे मनस्त्वयि तथाप्यमृतापगायाम् ॥३०॥

त्वं सूत्रधार इव नः परिनर्त्तयन्ती
दुर्वासनाः सततसंसृतिमूलभूताः।
उन्मूलय स्वहृदयाम्बुजकर्णिकास्थे?
स्वाक्ष्णो हि रेणुमपि हर्त्तुमलं न कश्चित् ॥३१॥

भास्वान्सुधौघधवलः परिमङ्गलाढ्यः
सौम्यः सतां गुरुतरः कवितां वितन्वन्।
मन्दः क्वचित् क्वचिदरः क्वचिदम्ब वक्रो,
मुष्णातु दुर्ग्रहरुजं भवदम्बुपूरः ॥३२॥

चण्डालतामुपगतं कुकृतैर्महद्भि-
र्दुर्वासनादृढजटाशतकृष्टचित्तम्।
सत्यक्षमाशमदमादिषु वद्धवैरं
कस्तारयेज्जनमिमं भवतीमृतेऽन्यः ॥३३॥

पारङ्गतं दशविधेष्वपि पातकेषु,
वर्णाश्रमाचरितधर्मविधानशून्यम्।
क्षुत्काममलोभवशमिन्द्रियतृप्तिकामं
कस्तारयेज्जनमिमं भवतीमृतेऽन्यः ॥३४॥

मज्जद्धरिद्विजमदस्तवकायिताम्बु
रुद्ध्वाद्य लोचनपुटानि सरोषधोषम्[क]।
ग्राम्यान्भटानकरुणानिवं भर्त्सयन्ती
या भाति सा जयति जन्हुनरेन्द्रकन्या ॥३५॥

भागीरथीं भजत भाति यदीयपूरो
मध्येपयोनिधि निलीय गणाधिपस्य।
तिर्यक् प्रहाररसिकस्य हिमाद्रिकुक्षा
वापाण्डरः परिसरन्निव दन्त एकः ॥३६॥

सत्यां क्षितौ त्वयि यथेष्टमसज्जनाना-
मौन्नत्यकारिणि विरञ्चिमुखोऽधिकारी
निश्चिन्तमासितुमलं न भिया क्षणार्धं,
कौटिल्यजाड्यभृति के सुखिनः प्रभौ हि ॥३७॥

धात्रार्चितां सबहुमानकमीश्वरेण
मूर्ध्ना धृतामुपनिषच्छतगीततत्त्वाम्।
इन्द्रानुजः स्पृशति हन्त! पदेन गङ्गां
लक्ष्म्या क उद्धतिमुपैति न मत्तचेताः ॥३८॥

प्राभातिके वहति गन्धवहे विहङ्गा
अन्तर्निमज्य जपतामघमर्षणानि।
कर्षन्ति शैवलधियाऽप्सु जटास्तरन्ती-
र्धन्यास्तथापि विरमन्ति न ते समाधेः ॥३९॥

चण्डी शिलोच्चयसुता गृहिणी पुरारेः
पीताम्बरस्य जलधीशसुताऽतिलोला।
श्रेयांसि तत्र भवती यदि नातनिष्य-
द्गार्हस्थ्यसौख्यमनयोः सहसा व्यनंक्ष्यत् ॥४०॥

आकर्णयन्ति हिमशैलगुहानिविष्टाः
धन्याः समाधिविगमे भवदम्बुनादम्।
वैकुण्ठमेत्य हरिणा विहितादरास्ते
शृण्वन्ति साम सनकादिमुनिप्रगीतम् ॥४१॥

मज्जत्सुरत्रयवधूकुचकुङ्कुमौघ-
पीतारुणः सहचरीगणभूषणानाम्।
भिन्नो रुचा विविधया भवदम्बुपूरो
वक्रः परिस्फुरति वासवचापचारुः ॥४२॥

स्नानाय मेऽस्तु नववेतसमंञ्जुकुञ्ज-
निष्ठामृताशिमिथुनैरभितः प्रगीतम्।
मज्जद्दिगीशरमणीकुचकुम्भनिर्यत्-
काश्मीरपङ्करुचिरं सुचिरं त्वदम्भः ॥४३॥

आपत्यपत्ररथचक्रकृतोरुनादे
नृत्यत्कबन्धविषमे द्रुतवाहिनीके।
प्राणाँस्तटे तव विहाय रणांङ्गणे वा,
निर्भिद्य यान्ति तरणेरपि विम्बमुच्चैः ॥४४॥

कादम्बसारसचकोरकलापिकोक-
पारावतप्रभृतयः शुकसारिकाश्च।
ग्रीष्मप्रतप्तवपुषस्त्वयि संविगाह्य
क्रीडन्ति चैत्ररथनन्दनवेदिकासु ॥४५॥

चान्द्रायणव्रतपराङ्मुखमेधिमत्त-
स्त्वं ब्रह्मकूर्चपरिमूर्च्छनयन्त्रगङ्गा।
कृच्छ्राणि कृच्छ्रबहुलानि च यात दूरं
दृग्गोचरीभवति सम्प्रति जह्नुकन्या ॥४६॥

आनन्दकाननविभूषणभूतवारं
कुर्वाणमात्ममहसैव न कं सहर्षम्।
सान्निध्यमात्रदलिताद्यतृणप्रभावं
नीलाकृतिं कमपि कामदुधं भजेम ॥४७॥

शक्तिस्त्वमीश्वरि ! शिवः खलु शक्तिमाँश्चे-
त्कः शक्तिशक्तिमदनैक्यमुरीकरोति ।
तत्तत्क्रियास्वघनिवारिणि शेषशेषि-
भावस्तु सूचयति शक्तिगतं महत्त्वम् ॥४८॥

ब्रह्माण्डोपरितनभागतो विधातुः
पात्रे स्मारविभो ! रतः सुमेरौ ।
भुव्यस्मादत उदधौ रसातलेऽतः
पापोघं मृगयितुमेष ते न दोषात् ॥४९॥

स्वीकृत्य च्युतिमगभर्तृमस्तकाग्रा-
त्पातालं विशसि जगत्पवित्रतायै
तद्युक्तं दृढमनसां परोपकृत्यै
स्वार्थोपप्लुतिरधिकां श्रियं विभर्त्ति ॥५०॥

गङ्गे ! त्वं निजतनयां प्रतिस्खलन्तं
धातारं हतभृगुभार्यकं मुरारिम् ।
श्रीकण्ठद्रुहिणशिरश्छिदं च पूत्वा
याताऽधो भुवनमहीन्पुनासि मर्त्त्यान् ॥५१॥

वियद्व्यालाधीशोज्झितविपुलनिर्मोकविशदो
गुरुग्रावग्रामस्खलितरयझङ्कारमुखरः ।
निमज्जद्दिव्यस्त्री-कुचकलशसंघट्टलुलितः
प्रवाहोऽयं वारां नरकपुरपीनार्गलति ते ॥५२॥

विमुक्तिश्रीस्वच्छस्फटिकमणिशय्याफलकिका
दिलीपापत्यस्य प्रविततपताका सुयशसाम् ।
निमग्नानामन्तर्नरकविवरं कर्षणसहा
महारज्जुर्गङ्गा विहितशिवसङ्गा विजयते ॥५३॥

योगाभ्यासबलेन केचिदपरे सब्रह्मजिज्ञासया
केचित्कर्मभिरर्पितैरपरके भक्त्याऽनवच्छिन्नया ।
सत्तीर्थावलिसेवनेन कतिचित्संसारवारांन्निधिं
तीर्णाः पद्मनिधेस्त्वतीवशरणं भागीरथी केवलम् ॥५४॥

ब्रह्मा सर्जनशक्तिरन्धकरिपुः संहारशक्तिर्महा-
विष्णुः पालनशक्तिरम्बरमणिः शक्तिः प्रकाशात्मिका ।
शक्तिर्यस्य हुताशनोऽपि भगवान्दाहात्मिका पावनं
सान्द्रानन्दमनन्तशक्ति कलये गङ्गाभिधं तन्महः ॥५५॥

श्रद्धाभक्त्योर्मनसि विरहात् किंञ्च सामर्थ्यलोपात्
विष्णोर्नामग्रहणमनिशं सेवनं विष्णुपद्या।
कर्त्तव्यानामधिकलियुगं सांगतासिद्ध्यभावात्
मुख्यो धर्मो न तत इतरः कश्चिदेतद्रहस्यम् ॥५६॥

एतास्त्वया सकलहृद्रतया लहर्यो
यस्याननात्प्रकटिताः सुरसार्थहृद्याः।
साफल्यमेतु स जनेरियताऽद्यमुक्त-
स्तुर्ये स्थितो वयसि पद्मनिधिर्मुमुर्षुः ॥५७॥

**इति गङ्गालहरी – रामः।**



---

**पादटिप्पणि**

१. पुस्तकेव पाठान्तरम्।
२. 'जड़ेषु' इत्यमपि पाठान्तरमूल ग्रन्थे।
३. 'युताऽऽश्रु' इत्यमपि पाठान्तरमूल ग्रन्थे।
४. घुनदी।
क. 'रुद्घाट्य लोचन पुटान् समरोषघोषम्' इति शु.पा.
५. जड़धी।
६. वालं।

# गङ्गादशहरास्तोत्रम्

## ।। श्रीगणेशायनमः ।।

**ईश्वर उवाच ।**

चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ।
रत्नकुम्भसिताम्भोजवरदाभयसत्कराम् ।।१।।

श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ।
एवं ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम् ।।२।।

चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ।।३।।

सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां सर्वदेवैरभिष्टुताम् ।।४।।

दिव्यरत्नविभूषां च दिव्यमाल्यैर्विभूषिताम् ।
ध्यात्वा जले यथाप्रोक्तं तथाचार्यां च पूजयेत् ।।५।।

ॐ नमो भगवत्यै ऐं श्रीं ह्रीं हिलि हिलि मिलि मिलि गङ्गे मां पावय पावय स्वाहा। अनेन मन्त्रेण आगमोक्तेन पञ्चपुष्पाञ्जलिं श्रीगङ्गायै निवेदयेत् ।

मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।
दशांगं गुग्गुलं धूपं सुगन्धं च मनोहरम् ।।६।।

गृहाण मङ्गलं दीपं घृतवर्त्तिसमन्वितम् ।
चतुर्विधं च नैवेद्यं रसैः षड्भिः समन्वितम् ।
रुद्ररूपे ! नमस्तेऽस्तु गृहाण वरदा भव ।।७।।

परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गा ब्रूते कदाऽऽगत्य मामयं पावयिष्यति ।।

इति वैश्वानरनारदसम्वादे दशपापहरायाः श्रीगङ्गाध्यानार्चनविधिः । एवं ध्यानार्चनं विधाय पश्चाज्जलान्तरे स्थित्वा, ज्येष्ठे मासि सिते पक्षे प्रतिपदादि-दशमीपर्यन्तं दशविधपापप्रणाशाय प्रतिदिनमुत्तरोत्तरदिनवृद्ध्या दशहरास्तोत्रपाठमहं करिष्ये ।

---

**विषयः**– स्तोत्रम्, पत्र-१-८, स.भ.पु.पा.सं. २१७९९ गङ्गाध्यानार्चनविधिसहितम्, एतद्धि काशीखण्डान्तर्गतम् । लिपि.दे.ना. रचनाकाल सं. १८६३ शके १७२८, पूर्णम् ।

**ब्रह्मोवाच ।**

नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोनमः ॥१॥

नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमोनमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्त्तये ॥२॥

सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठयै नमो नमः ।
स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो नमः ॥३॥

संसारविषनाशिन्यै जीवनायै नमो नमः ।
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्त्तये ॥४॥

सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये ।
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ॥५॥

भोगोपभोगदायिन्यै भोगवत्यै नमो नमः ।
मन्दाकिन्यै नमस्तेस्तु स्वर्गदायै नमो नमः ॥६॥

नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ।
नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ॥७॥

त्रिहूताशनसंस्थायै तेजोवत्यै नमो नमः ।
नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः ॥८॥

नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ।
वृहत्यै ते नमस्तेस्तु लोकधात्र्यै नमो नमः ॥९॥

नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ।
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ॥१०॥

परापरशताढ्यायै वरदायै नमो नमः ।
पाशजालनिकृन्तिन्यै अभिन्नायै नमो नमः ॥११॥

शान्तायै च वरिष्ठायै वरदायै नमो नमः ।
उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमो नमः ॥१२॥

ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ।
प्रणतार्त्तिप्रभञ्जिन्यै जगन्मात्रे नमो नमः ॥१३॥

सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ।
शरणागतदीनार्तपरित्राणपरायणे ॥१४॥

सर्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तुते।
निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ॥१५॥

परापरपरे तुभ्यं नमस्ते मोक्षदे सदा।
गङ्गे ममाग्रतो भूयाः गङ्गे मे देवि पृष्ठतः ॥१६॥

गङ्गे मे पार्श्वयोरेधि त्वयि गङ्गेऽस्तु मे स्थितिः।
आदौ त्वमन्ते मध्ये च सर्वत्र त्वं मते शिवे ! ॥१७॥

त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परा।
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥१८॥

य इदं पठति स्तोत्रं भक्त्या स्तोत्रं नरोऽपि यः।
शृणोति श्रद्धया युक्तः कायवाक्चित्तसम्भवैः ॥१९॥

दशधा संस्थितैर्दोषैः सर्वपापैः प्रमुच्यते।
सर्वान्कामानवाप्नोति परे ब्रह्मणि लीयते ॥२०॥

इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत्।
नाग्निचोरभयं तत्र पापेभ्योऽपि भयं न हि ॥२१॥

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
संहरेत्त्रिविधं पापं बुधवारेण संयुता ॥२२॥

तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः।
यः पठेत् दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥२३॥

सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य भक्तितः।
पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्त्तितम् ॥२४॥

यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने।
विधिर्यो विहितः सम्यक् सोऽपि गङ्गाप्रपूजने ॥२५॥

यथा शिवस्तथा विष्णुर्यथा विष्णुरुमा तथा।
उमा यथा तथा गङ्गा चतूरूपन्न भिद्यते ॥२६॥

विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं यथा।
गङ्गागौर्यन्तरं चापि यो ब्रूते मूढधीस्तु सः ॥२७॥

रौरवादिषु घोरेषु नरकेषु पतत्यधः।
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥२८॥

परदारोपसेवा च कायिकं त्रिविधं स्मृतम्।
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ॥२९॥

असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ।
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ॥३०॥

वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।
एतानि दश पापानि हर त्वं मम जाह्नवि ॥३१॥

दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ।
एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः ॥३२॥

मुंच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा ।
दशत्रिंशच्छुतान्सर्वान् पितृनथ पितामहान् ॥३३॥

उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता ।
ॐ नमो भगवत्यै दशपापहरायै श्रीगङ्गायै
नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै
विश्वमुख्यायै नन्दिन्यै ते नमो नमः ॥३४॥

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ।
दशयोगे च यः स्नात्वा सर्वपापैः प्रमुच्यते ॥३५॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां,
करधृतकलशाश्चत्सोत्पलाभीत्यभीष्टाम् ।
विधिहरिहररूपां सेन्दुकोटीरजूटां
कलितसितदुकूलां जाह्नवीं त्वां नमामि ॥३६॥

आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी, भगवतीं भागीरथीं प्रार्थयेत् ॥३७॥

विष्णुपादाब्जसम्भूते गङ्गे त्रिपथगामिनि ।
ब्रह्मद्रवेति विख्याते पापं मे हर जाह्नवि ! ॥३८॥

जाह्नवी सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
वाराणस्यां विशेषेण गङ्गा चोत्तरवाहिनी ॥३९॥



श्री इति श्रीस्कन्धपुराणे काशीखण्डे दशहरास्तोत्रं सम्पूर्णम् ।
श्रीगङ्गाभागीरथी प्रसन्नाऽस्तु भवानीशङ्करार्पणमस्तु इदं पुस्तकं महादेवेन लिखितम् । सं० १८६३ शके १७२८ ।

# स्तवकवचमाला

## सत्यज्ञानानन्दतीर्थकृता

### ।। गङ्गाष्टकम् ।।

यदवधि तव तीरं पातकी नैति गङ्गे
तदवधि मलजालैर्नैव मुक्तः कलौ स्यात् ।
तव जलकणिकाऽलं पापिनां पापशुद्ध्यै
पतितपरमदीनांस्त्वं हि पासि प्रपन्नान् ।।१।।

तव शिवजललेशं वायुनीतं समेत्य
सपदि निरयजालं शून्यतामेति गङ्गे ।
शमलगिरिसमूहाः प्रस्फुटन्ति प्रचण्डा-
स्त्वयि सखि विशतां नः पापशङ्का कुतः स्यात् ।।२।।

तव शिवजलजालं निःसृतं यर्हि गङ्गे
सकलभुवनजालं पूतपूतं तदाऽभूत् ।
यमभटकलिवार्त्ता देवि लुप्ता यमोऽपि
व्यधिकृतवरदेहाः पूर्णकामाः सकामाः ।।३।।

मधुमधुवनपूगैरत्नपूगैर्नृपूगै-
र्मधुमधुवनपूगैर्देवपूगैः सपूगैः ।
पुरहरपरमाङ्गे भासि मामेव गङ्गे
शमयसि विषतापं देवदेवस्य सद्यः ।।४।।

चलितशशिकुलाभैरुत्तरङ्गैस्तरङ्गै-
रमितनदनदीनामङ्गसङ्गैरसङ्गैः ।
विहरसि जगदम्बे खण्डयन्ती गिरीन्द्रान्
रमयसि निजकान्तं सागरं कान्तकान्ते ।।५।।

तव परमहिमानं चित्तवाचाममानं
हरिहरविधिशक्रा नापि गङ्गे विदन्ति ।
श्रुतिकुलमभिधत्ते शङ्कितं ते गुणान्तं
गुणगणसुविलापैर्नेति नेतीति सत्यम् ।।६।।

तव नुतिनतिनामान्यप्यघं पावयन्ति
ददति परमशान्तिं दिव्यभोगान् जनानाम्।
इति पतितशरण्ये त्वां प्रपन्नोऽस्मि मात-
र्ललिततरतरङ्गे चाङ्गगङ्गे प्रसीद ॥७॥

शुभतरकृतयोगाद् विश्वनाथप्रसादाद्-
भवहरवरविद्यां प्राप्य काश्यां हि गङ्गे।
भगवति तव तीरे नीरसारं निपीय
मुदितहृदयकञ्जे नन्दसूनुं भजेऽहम्॥८॥

गङ्गाष्टकमिदं कृत्वा भुक्तिमुक्तिप्रदं नृणाम्।
सत्यज्ञानानन्दतीर्थयतिना स्वर्पितं शिवे॥९॥

तेन प्रीणातु भगवान् शिवो गङ्गाधरो विभुः।
करोतु शङ्करः काश्यां जनानां सततं शिवम्॥१०॥

**इति श्रीसत्यज्ञानानन्दतीर्थयतिना विरचितं गङ्गाष्टकम् सम्पूर्णम्।**



पा.लि.सं. २३०३८ **लिपिः**– वंग

# गङ्गाष्टकम्

## ।। श्रीगणेशाय नमः ।।

गंगानंगारिसंगा सरिदुपरि परिक्रीडमाना विमाना–
दव्यादव्याजभाजः कलितकलितमोहारि मोहारिवारि ।।
यत्कूले कोलकोलाहलिनि हलिनिभे केतकस्वच्छकच्छ-
च्छायानायासिकायानुपतनपवनः सेवते देवतेंद्रान् ।।१।।

मातर्मातंगसंगास्तिमितितिमितनूर्द्धारि विस्तारि वारि
ताराकारानुकारा तरलतरलकैश्चामरैश्चामरीणां ।
सान्तः स्वान्तः कदान्तःशमितकलितमस्तोमदाहं मुदाहं
दक्षाभिक्षामितार्त्तिस्तव भवदवसंहारिशंकारिहारि ।।२।।

यन्नापन्नाससूरे सुरधुनि विधुनिस्यन्दनिस्पन्दधुर्ये
देहं तेऽहंसगेहं वहति वहति सन्मानसं मानसंगात् ।
किं तेन स्तेनभावं भवभविकमिदं बिभ्रतादभ्रतापं
व्यायत्तेनाप्तवातप्रसरसरणिनां मद्विधानां बुधानाम् ।।३।।

यैर्नोन्मीलन्मरालीविमलकुलमिलत्सारसी सारशीलं
दुःशीलैर्देवि ? देवैरकलितमकलि त्वद्वपुवार्विपुष्टैः ।
तेषां द्वेषाधिदोषाकलितकलितरा शृंखला शृंखलानां ।
छायामायानिकायादननुगुणगणाः संस्रवन्ति श्रवन्ति ।।४।।

वातव्याधूतनूतावलिगलितरजोराजिविभ्राजिताभ्रा
भ्राम्यद्भृंगालिकेलीकलितकलकला नदनं दन्मुतीयम् ।
अम्भस्तंबेरमालीमिलदमलरदारब्धविस्त्रब्धरोधो
रोधः कर्मादिकर्मप्रसरसरभसं प्रश्रयेनाश्रयन्ते ।।५।।

सर्पत्कर्पूरपूरोज्ज्वलजलपटलप्राणिभिः प्राणितार्थेऽ
त्यर्थं व्यर्थं कृतार्थं कृतमपि सुकृतैर्मन्यते जन्म तेषाम् ।
संसारासारकारासरणिपरिणतैर्बन्धभिर्बन्धमुक्तैः
धीर्मुक्तैर्मुक्तिमूर्त्तिर्भगवति ! भवती यैरदृष्ट्यारदृष्ट्या ।।६।।

श्रीगुरुः शरणम् ग्रन्थकारः हनुमान. ग्र.सं. १९८३५ रचनाकालः सं० १८३३

लोलत्कल्लोलकोलाहलवहलदलोत्तालवालाविलासा ।
बंहद्वृन्दारबृंदाकरणिकरकरासंगरिंगद्विहंगा ।
एकादोषाप्यशेषा विकरविकरिणारंभसंरम्भवर्या
कुर्याद्धुर्या धुरीणां भविकमविकलं सप्रभावप्रभाव: ।।७।।

रामारामाभिरामं चतुरगतुरगं तुंगमातंगसंगं
भ्राज्यं प्राज्यं न राज्यं भगवति भवति प्रेयसे श्रेयसे वा ।
सेवा ते वा क्व देवा सुरशिरसि गिरा नंदते वंदते चेत्
सिद्धीनां सिद्धिसिंधो न तवनतरव: सनिधानं निधानम् ।।८।।

गर्भाविर्भावि भूय: परिमलपरिमालंवरोलंबरोलै
र्वाचालै: पुष्पजालै: पटुविटपितटी बिभ्रती शुभ्रतीरा ।
ध्वस्ताधिव्याधिवाचाविधुरविधुसुधामेदुरा मे दुराप: ।
पायान्न: पातु गौरी गुरुगिरिशिरसि स्व: श्रवंती श्रवंती ।।९।।

वरं त्वदीये पुलिने पुलिंदा मंदाकिनीक्षालितपापकंदा ।
मंदारमालामलकंठनाला न भूमिपाला न च लोकपाला: ।।१०।।



इति श्री हनुमद्विरचितं गंगाष्टकं सम्पूर्णम् ।
लिखितमिदं भवानीशंकरेण रघुनाथसूनुना संवत् १८३३ मार्गशुद्ध दशम्यां भृगुवासरे ।

# अथ गङ्गाष्टक-स्तोत्रम्-सटीकम्

॥ श्रीगणेशाय नमः ॥

गङ्गानङ्गारिसङ्गा सरिदुपरि परिक्रीडमाना विमाना-
दव्यादव्याजभाजः कलितकलितमोहारि मोहारिवारि।
यत्कूले कोलकोलाहलिनि हलिनिभे केतकश्वेतकच्छ-
च्छायानायासकायानुपवनपवनः सेवते देवतेन्द्रान्॥१॥

जानकीवल्लभं रामं नत्वा वक्ष्ये यथामति।
टीकां गङ्गाष्टकस्येमां रञ्जनाय मनीषिणाम्॥१॥

**गङ्गेति।** अनङ्गारेः कामारेः सङ्गः शिरःसंम्बन्धो यस्याः सा आविमानाद् विमानपर्यन्तं आङ्मर्यादावचन इत्यनेन कर्मप्रवचनीयसंज्ञा, पञ्चम्यपाङ्परिभिरित्यनेन पञ्चमी, सरितामुपरि सरिदुपरि तदुपरीत्यादिवत्समासः परिक्रीडमाना क्रीडन्ती क्रीडानुसंपरिभ्यश्चेत्यात्मनेपदं, कलितस्य कलेस्तमसः पापस्य हारि नाशकं मोहस्यारि शत्रुभूतं वारि यस्यां सा गङ्गाव्याजभाजी निष्कपटानस्मानव्यात्। कोलानां वराहाणां, वराहः शूकरो घृष्टिः कोल इत्यमरः, कोलाहलः कलकलोऽस्मिन्नस्तीति तस्मिन् हलिनिभे बलरामतुल्ये श्वेतत्वात्, नीलाम्बरो रौहिणेयस्तालाङ्की मुसलीहलीत्यमरः, तस्याः गङ्गायाः कूले तीरे, कूले रोधश्च तीरं चेत्यमरः, केतकैः श्वेतो यः कच्छः जलसमीपदेशः, जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध इत्यमरः, तस्य छायायामनायासाः श्रमरहिताः काया देहा येषां तान्, कायो देहः क्लीबपुंसोरित्यमरः, देवतेन्द्रान् उपवने उद्याने पवनो वायुः सेवते। अस्मिन् स्तोत्रे स्रग्धरावृत्तं "भ्रम्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति" लक्षणात्॥१॥

मातर्मातङ्गसङ्गस्तिमिततिमितरुङ्गारि विस्तारि वारि
ताराकारानुकारं तरलतरलकै श्चामरैश्चामरीणाम्।
शान्तस्वान्तः कदान्तःशमितशमितमस्तोमदाहं मुदाऽहं
द्रक्ष्यामि क्षामितार्तिस्तव भवदवसंहारि शङ्कारि वारि॥२॥

मातरिति! हे मातः शान्तं स्वान्तं मनो यस्य, स्वान्तं हृन्मानसं मन इत्यमरः, सोऽहं मातङ्गानां गजानां सङ्गेन स्तिमिता निश्चलास्तिमयो मत्स्यविशेषा यस्मिन्तत्, राजीवः शकुलिस्तिमिरित्यमरः, तरुनुङ्गरति उन्मूलयतीति तरुङ्गारि विस्तारि विस्तृतं तारि तारकं ताराणां नक्षत्राणामाकारमनुकरोतीति तत् अमरीणां देवाङ्गनानां, अमरा निर्जरा देवा इत्यमरः, पुंयोगे ङीष्, चामरैस्तरलतरा चञ्चलाः

चञ्चलं तरलं चैवेत्यमरः, लवाः कणा यस्य तत्, लवलेशकणाणव इत्यमरः, अन्तः शमितो नाशितः तापसानां तमसः पापस्य स्तोमस्यौघस्य दाहो येन तत्, स्तोमौघनिकरव्रातेत्यमरः, भवदवस्य संसाराग्नेः संहारि नाशकं शङ्कारि संशयच्छेदि तव वारि जलं क्षामिता नाशिता आर्तिः पीडा यस्य सः, आर्तिः पीडा धनुष्कोट्योरित्यमरः, मुदा हर्षेण कदा द्रक्ष्यामि ॥२॥

पन्नापन्नाशशूरे सुरधुनि विधुनिस्पन्दनिस्यन्दधुर्ये
देहं ते हंसगेहं वहति वहति मन्मानसं मानसङ्गात्।
किं तेन स्तेनभावं भवभविकमिदं बिभ्रतादभ्रताम-
व्यापन्नेनाप्रतापप्रसरसरणिना मद्विधानां बुधानाम् ॥३॥

पन्नेति। पन्नानां पतितानां स्रस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितमित्यमरः, आपदां नाशे शूरे विधोश्चन्द्रान्निस्पन्दते यदमृतं तद्वन्निष्पन्दे प्रवहणे धुर्ये भारवाहिके हे सुरधुनि! हे गङ्गे! मन्मानसं मम मनः मानसा गर्वसा, गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिरित्यमरः, सङ्गात् संबन्धात् हंसानां गेहं स्थानभूतं ते तव देहं वहति जानाति त्वच्चिन्तनं न करोतीति भावः, आभीक्ष्णे द्विर्वचनम्। भवस्य संसारस्य भविकमुपकारि इदं स्तेनभावं बिभ्रता सम्यग् ज्ञानाभावाच्चौर्यं धारयता अदभ्रेण महता, अदभ्रं बहुलं बह्वित्यमरः, तापेन दुःखेन व्यापन्नेन पीडितेन तथा न विद्यते प्रतापप्रसरस्य सरणिः पद्धतिर्यस्य तेन, सरणिः पद्धतिः पद्येत्यमरः, तेन मनसा मद्विधानां किं प्रयोजनं न किमपीत्यर्थः ॥३॥

यैर्नोन्मीलन्मरालीविमलकुलमिलत्सारसीसारशीलं
दुःशीलैर्देवि देवैरकलितमकलि त्वद्वपुर्गर्वपुष्टैः।
तेषां द्वेषाधिदोषाकलितकलितराः शृंखलाः शृङ्खलानां
छायामायानुकायादननुगुणगुणाः खः स्रवन्ति स्रवन्ति ॥४।

यैरिति, हे देवि गङ्गे! दुःशीलैः दुःस्वभावैः, शीलं स्वभावे सद्वत्त इत्यमरः, गर्वपुष्टैः यैर्देवैः उन्मीलता प्रकाशमानेन मरालीनां हंसीनां विमलेन शुभ्रेण कुलेन मिलन्तीनां सारसीनां सार एव शीलं यस्य तत् अकलि पापशून्यं त्वद्वपुः अकलितं न दृष्टम्, हे स्वः श्रवन्ति स्वर्गात् पतन्ति गङ्गे तेषां दोषादिभिः कामदोषमुखैर्दोषैराकलितः युक्तः कलिरतिशयेन यासु ताः छायासदृशीनां न नश्वरीणां मायानामनुकार्यान्निरन्तरयोगाद् अननुगुणा अयोग्या गुणा यासां ताः शृखलानां संसारपाशानां शृङ्खलाः परम्पराः स्रवन्ति न जायन्ते मुक्ता न भवन्तीत्यर्थः। गङ्गे त्वद्दर्शनान्मुक्तिरित्यादिवचनात् ॥४॥

वातव्याधूतचूतावलिगलितरजोराजिविभ्राजिताभ्र-
भ्राम्यद्भृङ्गालिकेलीकलितकलिकलानन्दनन्दन्मुनीन्द्रम् ।
अम्भः स्तम्बेरमालीमिलदमलरदारब्धसंरब्धरोधो
रोधः कर्मन्दिकर्माप्रसरसरभसं प्रश्रयेनाश्रये ते ॥५॥

वातव्याधूतेति, वातेन वायुना व्याधूताभ्यः चूतानामाम्रतरूणां आम्रश्चूतोरसालोसावित्यमरः, आवलिभ्यः पङ्क्तिभ्यो गलितया रजोराज्या परागपंक्त्या, परागः सुमनो रज इत्यमरः, वीथ्यालिरवलिः पङ्क्तिः श्रेणी लेखास्तु राजय इत्युभयत्राप्यमरः, विभ्राजिते शोभितेऽभ्रे आकाशे, द्यौदिवौ द्वे स्त्रियामभ्रमित्यमरः भ्राम्यन्तीनां भृङ्गालीनां भ्रमरश्रेणीनां केल्या क्रीडया, द्रवकेलिपरीहासाः क्रीडा लीला च नर्म चेत्यमरः, कलितः युक्तः कलिः प्रणयकलहः सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगा इत्यमरः, तस्य कलानन्देन रमणीयनृत्तादिकलादर्शनजन्यानन्देन नन्दन्तो मुनीन्द्राः यस्मिन्तत्। स्तम्बे रमन्ते– इति स्तम्बेरमाः स्तम्बकर्णयोरभिजपोरित्यच् प्रत्ययः तत्पुरुषे कृतीति हलदन्तादिति वा ङेरलुक्, अम्भसः स्तम्बेरमाणां जलगजानां, कुञ्जरी वारणः करी इभः स्तम्बेरम इत्यमरः, आल्यां पङ्क्तौ मिलन्तो येऽमलाः स्वच्छाः रदाः दन्ताः, रदना दशना दन्ता रदा इत्यमरः, तैरारब्धं संरब्धं रोधो युक्तं यस्मिन्तत् कर्मन्दिनां सन्यासिनां, भिक्षुः परिव्राट् कर्मन्दीत्यमरः, कर्मण आप्रसरेण सरभसं वेगयुक्तं ते तव रोधस्तीरं, कूलं रोधश्च तीरं चेत्यमरः प्रश्रेयण विनयेन, प्रश्रयपुण्यौ समावित्यमरः आश्रये सेवे ॥५॥

सर्पत्कर्पूरपूरोज्ज्वलजलपटलप्राणितः प्राणिसार्थो-
त्यर्थं व्यर्थं कृतार्थं कृतमपि सुकृतैर्मन्यते जन्म तेषाम् ।
संसारासारकारासरणिपरिणतैर्बन्धुनिर्बन्धमुक्तै-
र्धीमुक्तैर्मुक्तिमूर्तिर्भगवति भवती यैरदृष्टात्र दृष्टा ॥६।

सर्पदिति, सर्पन् प्रसारी यः कर्पूरपूरः कर्पूरसमुदायः स इवोज्ज्वलेन जलपटलेन प्राणितो जीवितः प्राणिनां जीवानां सार्थः सङ्घः तेषां त्वामपश्यतां सुकृतैः पुण्यैः कृतार्थं कृतमपि कृतकृत्यतां प्राप्तमपि जन्माद्यर्थं भृशं, अतिवेल-भृशात्यर्था इत्यमरः कारायाः बन्धनालयस्य, कारा स्याद् बन्धनालये इत्यमरः, सरणौ मार्गे परिणतैः संसारमग्नैरिति भावः, बन्धुभिः पुत्रादिभिः निर्बन्धेनाग्रहेण मुक्तैरत एव धीमुक्तैर्मूढैर्यैर्जनैः हे भगवति गङ्गे मुक्तिमूर्तिर्मोक्षलक्ष्मीरूपा भवती अदृष्टात्, दैवात्र दृष्टा ॥६॥

लोल्लत्कल्लोलकोलाहलबहलकलोत्तालबालाविलासा-
नन्दद्वन्दारुवृन्दारककरनिकरासङ्गरिङ्गद्विहङ्गा ।
एषा ऽ दोषाप्यशोकाविकरविकरणारम्भसंरम्भवर्ज्या-
कुर्याद् धुर्य्याधुरीणां भविकमविकलं सप्रभाम्भः प्रभाम्बा ।।७।।

लोलादिति, लोलतां चञ्चलानां कल्लोलानां महातरङ्गाणां, अथोर्मिषु, महत्सूल्लोलकल्लोलावित्यमरः, कोलाहलेन कलकलेन बहलयाऽधिकया कलया नृत्तादिकलयोत्तालाय या बालाः स्त्रियस्तासां विलासेनानन्दतां तुष्टानां वन्दारूणामभिवादकानां, वन्दारुरभिवादक इत्यमरः, वृन्दारकाणां देवानां, दैवतानीत्यमरः, करनिकरस्य हस्तसमूहस्य स्तोमौघनिकरव्रातेत्यमरः, शोकमासमन्ताद्विकिरन्ति ते शोकाविकराः शोकग्रस्ता इति यावत् विकरणा विकलेन्द्रियाः, आरम्भे एव संरम्भो येषान्ते आरम्भशूरा इति यावत् तैर्वर्ज्याऽप्राप्येति भावः, धुर्या भारवाहिका, सप्रभा कान्तियुक्ता, अम्भसा जलेन प्रभातीति साऽम्भःप्रभा एषा अम्बा माता गङ्गा धुरीणं महदविकलं भविकं कल्याणं, भावुकं भविकं भव्यकुशलमित्यमरः कुर्यात् ।।७।।

रामारामाभिरामं चतुरगतुरगं तुङ्गमातङ्गसङ्ग-
प्राजां भ्राजां न राजां भगवति भवति प्रेयसे श्रेयसे वा ।
सेवार्हे वाग्मिदेवासुरसरसगिरानन्दिते वन्दिते चेत्
सिद्धानां सिद्धसिद्धे न तव नतवनत् सन्निधानं विधानम् ।।८।।

रामेति, रामाभिः सुन्दरीभिः, सुन्दरी रमणी रामेत्यमरः, आरामैरुपवनैश्चाभिरामं सुन्दरं चतुरङ्गच्छन्तीति चतुरगाः तुरगा अश्वा यस्मिन्तत् तुङ्गानामुन्नतानां मातङ्गानां गजानां, गजेपि नागमातङ्गावित्यमरः, सङ्गेन प्राजां प्रभूतं प्रचुरं प्राज्यमित्यमरः, भ्राजां शोभार्हं राजां तेषां प्रेयसे श्रेंयसे कल्याणाय वा न भवति। येषां सेवार्हे सेवनीये वाग्मिभिर्वावदूकैः, वाचोग्मिनिरिति सूत्रेण ग्मिनिप्रत्ययः, देवैरसुरैर्दैत्यैश्च सरसगिरा रसयुक्तवाण्या आनन्दिते सिद्धानां वन्दिते सिद्धपूज्ये इत्यर्थः सिद्धसिद्धे भगवति गङ्गे नतेषु नम्रेषु जनेषु भजमानं वनषणसम्भक्ताविति धातोः शतृप्रत्ययः, सन्निधानं यस्य तत्तव विधानं न चेत् तत्सान्निध्यं विना किमपि न रोचते इति भावः ।।८।।

गर्भाविर्भाविभूयः परिमलपरमालम्बरोलम्बरीलै-
र्वाचालैः पुष्पजालैः पृथुविटपितटीर्बिभ्रतीरासुतीरा ।
ध्वस्ताधिव्याधिबाधा विधुरविधुसुधा मेदुरा मेदुरापा-
पापान्नः पातु गौरीगुरुगिरिशिरसि स्वः स्रवन्ती स्रवन्ती ।।९।।

गर्भेति, गर्भादन्तरादाविर्भावी भूयान् परिमलो येषां तैः उत्कृष्टाया मायायाः लक्ष्म्याः इन्दिरा लोकमाता मेत्यमरः, आलम्बभूतैः रोलम्बैर्भ्रमरैर्लौलैश्चलैरत एव वाचालैः पुष्पजालैः पृथवो विस्तृताः विटपिनस्तरवः विटपी पादपस्तरुरित्यमरः यासां तास्तटीर्विभ्रती इराभि जलैः, दूरा भूवाक् सुरास स्यादित्यमरः सुष्ठु तीरं यस्याः सा ध्वस्ता नाशिता आधिव्याधिजन्या बाधा यया सा विधुरा न्यूना विधुसुधा चन्द्रामृतं यस्याः सा मेदुरा आपो यस्याः सा गौर्याः पार्वत्याः गुरोगिरेर्हिमवतः, शिरसि स्वः स्वर्गलोकात् स्रवन्ती पतन्ती स्रवन्ती नदी गङ्गा स्रवन्ती निम्नगापगेत्यमरः, वः युषान् पापात् पातु रक्षतु ॥९॥

वरं त्वदीये पुलिने पुलिन्दा मन्दाकिनी क्षालितपापकन्दाः ।
मन्दारमालामलमौलिमाला न भूमिपाला न च लोकपालाः ॥१०॥

वरमिति, हे मन्दाकिनि ! हे गङ्गे ! त्वदीये पुलिने तटे क्षालितः पापकन्दः पापसमूहो यैस्ते एतादृशाः पुलिन्दा म्लेच्छाः, पुलिन्दा म्लेच्छजातय इत्यमरः, वरं श्रेष्ठाः, न तु मन्दारमालयाऽमला निर्मला मौलिमाला मुकुटस्था माला येषां ते एतादृशा भूमिपालाः लोकपाला न वरं न श्रेष्ठाः, त्वसान्निध्यं विना लोकपालत्वं गर्हितमेवेति भावः । मन्दाकिनीति दीर्घपाठे मन्दाकिन्या क्षालितः पापकन्दो येषामित्यर्थो बोध्यः ॥१०॥

**इति श्रीमत्पण्डितकमलाकरभट्टात्मजकान्तानाथभट्टकृता**
**हनूमत्कृतगङ्गाष्टकटीका समाप्ता ।**

आसीच्छम्भुपुरे द्विजाग्ररमणः कैलासकल्पे शुभे
नाम्ना वै कमलाकरो निगमवित्तसूनुरासीत्कृती ।
शब्दन्यायपुराणकाव्यनिगमाध्येता मृडानीपुरे
कान्तानाथ इति प्रथामधिगतः श्री पाठशालाग्रणीः ॥

द्वाभ्राष्टेन्द, मिते शके सुनिहुताशङ्कावनीर्मिते-
१९३७ऽब्दे भाद्रे शुभमासि चन्द्रदिवसे पक्षे सितोऽथो तिथौ ।
नन्दे ९ वारिधिजापतेश्चरणजास्तोत्रे हनूमत्कृते
गङ्गाराम सुपाठकेन निरमाट्टीकां प्रयुक्तः २ शुभम् ॥



|| श्रीगणेशाय नमः ||

# अथ गङ्गास्तोत्रम्

## || समयाचारतन्त्रे ||

अथानन्तरतो देवि समयांस्तोत्रमुत्तमम् ।
येन स्तुता सिद्धमूली भक्षिता फलदा भवेत् ॥१॥

संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदानघे ।
भैरवानन्ददीप्त्यर्थं पवित्रा भव सर्वदा ॥२॥

नमामि यामिनीनाथलेखालङ्कृतमस्तकाम् ।
भवानीं भवसन्तापनिर्वापण-सुधानिधिम् ॥३॥

सिद्धिमूलीं श्रये देवीं हीनबोधप्रबोधिनीम् ।
राजप्रजावशकरी कालकण्ठे त्रिशूलिनि ॥४॥
अज्ञानेन्धनदीप्ताग्ने ज्ञानविज्ञानरूपिणि ।
आनन्दाद्याहुतिप्रीते सम्यग्ज्ञानं प्रयच्छ मे ॥५॥
दण्डाधिरूढपरिपूरितभोगमोक्षां ।

मुण्डाक्रमेण मदनां जनकामिनीनाम् ।
आराधयामि बहुशत्रुपराजयन्तीं ।
विश्वेश्वरीं त्रिभुवनां विजयेति देवीम् ॥६॥

आनन्दनन्दिनीनन्दे सदावन्द्यपदद्वये ।
उल्लासकदलीकन्दे स्वच्छन्दे बोधरूपिणि ॥७॥

कवयः कवितालहरीं कुरुते तत्त्वार्थदर्शनं पुंसाम् ।
अपहरति दुरितनिलयं किं किं न करोति संविदुल्लासः ॥८॥

संविदासवयोर्मध्ये संविदेव गरीयसी ।
संविदाश्रयणादेव तदात्मा पुरुषः स्मृतः ॥९॥

श्यामैव रामा कविरेव विद्वान् विद्यैव बन्धुर्धनुरेव शस्त्रम् ।
गङ्गैव तीर्थं स्मर एव धन्वी मार्गेषु माहेश्वर एव मार्गः ॥१०॥

कथञ्चिदेषा करुणाकटाक्षैर्निरीक्षते मां परदेवता चेत् ।
वृथा कथाकल्पमहीरुहाणामलं च चिन्तामणिचिन्तनेन ॥११॥

अलिपिशितपुरन्ध्रीभोगपुञ्जारतोऽहं
बहुविधकुलमार्गारम्भसम्भावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीं संश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥१२॥

वामोरुस्ते रमणकुशला दक्षिणे चालिपात्रं
तप्ता मुद्राश्चणकवटकाः सौकरं सुष्ठु मांसम् ।
तन्त्री वीणा सरसकवयः सत्कथा सद्गुरूणां
कौलो धर्मः परमगहनो योगिनामप्यगम्यः ॥१३॥



कौलरहस्ये कुलार्णवे ॥ श्रीरस्तु ॥

# गङ्गापुष्पाञ्जलिः

स्वयं शुक्ला शुक्लाभरणवसना जह्नुतनये
द्युतिं वाचां देवी तव न कलयाप्तुं प्रभुरभूत् ।।
अतो रूपं लब्धुं सुकविवदनाम्भोजजनितै-
र्विधत्ते वाग्गुम्फैर्जननि ! पदपुष्पाञ्जलिमसौ ।।१।।

कदाचित्केनापि क्वचिदपि समानीतममलं
पिबन्तः पानीयं तव जननि ! मीनासनगते ! ।
वहन्तस्त्वां गङ्गे ! शिरसि किल हालाहलभुजो
लभन्ते ते लोके शमनदमनान्नात्र शमनम् ।।२।।

सदावृत्तास्तुङ्गान् भुवि वियति धारागतिधरान्
तरङ्गान् गङ्गायाः सुतरलतुरङ्गाकृतिधरान् ।
विचित्रा वीक्ष्यैते विषयगतयो वृत्तिनिवहा
स्त्रपाधीना पीना अपि जहति दीनाश्चपलताम् ।।३।।

कृपासिन्धुः सिन्धुं किमुत भवतीमत्र भवतीं
प्रपां पीयूषस्य प्रतिदिनमुमेशो वितनुते ।
अथो रूपं कृत्वा जगति जनतातारणपटुः
स्वयं मायोत्तीर्णा सुरनदि ! सुधाधामशिरसः ।।४।।

पुरा धृत्वा पात्रे त्रिभुवन-विधाता विधिरभू-
दिति ज्ञात्वा पाथः शिरसि पशुनाथस्तव दधौ ।
ग्दे जाने ज्ञानात्सुरनदि ! पुराणस्तु पुरुषः
शरत्पाथोनष्टा सुमतिरिति तथ्यं जनवचः ।।५।।

अरित्रं नो यस्यां नहि गुणधरो नाविकगणः
परं पारं नारं नयति न पुनर्याति ननु या !
असारे संसारे जलधिवदपारे निपतितान्
जनानुद्धर्तुं सा तरिरियमपूर्वा विजयते ।।६।।

विशेषाच्छेषस्ते गुणगणमशेषं निगदितुं
प्रभुर्वक्तुं दोषान् सदसि बहुरोषान्मुहुरहम् ।
ब्रुवे मज्जज्जन्तोर्जननि ! जयति व्यालपटली
विशाली कण्ठे च स्थितिरपि सदा भूतभुवने ।।७।।

समायाता कस्मात्क्व च जगति यातीयमधुना
कथंकारं पारं तव जननि ! जानन्ति विबुधाः ।
न तेषां हानिः स्यात्सुरनदि ! तवापारविदुषां
जना मूढाः किं ये भुवि शशविषाणं न हि विदुः ॥८॥

त्वदन्ये मन्येऽहं दधति विबुधाः सिद्धिनिचयं
प्रसन्ना भक्तेभ्यो निजजपरतेभ्योऽपि निखिलाः ।
पिबन्तं पानीयं तपनकरतप्तं तनुभृतं
विधत्से सिद्धीशं सुरनदि ! गिरीशं च कृपया ॥९॥

पूर्णेन्दोर्दत्तभङ्गाःसुरपुरललनोद्वर्त्तनैश्चापि पिङ्गाः,
शम्भुं गन्तुं तुरङ्गा हरिपदगमने वैनतेयो विहङ्गाः ।
वित्ताशादत्तचित्तानुदरभृतिपरान्तीरगान्भुक्तभोगान्
भुक्तेशानप्रसङ्गाज्जगति कलियुगात्पान्तु गङ्गातरङ्गाः ॥१०॥



इति श्रीमद्गुरुणा विरचितः गङ्गापुष्पाञ्जलिः सम्पूर्णः ।

# गङ्गाप्रबन्धः

## ।। धीरजयदेवकृतम् ।।

मधुमथनमूर्तिवर इन्दुकरकामुखं वहसि बहु वारि सुतरङ्गे ।
हरिचरणनखभिदुरजगदण्डनिर्गता ब्रह्मजलपात्रकृतसङ्गे ।।१।।
नमो देवि गङ्गे नमो देवि गङ्गे हरनिखिलमघमलकनन्दे ।। ध्रुवम् ।।
त्वमसि जनपावनी चतुरुदधिगामिनी सप्तर्षिकुलसुकृतसारे ।
कनकगिरिलङ्घिते सकलमुनिवन्दिते हरमुकुटसितकुसुममाले ।।२।।
सगरसुतसङ्गमे लसदमरसुन्दरीदूतिके दुष्कृतिदुरापे ।
निरयगतिबाधके निर्वाणसाधके भक्तजनहृतसन्तापे । नमो० ।।३।।
तीर्थवरकारिणी पूर्वजोद्धारिणी हिमशैलपाषाणभेदे ।
नागरं प्लावयसि पूरयसि सागरं संगता विन्ध्यगिरिपादे ।।नमो०।।४।।
शुभसलिलनिर्धौतपुलिनवति कुर्वतस्तव नामनिर्मलालापम् ।
वन्दिता वीक्षिता चिन्तितावगाहिता मज्जिता मम हरसि पापम् ।।नमो०।।५।।
इह निखिलमुनिगणैरिह निखिलसुरगणैरिह निखिलवेदैरुदारे ।
पीयसे जीयसे स्तूयसे जह्नुमुनिकन्यके संसारसारे ।।नमो०।।६।।
गण्डूषमिह मेऽघशतमधिजयतु तव करनिकरगम्भीरतोये ।
परलोकबन्धुरसि सुन्दरसिन्धुरसि तटिनि सुरसदनसाधनोपाये ।।नमो०।।७।।
इति रामलक्ष्मणकौशिकानुज्ञया सुरसरित् कृतनमस्कारम्
भणन्तमिह सादरं धीरजयदेवकविमुत्तारयसि भवजलधिपारम् ।।नमो०।।८।।

❖❖❖

स.भ.पु.पा.लिं.सं. १९६०० लिपि. उडिया

# गङ्गास्तोत्रम्

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥१॥

इयं चिद्रूपाऽपि प्रकटजडरूपा भगवती
यदीयाम्भोविन्दुर्वितरति च शंभोरपि पदम्।
पुनाना धुन्वाना निखिलमपि नानाविधमघं
जगत्कृस्नं पायादनुदिनमपायात्सुरधुनी ॥२॥

वाते वाऽपि यदंगसंगमवशाच्छ्रीशंभुरूपप्रदे
गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचति।
चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं शंकते
सा गंगा निखिलं कलंकनिचयं भङ्गं तुरंगैर्नयेत् ॥३॥

मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा
वह्नौ लाजनिभा दृशौ मणिनिभा भोगोत्करे भोगिनाम्।
नृत्यावर्तविवर्तनेरितपयःसंमूर्च्छनोच्छालिताः
खेलन्ती हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥४॥

एषा धर्मपताकिनी तटसुधासेवावसन्नाकिनी
शुष्यत्पातकिनी भगीरथतपःसाफल्यहेवाकिनी
प्रेमारूढपिनाकिनी गिरिसुतासाकेकरालोकिनी
पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥५॥

---

स.भ.पु.पा.लि.सं. १९८३४ लिपि. शारदा

❖❖❖

# गङ्गास्तुतिः

शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भयभयश्रेणीसमुत्सारिणी।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी,
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥

❖❖❖

# स्तवकल्पद्रुमः

## श्रीगङ्गा-प्रणामः

नवद्वीपारामप्रकरकुसुमामोदवलितां
स्फुरद्रत्नश्रेणीचित-तट-सुतीर्थावलियुताम् ।
हरेर्गौराङ्गस्यातुल-चरण-रेणूक्षित-तनुं
समुद्यत्-प्रेमोर्मीतुमुलहरिसंकीर्तन-रसैः ॥१॥

प्रभुक्रीडापात्रीममृतरसगात्रीमृषितटां
शिवब्रह्मेन्द्रादीडित-महित-माहात्म्यमुखराम् ।
लसत्-किञ्जल्काम्भोजनि-मधुप-गर्भोरुकरुणा-
महं वन्दे गङ्गामघ-निकर-भङ्गां जलकणाम् ॥२॥

सद्यः पातकसंहन्त्री सद्यो दुःखविनाशिनी ।
सुखदा मोक्षदा गङ्गा गंगैव परमा गतिः ॥३॥

**श्रीगङ्गास्नानमन्त्रः**

विष्णुपाद-प्रसूताऽसि वैष्णवी विष्णुदेवता ।
पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ॥१॥

**श्रीगङ्गास्तवः**

गङ्गे समस्तजगदम्ब चलत्तरङ्गेऽ
नङ्गारिचारुतरमस्तकपुष्पमाले ।
कंसारिचारुचरणद्वयरेणुहर्त्रि
भक्त्या नमामि दुरितक्षयकारिणि त्वाम् ॥१॥

मातः समस्तसुखदे प्रवरे नदीनां
व्यासादिविप्रचयगीतगुणे गुणाढ्ये ।
संसारभैरवमहार्णवमध्यनौके
वन्दे तवांघ्रियुगलं दुरितापहारि ॥२॥

यस्यास्तवाम्बु कणिकामपि जन्हुकन्ये !
सौदासनामनृपतिर्द्विजकोटिहन्ता ।
संप्राप्य मुक्तिमगमत् त्रिदशैरलभ्यां
तां त्वां नमामि शिरसा वरदे ! प्रसीद ॥३॥

नारायणाच्युतजनार्दनकृष्णराम-
गङ्गादिनाम वदतो मम देवि! मातः!।
संसारपातकनिवारिणि देहपात-
स्त्वद्वारिणीह भवतु त्वदनुग्रहेण ॥४॥

किंऽवा तपोभिरखिलेश्वरि! किं जपैर्वा
दानैश्च किं तुरगमेधमुखैमखैर्वा।
त्वन्नीरशीकरमवाप्य सुरैरलभ्यां
मुक्तिं व्रजन्ति मनुजा अपि पापिनोऽपि ॥५॥

स्वाहा त्वमेव परमेश्वरि! या स्वधा त्वं
गीर्वाणवृन्दपितृलोकसुतृप्तिहेतुः।
सत्त्वं रजस्तम इति त्रिगुणस्वरूपा
सृष्टिस्थितिप्रलयकारिणि नौमि तां त्वाम् ॥६॥

धत्ते ललाटफलके तव सैकतं यः
पुण्ड्रं च देवि तव तीरमृदा सदैव।
त्वन्नाम सर्वरसधाम वदेच्च भक्त्या
तत्पादरेणुरखिलोऽस्तु ममैव मूर्ध्नि ॥७॥



स.भ.पु.पा.लि.सं. १८०९० लिपि. वंग

# पञ्चगङ्गाष्टकम्

## तैलङ्गस्वामि-विरचितम्

गङ्गा शिवा हि यमुनाऽपि च पुण्यतोया
वाणी पवित्रकिरणा वरधूतपापा ।
श्रीबिन्दुमाधवहरेः पुरतो विचित्रा
काश्यां सदा विजयते वरपञ्चगङ्गा ॥१॥

प्रातः सदा मुनिगणाः सकलाश्च देवाः
स्नाना[1]य माधवपुरःसरमापतन्ति ।
यस्यां स्थिरो भवति माधव आदिदेवः
सेयं सदा विजयते वरपञ्चगङ्गा ॥२॥

यस्यां सदा हरिहरौ वसतः[2] प्रसन्नौ
धर्मद्रवां जनहितां कवयो गृणन्ति ।
ध्यायन्ति यां शुभकरीं कलिकल्मषघ्नीं
सेयं सदा विजयते वरपञ्चगङ्गा ॥३॥

सम्प्राप्य ते सुकृतिनः शिवराजधानीं
काशीं भजन्ति मुदिता वरपञ्चगङ्गाम् ।
ते दुस्तरां गुणमयीं प्रतरन्ति मायां
लोकं पुनन्ति सकलं शिवभक्तियुक्ताः ॥४॥

गर्जन्ति पापकरिणो भयदा हि तावद्
यावज्जनो न भजते वरपञ्चगङ्गाम् ।
यां गच्छतः प्रतिपदं भवति प्रपुण्यं
तां त्वां नमामि सततं हृदि पञ्चगङ्गे ! ॥५॥

त्यक्ता अपि प्रियजनैरतिपापयुक्ता
रोगादिभिः परिवृता अतिदुःखयुक्ताः ।
दैवाद्यदि त्वयि पतन्त्यथ पञ्चगङ्गे !
तेनैव ते सुकृतिनः परमं व्रजन्ति ॥६॥

---

१. स्नानार्थ (पाठा.)
२. रमतः (पाठा.)

त्वन्नाम दुर्लभमिदं तव दर्शनञ्च
त्वं कान्तिके त्वतितरां जनदुर्लभाऽसि ।
त्वय्येव भक्तिममलां वरदे ! प्रदेहि
काश्यां शिवे ! हरिपदे सुजने श्रुतौ च ॥७॥

स्तोतुं न कोऽप्यलमनन्तगुणे ! तथापि
सद्भिः प्रवर्तित इति प्रवदामि किञ्चित् ।
तन्मे क्षमस्व शिशुभावनया सति ! त्वं
प्रातः प्रसीद सुभगे ! मयि पञ्चगङ्गे ! ॥८॥

गङ्गाष्टकमिदं पुण्यं भुक्तिमुक्तिप्रदं नृणाम् ।
सत्यज्ञानान्नदे तीर्थे यतिना रचितं मुदे ॥९॥

इदं स्तोत्रं तु रचितं तैलङ्गशास्त्रिशर्मणा ।
लिखितं ढुण्ढिराजेन स्तोत्रं सम्पूर्णमुच्यते ॥१०॥

इदं स्तोत्रं पठेन्नित्यं यः स्मरेत्पुण्यवान्नरः ।
तस्य मुक्तिस्तु जायेत अत्रांशे नास्ति संशयः ॥११॥

लिखितं ढुण्ढिराजेन कालोपाख्येन धीमता ।
देवीदाशर्मणा सार्धं पुस्तकं दत्तमेव च ॥१२॥



---

**स्तोत्र-टिप्पणी–** अष्टकमिदं पाण्डुलिपिरूपेण रामापुर-वाराणसीस्थाद आचार्यब्रह्मगोपालभादुड़ीमहाशयस्य पुस्तकालयादस्माभिः सङ्गृहीतम् । स्तोत्रस्य दशमश्लोके 'तैलङ्गशास्त्रिशर्मा' अस्य रचयितेत्युक्तम् । पुष्पिकायामस्य रचनाकालः संवत् १७८८ इत्युल्लिखितम् । अतः खीष्टाब्दस्य १७३१ तमे वर्षे लिखितमेतत् केनचित् ढुण्डिराजेन इति प्रतीयते । एष एव तैलङ्गशास्त्रिशर्मा सुप्रसिद्धो योगी तैलङ्गस्वामीति विज्ञायते ।

श्लोकेषु काश्चनाशुद्धयोऽस्माभिर्लक्षिताः । स्वबुद्धया ताः संशोध्य शुद्धपाठः मूलपाठे निवेशितः । हस्तलेखस्याशुद्धपाठाः तत्तत्स्थाने संख्याक्रमेण स्तोत्रस्याधस्तादुल्लिखिताः ।

काश्यां तैलङ्गस्वामी पञ्चगङ्गाघट्टे सन्यासिनामाश्रमे मृत्युपर्यन्तं १८८७ खीष्टाब्दं यावत् दिगम्बरावस्थायां न्यवसत् । श्रूयते तथाऽनुमीयते यत् तैलङ्गस्वामिनो मुखादबाधगत्या निःसृतं पञ्चगङ्गाष्टकमिदं प्रत्यहं तदीयप्रमुखभक्तो देवीदानामकः श्रुतवान् । देवीदामहोदयस्य स्वेच्छया प्रार्थनया च ढुण्ढिराजेनाष्टकमिदं लिपिबद्धमकारि ।

आरम्भेऽष्टौ श्लोका वसन्ततिलकाच्छन्दःसु तैलङ्गस्वामिना रचिताः, अन्ते चत्वारः श्लोकाश्चानुष्टुप्छन्दःसु लेखकेन विरचिताः संयोजिताश्चेत्यनुमीयते ।

**इति पञ्चगगङ्गाष्टकं सम्पूर्णम् । संवत् १७८८ काश्यां लिखितम् ॥**

# गङ्गास्तोत्रम्

## (अगस्तिमुनि-विरचितं गङ्गाष्टकम्)

भगवति भवलीलामौलिमाले तवाम्भः।
कणमणुपरिमाणं प्राणिनो ये स्पृशन्ति।
अमरनगरनारीचामरग्राहिणीनां
विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥१॥

ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्ल्लोकादापतन्ती कनकगिरिगुहागण्डशैलात् स्खलन्ती।
क्षोणीपृष्ठे लुठन्ती दुरितचयचमूनिर्भरं भक्षयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित् पावनी नः पुनातु ॥२॥

मज्जन्मातङ्गकुम्भच्युतमदमदिरामौलिमत्तालजालं
स्नाने सिद्धाङ्गनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गाम्।
सायं प्रातर्मुनीनां शयकुसुमचयैश्छन्नतीरस्थतीरं
पायान्नो गाङ्गमम्भः करिकरभकराक्रान्तरंहस्तरङ्गम् ॥३॥

आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥४॥

शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावार-विहारिणी भवभयश्रेणीसमुत्सारिणी।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीभूतिविहारिणी विजयते गङ्गा मनोहारिणी ॥५॥

कुतोऽवीचिर्वीचिस्तव यदि गता लोचनपथं
त्वमापीता पीताम्बरपुरनिवासं वितरसि।
त्वदुत्सङ्गे गङ्गे! पतति यदि कायस्तनुभृतां
तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥६॥

भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि।
सकलकलुषभङ्गे स्वर्गसोपानसङ्गे
तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥७॥

मातर्जाह्नवि शम्भुसङ्गमिलिते मौलौ निधायाञ्जलिं
त्वत्तीरे वपुषोऽवसानसमये नारायणाङ्घ्रिद्वयम् ।
सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे
भूयो भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥८॥

गङ्गे त्रैलोक्यसारे सकलसुरवधूधूतविस्तीर्णतोये
पुण्ये ब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे ।
प्रायश्चित्तं यदि स्यात् तव जलकणिका ब्रह्महत्यादिपापैः
कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गङ्गे प्रसीद ॥९॥



इति गङ्गाष्टकम् । श्रीरामजी । श्री संवत् १८१२ वर्षे आश्विनवदी २ सोमवासरे लिखितं गुमानीरामेण शुभमस्तु (सरस्वती भवनपुस्तकालय, सं.सं.विं.वि.पाण्डुलिपि संख्या १८५७५)

# ऋषिकृत-गङ्गास्तवः

॥ श्रीगणेशाय नमः ॥

**सूत उवाच ।**

शृणुध्वं मुनयः सर्वे गङ्गास्तवमनुत्तमम् ।
शोकमोहहरं पुंसामृषिभिः परिकीर्तितम् ॥१॥

**ऋषय ऊचुः ।**

इयं सुरतरंगिणी भुवनवारिधेस्तारिणी
स्तुता हरिपदाम्बुजादुपगता जगत्संसदः ।
सुमेरुशिखरामरप्रियजला मलक्षालिनी
प्रसन्नवदना शुभा भवभयस्य विद्राविणी ॥२॥

भगीरथरथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका सिता ।
सुरासुरनरोरगैरजभवाच्युतैः संस्तुता
विमुक्तिफलशालिनी कलुषनाशिनी राजते ॥३॥

पितामहकमण्डलुप्रभवमुक्तिबीजा लता
श्रुतिस्मृतिगणस्तुतद्विजकुलालवालावृता ।
सुमेरुशिखराभिदा निपतिता त्रिलोकावृता
सुधर्मफलशालिनी सुखपलाशिनी राजते ॥४॥

चरद्विहगमालिनी सगरवंशमुक्तिप्रदा
मुनीन्द्रवरनन्दिनी दिवि मता च मन्दाकिनी ।
सदा दुरितनाशिनी विमलवारिसन्दर्शन-
प्रणामगुणकीर्तनादिषु जगत्सु संराजते ॥५॥

महाभिषसुताङ्गना हिमगिरीशकूटस्तना
सफेनजलहासिनी सितमरालसञ्चारिणी ।
चलल्लहरिसत्करा वरसरोजमालाधरा
रसोल्लसितगामिनी जलधिकामिनी राजते ॥६॥

क्वचिन्मुनिगणैः स्तुता क्वचिदनङ्गसम्पूजिता
क्वचित्कलकलस्वना क्वचिदधीरयादोगणा ।
क्वचिद्रविकरोज्ज्वला क्वचिदुदग्रपाताकुला
क्वचिज्जनविगाहिता जयति भीष्ममाता सती ॥७॥

स एव कुशली जनः प्रणमतीह भागीरथीं
स एव तपसां निधिर्जपति जाह्नवीमादरात् ।
स एव पुरुषोत्तमः स्मरति साधु मन्दाकिनीं
स एव विजयी प्रभुः सुरतरङ्गिणीं सेवते ॥८॥

तवामलजलाचितं खगशृगालमीनक्षतं
चलल्लहरिलोलितं रुचिरतीरजम्बालितम् ।
कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽ
प्यहं त्रिपथगामिनि प्रियमतीव पश्याम्यहो ॥९॥

त्वत्तीरे वसतिस्तवामलजलस्नानं तव प्रेक्षणं
त्वन्नामस्मरणं तवोदयकथासंलापनं पावनम् ।
गङ्गे मे तव सेवनैकनिपुणोऽप्यानन्दितश्चादृतः
स्तुत्वा चोद्गतपातको भुवि कदा शान्तस्तरिष्याम्यहम् ॥१०॥

इत्येतदृषिभिः प्रोक्तं गङ्गास्तवनमुत्तमम् ।
स्वर्ग्यं यशस्यमायुष्यं पठनाच्छ्रवणादपि ॥११॥

सर्वपापहरं पुसां बलमायुर्विवर्धनम् ।
प्रातर्मध्याह्नसायाह्ने गङ्गासान्निध्यता भवेत् ॥१२॥

इत्येतद्भार्गवाख्यानं शुकदेवान्मया श्रुतम् ।
पाठितं श्रावितं चात्र पुण्यं धन्यं यशस्करम् ॥१३॥

अवतारं महाविष्णोः कल्केः परममद्भुतम् ।
पठतां शृण्वतां भक्त्या सर्वाशुभविनाशनम् ॥१४॥



इनि ऋषिकृतो गङ्गास्तवः सम्पूर्णः । सम्बत् १६१८, सरस्वती भवन पुस्तकालय पाण्डुलिपिसंख्या १८९९७

# गुरुगङ्गाष्टकम्

मातर्नन्दिकतीर्थसुन्दरभवे शैवैरुपास्ये शिवे
निःशेषाघनिवारिणि त्वमुदिरे सौन्दर्यरत्नाकरे ।
देवानीकसुसेविते सुखकरे संसारतापापहे
दीनं सुज्ञजनालिसेवितपदे त्वं मां पवित्रं कुरु ॥१॥

रोगार्दितं संसृतितापतप्तं षट्कर्महीनं त्वघसंप्लुतं माम् ।
न ह्यापगान्या भुवने त्वदन्या नाघं प्रकर्तुं जननीं च तां गतम् ॥२॥

जगज्जननि त्वद्यशो भुवि महत्समुद्यत्सदा
जनावलि-पवित्रतां प्रकुरुतेऽत्र बिन्दुस्तव ।
इति श्रवणतो मतिर्मम तवाम्बुसंसेवने
पवित्रमकरोषि चेज्जननि तां कथं ते सुते ॥३॥

त्वदम्बुसेवनात्सदा निराकुला भविन्त ते
खगा मृगाः सुरर्षयो नरोत्तमाः सुरासुराः ।
सुभक्तियुक्तचेतसा नरस्त्वदम्बुसेवनं
करोति यः स याति धाम वैष्णवं सुरार्थितम् ॥४॥

असवो यदि यान्ति त्वत्तटे स नरो धन्यतया दिवं प्रयाति ।
हरिनाम इवात्र त्वत्तटं न विमुञ्चन्ति कदापि मानवाः ॥५॥

तव तीरनिवासवर्जिता न जनिर्जगतीतले मता सा ।
न यथा हरिनामवर्जिता रसनाया विषवल्लरी मता सा ॥६॥

विरजागुरुगङ्गे मे सितासिते यत्र सङ्गते तत्र ।
यः प्लावयति शरीरं स याति भक्त्या सुमाणिकं धाम ॥७॥

त्वद्दर्शनात्त्वत्स्मरणात्तवाम्बुसंसेवनान्माणिकपादसम्भवे ।
यत्सौकृतं तत्कथने न शक्त्या ब्रह्मादयस्तत्र कियानहं नरः ॥८॥

गुरुगङ्गाष्टकमिदं पठतां सर्वसिद्धिदम् ।
पठितव्यं सर्वकाले शयने च विशेषतः ॥९॥



---

इति गुरुगङ्गाष्टकम् सम्पूर्णम् ।
सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, सरस्वतीभवनपुस्तकालय, पाण्डुलिपि संख्या २३७८९

# गङ्गामृतस्तोत्रम्

**श्रीरामचन्द्रशर्मबालाजीविरचितम्**

गुञ्जन्मञ्जुमिलिन्दपुञ्जविलसत्कुम्भद्वयाम्भोरुह-
द्वन्द्वस्यन्दिमरन्दबिन्दुनिवहं भाले विशाले मुदा।
शुक्त्यै वामलयान्तयेन्दुकलया बिभ्रद्भवानीभव-
स्तन्वन् भव्यमयं भयं विकलयन्नव्यादभव्यात्स नः ॥१॥

लोलत्कल्लोलमालाकुलबकुलकुलोल्लासिकूलानुकूलो-
न्मीलन्मल्लीमतल्लीविहितविहृतयश्चञ्चरीका जयन्ति।
स्वच्छायाच्छादिताङ्गानमरपुरमहोमत्तमातङ्गवारा
नारादारोहयन्तः किमुत शिवजलैर्गौरिगङ्गे ! स्तुतिस्ते ॥२॥

आलोकालोकलोका विषयविषधरासारसंसारगर्त-
प्रावर्तप्रोज्झिताशास्त्वदणुनुतिवशादम्ब ! सालम्ब्यमीयुः।
दृष्ट्वैतत्स्पष्टमङ्के दधदपि गिरिजां केवलं कामगञ्जां
मातर्गङ्गे ! वराङ्गे ! वहति पशुपतिस्त्वां परानन्दकन्दाम् ॥३॥

भर्गः स्वर्गापवर्गश्रयणचणगुणान्त्वां दधानो विरक्तः,
कृत्तिक्ष्वेडाहितुण्डान्यवहदवहितः कामदाहे च देहे।
गेहे माहेश्वरं हे सुरधुनि ! चरितं वीक्ष्य विष्णुं विलासैः,
पैत्रे जैत्रे वसन्ती वशयति कमला म्लानमानेतिजाने ॥४॥

प्रातर्मातर्यदान्तर्भवति कतिपयं कालमालोलचेता,
भूताधीशादिलेखावलिमिलितकले त्वज्जले जन्तुरेषः।
कः शेषः को विशेषः सुरवरविभवे का सुधांशोश्च शोभा
रम्भासम्भोगभाजां मुहुरिति वदतां सेव्यतामेति कामम् ॥५॥

चित्रं यच्छम्भुशैलायितशिरसि समुद्धर्त्तुमन्धान् धरायां
धारां वारामपारां धरशिखरनिभामादधौ ब्रह्मलोकात्।
तत्कालेऽकालकोलाहलबहलमिलन्मोहमालिन्यलीनैः,
शालीनैर्देवि ! दैवैरनुदितमुदितं ज्ञानमज्ञस्य सद्यः ॥६॥

ब्रह्माण्डस्तम्भदण्डः किमु यमनियमे कालदण्डः प्रचण्डः
किम्वा भूमन्थदण्डः किमु पतति दिवः स्वर्धुनीवारिदण्डः।
किम्वाऽऽकाशः सुभाण्डः किमिह हिमगिरिः प्रौढपिण्डः किमित्थं
तर्कैरुत्प्रेक्ष्यमाणा दिवि भुवि च जनैर्जाह्नवी जन्यमव्यात् ॥७॥

कुप्यद्गौरीकटाक्षारुणकिरणगणैर्भाति या शोणशोभा,
शम्भूत्क्षिप्तेभकृत्तिप्रतिफलिततलैर्याऽतुला श्यामला च।
किञ्चोदञ्चच्छरच्चन्द्रितकरनिकराकीर्णमुक्ताच्छगुच्छ-
च्छायासच्छायचारुः स्वयमियमपरा रातु वाणीस्त्रिवेणी ॥८॥

मातर्मातङ्गसङ्गोच्छलदमलजलस्नातनारीस्तनाग्र-
स्रस्तश्रीखण्डसङ्गोद्धृतधरविहरद्भूरिपाटीरवृक्षे।
वक्ष्ये किं बिन्दुभक्षे तव फलमखिले क्षेममत्राकुलेक्षोऽ-
हीशोऽधीशोऽपि नेशो भवति हि गदितुं पारमम्भोमहिम्नः ॥९॥

पादाग्रोदग्रधाराकृतिरमितचितिर्या पुराऽभून्मुरारेः,
प्रादुर्भूता पुरारेरपि शिरसि जटाजूटकूटेऽस्ति सैव।
पादाग्रादाशिखाग्रादपि हरिहरयोरेकरूपैकरूप्यं
जल्पन्ती जह्नुकन्या जगति विजयते जीवजीवातुरेषा ॥१०॥

निर्यातां त्वां पदाग्रात् सुरधुनि! परमां चित्कलां वीक्ष्य जातः,
श्यामः शेते रमेशः परमधिजलधि प्राप्तुकामः पुनर्याम्।
भर्गो जागर्ति लब्ध्वा विधिरपि विदधे विश्वमाश्वासयन्ती-
मायान्तीमत्र जाने जगति जनिजुषामैहिकामुष्मिकाय ॥११॥

अपर्णाऽऽकीर्णोऽपि प्रबलफणिफूत्कारविकलोऽ-
नलोदीर्णज्वालावलिमलिनहालाहलगलः।
स्थितः शैलप्रस्थे सुरधुनि! तवैवैष महिमा
यतः सोऽयं स्थाणुः फलति फलमानन्दमतुलम् ॥१२॥

साधुसङ्गादिदं गङ्गामृतं येन मुखे धृतम्।
तस्य गङ्गापदे सङ्गात् मनोऽनङ्गारिभृद् भवेत् ॥१३॥



इति श्रीरङ्गप्यान्वयोत्पन्नधुरन्धरोपनामकश्रीमदात्मारामसूरिसूनुना बालाजीत्यपर-प्रसिद्धाभिधानेन रामचन्द्रशर्मणा काशीस्थेन कृतं गङ्गामृतस्तोत्रं सम्पूर्णम्। संवत् १८२६
सं०सं०वि०वि० पाण्डुलिपिसंख्या १८१०६

# ।। गङ्गास्तवः।।

## शार्दूलविक्रीडितम् छन्दः

यत्यक्तं जननीगणैर्यदपि न स्पृष्टं सुहृद्बान्धवै
र्यस्मिन् पान्थदृगन्तसन्निपतिते तैः स्मर्यते श्रीहरिः।
स्वाङ्के न्यस्ततदीदृशं वपुरहो स्वीकुर्वती पौरुषं
त्वं तावत् करुणापरायणपरा माताऽसि भागीरथि ? ।।१।।

### आर्याछन्द

अच्युतचरणतरङ्गिणि शशिशेखरमौलिमालतीमाले।
त्वयि तनुवितरणसमये देया हरता न मे हरिता ।।२।।

### मन्दाक्रान्ता

शून्यीभूता शमननगरी नीरवा रौरवाद्या
यातायातैः प्रतिदिनमहो भिद्यमाना विमानाः।
सिद्धैः सार्द्धं दिवि दिविषदः सार्घ्यपात्रैकहस्ता
मातर्गङ्गे ! यदवधि तव प्रादुरासीत् प्रवाहः ।।३।।

### उपजातिः

पयो हि गाङ्गं त्यजतामिहाङ्गं पुनर्न चाङ्गं यदि यान्ति चाङ्गम्।
करे रथाङ्गं शयने भुजङ्गं याने विहङ्गं चरणे च गाङ्गम् ।।४।।

### शार्दूलविक्रीडितम्

कल्मक्षौणिकरोटयः कति कति द्वीपिद्विपानां त्वचः
काकोलाः कति पन्नगाः कति सुधाधाम्नश्च खण्डाः कति।
किञ्च त्वञ्च कति त्रिलोकजननि ! त्वद्वारिपूरोदरे
मज्जज्जन्तुकदम्बकं समुदयत्येकैकपादाय यत् ।।५।।

### शिखरिणी

कुतोऽवीचिर्वीचिस्तव यदि गता लोचनपथं
त्वमापीता पीताम्बरपुरनिवासं वितरसि।
त्वदुत्सङ्गे गङ्गे ! यदि पतति कायस्तनुभृतां
तदा मातः ! शातक्रतवपदलाभोऽप्यतिलघुः ।।६।।

---

दरगाफर्ख़ाँविरचित 'गङ्गास्तव' रचनाकाल : १६१९ ई० रंगून स्तवसमुद्र, पृ० १७६

त्वमम्भो लोकानामखिलदुरितान्येव दहसि
प्रगन्त्री निम्नानामपि नयसि सर्वोपरि नतान् ।
स्वयं जाता विष्णोर्जनयसि मुरारातिनिवहान्
अहो मातर्गङ्गे ! किमिह चरितं ते विजयते ।।७।।

**मालिनीछन्दः**

सुरधुनि ! मुनिकन्ये ! तारयेः पुण्यवन्तं
स तरति निजपुण्यैस्तत्र किन्ते महत्त्वम् ।
यदि च गतिविहीनं तारयेः पापिनं मां
तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम् ।।८।।

---

रचनास्थलं- दक्षिणेश्वरभागीरथितटः ।



# गङ्गास्तोत्रम्

## ।। श्रीगणेशाय नमः ।।

लोके प्रतिष्ठा भवतो यदेष्टा नेक्ष्या तदा जह्नुनरेन्द्रकन्या ।
नग्नं वृषस्थं पुरुषं विधाय कपालिनं भैक्षचरं करोति ।।१।।

रजोऽभिभूता रजसा विशुद्धास्तैरेजते जह्नुनरेन्द्रकन्ये ?
कस्यै न शुद्ध्यै तव पङ्कलेपः कलेवरे कर्मवशात्स्थितानाम् ।।२।।

मातर्जलस्य प्रकृतिः प्रसिद्धा शीतेति लोके तव तोयसङ्गात् ।
पापं हि जन्तोर्भवति क्षणेन यद्भस्मसात्तन्मम चित्रमास्ते ।।३।।

यो विष्णुपादाब्जपरागसङ्गो यश्चापि निर्वाणदपूर्विहारः ।
अघघ्नता या च कलिन्दजाया एतत्त्रयं त्वत्सखितानिदानम् ।।४।।

विधाय सम्भेदमभेदहेतुं सूर्यस्य पुत्र्या सह तीर्थराजे ।
यमाधिकारं नयसि प्रशान्तिं ततोऽपि नीतिज्ञतया नितान्तम् ।।५।।

स्तुवन्ति गङ्गे यमकिङ्करास्त्वां
निन्दन्ति वा स्वाधिकृतेरपायात् ।
जाने न तत्त्वं जननि ! त्वदीयं
विधेहि मुक्तं किमु संशयेन ।।६।।

---

**विषयः** स्तोत्रम् ग्रन्थकारः शिवरामत्रिपाठी पा.लि.सं.स.पु. ४०१५४ पत्र-१ पूर्ण लि.पि.द.ना.

अधर्मभीरुः श्रितधर्मभीतिः कुर्वन्यथाशक्तिमति स्वधर्मम् ।
तत्त्वावबोधेन विनाऽपि वाञ्छन्मुक्तिं हि सम्भेदमहं स्मरामि ॥७॥

सम्भेद एवं मिलिता सरस्वती
रक्ता मदीया मम शुद्धिहेतवे ।
जाता त्रिवेणी ग्रथनादितः पृथक्
स्तोतुं कथं याति परं हि मानुषम् ॥८॥

गिरेः सकाशादुदयं प्रयातां शितिच्छविच्छादितदिग्विभागाम् ।
यमप्रसक्तोऽपि यमातिभीरुर्नमामि गङ्गां यमुनां स्वमुक्त्यै ॥९॥

गौर्याः सपत्नीकविवर्णितां हि
लक्ष्म्याः सपत्नीमपि सुप्रसिद्धाम् ।
समुद्रयोगेन मिथः सपत्नीं
नमामि गङ्गां यमुनां स्वमुक्त्यै ॥१०॥

निपीय नीरं तव देवि ! तीरे स्थितः कुटीरे सुलभान्नभोक्ता ।
त्यक्तस्पृहः केवलमोक्षकांक्षी ध्वांक्षीव लक्ष्मीर्नृपतेर्हि तस्य ॥११॥

स्मृतिशतपरिगीताँस्त्वद्गुणान्देवि ! शृण्वन्
विगतशमनभीतिः स्वैरितामभ्युपेतः ।
यदि निरयमवेक्षे क्षीरमासेव्य मातः !
तव सुरधुनि ! तथ्यं ब्रूहि कस्यापराधः ! ॥१२॥



---

इति श्री शिवराम त्रिपाठी कृतं गङ्गास्तोत्रं सम्पूर्णम् ॥ राम ॥ राम ॥ संवत् १८७६

# गङ्गास्तोत्रम्

विचलकलविहङ्गे विष्णुपादाम्बुसङ्गे
तटतरुरतभृङ्गे तीरचञ्चत्कुरङ्गे ।
विमलतरतरङ्गे विश्वनाथाञ्चिताङ्गे
सकलकलुषभङ्गे पाहि मां देवि गङ्गे ॥१॥

जनेर्दूरे धीरे जननि तव तीरे स्थिरतरं
नरं धन्यं मन्ये हिमशिखरिकन्ये सुनिपुणम् ।
असौ वारं वारं जननमृतिभारं परिजहत्
स्वसंसारं सारं भवजलधिपारं हि भजति ॥२॥

त्वदुत्सङ्गे गङ्गे विहरणविहङ्गे मयि मिलत्-
कृपापाङ्गे सङ्गे तव वरतङ्गेण सति मे ।
कुतः पापं तापं जनयतु समीपं परिजहत्
परं द्वीपं दीपं तम इव दुरापं व्रजति हि ॥३॥

गङ्गे भृङ्गाङ्गनालीविरचितकलसङ्गीतभङ्गीविलग्न-
स्वान्तानन्दानुरूपप्रविततपुलकभ्रान्तिदाल्पाल्पभङ्गे ।
अङ्गीकुर्वद्य मां त्वत्सकरुणरुचिरापाङ्गलावण्यगङ्गा-
तुङ्गोर्मिस्नापिताङ्गस्वकपरिजनसङ्घातमध्येऽन्तरङ्गम् ॥४॥

अम्ब त्वामनुसन्दधेऽहमनिशं चित्तेन वाचापि ते
स्वर्भूलोकरसातलेषु विततां कीर्तिं स्तुवे पावनि ।
गङ्गे तुङ्गतरङ्गसङ्गिहिमवत्पादे पदाब्जं च ते
साष्टाङ्गं प्रणमामि तारय परं मां देवि दुःखार्णवात् ॥५॥

गङ्गे मङ्गलदायिभव्यचरिते रिङ्गत्तरङ्गोज्ज्वले
साङ्गो मेऽस्तु मनोरथस्त्वयि सदा स्नानेन पानेन च ।
एतावत्तु वृतं मया तव पुनस्तीरे सदा सात्त्विकै-
र्वेदान्तार्थविचारतत्परतरो नेष्ये चिरं वासरान् ॥६॥

गङ्गे तावकतीर एव सततं वस्तुं मनो मेऽस्ति चेद्
अस्त्वेवं ननु दिव्यमङ्गलगुणे किं तावता साधितम् ।
मातुः स्तन्यमपेक्ष्य भूरिकरुणालापैः परं बालको
रोदिष्यत्यसकृद् ददाति यदि सा सार्थस्तदा तच्छ्रमः ॥७॥

अम्बाद्याभिमुखीकृतासि सुचिरं जन्मान्तरेष्वर्जितैः
पुण्यैरन्यसुदुर्लभैस्तव मया प्राप्तं कटाक्षेक्षणम् ।
यत्प्राप्यैव शिवः शिवोऽभवदसौ विष्णुश्च विष्णुत्ववान्
ब्रह्मा ब्रह्मपदं जगाम महिमा गङ्गे तवात्यद्भुतः ॥८॥

इति जह्नुसुतां जगद्विभूषामभिनन्द्याथ समस्तदेवतास्ताः ।
जनुषः फलमद्य जातमित्यालपनं चक्रुरतीव हृष्टभावाः ॥९॥

तदनन्तरमत्य तत्प्रतीरं तुलसीं संददृशुस्त्रिलोकवन्द्याम् ।
स्तुतिभिः सह तत्प्रदक्षिणामुचितं प्रभुक्रमणं वितेनिरे ते ॥१०॥

पठन् गङ्गाष्टकमिदं लक्ष्मणाध्वरिनिर्मितम् ।
आयुरारोग्यपुत्रार्थं विद्यासिद्धिमवाप्नुयात् ॥११॥



१. स्तोत्रकार– श्रीलक्ष्मणसोमयाजि, सं.भं.पु.पा.लि.सं. ४१९२१

# गङ्गामङ्गलम्

हरिचरणचारिणी शिशिरगिरिदारिणी कलुषभरवारणतरङ्गा
नियतकलनादिनी विमलजलशालिनी तारिणी जयति भुवि गङ्गा ।
नित्यमिह तापसा धर्मचितमानसाः स्नानविधिलब्धनवदेहाः
कृतबहुलदुष्कृता अपि कलुषवर्जिता दधति मुदमाप्तसुरगेहाः ।।१।।

पूततमसैकते धवलसिकतावृते योगिनो जपनियममग्नाः,
स्वनयननिमीलना गतविषयदर्शना ध्येयसुरसंस्मरणलग्नाः ।
बन्धविनिवृत्तये हसितजलसञ्चये प्रतिदिवसमत्र समवेताः,
क्लेशशतमञ्जसा पुण्यचितचेतसा वृण्वते सम्मदमुपेताः ।।२।।

वणिगुचितकर्मणा तरणिशतशोभनासुमपकृतिमत्र भुवि धत्ते
मकरवरवाहना जनपदहितैषणाव्याकुला सुकृतमपि दत्ते ।
ऐहिकशुभाशमा परमपदवाञ्छया यामिमां श्रयति जनमाला
जयति भयहारिका जह्नुमुनिदारिका सा चिरं विजितकलिकाला ।।३।।

त्रिभुवनमिदं यया धन्यमनुवृत्तया लोकयुगकुशलशतसृष्टया
रोगगणनाशिनी पुष्टिपरिवेशिनी दशहरा शास्त्रविधिदृष्टया ।
तीरतरुमञ्जुला जलधिमभि चञ्चला सेयमहिमङ्गलतरङ्गा
गिरिशशिरसार्चिता सुरमनुजपूजिता पावनी जयति भुवि गङ्गा ।।४।।

ब्रह्माण्डोदरभेदनाद् भगवतः पादाङ्गुलीनां नखैः
जातो यो विवरस्ततोर्चनजलस्रोतोऽवहद् वेगतः ।
तस्माच्छम्भुशिरस्ततो हिमगिरिं तस्मादिदं भूतलम्
गङ्गागत्य पुनाति सर्वभुवनं श्रीभक्तिभागीरथी ।।५।।



१. स.भ.पु.पा.लि.सं. १८०६८, पत्र १ पूर्ण रचनाकालः संवत् १६०८ लिपि-वंग

# गङ्गाष्टकम्– ढुण्ढिराजभट्ट कृत

।। श्रीगणेशाय नमः ।।

चलद्विलोलवीचिविस्खलद्विवृत्तमीनमु-
ल्लसत्सहस्रपत्रविस्फुरत्परागपाटलम् ।
हिमाचलस्खलज्जलप्रवाहपाविताखिल-
प्रपञ्चमिन्दुचूडमौलिमन्दिरं महोऽवतात् ।।१।।

रसालशालतालसत्तमालजालमालस-
द्विशालभालभस्मभृत्प्रवाहभास्वरं महः[१] ।
सरोजगन्धसम्भ्रमन्मिलिन्दपुञ्जमञ्जुलै-
र्गुञ्जमानजह्नुनन्दिनीतटं भजामहे ।।२।।

चलत्तरङ्गमालमुच्छलज्झषोर्णजालमुज्वल-
त्प्रभाविशालमालमञ्ज्वुवीरुधां गृहम्[२] ।
परिज्वलद्दवानलप्रभावलोडिताखिल-
प्रपञ्चसिञ्चनामृतं पुनातु जह्नुजापयः ।।३।।

करालतिष्यकालकालसर्पसर्पदुल्लसत्
प्रभाविषानलावसेकसत्सुधारसैः (समैः)[३] ।
कुरु त्वमीश्वरप्रियाङ्गने मदङ्गसङ्गता-
खिलाघसङ्गभङ्गमुल्लसत्तरङ्गरिङ्गितैः ।।४।।

निमज्जदागलालकालिजालशालिसम्यगु-
ल्लसत्सुरौघसुन्दरीमुखारविन्दसुन्दरम् ।
मिलत्पुरार्भकस्फुरत्कराभिघातविद्रव-
त्रिराकुलोरुमीनमम्बु भाति शंभुभूषणम् ।।५।।

उदञ्चदुद्धताखिलच्छटामिलद्विभावसु-
प्रभाविडम्बितातिचञ्चदभ्रतारकोत्करम्[४] ।
विलोलवीचिविस्खलत्समीरनीतसीकरं
पुरारिपत्तनस्थितं पुनातु पावनं पयः ।।६।।

सुराधिराजराजधर्मराजमुख्यनिर्जरा-
तिराजिपुण्यराशिरांशुसिद्धिदा कलौ (पुनः)
परामृतप्रदायिनी मुरारिपादचारिणी
पुरारिमौलिमालिनी सुरापगा विराजते ।।७।।

महीधरेन्द्रपन्नगेन्द्रकुन्दचन्दनद्रुम-
स्फुरत्करीन्द्रमण्डलामृतद्रवोपनायनम् ।
मिलन्निलिम्पसुन्दरीकपोलपत्रवल्लरी-
गलत्परागपिञ्जरीकृतं पयः पुनातु माम् ।।८।।

अनन्तभट्टसूरिसूनुढुण्डिराजसत्कवि-
प्रकल्पितं विचित्रपद्यचातुरीविभूषितम् ।
सुरापगाष्टकं नरः पठन्निदं स याति तत्
परं पदं प्रभूतभूमभागवैभवः (सदा) ।।९।।

**इति श्रीमन्महीपण्डितधुरश्चतुस्समुद्रराजमान्यद्युलोपनामकानन्तात्मजढुण्डिराजभट्ट-विरचितं श्रीगङ्गाष्टकम् सम्पूर्णम् । संवत् १८६१ ।**

स.भ.पु.पा.लि.सं.१८२२३, पत्र १-३ पूर्ण रचनाकाल: संवत .१८६१, लिपि दे.ना.
१-४ मूल ग्रन्थे नास्ति पादपूरणार्थमस्माभि संयोजितम् ।

●

## गङ्गाष्टकम्- रवीन्द्रकुमार सिद्धान्तशास्त्रि कृतम्

गिरिराजसुतां वितुलां विततां त्रिदशैर्महितां वियतः पतिताम् ।
कलुषै रहितां नरदेवहितां प्रणमामि सितां वहुसत्त्वयुताम् ।।१।।

अतिपूतगतामृषिराजनतां भुवनप्रथितामभिजातचिताम् ।
मुनिमानिनुतां मनुजैरमितां प्रणमामि सितां मुनिवक्रमिताम् ।।२।।

शिवशीर्षगतां कलनादयुतां भुजगेन नुतामजविष्णुहिताम् ।
अविगीतमतां कृतसिन्धुरतां प्रणमाम्यमृतां हरिपादमृताम् ।।३।।

जननीविनतां सुरहस्तिगतां दनुजैरजितां तपसा विजिताम् ।
जलदानरतां दयया विदितां प्रणमाम्यमृतां बहुभाग्ययुताम् ।।४।।

श्रुतिसारमितां स्मृतिषु प्रथितां कलिदोषकृतां शरणं प्रचिताम् ।
घृतदेवहुतां गुणिभिः प्रणतां प्रणमाम्यमृतां बहुभाग्ययुताम् ।।५।।

जनताकुलितां बहुधा ललितां कृतरम्यरुतां शमनादिनुताम् ।
नरलोकगतां परमार्थयुतां प्रणमाम्यमृतामपराधिहिताम् ।।६।।

बहुवेणियुतां जलजानहतां यतिभिर्मिलितामधिकाशि शिताम् ।
स्फटिकोपमितां स्तुतिगीतिमतां प्रणमाम्यजितामधिराजनताम् ।।७।।

सकलासुहितां सततावहितां कुणपैः पिहितां चिकुरावचिताम् ।
विहगध्वनितां विधिपात्रमतां प्रणमाम्यजितां श्रुतिसम्प्रथिताम् ।।८।।

१. स.भ.पु.पा.लि.सं. २२१०३, पत्र १-२ लिपि-वंग रचनाकाल शक १८७१

## गङ्गाष्टकम् – 'कालिदासकृतम्' (क)

नमस्तेऽस्तु गङ्गे त्वदङ्गप्रसङ्गाद्-
भुजङ्गास्तुरङ्गाः कुरङ्गाः प्लवङ्गाः ।
अनङ्गारिरङ्गाः ससङ्गाः शिवाङ्गा-
भुजङ्गाधिपाङ्गीकृताङ्गा भवन्ति ॥१॥

नमो जह्नुकन्ये न मन्ये त्वदन्यै-
निसर्गेन्दुचिह्नादिभिर्लोकभर्त्तुः ।
अतोऽहं नतोऽहं सतो गौरतोये
वसिष्ठादिभिर्गीयमानाभिधेये ॥२॥

त्वदामज्ज्नात् सज्जनो दुर्जनो वा
विमानैः समानः समानैर्हि मान्यैः ।
समायाति तस्मिन पुरारातिलोके
पुरद्वारसंरुद्धदिक्पाललोके ॥३॥

स्वरावासदम्भोलिदम्भोऽपि रम्भा-
परीरम्भसम्भावनाधीरचेताः ।
समाकाङ्क्षते त्वत्तटे वृक्षवाटी-
कुटीरे वसन्नेतुमायुर्दिनानि ॥४॥

त्रिलोकस्य भर्त्तुर्जटाजूटबन्धात्
स्वसीमान्तभागे मनाक् प्रस्खलन्तः ।
भवान्या रुषा प्रौढ़सापत्नभावात्
करेणाहतास्त्वत्तरङ्गा जयन्ति ॥५॥

जलोन्मज्जदैरावतोद्दामकुम्भ-
स्फुरत्प्रस्खलत्-सान्द्रसिन्दूररागे ।
क्वचित् पद्मिनीरेणुभङ्ग-प्रसङ्गे
मनः खेलतां जह्नुकन्यातरङ्गे ॥६॥

भवत्तीरवानीरवातोत्थधूली-
लवस्पर्शतस्तत्क्षणं क्षीणपापः ।
जनोऽयं जगत्पावने त्वत्प्रसादात्
पदे पौरहूतेऽपि धत्तेऽवहेलाम् ॥७॥

त्रिसन्ध्यानमल्लेखकोटीरनाना-
विधानैकरत्नांशुविम्बप्रभाभिः ।
स्फुरत्पादपीठे हठेनाष्टमूर्ते-
जटाजूटवासे नताः स्मः पदन्ते ॥८॥

इदं यः पठेदष्टकं जह्नुपुत्र्या-
स्त्रिकालं कृतं कालिदासेन रम्यम् ।
स यायात् सुरेन्द्रादिभिर्गीयमानं
पदं कैशवं शैशवं नो लभेत ॥९॥

**इति श्रीकालिदासकृतं गङ्गाष्टक-स्तोत्रं सम्पूर्णम् ॥**



१. स.भ.पु.पा.लि.सं. १९८३२, पत्र १-३ लिपि बंग से पूर्ण

# गङ्गास्तवः- प्रयागदत्त कृतः

प्रयाताऽगात्तुङ्गाद्विधिभवनरङ्गालयतले
निवासाकाशाच्चेदतितपस आशुप्रपतिता।
अनङ्गारेरङ्गात्कनखलसुसङ्गात्प्रचलिता
प्रयागात्सा गङ्गा प्रकटिततरङ्गाऽर्णवगता॥१॥

औदार्यन्तेऽनिवार्यं कथय कथमहो कार्यधार्यप्रपन्न-
मासन्नं ते विलसतिजने भुक्तिमुक्तिर्वदामि।
स्वामित्वं त्वं दिशसि नितरां पामराणां नराणां
मान्यं नान्यं भुवनभवने यत्परं प्रार्थयामि॥२॥

गाङ्गे जले यः प्रविगाहते तेऽमृते च शेतेऽहिपतेः शरीरे।
तीरे गता ये दुरितावृताङ्गाः साङ्गाः परीवारयुता विशुद्धाः॥३॥

पापी तापी सशापी सुरसरिदवनो मध्यगो यः सुरापी
कापीयश्चाभितापी सदयहृदयतश्चेत्प्रतापी च जापी।
दाता माता जनकगुरुगोभक्तियुक्तः प्रयाति
शम्भुत्वं ते जललवयुतश्चोद्धृतिर्वै विचित्रा॥४॥

दानैर्ज्ञानैश्च गानैर्व्रतनियमगणैर्योगयागावदानै-
र्यानैर्वायोर्विधानैर्जपभजनदयातीर्थयात्रादिकानाम्।
सन्मानैर्भूसुराणां दिशति हरिहरावात्मलोकं हि गङ्गे!
पापीनां त्वं विनैभिर्हरिहरमकरोत्को वदाग्रस्तदन्यः॥५॥

गङ्गेऽति चिन्ता हृदये मदीये लोकैस्तिरस्कारवृतं शरीरम्।
क्लिन्नं गलत्कुष्ठयुतं विभिन्नं छिन्नं कथं विष्णुशिवं करोषि॥६॥

नाश्चर्यमेत्तव लोकमातर्माताऽऽत्मपुत्रं कुरुते पवित्रम्।
मूत्रैर्मलैधूलिभिरावृतं तं स्वाङ्के करोत्यम्बुनिजाञ्चलैश्च॥७॥

चित्रगुप्त इह यस्य पातके लेखनेन शिथिलीकृताङ्गुलिः।
तारयेद्यदि महत्त्वमम्ब! तत्ते द्विजे खलु प्रयागदत्तके॥८॥

**इति श्रीमद्रामकुमारात्मजप्रयागदत्तविरचितः[१] गङ्गास्तवः[२] समाप्तिमयासीत्।**



पाण्डुलिपि संख्या १८०९० पत्र १ पूर्ण
१. 'विरचितः' इति शु.पा. २. 'स्तवः' इति शु.पा.

# भगीरथकृत-गङ्गा-स्तोत्रम्

**भगीरथ-उवाच ।**

अहं भगीरथो राजा दिलीपतनयः शिवे ।
प्रणमामि पदद्वन्द्वं भवत्या अतिदुर्ल्लभम् ॥१॥

पूर्व्वजानां हि पुण्येन तपसा परमेण च ।
मच्चक्षुर्गोचरीभूता त्वं गङ्गा करुणामयी ॥२॥

सार्थकं सूर्य्यवंशे में जन्म प्राप्तं महेश्वरि ।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः ॥३॥

नमो नमो नमस्तेऽस्तु गङ्गे राजीवलोचने ।
देहोऽयं सार्थको मेऽस्तु सर्व्वाङ्गैः प्रणमाम्यहम् ॥४॥

**शुक-उवाच ।**

गङ्गा सहस्रनाम्नोऽस्य स्तवस्य पुण्यतेजसः ।
ऋषिव्यासस्तथानुष्टुप् छन्दो विप्र प्रकीर्त्तितम् ॥५॥

सा मूलप्रकृतिर्देवी गङ्गा वै देवतेरिता ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥६॥

वाजपेयशतस्यापि गयाश्राद्धशतस्य च ।
ब्रह्महत्यादि पापानां क्षये च परदुष्करे ॥७॥

निर्व्वाणमोक्षलाभे च विनियोगः प्रकीर्त्तितः ॥
ॐङ्कार रूपिणी देवी श्वेता सत्त्वस्वरूपिणी ॥८॥

शान्तिः शान्ता क्षमा शक्तिः परा परमदेवता ।
विष्णुनारायणी काम्या कमनीया महाकला ॥९॥

दुर्गा दुर्गतिसंहन्त्री गङ्गा गगनवासिनी ।
शैलेन्द्रवासिनी दुर्गवासिनी दुर्गमप्रिया ॥१०॥

निरञ्जना च निर्लेपा निष्कला निरहङ्क्रिया ।
प्रसन्ना शुक्लवदना परमार्था पुरातनी ।
निराकारा च शुद्धा च ब्रह्माणी ब्रह्मरूपिणी ॥११॥

दया दयावती दीर्घा दीर्घवक्त्रा दुरोदरा ।
शैलकन्या शैलराजवासिनी शैलनन्दिनी ॥१२॥

शिवा शैवी शाम्भवी च शङ्करी शाङ्करप्रिया।
मन्दाकिनी महानन्दा स्वर्धुनी स्वर्गवाहिनी ॥१३॥
मोक्षाख्या मोक्षदात्री च भुक्तिमुक्तिप्रदायिनी।
जलरूपा जलमयी जलेशी जलवासिनी ॥१४॥
दीर्घजिह्वा कोमलाक्षा विश्वाक्षा विश्वतोमुखी।
विश्वकर्णा विश्वदृष्टि र्विश्वेशी विश्ववन्दिता ॥१५॥
वैष्णवी विष्णुपादाब्जसम्भवा विष्णुवाहिनी।
विष्णु-स्वरूपिणी वन्द्या बाला वाणी वृहत्तरा ॥१६॥
पीयूषवर्णा पीयूषवासिनी मधुरद्रवा।
सरस्वती च यमुना गोदा गोदावरी वरी ॥१७॥
वरेण्या वरदा वीरा वरकन्या वरेश्वरा।
वल्लवी वल्लवश्रेष्ठा वाग्वीरा विश्वरूपिणी ॥१८॥
वाराही वलसंस्था च वृक्षस्था वृक्षसुन्दरी।
वारुणी वरुणज्येष्ठा वरा वरुणवल्लभा ॥१९॥
वरुणप्रणता देवी वरुणानन्दकारिणी।
वन्द्या वृन्दावनी वृन्दारकेड्या वृषवाहिनी ॥२०॥
दाक्षायणी दक्षकन्या श्यामा परमसुन्दरी।
शिवप्रिया शिवाराध्या शिवमस्तकवासिनी ॥२१॥
शिवमस्तकसंस्था च विष्णुपादप्रदा तथा।
विपत्तिनाशिनी दुर्गहारिणी दुर्गतीश्वरी ॥२२॥
गीता पुण्यचरित्रा च पुण्यनाम्नी शुचिश्रवा।
श्रीरामा रामरूपा च रामचन्द्रैकचन्द्रिका ॥२३॥
राघवी रघुवंशेशी सूर्य्यवंश-प्रतिष्ठता।
सूर्य्या सूर्य्यप्रिया गौरी सूर्य्यमण्डलभेदिनी ॥२४॥
भगेशी भाग्यदा भाव्या भाग्यप्राप्या भगेश्वरी।
भव्योच्चयोपलब्धा च कोटिजन्मतपःफला ॥२५॥
तपस्विनी तापसी च तपन्ती तापनाशिनी।
तन्त्रमयी तन्त्ररूपा तन्त्रनाभ्या मखेश्वरी ॥२६॥
विष्णुदेहद्रवाकारा शिवनागामृतोद्भवा।
आनन्दद्रवरूपा च पूर्णानन्दमयी शिवा ॥२७॥

कोटिसूर्य्यप्रभा पापध्वान्तसंहारकारिणी ।
पवित्रा परमा पुण्या तेजोधारा शशिप्रभा ॥२८॥

शशिकोटिप्रकाशा च त्रिजगद्दीप्तिकारिणी ।
सत्या सत्यस्वरूपा च सत्यज्ञा सत्यसम्भवा ॥२९॥

सत्याश्रया सती श्यामा नवीना नरकान्तका ।
सहस्रशीर्षा देवेशी सहस्राक्षी सहस्रपात् ॥३०॥

लक्षवक्त्रा लक्षपादा लक्षहस्ता विलक्षणा ।
सदा नूतनरूपा च दुर्ल्लभा सुलभा शुभा ॥३१॥

रक्तवर्णा च रक्ताक्षी त्रिनेत्रा शिवसुन्दरी ।
भद्रकाली महाकाली लक्ष्मीर्गगनवासिनी ॥३२॥

महाविद्या सिद्धविद्या मन्त्ररूपा सुमन्त्रिता ।
राजसिंहासनतटा राजराजेश्वरी शुभा ॥३३॥

राजकन्या राजपूज्या मन्दमारुत-चामरा ।
वेदवन्दिप्रतीता च वेदवन्दिप्रवन्दिता ॥३४॥

वेदवन्दिस्तुता दिव्या वेदवन्दिसुवर्णिता ।
सुराणां वर्णनीया च सुवर्णगाननन्दिता ॥३५॥

सुवर्णदानलभ्या च गानानन्दप्रियामला ।
माला मालावती माल्या मालतीकुसुमप्रिया ॥३६॥

दिगम्बरी दुष्टहन्त्री सदा दुर्गमवासिनी ।
अभया पद्महस्ता च पीयूषकरशोभिता ॥३७॥

खड्गहस्ता भीमरूपा शोणा मकरवाहिनी ।
शुद्ध स्रोता वेगवती महापाषाणभेदिनी ॥३८॥

पापालिरोधनकरी पापसंहारकारिणी ।
यातनाचयवैधव्य-नाशिनी पुण्यवर्द्धिनी ॥३९॥

गभीरालकनन्दा च मेरुशृङ्गविभेदिनी ।
स्वर्गलोककृतावासा स्वर्गसोपानरूपिणी ॥४०॥

स्वर्गङ्गा पृथिवीगङ्गा नरसेव्या नरेश्वरी ।
सुबुद्धिश्च कुबुद्धिश्च श्रीलक्ष्मीः कमलालया ॥४१॥

पार्व्वती मेरुदौहित्री मेनकागर्भसम्भवा ।
अयोनिसम्भवा सूक्ष्मा परमात्मा परत्वदा ॥४२॥
विष्णुजा विष्णुजननी विष्णुपादनिवासिनी ।
देवी विष्णुपदी पद्मा जाह्नवी पद्मवासिनी ॥४३॥
पद्मविलासिनी पद्मधारिणी पद्मलोचना ।
पद्मपादा पद्ममुखी पद्मनाभा च पद्मिनी ॥४४॥
पद्मगर्भा पद्मशया महापद्मगुणाधिका ।
पद्माक्षा पद्मललिता पद्मवर्णा सुपद्मिनी ॥४५॥
सहस्रदलपद्मस्था पद्माकरनिवासिनी ।
महापद्मपुरस्था च पुरेशी परमेश्वरी ॥४६॥
हंसी हंसविभूषा च हंसराजविभूषणा ।
हंसराजसुवर्णा च हंसारूढा च हंसिनी ॥४७॥
आत्मारामस्वरूपा च आत्ममन्त्रस्वरूपिणी ।
आनन्दजलसम्पूर्णा श्वेतवारिप्रपूरिता ॥४८॥
सदा मुक्तिप्रदात्री च योग्यायोग्यविचारिणी ।
तेजोरूपजला पूर्णा तेजसां दीप्तिरूपिणी ॥४९॥
प्रदीपकलिकाकारा प्राणायामस्वरूपिणी ।
प्राणदा प्राणनीया च महौषधिस्वरूपिणी ॥५०॥
महौषधजला चैव पापरोगचिकित्सिका ।
कोटिजन्मतपोलक्षः प्राणत्यागोत्तरामृता ॥५१॥
निःसन्देहा निर्म्महिमा निर्म्मला मलनाशिनी ।
शवारूढ़ा शवस्थानवासिनी शववत्तती ॥५२॥
श्मशानवासिनी केशकीकशाचिततारिणी ।
भैरवी भैरवश्रेष्ठा सेविता भैरवप्रिया ॥५३॥
भैरवप्राणरूपा च वीरसाधनवासिनी ।
वीरप्रिया वीरपत्नी कुलीना कुलपण्डिता ॥५४॥
कुलवृक्षस्थिता कौली कुलकमलवासिनी ।
कुलद्रव्यप्रिया कुल्या कुलमालाजपप्रिया ॥५५॥

कौलदा कुलरक्षित्री कुलवारिस्वरूपिर्णा ।
रणश्री रणभू रम्या रणोत्साहप्रिया तथा ॥५६॥

नृमुण्डमालाभरणा नृमुण्डकरधारिणी ।
विवस्त्रा च सवस्त्रा च सूक्ष्मवस्त्रा च योगिनी ॥५७॥

रसिका च स्वरूपा च जिताहारा जितेन्द्रिया ।
यामिनी चार्द्धरात्रस्था कूर्च्चबीजस्वरूपिर्णा ॥५८॥

लज्जा शक्तिश्च वाग्लापा नारी नरकहारिणी ।
तारा तारस्वराढ्या च तारिणीताररूपिणी ॥५९॥

अनन्ता चादिरहिता मध्यशून्यस्वरूपिर्णा ।
नक्षत्रमालिनी क्षीणा नक्षत्रस्थलवासिनी ॥६०॥

तरुणादित्यसङ्काशा मातङ्गी मृत्युवर्ज्जिता ।
अमरामरसंसेव्या उपास्या शक्तिरूपिणी ॥६१॥

धूमाकाराग्निसम्भूता धूमा धूमावती रतिः ।
कामाख्या कामरूपा च काशी काशीपुरस्थिता ॥६२॥

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
वाराणसीवारयोषित् काशीनाथशिरःस्थिता ॥६३॥

द्वारा प्रोज्वलदग्निश्च केवला केवलत्वदा ।
सुरनीरपुरस्था च कावेरी कवरी शिवा ॥६४॥

रक्षाकाली रक्षिणी च कङ्काला शरणप्रिया ।
ज्वालामुखी क्षीरिणी च क्षीरग्रामनिवासिनी ॥६५॥

रक्षाकरी दीर्घकर्णा सुदन्ता दन्तवर्ज्जिता ।
दैत्यदानवसंहन्त्री दुष्टहन्त्री वलिप्रिया ॥६६॥

वलिमांसप्रिया श्यामा व्याघ्रचर्म्मपिधायिनी ।
जपाकुसुमसङ्काशा सात्विकी राजसी तथा ॥६७॥

तामसी तरुणी वृद्धा युवती बालिका तथा ।
यक्षराजसुता जम्बुमालिनी जम्बुवासिनी ॥६८॥

जम्बूनदविभूषा च ज्वलज्जाम्बुनदप्रभा ।
रुद्राणी रुद्रदेहस्था रूद्रा रुद्राक्षधारिर्णा ॥६९॥

अणुश्च परमाणुश्च ह्रस्वा दीर्घा चकोरणी ।
रुद्रगीता विष्णुगीता महाकाव्यस्वरूपिणी ॥७०॥

आदिकाव्यस्वरूपा च महाभारतरूपिणी।
अष्टादशपुराणस्था धर्म्ममाता च धर्म्मिणी ॥७१॥

माता मान्या स्वसा चैव श्वश्रूश्चैव पितामही।
गुरुश्च गुरुपत्नी च कालसर्पभयप्रदा ॥७२॥

पितामहसुता सीता शिवसीमन्तिनी शिवा।
रुक्मिणी रुक्मवर्णा च भैमी भीमास्वरूपिणी ॥७३॥

सत्यभामा महालक्ष्मी भद्रा जाम्बवती मही।
नन्दा भद्रमुखी रिक्ता जया विजयदा जया ॥७४॥

जयित्री पूर्णिमा पूर्णा पूर्णचन्द्रनिभानना।
गुरुपूर्णा सौम्यभद्रा विष्टिः संवेशकारिणी ॥७५॥

शनिरिक्ता कुजजया सिद्धिदा सिद्धिरुपिणी।
अमृतामृतरूपा च श्रीमती च जलामृता ॥७६॥

निरातङ्का निरालम्बा निष्प्रपञ्चा विशेषिणी।
निषेधसेधरूपा च वरिष्ठा योषितां वरा ॥७७॥

यशस्विनी कीर्त्तिमती महाशैलाग्रवासिनी।
धरा धरित्री धरणा सिन्धुबन्धुः सवान्धवा ॥७८॥

सम्पत्तिः सम्पदीशा च विपत्तिपरिमोचनी।
जन्मप्रवाहहरिणी जन्मशून्या निबन्धिनी ॥७९॥

नागालया नागलीला जटामण्डलधारिणी।
सुतरङ्गजटाजूटा जटाधरशिरःस्थिता ॥८०॥

पट्टाम्बरधरा वीरा कविकाव्यरसप्रिया।
पुण्यक्षेत्रा पापहरा हरिणा हारिणी हरा ॥८१॥

हरिद्रा नगरस्था च वैद्यनाथप्रिया सती।
वक्रेश्वरी वक्रधारा वक्रेश्वरपुरस्थिता ॥८२॥

श्वेतगङ्गा शीतला च उष्णोदकमयी रुचिः।
चोलराजप्रियकरी चन्द्रमण्डलवर्त्तिनी ॥८३॥

आदित्यमण्डलगता सदा नित्या च काश्यपी।
दहनाक्षी भयहरा विषज्वालानिवारिणी ॥८४॥

हरा दशहरा स्नेहदायिनी कलुषाशनिः ।
कपालमालिनी काली काल्या कालस्वरूपिणी ।।८५।।

इन्द्राणी वारुणी वाणी वलाका वलशङ्करी ।
गौर्गीर्ह्रीधर्मरूपा च धीः श्रीर्धन्या धनञ्जया ।।८६।।

वित् संवित् कुः कुवेरी भूर्भूतिर्भूमिर्धराधरा ।
ईश्वरी ह्रीमती ह्रीला क्रीड़ा सारा जयप्रदा ।।८७।।

जवन्ती जीवनी जीवा जयाकारा जयेश्वरी ।
सर्वोपद्रवसंशून्या सर्वपापविवर्जिता ।।८८।।

सावित्री चैव गायत्री गणेशी गणवर्ज्जिता ।
दुष्प्रेक्ष्या दुष्प्रवेशा च दुर्दशा च सुयोगिनी ।।८९।

दुःखहन्त्री दुःखहरा दुर्द्दान्ता यमदेवता ।
गृहदेवी भूमिदेवी वनेशी वनदेवता ।।९०।।

गुहालया घोररूपा महाघोरनितम्बिनी ।
श्रीचञ्चलापाङ्गमुखी चारुनेत्रा लयात्मिका ।।९१।।

कान्तिः काम्या निर्गुणा च रजःसत्वतमोमयी ।
कालरात्रिर्महारात्रिर्जीवरूपा सनातनी ।।९२।।

दुखदुःखादिभोक्त्री च दुखदुःखादिवर्ज्जिता ।
महावृजिनसंहारा वृजिनध्वान्तमोचनी ।।९३।।

हननी खलहन्त्री च वारुणी पालकारिणी ।
निद्रायोग्या महानिद्रा योगनिद्रा-युगेश्वरी ।।९४।।

उद्धारयित्री स्वर्गङ्गा उद्धारणपुरस्थिता ।
उद्धृता उद्धृताहारा लोकोद्धारणकारिणी ।।९५।।

शङ्खेश्वरी शङ्खहस्ता शङ्खराजविहारिणी ।
पश्चिमास्या महास्रोता पूर्वदक्षिणवाहिनी ।।९६।।

सार्द्धयोजनविस्तीर्णा पावन्युत्तरवाहिनी ।
पतितोद्धारिणी दोषक्षमिणी दोषवर्जिता ।।९७।।

शरण्या शरणश्रेष्ठा श्रीयुता श्राद्धदेवता ।
स्वाहा स्वधा विरूपाक्षी स्वरूपाक्षी शुभानना ।।९८।।

कौमुदा कुमुदाकारा कुमुदाम्बरभूषणा।
सौम्या भवानी भूतिस्था भीमरूपा वरानना ॥९९॥

वराहकाम्या वर्हिष्ठा वृहच्छ्रोणी वलाहका।
केशिनी केशपाशाढ्या नभोमण्डलवासिनी ॥१००॥

मल्लिका मल्लिकापुष्पवर्णा लाङ्गलधारिणी।
तुलसीदलगन्धाढ्या तुलसीदामभूषणा ॥१०१॥

तुलसीतरुसंस्था च तुलसीरसलेहिनी।
तुलसीरस-सुस्वादुसलिला विल्ववासिनी ॥१०२॥

विल्ववृक्षनिवासा च विल्वपत्ररसद्रवा।
मालूरपत्रमालाढ्या वैल्वी शैवार्द्धदेहिनी ॥१०३॥

अशोका शोकरहिता शोकदावाग्निरुज्वला।
अशोकवृक्षनिलया रम्भा शिवकरस्थिता ॥१०४॥

दाडिमी दाडिमीवर्णा दाडिमस्तनशोभिता।
रक्ताक्षी क्षीरवृक्षस्था रक्तिनी रक्तदन्तिका ॥१०५॥

रागिणी रागभार्य्या च सदा रागविवर्जिता।
विरागा रागसंमोदा सर्वरागस्वरूपिणी ॥१०६॥

तालस्वरूपिणी तालरूपिणी तारकेश्वरी।
वाल्मीकिश्लोकिताभेद्या ह्यनन्तमहिमादिमा ॥१०७॥

माता उमासपत्नी च धरा हारावली शुचिः।
स्वर्गारोहपताका च इष्टभोगी रथी इला ॥१०८॥

स्वर्गतीरामृतजला चारुवीचिस्तरङ्गिणी।
ब्रह्मतीरा ब्रह्मजला गिरिदारुणकारिणी ॥१०९॥



१. स.भ.पु.पा.लि.सं. २१७९९, पत्र १-८ अपूर्ण संवत् १८६२ लिपि-दे.ना.

# गङ्गासपादशतकम्

॥ श्रीगुरवे नमः ॥

॥ श्रीगुरुगणपतिशारदाभ्यो नमः ॥

शार्दूल.

कन्दा ब्रह्मकमण्डलोः प्रकटिता गोविन्दपादाम्बुज-
द्वन्द्वानन्दितपल्लवा हरशिरोविस्तारिणी तारिणी ।
व्याधेश्शामनशासनादपि[1] पदं दूराद्दृशः प्रापिता,
गङ्गा नाम लता महीतलगता काप्यद्भुता दृश्यते ॥१॥

"

मुक्तिस्स्वर्ग्यफला कलानिधिकला कुन्दारविन्दोज्ज्वला,
कल्लोलामलपल्लवाकलिमला कल्पामलाद्रिस्थलात्[2] ।
पारावारपयःप्रवाहपटली मञ्चेषु[3] सञ्चारिणी,
जन्मव्याधिनिवारिणी विजयते पीता लता जाह्नवी ॥२॥

"

भूरारभ्य विभूषिता तव यतः पूरालिभिश्शामना
दूरादेव विचारयन्ति चकिता दूता गतासूनथ ।
पीतं गाङ्गमनेन किन्न हि पयश्चित्तेष्विति प्रोल्लस-
च्चित्ताः कालविलम्बकालसदनाप्राप्त्या परं व्याकुलाः ॥३॥

स्रग्धरा

सङ्कीर्णास्स्वर्गमार्गास्त्रिदशतनुधरैर्दुर्गमाधौतपापै-
स्स्वर्बाला नैव कालान्मलयजरचनाः केलिमाला विलासैः ।
प्रापुः प्राणेश्वराणां सुखमनुभवितुं न क्षयं सार्वहस्ता,
देवास्सेवातिरिक्ता यदवधि वसुधा पूरिता गाङ्गपूरैः ॥४॥

"

स्तेयं गुर्वङ्गनाभिस्सुरतमथ सुरासेवनं ब्रह्महत्या
पापानि व्यर्थजन्मान्यहह वितरणे दुष्फलानां[4] नराणाम् ।
स्वास्थ्यं नैवामराणाञ्जगदपि नयतां देवलोकं विमानै-
स्स्वर्वेश्या भोगखिन्नास्त्रिदशधुनि ! भवद्वारिपूरप्रतापैः ॥५॥

"

स्पन्दो मन्दोदरीणान्त्यजति नहि दृशं श्वस्तनानां स्तनानां,
कम्पाः[5] शम्पाचलत्वं व्यगमदनुपलं बन्धनं नीविकानाम् ।
नानाकान्तप्रसङ्गोत्सवरसपरमानन्दवार्तानिवृत्त्यै-
स्स्वर्गात्स्त्रोतस्वति त्वं यदवधि वहसि क्ष्मातलं भूषयन्ती ॥६॥

---

हस्तलेखे प्रमादजन्याः पाठा अस्माभिः संशोध्य मूलपाठे निवेशिताः, प्रमादपाठास्तु नत्तत्स्थाने पादटिप्पण्यां निदर्शिताः ।
स.भ.पु.पा.लि.सं. २१५४६ पत्र १-९ लिपिः शारदा पूर्णा ।

१. सा सपादपि, २. कल्यावलारिस्थलात्, ३. मञ्चेषु, ४. दुष्यत्रानां, ५. कम्याम्सम्या ।

स्रग्धरा
धत्ते काञ्चीं घृताची कलयति कुचयोश्चित्रकं चित्रलेखा,
लेखाभिश्चन्दनानां रचयति रचनान्यस्तदम्भाऽथ रम्भा।
गङ्गा सन्त्यस्तदेहैस्सह दिवि सुरतारम्भमभ्यर्थ्यमाना
नानालङ्कारशय्यास्सपदि शुशुभिरे सर्वदा वारसज्जाः[६] ॥७॥

शार्दूल.
इन्द्रो नेन्दति वंहते न वरुणश्शीतश्शशी नैधते
वायुर्वाति न वा तिरस्कृतमदश्श्रीदश्श्रियं शोचति।
गङ्गां न्यस्ततनुं विलोक्य सुदृशस्स्विद्यत्स्तनास्स्वस्तना-
द्वारि द्वारि विलम्बितास्स्मितसुधासान्द्राः क्षिपन्त्यक्षिणी ॥८॥

प्रस्वेदस्स्तनयोर्भ्रमिर्नयनयोस्स्तम्भस्तनौ विभ्रमो
वाचि व्याकुलता धनोदितमनोवृत्तिर्विलासोत्सुका।
पर्य्यङ्के त्रिदशेश्वरेण शयिता श्रुत्वाथ वैमानिकीं
घण्टामुत्क्वणितामियाय विवशा सेदृग्दशामुर्वशी ॥९॥

मालारम्भसमाकुला स्मितमुखी रम्भा रहस्युन्नदद्,
भेरीशङ्खसमर्पितश्रुतिरितिस्विद्यत्कपोलस्थली ।
धर्त्तुन्नैव शशाङ्कचित्तहरिणं सोपानमालावली,
पादन्यासविमूढधीर्णिपतितां[७] तामन्ववेदीदपि ॥१०॥

जालन्यस्तविलोचना भगवती गङ्गा मृतानां द्युतिं,
दृष्ट्वा तत्र निनिन्द चेतसि मुहुर्वाजिक्रतूनां शतम्।
अस्तावीदपि जाह्नवीं गुणगणैश्शान्ताभिमाना शची,
काऽन्या नैव चकार केलिषु सती शैथिल्यमन्दं मनः ॥११॥

कूर्पासस्थगितस्तना मतिमती मन्दस्मिताऽधोमुखी,
किञ्चिच्चालितलोचना करसरोजातस्फुरच्चामरा।
गङ्गान्यस्तवपुर्विलोकनपरा मानं मनोहारिणी,
स्वर्याने सुकृताधिका सुरपुरस्त्रीणां ममर्द द्रुतम् ॥१२॥

काचित्कुञ्चितकिञ्चिदानतवलिर्वक्षोजभारादिव,
व्यालम्ब्यार्गलमुन्नतस्मितमुखी लीनालुलोके पथम्।
सूक्ष्मस्वच्छतदञ्चलान्तरगतो वक्षोजकुम्भो रुचा,
पूर्णस्स्वर्विशतां बभूव शकुनं गङ्गामृतानामपि ॥१३॥

---

६. सज्ञा, ७. धीर्णि।

सर्पिर्वस्तुहुताशनस्य हरितां वेणीषु मुक्तागण-
श्रेणी किञ्च कुचाग्रयोरपि भुवो दिव्या स्रगेणीदृशः ।
साम्राज्यं सुकृतस्य मानदमनं सद्योगिनां योगतो,
मर्त्यानाममरत्वकारणमयं धाराप्रवाहस्तव ।।१४।।

आपत्खण्डनमीशमण्डनमुमासङ्कोचसम्बन्धनं,
मृत्यौ मङ्गलमुन्मिलत्सुखफलं चिन्त्यार्थचिन्तामणिम् ।
भूसर्वस्वमजस्रकीर्तितगुणं गन्धर्वगेयं गिरा-
मारामं तव वारि वारितविपद्द्वन्देऽरविन्दद्युति ।।१५।।

संसाराम्बुधिनौरपि त्वमसि यन्नावं विना दुस्तरा
पापारण्यधनञ्जयोऽपि पिबतामत्यन्तशैत्यप्रदा ।
तच्चित्रं द्युनदि ! त्वयीह नरकं सत्यां व्रजन्ति च्युता-
शङ्कः केवल एक एव न जहौ यस्त्वत्तटीं दिक्पटीम् ।।१६।।

प्रस्विद्यन्ति सुराङ्गनास्तनघटाश्शोचन्ति दूताङ्गना-
श्शून्या संयमिनी विषीदति मुहुर्झिल्लीरवैराकुलैः ।
कल्लोलम्पयसां तवाम्ब ! विलसत्कोलाहलं सर्पतां,
श्रुत्वा शुष्यति शामनं मुखममी हृष्यन्ति मृत्यूत्सुकाः ।।१७।।

मर्यादा जगतां सुधैव सरितां भूषैव भूमीभृतां-
तीर्थानामपि पावनं प्रकटितं ब्रह्मैव विद्यावताम् ।
भ्रान्तिध्वान्तरविस्सविस्तरगुणश्रेणीमरालीमिल-
त्पाथस्तुङ्गतरङ्गभङ्गिविभवैर्वर्वर्ति सर्वोपरि ।।१८।।

एकत्रान्धकशासनस्स्मरसुतः पद्मोद्भवश्चैकतो
ब्रह्मैकत्र सुधाऽपरत्र परितस्सन्त्युत्सुकास्सिद्धयः ।
गङ्गाऽऽज्ञाऽर्पितमानसास्स्वसमतास्वाधीशतासूत्सुका,
वारिन्यस्तकलेवरस्य विबुधा हस्तोल्लसच्चामराः ।।१९।।

ज्योत्स्ना ब्रह्मसुधाधरस्य धरणी सीमन्तमुक्ताभृति-
र्मुक्तेर्मर्त्यजनस्वयम्बरविधौ माङ्गल्यदीपावली ।
लीलासक्तसदाशिवस्य रभसादुष्णीषमेतद्भुवि
प्रायः प्रस्खलितं शिवासमुचितप्रेमप्रवाहावली ।।२०।।

पापोच्चाटमनुर्विमुक्तिगणिकालीलामृदङ्गस्वन-
स्स्वर्ग्यस्त्रीकुचकुम्भसन्धिविलसत्प्रस्वेदसम्भावनः ।
हुङ्कारस्सुकृतस्य शासनचरप्रोत्सारणप्रक्षमो
मातर्जाह्नवि ! ते गम्भीरपयसां धीरस्तरङ्गध्वनिः ।।२१।।

सङ्कीर्णास्स्वर्नगर्यस्सुरतनुमनुजैर्धूतपापा धरित्री
धुन्वन् हस्तौ निरस्ताखिलमदविभवो रोदिति प्रेतराजः ।
मन्दं मन्दं प्रभुत्वं शमयति शिथिलः प्रेरयन्नोदनाभि-
र्यागाय स्वर्ग्यसिद्धिन्त्वयि तनुपतनादेव निर्णीय वेदः ॥२२॥

बाह्यस्नेहानपेक्षा भजति न हि दशा प्रक्षयं क्षीणदोषा
निश्शेषान्प्रस्थितानां स्वरथ दलयति प्रौढदीर्घान्धकारान् ।
दीपाली काऽप्यपूर्वा स्फुरति सुकृतिनां पूर्वपुण्यप्रकाशा-
द्यस्यां भस्मीभवन्ति प्रचलिततनवो याम्यदूताः पतङ्गाः ॥२३॥

प्रत्यक् प्रत्यक्षशिक्षा श्रुतिषु विफलयन्स्वर्वयन् देवगर्वा-
न्निर्वाणं वारिपानप्रभवसुखशतैर्व्रीडयन् ब्रह्मभावम् ।
नीवीभूतद्युलोकं विदलदघचयं पावयन्मर्त्यलोकं,
निश्शोकं यत्तरङ्गः प्रवहति विदधद् धर्मराजं सशोकम् ॥२४॥

सुत्रामत्राणतीव्रश्रमशिथिलवपुर्वासुदेवस्त्रिलोकी-
रक्षापक्षे नियुक्तस्स्वपिति तदपि यस्त्वत्प्रसादस्तदेषः ।
धारामाराध्यनारायणशिवसमतां यान्ति यस्यास्त्वमेका
सर्वानर्थप्रसूतिं दलयति दुरितं साऽवतारैर्विनाऽपि ॥२५॥

मन्दाक्रान्ता

न्यस्ते गर्भे द्युनदि ! पयसस्तावकस्य प्रयागे
देहे देवौ सहकलयतौ भाविरूपप्रतीक्षाम् ।
अस्माकम्वा किमयमथ वै तस्य रूपं समेता-
तत्सामग्रीञ्जननि ! दधतस्त्वत्तते शम्भुविष्णु ॥२६॥

मन्त्रायन्त्राण्यपि च न कति त्रैदशानि त्रिदेवा-
स्सेवासाध्या जननि ! जनुषा यावता जन्मभाजाम् ।
रुद्धे कण्ठे नमितवदना मूकभावं प्रपन्ना-
स्त्वामीक्षन्ते द्युनदि ! जयसि त्वन्तदानीं यदेका ॥२७॥

वीभत्सन्ते कति न न कति द्रष्टुमप्युत्सहन्ते,
देहेऽजीवे जननि ! परितो बन्धवो मन्दभावाः ।
गर्भे न्यस्य त्रिदशसमतां धूतपापं नयन्ती,
मातर्माता त्वमसि जगतां मातृकृत्यं यदेतत् ॥२८॥

स्रग्धरा

भूषाभूर्यस्य पूषा प्रदुरिततमसां किन्वमूषां तनूनां,
मञ्जूषा शूलचक्राङ्कितवरवपुषां ज्ञानमानोर्ननूषाः ।
सौभाग्यं सुन्दरीणां त्रिदशपुरभुवां मङ्गलं मानवानां
देवानां त्रासराशिर्जयति यममहामानभङ्गः प्रवाहः ॥२९॥

आकाशात्सम्पतन्त्या जननि ! तव सहायाति वारिप्रवाहै-
र्नक्षत्रैरत्रिनेत्रप्रभवमदहरैः फेनपुञ्जच्छलेन ।
यत्सम्बन्धाद्धरित्री द्युतलमुडुगणोत्सृष्टमीषत्प्रमुष्ट-
प्रद्योतं द्योतयन्ती हसति दशदिशो भूरिशोभासमूहैः ॥३०॥

देशे देशे भ्रमन्तस्तमिह निजगुणैस्तीर्थभावं नयन्त-
स्स्वान्तं सन्तोषयन्तस्सकलतनुभृतां पातकं क्षालयन्तः ।
शृङ्गे शृङ्गे नटन्तस्तुहिनगिरिगुहावारिभिःप्लावयन्त-
स्तुङ्गा गङ्गातरङ्गा विदधति कुतुकं मेरुमुल्लङ्घयन्तः ॥३१॥

पर्यङ्को मुक्तिवध्वा रजतमणिमयः पौरुषाब्धेस्तरङ्गः
श्रीविष्णोःपापपुञ्जत्रिपुरपुरचयप्रोषरोषश्शिवस्य ।
सौभाग्यस्याद्वितीयो हिमगिरिदुहितर्मातृलाभो धरायां
मर्तानां धर्मराजप्रभवभयसरित्रायकाग्निप्रवाहः ॥३२॥

चक्रे चित्राणि यत्र क्रतुशतसुकृती पुण्यपाटीरपङ्कै-
स्सुत्रामाऽकारि तस्मिन्नपि नखलिखितं पापिभिःपीत गङ्गैः ।
वक्षोजौ मेनकाया इति परिहसतो जाह्नवीं वर्णयन्तौ
गाढाश्लेषोपनीतक्लमभरविगलत्कञ्चुकीकैतवेन ॥३३॥

अर्द्धोन्मुद्राणि निद्रापरवशसरसालक्तकाम्भोधिमध्य-
व्यालोला रक्तपङ्केरुहदलललिताघूर्णितानि क्षपासु ।
श्रूयन्ते नृत्यदर्पश्रमभरशिथिलप्रोल्लसत्तारकाणि
स्स्वर्वाहिन्यां मृतानाममरपुरि पुरस्स्वर्नटीलोचनानि ॥३४॥

आसीनो देवतानामधिपतिपदवीं विष्णुना बोधितोऽपि,
प्रौढास्त्रोऽपि स्वराज्यापहरणभयतो रम्भयाऽऽलिङ्गितोऽपि ।
स्वास्थ्यं लेभे न शक्रः क्षणमपि दिविषद्वाहिनीसम्मानाना-
मालोक्यैश्वर्यवृद्धिं भजति न हि यतः पारमस्या महत्त्वम् ॥३५॥

निन्दन्ति त्यक्तदम्भा रसिकपतिसमालिङ्गिता अप्यजस्रं
कन्या धन्या फणानायककुलजनितास्स्वीयसौभाग्यमुग्रम् ।
गङ्गा सन्न्यस्तदेहानमरसुकृतिनो प्राप्य पद्माऽपि सद्मा
चक्रे चक्रायुधस्याकृतिधरमनुजान्सा समालोक्य पद्मम् ॥३६॥

प्रभ्रश्यन्मोहतन्द्राः श्रमशमपटवः कान्तिचन्द्रा वितन्द्रा-
स्संसारोद्धाररुद्रा विगतकलिमलध्वस्तदारिद्र्यमुद्राः ।
गङ्गास्सङ्गादनङ्गाहितहरिवपुषो वेगबाहुल्यतुङ्गाः-
शृङ्गादद्रेः कुरङ्गा इव नवनटनारम्भरङ्गास्तरङ्गाः ॥३७॥

धाराः संसारकाराभवनभयहरा दत्तदेवावतारा-
स्ताराहारानुकारा धनदसखशिरोमालतीहारभाराः ।
सीतास्फीताविंगीताचरणमतिहरा दुर्विनीताघभीता
नीतास्सीतापनीताऽसमशरनगरं याभिरस्तासवस्ताः ॥३८॥

संसारोद्धारदम्भादधिकतरलसद्धीरवेगोपलम्भाः
पुण्यारम्भा जयम्भावितपदगमनारम्भपूर्णेन्दुकुम्भाः ।
पापक्रूराविदूरादधिगतगतयश्शैलभङ्गैकशूरा-
धर्माम्भोजातसूरा विदधति कुतुकं जाह्नवीवारिपूराः ॥३९॥

दूता याता निराशामनुजकरगताः पौरुहूता विलासाः
नासासङ्कोचमासादयति सुरपतौ चित्रलेखाविशेषात् ।
पुण्या मान्या शरण्या दलदघपटलं व्यक्तकैवल्यवन्या
धन्या गण्या धरण्यां यदवधि जयति श्रेयसे जह्नुकन्या ॥४०॥

शार्दूल. धाराधूतमले तरङ्गचपले वक्षःस्थले वायसा-
स्तुण्डन्ताण्डवयन्ति हन्त शतशो भ्रश्यद्भवे यच्छवे ।
तं तत्रैव विलिप्तचन्दनकुचद्वन्देन मन्दोदरी-
मुद्रामण्डितया तनोति सहजं रुद्रादिलोकालयम् ॥४१॥

आकृष्टास्तटसन्निविष्टवपुषः केशेषु ये वा श्वभि-
र्जाह्नव्या जलजालभूषणमिलज्जम्बालमालोज्ज्वलाः ।
ते वै देववधूकचाहृतिविधौ विद्वत्करा विज्वराः-
देवैश्वर्यहरा नरास्सुरपरे चुम्बन्ति रम्भाधरान् ॥४२॥

ये ये तत्तटधूलिभिर्धवलिता गोमायुगृध्रादिभि-
र्निश्शङ्कं कवलीकृताः कलिमलं ते सम्विधूयाचिरम् ।
हेमाद्रेयसुरूपकोमलवलद्रम्भाकपोलप्रिया-
दन्तालीकवलप्रियास्सुकृतिनस्सत्यं सुखं शेरते ॥४३॥

सीतापीयमहो महाघविपिनस्योद्दामदावानल-
ज्वालाकालपुरप्रयाणसरणिव्यारोधिनीबोधिनी ।
तन्वानाममृतप्रदा मतिमतामन्तक्षणे वीक्षिता,
स्वर्गाव्यक्तफलैककल्पलतिका काचित्समालोच्यते ॥४४॥

शुक्ला कृष्णतनुप्रदा जडमयी कैवल्यचैतन्यदा
प्रोच्चैः स्थानगतिप्रदा स्मृतिमतामेषा स्वयं निम्नगा ।
वक्राऽवक्रफलाऽबला विदधती पुस्त्वं परं देहिनां
चित्रं मित्रसुताऽनुरञ्जनरता मित्रात्मजद्वेषिणी ॥४५॥

उद्यत्पापतमस्तमीपतिशरज्योतिर्दिवङ्गच्छतां,
सोपानस्य परम्परा वसुमती भालस्थलीचन्द्रमाः ।
संसारातिगभीरकूपपतितानुद्धर्त्तुमेषा विधे-
रज्जुस्सूत्रमयी भगीरथयशोधाराऽथवा जाह्नवी ।।४६।।

तत्तीरे तृणपुञ्जपिञ्जरशुभे शुभ्रे मिलत्कर्दमै-
रालिप्ते विलुठन्ति हन्त ! सहसा प्राणावसानक्षणे ।
रम्भारम्भरतोत्पलम्भविशदस्वान्तोत्सवं निर्भयं-
जल्पन्ति प्रहसन्ति सन्ततममी तल्पे सुराकल्पिते ।।४७।।

ये दण्ड्या विविधप्रकारनरकैराकल्पमत्युद्धृतैः
काकैर्लोहकठोरतुण्डनिकरैस्ते नाकिनोऽनाकिनः ।
नृत्यन्तीभिरनिन्द्यनन्दनलताकुञ्जे कटाक्षाशुगैः
स्वर्वेश्याभिरथादरेण महता मोदङ्गतास्ताडिताः ।।४८।।

धाराभिर्नितरान्धराधवलिता नारायणीयं पदं
मारारातिशिरोविहारिणि ! पुनर्वारान्निधिः पूरितः ।
स्नानात्केऽपि कृताः कृतार्थमनसो दानात्प्रयानादमी,
नानायोनिभवा भवाभयसुखन्नीताश्च ते गङ्गया ।।४९।।

गङ्गापङ्कभरावलिप्तचरणा व्यारुह्य ये वक्षसि
स्वानन्दं दधते कुतूहलवलान्निश्शङ्कमङ्काङ्कितम् ।
ते वै निर्जितवैधनिर्मितिफले तत्रैव देवालये,
रम्भातुङ्गकुचाग्रचुम्बनभवङ्कान्तं सुखङ्कुर्वते ।।५०।।

शिखरिणी
अधर्मो धर्मोभून्मरणमभवन्मङ्गलमभू-
द्विलासी देवीनां सुरसुखगवीनामपि नरः ।
अभूद्रोगो योगस्तदवधि मृतानां तटभुवि,
प्रवाहैर्भूलोकं धवलयति गङ्गा यदवधि ।।५१।।

शार्दूल.
यद्देवेन्द्रपुरप्रवेशसमये तुष्टौ महापापिनां,
देवाश्शार्वशया नटन्ति विनयात्सेवापरास्सादरम् ।
आत्मानं परिभूषयन्ति मुदिता यच्चापि देवाङ्गना-
स्त्यक्तस्वर्गभुवोऽपि तद्युसरितस्स्वर्गेऽधुना गौरवम् ।।५२।।

स्रग्धरा
किम्बा योगैर्वियोगैर्बहुजनिवपुषां यत्र शङ्कानिवृत्ति-
र्वृत्तिर्वानिकतीर्थभ्रमणमतिरपि क्वापि तादृक् प्रयत्नात् ।
निष्प्रत्यूहा विलग्नं वितरति सुफलं भूरिभीमाघनाशा
क्लेशानां शामनानामपनयनविधावुद्धताया दृगेषा ।।५३।।

स्वच्छा दक्षा विपक्षावलिविलयविधौ धौतपापाः प्रतापा-
त्तापात्त्रैलोक्यजातात्सकलवसुमतीमण्डलोद्धारशुद्धाः ।
सिद्धाराध्यास्समध्यासितगिरिकुहरादुर्वरा धर्मवाहा-
स्तुङ्गोत्साहान् धरित्रीधरभुवि दधति प्रौढगङ्गाप्रवाहाः ॥५४॥

## ॥ इति पूर्वार्द्धम् ॥

ब्रह्माण्डाद्ब्रह्मवाद्ये द्रुहिणपुरि पुनः पात्रपाथोब्जनाभेः
पादार्घो मौलिभूषा त्रिपुरविजयिनां वेष्टनं शक्रपुर्याः ।
देवानां दैवतत्त्वं प्रकटतरमिदं साधनं मानवानां
स्वर्ग्यादेश्चित्ररूपं कलयति कुतुकं वारि गौरं गरीयः ॥५५॥

यस्यामासञ्जलान्तःप्रचलिततनवः कोटिशश्शोभमानाः
ब्रह्माण्डानां समूहा इव दिवि विततास्तारकास्तारकान्त्या ।
यत्रस्थानाम्प्रविश्य प्रविततवपुषि प्राप्तवाह्यप्रदेशा
वारम्वारङ्गवाक्षेष्वणव इव सदाऽऽयान्ति किञ्च प्रयान्ति ॥५६॥

गर्जद्भिस्सत्तरङ्गैःपरिमितिरहितैर्यो जलानामकारि-
प्रौढश्शब्दस्त्रिलोकोपरि धननिवहैस्तर्कयामोऽन्वकारि ।
अस्या वश्या विमुक्तिर्दिविषदसुलभा मर्त्यलोकानपीयं,
सानन्दं मन्दशीलान् कलयति न चिरं मोहमायाविमुक्तान् ॥५७॥

वारान्धाराभिरारात्तरुणहिमकरप्रोज्ज्वलाभिर्यदण्डा-
न्यावेश्यान्ते यदेषाऽऽशयममुमधुना तर्कयामस्तदस्याः ।
ब्रह्माण्डध्वंसकाले मम जललहरीसङ्गतोऽनङ्गदग्धा
गच्छन्तु ब्रह्म नानाजनिपरिजनितां योगसिद्धिं विनाऽपि ॥५८॥

मुक्तिस्त्रीस्नानलीलास्खलितसुकुसुमारब्धमालासहस्त्रै-
राकीर्णा वह्निवर्णस्वकिरणनिकरैस्स्वं प्रकाशं नयन्ती ।
तारालीभिर्दिवाकृत्किरणपरिचयात्सायमारक्तवर्ण-
म्पूर्णम्ब्रह्माण्डवाह्ये खमिव विजयते स्वर्ग्यलोकापगेयम् ॥५९॥

पीयूषाकारधारा दलितभवभया नृत्यदम्भःप्रचारा,
गर्जन्ती ब्रह्महंसी भवदधिवसति श्रद्धया या सुयत्नात् ।
सेव्येयं साधुसिद्धैरिति रविरनिशं भ्राम्यति व्योम्नि लोका-
नाज्ञप्तुं चन्द्रतारा अपि हतजननापत्तिविश्लेषभाराः ॥६०॥

तस्याः प्राप्त्यै समीरोऽप्यविरतमलभत्स्वास्थ्यमाकाशमार्गे,
भ्राम्यन् ब्रह्माण्डरन्ध्रान्यहह लघुदृशाविच्छति क्षिप्रकृत्यः।
कल्लौलैरन्तरिक्षं स्पृशति जलनिधिस्तर्कयामोऽण्डबाह्य-
स्वर्धुन्यम्भः कणानां कथमपि वपुसि स्पर्शपुण्याय धन्यः ॥६१॥

हंसो ब्रह्मैव हंसी प्रकृतिरथ जले तेनतुर्यत्रलीला,
यत्रत्यानां दलान्ते कति न जलरुहामष्टवर्गा वसन्ति।
रोलम्बानां समीरैरधिकजवचलत्पक्षवातैर्दिगन्तं,
नीयन्तेऽण्डान्यजस्रं तृणमिव तरसा वात्यपातङ्गतानाम् ॥६२॥

चन्द्रोऽपि स्वीयमङ्कं कुलगुरुदयितासङ्गपापप्रभूतं,
हातुं ब्रह्माण्डबाह्यस्थितसुरतटिनीपाथसि स्नानयोगात्।
नित्यं यात्यम्बरोर्ध्वं तदपि न लभते तामिति प्राप्तलज्जः
पाथोधौ प्रत्यहं यश्शिशुरिव सहसा मज्जति क्षीणदेहः ॥६३॥

प्रक्षाल्याम्भः प्रवाहैस्त्रिदशपुरधुनी संस्थिता बाह्यदेशे,
ब्रह्माण्डस्यापि नारायणपदहननद्वारमात्रेण चान्तः।
अस्याथासीद्विधातुः पुरि परिकलिता शक्तिरस्यैव पात्रे,
यद्वात्रेष्वण्डविम्बाकृति[1] न शिव ! भ्राम्यमाणा वसन्ति ॥६४॥

## ॥ ब्रह्माण्ड-बाह्यगङ्गा-वर्णनम् ॥

शक्तिः किम्वा विधातुस्त्रिभुवनजनिका मूलशक्तिःकिमेषा ?
सर्वस्वं वा सुराणामणिमगुणयुतं पात्रमध्ये प्रयत्नात्।
लोकाधीशोऽपि नानाविधभवरचनाकर्मकल्पो विधाता,
ऽतो सम्प्राप्य प्रहर्षादिव निधिमवसुस्सत्वरं यज्जुगोप ॥६५॥

वैफल्यं वा लिपीनां निजकरकमलैः कल्पितानां ललाटे,
लोकानां स्वर्गमर्त्यप्रभृतिबहुविधव्यक्तभोगैकभाजाम्।
शून्यत्वं संयमिन्यास्सुरपतिपदवीहानिमिन्द्रे जुगोप।
ब्रह्मा पात्रे स्वकीये त्रिदशपुरधुनीं शङ्कमानां विशङ्के ॥६६॥

धाराभिर्या सहस्रम्पयसि परिलसत्तारकेवान्तरिक्षेऽ
प्याण्डान्यास्ते दधाना तदधिकतनुभिःकिञ्च पादो गणौघैः।
स्वेच्छासञ्जातनानाविधतनुरमलाऽतीवकारुण्यमूर्ति-
धीता पात्रं विधातुस्तदिहकृतकलाहेतुरस्याः कृपैव ॥६७॥

१.सन्दिग्धः पाठः

तुण्डा ब्रह्माण्डबाह्यादिव गिरिशिखराद्ब्रह्मपात्रं समेता,
नागीवेयं नराणां विवरमिह महापापसंहारमूर्तिः ।
किम्वा कल्याणवृष्टिश्शमनभयभरोद्दामसन्तापभाजां,
शैतल्यप्रापणेनामृतमयलतिका लब्धलावण्यराशिः ॥६८॥

चाञ्चल्यं शक्रचित्तं मदनमदहरः प्रौढमानन्दमन्त-
स्संसारोद्धारखिन्नो हरिरयमगमद्ब्राह्ममुग्रं यशश्च ।
गर्वं भीतिञ्च पाशं त्रिपुरहरसखस्स्वास्थ्यमेकोऽण्डबाह्या-
दायाते वारिपूरे सुरपुरसरितः पात्रमस्या विधातुः ॥६९॥

म्लानं शामनमाननं प्रतिहतं किञ्चाघवृन्दं नरः
श्रीनारायणशम्भुलोकपदवीमेतान् परेतान् क्षिपन् ।
नोत्साहं वसुधामुधाजनिमगात्पापं प्रतापक्षया-
द्ब्राह्मे ब्रह्मकमण्डलौ सुरधुनीपूरे समागच्छति ॥७०॥

माङ्गल्यं मङ्गलानां सुरसुखफलदं मानवानां भयानां
भीतर्गीतं यशोभिर्जलमिव परितः प्रोचुरन्योन्यहृष्टाः ।
गाङ्गं गौरीशविष्णुद्रुहिणमुखसुरास्सञ्जगुःकिन्नराद्याः
ब्राह्मे पात्रेऽण्डबाह्यागतसुरतटिनीवारिपूरं निरीक्ष्य ॥७१॥

कल्लोलैर्वायुलोलैरमृतवितरणख्यातिमद्भिस्स्फुरद्भि-
र्व्याकीर्णाब्रह्मपात्रं जयति विधिमुखैस्तूयमानं सुरौघैः ।
तीर्थत्वप्राप्तिगर्वादधिकमपि यदालोक्य लोकत्रयेऽपि,
ख्यातं तत्याज गर्वं विदलितदुरितं पुष्करं पात्रमन्यत् ॥७२॥

दत्ताभिर्देवताभिस्तटभुवि तटिनी देवतानां विरेजे,
ज्योत्स्नाभव्याम्बुधारा विमलतरशिखाशोभिदीपावलीभिः ।
प्रालेयाद्रिर्निशायां सुरपुरतटिनीतीरजातौषधीभि-
र्जातां शोभां न मेने स्वमनसि विपुलां यां विलोक्योज्ज्वलाभिः ॥७३॥

मालाजालविशालसौरभजला स्वर्गाङ्गनासञ्चरद्-
दृग्व्यापारपरम्पराच्छलवशात्सम्पूरिता पङ्कजैः ।
सेयं कापि निरंजनद्रवपयःपूरा सुदूरादपि
स्पष्टं पापमपाकरोति भजतां भागीरथी भाग्यदा ॥७४॥

## ।। ब्रह्मकमण्डलुगङ्गावर्णनम् ।।

दीप्तिः पीयूषभानोस्स्मरहरवदनात्किन्त्वगानप्रभेदा
वेदा वक्त्राद्विधातुर्जगदपि सकलं कैटभारेरिवाङ्कात् ।
धारा धाराधरीयाऽविततमिव ततिः पर्वताद्रायवीया
गङ्गा गङ्गोत्तरीया गिरिवरविवरान्निस्सरन्ती विभाति ।।७५।।

ताम्रैश्शुभ्रैरशुभ्रैर्हरितरुचिधरैः पीतवर्णैर्विचित्रैः
पाषाणैदीर्घमानैर्नयनसुखकरैर्वद्धसोपानभित्तिः ।
मुक्ता वैदूर्ययुक्ता त्रिदशपतिपुरीसौधसोपानमाला-
स्वर्बालावर्गशाला व्रजति हि यमियं यद्विलासावलोकात् ।।७६।।

दर्पाद्वारां विदीर्णक्षितिधरविवरप्रोल्लसद्वारिधारा
दीर्घाकारा त्रिलोकीतलभवमखिलं पातकं तर्जयन्ती ।
शैतल्यात्किञ्च तासां कथयति करुणामूर्तिरेषा विशेषा-
न्नष्टासूनां पशूनामपि च निजतटे व्यक्तकैवल्यदानम् ।।७७।।

सङ्घट्टान्निर्मलत्वन्दधदधिभुवनं श्रेणिभिः पर्वताना-
मानन्दोल्लासलीलाविदलितदुरितं देवदिव्यव्रतानाम् ।
पार्श्वद्वन्द्वेऽम्बुधारासुललितलतिकालिङ्गनव्याजतःकिं-
यक्षद्वन्द्वन्नु तेषां पुनरपि तनुते तज्जलङ्कामरूपम् ।।७८।।

शैलक्षोणीरुहाणां त्रिदशपुरधुनीतीरसंशोभिताना-
मान्दोलत्पल्लवानां जयति रुचिरियं नीरधीरैस्समीरैः ।
यामालोक्यामरेन्द्रोदितशुभसुरतारम्भसम्भाविताऽसौ-
रम्भा दम्भन्न तेनेऽमरतरुविलसद्दीप्तसौवर्णतल्पे ।।७९।।

सन्तुष्टे दुष्टजीवानपि भवजलधेश्शीघ्रमुद्धर्त्तुमीशे-
सन्दिष्टा मोक्षलक्ष्मीर्जगदभिचलिता सञ्जहास प्रसन्ना ।
शैलात्ते क्षीरभासा दलदघपटलाः कान्तिकर्पूरकाशा-
गङ्गाव्याजाद्विलासान्दहति नयनयोः पश्यतामत्र हासाः ।।८०।।

वन्या विन्याससम्प्लावितगिरिशिखरं कुन्दकर्पूरकल्पं
मुक्तिस्त्रीभोगतल्पं जयति जलमिदं ध्वस्तजन्माब्जजालम् ।
आलोक्यानेकशैलानपि शिवशिखरी स्पष्टकैलासकान्ता-
न्स्वान्तान्तर्लब्धलज्जो भवति न समदो यत्प्रवासप्रतापात् ।।८१।।

धारासन्धौतशैलस्खलितशितिसितारक्तधातुद्रवेण
त्रैवर्ण्यं व्यादधाना पयसि परमुदं पश्यतां सन्ददाना ।
भारत्यालिङ्गनश्रीपरिचितयमुनावारिसौन्दर्यगर्वं,
खर्वन्धत्ते विधत्ते वदरवनगतिं मन्थरां यद्विलोक्य ।।८२।।

काश्मीराभङ्कदाचित्क्वचिदपि हरितालद्रवावृद्धवन्य-
न्धन्यम्पुण्यं शरण्यं त्रिदशपुरधुनीवारि निर्वारिताघम् ।
मन्येऽस्यान्त्यक्तजीवैरुपयमविधये धृष्टदारिद्र्यभङ्गं-
स्नानाम्भस्सन्तरङ्गम्वहति गिरिवरान्मुक्तिमुग्धाङ्गनायाः ।।८३।।

सङ्घट्टात्प्रस्तराणां मुरज इव रवानाददानाऽथ ताना-
नाजं व्यालम्ब्य गानाहितनिजमनसां सिद्धमुग्धाङ्गनानाम् ।
झङ्कारैर्निर्झराणामपि च निपततां पर्वतानां दरीषु,
प्रारब्धापूर्वनृत्यं कलयति कुतुकं जाह्नवी दत्तताना ।।८४।।

## ।। गङ्गोत्तरीगङ्गावर्णनम् ।।

श्वेतारक्तासिताभिस्त्रिगुणमयवपुस्स्वप्रकाशं नयन्ती-
लोकानुद्धर्त्तुकामा वदरवनगता शोभते सिन्धुवामा ।
धाराभिश्शम्भुविष्णुद्रुहिणतनुमषि स्वाश्रितेभ्योऽर्पयन्ती,
नृत्यन्ती दर्पयुक्ता तटभुवि विलसज्जन्मबिभ्यद्विरक्ता ।।८५।।

उत्तीर्य स्वर्गलोकादुदधिमथ धवं सेवितुं साधयन्ती
नानालङ्कारवेशान्परिचितयमुनावारिसन्नीलकेशा ।
नीरान्तर्व्यक्तविम्बै रविकरमणिभिस्सर्वशृङ्गारमूलं,
धत्ते सिन्दूरपूरं नयनसुखकरं भारतीवारदूतम् ।।८६।।

शैवोत्तंसाय हंसासनकरकमलालम्बिपानीययात्रा-
दत्तागत्याघवर्गान्दलयति दिनशः क्वापि कोशात्कृपाणी ।
कालिन्दीकैतवेन स्फुरितनिजमहोमण्डलीखण्डिताध्व-
प्रोद्भूतासृक्प्रणाली वलिततनुरियं भारती वाक्छलेन ।।८७।।

कालिन्दीकैतवेन क्वचिदपि विसरच्छिन्नपापान्धकारा
भारत्या भव्यवारामपि च परिचयाद्वारुणी वारुणाशा ।
संसारोत्तापभानौ व्रजति परिलयश्चन्द्रिका चारुदीप्ति-
स्सायं सन्ध्येव धत्ते मनसि मम सुखं भूरि भागीरथीयम् ।।८८।।

सद्यस्स्नानेन यत्र च्युतकुचसघनन्यस्तकस्तूरिकाभि-
श्श्यामाकाराऽपि धारा भवति न च ह्रिये पौरपद्मासनानाम् ।
कालिन्दीभ्रान्तदोषाद्भ्रमदलिपटलाच्छादनाद्वा जलानां-
यूनां तीरस्थितानाञ्चतुरतरहृदां पश्यतामप्यवश्यम् ।।८९।।

श्वेतारक्तसितत्रिशाखमुदयप्रभ्रष्टपापासुरं
धारालग्नसरस्वतीजलमिषव्याप्तासृगुद्यत्प्रभम् ।
ज्वालाजालकरालमुन्नतशिखामालाभिरुद्दीपयन्,
द्वीपान् खेलति शूलिनः किमधुना शूलं प्रयागादिदम् ।।९०।।

संसर्गात्कालियस्य प्रचुरतरविषा दग्धनीरावशेषा
मन्ये मालिन्यमेषा पयसि परिगता भानुकन्याऽपि पुण्या ।
प्रक्षाल्याम्भःप्रवाहैर्विमलवपुरथ स्वच्छपानीयधारा,
पारावारं प्रयाति त्रिदशपुरधुनीवारि विस्तारि पूरैः ।।९१।।

## ।। प्रयागगङ्गावर्णनम् ।।

आरोहादीशमौलेश्शिखरिदुहितरि स्थाणुवामस्थितायां
जातानौचित्यशान्त्यै मृदुतरलजलैर्विन्ध्यमुल्लङ्घ्य नम्रम् ।
देवीस्नानोपयोगव्रतनियतमतिर्भूषयन्ती प्रवाहै-
र्मन्दमन्दं तरङ्गैस्स्पृशति सुरसरित्पीठभूमिं भवान्याः ।।९२।।

आयान्तीं दैत्यदर्पप्रशमनसमरश्रान्तिसन्तानशान्त्यै,
देवीमालोक्य नम्रस्स्पृशति पदयुगं विन्ध्यशैलो निवीती ।
नम्रत्वे तद्विवृण्वत्सुवसनमुभयोःपार्श्वयोस्तीर्णमीहे
व्याजात्तद्देवधुन्या धवति पदभुवं मङ्गलं मङ्गलायाः ।।९३।।

## ।। विन्ध्येश्वरीगङ्गावर्णनम् ।।

आदिष्टैश्शम्भुनेव स्वपुरतलमसीवारिपूरैःपुरस्ता-
दानेतुं सङ्गतेयं त्रिदशपुरसरित्तामथागन्तुकामाम् ।
अग्रारुद्धेव तस्माद्भ्रमनरसपरारब्धकल्लोलीला-
शीलाच्छूलायुधेन स्फुरतु वरणयादिष्टया नश्शुभाय ।।९४।।

आमज्याकण्ठमस्यां शिवपुरवनितावक्त्रपङ्केरुहाणां-
मालाभिर्दीर्घकालालिपटलचिकुरैर्भूषिताभिः प्रवाहान् ।
तन्वन्त्यम्भोजपूर्णान्नयनयुगचलत्खञ्जनालिङ्गितानां,
यद्व्यालोक्य व्यवायुर्विषमशररसानन्दराज्यं युवानः ।।९५।।

उत्तुङ्गैश्शैलभृङ्गैरिव परिमिलितैर्नागराणां मनोगै-
स्थूलाभोगैर्भयेन त्रिदशपुरपतेस्स्वर्णशैलैरिवान्तः।
वक्षोजैर्गुर्जरीणामियमिह वलिता शोभिता स्नानकाले-
ऽबालेन्दूदारकान्तिःकलयति कुतुकं यत्र ताटङ्ककोटिः॥९६॥

काषायैःकिञ्च वासोभिरथ परिवृतैर्मुण्डितै रुद्धदण्डै-
र्ब्रह्मव्यासक्तचित्तैः क्वचिदपि वलिता दण्डिभिर्मण्डितश्रीः।
संसारापारवारांनिधिपरितरणायोद्यतैर्नौरिवेयं,
नौकादण्डात्तहस्तैर्जयति जगदिदं धीवरैस्तत्तटस्थैः॥९७॥

कार्णाटीकेशपाशैः क्वचिदपि मिलिता बालशैवालजालैः
पुष्पैराकीर्णनीरा चिकुरचयपुरःप्रस्खलद्भिस्स्फुरद्भिः।
सायन्नक्षत्रचित्रीकृतमपि गगनं प्रोल्लसन्तं हसन्ती
धत्ते चित्ते प्रमोदं दिविषदसुलभं भूरि भागीरथीयम्॥९८॥

कल्लोलालोलयादश्श्वसितरवरयैस्तत्र तीरस्थनारी-
दृग्व्यापारैरयासीन्मरकरतलजैः पूर्णपूराऽपि द्वारात्।
क्वापीयम्पीनतुङ्गस्तनतनुनमनव्यक्तवक्षोजबिम्बै-
स्स्मारस्नानाय नीतैरिव जलहृतये पूर्णसौवर्णकुम्भैः॥९९॥

गायन्तीभिर्गुणालीरियमथ वलिता नागरीभिर्नितान्तं,
कान्ता वृन्दारकानां परिहृतभवनानन्दवार्ता विलासाः।
दृष्ट्वा यां यान्ति भावान्भवभयविकला दैन्यमालिन्यमूर्च्छा-
स्तम्भोन्मादप्रमादाननुपलमलसत्कान्तयः क्लान्तचित्ताः॥१००॥

## ॥ अथ वाराणसीगङ्गावर्णनम् ॥

शार्दूल. कल्लोलच्छलतो मिलन्ति परितो मैलिन्दमालामिलन्-
मल्लीमाल्यलतेव चुम्बति चिरं चित्तं चिदानन्ददा।
देवी माननिवारणोद्यतहरव्यानम्रमौलिस्खलद्-
गङ्गावारितरङ्गतुङ्गलहरी नीतेव नीरादधी॥१०१॥

अब्धौ नीलकषोपले सुरसरिद्धारासहस्रच्छला-
ल्लेखाभिर्विधिरालिलेख कमलाकान्तस्य कान्तं यशः।
दोषाणां विरहित्वमस्य च पुनर्वीक्ष्य क्षपानायक-
च्छायानन्त्यमिषेण तेन कलिताश्शून्या हि यद्विन्दवः॥१०२॥

धाराव्याजेन शेषः कलयति जलधौ मण्डलारम्भलीलां
व्याजात्कल्लोलमाला मधुरिपुवपुषश्शेरते कौतुकेन ।
सम्भोगद्वन्द्वयुद्धार्जितजयचपलो यत्र लक्ष्म्या रमेशः,
प्रारेभे कामलीलाकुलकलकलहं व्यस्तशय्यो विलज्जः ॥१०३॥

**शार्दूल.** मुक्तिर्वारिविहारबद्धहृदया तीर्थे त्रिलोकोत्तमे-
गङ्गासागरसङ्गमे वितनुते सत्ताण्डवं लीलया ।
मालामल्लिकया धनं विरचितास्तत्कण्ठहस्तच्युता
धारा व्याजमुपागता द्युसरितो नृत्यं समातन्वते ॥१०४॥

**मालिनी.** सुत इति परितोषान्म्लानभावङ्कलाना-
मपनयति किमिन्दोर्वारिभिर्वारिराशिः ।
कथमथ सुरसिन्धोरन्यथा छद्मधारा
विदधति कुसुमान्तालूनमालिन्यमालाः ॥१०५॥

श्रीगौरीशविवाहमङ्गलदिने दीर्घाग्रहादब्धये
पत्रं प्रेषितवान्निमन्त्रणविधौ गौरीगुरुर्यद्गिरिः ।
धारावर्णपरम्परापरिलसद्गङ्गेति नामान्तर-
म्मन्ये तत्स्फुरति क्षितौ हिमगिरेरावारिराशि ध्रुवम् ॥१०६॥

जलनिधि सुरधुन्यां केलिविन्यासधन्या
नटति विरतिशून्या मुक्तियोषिज्जगत्याम् ।
कथमथ जलधारातीरसंघट्टयोगान्
मुरज इव विधत्ते सध्वनीनान् यथेयम् ॥१०७॥

## ॥ गङ्गासागर-गङ्गावर्णनम् ॥

उत्तुङ्गा शैलशृङ्गोपममथ विलसत्तालमालं तमाल-
व्यालोलानन्तवल्लीभ्रमरभरमिलत्पुञ्जगुञ्जन्निकुञ्जम् ।
आसन्नङ्किन्नरीभिस्सुरतरवरणन्मञ्जुमञ्जीरकाञ्ची-
चञ्चत्केयूरकण्ठाभरणकरलसत्कङ्कणक्वाणकीर्णम् ॥१०८॥

जयति जनितमुक्तिर्जाह्नवीतीरभूमि-
स्सुरपतिपुरहर्म्योत्तुङ्गशृङ्गे हसन्ती ।
निजपतनसुभातैर्भूषितं लेखवृन्दै-
रपि गतभवदुःखैस्सेविता मर्त्यलोकैः ॥१०९॥

अरुणकिरणवर्णा चन्द्रिकाचारुकीर्णा
क्वचिदपि निचितेयं बालशैवालजालैः ।
निशि हसति सुवर्णाबद्धसोपानसीम्नां
श्रियममरपुरीणामिन्द्रनीलस्थलीनाम् ॥११०॥

तीरं धीरसमीरनीरकणिकाकीर्णम्महाशीतलं
तापत्राणविधानबद्धहृदयं सद्देहिभिस्सेवितम् ।
त्रैलोक्योपरि संस्थितं सुरपुरीप्रातिष्ठ्यमूलं परं,
वन्दे गाङ्गमनङ्गमर्दनजटावल्लीभिरुद्वीजितम् ॥१११॥

तटतरुनवपत्रैर्निर्मिता शर्ममूलं
जयति तटकुटीयं सत्तपस्विप्रजानाम् ।
धनदयमसुरेशा यां विलोक्य त्रपन्ते
मणिगणपरिपूर्णामाश्रिता हर्म्यमालाम् ॥११२॥

**वसन्तति.** चन्द्रोज्ज्वलं तुहिनशैलशिलासमृद्धं,
गङ्गातटं निकटभासितदेवतानाम् ।
दीप्त्याऽरविन्दनयनस्य सुरम्यतल्पं
जेतुं समुद्यतमनन्तहितं भजेम ॥११३॥

## ॥ गङ्गातटवर्णनम् ॥

**शिखरिणी** प्रभुत्वं श्रीभर्तुस्स्मरहरमहत्वं कृतवतो
जगत्स्वत्वं सत्त्वं परिगतजलत्वं किमपरम् ।
द्रवत्वं ब्रह्मागाद्वितरदमरत्वं त्रिपथगे !
त्रयीतत्त्वं तत्त्वं वहसि सलिलं संहृतमलम् ॥११४॥

अतिस्वच्छा भिक्षाशनशमितसर्वेन्द्रियगणा-
स्तृणप्रायं विश्वं न खलु गणयन्ति क्षणमपि ।
जनाःपीताधीता त्वमसि यदि नीता स्मृतिपथं-
कथं याता यातागतरहितमाताम्रकिरणम् ॥११५॥

विना मेघं वर्षन्दिनमपि विनार्कं हिमकरं-
विना ज्योत्स्नामिच्छत्यमरनदि ! यो वाञ्छति सुखम् ।
विना त्वां वै मोक्षं त्रिदिवजनितं वा नरपशु-
र्विना भुक्तिं तृप्तिं कलयति कथम्मन्दहृदयः ॥११६॥

## ।। अथ पूजा ।।

**शार्दूल.** पद्मं दन्तिदलं विलिख्य विलिखेत्पृथ्वीपुरं तद्बहि-
र्यन्त्रं यन्त्रविदां विपद्विदलनं दृष्टिप्रयासादपि ।
येऽर्चन्ति प्रचुरादरा भगवति ! भ्रष्टैनसस्स्पर्शना-
ज्जानीमो न किमन्यदुत्तमसुखं स्वस्थाश्चिरम्भुञ्जते ।।११७।।

विन्यस्याथ जयादिकास्तवपुरश्शक्तीस्समस्तार्यदा-
स्त्वान्ध्यायन्ति च पूजयन्ति रमयन्त्यानन्दसान्द्रा हृदि ।
ते सम्प्राप्य शिवादितुल्यपदवीं स्वर्गे रमन्ते चिरं,
येषामम्ब ! भृशं प्रयाति सुमनस्त्रस्तो निबद्धाञ्जलिः ।।११८।।

**मिश्रोपजातिः** कोणे षडङ्गानि दलेषु रुद्र-
श्रीनाथधातृरविभिस्सतुषारशैलाः ।
मेनाभगीरथपयःपतयः प्रपूज्याः
मत्स्यादयस्सुललिताकृतयः प्रयत्नात् ।।११९।।

**वसन्तति.** पृथ्वीपुरे त्रिदशराजमुखा दिगीशा
तद्भक्तिभावितहृदा मनुजोत्तमेन ।
ब्राह्मेऽम्बुजस्य परितोषनिशक्तिखड्ग
दण्डादिकान् क्रमपरान् परमादरेण ।।१२०।।

सम्पूज्य यान्ति पदवीममरैरलभ्या-
मभ्यासमम्बुजहराः परमेश्वरस्य ।
पत्रस्थिता न पुनरत्र पतन्ति
धन्यास्स्वानन्दतुन्दतरमानसमग्रजीवाः ।।१२१।।

वेदाद्यं हृदयं शिवा तदनुगा नारायणी तत्परा-
त्वन्मूर्त्तिर्विदिता शिवे ! दशहरा गङ्गा च ङेन्ता क्रमात्
अन्ते वह्निवधूं विलिख्य जपतां याम्याः कुतो यातनाः ।
नानास्वर्ग्यसुखानुभूतिरसिका न प्रच्यवन्ते पुनः ।।१२२।।

लक्षं पुरश्चरणमस्य मनोर्विधाय
पश्चान्मनोरथकथासु यदि प्रवृत्तिः
विष्णुश्शिवस्सुरपतिर्द्रुहिणोऽथ भूया-
त्तस्यास्ति दुर्लभतरं भुवने न किञ्चित् ।।१२३।।

उत्फुल्लामलपुण्डरीकविलसत्कान्तिस्सरोजं वरं
हस्तैस्सन्दधती श्रिताऽभयपयः कुम्भौ प्रसन्नानना ।
विष्णुब्रह्मशिवात्मिका नदनदीसंसेविता सादरं,
चूडाबद्धनिशाकराभवसना भागीरथी पातु नः ॥१२४॥

स्तोत्रं श्रीमणिमिश्रनिर्मितमिदं संसारसौभाग्यदं
ज्ञानाज्ञानकृताघपर्वतपविस्स्वर्ग्यापवर्ग्यापहम् ।
जाह्नव्या जनितानुरागमनसा सेयम्पठन्ति ध्रुवं,
स्नाने तान्न जहाति जह्नुतनया कल्याणभाजश्चिरम् ॥१२५॥

**इति श्रीमणिमिश्रकृतं गङ्गासपादशतकं सम्पूर्णम् ।**

वेदर्षिवसुचन्द्रेऽब्दे फाल्गुने शुक्लसप्तम्यां ।
मन्दे श्रीमणिमिश्रकृतगङ्गासपादशतकम् ॥

**॥ शम्भुदत्तो व्यलेखि ॥**



# गङ्गानामावली

**। ॐ श्री गणेशाय नमः । शिव उवाच ।**

श्रृणु देवि प्रवक्ष्यामि सहस्येऽपि रहस्यकम्।
गंगायाः कवचं दिव्यं गोपनीयं त्वया सदा ॥१॥
न कस्यापि प्रवक्तव्यं वक्तव्यं स्वात्मिकाय तत्।
न दर्शयन्ति सर्वागं विना भर्त्तुर्यथास्त्रियः ॥२॥
तस्मात्त्वया न वक्तव्यं कवचं लोकसुन्दरि।
गङ्गायाः कवचस्याऽस्य वेदव्यास ऋषिः स्मृतः ॥३॥
छन्दोऽतिजगती प्रोक्तं देवता सुरसरित्स्मृता।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥४॥
प्रणवो मे शिरः पातु नमः पातु ललाटकम्।
भगवती मे दृशो पातु कर्णौ ह्यम्बे ततोऽवतु ॥५॥
अंबालिके महामाली हिलि नासापुटद्वयम्।
कपौलौ मे सदा पातु चैह्येहि भगवत्यऽथ ॥६॥
मुखं में सततं रक्षेद् द्रवरूपा शुचिप्रभा।
अशेषतीर्थालवाले हनुमेव सदावतु ॥७॥
जिह्वामूले च जिह्वाग्रे ह्रीं श्रीं बीजे सदावताम्।
शिवजटाधिरूढ़े च गंगे चोष्ठद्वयेऽवतु ॥८॥
दंन्तपंक्तौ च कंठे च पातु गंगा विशेषतः।
स्कन्धौ मे ॐ नमः पातु शिवायै करयोर्मम ॥९॥
नारायण्यै च पार्श्वौ मे पायात्पापहरा सदा।
स्वांते दशहरायै मे गंगायै चोदरेऽवतु ॥१०॥
स्तनौ स्वाहा सदा पातु देवाभिभवतोषिता।
नमो भगवति पातु कुक्षी मे सर्वदा सुखम् ॥११॥
ऐं वीजं मध्यदेशे च बीजविद्या सदाऽवतु।
हिलि पुष्टं सदा पातु पातु नाभिं हिलि र्मम ॥१२॥
मिलिमिलि पदद्वन्द्वं कटिं च सक्थिनी द्वयं।
गंगे मां पावयेत्यव्याद् गुह्ये जानुद्वये मम ॥१३॥

---

१. ग्रन्थकार– वामदेवः, स्तोत्रम्, पाण्डुलिपि संख्या २१६२८, स.भ.पु. पत्र १-४, ७-३१ पूर्ण, रचना संवत् १५५८

जंघे स्वाहा सदा पातु मिलि नेत्राक्षरी सदा।
सप्तार्ण सहिता विद्या पादौ पातु नवाक्षरी ॥१४॥

हि़लि हिलिमिलिमिलिनी गंगेदेवि नमो भृशम्।
मूर्द्धादिपादपर्यंतं पातु पंचदशाक्षरी ॥१५॥

तारमायारमा बीजं प्राच्यां रक्षतु मे सदा।
आग्नेय्यां सा भगवती पातु मां चक्रसंस्थिता ॥१६॥

दक्षिणे गांगदयिता नैर्ऋत्यां च मे पूर्ववत्।
प्रतीच्यामस्त्रतो रक्षेद्रिपुभीरनिकृंतनी ॥१७॥

वामिनी पातु वायव्यां माया रक्षतु चोत्तरे।
ईशान्यां कमला पातु कामबीजं सदावतु ॥१८॥

अधस्तात्प्रणवो रक्षेत्सर्वत्र सर्वमन्त्रराट्।
मणिकर्णिमृगीब्रह्मा हृदयं ध्रुवसंयुता ॥१९॥

वियमिंदुपक: पूर्वमन्त्रश्रीमणिकर्णिका।
सर्वत्र मे सदा पातु वाह्याभ्यंतरभेदत: ॥२०॥

इति ते कवचं देव्या: सारात् सारतरं परम्।
सर्वार्थसाधनं नाम कवचं परमाद्भुतम् ॥२१॥

अस्यापि पठनात्सद्य: कुबेरोऽपि धनेश्वर:।
इन्द्र: सकलदेवेशो धारणात् पठनाद्यत: ॥२२॥

सर्वसिद्धीश्वरा: संत: सर्वैश्वर्य्यमवाप्नुयु:।
पुष्पांजल्यष्टकं दत्वा मूलेनैवोचदापयेत् ॥२३॥

संवत्सरकृतायास्तु पूजाया: फलमाप्नुयात्।
प्रीतिमन्योन्यत: कृत्वा कमला निश्चला गृहे ॥२४॥

वाणी च निवसेद्वक्त्रे सत्यं सत्यं न संशय:।
यो धारयति पुण्यात्मा सर्वार्थसाधनाभिधम् ॥२५॥

कवचं परमं पुण्यं सोपि पुण्यवतां वर:।
सर्वैश्वर्य्ययुतो भूत्वा त्रैलोक्यविजयी भवेत् ॥२६॥

बहुपुत्रवती भूत्वा वंध्यापि लभते सुखम्।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृंतंति ताडितं।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नत: ॥२७॥

**इति श्रीरुद्रयामले पार्वतीश्वरसंवादे सर्वार्थसाधनाभिधं कवचं पूर्णम्।**

ॐ सिन्धवेनमः ॐ अंजनायै नमः ॐ अजंनावत्यै नमः ॐ अस्तोक-पुण्यसलिलायै नमः । ॐ अस्तोदयविवर्जितायै नमः । ॐ अस्ताखिलार्थसंसेव्यायै नमः ॐ अस्मच्चित्तनिकृंतनायै नमः, ॐ अतिरूपायै नमः । ॐ अस्तव्यस्तजला-विलायै नमः । ॐ अस्तादृतिमरस्तुत्यायै नमः, ॐ अधस्तलोद्गतिदायिन्यै नमः, ॐ कल्याणकारिण्यै नमः, ॐ कामदायै नमः ॐ कमलोत्पलगंधिन्यै नमः, ॐ कमलिन्यै नमः ॐ कांत्यै नमः ॐ कल्पितदायिन्यै नमः ॐ कांचनाक्ष्यै नमः, ॐ कामधेन्वै नमः, ॐ कीर्त्त्यै नमः, ॐ कृष्लेशवासिन्यै नमः, ॐ क्रतुश्रेष्ठायै नमः, ॐ कर्मवंधविभेदिन्यै नमः, ॐ कमलाक्ष्यै नमः ॐ क्लमहरायै नमः, ॐ कृशानुतपनंद्युतये नमः, ॐ करुणार्द्रायै नमः, ॐ कल्याण्यै नमः, ॐ कलिकल्मषनाशिन्यै नमः, ॐ कामरूपायै नमः, ॐ क्रियाशक्त्यै नमः, ॐ कमलोत्पलमालिन्यै नमः, ॐ कूटस्थायै नमः, ॐ करुणाक्रांतायै नमः, ॐ कूर्मयानायै नमः, ॐ कलावत्यै नमः, ॐ कमलायै नमः, ॐ कल्पलतिकायै नमः, ॐ काल्यै नमः, ॐ कलुषवैरिण्यै नमः, ॐ कमनीयजलायै नमः, ॐ कम्रायै नमः, ॐ कपर्दिसुकपर्दगायै नमः, ॐ कालकूटप्रशमन्यै नमः, ॐ कदम्बकुसुमप्रियायै नमः, ॐ कालिंद्यै नमः, ॐ केलिलतिकायै नमः, ॐ कलकल्लोलमालिकायै नमः, ॐ क्रान्तलोकत्रयायै नमः, ॐ कद्रवे नमः, ॐ कद्रुतनयवत्सलायै नमः । ॐ खड्ग्न्यै नमः ॐ खड्गधाराभायै नमः ॐ खगायै नमः ॐ खण्डेंदुधारिण्यै नमः, ॐ खेखेलगामिन्यै नमः, ॐ खस्थायै नमः, ॐ खंडेन्दुतिलकप्रियायै नमः, ॐ खेचर्य्यै नमः, ॐ खेचरीवंद्यायै नमः, ॐ ख्यात्यै नमः, ॐ ख्यातिप्रदायिन्यै नमः, ॐ खंडितप्रणताघौघायै नमः, ॐ खलबुद्धिविनाशिन्यै नमः, ॐ ख्यात्यै नमः, ॐ कन्दसन्दोहायै नमः, ॐ खड्गखट्वांगखेटिन्यै नमः, ॐ पीयूषपाथसंखिन्यै नमः, ॐ गंगायै नमः, ॐ गंधवत्यै नमः, ॐ गौर्य्यै नमः, ॐ गंधर्वनगरप्रियायै नमः, ॐ गंभीरांग्यै नमः, ॐ गुणमय्यै नमः, ॐ गतातंकायै नमः, ॐ गतिप्रियायै नमः, ॐ गणनाथाम्बिकायै नमः, ॐ गीतायै नमः, ॐ गद्यपद्यपरितुष्टायै नमः, ॐ गांधार्य्यै नमः, ॐ गर्भशमन्यै नमः, ॐ गतिभ्रष्टगतिप्रदायै नमः, ॐ गोमत्यै नमः, ॐ गुह्यविद्यायै नमः, ॐ गवे नमः, ॐ गोप्त्र्यै नमः, ॐ गगनगामिन्यै नमः, ॐ गोत्रवर्द्धिन्यै नमः, ॐ गुण्यायै नमः, ॐ गुणातीतायै नमः, ॐ गुणाग्रण्यै नमः, ॐ गुहांबिकायै नमः, ॐ गिरिसुतायै नमः, ॐ गोविन्दात्रि-समुद्भवायै नमः, ॐ गणनीयचरित्रायै नमः, ॐ गायत्र्यै नमः, ॐ गिरिशप्रियायै नमः, ॐ गूढरूपायै नमः, ॐ गुणवत्यै नमः, ॐ गुर्व्यै नमः, ॐ गौरववर्द्धिन्यै नमः, ॐ ग्रहपीडाहरायै नमः, ॐ मुद्रायै नमः, ॐ गानवत्सलायै नमः, ॐ धर्महंत्र्यै नमः, ॐ धृतवत्यै नमः, ॐ धृततुष्टिप्रदायिन्यै नमः, ॐ घण्टारव-

प्रियायै नमः, ॐ घोरायै नमः, ॐ घोराघध्वंसकारिण्यै नमः, ॐ घ्राणतुष्टिकर्य्यै नमः, ॐ घोषायै नमः, ॐ घनानन्दायै नमः, ॐ घनप्रियायै नमः, ॐ धातुकायै नमः, ॐ धूस्मितजलायै नमः, ॐ घृष्टपातकसंतत्यै नमः, ॐ घटकोटिप्रणीतायै नमः, ॐ घटिताशेषमंगलायै नमः, ॐ घृणावत्यै नमः, ॐ घृणिनिधये नमः, ॐ घस्मरायै नमः, ॐ घूकनादिन्यै नमः, ॐ घुसृणपिंजरतन्वै नमः, ॐ घर्घर्य्यै नमः, ॐ घर्घरस्वनायै नमः, ॐ चन्द्रिकायै नमः, ॐ चन्द्रकान्तायै नमः, ॐ चंचलायै नमः, ॐ चंचलद्युतये नमः, ॐ चिन्मय्यै नमः, ॐ चितिरूपायै नमः, ॐ चन्द्रायुतशताननायै नमः, ॐ चाणेयलोचनायै नमः, ॐ चारवे नमः, ॐ चार्वंग्यै नमः, ॐ चारुगामिन्यै नमः, ॐ चर्यायै नमः, ॐ चरित्रनिलयायै नमः, ॐ चित्रकृते नमः, ॐ चित्ररूपिण्यै नमः, ॐ चम्पूचन्दनशुच्यंशवे नमः, ॐ चर्चनीयायै नमः, ॐ चिरस्मितायै नमः, ॐ चारुचम्पकमालाढ्यायै नमः, ॐ चमिताशेषदुष्कृतायै नमः, ॐ चिदाकाशवहायै नमः, ॐ चिंत्यायै नमः, ॐ चंचच्चामरवीजितायै नमः, ॐ चोरिताशेषवृजिनायै नमः, ॐ चरिताशेषमण्डलायै नमः, ॐ छेदिताखिलपापौघायै नमः, ॐ छद्मघ्न्यै नमः, ॐ छलहारिण्यै नमः, ॐ छन्नत्रिविष्टपतलायै नमः, ॐ छेदिताशेषवंधनायै नमः, ॐ छुरिताभूतधारायै नमः, ॐ छिन्नैनसे नमः ॐ छन्दगामिन्यै नमः, ॐ छत्रीकृतमरालौघायै नमः, ॐ छटीकृतनिजामृतायै नमः, ॐ जाह्नव्यै नमः, ॐ ज्यायै नमः, ॐ जगन्मात्रे नमः, ॐ जप्यायै नमः, ॐ जंघालवीचिकायै नमः, ॐ जयायै नमः, ॐ जनार्दनप्रीतायै नमः, ॐ जुषणीयायै नमः, ॐ जगद्धितायै नमः, ॐ जीवनायै नमः, ॐ जीवनप्राणायै नमः, ॐ जगज्ज्येष्ठायै नमः, ॐ जगन्मय्यै नमः, ॐ जीवजीवातुलतिकायै नमः, ॐ जन्मिजन्मनिवर्हिण्यै नमः, ॐ जाड्य-विध्वंसनकर्य्यै नमः, ॐ जगद्योन्यै नमः, ॐ जलाविलायै नमः, ॐ जगदानन्द-जनन्यै नमः, ॐ जनलोचनपीयूषायै नमः, ॐ जटातटविहारिण्यै नमः, ॐ जयन्त्यै नमः, ॐ जन्तुशोकघ्न्यै नमः, ॐ जनितज्ञानविग्रहायै नमः, ॐ झल्लरीवाद्यकुशलायै नमः, ॐ चलज्जलजलावृतायै नमः, ॐ झिंटीशवंधायै नमः, ॐ कांकारकारिण्यै नमः, ॐ ऊर्जस्वत्यै नमः, ॐ टंकारनृत्यत्कल्लोलायै नमः, ॐ टीकनीयमहातटायै नमः, ॐ टीकिताखिलपातालायै नमः, ॐ डंवरप्रचहायै नमः, ॐ हीनराजहंसकुलाकुलायै नमः, ॐ डमड्डुमरुहस्तायै नमः, ॐ डामरोक्तमहाण्डकायै नमः, ॐ ढौकिताशेषनिर्वाणनिर्वाणायै नमः, ॐ ढक्कानादचलज्जलायै नमः, ॐ ढणत्ढणितपातकायै नमः, ॐ तर्पण्यै नमः, ॐ तीर्थतीर्थायै नमः, ॐ त्रिपथायै नमः, ॐ त्रिदशेश्वर्य्यै नमः, ॐ त्रिलोक-गोप्त्र्यै नमः, ॐ तोयेश्यै नमः, ॐ त्रैलोक्यपरिवंदितायै नमः, ॐ तापत्रितयसंहंत्र्यै

नमः, ॐ तेजोबलविवर्द्धिन्यै नमः, ॐ त्रिलक्ष्यायै नमः, ॐ तारायै नमः, ॐ तारापतिकरार्चितायै नमः, ॐ त्रैलोक्यपावन्यै नमः, ॐ तूण्यायै नमः, ॐ तुष्टिदायिन्यै नमः, ॐ तुष्टिरूपिण्यै नमः, ॐ तृप्त्याक्षेत्र्यै नमः, ॐ तीर्थमात्रे नमः, ॐ त्रिविक्रमपदोद्भवायै नमः, ॐ तपोमय्यै नमः, ॐ तपोरूपायै नमः, ॐ तपस्तोमफलप्रदायै नमः, ॐ त्रैलोक्यव्यापिन्यै नमः, ॐ तृप्तये नमः, ॐ तृप्तिकृते नमः, ॐ तत्वरूपिण्यै नमः, ॐ त्रैलोक्यसुंदर्य्यै नमः, ॐ तुर्य्यायै नमः,. ॐ तुर्य्यातीतपदप्रदायै नमः, ॐ त्रैलोक्यलक्ष्म्यै नमः, ॐ त्रिपद्यै नमः, ॐ तथ्यायै नमः, ॐ तिमिरचंन्द्रिकायै नमः, ॐ तेजोगर्भायै नमः, ॐ तपःसारायै नमः, ॐ त्रिपुरारिशिरोगृहायै नमः, ॐ त्रयीस्वरूपिण्यै नमः, ॐ तन्व्यै नमः, ॐ तपनांगजभीतिनुदे नमः, ॐ तरये नमः, ॐ तरणिजामित्रायै नमः, ॐ तर्पिताशेषपूर्वजायै नमः, ॐ तुलाविरहितायै नमः, ॐ तीव्रपापतूलतनूनपदे नमः, ॐ दारिद्र्यदमन्यै नमः, ॐ दक्षायै नमः, ॐ दुष्प्रेक्ष्यायै नमः, ॐ दिव्यमंडनायै नमः, ॐ दीक्षावत्यै नमः, ॐ दुरावाप्यायै नमः, ॐ द्राक्षामधुरवारिभृते नमः, ॐ दर्शितानेककुतुकायै नमः, ॐ दुष्टदुर्जय-दुःखहृते नमः, ॐ दैन्यहृते नमः, ॐ दुरितघ्न्यै नमः, ॐ दानवारिपदाब्जजायै नमः, ॐ दन्दशूकविषघ्न्यै नमः, दारिताघौघसंतत्यै नमः, ॐ द्रुतायै नमः, ॐ देवद्रुमच्छन्नायै नमः, ॐ दुर्वारायै नमः, ॐ द्रोहघातिन्यै नमः, ॐ दमग्राह्यायै नमः, ॐ देवमात्रे नमः, ॐ देवलोकप्रदर्शिन्यै नमः, ॐ देवदेव-प्रियायै नमः, ॐ देव्यै नमः, ॐ दिक्पालपददायिन्यै नमः, ॐ दीर्घायुःकारिण्यै नमः, ॐ दीर्घायै नमः, ॐ दोग्ध्र्यै नमः, ॐ दूषणवर्जितायै नमः, ॐ दुग्धाम्बुवाहिन्यै नमः, ॐ दोह्यायै नमः, ॐ दिव्यायै नमः, ॐ दिव्यगतिप्रदायै नमः, ॐ द्युनद्यै नमः, ॐ दीनशरणायै नमः, ॐ देहिदेहनिवारिण्यै नमः, ॐ द्राघीयस्यै नमः, ॐ द्राघहंत्र्यै नमः, ॐ दितपातकसंतत्यै नमः, ॐ दूरदेशान्तरचय्यै नमः, ॐ दुर्गमायै नमः, ॐ देववल्लभायै नमः, ॐ दुर्वृत्तघ्न्यै नमः, ॐ दुर्विगाह्यायै नमः, ॐ दयाधारायै नमः, ॐ दयावत्यै नमः, ॐ दुरासदायै नमः, ॐ दानशीलायै नमः, ॐ द्राविण्यै नमः, ॐ द्रुहिणस्तुतायै नमः, ॐ दैत्यदानवसंशुद्धिकर्त्र्यै नमः, ॐ दुर्बुद्धिहारिण्यै नमः, ॐ दानसारायै नमः, ॐ दयासारायै नमः, ॐ द्यावाभूमिविहारिण्यै नमः, ॐ दृष्टादृष्टफलप्राप्त्यै नमः, ॐ देवतावृन्दवन्दितायै नमः, ॐ दीर्घवृत्तायै नमः, ॐ दीर्घदृष्ट्यै नमः, ॐ दीप्ततोयायै नमः, ॐ दुरालभायै नमः, ॐ दंडयित्र्यै नमः, ॐ दण्डनीत्यै नमः, ॐ दुष्टदण्डधरार्चितायै नमः, ॐ दुरोदरघ्न्यै नमः, ॐ दावार्चिषे नमः, ॐ द्रवद्रव्यैकशेवधये नमः, ॐ दीनसंतापशमन्यै नमः, ॐ दात्र्यै नमः, ॐ द्रवप्युवैरिण्यै नमः, ॐ दरीविदारणपरायै नमः, ॐ दांतायै नमः, दान्तजनप्रियायै

नमः, ॐ दारिताद्रितटायै नमः, ॐ दुर्गारण्यप्रचारिण्यै नमः, ॐ धर्मद्रवायै नमः, ॐ धर्मधुरायै नमः, ॐ धेनवे नमः, ॐ धीरायै नमः, ॐ धृत्यै नमः, ॐ ध्रुवायै नमः, ॐ धेनुदानफलस्पर्शायै नमः, ॐ धर्मकामार्थमोक्षदायै नमः, ॐ धर्मोर्मिवाहिन्यै नमः, ॐ धुर्य्यायै नमः, ॐ धात्र्यै नमः, ॐ धात्रीविभूषणायै नमः, ॐ धर्मिण्यै नमः, ॐ धर्मशीलायै नमः, ॐ धन्विकोटी-कृतावनायै नमः, ॐ ध्यातृपापहरायै नमः, ॐ ध्येयायै नमः, ॐ धावन्यै नमः, ॐ धूतकल्मषायै नमः, धर्मधरायै नमः, ॐ धर्मसारायै नमः, ॐ धनदायै नमः, ॐ धनवर्द्धिन्यै नमः, ॐ धर्मायै नमः, ॐ धर्मगुणक्षेत्र्यै नमः, ॐ धत्तूरकुसुमप्रियायै नमः, ॐ धर्मेश्यै नमः, ॐ धर्मशास्त्रज्ञायै नमः, ॐ धनधान्यसमृद्धिकृते नमः, ॐ धर्मलभ्यायै नमः, ॐ धर्मजलायै नमः, ॐ धर्मप्रसवधर्मिण्यै नमः, ॐ ध्यानगम्यस्वरूपायै नमः, ॐ धरण्यै नमः, ॐ धातृपूजितायै नमः, ॐ धुरे नमः, ॐ धूर्जटिजटासंख्यायै नमः, ॐ धन्यायै नमः, ॐ धिये नमः, ॐ धारणावत्यै नमः, ॐ नंदायै नमः, ॐ निर्वाणजनन्यै नमः, ॐ नंदन्यै नमः, ॐ नुन्नपातकायै नमः, ॐ निषिद्धविघ्ननिचयायै नमः, ॐ निजानन्दप्रकाशिन्यै नमः, ॐ नभोङ्गणचर्य्यै नमः, ॐ नुत्यै नमः, ॐ नम्यायै नमः, ॐ नारायण्यै नमः, ॐ नुतायै नमः, ॐ निम्नगाख्यानायै नमः, ॐ तापसम्पदां नाशिन्यै नमः, ॐ नियतायै नमः, ॐ नित्यसुखदायै नमः, ॐ नानाश्चर्यमहानिधये नमः, ॐ नदीनदसरोमात्रे नमः, ॐ नायिकायै नमः, ॐ नाकदीर्घकायै नमः, ॐ नष्टोद्धरणधीरायै नमः, ॐ नन्दनायै नमः, ॐ नन्ददायिन्यै नमः, ॐ निर्णिक्ताशेषभुवनायै नमः, ॐ निस्संगायै नमः, ॐ निरुपद्रवायै नमः, ॐ निरालम्बायै नमः, ॐ निष्प्रपंचायै नमः, ॐ निर्णाशितमहामलायै नमः, ॐ निर्मलज्ञानजनन्यै नमः, ॐ निश्शेषप्राणितापहृते नमः, ॐ नित्योत्सवायै नमः, ॐ नित्यतृप्तायै नमः, ॐ नमस्कार्य्यायै नमः, ॐ निरंजनायै नमः, ॐ निष्ठावत्यै नमः, ॐ निरातंकायै नमः, ॐ निर्लेपायै नमः, ॐ निश्चलात्मिकायै नमः, ॐ निरवद्यायै नमः, ॐ निरीहायै नमः, ॐ नीललोहितमूर्द्धजायै नमः, ॐ नन्दिभृंगिगणस्तुत्यायै नमः, ॐ नगानन्दायै नमः, ॐ नगात्मजायै नमः, ॐ निष्प्रत्यूहायै नमः, ॐ नाकनद्यै नमः, ॐ निरयार्णवदीर्घनावे नमः, ॐ पुण्यप्रदायै नमः, ॐ पुण्यगर्भायै नमः, ॐ पुण्यायै नमः, ॐ पुण्यतरंगिण्यै नमः, ॐ पृथवे नमः, ॐ पृथुकलायै नमः, ॐ पूर्णायै नमः, ॐ प्रणतार्त्तिप्रभंजिन्यै नमः, ॐ प्राणदायै नमः, ॐ प्राणिजनन्यै नमः, ॐ प्राणेश्यै नमः, ॐ प्राणरूपिण्यै नमः, ॐ पद्मालयायै नमः, ॐ पराशक्त्यै नमः, ॐ पुरजित्परमप्रियायै नमः, ॐ परापरफलप्राप्त्यै नमः, ॐ पावन्यै नमः, ॐ पयस्विन्यै नमः, ॐ परानन्दायै नमः, ॐ

प्रकृष्टार्थायै नमः, ॐ प्रतिष्ठायै नमः, ॐ पालिन्यै नमः, ॐ परायै नमः, ॐ पुराणपठितायै नमः, ॐ प्रीतायै नमः, ॐ प्रणवाक्षररूपिण्यै नमः, ॐ पार्वतीप्रेमसम्पन्नायै नमः, ॐ पशुपाशविनाशिन्यै नमः, ॐ परमात्मस्वरूपायै नमः, ॐ परब्रह्मप्रकाशिन्यै नमः, ॐ परमानन्दनिष्यन्दायै नमः, ॐ प्रायश्चित्त-स्वरूपिण्यै नमः, ॐ पानीयरूपनिर्वाणायै नमः, ॐ परित्राणायै नमः, ॐ परार्पणायै नमः, ॐ पापेन्धनदवज्वालायै नमः, ॐ पापारये नमः, ॐ पापनामनुदे नम;, ॐ परमैश्वर्यजनन्यै नमः, ॐ प्रज्ञायै नमः, ॐ प्राज्ञायै नमः, ॐ परापरायै नमः, ॐ प्रत्यक्षलक्ष्म्यै नमः, ॐ पद्माक्ष्यै नमः, ॐ परव्योमामृतस्रवायै नमः, ॐ प्रसन्नरूपायै नमः, ॐ प्रणिधये नमः, पूतायै नमः, ॐ प्रत्यक्षदेवतायै नमः, ॐ पिनाकिपरमप्रीतायै नमः, ॐ परमेष्ठिकमंडलवे नमः, ॐ पद्मनाभपदा-ग्रेणप्रसूतायै नमः, ॐ पद्ममालिन्यै नमः, ॐ परार्द्धिदायै नमः, ॐ पुष्टिकर्य्यै नमः, ॐ पथ्यायै नमः, ॐ पूर्त्यै नमः, ॐ प्रभावत्यै नमः, ॐ पुराणायै नमः, ॐ गीतागर्भधृत्यै नमः, ॐ पापपर्वतनाशिन्यै नमः, ॐ फलिन्यै नमः, ॐ फलहस्तायै नमः, ॐ फुल्लपंकजलोचनायै नमः, ॐ फालितैनोमहाक्षेत्रायै नमः, ॐ फणिलोकविभूषणायै नमः, ॐ फेनच्छलप्रणुन्नैनसे नमः ॐ फुल्लकैरव-गन्धिन्यै नमः, ॐ फेनिलाच्छाम्बुधारायै नमः, ॐ फडुच्चाटितपातकायै नमः, ॐ फाणितस्वादुसलिलायै नमः, ॐ फ्रांटवशाजलाविलायै नमः, ॐ विश्वमात्रे नमः, ॐ विश्वेश्यै नमः, ॐ विश्वायै नमः, ॐ विश्वेश्वरप्रियायै नमः, ॐ ब्रह्मण्यायै नमः, ॐ ब्रह्मकृते नमः, ॐ ब्राह्म्यै नमः, ॐ ब्रंह्मिष्ठायै नमः, ॐ विमलोदकायै नमः, ॐ विश्वामित्रायै नमः, ॐ विष्णुपद्यै नमः, ॐ वैष्णव्यै नमः, ॐ वैष्णवप्रियायै नमः, ॐ विभावर्य्यै नमः, विनतायै नमः, ॐ विक्रांतानेकविष्टपायै नमः, ॐ विघ्नरूपाक्षप्रियकर्य्यै नमः, ॐ विभूतये नमः, ॐ विश्वतोमुख्यै नमः, ॐ विपाशायै नमः, ॐ वैवुध्यै नमः, ॐ वैद्यायै नमः, ॐ वेदाक्षररसस्रवायै नमः, ॐ विद्यायै नमः, ॐ वेगवत्यै नमः, ॐ वेद्यायै नमः, ॐ वृंहिण्यै नमः, ॐ ब्रह्मवादिन्यै नमः, ॐ वरदायै नमः, ॐ विप्रकृष्टायै नमः, ॐ वरिष्ठायै नमः, ॐ विशोधन्यै नमः, ॐ विद्याधर्य्यै नमः, ॐ विशोकायै नमः, ॐ वयोवृंदनिषेवितायै नमः, ॐ वृहत्कायै नमः, ॐ बलवत्यै नमः, ॐ व्योमस्थायै नमः, ॐ विबुधप्रियायै नमः, ॐ वाण्यै नमः, ॐ वेदवत्यै नमः, ॐ वित्तायै नमः, ॐ ब्रह्मविद्यातरंगिण्यै नमः, ॐ ब्रह्माण्डकोटिव्याप्तोववे नमः, ॐ हत्यापहारिण्यै नमः, ॐ ब्रह्मेशविष्णुरूपायै नमः, ॐ बुद्ध्यै नमः, ॐ विभववर्द्धिन्यै नमः, ॐ विलासिसुखदायै नमः, ॐ वैश्यायै नमः, ॐ व्यापिन्यै नमः, ॐ वृषारियैव्यै नमः, ॐ वृषांकमौलि-निलयायै नमः, ॐ विपन्नार्त्तिप्रभंजन्यै नमः, ॐ विनीतायै नमः, ॐ विनतायै

नमः, ॐ ब्रध्नतनयाविनयार्चितायै नमः, ॐ विपंचीवाद्यकुशलायै नमः, ॐ वेणुश्रुतिविचक्षणायै नमः, ॐ वर्चस्कर्य्यै नमः, ॐ बलकर्य्यै नमः, ॐ बलोन्मूलितकल्मषायै नमः, ॐ विपापायै नमः, ॐ विगतातंकायै नमः, ॐ विकल्पपरिवर्जित्तायै नमः, ॐ वृष्टिकर्त्र्यै नमः, ॐ वृष्टिजलायै नमः, ॐ विधये नमः, ॐ विच्छिन्नबन्धनायै नमः, ॐ व्रतरूपायै नमः, ॐ वृत्तिरूपायै नमः, ॐ बहुविघ्नविनाशकृते नमः, ॐ वसुधारायै नमः, ॐ वसुमत्यै नमः, ॐ विचित्रांग्यै नमः, ॐ विभावसवेनमः, ॐ विजयायै नमः, ॐ विश्ववीजायै नमः, ॐ वामदेव्यै नमः, ॐ वरप्रदायै नमः, ॐ वृषामृतायै नमः, ॐ विषघ्न्यै नमः, ॐ विज्ञानोर्म्यंशुमालिन्यै नमः, ॐ भव्यायै नमः, ॐ भोगवत्यै नमः, ॐ भद्रायै नमः, ॐ भवान्यै नमः, ॐ भूतभाविन्यै नमः, ॐ भूतधात्र्यै नमः, ॐ भयहरायै नमः, ॐ भक्तदारिद्र्यनाशिन्यै नमः, ॐ भुक्तिमुक्तिप्रदायै नमः, ॐ भेश्यै नमः, ॐ भक्तस्वर्गापवर्गदायै नमः, ॐ भागीरथ्यै नमः, ॐ भानुमत्यै नमः, ॐ भाग्यायै नमः, ॐ भृतये नमः, ॐ भव्रप्रियायै नमः, ॐ भवद्वेष्ट्र्यै नमः, ॐ भूतिदायै नमः, ॐ भूतिभूषणायै नमः, ॐ भाललोचनभावज्ञायै नमः, ॐ भूतभव्यभवत्प्रभवे नमः, ॐ भ्रान्तिज्ञानप्रशमन्यै नमः, ॐ भिन्नब्रह्मांडमंडपायै नमः, ॐ भूरिदायै नमः, ॐ भक्तिसुलभायै नमः, ॐ भगवद्दृष्टिगोचरायै नमः, ॐ भंजितोपप्लवकुलायै नमः, ॐ भक्ष्यभोज्यसुखप्रदायै नमः, ॐ भिक्षणीयायै नमः, ॐ भिक्षुमात्रे नमः, ॐ भावायै नमः, ॐ भावस्वरूपिण्यै नमः, ॐ मन्दाकिन्यै नमः, ॐ महानन्दायै नमः, ॐ मात्रे नमः, ॐ मुक्तितरंगिण्यै नमः, ॐ महोदयायै नमः, ॐ मधुमत्यै नमः, ॐ पुण्यायै नमः, ॐ मुदाकर्य्यै नमः, ॐ मुनिस्तुतायै नमः, ॐ मोहहंत्र्यै नमः, ॐ महातीर्थायै नमः, ॐ मधुस्त्रवायै नमः, ॐ माधव्यै नमः, ॐ मानिन्यै नमः, ॐ मनोरथपथातिगायै नमः, ॐ मोक्षदायै नमः, ॐ मतिदायै नमः, ॐ मुख्यायै नमः, ॐ महाभाग्यजनाश्रितायै नमः, ॐ महावेगवत्यै नमः, ॐ मेध्यायै नमः, ॐ महाप्रभावत्यै नमः, ॐ महत्यै नमः, ॐ मीनचंचललोचनायै नमः, ॐ महाकारुण्यसम्पूर्णायै नमः, ॐ महर्द्धये नमः, ॐ महोत्पलायै नमः, ॐ मूर्त्तिमन्मुक्तिरमण्यै नमः, ॐ महामाणिक्यभूषणायै नमः, ॐ मुक्ताकलापनेपथ्यायै नमः, ॐ मनोनयननन्दिन्यै नमः, ॐ महापातकराशिघ्न्यै नमः, ॐ महादेवार्द्धहारिण्यै नमः, ॐ महोर्मिमालिन्यै नमः, ॐ मुक्तायै नमः, ॐ महादेव्यै नमः, ॐ मनोन्मन्यै नमः, ॐ महापुण्योदयप्राप्यायै नमः, ॐ मायातिमिरचंद्रिकायै नमः, ॐ महाविद्यायै नमः, ॐ महामायायै नमः, ॐ महामेधायै नमः, ॐ महौषधये नमः, ॐ मालाधार्य्यै नमः, ॐ महोदयाय्यै नमः, ॐ महोरगविभूषणायै नमः, ॐ महामोहशमन्यै नमः, ॐ महामंगलमंगलायै

नमः, ॐ मार्त्तण्डमंडलचर्य्यै नमः, ॐ महालक्ष्म्यै नमः, ॐ महर्द्धिदायै नमः, ॐ यशस्विन्यै नमः, ॐ यशोदायै नमः, ॐ योगायै नमः, ॐ युक्तात्मसेवितायै नमः, ॐ योगसिद्धिप्रदायै नमः ।

ॐ याज्यायै नमः, ॐ यज्ञेशपरिपूजितायै नमः, ॐ यज्ञेश्यै नमः, ॐ यज्ञफलदायै नमः, ॐ यजनीयायै नमः, ॐ यशस्कर्य्यै नमः, ॐ यमसेव्यायै नमः, ॐ योगयोनये नमः, ॐ यागिन्यै नमः, ॐ युक्तबुद्धिदायै नमः, ॐ योगज्ञानप्रदायै नमः, ॐ युक्तायै नमः, ॐ यमाद्यष्टांगयोगयुजे नमः, ॐ यन्त्रिताघौघसंचारायै नमः, ॐ यमलोकनिवारिण्यै नमः, ॐ यातायातप्रशमन्यै नमः, ॐ यातनामूलनिकृंतन्यै नमः, ॐ यामिनीशहिमाच्छोदायै नमः, ॐ युगधर्मविवर्जितायै नमः, ॐ रेवतीरतिकृते नमः, ॐ रम्यायै नमः, ॐ रत्नगर्भायै नमः, ॐ रमारतये नमः, ॐ रत्नाकरप्रेमपात्रायै नमः, ॐ रसज्ञायै नमः, ॐ रसरूपण्यै नमः, ॐ रत्नप्रासादगर्भायै नमः, ॐ रमणीयतरंगिण्यै नमः, ॐ रत्नार्चिषे नमः, ॐ रुद्ररमण्यै नमः, ॐ रागद्वेषविनाशिन्यै नमः, ॐ रमायै नमः, ॐ रामायै नमः, ॐ रम्यरूपायै नमः, ॐ रोगिजीवानुरूपिण्यै नमः, ॐ रुचिकृते नमः, ॐ रोचन्यै नमः, ॐ रुच्यायै नमः, ॐ रुचिकरायै नमः, ॐ रोगहारिण्यै नमः, ॐ राजहंसायै नमः, ॐ रत्नवत्यै नमः, ॐ राजत्कल्लोलराजिकायै नमः, ॐ रमणीयकरेखायै नमः, ॐ रुजारये नमः, ॐ रोगशोषण्यै नमः, ॐ राकायै नमः, ॐ राकार्त्तिशमन्यै नमः, ॐ रम्यायै नमः, ॐ रोलम्बराविण्यै नमः, ॐ रागिण्यै नमः, ॐ रंजितशिवायै नमः, ॐ रूपलावण्यशेवधये नमः, लोकप्रसवे नमः, ॐ लोकवन्द्यायै नमः, ॐ लोलकल्लोलमालिन्यै नमः, ॐ लीलावत्यै नमः, ॐ लिंगभूम्यै नमः, ॐ लोकलोचनचन्द्रिकायै नमः, ॐ लेखस्रवन्त्यै नमः, ॐ लटभायै नमः, ॐ लघुवेगायै नमः, ॐ लघुत्वहृते नमः, ॐ लास्यत्तरंगहस्तायै नमः, ॐ ललितायै नमः, ॐ लयभंगिमायै नमः, ॐ लोकवंधवे नमः, ॐ लोकधात्रै नमः, ॐ लोकोत्तरगुणोर्जितायै नमः, ॐ लोकत्रयहितायै नमः, ॐ लोकायै नमः, ॐ लक्ष्म्यै नमः, ॐ लक्षणलक्षितायै नमः, ॐ लीलायै नमः, ॐ लक्षितनिर्वाणायै नमः, ॐ लावण्यामृतवर्षिण्यै नमः, ॐ वैश्वानर्य्यै नमः, ॐ वासवेज्यायै नमः, ॐ वन्ध्यत्वहारिण्यै नमः, ॐ वासुदेवांघ्रिरेणुघ्न्यै नमः, ॐ वज्रिवज्रनिवारिण्यै नमः, ॐ शुभावत्यै नमः, ॐ शुभफलायै नमः, ॐ शांत्यै नमः, ॐ शांतनुवल्लभायै नमः, ॐ शूलिन्यै नमः, ॐ शैशववयसे नमः, ॐ शीतलामृतवाहिन्यै नमः, ॐ शोभावत्यै नमः, ॐ शोषिताशेषकल्मषायै नमः, ॐ शरण्यायै नमः, ॐ शिवदायै नमः, ॐ शिष्टायै नमः, ॐ शरजन्मप्रसवे नमः, ॐ शिवायै नमः, ॐ शक्त्यै नमः, ॐ

शशांकविमलायै नमः, ॐ शमनस्वसृसंमतायै नमः, ॐ शमायै नमः, ॐ शमनमार्गघ्न्यै नमः, ॐ शितिकण्ठमहाप्रियायै नमः, ॐ शुचये नमः, ॐ शुचिकर्य्यै नमः, ॐ श्रमघ्न्यै नमः, ॐ शेषशायिपदोद्भवायै नमः, ॐ श्रुत्यै नमः, ॐ श्रद्धायै नमः, ॐ श्रीमत्यै नमः, ॐ श्रिये नमः, ॐ शुद्धविद्यायै नमः, ॐ शुभव्रतायै नमः, ॐ शुभावागर्तायै नमः, ॐ शतानन्दायै नमः, ॐ श्रुतिस्तुत्यै नमः, ॐ शिवेतरघ्न्यै नमः, ॐ शवर्य्यै नमः, ॐ शांवरीरूपधारिण्यै नमः, ॐ श्मशानायै नमः, ॐ शोधन्यै नमः, ॐ शांतायै नमः, ॐ शाश्वते नमः, ॐ शतघृतिष्टुतायै नमः, शीलन्यै नमः, ॐ शीलशोभाख्यायै नमः, ॐ शिखिवाहनगर्भभृते नमः, ॐ शंसनीयचरित्रायै नमः, ॐ शातिताशेषपातकायै नमः, ॐ षड्गुणैश्वर्यसंपन्नायै नमः, षड्गुणश्रुतिरूपिण्यै नमः, ॐ षण्ढताांहा-रिसलिलायै नमः, ॐ ष्ष्ट्यापन्ननदनदीशतायै नमः, ॐ सरिद्वरायै नमः, ॐ सुरसायै नमः, ॐ सुप्रभायै नमः, ॐ सुरदीर्घिकायै नमः, ॐ स्वःसिन्धवे नमः, ॐ सर्वदुःखघ्न्यै नमः, ॐ सर्वव्याधिमहौषधायै नमः, ॐ सेव्यायै नमः, ॐ सिद्ध्यै नमः, ॐ सत्यै नमः, ॐ सूक्त्यै नमः, ॐ स्कंदसुवे नमः, ॐ सरस्वत्यै नमः, ॐ सम्पत्तरंगिण्यै नमः, ॐ स्तुत्यायै नमः, ॐ स्थाणुमौलि-कृतास्पन्दायै नमः, ॐ स्थैर्यदायै नमः, ॐ सौख्यायै नमः, ॐ सुभगायै नमः, ॐ स्त्रीसौभाग्यदायिन्यै नमः, ॐ स्वर्गतिश्रेणिकायै नमः, ॐ सूक्ष्मायै नमः, ॐ स्वधायै नमः, ॐ स्वाहायै नमः, ॐ सुधाजलायै नमः, ॐ समुद्ररूपिण्यै नमः, ॐ स्वर्ग्यायै नमः, ॐ सर्वपातकवैरिण्यै नमः, ॐ स्मृताघहारिण्यै नमः, ॐ सीतायै नमः, ॐ संसाराब्धितरंङ्गिकायै नमः, ॐ सौभाग्यसुंदर्य्यै नमः, ॐ सन्ध्यायै नमः, ॐ सर्वसारसमन्वितायै नमः, ॐ हरप्रियायै नमः, ॐ हृषीकेश्यै नमः, ॐ हंसरूपायै नमः, ॐ हिरण्मय्यै नमः, ॐ हृताघसंघायै नमः, ॐ हृतकृते नमः, ॐ हेलायै नमः, ॐ हेलावगर्भहृते नमः, ॐ हृष्टायै नमः, ॐ हृष्टिप्रदायै नमः, ॐ हार्दायै नमः, ॐ हुंकारायै नमः, ॐ हृदयंगमायै नमः, ॐ हिमाचलसुतायै नमः, ॐ हैम्यै नमः, ॐ हृषीकेशपदोद्भवायै नमः, ॐ क्षेम्यायै नमः, ॐ क्षांत्यै नमः, ॐ क्षमाधारायै नमः, ॐ क्षितिभूषायै नमः, ॐ क्षितिप्रियायै नमः, ॐ क्षेमदायै नमः, ॐ क्षालिताघौघायै नमः, ॐ क्षुद्रविद्राविण्यै नमः, ॐ क्षणायै नमः ।

**इति श्री गंगानामावलिर्वामदेवकृता संपूर्णा शुभदा भूयात् ।**



# श्रीगङ्गास्तवरत्नहारः

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्योनमः ॥

**अथ सामकलक्ष्मणाचार्याविरचितश्रीगङ्गास्तवहारः प्रारम्भः ।**



गङ्गायोगानुगानाममृतमृतमृते क्लेशमीशस्य शस्ता
सा यागे या प्रयागे लसति सति सतीनायके यज्ञयत्नैः ।
यालभ्यालब्धलक्ष्मीभिरपिरतरसैर्भासते सर्वसत्या-
भूयात्सायासयात्राखिलफलसुलभाप्त्यै सुखं सुप्रसुश्रीः ॥१॥

गङ्गे सैन्यक्षितीशप्रसदनविधये तद्गुणश्लाघनाघ-
प्राप्तातंकप्रसारव्रणितकिणकितक्षीणचित्तास्यजिह्वः ।
तच्छुद्ध्यै लक्ष्मणस्त्वद्गुणगणमहिमश्लाघ्यजीवातुमिष्ट-
प्रालेयप्रायपेयप्रियलसदमृतं स्तोत्रपात्रैः पिबामि ॥२॥

प्राञ्चैर्वर्ण्यापहासः कृत इति लहरी साक्षिणी स्पष्टमन्यै-
र्निर्माल्योच्छिष्टतर्कै र्व्यरचि नवनुतिस्तत्र सांक्ष्ये सहस्रं ।
गङ्गेऽनुच्छिष्टतर्कैस्तवहृदयमुदे श्लोकरत्नैरनर्घ्यै
र्गाङ्गेयस्यूतसाक्ष्यैः स्तवनववपुषं रत्नहारं ददामि ॥३॥

उच्चैर्मान्या त्वमेका जयसि च नितरामीश्वरस्यापि मौलौ-
दृष्टं गङ्गे पदं ते जगति किमधिकं स्तुत्यवस्त्वन्यदस्ति ।
स्तोतव्या चेच्छ्रुतीनामपि तव महिमा गोचरो नेति मौनं,
तच्चेत्सर्वार्थसिद्ध्यै जननि कुरु तथेत्येव मद्वाक्स्तवोऽस्तु ॥४॥

अन्तः शुद्धास्तु या याः सरित इह परं वाह्यतो मे च का स्ता,
अन्तर्वाह्येपि शुभ्राममरद्युतितनुं सत्स इत्यत्र वीजम् ।
जानन्त्येवं हि केचिच्छिवकशशिसहा वासपाकेन गौरं,
मन्येऽहन्ते शरीरे भसिततनुहरालिङ्गनादेकभावम् ॥५॥

श्वेतं पाथः कुतस्ते सुरधुनि सततं कृष्णकण्ठप्रियायाः,
कालिन्दी त्वद्वयस्या तव तनुमिलिता सापि कृष्णाम्बुपूर्णा ।
या रक्ता गुप्तरूपा तवहृदयगता निम्नगा सापि रक्ता
जाने मुक्तोघबीजं यत इदममृतं स्यात्ततस्तादृगेव ॥६॥

---

१. ग्रन्थकारः— लक्ष्मणाचार्यः, स.भ.पु.पा.लि.सं. ५०९७१, पत्र १-३, लिपिः— शारदा, पूर्णम् ।

गङ्गे ब्रह्मामृतं त्वं विधिकलशगतं र्यह्युपेन्द्रस्य यावद्-
वर्धिष्णा मूर्ध्निमन्त्रैः पुनरपि विहितं वामनं क्षेप्तुमिच्छोः ।
धातुर्हस्ताग्रकम्पात्स्खलितमतिभिया यत्प्रमादात्तदङ्घ्रौ
तत्रैवोद्भूतधारं तदिति जडधियस्तद्भवां त्वां मृषाहुः ॥७॥

अन्तश्चिच्छक्तिरेषा वहिरिह सुजडा जाड्यहंत्री जडानां
स्वर्गानन्दप्रदात्री निजविमलजले मज्जनाज्जन्मभाजाम् ।
अन्तर्बोधं विधाय ध्रुवममितसुखं ब्रह्मतत्वं ददाना
गङ्गेतोन प्रगल्भा अपि तव महिमप्राभवं वक्तुमीशाः ॥८॥

पूर्वं ब्रह्मात्मना त्वं श्रुतिशतविदिता यद्रसो वै स इत्थं-
रूपा जाता जडात्मापि जडमयवपुर्ब्रह्मणीहेव विश्वम् ।
औन्यं नैततत्तवास्मिन्विदधति परिणामप्रधाना विदग्धा
यद्ब्रह्मैवेदमित्यादिकनिगमविदः सर्वमात्म्येति मत्वा ॥९॥

भागीरथ्यास्तवैव त्रिदशधुनिरसो वै स इत्यादि वेदै-
र्ब्रह्मात्मत्वेपि सिद्धे बलिदितिजजितोङ्घ्रिप्रमादावघातः ।
औन्नत्यादेव जातो ध्रुवमिति विदुषापीश्वरेणात्ममौलौ-
मानन्दत्वोधृतायां त्वपि नहि लघुता सा तु तद्वामनेऽभूत् ॥१०॥

नीचैर्नीचैः प्रयासित्वमशिवविषयं मौलिगापीश्वरस्य
प्रोद्यत्कल्लोलतस्तं तमपि शिवतमं संविधायात्मभोगैः ।
भोगावत्यस्य नीचाद्रिरसनसदने राजसेऽथापि चित्रं,
पानस्पर्शावगाहैरिह नयसि जनानूर्ध्वमूर्ध्वं सदूर्ध्वम् ॥११॥

सर्वज्ञेनेश्वरेण स्वशिरसि निहिता गौरवात्कामजेत्रा-
प्यज्ञेनाप्यंङ्घ्रिमूले सुकलबलिभिदाकामकत्रास्वमोहात् ।
मातर्गङ्गे भवत्याः किमपि सुमहिमप्राभवं वन्द्यमूर्ते,
रग्नेर्यज्ञेशमशाने ज्वलत इव महो हीयते क्वापि नैव ॥१२॥

गङ्गे मन्दाकिनी त्वं वियति समुदिता भूमिप्राप्ता ततो यन्
मुग्धा विष्णोः पदोक्तेरिह वियदभिधां रोपयित्वा तदङ्घ्रौ ।
तत्कन्यां त्वां वदन्ति श्रुतिनुतवपुषं ब्रह्मरूपां पुराणां
जन्मस्थित्यन्तहीनामपि जलकणतः कोटिशो विष्णुकर्त्रीम् ॥१३॥

आदौ ब्रह्मैव शुद्धं चिदनुविधिकमण्डल्वभीज्यं त्वदम्भः
पश्चान्मेरौ शिवस्यापि च शिरसि पुनः क्ष्माभृदीशस्य मौलौ ।
तस्मात्भूमौ प्रयागं त्रिदशधुनि ततः काशिकायां मुदा गाः
पानस्पर्शावगाहैः प्रविहितमनघामेव मुक्तावली द्राक् ॥१४॥

त्वत्तोये स्नानतोये भगवति वहवो विष्णवो ऽनन्तरूपा-
स्तेषां पादेषु पाथे यदि भवति पुनस्त्वं न साध्येति सत्यम् ।
यस्माद्गङ्गे तदम्भः शिरसि न हि भवेद्धूर्जटेर्मूलमूर्ते-
रास्यैरेवं सहस्रैरमृतनिधिमुखं नैव चुम्बेत्किमन्यत् ॥१५॥

नाम्नाकर्णप्रियाप्यर्जुनतनुरपरा धर्मराजप्रतीपा,
संसेव्या धार्तराष्ट्रैस्त्रिदशधुनि सदा त्वं सुभद्रैकधात्री ।
कुर्वाणा कृष्णवर्त्मापशमममपि परं सर्वतो मुख्यगत्या-
तत्पार्थादप्यपार्था शिवशिरसि पुमर्थेन चापप्रहारा ॥१६॥

मुक्तोत्पत्तिश्छलत्वादमृतनिधितया सोर्मिकत्वाच्च गङ्गे
पद्मारम्भा कलावन्मुखजनकतयानेदृगस्मिन्प्रविष्टा ।
किन्तु स्वेशायतेनार्पितमिति किमहो कालकूटं स्वकूटा-
ज्जल्पं जल्पं सहस्रैर्जडधिमिहमुखैर्योद्‌धुमेवाति वेगात् ॥१७॥

गङ्गे त्वं कौमुदीव प्रसरसि पयसाप्यन्धकारातिमौलौ
सर्वाङ्गे छेदयन्ती वितरसि सकलेभ्योऽमृतं तापशान्त्यै ।
जीवं जीवं च दत्से मुदमपि जड़धेः पूर्णसौख्यं ददाना
चित्रं स्वालोकतस्ते कुवलयमनिशं कोशभावं जहाति ॥१८॥

शून्यामालोक्य सूर्यः स्वतनयनगरीमुद्यमेनापि हीनं-
दीनं सूनुं प्रलीनं स्वसदसि सदयस्तस्य सञ्जीविकायाः ।
संरक्षार्थं भवत्या अमृतपदमनु प्राप्य भीतस्तु सेवां,
कर्त्तुं गङ्गे प्रवृत्तः करदशशतकैर्मुक्तिदेत्रेति मन्ये ॥१९॥

पानस्पर्शावगाहैः सुरधुनि बहवो येमृतात्मान एते
जाता वै निष्कलङ्का द्विजपतिरहमद्यापि कस्मात्कलङ्की ।
गङ्गे तं संप्रमार्ष्टुं स्पृशति तव जलं पातुमिच्छन्करैः स्वैः,
शान्तैरादातुमेव प्रयतत इव किं संस्थितोऽत्रैव चन्द्रः ॥२०॥

सूर्यात्मत्वाद्दिवैव प्रकटमुपगतोऽहस्करः सेवितुं त्वां
रात्रौ दोषाकरत्वाद्रजनिचरतया शङ्कितेन्दुः समागात् ।
एवं यद्याप्यहो त्वं निजसमयभिदोस्तद्द्वयोरात्मसेवा-
सौख्यं दातुं समाना सुरधुनि विदिता नातितप्तातिशीता ॥२१॥

संक्रान्तौ पुष्यवन्तौ जननि तव जले कान्तियुक्तावुभौ ता
वेको घस्रे तदन्यो निशि च सहचरावेककाले तथा चेत् ।
त्वत्ताटंकोपमानत्वमपि खलु तदा सम्भजे तां सुखेने-
त्येवं मन्ये तयोर्हि श्रुतिशिखरगतो नोर्यमा क्वापि गङ्गे ॥२२॥

एषामग्रं श्रुतीऽयं दिव इह जगतां भूम्युपर्यम्बु गङ्गे
भानोरभ्राच्च वृष्टिर्वृषनिनदि यथा सानुना सस्वनं यत्।
मातेवार्तं शिशुं स्वं स्तनपमिति मुदा वत्सलत्वेन वत्सं,
प्राप्तं कामप्रसूर्गौरिव तु जनमिमं लक्ष्मणं यातु तत्ते ॥२३॥

नित्यं स्वर्णोदयाढ्या कनकगिरिशिरःप्रान्तसञ्चारकर्त्री,
गाङ्गेयोर्मिप्रगल्भा स्वयमपि सततं तत्स्वरूपैव जाता।
गङ्गे लक्ष्मीस्त्वमेव स्फुरदमलहरिद्वारवक्षोधिवासा,
सङ्गे या वै प्रयागे प्रसरसि नगरे विश्वनाथस्य मोदात् ॥२४॥

कैवल्यार्थं भ्रमन्तो दिशि दिशि बहवः कर्मिणो ज्ञानिनोऽन्ये
गङ्गे मुक्तिर्न केषामिति कपिलपतञ्जल्यभिव्यक्तमार्गैः।
क्रोशन्तोप्युत्तरन्ते न ययुरपि गतास्त्वत्तटेऽन्यत्र खिन्नान्-
काश्यां प्राप्तानपि त्वं प्रणयितुमिवत्युत्तराभ्युन्मुखी किम् ॥२५॥

सद्यो मोक्षप्रदाहं तदिति कथयितुं योत्तराभ्युन्मुखीति,
स्थाने केदारवर्ये किमिति समुदिता श्रोतसा तद्धि जाने।
केदारेशोपि मज्जं मम समकृपया मुक्तिकान्तामुपेया-
दित्थं गौरीसमक्षं त्वमिह तु सकलान्सूचयन्तीव गङ्गे ! ॥२६॥

तद्गौरीस्थानतोग्रे सविधविषयगान्पावयित्वा नितान्तं,
सम्प्राप्ता तारकेशा तवतरलतरङ्गैः कृतं तारकेशम्।
तारं यत्कन्तवास्मिन्शमिति विवृतितः सूचयन्तीव गङ्गे !
तारं तारं तरङ्गैरिति बहुलतया तर्कयामि क्षमस्व ॥२७॥

त्वं साक्षत्तारकात्मा शिरसि च जगतां तारकस्यापि नित्यं,
संस्थित्वा तारकेशेनस्सहसुपया तारकेशेऽपि गङ्गे।
प्रासैवात्रापि काश्यां सुतरललहरीभिः पुनस्तारकेशं
सर्वं ते तारकेड्यं पुनरपि किमतस्तारकारातिधृत्वम् ॥२८॥

वलाच्चक्रजातं जयतु तदमृतं पुष्करिण्यास्तवेदं,
यत्साम्यं नाण्वमस्ति त्रिदशधुनि कदाप्यन्यया पुष्करिण्या।
त्वद्भर्तुः कर्णभूषा फणिपतितमणिछब्यभिव्यक्तमूर्त्या,
कस्माज्जायेत तद्वै प्रणतिपरतया लीनयान्तस्त्वदग्रे ॥२९॥

मातर्गङ्गे किमर्थं प्रविशसि मणिकर्ण्यां त्वमेत्यापि दूरात्
जाने भर्तुः श्रुतिस्थं च्युतमिह तु ततो लोभतोन्वेष्टुमेव।
नैतत्संभाव्यमस्ति त्वयि मणिवसतौ रत्नसानौ स्थितायां
मन्नाथोक्तं श्रुतं यद्रहसि न, वदेत्य्वेव वक्तुं समर्थे ॥३०॥

गङ्गे यावत्स्थिते स्ते श्रुतिरपि भजते संस्थितिं तावदेव,
प्राणेशेष्टश्रुतिभ्रष्टचपलमणिकर्ण्यात्मसङ्गः किमद्य ।
जाने तद्भ्रष्टलोकानपि समकृपयोद्धर्त्तुमुत्कण्ठितेति,
प्रागेवार्या विदग्धा भविकविधिविधौ सत्वरन्ते त्वरन्ते ॥३१॥

आनन्दारण्यपूर्यान्दयितमुपगतं स्वस्थलाद्दान्तमुग्रं,
प्रालेयात्मीयगोत्रादधिकजववशात्प्रस्थितैका प्रयागम् ।
गङ्गे मृत्युञ्जयं तं स्वयमपि चतुराऽकर्ण्य रक्तं श्मशाने,
भीता साक्ष्ये नु वाचा सहयमभगिनीमुन्नमय्यागतासि ॥३२॥

गङ्गे ब्रह्मात्मभावं प्रगटयसि समन्तात्समत्वात्त्वमेका,
यत्स्नानात्स्पर्शनाद्दर्शनत उदकसम्प्राशनात्संस्मृतेर्वा ।
अन्धान्पंगूञ्जडात्मस्वप्रकृतिबधिरान्म्लेच्छचण्डालपापा-
नन्यान्सर्वान् द्विजिह्वान्यशुखगजलजान्ब्रह्मरूपान्करोषि ॥३३॥

शास्त्रश्रुत्योः शमादेः श्रवणमननयोर्योगयागादिकानां,
नापेक्षा न प्रयत्नस्तपसि च नियमे मास्तु मैत्र्यादिलाभः ।
वैराग्यं वाधिकारं सुरधुनि खलु नापेक्ष्यसेत्रावगाहै-
राचण्डालं त्वमेका जडपशुवयसां यादसां मुक्तिदासि ॥३४॥

ऋग्वेदोग्निं यदीयं क्रतुमपि च यजुस्तं पुनःसामवेदः
प्रारम्भे स्तौत्यबुध्वा यदमृतमहसा लुप्यतेसौनवर्ण्यः ।
शन्नोदेवीत्यथर्वश्रुतिरतिचतुरा तेमृतं वर्ण्यमाप्त्वा,
गङ्गे तद्रूपिणीं त्वां त्वदमृतलहरीं वर्णयत्येव युक्तम् ॥३५॥

प्रारम्भे पीडितोग्निश्रुतिभिरिति सदा पीड्यतेम्बुप्रकर्षै-
र्मातर्भावत्करूपैः शमदमदलहर्येति युक्तं ब्रवीमि ।
गङ्गे वेदप्रमाणप्रकृतिरसि खलु ब्रह्मविष्ण्वीशवन्द्या
शन्नोदेवीति वेद्या प्रतिदिनममृतं यामवत्येव दत्ते ॥३६॥

एकैकेषां सुराणां सुसदसि वहुलास्त्वत्कृपातस्तु जाता
मुक्तानां कोटयोपि प्रतिदिनमधिकं सम्प्रवृष्टाः समृद्ध्या ।
दृष्ट्वैवं तत्समग्रं सुरधुनि शरणं त्वामगात्प्रेतराजो
ह्रीणः स्वं सद्ममुक्तागमविरहितयालोच्य यः किं यमोऽत्र ॥३७॥

सम्प्रज्ञातो यमेनासननियमवता प्राणबन्धेन सृष्ट-
प्रत्याहारेण सम्यग्हृदयधरणतो ध्येयधाराप्रवाहः ।
गङ्गे जातक्षणेनेश्वर इति सयमेशस्तवाग्रे स्वमूर्त्या
ब्रह्म त्वां किं विदित्वा शरणमुपगतस्त्वत्र यं द्रष्टुमाप्ता ॥३८॥

एका त्वं पञ्चगङ्गेत्यपि कथमभिधां धत्स इत्यत्र हेतुं,
पञ्चानां तन्नदीनां समुदयत इति प्राहुरेतन्न हृद्यम्।
पञ्चत्वं कीदृगस्तीत्यनुभवितुमिवाणुष्विदन्दुःखदं यत्-
तादृक्त्वे स्वेन हीनेत्यथ बत दृढता जीवनेप्यादृता किम्।।३९।।

पञ्चब्रह्मादिकं गच्छति यदिदमतः पञ्चगं ब्रह्मपूर्णं
तस्मिंन्या गच्छतीति त्रिभुवनजननी चित्स्वरूपादिशक्तिः।
सैव त्वं पञ्चगङ्गेति विवरणवशात्पञ्चगङ्गेति गङ्गे
यस्मात् त्रेधा पुराणि ब्रजसि यदधिकं त्रैपुरे तापनीये।।४०।।

पूर्वं त्रैविक्रमागश्चरणहत कमण्डल्वभिस्कंददम्भो-
विन्दोर्लाभाद्वलिं तं श्रमरहिततया माधवोऽऽयोजयत्सः।
तेनायं बिन्दुपूर्वः स्फुरति तव पुरो याचते तत्प्रलब्ध्यै
भूयस्त्वां वेण्यभीष्टामिति यमिहपुराऽहुश्च वेणीति गङ्गे।।४१।।

साष्टाङ्गैः पञ्चगङ्गे प्रणिहितसुधिया योगिभिर्ध्यायसे या
पञ्चाङ्गैः सुन्दरीभिः प्रणतिपरतया पूज्यसे धूपदीपैः।
सर्वाङ्गैः स्तुत्यगङ्गैः स्तवसुरसतया श्लोक्यसे लक्ष्मणेन,
श्लोकैस्त्वं सञ्चरन्ती सविधविषयतः कौतुकैर्मुक्तिदास्याः।।४२।।

मुक्तौघानां प्रसूतिस्थलमतिरुचिरा सर्वदैव प्रसन्ना
स्वच्छक्षीरात्मरूपा जगति विजयसे या पयोधिप्रिया सा।
त्यक्त्वा यन्मानसं स्वं विविधविधिविधं श्रीदपुण्यैरपीड्यं,
संसेव्या त्वं द्विजेन्द्रैः परमपदधरैर्हंसवर्यैर्हि गङ्गे।।४३।।

मातर्गङ्गेस्तवर्ष्मण्यपि सुविनिहिता या प्रयागादितोग्रे
कालिन्दी सा किमर्थं पुनरपि च भवत्या प्रमुक्तेति सर्वे।
आहुस्तस्याः प्रमादादिति मम न मतं यत्प्रयागाप्तपुण्यैः,
प्राप्ता त्वं त्वत्प्रभावादिव यमभगिनी प्राप्तमुक्तिर्गतैव।।४४।।

त्वत्तुल्या वाधिकास्ति क्वचिदपि न भवेन्नात्र गङ्गे तरङ्गिण्-
येवं सर्वे वदन्तीति वितथमिदमित्येव वच्मि स्फुटं यत्।
त्वत्तोया कीर्त्तिगङ्गा तवशतपथगा विश्वतो व्यापिकेयं
मुक्तोद्धारानुरत्नाकरमपि च गताऽनन्तवक्त्रैः सुमेरोः।।४५।।

गङ्गे त्वं श्रीमतीति प्रसभमभिवदाम्यद्भुतं नात्रपूर्वं
प्रोद्भूता रत्नसानौ वससि च जगतामीश्वरस्योत्तमाङ्गे।
राज्ञा साकं प्रगल्भा रजतहिमगिरे रत्नगर्भाग्र्यदेशे
कृत्वा साङ्गं प्रयागं विलससि मणिकर्ण्यादिरत्नाकरान्ताम्।।४६।।

सर्वान्तर्ध्वान्तहन्त्री स्फुरदमलरुचिः पातकानां निहन्त्री
स्वप्राप्तिस्वावगाहप्रभृतिसु भजनोपास्तिभिर्मोक्षदात्री ।
ब्रह्मत्वाधानधात्री सदमृतसुखचित्सत्यमात्रैककर्त्री
गङ्गे त्वं ब्रह्मविद्येव जयसि जगतां सिद्धमात्रात्मगात्री ।।४७।।

गङ्गे तुङ्गैस्तरङ्गैरिव पदनखरैः श्वेतशैलाग्रघोरै-
भिन्नेनःकुम्भिकुम्भस्थलकलशगलत्स्थूलमुक्तालिदानैः ।
हैमाद्रिप्रान्ततोग्रे स्फुरदभिगमनाऽनन्दवह्यग्न्यतोया
पञ्चास्येत्येव पञ्चास्यशिरसि न सहस्राननैस्तप्रियात्वम् ।।४८।।

गङ्गे वक्त्रैः सहस्त्रैरतिमधुररसैः क्षारसिन्धुप्रवेगात्
क्षारत्वं त्वं जहीहि द्रुतमिति जडधिं किं नु वक्तुं प्रयाता ।
एतन्माधुर्यतः किं फलमिति वद चेदीश्वरस्योत्तमाङ्गे,
स्थानं मे पश्य सद्यस्त्वमपि भव तथा नेत्यपेयोसि तर्हि ।।४९।।

मातः का वा दयालुः खलुः जयति भवत्या समानासमाना
मेरोरूड्डीय शम्भोः शिरसि हिमगिरौ भूमिमेत्यापि दूरे ।
नानोग्रारण्यघोरा चलदरददरीर्लङ्घयित्वा प्रयागं
काशीमग्रेपि गङ्गे नु सगरममृतीकर्तुमेवागतासि ।।५०।।

मूलाधारात्सुषुम्नासितनुषुदहराकाशतोप्यूर्ध्वमूर्ध्वं
प्रोल्लंध्याणुं तदाज्ञां प्रसरसि महसा ब्रह्मपूर्यां हि गङ्गे ।
पीताम्भोजे सहस्रच्छदवति च शिवस्यापि मौलौ शयाना
पूर्णब्रह्मात्मशक्त्या विहरसि किमतस्त्वन्महत्वं वदामः ।।५१।।

भागीरथ्यास्तवेदृग्धृतसुखनिजकृत्यं वरं मूर्ध्नि धार्यं
श्रीशेनाप्राप्तरूप्यं स्थिररससदलं कृत्यभीष्टं जनानाम् ।
कञ्जोन्मत्तालिहृद्यं जगति यदमृतं स्त्रग्धरानर्घ्यरत्नं
गाङ्गेयैः स्वैस्तरङ्गै र्जयति चिरचमत्कारकार्यम्ब गङ्गे ।।५२।।

गाङ्गेयैवर्णवर्ण्याकरजठरविलादुद्धृतैर्लक्ष्मणार्यैः
दीप्त्योजःसम्प्रसादप्रभृतिशुभगुणैर्ध्यानशाणप्रसज्जैः ।
नानार्थालङ्कृतीड्यैः सहृदयहृदयग्राहिभिः श्लोकरत्नैः,
कृत्वा गङ्गेर्पितेयं जननि तव नुतिस्त्रग्धरानन्ददा या ।।५३।।

शाकेषण्णंदसप्तक्षितिसुपरिमिते वत्सरे भावसंज्ञे
कार्तिक्याङ्गौरपक्ष्येदिवसमणितिथाविन्दुवारे प्रभाते ।
कृष्णाद्यक्षेत्रवायी प्रथमवसतिना सामकोपाह्वयेन
श्रीकाश्यां लक्ष्मणेन व्यरचि सुरधुनीस्तोत्रसद्रत्नहारः ।।५४।।

पञ्चाशच्छ्लोकरत्नैर्विरचितममलं स्तोत्रसद्रत्नहारं,
कण्ठे कृत्वानुभक्त्या पठति यदि पुनः श्रावयेद्वा शृणोति ।
स्नात्वा वा यत्र कुत्राप्यमरधुनि लभेत् त्वज्जलस्नानपुण्यं,
त्वच्छ्रोतःस्नानकाले यदि तु किमु फलं मुक्तिदे तन्न जाने ।।५५।।

काशीमुपेत्य सुरराजतरङ्गवत्यै यो लक्ष्मणेन रचितोथ समर्पितोऽपि ।
गङ्गाप्रसाद इति तत्स्तवरत्नहारः कण्ठे विधाय सुधिया हृदये नु धार्यः ।।५६।।

वाक्कायचित्तकरणप्रकृतिस्वभावबुद्ध्यात्मभिः सदसतोरपि सङ्गमेन ।
यद्यत्कृतं यदपि भव्यमशेषमातर्यद्यत्करोम्यखिलमस्तु तवार्पणं तत् ।।५७।।

**इति श्री सामकवेणीमाधवाचार्यात्मजादिसगुणब्रह्मोपासकद्वैतसमानमानस-लक्ष्मणाचार्यविरचितगङ्गास्तवरत्नहारः सम्पूर्णः । संवत् १२२८**
**शुभमस्तु गङ्गार्पणमस्तु । श्री सीताराम ।**



# गङ्गासहस्त्रनामस्तोत्रम्[1]

**।। श्रीगणेशाय नमः ।। श्रीगंगायै नमः ।।**

**अगस्त्य उवाच ।**

विना स्नानेन गङ्गाया नृणां जन्म निरर्थकम् ।
उपायान्तरमस्त्यन्यद्येन स्नानफलं लभेत् ।।१।।
अशक्तानां च पंगूनामालस्योपहतात्मनाम् ।
दूरदेशान्तरस्थानां गंगास्नानं कथं भवेत् ? ।।२।।
दानं वाऽथ व्रतं वाऽथ मन्त्रःस्तोत्रं जपोऽथवा ।
तीर्थान्तराभिषेको वा देवतोपासनं तु वा ।।३।।
यद्यस्ति किं चित्षड्वक्त्र गङ्गास्नानफलप्रदम् ।
विधानान्तरमत्रेश तद्वद प्रणताय मे ।।४।।
त्वत्तो न वेद स्कंदान्यो गङ्गागर्भसमुद्भव ।
परं स्वर्गतरंगिण्या महिमानं महामते ।।५।।

**स्कन्द उवाच ।**

सन्ति पुण्यजलानीह सरांसि सरितो मुने ।
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ।।६।।
दृष्टिप्रत्ययकारीणि महामहिमभाञ्ज्यपि ।
परं स्वर्गतरंगिण्याः कोटयंशोपि न तत्र वै ।।७।।
अनेनैवानुमानेन बुध्यस्व कलशोद्भव ।
दध्रे गङ्गोत्तमांगेन देवदेवेन शंभुना ।।८।।
स्नान कालेऽन्यतीर्थेषु जप्यते जाह्नवीजलैः ।
विना विष्णुपदां क्वान्यत्समर्थमघशोधने ।।९।।
गङ्गास्नानफलं ब्रह्मन् गङ्गायामेव लभ्यते ।
यथा द्राक्षाफलस्वादो द्राक्षायामेव नान्यतः ।।१०।।
अस्त्युपाय इह त्वेकः स्याद्येनाविकलं फलम् ।
स्नानस्य देवसरितो महागुह्यतमो मुने ।।११।।
शिवभक्ताय शांताय विष्णुभक्तिपराय च ।
श्रद्धालवेत्वास्तिकाय गर्भवासमुमुक्षवे ।।१२।।
कथनीयं न चान्यस्य कस्यचित्केनचित्क्वचित् ।
इदं रहस्यं परमं महापातकनाशनम् ।।१३।।

---

१. विषयः– स्तोत्रम्, स.भ.पु.पा.लि.सं. १७३४९, पत्र १-९, लिपिः– वंग, संवत् १७२८ रचनाकालः ।

महाश्रेयस्करं पुण्यं मनोरथकरं परम्।
द्युनदीप्रीतिजनकं शिवसन्तोषसन्ततिः ॥१४॥
नाम्नां सहस्रं गंगायाः स्तवराजेषु शोभनम्।
जप्यानां परमं जप्यं वेदोपनिषदा समम् ॥१५॥
जपनीयं प्रयत्नेन मौनिना वाचकं विना।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ॥१६॥

**श्रीस्कंद उवाच।**

ॐ गङ्गा देव्यै नमः। ॐ काररूपिण्यजराऽतुलाऽनंतामृतस्रवा।
अत्युदाराऽभयाशोकाऽलकनन्दाऽमृताऽमला ॥१७॥
अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराजिता ॥१८॥
अनाथनाथाऽभीष्टार्थसिद्धिदाऽनंगवर्द्धिनी।
अणिमादिगुणाधाराऽग्रगण्याऽलीकहारिणी ॥१९॥
अचिंत्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी।
अद्रिराजसुताऽष्टांगयोगसिद्धिप्रदाच्युता ॥२०॥
अक्षुण्णशक्तिरसुदाऽनन्ततीर्थाऽमृतोदका।
अनन्तमहिमाऽपाराऽनन्तसौख्यप्रदाऽन्नदा ॥२१॥
अशेषदेवतामूर्त्तिरघोराऽमृतरूपिणी।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ॥२२॥
अशेषविघ्नसंहर्त्रीत्वशेषगुणगुंफिता।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ॥२३॥
अभिरामाऽनवद्यांग्यनन्तसाराऽकलंकिनी।
आरोग्यदानंदवल्लीत्वापन्नार्त्तिविनाशिनी ॥२४॥
आश्चर्यमूर्त्तिरायुष्याह्याढ्याऽऽद्याऽऽप्रार्यसेविता।
आप्यायिन्याप्तविद्याऽऽख्या त्वानंदाऽऽश्वासदायिनी ॥२५॥
आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी।
इरावतीष्टदात्रीष्टा त्विष्टापूर्तिफलप्रदा ॥२६॥
इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा।
इज्याशीलसमिज्येष्ठा त्विन्द्रादिपरिवन्दिता ॥२७॥
इलालंकारमालेद्धात्विंदिरारम्यमन्दिरा।
इदिंदिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ॥२८॥
ईतिभीतिहरेड्याच त्वीड्यनीयचरित्रभृत्।
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी ॥२९॥

उदिताम्बरमार्गोस्त्रगलोकविहारिणी ।
उक्षोर्वरोत्पलोत्कुंभा उपेन्द्रचरणद्रवा ॥३०॥
उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रबर्द्धिनी ।
उद्वेगघ्न्युष्णशमनी उष्णरश्मिसुताप्रिया ॥३१॥
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्ज्जवहंत्यूर्जधरोर्जावती चोर्मिमालिनी ॥३२॥
उद्‌र्ध्वरेत:प्रियोर्ध्वाध्वाह्यूर्मिलोर्ध्वगतिप्रदा ।
ऋषिवृंदस्तुतर्द्धिश्च ऋणत्रयविनाशिनी ॥३३॥
ऋतंभरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी ॥३४॥
एधिताऽखिलधर्मार्थात्वेकैकामृतदायिनी ।
एधनीयस्वभावैज्यात्वेजिताशेषपातका ॥३५॥
ऐश्वर्यदैश्वर्य्यरूपाह्यैतिह्यंह्यैन्दवीद्युति: ।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥३६॥
ओष्ठामृतौन्नत्यदात्रीत्वौषधं भवरोगिणाम् ।
औदार्यचुंचुरौपेन्द्रीत्वौग्री ह्यौमेयरूपिणी ॥३७॥
अंबराध्ववहांऽवष्ठाम्बरमालांबुजेक्षणा ।
अंबिकांबुमहायोनिरंघोदान्धकहारिणी ॥३८॥
अंशुमाला ह्यंशुमती त्वंगीकृतषडानना ।
अंधतामिस्रहंत्र्यंधुरंजनाह्यंजनावती ॥३९॥
कल्याणकारिणी काम्या कमलोत्पलगंधिनी ।
कुमुद्वती कमलिनी कांति: कल्पितदायिनी ॥४०॥
कांचनाक्षी कामधेनु: कीर्तिकृत्क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफलाकर्मबंधविभेदिनी ॥४१॥
कमलाक्षी क्लमहरा कृशानुतपनद्युति: ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥४२॥
कामरूपा क्रियाशक्ति: कमलोत्पलमालिनी ।
कूटस्था करुणा कांता कूर्मयाना कलावती ॥४३॥
कमला कल्पलातका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दगा ॥४४॥
कालकूटप्रशमनी कदंबकुसुमप्रिया ।
कालिंदी केलिललिता कलकल्लोलमालिका ॥४५॥

क्रांतलोकत्रया कंडू: कंडूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेंन्दुधारिणी ॥४६॥
खेखेलगामिनी खस्था खडेंदुतिलकप्रिया ।
खेचरी खेचरीवन्द्या ख्याति: ख्यातिप्रदायिनी ॥४७॥
खंडितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैन:कन्दसन्दोहा खड्गखट्वांगखेटिनी ॥४८॥
खरसन्तापशमनी खनि: पीयूषपाथसां ।
गंगा गंधवती गौरी गंधर्वनगरप्रिया ॥४९॥
गम्भीराङ्गी गुणमयी गतातंका गतिप्रिया ।
गणनाथांबिका गीता गद्यपद्यपरिष्टुता ॥५०॥
गांधारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥५१॥
गोत्रप्रवर्द्धिनी गुण्या गुणातीता गुणाग्रणी: ।
गुहाम्बिका गिरिसुता गोविन्दांघ्रिसमुद्भवा ॥५२॥
गुणनीयचरित्रा च गायत्री गिरिशप्रिया ।
गूढरूपा गुणवती गुर्वी गौरववर्द्धिनी ॥५३॥
ग्रहपीडाहरा गुंद्रा गरघ्नी गानवत्सला-
घर्महन्त्री घृतवती घृततुष्टिप्रदायिनी ॥५४॥
घंटारवप्रिया घोराऽघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥५५॥
घातुकाघूर्णितजला घृष्टपातकसंतति: ।
घटकोटिप्रपीतापा घटिताशेषमंगला ॥५६॥
घृणावती घृणनिधिर्घस्मरा घूकनादिनी ।
घुसृणा पिंजरतनुर्घर्घरा घर्घरस्वना ॥५७॥
चंद्रिका चन्द्रकान्ताम्बुश्चंचलापाचलद्युति: ।
चिन्मयी चित्तिरूपा च चंद्रायुतशतानना ॥५८॥
चांपेयलोचनाचारुश्चार्वङ्गी चारुगामिनी ।
चार्याचारित्रनिलया चित्रकृच्चित्ररूपिणी ॥५९॥
चम्पूश्चन्दनशुच्यंबुश्चर्चनीया चिरस्थिरा ।
चारुचम्पकमालाढ्या चमिताशेषदुष्कृता ॥६०॥
चिदाकाशवहाचिन्त्या चंचच्चामरवीजिता ।
चोरिताशेषवृजिना चरिताशेषमण्डला ॥६१॥

छेदिताखिलपापौघा छद्मघ्नी छलहारिणी ।
छन्नातिविष्टपातला छेटिताशेषबंधना ।।६२।।
छुरितामृतधारौघा छिन्नैनाश्छंदगामिनी ।
छत्रीकृतमरालौघा छटीकृतनिजामृता ।।६३।।
जाह्नवीज्या जगन्माता जप्याजंघालवीचिका ।
जया जनार्द्दनप्रीता जुषणीया जगद्धिता ।।६४।।
जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी ।
जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी ।।६५।।
जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।
जगदानंदजननी जलजा जलजेक्षणा ।।६६।।
जनलोचनपीयूषा जटातटविहारिणी ।
जयती जंजपूकघ्नी जनितज्ञानविग्रहा ।।६७।।
झल्लरी वाद्यकुशला झलज्झालजलावृता ।
झिण्टीशवंद्या झांकारकारिणी झर्झरावती ।।६८।।
टीकिताखिलपाताला टंकिकैनोद्रिपाटने ।
टंकारनृत्यत्कल्लोला टीकनीयमहातटा ।।६९।।
डंबरप्रवहाडीनराजहंसकुलाकुला ।
डमड्डुमरुहस्ता च डामरोक्तमहांडका ।।७०।।
ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ।
ढुंढिविघ्नेशजननी ढणड्डुणितपातका ।।७१।।
तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ।
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता ।।७२।।
तापत्रितयसंहर्त्री तेजोबलविवर्द्धिनी ।
त्रिलक्ष्या तारिणी तारा तारापतिकरान्विता ।।७३।।
त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।
तुष्टा छेत्री तीर्थमाता त्रिविक्रमपदोद्भवा ।।७४।।
तपोमयी तपोरूपा तपःस्तोमफलप्रदा ।
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्वरूपिणी ।।७५।।
त्रैलोक्यसुन्दरी तुर्या तुर्यातीतपदप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ।।७६।।
तेजोगर्भा तपःसारा त्रिपुरारिशिरोगृहा ।
त्रयी स्वरूपिणी तन्वी तपनांगजभीतिनुत् ।।७७।।

तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥७८॥
दारिद्र्यदमनी दक्षा दुष्प्रेक्ष्या दिव्यमंडना ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥७९॥
दर्शितानेककुतुका दुष्टदुर्मददुःखहृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ॥८०॥
दंदशूकविषघ्नी च दारिताघौघसंततिः ।
द्रुता देवद्रुमच्छन्ना दुर्वाराघविलापिनी ॥८१॥
दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रिया देवा दिक्पालपददायिनी ॥८२॥
दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्जिता ।
दुग्धांबुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥८३॥
द्युनदी दीनशरणं देहिदेहनिवारिणी ।
द्राघीयसी दाघहंत्री दितपातकसंततिः ॥८४॥
दूरदेशान्तरचरी दुर्गमा देववल्लभा ।
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ॥८५॥
दुरासदा दानशीला द्राविणी द्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ॥८६॥
दानसारा दयासारा द्यावाभूमिविगाहिनी ।
दृष्टा दृष्टफलप्राप्तिर्देवतावृदवंदिता ॥८७॥
दीर्घव्रतादीर्घदृष्टिर्दीप्ततोया दुरालभा ।
दंडयित्री दंडनीतिर्दुष्टदण्डधरार्चिता ॥८८॥
दुरोदरघ्नीदावार्चिर्द्रवद्रव्यैकशेवधिः ।
दीनसन्तापशमनी दात्रीदवथुवैरिणी ॥८९॥
दरीविदारणपरा दान्ता दांतजनप्रिया ।
दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी ॥९०॥
धर्मद्रवा धर्मधुराधेनुधीराधृतिर्ध्रुवा ।
धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ॥९१॥
धर्मोर्मिवाहिनीधुर्याधात्री धात्रीविभूषणा ।
धर्मिणी धर्मशीला च धर्मिकोटिकृतावना ॥९२॥
ध्यातृपापहरा ध्येया धावनी धूतकल्मषा ।
धर्मधारा धर्मसारा धनदा धनवर्द्धिनी ॥९३॥

धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया ।
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ॥९४॥
धर्मलभ्याधर्मजलाधर्मप्रसवधर्मिणी ।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ॥९५॥
धूर्धूर्जटिजला संस्था धन्या धीर्धारणावती ।
नंदानिर्वाणजननी नन्दिनीनुन्नपातका ॥९६॥
निषिद्धविघ्ननिचया निजानंदप्रकाशिनी ।
नभोगणचरी नूतिर्नम्या नारायणी नुता ॥९७॥
निर्मलाविमलाख्याना नाशिनीतापसम्पदाम् ।
नियतानित्यसुखदा नानाश्चर्य महानिधिः ॥९८॥
नदीनदसरोमाता नायिका नाकदीर्घिका ।
नष्टोद्धरणधीरा च नंदनानंददायिनी ॥९९॥
निर्णिक्ताशेषभुवना निःसंगा निरुपद्रवा ।
निरालंबा निष्प्रपंचा निर्णाशितमहामला ॥१००॥
निर्मलज्ञानजननी निःशेषप्राणितापहृत् ।
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरंजना ॥१०१॥
निष्ठावती निरातंका निर्लेपा निश्चलात्मिका ।
निरवद्या निरीहा च नीललोहितमूर्धगा ॥१०२॥
नन्दिभृंगिगणस्तुत्या नगानन्दा नगात्मजा ।
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ॥१०३॥
पुण्यप्रदा पुण्यगर्भा पुण्या पुण्यतरंगिणी ।
पृथुः पृथुफला पूर्णा प्रणतार्तिप्रभंजिनी ॥१०४॥
प्राणदा प्राणिजननी प्राणेशी प्राणरूपिणी ।
पद्मालया पराशक्तिः पुरजित्परमप्रिया ॥१०५॥
परापरफलप्राप्तिः पावनी च पयस्विनी ।
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा ॥१०६॥
पुराणपठिता प्रीता प्रणवाक्षररूपिणी ।
पार्वती प्रेमसंपन्ना पशुपाशविनाशिनी ॥१०७॥
परमात्मस्वरूपा च परब्रह्मप्रकाशिनी ।
परमानन्दनिष्पंदा प्रायश्चित्तस्वरूपिणी ॥१०८॥
पानीयरूपनिर्वाणा परित्राणपरायणा ।
पापेन्धनदवज्वाला पापारिः पापतापनुत् ॥१०९॥

परमैश्वर्यजननी प्रज्ञा प्राज्ञा परापरा।
प्रत्यक्षलक्ष्मी: पद्माक्षी परव्योमामृतस्रवा ॥११०॥
प्रसन्नरूपा प्रणिधि: पूता प्रत्यक्षदेवता।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलु: ॥१११॥
पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी।
परर्द्धिदा पुष्टिकरी पथ्या पूर्त्ति: प्रभावती ॥११२॥
पुनाना पीतगर्भघ्नी पापपर्वतनाशिनी।
फलिनी फलहस्ता च फुल्लांबुजविलोचना ॥११३॥
फालितैनोमहाक्षेत्रा फणिलोकविभूषणम्।
फेनच्छलप्रणुन्नैना: फुल्लकैरवगंधिनी ॥११४॥
फेनिलाच्छांबुधाराभाफुडुच्चाटितपातका।
फाणितस्वादुसलिला फाटंपथ्यजलाविला ॥११५॥
विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया।
ब्रह्मण्या ब्रह्मकृद्ब्राह्मी ब्रह्मिष्ठा विमलोदका ॥११६॥
विभावरी च विरजा विक्रान्तानेकविष्टपा।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया ॥११७॥
विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी।
विपाशावैबुधीवेद्यावेदाक्षररसस्रवा ॥११८॥
विद्या वेगवती वन्द्या बृंहणी ब्रह्मवादिनी।
वरदा विप्रकृष्टा च वरिष्ठानयशोधनी ॥११९॥
विद्याधरी विशोका च वयोवृन्दनिषेविता।
बहूदका बलवती व्योमस्था विबुधप्रिया ॥१२०॥
वाणी वेदवती वित्ता ब्रह्मविद्यातरंगिणी।
ब्रह्माण्डकोटिव्याप्तांबुब्रह्महत्यापहारिणी ॥१२१॥
ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्द्धिनी।
विलाशिसुखदावैश्या व्यापिनी चष्टषारणि: ॥१२२॥
वृषांकमौलिनिलया विपन्नार्त्तिप्रभंजिनी।
विनीता विनता ब्रघ्नतनया विनयान्विता ॥१२३॥
विपंचीवाद्यकुशला वेणुश्रुतिविचक्षणा।
वर्चस्करी बलकरी बलोन्मूलितकल्मषा ॥१२४॥
विपाप्मा विगतातंका विकल्पपरिवर्ज्जिता।
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबंधना ॥१२५॥

व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत् ।
वसुधारा वसुमती विचित्रांगी विभावसुः ॥१२६॥
विजया विश्वबीजं च वामदेवी वरप्रदा ।
विषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी ॥१२७॥
भव्या भोगवती भद्रा भवानी भूतनादिनी ।
भूतधात्री भयहरा भक्तदारिद्र्यघातिनी ॥१२८॥
भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा ।
भागीरथी भानुमती भाग्यं भोगवती भृतिः ॥१२९॥
भवप्रिया भवद्वेष्टी भूतिदा भूतिभूषणा ।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥१३०॥
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा ।
भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरा ॥१३१॥
भंजितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।
भिक्षणीया भिक्षुमाता भावाभावस्वरूपिणी ॥१३२॥
मंदाकिनी महानन्दा माता मुक्तितरंगिणी ।
महोदया मधुमती महापुण्या मुदाकरी ॥१३३॥
मुनिस्तुता मोहहन्त्री महातीर्था मधुस्रवा ।
माधवी मानिनी मान्या मनोरथपथातिगा ॥१३४॥
मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता ।
महावेगवती मेध्या महामहिमभूषणा ॥१३५॥
महाप्रभावा महती मीनचञ्चललोचना ।
महाकारुण्यसम्पूर्णा महर्द्धिश्च महोत्पला ॥१३६॥
मूर्त्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा ।
मुक्ताफलापनेपथ्या मनोनयननन्दिनी ॥१३७॥
महापातकराशिघ्नी महादेवार्द्धहारिणी ।
महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी ॥१३८॥
महापुण्योदयप्राप्या मायातिमिरचन्द्रिका ।
महाविद्या महामाया महामेधा महौषधम् ॥१३९॥
मालाधरी महोपाया महोरगविभूषणा ।
महामोहप्रशमनी महामंगलमंगलम् ॥१४०॥
मार्त्तंडमण्डलचरी महालक्ष्मीर्मदोज्झिता ।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता ॥१४१॥

योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता ।
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ॥१४२॥
यमिसेव्या योगयोनि[१]र्योगिनी युक्तबुद्धिदा ।
योगज्ञानप्रदा युक्ता यमाद्यष्टांगयोगयुक् ॥१४३॥
यन्त्रिताद्यौघसञ्चारी यमलोकनिवारिणी ।
यातायातप्रशमनी यातनानामकृन्तनी ॥१४४॥
यामिनीशहिमाच्छोदा युगधर्मविवर्जिता ।
रेवतीरतिकृद्रम्या रत्नगर्भा रमारतिः ॥१४५॥
रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी ।
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी ॥१४६॥
रत्नार्ची रुद्ररमणी रागद्वेषविनाशिनी ।
रमा रामा रम्यरूपारोगिजीवातुरूपिणी ॥१४७॥
रुचिकृद्रोचनी रम्या रुचिरा रोगहारिणी ।
राजहंसासनवती राजत्कल्लोलराजिका ॥१४८॥
रामणीयकरेखा च रुजारारोगशोषिणी ।
राका रंकार्तिशमनी रम्या रोलंबराविणी ॥१४९॥
रागिणी रंजितशिवा रूपलावण्यशेवधिः ।
लोकप्रसू र्लोकवन्द्या लोलत्कल्लोलमालिनी ॥१५०॥
लीलावती लोकभूमिर्लोकलोचनचन्द्रिका ।
लेखस्रवन्ती लटभा लघुवेगा लघुत्वहृत् ॥१५१॥
लास्यत्तरंगहस्ता च ललितालापभंगिगा ।
लोकबंधुर्लोकधात्री लोकोत्तरगुणार्जिता ॥१५२॥
लोकत्रयहितालोका लक्ष्मीर्लक्षणलक्षिता ।
लीलालक्षितनिर्वाणा लावण्यामृतवर्षिणी ॥१५३॥
वैश्वानरी वासवेड्या वंध्यत्वपरिहारिणी ।
वासुदेवांघ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥१५४॥
शुभावती शुभफला शांतिः शंतनुवल्लभा ।
शूलिनी शैशववयाः शीतलाऽमृतवाहिनी ॥१५५॥
शोभावती शीलवती शोषिताशेषकिल्विषा ।
शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ॥१५६॥
शक्तिः शशांकविमला शमनस्वसृसंमता ।
शमा शमनमार्गघ्नी शितिकंठमहाप्रिया ॥१५७॥

शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता ॥१५८॥
शुद्धविद्या शुभावर्त्ता श्रुतानन्दा श्रुतिस्तुतिः ।
शिवेतरघ्नी शबरी शांबरीरूपधारिणी ॥१५९॥
श्मशानशोधनी शांता शश्वच्छतधृतिष्टुता ।
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ॥१६०॥
शंसनीयचरित्रा च शातिताशेषपातका ।
षड्गुण्यैश्वर्यसम्पन्ना षडंगश्रुतिरूपिणी ॥१६१॥
षंढताहारिसलिला [1]ष्ट्यायन्नदनदीशता ।
सरिद्वरा च सुरसा सुभ्रा च सुरदीर्घिका ॥१६२॥
स्वःसिंधुः सर्वदुःखघ्नी सर्वव्याधिमहौषधीः ।
सेव्यासिद्धिः सतीसूक्तिः स्कंदसूश्च सरस्वती ॥१६३॥
संपत्तरंगिणी स्तुत्या स्थाणुमौलिकृतास्पदा ।
स्थैर्यदा सुभगा सौख्या स्त्रीषुसौभाग्यदायिनी ॥१६४॥
स्वर्गनिःश्रेणिका सूक्ष्मा स्वधा स्वाहा सुधाजला ।
समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी ॥१६५॥
स्मृताघहारिणी सीता संसाराब्धितरंडिका ।
सौभाग्यसुन्दरी संध्या सर्वसारसमन्विता ॥१६६॥
हरप्रिया हृषीकेशी हंसरूपा हिरण्मयी ।
हृताघसंघा हितकृद्धेला हेलाघवर्गहृत् ॥१६७॥
क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा ।
इति नाम सहस्रं हि गंगायाः कलशोद्भव ।
कीर्त्तयित्वा नरः सम्यग् गङ्गास्नानफलं लभेत् ॥१६८॥
सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ।
सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ॥१६९॥
श्रद्धयाभीष्टफलदं चतुर्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोति ह्येकक्रतुफलं मुने ॥१७०॥
सर्वतीर्थेषु यः स्नातः सर्वयज्ञेषु दीक्षितः ।
तस्य यत् फलमुद्दिष्टं त्रिकालपठनात्सकृत् ॥१७१॥
सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषु वाडव ।
तत्फलं समवाप्नोति त्रिसन्ध्यं नियतः पठेत् ॥१७२॥

---

१. सन्दिग्धः पाठः ।

स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये।
तत्र सन्निहिता नूनं गंगा त्रिपथगा मुने ॥१७३॥
श्रेयोर्थी लभते श्रेयो साधनार्थी लभेद् धनम्।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥१७४॥
वर्षं त्रिकाल पठनाच्छ्रद्धया शुचिमानसः।
ऋतुकालाभिगमनादपुत्रः पुत्रवान्भवेत् ॥१७५॥
नाकालमरणं तस्य नाग्निचौराहिसाध्वसम्।
नाम्नासहस्रं गंगाया यो जपेच्छ्रद्धया मुने ॥१७६॥
गंगानामसहस्रं तु जप्त्वा ग्रामांतरं व्रजेत्।
कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाशुभेत्[1] ॥१७७॥
तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा।
यदा जप्त्वा व्रजेदेतत्स्तोत्रं ग्रामांतरं नरः ॥१७८॥
आयुरारोग्यजननं सर्वोपद्रवनाशनं।
सर्वसिद्धिकरं पुसां गंगानामसहस्रकम् ॥१७९॥
जन्मांतरसहस्रेषु यत्पापं सम्यगर्जितम्।
गंगानामसहस्रस्य जपनात्तत्क्षयं व्रजेत् ॥१८०॥
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पकः।
तत्संसर्गी भ्रूणहंता मातृहा पितृहा मुने ॥१८१॥
विश्वासघाती गरदः कृतघ्नो मित्रघातकः।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः ॥१८२॥
महापातकयुक्तोसंयुक्तोप्युपपातकैः।
मुच्यते सर्वदुःखेभ्यःस्तवस्यास्यानुकीर्तनात् ॥१८३॥
संवत्सरेण युक्तात्मा पठन् भक्तिपरायणः।
अभीप्सितां लभेत् सिद्धिं सर्वैः पापैः प्रमुच्यते ॥१८४॥
संशयाविष्टचित्तस्य धर्मविद्वेषिणोपि च।
दांभिकस्यापि हिंस्रस्य चेतो धर्मपरं भवेत् ॥१८५॥
वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः।
यत्फलं लभते ज्ञानी तदाप्रोत्यस्य कीर्त्तनात् ॥१८६॥
गायत्र्ययुतजप्येन यत्फलं समुपार्जितम्।
संकृत् पठनतः सम्यक् तदशेषमवाप्नुयात् ॥१८७॥

१. विशेत्- इति शु.पा.।

गां दत्त्वा वेदविदुषे यत्फलं लभते कृती।
तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ॥१८८॥
गुरुशुश्रूषणं कुर्वन्यावज्जीवं नरोत्तमः।
यत्पुण्यमर्जयेत्तद्धाग्वर्षं त्रिषवणं जपन् ॥१७९॥
वेदपारायणात् पुण्यं यदत्र परिपठ्यते।
तत्षण्मासेन लभते त्रिसंध्यं परिकीर्त्तनात् ॥१९०॥
गंगायाः स्तवराजस्य प्रत्यहं परिशीलनात्।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ॥१९१॥
यः कीर्त्तयेदनु दिनं गंगानामसहस्रकम्।
तत् समीपे सहचरी गंगादेवी सदा भवेत् ॥१९२॥
सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत्।
सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ॥१९३॥
सदाचारी स विज्ञेयः स शुचिस्तु सदैव हि।
कृतसर्वसुरार्चः स कीर्त्तयेद्य इमां स्तुतिम् ॥१९४॥
तस्मिंस्तृप्ते भवेत्तृप्ता जाह्नवी नात्र संशयः।
तस्मात्सर्वप्रयत्नेन गंगाभक्तं समर्चयेत् ॥१९५॥
स्तवराजमिमं गांगं शृणुयाद्यश्च वै पठेत्।
श्रावयेदथतद्भक्तान्दम्भलोभविवर्जितः ॥१९६॥
मुच्यते त्रिविधैः पापैर्मनोवाक्कायसंभवैः।
क्षणान्निष्पापतामेति पितृणां च प्रियो भवेत् ॥१९७॥
सर्वदेवप्रियश्चापि सर्वर्षिगणसंमतः।
अंते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ॥१९८॥
दिव्याभरणसंपन्नो दिव्यभोगसमन्वितः।
नन्दनादिवने स्वैरं देववत्स प्रमोदते ॥१९९॥
भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः।
जपन्निदं महास्तोत्रं पितृणां तृप्तिकारकम् ॥२००॥
यावंति तत्र सिक्थानि यावन्तोऽम्बुकणाः स्थिताः।
तावंत्येवहि वर्षाणि मोदंतेऽस्य पितामहाः ॥२०१॥
यथा प्रीणंति पितरो गयायां पिण्डदानतः।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात् ॥२०२॥
एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते।
तत्र पापभयं नास्ति शुचि तद् भवनं सदा ॥२०३॥

अगस्ते किं बहूक्तेन शृणु मे निश्चितं वचः।
संशयो नात्र कर्त्तव्यः संदिग्धविफलं नहि ॥२०४॥
यावन्ति मर्त्ये स्तोत्राणि मंत्रजालान्यनेकशः।
तावंति स्तवराजस्य गांगेयस्य समानि न ॥२०५॥
यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम्।
स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत् ॥२०६॥
नित्यं नियमवानेतद्यो जपेत् स्तोत्रमुत्तमम्।
अन्यत्रापि विनुन्नः स गंगा तीरे मृतो भवेत् ॥२०७॥
एतत्स्तोत्रं परं रम्यं पुरा प्रोक्तं पिनाकिना।
विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम् ॥२०८॥
गंगास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम्।
सिस्नासुर्जाह्नवीं तस्मादेतत्स्तोत्रं जपेत्सुधीः ॥२०९॥

**इति श्रीस्कन्दपुराणे काशीखण्डे गंगासहस्रनामैकोनत्रिंशत्तमोध्यायः ।।**
**श्रीलक्ष्मीकेशवविश्वेश्वरार्पणमस्तु ।।ॐ।।**

**।। ॐ तत्सत् ब्रह्मार्पणमस्तु ।।**



# गङ्गावतरणम्

## नीलकण्ठकृतम्

अद्भुतं किमपि द्वन्द्वमस्तु तन्मम शर्मणे।
स्वस्तिकस्तनुते यस्य सुदृढाश्लेषनिर्वृतिम् ।।१।।
व्यासमेव स्तुमो यस्य वाचं गणयितुं विधिः।
विषीदति वृषाङ्केण विलूने पञ्चमानने ।।२।।
कान्तः सहृदयो वाचः कविरेव[१] चिरंतनः।
जडे जगति येनैव च्छन्दः प्रागन्वरुध्यत ।।३।।
कवितामफलद्वीटी कालिदासमुखेऽर्पिता।
पत्युर्मुखे तु सा गौर्याः परुषं निगमाक्षरम् ।।४।।
नारायणाध्वरीन्द्राय[२] नमोऽस्तु ज्ञानसिन्धवे।
शारदा यत् कटाक्षाणां साप्यवेतनकिंकरा ।।५।।
कल्पनेत्यस्ति तत्किंचित्कविलोकस्य जीवितम्।
प्रविश्येव गृहीतं यद्भारत्याः कोशमन्दिरात् ।।६।।
स संदर्भः कवीन्द्राणां शारदा यं पदे पदे।
श्लाघते विस्मयावेशस्मेरमन्थरया दृशा ।।७।।
शीलिते कविलोकेन सिद्धे ब्रह्मणि वाङ्मये।
पामराः कलहायन्ते पश्यास्मिन्नन्यथान्यथा ।।८।।
अस्ति सारस्वतं चक्षुरज्ञातस्वापजागरम्।
गोचरो यस्य सर्वोऽपि यत्स्वयं कर्णगोचरः ।।९।।
सत्यर्थे सत्सु शब्देषु सति चाक्षरडम्बरे।
शोभते यं विना नोक्तिः स पन्था इति घुष्यते ।।१०।।
शृण्वन्तोऽपि न शृण्वन्ति जानन्तोऽपि न जानते।
साहितीमितरे तस्या ज्ञाता श्रोता च यः कविः ।।११।।
न लक्षणेषु निष्कर्षो न वा काव्येषु कौशलम्।
संदर्भनिर्णयायालं स ह्यदृष्टैकमूलकः ।।१२।।
भारतीषु कवीन्द्राणां यावती सुकुमारता।
तावती काव्यमर्मज्ञसंमर्दैकसहिष्णुता ।।१३।।
अचमत्कृतसंदर्भमर्थं नैवाद्रियामहे।
अत्यन्तभोगौपयिकमैश्वर्यमिव देहिनाम् ।।१४।।

---

(क) स.भ.पु.पा.लि.सं. २३७९४, पत्र १-२८, लिपि-वंग
१. आदिकविः वाल्मीकिः, २. नारायणाध्वरीन्द्रः कवेः पिता

स्वर्गः कस्यास्तु सुधियः श्लाघन्ते चेन्निजं पदम्।
ततोऽन्यः कोऽस्ति निरसस्तत्र ते यद्युदासते ॥१५॥
हतः श्लोको हतं काव्यं हता बुद्धिर्हतं यशः।
सद्भिरुद्भावितो दोषो यदि नाभ्युपगम्यते ॥१६॥
अन्धास्ते कवयो येषां पन्थाः क्षुण्णः परैर्भवेत्।
परेषां तु यदा कान्तः पन्थास्ते कविकुञ्जराः ॥१७॥
विदुषां मत्सरग्रन्थिर्विभेद्यो वचसां गुणैः।
नैव केनापि दुर्मेधश्चोद्यमर्कटमुष्टयः ॥१८॥
आजन्मनः प्रबन्द्धॄणां पद्यबन्धेषु यः श्रमः।
सोऽपि सामाजिकायत्तः कष्टं धिक्कविजीवितम् ॥१९॥
नार्थमुल्लिखितुं यत्नो नापि ग्रन्थयितुं गिरः।
श्रवणात्प्रागनाक्षेपः श्रोतुरभ्यर्थ्यते परम् ॥२०॥
दूषणाय न काव्यानां दुर्जनाक्षेपसंप्लवः।
शफरीपरिवर्तैः किं सरसी न प्रसीदति ॥२१॥
सव्यङ्गापि कवेर्वाणी सापभ्रंशा न शोभते।
लम्बस्तनीं को वीक्षेत रम्भामप्युर्वशीमपि ॥२२॥
क्व नु नाम सभा राज्ञां दुराक्षेपैकशिक्षिता।
क्व नु वाचः सुधीलोकलालनैकरसाः कवेः ॥२३॥
व्यङ्क्तुमस्फुरतो दोषान्भंक्तुमुत्स्फुरतो गुणान्।
ईर्ष्ये भवति ब्रूहि का [1]त्वदन्यां प्रगल्भताम् ॥२४॥
किं मदक्ष्णोरयं दोषः किं तद्वस्त्वेव तादृशम्।
कामं यन्मौलिरज्ञानां कम्पते कविसूक्तिषु ॥२५॥
पुष्णन्तु स्वेति मधुरां परस्यापि कृतिं जनाः।
स्वोक्तिभिर्यत्क्वचित्कर्णौ दहन्ति तदरुंतुदम् ॥२६॥
स्तुत्यं न स्तुवते मूढाः पद्यं यत्तन्न दारुणम्।
अपदे यत्प्रशंसन्ति तन्मे मर्माणि कृन्तति ॥२७॥
जानीमो ज्यायसीं लक्ष्म्या जातु ते न तु शारदे।
आः स्मृतं ननु सा वक्रेष्वास्ते दुष्कविसंसदाम् ॥२८॥
न यदाह मनुर्वध्यान्न च नासृजदब्जभूः।
न वान्तकः कविंमन्यान्नयते तन्मदंहसा ॥२९॥
आमये यमके जाग्रत्यपमृत्यौ च दुष्कवौ।
वाणि प्राणिषि तन्मन्ये वज्रेणैवासि निर्मिता ॥३०॥

१. सन्दिग्धः पाठः।

नाहमासं नृपः स्यां चेन्ननु कुर्यां तथा महीम्।
विचिन्वतापि नेक्ष्यन्ते यथा दुष्कविताङ्कुराः ॥३१॥
पातिव्रत्यक्रमः कोऽयं प्राणभङ्गावधिस्तव।
सर्गतः कविपाशानां शारदे वारय प्रियम् ॥३२॥
दूयामये दुष्कविभिर्दत्तकर्णज्वरा वयम्।
न वा वदामो वाग्देवि ननु त्वमपि तैर्हता ॥३३॥
विज्ञप्तिः श्रूयतामेका विधातः करुणा यदि।
मूकान्सृज कविंमन्यान्बधिरान्विदुषोऽथवा ॥३४॥
जना नीराजनीयास्ते जानन्ति स्वयमेव ये।
कथंचिदपि वा सर्गैः काव्यमङ्कैश्च नाटकम् ॥३५॥
प्राचेतसेन यानीता पालिता भवभूतिना।
सर्वतश्चर्च्यते वाणी सैवाद्य कविमानिभिः ॥३६॥
निःशङ्कं न प्रवृत्तोऽस्मि निन्दितुं कविमानिनः।
निन्दामपि विगायन्ति यतः श्लाघामिवात्मनः ॥३७॥
मुनिरस्ति भरद्वाजः ख्यातस्त्रिभुवनेष्वपि।
अन्नैर्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम् ॥३८॥
तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः।
श्रीकण्ठचरणासक्तः श्रीमानप्ययदीक्षितः[१] ॥३९॥
विधित्रयी यदाक्षिप्ता नान्यत्र लभते गतिम्।
जयन्त इव दुर्दान्तः जानकीशशरार्दितः ॥४०॥
आगमैरप्यसंवेद्यमाद्यं यत्तत्त्वमैश्वरम्।
आकुमारं परिज्ञातं तदेवासीद्यदुक्तिभिः ॥४१॥
श्रीकण्ठदेशिकग्रन्थसिद्धान्तद्योतचन्द्रिका।
श्रीमती निर्मिता येन शिवार्कमणिदीपिका ॥४२॥
गङ्गाया यः पुरा स्नाती देवश्चन्द्रार्धशेखरः।
गाङ्गेयेन पुनः सस्नौ सोऽवतीर्य यदात्मना ॥४३॥
अमोषणीयैरक्रय्यैरमूल्यैरमलीमसैः।
यत्प्रबन्धैः शतेनैव भारती परिकर्मिता ॥४४॥
यं विद्म इति यद्ग्रन्थानभ्यास्यामोऽखिलानिति।
यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः ॥४५॥
नाकेऽपि सति देवानां माहात्म्यकलहे मिथः।
वादः शाम्यति यद्वाचि विन्यस्य निखिलंभरम् ॥४६॥

१. अप्पयदीक्षितः कवेः पितामहस्य ज्यायान्भ्राता।

आमोदिभिर्वचःपुष्पैरर्चितो येन शंकरः।
तत्याज काशधत्तूरधारणोपहितं रुजम् ॥४७॥
तत्समानप्रभावस्य तदनन्तरजन्मनः।
आसीदाच्चादीक्षितस्य पुत्रो नारायणाध्वरी ॥४८॥
जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः।
गर्भदासा महेशस्य कवयश्च विपश्चितः ॥४९॥
तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूभुवाम्।
नीलकण्ठ इति ख्यातिं नीतः शंभोः प्रसादतः ॥५०॥
वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः।
श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते ॥५१॥
कुर्वती श्रवणे वाणी कोमलां यस्य साहितीम्।
कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥५२॥
भान्ति शिष्याः पुरो यस्य पाणिविन्यस्तपुस्तकाः।
तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः ॥५३॥
सति सह्यसुतातीरे सति त्रय्यन्तशीलने।
गन्तुं निश्चितवानस्मि गङ्गां केनापि हेतुना ॥५४॥
तपसा लभ्यतां तस्यास्तपसश्च कठोरताम्।
पश्यन्वाचा तपस्यामि काव्यसन्दर्भरूपया ॥५५॥
मूकोऽपि मुखरायेत यत्र स्मृतिपथं गते।
उपेक्षितव्यं तद्वस्तु कथं कवयता मया ॥५६॥
भगीरथमुखाद्वाचः स्तुवन्ति मम जाह्नवीम्।
प्रभावे चन्द्रचूडस्य पर्यवस्यन्ति तत्त्वतः ॥५७॥
चन्द्रशेखरसव्याङ्घ्रचरणोन्मार्जनाम्भसाम्।
विवर्ता जगदुत्सङ्गे विहरन्ति मदुक्तयः ॥५८॥
भक्त्या कृतेति जाह्नव्याः प्रभावं वदतीति वा।
सन्तः समनुगृह्णन्तु निर्गुणामपि मद्गिरम् ॥५९॥
आसीद्भगीरथो नाम राजा रविरिवापरः।
येन साक्षात्कृतः शंभुर्येन गङ्गावतारिता ॥६०॥
सदयं सानुरागं च भुञ्जानं तं वसुंधराम्।
ऐच्छदिन्द्रवशापि द्यौरन्तः कुलबधूरिव ॥६१॥
गोवर्धनधरस्यापि यदि तावद्यशो हरेः।
कियन्न वर्ण्यः स भुवं विभ्रत्सगिरिकाननम् ॥६२॥

स पौरान् पादमूलस्थानरक्षदिति नाद्भुतम्।
यद्दिगन्ते यशोऽरक्षत्प्रतापं शारिवेश्मसु ॥६३॥
दयालुरथ भूतेषु दण्ड्येष्वासीत्स निर्दयः।
संजीवनोऽपि लोकानां चन्द्रमाः पथिकान्तकः ॥६४॥
न दण्ड्यं मुमुचे कंचिन्न वा कंचिददण्डयत्।
तथापि युक्तदण्डः स दयालुरिति पप्रथे ॥६५॥
उचितेष्वदिशद्दृष्टिमुदासीनः परेषु च।
शुश्राव च न शुश्राव स वाचमनुजीविनाम् ॥६६॥
उचितज्ञतया तस्मिन्नन्वरज्यन्यथा प्रजाः।
न तथा तस्य दानेन न तथा चोपलालनैः ॥६७॥
तस्मिन्दुर्जनदुर्धर्षे समं पश्यति च प्रजाः।
सर्वोऽप्यासीदपिशुनः सर्वोऽपि गतमत्सरः ॥६८॥
स यावल्लालयामास क्रीडन्निव हसन्निव।
उपासां चक्रिरे तावद्भूतास्तमनुजीविनः ॥६९॥
जातः कोपो न भृत्येषु जातोऽपि न निगूहितः।
निगूहितोऽपि न चिरमास्त चित्तेऽस्य कोमले ॥७०॥
वैरायतां विरिञ्चोऽपि विप्रकर्तुं क्षमेत सः।
अज्ञातविमतोत्पादामभुङ्क्त तदपि क्षितिम् ॥७१॥
प्रमाणमात्रसंप्रीतस्तेजस्वी चोदयस्थितः।
कूटस्थं रविमैक्ष्वाको गुणैरनुययाविव ॥७२॥
तस्यासन्प्राक्तना एव सेनामन्त्र्यनुजीविनः।
नवं यशो नवः कोशो नवं राज्यं च केवलम् ॥७३॥
षष्ठांशं जगृहे नेति तुष्टुवुस्तं तपस्विनः।
न त्वबुध्यन्त गृह्णन्तमुपायेनाखिलं तपः ॥७४॥
स्रस्तमंसतलात्पान्थैः संरव्यानमपि वर्त्मसु।
सातङ्कमाददे भूयस्तरद्भिस्तस्य शासनम् ॥७५॥
अख्यातपूर्वविजयानतृणीकृतजीवितान्।
अक्षत्रियानयूनश्च न स संजगृहे भटान् ॥७६॥
अवितीर्णमहाग्रामैरकृतस्वर्णवृष्टिभिः।
कटाक्षैर्न बभूवेऽस्य कविवक्रनिपातिभिः ॥७७॥
संग्रामाङ्गणमारूढः स समक्षं विरोधिनाम्।
तिरस्कारमिवामंस्त चापस्यापि शिरोनतिम् ॥७८॥

प्रददावेव सोऽर्थिभ्यः प्रतिजग्राह न क्वचित् ।
वासवादसकृद्दृष्टिं लिप्समानस्त्वलज्जत ॥७९॥
सायाह्नापचयेनापि मर्यादां लङ्घतेऽर्णवः ।
स तु तावत्प्रवृद्धोऽपि मर्यादां नात्यलङ्घत ॥८०॥
दातुं प्रवृद्धश्चन्द्रोऽपि पक्षे पक्षेऽपचीयते ।
स तु भूयोऽप्यवर्धिष्ट सततं वितरन्नृपः ॥८१॥

पदं किमेतावदुदारतोचितं प्रयुज्य शंसे सममुष्य दातृताम् ।
पदेषु यत्प्रत्यय एव नाशितः प्रयोगशूरैः कविभिः समन्ततः ॥८२॥

यदस्य युद्धेषु महत्कुतूहलं य उद्यमो यत्प्रतिपालनं च वा ।
इदं किमङ्ग श्रुतमीक्षितं नु वा महीभुजोऽन्यस्य महोत्सवेष्वपि ॥८३॥

एकैकां क्रमभाविनीमपि कलामिन्दोः समास्वाद्य यैः ।
कण्ठोद्ग्रीवितजीवितैर्निरवधिः कालः कथंचिज्जितः ।
तैरेवोदरपूरमध्वरहविः स्फारं तदावर्जितं
भुञ्जानैस्त्रिदशैरधारि जठरप्रायं तदानीं वपुः ॥८४॥

परिज्ञातं तत्वं निखिलमपि विद्यासु विदुषां
परिज्ञातं भूयः परिषदि सतां श्लाघितमपि ।
फलैर्योक्तुं तत्तत्क्रमसमुचितैः श्लाघितमपि
प्रगल्भः कोऽन्यः स्यात्त्रिभुवनवदान्यो यदि न सः ॥८५॥

साम्राज्यं यदि सप्तमार्णवतदीविश्राम्यदाज्ञाक्षरं
सौन्दर्यं यदि मुद्रिताः स्मरगिरः सा चेन्मतिः को गुरुः ।
शौर्यं चेत्पुनरन्यदेव तदिति स्तोत्रं विचित्रं सतां
शृण्वन्नेव भगीरथक्षितिपतिर्निन्ये सहस्रं समाः ॥८६॥

**इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशत-प्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे कथावतारो नाम प्रथमः सर्गः ।**



## द्वितीये सर्गः

पौरजानपदपार्थिवलोकप्रस्तुतस्तुतिवचोमुखरायाम् ।
जातु संसदि निषद्य सुहृद्भिः संलपन्नति निनाय स कालम् ॥१॥

स प्रसङ्गकृतसंगति वक्तुं प्रस्तुतं किमपि बान्धववृद्धैः ।
सावधानमशृणोदपदानं सर्वमेव सगरात्मभवानाम् ॥२॥

अश्वमेधमकरोत्सगरो यद्यच्च तत्र तनया विनियुक्ताः ।
अन्वयुर्यदपि ते तुरगं तं यच्च तं शतमखोपजहार ॥३॥

यत्ततः सगिरिकेतुवनान्ता तैर्व्यचीयत मही निखिलेयम् ।
यच्च तैः पितृवचोऽनुसरद्भिः सिन्धुरेव समखन्यत भूयः ॥४॥

मन्दिरं फणभृतामवतेरुः सागरोदरपथेन च ते यत् ।
पादकर्णसमवापत एव प्राकृतैः फणिभिरद्भुतदृष्टाः ॥५॥

तं तुरंगमपि यद्ददृशुस्ते तापसस्य कपिलस्य समीपे ।
चोर इत्यमुमभिद्रवतां यद्भस्मतामदित हुंकृतिरस्य ॥६॥

अंशुमानपि समेत्य हयं तं यच्चकार सगराध्वरपूर्तिम् ।
सर्वमेतदवकर्ण्य स वीरो विस्मितोऽजनि विषण्णमुखश्च ॥७॥

दातुमम्बुपरिपारणमेषां कोऽभ्युपाय इति पृच्छति तस्मिन् ।
संनिकर्षमुपसृत्य वसिष्ठः शंसति स्म जगतः सुकृतेन ॥८॥

कन्यकास्ति कुटिलेति हिमाद्रेर्ज्यायसी स्मरणतोऽप्यघहन्त्री ।
शंकराय वितरीतुममर्त्याः सत्यलोकमनयन्त शिशुं ताम् ॥९॥

आकलय्य विबुधोपहतां तामष्टभिश्च नयनैर्द्रुहिणः प्राक् ।
नार्हतीश्वरमियं तु वराकी मुच्यतामिति गिरा निरतक्षत् ॥१०॥

उद्यतां किमपि वक्तुमथैनां गर्वितां कमलभूरुपलभ्य ।
शापमित्थमसृजज्जलरूपा सद्य एव भवती भवितेति ।
सा ततो गिरिसुता कलयन्ती तं च निग्रहमनुग्रहमेव ।
ऊर्मिभिः प्रलयसागरघोरैरुत्पपात कवलीकरणाय ॥१२॥

अप्रतर्कितविधेयमपोढस्थैर्यमर्धविरतश्रुतिपाठम् ।
शुष्कतालुवदनं च तदानीं पद्मभूरपि परिभ्रमति स्म ॥१३॥

सावलेपनिपतत्सुरसिन्धुस्वैरचंक्रमतिरस्करणाय ।
सर्वतः स निगमान्किल सेतूनाबबन्ध चतुरश्चतुरोऽपि ॥१४॥

सा च वामनपुराणवचोभिः स्पष्टमेव विवृता विदिता ते।
नागलोकमवतार्य नदीं तां देयमम्बु सगरात्मभवेभ्यः ॥१५॥
आशरीरपतनं व्रतचर्यामाचरन्नपि सुपर्णवचोभिः।
अभ्रसिन्धुमवतारयितुं तामंशुनामपि शशाक न धीरः ॥१६॥
तत्सुतोऽपि न ददर्श दिलीपस्तत्समानयनकर्मणि योगम्।
दृष्टिमत्र निदधासि यदि त्वं सिद्धिमेति नियमादयमर्थः ॥१७॥
इत्थमूचिषि मुनौ करणीयं निश्चिकाय न तु तं निजगाद।
सिद्धमप्यभिलपन्ति न सन्तः का प्रसक्तिरपि साधयितव्ये ॥१८॥
सेत्स्यतीति यदवादि भवद्भिः सिद्धमेव तु ततोऽभिमतं नः।
इत्युदीर्य स विसृष्टसमाजः पार्थिवः प्रतिययाववरोधम् ॥१९॥
सोऽथ जातु नृपतिः परितुष्टादाशिषं समधिगम्य वसिष्ठात्।
निर्ययौ सुरनदीमुपनेतुं न्यस्य राज्यमखिलं सचिवेषु ॥२०॥
तीरसीमनि स दक्षिणसिन्धोराश्रमं कमपि संपरिकल्प्य।
आरराध नियमैरतिमात्रैर्देवमम्बुजभवं नरदेवः ॥२१॥
हेमकुम्भसलिलैरभिषिक्तो मौलिरस्य मुनिवेषधरस्य।
वीचिकासु लवणासु पयोधेर्वीतशङ्कमहनि त्रिरमज्जत् ॥२२॥
आश्रमं नगरमासनदर्भान्भिद्रपीठमुटजं मणिवेश्म।
संभ्रमाद् व्यवहरन्क्षितिपालोऽलज्जत त्रिचतुराणि दिनानि ॥२३॥
स क्षणादजयदासनभेदान्शिक्षणाच्चिरतरं खुरलीषु।
जानता निखिलमभ्यसितव्यं कस्य कुत्र न भवेदुपयोगः ॥२४॥
अत्यशेत स मुनीनपि दिव्यान्वासरैः कतिपयैर्वसुधेशः।
संस्तवे भवतु नाम विलम्बः संस्तुतं मतिमतां किमसाध्यम् ॥२५॥
किं स पूर्वमपि नाजयदक्षान्किं तु वा न ववृते शुचिरेवम्।
तस्य केव तपसा परिहानिः प्रत्युतैष न ररक्ष तदोर्वीम् ॥२६॥
स्वं च राज्यमपहाय सतोऽस्य स्वर्गराज्यमिति तत्कियदास्ते।
तद्विदञ्छतमखो न शशङ्के तत्तपश्चरणतः कणशोऽपि ॥२७॥
बाहुजोऽयमथ भानुकुलीनस्तत्र चाप्रतिमतः स महिम्ना।
तावतापि तपसा यदि युक्तस्तत्समीक्षितुमपि क्षमते कः ॥२८॥
यद्गजेषु तुरगेषु भटेषु क्षोणिषु क्षितिपतिष्वपि सक्तम्।
तन्मनस्तत इतोऽपि विकृष्य स्थापितं तपसि तेन कठोरे ॥२९॥

नान्नमाद्रियत नाम्बु न मूलं का भविष्यति कथापि फलानाम् ।
मारूतं परमभुङ्क्त निदाधस्तं च हर्तुमिव तस्य तदाभूत् ॥३०॥

चण्डमारुतचलन्मृदुघासग्रासलालसतया गतिमान्द्यम् ।
प्रस्तुवत्यहिमभानुतुरङ्गे द्राघिमाणमलभन्त दिनानि ॥३१॥

तापमातपतरङ्गितमुच्चैः क्षन्तुमक्षमतया दिनलक्ष्मीः ।
किं चिरायति निशेति वितीर्णोद्ग्राहिकेव वपुरायतमूहे ॥३२॥

वक्रचंक्रमणवल्गनधाटीमण्डलभ्रमणमन्दगतानि ।
सादिनः स्वयमशिक्ष्यत धर्मात्तुन्दिलो मदनजैत्रतुरंगः ॥३३॥

आरूरोह गिरिमाप वनान्तानभ्रमीदनुदिशं परिधाव्य ।
अग्रहीदपि तृणानि समीरो निग्रहैकरतिभाजि निदाधे ॥३४॥

भानुभिः प्रलयपावकतीव्रैरापिबत्युदकमम्बुजबन्धौ ।
दूरदूरमपदिश्य मरीचीर्दुद्रुवुर्दिशि दिशीव सरस्यः ॥३५॥

शक्यमञ्जलिपुटैः सलिलार्द्रैः सान्द्रमातपभरं प्रविकीर्य ।
जीर्णपर्णजटिलानि तदानीं विष्वगुज्ज्वलयितुं विपिनानि ॥३६॥

अङ्किताः किमपि शैवलखण्डैरातपाच्छकलितैरसिनीलाः ।
कोण एव सरितामवहन्त प्रान्तलीनपथिका जलवेण्यः ॥३७॥

कामिनः पथि तलेषु तरूणां गाढनम्रविटपेषु निवेश्य ।
अध्वखेदमहरन्त वधूनामम्बुभिः कमलिनीदलनीतैः ॥३८॥

उत्तरीयमहरत्कुचकुम्भादुन्ममार्ज मुखघर्मपयांसि ।
अङ्गमङ्गमपि पान्थवधूनामालिलिङ्ग सुकृती वनवातः ॥३९॥

आगतैरपि पथातिविदूरादध्वगैस्तरुतलेषु निषद्य ।
स्पन्दितुं च पटुभिर्न बभूवे संनिकृष्टसलिलग्रहणाय ॥४०॥

किं प्रपासु कुहचित्तरूणीनामास्पदं कुचतटेष्वधिगम्य ।
विध्यति स्म विजने पथि पान्थान्कुण्ठविक्रमतया कुसुमास्त्रः ॥४१॥

सत्यपि श्रमविनोदिनि कामं तालवृन्तपवने तरुणानाम् ।
प्रेमभाजनमभूत्परमेकः प्रेयसीकुचदुकूलसमीरः ॥४२॥

फूत्कृतैरजहदूष्मतरङ्गैर्भूयसा मसृणितोष्ठदलानि ।
अखेदन्त सुदृशामर्भिकेभ्यो मुग्धघर्मकणितानि मुखानि ॥४३॥

न प्रणामरचनैर्न चटूक्त्या न व्यनीयत सखीवचनैर्यत् ।
कञ्चुकं तदपनिन्युरूरोजात्कामिलोकसुकृतेन नवोढाः ॥४४॥

मारूतो न मधुरप्युपरेमे किं पिकैरमुखरैरिति खिन्नः ।
संदधे धनुषि नैव मनोजः सायकं त्रिचतुराणि दिनानि ॥४५॥

हारदाम्नि हरिचन्दनपङ्के शीतरोचिषि शिरीशदलेषु ।
कामिनीकुचतटेषु च लिल्ये पञ्चभिः किमसुभिः कुसुमेषोः ॥४६॥

सर्वरात्रमपि संलपनाधैर्विभ्रमैः समपनीय विभाते ।
अप्रमर्दितकुचं युवतीनामङ्कपालिमलभन्त युवानः ॥४७॥

नास्ति मन्दपवनो न वसन्तः कूणितं च चरितं कुसुमेषोः ।
तावता विरहिणां किमिवासीत्तेषु मन्मथकणोऽपि कृतान्तः ॥४८॥

अन्नमन्यदवमन्य यमेकं सेवते सुलभ इत्यहिलोकः ।
सोऽपि नैव सुलभो मरूदासीहुर्जयो जगति दैवनियोगः ॥४९॥

प्राणिमात्रपरिजीवनहेतोः शत्रवस्त्रय इमे पवनस्य ।
शुष्कतापसनिदाघभुजंगास्ते पतन्ति निरये क्व न विद्मः ॥५०॥

उष्णमम्बु रविरुग्रमयूखः सान्द्रमुर्मुरकिरश्च समीराः ।
भूः पफाल पुनराः कथमासीत्पान्थपातकिदशापरिपाकः ॥५१॥

स्वापकालमनुपाल्य गुरूणां विप्रलभ्य च चिरेण सपत्नीः ।
प्रस्थितासु कुलटास्वपि धर्मैः पातकी किमपि नानुचकम्पे ॥५२॥

वारिविभ्रममहोत्सवदानैर्यः पुरा परिचचार निदाधः ।
तापमस्य विततार तदासौ किं भिदा न धनिनां कृपणेभ्यः ॥५३॥

तौ परस्परमहः परिणामस्पर्धयेव नृपतिः सविता च ।
गाढयौवनमुपेयुषि धर्मे दुर्निरीक्ष्यतरतामवहेलाम् ॥५४॥

स्नातुमम्बु न कुतश्चन लभ्यं पातुमस्ति न कथाप्यनिलस्य ।
स्थातुमस्ति यमिनां तरूमूलं दूषितं तदपि दावशिखाभिः ॥५५॥

यावदित्थमधिकोऽजनि धर्मस्तावदस्य तपसा विजजृम्भे ।
तद्विपाकचकिता दिवि देवास्तापमापुरवनेरपि तीव्रम् ॥५६॥

तिष्ठतस्तपसि तस्य कठोरे कांक्षतश्च सुरसिन्धुनिपातम् ।
वासरा निमिषवत्समतीयुर्वासरा इव समाश्च सहस्रम् ॥५७॥

तं कदाचिदुपसृत्य विरिञ्चिस्तस्य दृष्टिपथमप्युपगम्य।
अर्थ्यतामभिमतं वितरामीत्याह वाग्भिरमृतस्नपिताभिः ॥५८॥

तत्क्षणप्रमुदितः क्षितिपालस्तन्निशम्य वचनं द्रुहिणस्य।
स्तोतुमारभत चारणलोकस्तूयमानचरितः स्वयमेनम् ॥५९॥

त्वत्प्रसूतमवतो हरतोऽपि स्यादुपासनविधिर्यदि धातः।
त्वं कियत्कियदिवासि न वन्द्यस्तत्त्वदर्शनपरैर्मतिमद्भिः ॥६०॥

त्वादृशा जनिमता शयितव्यं त्वादृशा च ननु जागरितव्यम्।
यत्र हि स्वपिति नश्यति लोको यत्र जीव्यति पुनः समुदेति ॥६१॥

भारतीपरिवृढस्य पुरस्ते वागियं न परिहासपदं किम्।
नृत्यतः पुरहरस्य पुरस्तान्नृत्यतां स्थितिरिव प्रमथानाम् ॥६२॥

हुंकृतेन कपिलस्य महर्षेर्भस्मतामुपगताः पितरो मे।
स्वर्गसिन्धुसलिलेष्विह तेषामस्तु मत्करपुटेन निवापः ॥६३॥

तस्य प्रतिश्रुत्य तथेति देवः प्रदर्श्य गङ्गामपि पार्श्व एव।
तिरोभवत्पश्यत एव तस्य वक्त्रैः समस्तागमवावदूकैः ॥६४॥

संव्यानमूर्मिलतिकाव्यतिषङ्गलब्ध-
फेनानुलेपमिव पाण्डरमावहन्तीम्।
पश्यन्पुरस्तनुमती सुरलोकसिन्धुं
सिद्धं मनोरथममंस्त दिलीपसूनुः ॥६५॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशत-प्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते**

**गङ्गावतरणे भगीरथवरलाभो नाम द्वितीयः सर्गः।**



## तृतीयः सर्गः

ततः प्रमाणै स्तुतिभिश्च पार्थिवं प्रसादयन्तं सुरलोकवाहिनी ।
जगाद सद्यो जगदण्डमण्डलं निमज्जयन्तीव वचोभिरेव सा ॥१॥

प्रविष्टमात्रास्वपि मे रसातलं प्रवाहनासीरतरङ्गपङ्क्तिषु ।
पतेदलाबूफकर्परोपमं विभिद्य विध्यण्डकपालसंपुटः ॥२॥

मदम्बुसंतापविधूतकल्मषैर्महीश पूर्वैस्तव यत्र वत्स्यते ।
स एव लोको यदि मत्पयोजवात्पथि प्रलीयेत फलेत्तपस्तव ॥३॥

महर्षिरोषग्लपितान्समुद्धरन्महीभुजः कानपि लिप्ससे यशः ।
अवेक्षसे नैव जगत्रयीजुषामकाण्डसंवर्तविधानपातकम् ॥४॥

पतत्युदारे पयसांभरे मम प्रसह्य राजन्गिरिराजमौलिषु ।
समुत्पतच्छीकरवर्षदुर्दिनं चतुर्मुखो धाम किमावसेन्निजम् ॥५॥

ससर्ज कल्पादिषु विष्टपत्रयीं स योगमास्थाय कियन्तमात्मभूः ।
कथावशेषीक्रियतां मया पुनः कथं पतामीति गिरेकयावसा ॥६॥

अचिन्तयित्वा कृतिगौरवं विधेरपि त्यजन्ती करुणा शरीरिषु ।
पताम्यहं यद्यपि कुत्र वा भवन्भवान्निवापाञ्जलिमाचरिष्यति ॥७॥

पतेयमाप्यर्थितसाधनाय ते निगृह्य वेगं निखिलं बलादहम् ।
परिप्लवाः क्षुद्रतया मदूर्मयः परं तु नेमे वचसि स्थिता मम ॥८॥

प्रदर्श्यतां कस्य पुरः पयो जवो निवेद्यतां वा नृप केवलं गिरा ।
न संनिकर्षे वडवामुखानलो न वा स योगी चुलुकीकृतार्णवः ॥९॥

विषादमभ्येमि भुवं पदे पदे विपद्यमानामनुचिन्त्य यद्यपि ।
तथापि नन्दामि चिरोपसंभृतां तरङ्गकण्डूमपनेष्यता त्वया ॥१०॥

प्रवेष्टुमभ्रेण पथा रसातलं हठाद्विशन्त्याममरावतीं मयि ।
पुनः स्वहस्तार्पितचन्दनाङ्कितं शचीमुखं द्रक्ष्यति किं पुरंदरः ॥११॥

अपि प्रकृत्या यदचञ्चलं जलं तदप्यलं यां ग्रसितुं महोदधेः ।
पदं भवेन्नाम समग्ररंहसां मदम्भसां किं न्वियमेव मेदिनी ॥१२॥

इति प्रसन्नं मधुरं च वाङ्मेयं प्रवाहमात्मीयमिवोद्गिरन्त्यसौ ।
क्षणं व्यरंसीदिव यं सुरापगा तमेव लेभे वचनक्षणं नृपः ॥१३॥

ससर्ज यस्त्वां त्रिजगन्नियामकश्चतुर्मुखः सोऽपि यदि त्वमूर्मिभिः ।
अवापितस्तत्क्षणमात्मसंशयं कथैव का स्याज्जगतो विनश्यतः ॥१४॥

महात्मतां यद्यपि ते महापगे न वेद वेधा न हरिर्न शंकरः ।
तथापि पौराणिकसंकथामुखात्कियत्किमेयद्देवि गृहीतवानहम् ॥१५॥

अतो न किंचित्प्रतिवक्तुमुत्सहे भवत्प्रवाहावतरोपपादकम् ।
परं तु मय्यम्ब दयोर्मिला दृशः पतन्तु ते किंचिदिति प्रसादये ॥१६॥

प्रसाद्यमाना मुहुरित्थमुक्तिभिर्भगीरथाय प्रससाद सा ततः ।
अपि स्वयात्रानुपपत्तिगोचरामनेन च प्रास्तुत संकथां मिथः ॥१७॥

मदुक्तयुक्त्या नृपते मया विना प्रतिप्रयातुं यदि ते न रोचते ।
अनेन रूपेण परं रसातलं प्रवेक्ष्यते तर्हि भवत्कृते मया ॥१८॥

सुरापगास्रोतसि पूर्वभूभुजां कदा प्रदास्यामि जलाञ्जलीनिति ।
तपस्यतो मे फलमस्ति कि त्वया प्रवाहरूपं परिहृत्य नीतया ॥१९॥

ग्रहस्तवायं यदि तात तर्हि तां गृहाण गङ्गाममरावतीं गताम् ।
भवेति लक्ष्मीदयिताङ्घ्रिताडनप्रभिन्नविध्यण्डपरिस्रुतेति याम् ॥२०॥

न पातुमम्भो भवतीमिहार्थये परः सहस्रा भुवि सन्ति सिन्धवः ।
न चाम्बु दिव्यं ननु सन्ति वृष्टयः परं तु लिप्से तव पावनं पयः ॥२१॥

यदीदमेवेच्छसि याहि भूतलं गृहाण भस्मान्युपयाहि मां पुनः ।
ममान्वगागच्छ विधातुरालयं मनोरथं साधय मज्जलैस्ततः ॥२२॥

कथंचिदेनः कपिलापराधजं पितामहानामपनेतुमिच्छता ।
अकर्मभूमावधिगत्य तावकं पयः किमम्ब प्रतिपद्यतां मया ॥२३॥

सुशिक्षितस्त्वं यदि वृद्धसेवया श्रुतिस्मृतिभ्यामुपदर्शिते पथि ।
विधित्ससे किं नु विकृष्य मां बलादकर्मभूमावहिराजवेश्मनि ॥२४॥

न वक्तुमीशे गिरमुत्तरोत्तरं त्वदुक्तिधारासमशीर्षिकापदम् ।
गुरोर्निदेशो मम दुस्त्यजस्त्वयं कुतस्तमुत्सादयितुं प्रवर्तसे ॥२५॥

यदि त्वलंङ्घ्यं गुरुशासनं त्वया यतस्व भूमाववतारणे मम ।
स्मृता स्मृता संनिदधामि तावदित्युदीर्य तं दिव्यनदी तिरोदधे ॥२६॥

विचिन्तयन्नभ्रनदीगिरं मुहुर्विनिःश्वसन्नायतमायतं ततः ।
प्रजेश्वरः प्रस्तुतकार्यसिद्धये जगन्ति सर्वाणि जगाम चेतसा ॥२७॥

मुमूर्षमाणासुरशल्कविक्रम[४]प्रसङ्गसंभावनयापि मूर्च्छताम् ।
अभून्न चिते नृपतेर्दिवौकसामपि प्रसज्य प्रतिषेधपात्रता ॥२८॥

---

४ शल्कविक्रम इति खमातृकायाम् अपि शुष्कविक्रम स्यात् ।

सुराग्रजो यद्यपि यद्यपि स्वयं जगन्ति निर्मात्यसकृद्युगात्यये ।
शशाप तामेव नदी भवेति वा गिरेः सुतां यद्यपि कोपमूर्च्छितः ॥२९॥

तथापि तद्दुर्विनयोपमर्दने प्रभुर्जराजर्जरितः कथं विधिः ।
तया पुराभिद्रुत एव भीषितस्तुता तथासाविति हि प्रगीयते ॥३०॥

सहेत किं नाम वियन्नदीं हरिः सहिष्यते किंचिदयं तु साहसी ।
ससर्ज विध्यण्डपुटेऽपि यः पदं समुत्क्षिपन्नावरणोदकैर्नदीम् ॥३१॥

अयं हि मग्नाश्चिरमर्णवोदरे पुरा पुराणीः स्वयमाहरद्गिरः ।
अयं हि निर्मथ्य सुधाब्धिमद्रिणा पुरा सुरानप्यमृतैरतोषयत् ॥३२॥

अमुं पुमांसं परिहृत्य कोऽपरः प्रवर्ततामर्णवशोषकर्मणि ।
अमुं विना केन पुनर्महोदधावबन्धि सेतुः शतयोजनायतः ॥३३॥

महीधरैर्मन्दरगन्धमादनत्रिकूटहेमाचलरोहणादिभिः ।
अधारि तामप्यवहद्वसुंधरामयं न किं नाम पुरा स्वदंष्ट्रया ॥३४॥

विचारयामो यदि कर्म वैष्णवं किमस्त्यसाध्यं त्रिषु विष्टपेष्वपि ।
विचारयामो यदि वापि तां नदीं भरं क्व विन्यस्य विशङ्कमास्महे ॥३५॥

इदं तु सिद्धं हिमशैलनन्दना तथाविधैवास्तु ततोऽधिकापि वा ।
उपायवेदी मधुकैटभाहितस्तथापि किं किं न स साधयिष्यति ॥३६॥

न देवताभिर्न मृगैर्न मानुषैर्न वायुधैः संभवि यस्य नाशनम् ।
हिरण्यमीदृक्षमपि प्रतिघ्नतो न बुध्यते कैरपि तस्य मायिता ॥३७॥

कथं कथं धिग्धिगिदं स्मृतिं गता कथा ममेयं पुरशासनाश्रया ।
पुराणिनी नन्वयमीदृशोऽपि सन्क्षणान्नृसिंहः शरभेण पातितः ॥३८॥

निवेद्यते यद्यपि तस्य विक्रमो जलंधरान्धत्रिपुरस्मरादिभिः ।
तथापि बाणासुरसंगरे जनाः पठन्ति तस्यापि पराक्रमक्षतिम् ॥३९॥

अतो न किंचिद् व्यवसातुमीश्महे मतिं स्वकीयां परमास्थिता वयम् ।
क्व कूपमण्डूकनिभा मतिर्नृणां क्व देवतातत्त्वविचारचातुरी ॥४०॥

इति क्षितीशः प्रणिधानमाश्रितः क्षणं यदा यन्निमिलील लोचने ।
तदा विधिस्तस्य दृशोः पुरो भवन्प्रभावमैशं गदितुं प्रचक्रमे ॥४१॥

कियत्यसौ तात वियन्नदी भवेत्कियन्ति सर्वाणि जगन्ति वा पुनः ।
स्वयं यदि प्राक्तनपुण्ययोगतः स एव ते संरभते महीश्वरः ॥४२॥

यदंशलेशावतरस्य केलयो भवन्ति दक्षाध्वरशिक्षणादयः ।
पठन्ति तस्यैव पराक्रमक्षतिं न चेतना जातु कुतो विवेकिनः ॥४३॥

पुरा मुकुन्दाय तथा तपस्यते पुराहितस्वप्रतिपादितं वरम् ।
न पालयेद्बाणपुरे यदि स्वयं भजेदमुं पार्थिव देवतेति कः ॥४४॥

यदस्ति विश्वं क्रियते स्म येन तद्यतः स चाभूत्स च यत्र लीयते ।
स च स्वयं येन किलानुगृह्णते ततोऽप्यतीतं तदवैहि दैवतम् ॥४५॥

प्रसूतिमीशानहरीन्द्रवेधसां प्रचक्षतेऽथर्वशिखागिरो यतः ।
विहाय सर्वानपि यस्य बन्धता विधीयतेऽथर्वशिखादिसूक्तिभिः ॥४६॥

प्रमाणमूर्धन्यपदाभिषेचिता यतश्चतस्रः श्रुतयोऽपि जज्ञिरे ।
किमुक्तिभिः स प्रणवोऽपि यत्पुरः प्रतीयतेऽथर्वशिरस्यनेकधा ॥४७॥

प्रभुं प्रशान्तं परमेश्वरं च यं भणन्ति कैवल्यगिरः परिस्फुटम् ।
यमेव विश्वाधिक इत्यनुश्रवाः प्रचक्षते कण्ठरवेण नापरम् ॥४८॥

यदाप्तिहेतोर्यतते जगत्त्रयी यदेव चाद्यं फलराजसाधनम् ।
तयैव देव्या स्वयमात्मविद्यया यदीयमर्धं वपुषो विभूषितम् ॥४९॥

सुखावहो यः किल शंभुशंकराद्यभिख्यया यो वपुषातिनिर्मलः ।
य एव सर्वज्ञ इति प्रघुष्यते विशुद्धसत्त्वात्मकतां विभावय ॥५०॥

तपोभिरल्पैर्दयते च देहिनां स देवदेवः शशिखण्डमण्डनः ।
दयापि सा देयमदेयमित्यमुं विभागमेव प्रथमं न बुध्यते ॥५१॥

इति क्षितीशं प्रतिबोधयन्नसावदीक्षयच्छाम्भवदीक्षया पुनः ।
ददौ च तस्मै विनताय तत्परं परिष्कृतं पञ्चभिरक्षरैर्मधुम् ॥५२॥

प्रविष्टमात्रश्रुतिसंपुटोदरः स मन्त्रराजः शशिखण्डपाण्डरः ।
तमांसि तस्य प्रबिभेद तत्क्षणं मनांसि यूनामिव मान्मथः शरः ॥५३॥

प्रतिप्रयाते जगतां पितामहे भगीरथः पूर्णमनोरथस्ततः ।
तपश्चरिष्यन्नतिदारूणं पुनर्गिरिं जगाम श्वशुरं पिनाकिनः ॥५४॥

मरुद्भिरेकान्ततुषारवर्षिभिर्मनोहरन्तीषु यदीयभूमिषु ।
नवाभिसारेऽप्यधरं मृगीदृशां विमुक्तशङ्कं व्रणयन्ति कामिनः ॥५५॥

कठोरसौरातपतापविद्रवत्तुषारवापीसलिलैकजन्मनाम् ।
सरोरुहाणां किमिवोपहन्यते हिमेषु वा यत्र हिमात्ययेषु वा ॥५६॥

हिमस्पृशां यन्मरुतां प्रसादतो विलासिनां मुग्धवधूरतेष्वपि ।
न शिक्षणीयाजनि जातु सीत्कृतिर्न चार्थनीया परिरम्भसान्द्रता ॥५७॥

पुराणवेणुव्यतिषङ्गसंभवं दवं यदीयाः शमयन्ति तत्क्षणम् ।
तदर्चिरूष्मग्लपितद्रवीभवत्तुषारसङ्घातमहाम्बुवृष्टयः ॥५८॥

द्रवीभवद्भिः क्वचिदातपोष्मणां क्वचिच्च विद्याधरनागविद्यया ।
हिमस्वरूपैरितरैश्च यत्तटैः स्वयं भवेदेव न पञ्चषैर्दिनैः ॥५९॥

तपोविशुद्धे हृदये तपस्विनामपि क्षणादूर्ध्वमवस्थितो न यः ।
स एव यत्सानुविहारकौतुकी सदा महेशो यदि किं ततोऽधिकम् ॥६०॥

स्वतन्त्रखेलद्गिरिकन्यकाकरस्वयंग्रहावर्जितमुग्धपल्लवाः ।
मुनीन्द्रवृन्दादृतमूलपांसवो जयन्ति धन्याः किल यत्र वीरुधः ॥६१॥

परिभ्रमद्गन्धमृगाधिवासितं प्रकीर्णकल्पद्रुमपुष्पमप्यधः ।
शिलातलं स्निग्धविशालशीतलं सुखेन यत्राधिवसन्ति किंनराः ॥६२॥

यदीयनीहारकणानितस्ततः किरन्मृगाङ्कः प्रथते सुधाकरः ।
यदीयगण्डोपल एव कश्चन प्रयाति कैलास इति स्थिरं यशः ॥६३॥

स यक्षविद्याधरकिंनराप्सरःफणीन्द्रगन्धर्वनिरन्तरे पथि ।
व्रजन्नतिक्रम्य तुषारभूधरं जगाम कैलासगिरिं जनेश्वरः ॥६४॥

महेशभूषाहिकुलानि कन्दरे चिरोपरोधात्क्षुधितानि रक्षितुम् ।
समीरणं सेवितुमागतं बलान्नयन्ति यत्र प्रमथाः कृपालवः ॥६५॥

विशङ्कलङ्केशभुजोपकम्पिताद्यतो विकीर्णा रजतोपला इव ।
गणा जयन्ति प्रलयान्तपावकज्वलत्रिलोकीभसितावगुण्ठिताः ॥६६॥

तटेषु तत्तज्जगदण्डमण्डलीसमाहृतब्रह्मकरोटिकोटिषु ।
चरन्विधिर्यत्र न जातु शोचति स्मरन्नपि स्वं किल पञ्चमं शिरः ॥६७॥

प्रवेशिताः स्फाटिककन्दरोदरं नवाङ्गना यत्कटकेषु किंनरैः ।
अपत्रपन्ते बहिरासिताः सखीरवेक्ष्य नैर्मल्यवशादतिस्फुटम् ॥६८॥

विभर्ति यः स्फाटिकराजतीस्तटीः कुटुम्बिनो यत्र धनेश्वरादयः ।
समः समृद्ध्या क इवास्य वर्तते प्रभुर्न भिक्षामटति स्वयं यदि ॥६९॥

शरार्कधुर्धूरवतीषु यत्तटे महेशपुष्पोपवनीषु रक्षिणः ।
स्वतः प्ररुढामपि जातु केतकीं न हि क्षमन्ते विषवल्लरीमिव ॥७०॥

सुरसिद्धतापसगतागतोचितां परिहृत्य तत्र पदवीं भगीरथः ।
अधितिष्ठति स्म तटमस्य पावनं हृदयं च तस्य पुनरिन्दुशेखरः ॥७१॥

**इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-निर्वाहकमहाव्रतयाजिश्रीमदप्ययदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे गङ्गाहंकारो नाम तृतीयः सर्गः ।**



## चतुर्थः सर्गः

स बाह्यकरणग्रामसंविधानानुरोधिनीम् ।
आकृष्य मानसीं वृत्तिमाधत्त मदनान्तके ॥१॥
इयता क्रमितुं शक्या मयेयमिति दर्शयन् ।
स तस्थौ भुवमाक्रम्य चरणाङ्गुष्ठरेखया ॥२॥
बभौ तेन समुत्क्षिप्तो बाहुज्याघातलाञ्छितः ।
जित्वा तपोभिर्ब्रह्मर्षीञ्जैत्रस्तम्भ इवोच्छ्रितः ॥३॥
स्वात्मानन्दसुधास्वादसुखितो वसुधेश्वरः ।
न फलेषु न मूलेषु नाप्सु च प्रीतिमानभूत् ॥४॥
सस्नौ जजाप दध्यौ च स संध्यास्वखिलास्वपि ।
कथाभिः कालकालस्य जजागार च शर्वरीः ॥५॥
तप्यमाने तथा तस्मिंस्तत्यजुः क्रमशो भयम् ।
क्षुद्रस्वस्वपदस्वामिदुर्विदग्धा दिवौकसः ॥६॥
षडङ्गमातृकामूर्तिषडध्वादिविभेदिना ।
न्यासजालेन नृपतिरङ्गमङ्गमशोधयत् ॥७॥
अनुसन्धाय चण्डीशमन्तश्चण्डांशुमण्डले ।
पार्थिवः पञ्चषान्मासानुपासामास वासरे ॥८॥
अप्राकृतपरं ज्योतिरभेदध्यानशालिनः ।
तस्य दृष्टिपथे स्थातुं तत्रास महसां निधिः ॥९॥
अगृहीतोत्तरासङ्गमासीनं च तमन्तरे ।
परीक्षितुमिवाजग्मुर्दिवसा हिमसान्द्रिताः ॥१०॥
विना सशपथैः सान्त्वैर्विना व्याजैश्च कामिनाम् ।
अपि सान्द्रं परिष्वङ्गमन्वजानन्नवाङ्गनाः ॥११॥
गर्भेष्वाप्रपदीनानामवगुण्ठनवाससाम् ।
अशेत द्वन्द्वमस्यन्दमासक्तोरुभुजं मिथः ॥१२॥
कञ्चुकाहरणातङ्ककातराणां मृगीदृशाम् ।
दयालुर्हैमनो वायुर्ददौ रोमाञ्चकञ्चुकम् ॥१३॥
किं त्यक्तं युवभिर्घर्मे किंल्लब्धं चाधिकं हिमे ।
आनुकूल्याद्यशो लेभे चतुरस्तु हिमागमः ॥१४॥
प्रकृत्या कुटिलो मारः पवनस्तुहिनाकरः ।
दीर्घाश्च रात्रयो हन्त जीवन्तु पथिकाः कथम् ॥१५॥
संभ्रान्तो हिमवर्षेण शङ्के मकरकेतनः ।
उपारुरोह नारीणामूष्मलं कुचमण्डलम् ॥१६॥

फालानलशिखोत्तप्तपाणिपद्मा कपर्दिनः ।
कथमप्यतिचक्राम हिमं हैमवती तदा ॥१७॥
ध्वंस्यमानेषु वाणेषु भज्यमाने च कार्मुके ।
भुवनान्यजयत्त्रीणि भ्रूक्षेपादेव मन्मथः ॥१८॥
वसन्त इव हेमन्तो वशीचक्रे जगत्रयम् ।
न वसन्तः स्वतः किन्तु यः स्मरेण कटाक्षितः ॥१९॥
मम्रुः कुन्देषु ते भृङ्गा यैर्व्याप्तमखिलं वनम् ।
कस्य किं वा न पर्याप्तं कालो यद्युपतिष्ठते ॥२०॥
द्वौ हि तेजस्विनौ लोके सविता स च पार्थिवः ।
तस्थतुस्तौ विभज्येव दक्षिणोत्तरयोर्दिशोः ॥२१॥
स्वस्थिकस्थगितोरोजाः सीत्कारतरलाधराः ।
स्नानान्तेषु स्त्रियो मुग्धा यूनामाचकृषुर्मनः ॥२२॥
पतितव्यं हिमैर्नाम स्नातव्यं नाम च द्विजैः ।
किं कुर्मः कृतवानेवं स विधिर्नोपलभ्यते ॥२३॥
धूलिधूसरितादर्शदुर्दर्शं रविमण्डलम् ।
प्रत्येतुमक्षमाश्चक्रा न मिथः सममंसत ॥२४॥
निष्प्रभो यद्रविर्जज्ञे यच्च धूसरिता दिशः ।
उत्पातेनेव तेनासीत्प्रलयः पान्थयोषिताम् ॥२५॥
निदाध एव यत्रत्यः परत्र शिशिरायते ।
तत्रैव यदि हेमन्तः स कथं नास्तु पर्वतः ॥२६॥
प्राक्तनेषु तुषारेषु प्रत्यग्रं पतितं हिमम् ।
निश्चीयते स्म मृदुता दृश्यै विद्याधरीपदैः ॥२७॥
प्रथमा भसितारब्धसर्वाङ्गीणावगुण्ठनाः ।
पाणिस्थं देवदेवस्य पर्युपासत पावकम् ॥२८॥
अमुक्ताहेमनेपथ्यमङ्गरागं च कौङ्कुमम् ।
किंचित्तत्रान्वमन्यन्त कुबेरान्तःपुरस्त्रियः ॥२९॥
आकृष्टयो कुमाराभ्यामैभवैयाघ्रचर्मणोः ।
संभ्रान्ता पतिमावव्रे सव्यानाग्रेण पार्वती ॥३०॥
अवमुच्य वतंसेन्दुमवरोप्याहि भूषणम् ।
उद्घाट्य चाक्षि तार्तीयमीशेनापि स्थितं तदा ॥३१॥
नृपतिस्त्रिजगद्दाहनिदानेन तपोऽग्निना ।
हेमन्तं हिमवन्तं वा नाचिन्तयत चेतसा ॥३२॥

[५]त्रिदशास्तच्छिरोरन्ध्रतपोऽग्निज्वालतापिताः ।
सस्मरुश्चाक्षुषं ज्योतिः संवर्तेषु कपर्दिनः ॥३३॥
परिपाकोन्मुखे तस्य प्रायस्तपसि दारुणे ।
प्रसन्नानि निमित्तानि प्रादुरासन्पदे पदे ॥३४॥
विकचाम्भोरुहां वापीं विमलं चेन्दुमण्डलम् ।
स्वप्नेषु पश्यन्राजर्षिः सिद्धं मन्त्रममन्यत ॥३५॥
कल्पान्तोद्भ्रान्तजीमूतगर्जितस्निग्धमांसलः ।
संध्यासु शुश्रुवे तेन शंभोर्डमरुकध्वनिः ॥३६॥
चण्डीशताण्डवालोकसंभ्रान्तानमृतान्धसः ।
ददर्श दिवि संध्यासु क्षणत्विष इव क्षणम् ॥३७॥
प्रत्यहं प्रमथास्तत्र पश्यन्तस्तं तिरोहिताः ।
जातु विज्ञापयमासुश्चरितं तस्य शूलिनः ॥३८॥
तावतस्तपसो दातुमपश्यन्नुचितं फलम् ।
हरः प्रतस्थे तं द्रष्टुमधमर्ण इव ह्रिया ॥३९॥
उपरि न्यस्य संव्यानमुत्सार्य वलयान्पुरः ।
आन्तःपुरगृहद्वारमम्बिकैव करं ददौ ॥४०॥
अचिन्तितोऽपनिष्क्रान्तमालक्ष्य मदनान्तकम् ।
किमेतदिति संभ्रान्ताः परिवव्रुस्ततो गणाः ॥४१॥
विनयानम्रजम्भारिविशोधितपुरं पुरः ।
अतिक्रम्यालयद्वारमारुरोह वृषं हरः ॥४२॥
अम्बापि संभ्रमासन्नसखीदत्तकरा शनैः ।
पादारविन्दविन्यासैः पावयामास मेदिनीम् ॥४३॥
कामं शिक्षितसंचारा कठोरे हृदि मे यतः ।
अतः कथंचिदाक्रामदङ्घ्रिभ्यामेव सा भुवम् ॥४४॥
चन्द्रचूडकरालम्बसंभृतारुण्यसंपदम् ।
अम्बिकायाः करं मन्दमाममर्श सखीजनः ॥४५॥
देवोऽपि स्वयमारुह्य वृषभं वृषभध्वजः ।
देव्या विलम्बमानाया दृष्टिमध्वनि संदधे ॥४६॥
क्रुद्धन्नन्दिकरोद्धूतवेत्रपातपलायिताः ।
विजहुः सरणिं गौर्या विनीतास्तत्र देवताः ॥४७॥

५. तपो जज्वाल 'ख' मातृकायां स्यात्

पद्भ्रयामेवोपसर्पन्त्याः पार्वत्याः पथि शंकरः ।
कटाक्षैर्विचकारेव कह्लारेन्दीवरास्तरम् ॥४८॥
व्यजनैः प्रान्तविन्यस्तकस्तूरीचन्द्रगन्धिभिः ।
मातरं तामसेवन्त कौबेरान्तःपुरस्त्रियः ॥४९॥
सान्द्रस्तनपरीणाहसंभुग्नाय पदे-पदे ।
भद्रान्याशास्त मध्याय पार्वत्याः प्रणयी तदा ॥५०॥
आयतोद्रीविकाखिन्नानमरान्वेत्रदूरितान् ।
कटाक्षैः सानुजग्राह करुणासारसान्द्रितैः ॥५१॥
अनालम्ब्य सखीहस्तमनाक्रम्य च पादुकाम् ।
संनिकर्षं महेशस्य सा जगाम शनैः शनैः ॥५२॥
कृत्वा सव्यपदं लक्ष्म्याः कुञ्चिते जानुमण्डले ।
आरुरोह वृषं शंभोर्हस्तमालब्य सा ततः ॥५३॥
आरोपयन्निव स्वैरमालिलिङ्ग शिवः शिवाम् ।
इति संकथयन्तीषु सखीष्वैक्षिष्ट सान्यतः ॥५४॥
पाणिभ्रमितशूलाग्रपर्यस्तजलदाः शिवम् ।
शतमन्वगमन्रुद्राः शतरूद्रीयसंस्कृताः ॥५५॥
कुतः प्रतिष्ठते देवः कुत्र चेति गणास्तदा ।
पाणिभिर्नयनान्तैश्च पप्रच्छुरितरेतरम् ॥५६॥
भुग्नभारेण भक्त्या च पुण्ये शिरसि नन्दिनः ।
वाममास्थापयद्बाहुं वाहनस्थो महेश्वरः ॥५७॥
वाहनारोहविस्रस्तकपर्दान्तविलम्बितम् ।
चन्द्रं गृहीतुमुद्बाहुः स्कन्दो व्यचरदन्तिके ॥५८॥
प्रागलब्धं विचित्यापि पादं मौलिं च शूलिनः ।
पश्यन्तौ जग्मतुः पार्श्वे चक्रायुधचतुर्मुखौ ॥५९॥
अन्तकान्धककन्दर्पकालकूटादिनिग्रहम् ।
गायन्तो मधुरं तस्य गन्धर्वा ययुरग्रतः ॥६०॥
प्रशान्तं पावनं तत्र प्राप्य राज्ञस्तपोवनम् ।
तस्थौ तपस्यतस्तस्य पुरतः पुरशासनः ॥६१॥
स च तत्रान्तरे प्रातः स्नातो मन्दाकिनीजले ।
दध्यौ चिरमुमाकान्तं दहराकाशमण्डले ॥६२॥
उन्मीलयन्दृशौ किंचित्तेन कोलाहलेन सः ।
अप्राकृतं महः किंचिदद्राक्षीदग्रतो दृशोः ॥६३॥

तस्यान्तः पुरुषं कंचित्तरुणेन्दुशिखामणिम् ।
सान्द्रीभूतशरच्चन्द्रचन्द्रिकाभं ददर्श सः ॥६४॥
निर्बन्धक्लान्तभूषाहिनिर्दयाघ्रातमूर्च्छितम् ।
बोधयन्तं पुनः स्कन्दं चूड़ाचन्द्रसुधाकणैः ॥६५॥
हृदयं वीतमालिन्यं वाचमप्यमृतोर्मिलाम् ।
अधिष्ठातुमशक्तेन क्ष्वेलेनाक्रान्तकंधरम् ॥६६॥
दुर्दान्तत्रिपुरप्लौषवृत्तान्तज्ञैः सुधाशनैः ।
सातङ्कं दृष्टवदनं बहुमानस्मितेष्वपि ॥६७॥
कपालानि शिरःस्थानि स्कन्धे प्रत्येकशो विधेः ।
दत्त्वा तदीयजिज्ञासौ गणेशे कुपितं मृषा ॥६८॥
हेरम्बकंधरालम्बि दूर्वाग्रग्रासकौतुकात् ।
गन्तुमुन्नमितग्रीवं गृहणन्तमसकृन्मृगम् ॥६९॥
अस्मिन्दयस्व रक्षेममयुं पश्येति नाकिनाम् ।
आवेदयन्त्या कार्याणि हैमवत्याप्यनूषितम् ॥७०॥
अथ दृष्ट्वा स देवेशमदृष्टं निगमैरपि ।
साध्वसाद्भुतसंभ्रान्तो न किंचित्प्रत्यपद्यत ॥७१॥
ततः प्रदक्षिणीकृत्य तन्मयं सपरिच्छदम् ।
मुहुः पस्पर्श धन्येन मूर्ध्ना तस्याङ्घ्रिपङ्कजम् ॥७२॥
आत्मार्हैः फलपुष्पाद्यैरानर्च स महेश्वरम् ।
तदर्हैर्यदि यष्टव्यं कस्तमाराधयिष्यति ॥७३॥
क्वायं क्व शंभुस्तदपि स्तोतुं समुपचक्रमे ।
न हि वस्तुकृता प्रीतिः स्वशक्तिमनुरुध्यते ॥७४॥
त्वं गतिस्त्वन्मयं विश्वमिति साधारणी स्तुतिः ।
अस्तुतिस्त्वयि युक्ता तदवाङ्मनसगोचरे ॥७५॥
गुणं सन्तमसन्तं वा कीर्तयेद्यदि सा स्तुतिः ।
गृह्गुन्गुणैकदेशं ते क इव स्तावको जनः ॥७६॥
सर्वज्ञ शंकराभिख्यासमावेदितवैभवात् ।
त्वदृते किं परब्रह्म सच्चिदानन्दलक्षणम् ॥७७॥
त्वत्प्रसूतो हरिर्यावत्त्रय्यन्तैरुपवर्ण्यते ।
तावत्प्रभावं भवतस्तर्कयन्ति मनीषिणः ॥७८॥
त्रिमूर्तिजननी तुर्या या मूर्तिर्विदितास्ति सा ।
यदि ते यदि वान्यस्य तन्मे ब्रह्मास्ति किं क्षतम् ॥७९॥

धर्मधर्मिभिदापन्नं चैतन्यं यदि मायया।
जातौ तदेव हि युवां जगदादिमदंपती ॥८०॥
कैवल्योपनिषद्घुष्टं यदिदं रूपमीश ते।
संनिधत्तां तदा देव संस्मरामि यदा यदा ॥८१॥
इति तुर्यन्तसिद्धान्तनिष्कर्षामृतवर्षिणा।
वाङ्मुखेन स्तुतस्तेन व्याजहारेदमीश्वरः ॥८२॥
यत्तप्तवानसि तपो यच्चैवं भक्तिमानसि।
ततः प्रीतिजुषो मत्तस्तात काङ्क्षितमर्थ्यताम् ॥८३॥
इत्याज्ञापयति स्वामिन्येतदाह भगीरथः।
संभ्रमामोदसंबाधस्तब्धगद्गदया गिरा ॥८४॥
आगतोऽसि मदर्थं यदागसोऽस्यैव शान्तये।
नालं मम तपः सर्वं नाथ केनार्थये वरम् ॥८५॥
तथाप्यद्य त्वदीयाङ्घ्रिसाक्षात्कारोपसंभृतैः।
तपोभिरर्थये तात काङ्क्षितं मे त्वदाज्ञया ॥८६॥
तपसाराधिता गङ्गा याचितावतरा मया।
स्वाम्बुवेगसहं कञ्चित्प्रत्ययाचत मां पुनः ॥८७॥
अस्मिन्ननन्यसाध्येऽर्थे व्यापर्तुमुचितं तव।
अत्रोदाहरणं मुख्यं हालाहलविनिग्रहः ॥८८॥
आयासमीदृशं यत्त्वमर्थितोऽसि जगद्गुरो।
तन्मम क्षम्यतां बाल्यचापल्यमिति चानमत् ॥८९॥
अभिषेकप्रियाणां नः प्रियमेतत्कृतं त्वया।
नापराद्धं पुनः किंचिदित्युवाच तमीश्वरः ॥९०॥
अभिधाय वृषात्तूर्णमवरुह्य महेश्वरः।
निषसाद पुरस्तस्य निर्मले स्फाटिके तले ॥९१॥
आबद्ध्य चर्म वैयाघ्रमपसार्य च बालकौ।
सावष्टम्भः क्षितावास्त सज्जीभूतो वृषध्वजः ॥९२॥
सावलेपनभःसिन्धुसंनिपातोचितं प्रभोः।
नन्दी विस्रंसयामास नागेन्द्रग्रथिता जटा ॥९३॥
भगिनीसमागमसमुत्सुका शिवा प्रमथास्तदद्भुतदिदृक्षयाकुलाः।
स्वमनोरथोपगमसान्द्रकौतुको नृपतिश्च तं निभृतमक्षिभिः पपुः ॥९४॥

बद्धस्रस्तकपर्दकन्दरपतद्भोगीन्द्रचन्द्राङ्कुर-
क्षेपव्यापृतनन्दिदृष्टिवलनव्याधूतदिग्भित्तयः ।
सावष्टम्भमहेशसंभ्रमपरित्रस्यत्त्रिलोकस्तुताः
पारे मद्वचसाममर्त्यतटिनीसंपातपूर्वक्षणाः ॥९५॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य चतुरधिकशतप्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे शंकरसाक्षात्कारो नाम चतुर्थः सर्गः ।**

❖❖❖

## पञ्चमः सर्गः

प्रान्तसंक्रमिततारया दृशा पश्यति त्रिपुरशासने ततः ।
अस्मरत्सुरनदीमहंकृतां ध्यानयोगविधिना भगीरथः ॥१॥

संभृता मनसि सा ततः क्षणात्संभ्रमेण महताकुलीकृता ।
सर्वतश्चिरनिरोधलज्जितं सज्जतामनयदूर्मिमण्डलम् ॥२॥

सा निवेदयितुमात्मनिर्गमं सन्निकर्षमुपजग्मुषी विधेः ।
व्याजहार विनयावधीरणव्यक्तगर्वगरिमोष्मला गिरः ॥३॥

अस्ति नन्वयमयुग्मलोचनः स्फाटिकाचलचरो वनेचरः ।
धर्तुमिच्छति स नाम मामकं त्वत्परीक्षितमहारयं पयः ॥४॥

स प्रकामजरठो गुरु; पिता सा च मुग्धहृदया यवीयसी ।
व्याहतो यदि न मे समुद्यमः कः शिवः क इव राजतो गिरिः ॥५॥

त्वद्गृहे स्थितवती चिरादहं त्वामनेन परितोषये ततः ।
त्वच्छिरोलवनकर्म दुर्मदं संनिपात्य गिरिशं रसातले ॥६॥

सावलेपनिपतन्मदूर्मितासंप्लवैककवलीकृतो हरः ।
संगते पयसि शङ्खशुक्तिभिर्नन्दिना ननु गवेषयिष्यते ॥७॥

कालकूटमिव मन्यते शिवो मामकं प्रकृतिदुर्मदं पयः ।
ब्रूहि तावदधुनापि मेति तं मा विषीदतु यवीयसी पुनः ॥८॥

शङ्कितो जगदकाण्डविप्लवाद्याचते यदि भवानथापि माम् ।
तं मदम्बुवहनातिमानिनं कंचिदेव शमयामि नापरम् ॥९॥

कर्णयोर्यदि पतेयुरन्ततो गर्जितानि चलतां मदम्भसाम् ।
तत्त्वत: कथय किं भवेच्छिवस्त्वं हि तन्महिमलेशवेदिता ॥१०॥

इत्थमुद्धतमुदीर्य सा विधिं संगतानपि सुरानभाषत ।
मा परित्रसत मामकं पयो लज्जते बलपराक्रमाय व: ॥११॥

यात यूपमपयात च क्षणं देवता निजनिजालयांस्तत: ।
कौतुकं तु यदि वोऽस्ति वीक्षितं कोणमावसत निर्भया दिशाम् ॥१२॥

त्रासिता: किल तयैवमुक्तिभि: पार्श्वमापुरमरा: पिनाकिन: ।
कस्य नाम न तथाविधा गिर: क्षोभयेयुरपि चाश्मनं मन: ॥१३॥

उद्यतान्गदितुमापगागिर: स्तम्भितानथ निजेन तेजसा ।
आकलय्य नयनाञ्जलै: सुरानन्तरं स्मयत चन्द्रशेखर: ॥१४॥

संनिवृत्य सदसस्ततो बहि: क्रोधमन्थरविसंस्फुटै: पदै: ।
आविवेश सरसीं ततो नु तामापगापि जगदाक्रमोद्यता ॥१५॥

स्थापिता: कमलजन्मना पुरा सेतव: श्रुतिमया: समन्तत: ।
संनिपत्य सकृदेव संप्लुतैरूर्मिभिस्त्वरितमुल्ललङ्घिरे ॥१६॥

प्राणिनां प्रतियुगान्तमर्णवैर्यामकल्पयत पद्मभूर्दशाम् ।
सैव तस्य फलिता तदा तया कर्मण: क इवं नाश्नुते फलम् ॥१७॥

प्राप्य जानुमतिलङ्घ्य नाभिमप्यम्भसि क्षणमथास्य संमिते ।
क्रन्दतामशरणं तपस्विनां शुश्रुवे कलकलान्वितं वच: ॥१८॥

सर्वत: सुरतरङ्गिणीजलै: संप्लुते सदसि तत्र वेधस: ।
प्राणसंयमनशिक्षया परं मज्जिता न कतिचिन्महर्षय: ॥१९॥

वक्रसौधवलभीगता विधे: शारदापि सहसोत्थिता सती ।
उद्गृहीतकरपुस्तका भयादक्षिपद्युगमिव क्षणं क्षणम् ॥२०॥

विश्वसर्गचतुरोऽपि पद्मभूर्न प्रतिव्यधित तत्र किंचन ।
स्वैरमस्तु कुशल: परापदि स्वापदि त्वकुशलोऽखिलो जन: ॥२१॥

सत्यलोककुहरक्षणासिकासंकटाक्षमतयेव तत्क्षणम् ।
निर्जगाम परितस्ततो बहिस्तन्निसर्गनिरवग्रहं पय: ॥२२॥

गाधभाजि गतविक्रियं जले सम्मितं तदनु नाभिमात्रके ।
सोक्तिगुम्फमपि दर्शितस्थले वक्रमण्डलमधाच्चतुर्मुख: ॥२३॥

तारिता वयमिमां महापदं तावकादिह तपोबलादिति ।
स स्तुतः परिजनेन लज्जितः कः स्तुतेरपि वधोऽभिषङ्गिणः ॥२४॥

फेनिलाः सलिलशोषरेखकाः सर्वतः सदनभित्तिपर्वसु ।
आयतश्वसितमानमन्मुखं पश्यति स्म स दृशातिदीनया ॥२५॥

नाजपं किमिति मन्त्रमानलं नासृतं किमिति चाभितस्तटीः ।
इत्यखिद्यत विधिर्गते जले सा किल प्रकृतिरग्रजन्मनाम् ॥२६॥

आननैर्हसितवाष्पकर्बुरैरद्य जीवितमिवेति वादिभिः ।
दोर्भिरप्यधिकदूरचालितैरालिलिङ्ग मुनिमण्डलं मिथः ॥२७॥

सत्यलोकमपहाय निश्चिते गन्तुमिन्द्रपुरमभ्रगङ्गया ।
धावयन्पथि जनान्पुरो ययौ वेत्रपाणिरिव वीचिमारुतः ॥२८॥

पाकशासनपुराश्रये पदे स्वेच्छया विहरतां सुधान्धसाम् ।
आगतं प्रलयमाचचक्षिरे जाह्नवीजलझलज्झला रवाः ॥२९॥

संभ्रमोपगतचारशंसितस्वर्गसिन्धुपतनं पदे पदे ।
सौधशृङ्गवलभीनिवेशितस्वस्वमूलधनमप्सरो जनैः ॥३०॥

मन्दुरोदरविमुक्तविद्रवत्सैन्धवानुचरसादि मण्डलम् ।
दिक्तटोच्चलितजाङ्घिकामरस्वीकृताभ्रककुलं गृहे गृहे ॥३१॥

निर्गतत्रिदशनाथदर्शनस्तब्धविद्रवदनीकिनीभटम् ।
इत्थमाकुलमतर्कितागता सा चकार नगरं शचीपतेः ॥३२॥

संपपात हरिनीलदन्तुरे वैजयन्तशिखरे समन्ततः ।
सा ततो विदधतीव संस्तवं मस्तके निपतितुं महेशितुः ॥३३॥

सर्वतः प्रचलितैः कणात्मना सौधशृङ्गपतितैस्तदम्बुभिः ।
संगतो न समलक्ष्यत क्षणं निर्मलः सुरपतेर्मदावलः ॥३४॥

वैजयन्तविनिपातवेगतो दूरमुत्पतति तत्पयोभरे ।
छत्रगर्भनिहितेव सा पुरी नाजनि क्वचिदपि क्षतोदरा ॥३५॥

प्राप्य सानुपदमेव मेदिनीं यं यमम्भसि निमज्जयिष्यति ।
तं तमत्र विनिधातुमेव किं त्रायते स्म निपुणं त्रिविष्टपम् ॥३६॥

सा ततः प्रचलिता समन्ततो व्यानशे निरवशेषमम्बरम् ।
संविभक्तपरभागसुन्दरी चन्द्रिकेव शरदागमोज्वला ॥३७॥

सा दिवि प्रमथनाथकुन्तले संभ्रमद्विमलवीचिमण्डला ।
तर्क्यते स्म चतुरैः सुधाशनैर्मालिकेव नवमल्लिकामयी ॥३८॥

व्योम्नि तल्लहरिवल्लरीहता ये सुराः सुरगजाश्च केचन ।
ते तदीयजलजन्तवो न चेत्को नरः पयसि कश्च सिन्धुरः ॥३९॥

तज्जलभ्रमिभिराहितभ्रमा नन्दनोपवनपादपास्तदा ।
संप्रहर्तुमसमेक्षणं तया भ्रामिता इव गदा विरेजिरे ॥४०॥

निम्नभागविनिपातसंभृता निस्तला रुरुचिरे जलभ्रमाः ।
गङ्गया निगमसेतुसंस्तवादार्जिताः प्रणवमण्डला इव ॥४१॥

आदिभिक्षुगृहिणीं यवीयसीं सा सभाजयितुमुद्यता दिवः ।
आजहार विविधानि भूषणान्यम्बराणि च महेन्द्रमन्दिरात् ॥४२॥

मुक्तदिव्यतरुपुष्पवृष्टयः श्लाघनोक्तिमुखराश्च सर्वतः ।
आहृता लहरिमारुतैस्तथा सिद्धचारणगणाः सहाययुः ॥४३॥

उद्गताभिरितरेतराहतादूर्मिभिः सुरगणः समुच्छ्नत ।
आसदत्सदनमेव वेधसः को न तच्छ्रयति तज्जलाप्लुतः ॥४४॥

वीचिवेगपरितुष्टसंपतत्पाकशासनपताकिनीसखी ।
योद्धुमुद्यतवतीव वाहिनी सा जगाम सविधं महेशितुः ॥४५॥

आ विरिञ्चिगृहमाहिमालयं निर्मला रुरुचिरे तदूर्मयः ।
स्वर्वधूभिरभितो दिदृक्षया पातिता इव कटाक्षरेखिकाः ॥४६॥

प्राप्य शंकरकपर्दकन्दरं संभ्रमन्निह तदूर्मिमारुतः ।
क्रोशति स्म सुरसिन्धुमुद्यतां मा पतेति विनिवारयन्निव ॥४७॥

सानुरागबहुमानमानतां सा शिवामभिकपार्श्ववर्तिनीम् ।
एकया किल तरङ्गरेखया पाणिनेव मृदुलं परामृशत् ॥४८॥

तत्प्रवाहमुखवत्सदूर्मिवच्छीर्णशीकरसमुत्थितास्तदा ।
ताडिता इव महोपलैस्ततो दूरदूरममरा विदुद्रुवुः ॥४९॥

कोपलेशपरुषैरवज्ञया कूणितैरपि विलोचनाञ्चलैः ।
पश्यति स्म पतनोन्मुखीं नमीर्नाषदुन्नमितकन्धरो हरः ॥५०॥

यावदानमयते यथापुरं द्रष्टुमुन्नमितमीश्वरः शिरः ।
तावदेव निपपात तत्र सा विस्मयाय मिषतां दिवौकसाम् ॥५१॥

शापकोपकलुषेव सा विधिं संनिमज्य सुचिरं विनिर्गता ।
तत्कपालमपि शांभवे शिरस्याजघान परुषाभिरूर्मिभिः ॥५२॥

तस्य पञ्चमशिरोनिपातनादर्धदुर्मरणमापपात यत् ।
पातकं परिजहार तद्भवं पावनेन पयसा वियन्नदी ॥५३॥

तज्जवादुपहृतं दिवौकसां तस्य मूर्धनि विमानमण्डलम् ।
वेत्रदण्डवलनेन नन्दिनो दिङ्मुखेषु निपपात दूरतः ॥५४॥

केयमार्द्रयति मस्तकं गुरोस्तद्ग्रसेय निखिलाममूमिति ।
किंचिदुच्छ्रितकरे गजानने हुंकृतान्यकृत सत्रपं शिवः ॥५५॥

वीचिमारुतवितीर्णपारणामांसलाः शिवकपर्दपन्नगाः ।
संप्रसार्य फणमापदस्ततः संररक्षुरमृतांशुरेखिकाम् ॥५६॥

अप्रतर्क्यमसमीक्षितावधिं तं कपर्दवलयं पिनाकिनः ।
आपगा दिविषदामवाङ्मुखी पन्नगीव कलशं समाविशत् ॥५७॥

तज्जटासु विशती वियन्नदी सा कियत्पथमदृश्यतामरैः ।
शुश्रुवे तदनु तज्जलारवो यस्य किंचिदुपलभ्यते ततः ॥५८॥

तज्जटापटलकन्दरोदरस्वीकृताः सुरनदी महोर्मयः ।
लेशतोऽपि किल नाललक्षिरे सत्क्रिया इव कृतघ्नगोचराः ॥५९॥

मूर्ध्नि तस्य मुहुराहितभ्रमा प्राप सा न पदवीं निवर्तितुम् ।
दुर्लभं ननु जगत्सुदेहिनां तं प्रविश्य विनिवर्तनं पुनः ॥६०॥

अभ्यषिञ्चदमरापगा शिवं यच्छ्रुतिव्यतिकरानघैर्जलैः ।
तेन किं नु सुकृतेन भूयसा तत्क्षणाल्लयमवाप तत्र सा ॥६१॥

तापितासु नयनाग्निहेतिभिस्तज्जटासु पतितास्तदूर्मयः ।
अम्भसां पुनरतिप्रबन्धतः क्लेदमात्रमदिशन्कथंचन ॥६२॥

जातमित्यथ समीपवर्तिना नन्दिना सविनयं निवेदिते ।
सव्यपाणिविधुता जटाः पुनः शंकरः परिबबन्ध पन्नगैः ॥६३॥

कपर्दममरापगासलिलसेकसान्द्रीकृतं
विधुन्वति सविभ्रमं पशुपतौ विकीर्णास्ततः ।
क्वचित्सुरपुरंध्रयः क्वचन यक्षविद्याधराः
क्वचिच्च परमर्षयः समवलन्त संमूर्च्छिताः ॥६४॥

यावद्व्योमविटङ्कसंकुलचलत्कल्लोलकोलाहलै-
रायाभीमवधारयन्दुहितरं प्राप्तस्तुषाराचलः ।
तावत्पीतसुरापगोदकपुनर्व्याधूतसंदानिताः
संमृष्टाश्च पटाञ्चलेन शिवया शंभोरपश्यज्जटाः ॥६५॥

अक्लिष्टपन्नगमजर्जरितेन्दुरेख-
मव्यस्तकाशकितवस्तवकावतंसम् ।
शंभोरदृश्यत शिरः सुरसिन्धुमुक्त-
दिव्यद्रुमप्रसवसौरभसारसान्द्रम् ॥६६॥

प्रणमदमरग्रामप्रस्तूयमानमहास्तव-
स्तवकितगुहामूलाः कैलासशैलतटास्तदा ।
प्रशमितवियद्गङ्गाहंकारसंकथनादृत-
प्रमथपरिषच्छन्नाः किं नाम नादधतेऽद्भुतम् ॥६७॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशत-प्रबन्धनिर्वाहकमहाव्रतयाजि श्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे गङ्गावतारो नाम पञ्चमः सर्गः ।**



## षष्ठ सर्गः

ततो जटाभिर्गिरिशस्य पीते तावत्यपि स्रोतसि देवसिन्धोः ।
भगीरथोऽपि प्रमथैः सहैव विसिस्मये प्रागथ विव्यथे च ॥१॥

तुष्टो विरिञ्चिः प्रससाद शंभुर्लब्धा च गङ्गा फलितं किमेतैः ।
आराधनीयं वलयं जटानामज्ञासिषं येन न लेशतोऽपि ॥२॥

संध्यासु दिष्ट्या यदि नृत्यतोऽस्य संशीर्य या कापि जटापतिष्यत् ।
कल्पान्तसंभेददुरुत्तरापि सप्तार्णवी क्वेव तदाभविष्यत् ॥३॥

आभाष्य गङ्गामवतार्य तामप्यासादिता येन न कार्यसिद्धिः ।
सोऽहं विलज्जः पुनरद्य तस्याः संजीवनायैव कथं तपिष्ये ॥४॥

निर्विद्य किंचिन्नृपतिस्तदैव धैर्यं परं धारयति स्म भूयः ।
नायं गुणोऽस्य प्रकृतिर्यदेषा चुक्षोभ किंचिद्यदसौ स दोषः ॥५॥

समानयेयं पुनरभ्रगङ्गां संपादयेयं यदिवापरां ताम् ।
तदस्ति किं यत्तपसामसाध्यमिति प्रपेदे पुनरिन्दुमौलिम् ॥६॥

प्रसादयामास भगीरथस्तं वाग्भिः पुरेवात्वरितो[६] महेशम् ।
आद्यं विदुः साधनमर्थसिद्धेरसंभ्रमं कार्यविपर्ययेऽपि ॥७॥

कल्पावसानेषु चतुर्दशापि जगन्ति यत्र त्वपि संविशन्ति ।
तत्रैकवेधोगृहदीर्घिकेयं लीना वराकी यदि का स्तुतिस्ते ॥८॥

कियन्ति पीतानि विधे कपालैः
कियन्ति वेगादवनौ निपेतुः ।
कियन्ति केशेष्वपि लिल्यिरे ते
गङ्गोदकानीति कुतः स्मयस्ते ॥९॥

दिष्ट्या निपीता भवता नदीयं
शक्त्या न तस्यास्त्वयि कः प्रसङ्गः ।
शङ्खाम्बु दत्तं कियदेव भक्तैः
सहस्रधारं ननु मन्यसे त्वम् ॥१०॥

सह्यानि चूड़ोरगफूत्कृतानि सह्याश्च गौरीचरणप्रहाराः ।
तज्जानती नाथ जटापदे ते तस्थौ न गङ्गा स्वयमेव नूनम् ॥११॥

आस्तां हिमाद्रौ श्वशुरेऽनुवृत्ति
रास्तां च भक्ते मयि तेऽनुकम्पा ।
चण्डी न दृश्या भगिनीवियोग-
शङ्काकुला किं ग्रसताभ्रगङ्गाम् ॥१२॥

अस्त्वेवमासीद्यदि ते कपर्दिन् गर्भो जगद्भिस्त्रिभिरप्यपूर्णः ।
मूर्ध्नापि किं ते भवितव्यमेव गङ्गापि यस्य स्नपनाय नालम् ॥१३॥

अभ्यर्थये त्वामथवा न गङ्गां
कस्त्वं गृहीतुं पुनरुज्झितुं वा ।
स्तोस्यामि ता एव जटास्त्वदीया
याभिर्निपीता कणवन्नदी सा ॥१४॥

जटा नमो वश्चिरसंप्ररूढां
रुद्ध्वा पिपासामियतीं स्थिताभिः ।
युष्माभिरालिह्यत नान्तिकेऽपि
दिष्ट्या पयोमण्डनिभोऽयमिन्दुः ॥१५॥

---

६. वाक् पुरेवात्वरितो महेशम् 'इति ख' मातृकायाम्

जटा ललाटानलतापितानां पानोदकं किं नु वियन्नदी वः ।
यच्च न्यगीर्यन्त पदे पदेऽपि पयांसि तस्याः स किमूपदंशः ॥१६॥

पीतं पयो बह्विति मा विभीत भविष्यथ स्वस्थतराः पुरेव ।
चण्डीशमत्तभ्रमणेन यूयं सद्यः समुद्भ्रान्तजला दिनान्ते ॥१७॥

भक्तार्पिताभिः कियतीभिरद्भिः कालो महान्येन कपर्दनीतः ।
स त्वं समासाद्य च तावदम्बु भूयोऽपि किं प्रागिव भिक्षुकोऽभूः ॥१८॥

इत्थं चमत्कारतरङ्गिताभिस्तुतोष तस्य स्तुतिभिर्महेशः ।
साहित्यमर्मावगमे क्षमेत सर्वज्ञमीशं तमृते परः कः ॥१९॥

मोक्तुं नदीमानमनानभिज्ञं मूर्धानमीशो नमयांबभूव ।
भक्तैकरक्षाव्रतदीक्षितानां दूरे स्वमानद्रढिमाभिमानः ॥२०॥

ये शुश्रुवुर्गर्वकिरो गिरः स्वास्तेष्वेव पश्यत्सु सुधाशनेषु ।
ह्रीणेव निर्गन्तुमवाङ्मुखी सा ततोऽपतद्बिन्दु सरस्युदारे ॥२१॥

तान्येव यादांसि महाद्भुतानि ता एव पर्याप्तदिशो लहर्यः ।
पेतुः कपर्दात्पुनरिन्दुमौलेर्गर्वोक्तयस्ताः क्व गता न विद्मः ॥२२॥

तामापतन्तीमवनौ कपर्दादाकुञ्चितादीषदिवेन्दुमौलेः ।
दूरादमन्यन्त विलम्बमानां मालामिव द्रोणमयीममर्त्याः ॥२३॥

सा तत्र सिन्धुः सरसि क्षरन्तीं स्रोतांसि सप्त स्वयमाबभार ।
त्रिभिः प्रतीचीदिशमाववार त्रिभिश्च सा तैर्दिशमिन्द्रगुप्ताम् ॥२४॥

आमन्त्र्य मूर्ध्ना प्रणतेन शंभुमारुह्य च स्यन्दनमग्रतस्तम् ।
संप्रस्थितं पार्थिवमव्ययासीत्स्रोतः परं कीर्तिरिवास्य मूर्ता ॥२५॥

गङ्गोर्मिभिर्मन्दमनुप्रवृत्तैर्गच्छन्पुरस्तादथ तच्छताङ्गः ।
आकृष्यमाणामलशृङ्खलस्य गन्धद्विपस्यापजहार शोभाम् ॥२६॥

क्वचित्पतन्ती क्वचिदुत्पतन्ती क्वचिच्च यान्ती चिरमुत्पथेन ।
सा तत्र चण्डीशजटावनान्ते संभ्रम्य दिङ्मोहवतीव रेजे ॥२७॥

पादे पतन्ती परितः स्पृशन्ती गात्राणि पर्यङ्कतले लुठन्ती ।
कालाद्बहोरुत्कलिकावतीव कामं गुरोः सा विजहार पार्श्वे ॥२८॥

दृष्टानि कौमारविहारकाले दृश्यानि नीहारगिरेस्तटानि ।
द्रष्टुं चिरात्कौतुकशालिनीव सा सर्वतस्तत्र समारुरोह ॥२९॥

ग्रस्तोदकायां मयि शंकरेण किं नाम मह्यं कृतवानसि त्वम् ।
नाहं सुता ते न गुरुर्मम त्वमिति क्रुधेवाथ जहौ हिमाद्रिम् ॥३०॥

अथाद्रिशृङ्गादवतीर्य भूमौ सा तत्र मन्दं सरिदुच्चलन्ती ।
आरब्धयज्ञस्य जगाम जह्नोरभ्यर्णमालोकितुमादृतेव ॥३१॥

मौलौ निवासादमृतांशुमौलेर्दक्षाध्वरध्वंसदृढव्रतस्य ।
संक्रान्ततद्वीचिरिवाभ्रगङ्गा जह्नोरवध्वंसयति स्म यज्ञम् ॥३२॥

मदूर्मिवेगापहृताः सुराश्च कियत्क्रियद्यत्र हविर्लभन्ते ।
किं तत्र नाहं ग्रसितुं ममेति जग्राह सर्वं हविरभ्रगङ्गा ॥३३॥

एतावदायास्यसि किं वृथैव जह्नो सकृन्मज्ज जले मदीये ।
स्वर्गं च याहीत्यनुगृह्णतीव तं मज्जयामास तरंगिणी सा ॥३४॥

सुराः पुरोडाशचरुध्रुवाज्यस्वीकारसातत्यगतक्षुधोऽपि ।
उदन्यया केवलमर्दिताः किमाकर्णमम्भः पपुरभ्रसिन्धोः ॥३५॥

पुरा पतन्ती मुकुटे पुरारेर्लेभे फलं या किल दुर्विनीतेः ।
भूयोऽपि सैवापचकार जह्नोः कुतः प्रकृत्या कुटिलोपशाम्येत् ॥३६॥

यामापतन्तीं महता रयेण संरभ्य तावज्जगृहे महेशः ।
तां लीलयैवापिबति स्म जह्नुस्ततोऽप्युदग्रा ननु तं प्रपन्नाः ॥३७॥

क्वायं मुनिः क्षत्रकुलप्रसूतः क्व सा नदी शंभुजटैकधार्या ।
ग्रस्तामुना सैव यदि क्षणेन केनाधिगम्यस्तपसां प्रभावः ॥३८॥

राजर्षिरेको विचकर्ष गङ्गामन्यः पुनस्तां कवलीचकार ।
ब्रह्मर्षिभिर्धिग्धिगितः परं वा संन्यस्यतां किं नु तपोभिमानः ॥३९॥

जातैव नीता विबुधैरियं द्यां शप्ता निरुद्धापि च वेधसा स्याम् ।
ग्रस्ता शिवेनाप्यथ जह्नुना च कस्मिन्क्षणेऽजायत न प्रतीमः ॥४०॥

कन्या तवेयं भवितेति दैवैर्याचे मुने त्वामिति तेन चोक्तम् ।
जह्नुर्जहौ कर्णपुटेन गङ्गां कर्णादृते यच्छतु काङ्क्षितं कः ॥४१॥

रुद्धाचिरं यच्छ्रुतिसेतुमध्ये बद्धा चिरं यच्च जटासु शंभोः ।
सा निर्ययौ वासनया तयैव विशृङ्खलं कर्णपुटान्महर्षेः ॥४२॥

तां जह्नुकोपाद्व्यसनं प्रपन्नां कालाद्बहोः क्षोणितलेऽवतीर्णाम् ।
नद्योऽनुरक्ता इव तत्र तत्र तरङ्गहस्तैर्दृढमालिलिङ्गुः ॥४३॥

गच्छन्पुरस्तस्य रथो यथेच्छं गङ्गा च पश्चात्तमनुव्रजन्ती ।
प्रायेण घाटीग्रहणप्रसक्तौ बालावुभौ केलिपराविवास्ताम् ॥४४॥

प्रवर्तते पावयितुं प्रदेशं यं यं नदी सा पुर एव तस्याः ।
तं तं पुनन्तः स्वयमूर्मिवातास्तस्यै ददुर्नावसरं कदाचित् ।।४५।।

भिन्दन्तमद्रीन्सरसीर्विशन्तं व्यापाटयन्तं च वनान्तराणि ।
प्रवाहमस्या नयति स्म यत्नाद् भगीरथो मत्तमिव द्विपेन्द्रम् ।।४६।।

अन्योन्यसंभेदसमुच्छ्रितासु कल्लोलरेखासु कदाचिदस्याः ।
भूयः स्वलोकाक्रमसाध्वसेन दूरे सुरा दुद्रुवुरन्तरिक्षे ।।४७।।

स्वर्गादमर्त्यानवरोपयन्ती स्वच्छन्दतादुर्ललितैस्तरङ्गैः ।
मर्त्यानपि स्वाम्भसि मग्नमात्रान्दिवं नयन्ती विजहार गङ्गा ।।४८।।

विन्ध्यो गिरिः कुम्भजकोपभीतो गङ्गा च जह्नुग्लपितावलेपा ।
शङ्के समानव्यसनाविवेमौ समीयतुर्द्वौ सविधेऽथ काश्याः ।।४९।।

भक्त्या परित्यज्य गतिं सगर्वां भक्तं पुरस्कृत्य भगीरथं च ।
विवेश विश्वेशितुरन्तिकं सा जानाति येनास्य जटाप्रभावम् ।।५०।।

त्यक्तावशिष्टं कियदम्बु गाङ्गं सारूप्यभाजां कतमेन लभ्यम् ।
इत्थं सचिन्ते सति विश्वनाथे काशीमयासीदियमिङ्गितज्ञा ।।५१।।

त्र्यन्तसिद्धाञ्जननिर्मलाक्षैस्तपोधनैरप्यनवेक्षितं यत् ।
आलक्ष्यते धाम तदेव यस्यामात्यन्तिकेनाक्षिनिमीलनेन ।।५२।।

यामभ्युपेताः परया समृद्ध्या भिक्षाशिनो दिग्वसना भवन्ति ।
यामावसन्तो भवबन्धमुक्त्यै देहार्ध एवाकलयन्ति दारान् ।।५३।।

भस्माङ्गरागाः शिरसः कपालं पात्राय माल्याय च जालमस्थ्नाम् ।
जना यदीयाः पुनराददानास्तनुं त्यजन्तीव न तु त्यजन्ति ।।५४।।

आतन्वतीमुज्झिततारतम्यमाब्रह्मकीटं जगदेकरूपम् ।
यामप्रबुद्धा इव पण्डिताश्च श्रेयः किमासादयितुं श्रयन्ते ।।५५।।

सारूप्यभाजो बहवोऽत्र शंभोश्चत्वारि वक्त्राणि पुनर्विधातुः ।
एकेन चैकं लवितव्यमित्थं प्राप्ते गतिः केति भणन्ति यस्याम् ।।५६।।

प्राङ्मज्जयन्ती सलिलावलेपात्प्राप्तं पुरो यं किमपि द्युसिन्धुः ।
तस्मिन्महेशे पुनरन्ववेगं यस्यां परित्रस्यति तज्जटाभ्यः ।।५७।।

पठन्ति यस्यामथ पाठयन्ति प्राज्ञाः शतं निर्मिमिते कृतीश्च ।
अस्थीन्यपूतान्यहयो न धार्या भोज्यं विषं नेति तु नावयन्ति ।।५८।।

आसाद्य यत्राक्षरमेकमीशात्प्राणैर्विमुच्यार्धपथं प्रपन्नैः ।
सहे नराश्चेत्पशुपक्षिणोऽपि यां सर्वभूता स्म इति स्मयन्ते ।।५९।।

सा तत्र सिन्धुर्विशती प्रसन्ना सेव प्रसन्नाश्च गिरः कवीनाम् ।
गभीरतास्वादिमवेगमूलां स्वर्धाम बघ्नन्नितरेतरेण ॥६०॥

मय्यागतायामपि मुक्तिदायां तीर्थैः
किमेभिः किमथापि लिङ्गैः ।
इतीव काश्यामुभयानि तानि
सा मज्जयन्ती शतशो व्यचारीत् ॥६१॥

अम्भोभरैराश्रममण्डलानि संप्लावयन्ती शतशो मुनीनाम् ।
प्रायेण तत्पापजिहासयेव ममज्ज गङ्गा मणिकर्णिकायाम् ॥६२॥

आपाततः स्वाद्विव तत्त्वतस्तु क्रूरादपि क्रूरतरं यदम्भः ।
पीते कणेऽप्यस्य शरीरिणो यत्पिबन्ति हालाहलमप्ययत्नम् ॥६३॥

ऐश्वर्यलोभात्स्वमुपागतानां कर्णे जपन्किंचन देहभाजाम् ।
यः कोऽपि यस्यां कितवावतंसो भिक्षाकपालानि करेषु दत्ते ॥६४॥

भर्तुं स्वमेकं वपुरप्यशक्त्या प्रायः स्वतीराश्रयिणां जनानाम् ।
शिष्येषु विन्यस्यति या त्रिलोकसृष्टिस्थितिध्वंसमहाधिकारम् ॥६५॥

एकैकमस्याश्चुलुकं वहेयुरेते यदि क्केव भवेद्द्युसिन्धुः ।
इति क्षितीशे बिभयांबभूव पश्यन्प्रजास्तत्र महेशरूपाः ॥६६॥

ग्रस्ता जटाभिः प्रथमं पुरारेर्ग्रस्ता ततो या चुलुकेन जह्नोः ।
ब्रह्मर्षिभिः सात्र पपे दृशैव भग्नः सकृद्भज्यत एव भूयः ॥६७॥

सा वेगादथ मणिकर्णिकाजलान्तः-
संपातप्रतिहरितिसंभवैर्द्युसिन्धुः ।
व्याकीर्णैर्नवकुसुमैरिवाम्बुलेशै-
र्विश्वेशं विनयपरिष्कृता ववन्दे ॥६८॥

स्वच्छन्दप्रचरद्भगीरथरथक्रेंकारधाराश्रव-
प्रत्युद्यन्मुनिलोकलोचनपुटीनिर्वेदसर्वङ्कषैः ।
स्रोतोभिर्घनसारसान्द्रशिशिरैः स्वर्लोकल्लोलिनी
तामालिम्पदिवेन्दुचूडनयनज्वालाजटालां पुरीम् ॥६९॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशत-प्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेणनारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे काशीप्रवेशो नाम षष्ठः सर्गः ।**



## सप्तमः सर्गः

अथ संनिहितं भगीरथं सरितं तामपि तद्रथानुगाम् ।
अवलोकितुमिच्छतां नृणामतुलस्तत्र बभूव संभ्रमः ॥१॥

अगृहीतविवेकभाषणानुपसंहृत्य सवेगमेकतः ।
पथिकान्वणिजोऽन्वयुञ्जत क्व नु सा सिन्धुरिति प्रतिक्षणम् ॥२॥

स्थविरेषु गतेषु जाह्नवीसलिलोत्पीडभिया ततस्ततः ।
क्षणमध्यनयोपघाततः परितुष्टा बटवो विजह्रिरे ॥३॥

प्रलयेष्वपि ये न शिक्षिताश्चिरमानन्दवनीनिवासतः ।
मुनयः किल ते चिरायुषः सुरसिन्धूर्मिषु विस्मयं दधुः ॥४॥

चरमं ववृषे भगीरथः शिशिरैरत्र नदीपयः कणैः ।
पुरतस्तु तदा पदे पदे पुरयोषित्करलाजमुष्टिभिः ॥५॥

पथि दिव्यनदीभगीरथौ प्रचलन्तौ शनकैः सविभ्रमम् ।
अवलोक्य शिरो गृहस्थिता हरिणाक्ष्यो विदधुर्मिथः कथाः ॥६॥

स्खलनात्क्वचिदुन्नते पथि स्तिमितं पश्य रथं क्षिपन्त्यमी ।
रभसाहतचक्रमण्डला रथदण्डा इव जह्नुजोर्मयः ॥७॥

पतितामिह कर्णिकां चिरात्प्रतिलप्स्यार्पयितुं महेशितुः ।
किमियं मणिकर्णिकासरस्यवगाढा सरिदारसातलम् ॥८॥

सखि कर्षसि किं भगीरथं नयनैः प्रान्तनिविष्टतारकैः ।
अदसीयरथानुपातिनी ननु मुग्धे सुरसिन्धुरेष्यति ॥९॥

तमनुप्रहिणोषि किं दृशौ सखि नेमे पुनरागमिष्यतः ।
ननु चोपदिशाम एव ते प्रथमं तेन वयं प्रतारिताः ॥१०॥

इयदुच्चलितापि जाह्नवी न किमप्याहरतिस्म वस्तु नः ।
अनुमातु मृषातपस्विना हृदयस्थैव हृता गभीरता ॥११॥

इयमप्यपरा वराकिका दृगिवास्माकममर्त्यवाहिनी ।
अनुगच्छति तत्र तत्र तं पुरतो गच्छति यत्र यत्र सः ॥१२॥

अवसन्तममन्दमारुतं जगदेनज्जयतो नृपादितः ।
स्वयमेव सखि स्मरः स्वयं शरचापावपि नाम संन्यसेत् ॥१३॥

ननु दृष्टिपथेऽवतिष्ठसे नरनेतुः सखि दूरतो व्रज ।
प्रतिपश्यति सोऽपि चेदितः प्रलयोऽयं ननु पौरयोषिताम् ॥१४॥

अलमेनमुदीक्ष्य निर्दयं सखि सौधादवरुह्यते मया ।
त्वमिहास्व मनो बहिर्गतं मम चेदेति निरुद्ध्य शंस मे ॥१५॥

सरिदन्तरसंगमागसा स्वयमागन्तुमनिच्छतीमथम् ।
महिषीमुदधेरसंशयं मदनोऽयं नयते तदन्तिकम् ॥१६॥

तरुणे शरदिन्दुसुन्दरे तरलापाङ्गवशंवदस्मरे ।
कृतमानपरिग्रहाः क्षणं किममुस्मिन्नपि सन्ति योषितः ॥१७॥

अधिगोपथमैनमाशये सहसैवोत्सृज यात्वयं क्वचित् ।
ननु चायतपातिभिः शरैर्मदनो मर्मसु ताडयिष्यति ॥१८॥

हिमशैलनिषण्णकिंनरीनयनोपान्तनिपीतशेषितम् ।
पिबतां नृपमेनमायतं नयनानां न किमस्ति नस्त्रपा ॥१९॥

अपचित्य रसालपल्लवान्यधिरुह्य स्फटिकस्थलीमपि ।
अवलोकयितव्यमेवमप्ययि मुग्धे किमवेक्षसे हठात् ॥२०॥

त्वरयन्नुषिताः सखेन नः स्वयमेवैनमवेक्षितुं नृपम् ।
प्रहरन्पुनरित्थमाशुगैः प्रसवास्त्रः कथमद्य जीयताम् ॥२१॥

दहतीव विधौ वनप्रिये परुषं जल्पति कुप्यति स्मरे ।
स्वमनस्यपि खेदतापि ते किमयं निष्फलमीक्ष्यते चिरम् ॥२२॥

इति कर्णपुटेन पार्थिवः कलयन्पौरविलासिनीगिरः ।
प्रचचाल तदा शनैः शनैः परिपश्यन्पुररामणीयकम् ॥२३॥

तनया इव मातरं चिरादुपयातामुपगम्य जाह्नवीम् ।
प्रमदाद्भुतशक्तिशालिनो मुनयो वाग्भिरथोपतस्थिरे ॥२४॥

अपहर्तुमुपायतो विधेर्जननिर्माणमहाधिकारिताम् ।
वितनोषि जनानजन्मनो यदसि प्रागमुनैव यन्त्रिता ॥२५॥

वितरसि काङ्क्षितानिति त्वयि विश्वासं समवाप्नुमः कथम् ।
अपसृत्य वपुर्वपुष्मतां ननु तेभ्यो न ददासि तत्पुनः ॥२६॥

दिश देवि सुतान्दिश स्त्रियो दिश भोगानिति नार्थयामहे ।
जहिमो वपुरेव गृह्यतां तदिदानीमिति नो मनोरथः ॥२७॥

दिश नः प्रणतैव वाञ्छितं सुरसिन्धो यदि लिप्ससे यशः ।
वपुरत्नमपि प्रतीक्षसे यदि काश्यां पुनरुक्तिरेव ते ॥२८॥

अमृतं हतवत्यसि ध्रुवं हरकोटीरमृगाङ्कसंगता ।
वयमप्यमृतार्थिनस्ततो भवतीमम्ब चिरादुपास्महे ॥२९॥

वसवो बहवो विनाशिता न च गर्भे विधृतोऽपि षण्मुखः ।
भवतीं सुतनिर्घृणामतो वदतो मातरिति त्रपामहे ॥३०॥

निगमैस्तव संस्तवो महानपि सर्वज्ञशिरस्यवस्थितिः ।
परिहर्तुमतस्तवौचिती भवमूलं ननु चक्रकाश्रयम् ॥३१॥

सुखमास्व पुरीह याहि वा न पुनर्जातु यतस्व मत्कृते ।
भवितव्यपरिक्रमैः क्वचित्सकृदस्मानपि सिञ्च शीकरैः ॥३२॥

स्वतनूविषयामहं क्रियामपहातुं त्वयि मज्जतां सताम् ।
भुवनत्रयगोचरैव सा पुनरुन्मीलति हा किमद्भुतम् ॥३३॥

न विमुञ्चसि सावलेपतां ननु मुग्धे शमितापि शंभुना ।
किमपि प्रणतैव देहिनां किमुपारोहसि मस्तकस्थलम् ॥३४॥

इति जह्नुसुतास्तवोक्तिभिर्मुखरे तत्र मुनीन्द्रमण्डले ।
अवरुह्य भगीरथो रथादगमद्विश्वपतेरुपान्तिकम् ॥३५॥

शतशः परितोष्य शंकरं प्रणिपातैर्मुदितो भगीरथः ।
सुकुमारतरैः सुगन्धिभिः कुसुमैरर्चयति स्म वाङ्मयैः ॥३६॥

भव भूतपते विषाशनो भव भिक्षुर्भव भोगिभूषणः ।
तदपि प्रतिपत्तुमर्थये तव सारूप्यविडम्बनामहम् ॥३७॥

अयि लुब्धकताधिरोप्यतामपि वा भिक्षुकताभिनीयताम् ।
इयतैव किमर्थिनो नरा जहति त्वां कपटैकशिक्षिताः ॥३८॥

मदनान्तक विष्टपत्रपक्षुधिताह्लादनकङ्कणाङ्क्या ।
अपि नोदरमन्नपूर्णया तव पूर्येत विनैव भिक्षया ॥३९॥

जटिलोऽसि दिगम्बरोऽसि यज्जितकामस्य तदर्हमेव ते ।
गुणगृह्य इतीदमुच्यसे किमपि च्छादय सव्यमङ्गकम् ॥४०॥

स्वयमेव दिशन्मदीप्सितं वह निःश्रेयसदानशौण्डताम् ।
परथापि तदर्पयिष्यते ननु गङ्गा मणिकर्णिकादिभिः ॥४१॥

भुवनत्रयभारवाहिना भवता मे भवितुं न कौतुकम् ।
भवदङ्घ्रिसरोजसेविषु प्रमथेष्वेकतरत्वमस्तु मे ॥४२॥

भवबन्धहरोऽस्मि देहिनामिति विश्राम्यतु वीरघोषणा ।
चतुरो यदि पूर्वमात्मनः श्लथय त्वं त्रिजगत्कुटुम्बिताम् ॥४३॥

सति हेमगिरौ शरासने सति वेश्मन्यपि राजते गिरौ ।
भवता शिव भैक्षवृत्तिना क्रमितव्यः समयः कियानयम् ॥४४॥

वहसीन्दुमनेन किं भवेद्भवतो वस्तुषु सारवेदिता ।
भवदादरणात्कपालवद्भवति प्रत्युत तस्य हेयता ।।४५।।

त्रिपुरेषु परीक्षितं स्मितं मदनो वेद कटाक्षमीशते ।
ननु नाम जनो जिजीविषुर्बहुमानं भवतोऽर्थयेत कः ।।४६।।

सकृदन्तसमेयुषां नृणां शिरसि स्थापयसे सुरापगाम् ।
अमुमर्थमजानता मया कियदस्यै सरिते कृतं तपः ।।४७।।

इति स्तुवन्मुकुटनिवेशिताञ्जलि-
भगीरथः प्रणतशिवंकरं हरम् ।
न्यवर्तत क्षणगमनोपरोधतः
क्व जाह्नवी प्रतिचलिता तटादिति ।।४८।।

अथ नृपमधिरूढस्यन्दनं यान्तमग्रे
सुरसरिदनुयान्ती वीचिभिर्मन्थराभिः ।
विहितजनकुटुम्बा संनिधौ दण्डपाणे-
र्बलवदनुगमेऽपि प्राप्तशङ्केव रेजे ।।४९।।

आचान्तो नयनैरपक्ष्मबलनैरायम्य पारैर्जनै-
र्धावं धावमुपाबरुन्ध्य सरणिं सङ्घीभवद्भिः पुरः ।
स्पृष्टः साधय साधयेति लहरीहस्तैरिवान्वक्तया
त्रस्यन्त्या पुरशासनादतिययौ देवः स वाराणसीम् ।।५०।।

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुराधिकशत प्रबन्धनिर्वाहकमहाव्रतयाजिश्रीदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावतरणे विश्वेश्वरस्तवो नाम सप्तमः सर्गः ।**



## अष्टमः सर्गः

समतिलङ्घ्य पुरीमथ काशिकां स पुरतः प्रचचाल भगीरथः ।
सुरसरिज्जलसंप्लवसंभ्रमक्षुभितजानपदेन पथा शनैः ॥१॥

नरपतेर्दधतीव सहायतां नगरपार्श्वचरी सरयूस्तदा ।
पथि पुनः स्वयमेव समागता परिचकर्ष नभःसरितं क्षणात् ॥२॥

अनुसृतः सरितैष ननु बलादनया[८] ह्रियते हठात् ।
इति नृपः पशुभिः स निसर्गतो निजगदे पथि जानपदैर्जनैः ॥३॥

पथि चचाल भगीरथदर्शिते सुरनदी ननु नेदमहं स्तुवे ।
पथि तदाचरिते ननु तद्ध्रुवा प्रकृतिमण्डलमेव नियम्यते ॥४॥

कियदितश्चलितव्यमिति श्रमव्यतिकरादनुयक्तुमिवोद्यता ।
असकृदस्पृशदूर्मिकराग्रतः प्रचलितं पथि तं पुरतो नदी ॥५॥

चिरनिरूढमनोरथमालिका सुरनदी दयिताननचुम्बने ।
कलयति स्म मुखानि सहस्रधा सति समीपगते मकरालये ॥६॥

पथि विलम्ब्य विलम्ब्य पदे पदे गिरिगुहासु निलीय निलीय च ।
उपजगाम कथंचिदुपान्तिकं नववधूरिव नर्मसखस्य सा ॥७॥

अनशनव्रतकर्शितकुम्भभूसलिलपारणसंशयिताम्भसः ।
अवततार बिले किल केवले जलनिधेरथ भूमिपते रथः ॥८॥

तमसि तत्कुहरोपहिते महत्यनुचिता तपनातपसंकथा ।
तपन एव यदि स्वयमापतेद्द्रवति कज्जलपिण्ड इव क्षणात् ॥९॥

उपनिपत्य पुरेव पिपासया जिगमिषन्ति न यावदितोऽन्यतः ।
जलधरा इति तावदबिन्धनो हुतवहः किल तानपि जग्रसे ॥१०॥

प्रतिनवाम्बुदशीकरसेचनप्रकटितोष्मणि तत्र हि यादसाम् ।
ज्वरमधत्त यथा जलदागमो नतु तथा मधुमासविपर्ययः ॥११॥

प्रतिनिदाघविरामसमाहितैर्जलधराम्बुभिराहितवृत्तयः ।
कतिचिदासत कण्ठगतासवो जलपतेः पुरि तोरणवालकाः ॥१२॥

पतिभिया निपतेयुरितोऽद्रयः क्षितितले जगदण्डमितः स्फुटेत् ।
तदनु चावरणोदकमुत्पतेदिति मनोरथमूहुरिह स्थिताः ॥१३॥

---

८. न न बलादनया 'इत्येव रव' मातृकायां विद्यते ।

प्रियतमाभिगमाय सुदूरतोऽप्युपगताः सरितो जलदागमे ।
तमनवेक्ष्य शुचेव तदास्पदे प्रथम एव पदे विलयं गताः ॥१४॥

क्षितिभृतः कुलिशाहतिकातराः शरणमित्यभजन्त यमर्णवम् ।
स च बभूवकथापरिशेषितो[९] विधिपङ्क्रामुखता ननु तादृशी ॥१५॥

कवलितास्तिमिभिः शफरार्भकाः सुखममंसत जीवनतो मृतिम् ।
सलिलशालिषु तद्वदनाध्वसु क्षणपरिक्रमणोत्सवलिप्सया ॥१६॥

क्वचन भानुसुतादिमहानदीपतनतः शिशिरास्विव भूमिषु ।
परिमितानभितस्तनुशोषणाज्जलधरान्नवलोक्य शुशोच सः ॥१७॥

रविकरोपनिपातविशेषितस्फुटितकर्दमरन्ध्रनिरन्तरम् ।
बिलमवेक्ष्य बिभाय स वारिधेः सुरनदी सलिलव्ययशङ्कया ॥१८॥

चिरमनेन पथा परुषोष्मणा प्रतिनिशं प्रचरन्नपि चन्द्रमाः ।
कथमहो न कदापि विलीन इत्यसकृदाकलयन्स विसिस्मये ॥१९॥

अथ भगीरथदेवपथानुगा सुरनदी तदवाप बिलं भुवः ।
प्रथममावसथादिव वेधसः प्रमथनाथजटागहनोदरम् ॥२०॥

सति सरस्वति[१०] सन्ति पयोधराः सति तदम्भसि सन्ति च सिन्धवः ।
तदिह काम्बुकथेति विषीदतामभयदेयमजायत यादसाम् ॥२१॥

कियदिदं परिपूरयितुं भवेत्सगरसूनुनखाग्रकृतं बिलम् ।
इति पतद्भिरपि स्मयमन्थरं सिमसिमायितमेव तदूर्मिभिः ॥२२॥

समदवल्गदमर्त्यतरङ्गिणीशफरवर्गनिरीक्षणलज्जिताः ।
अनुबभूवुरहो नु महोत्सवं तमपि सिन्धुशया जलजन्तवः ॥२३॥

मधुरिमैकरसापि सुरापगा लवणतामगमत्पतितार्णवे ।
भुवनमूल्यरसापि हि साहिती कुकविवक्रगता कुरुते व्यथाम् ॥२४॥

सुरनदीसलिलानिलताडितः परिजहौ भसितावरणं पुनः ।
अधित धूममथाग्निरबिन्धनः सति समीपतले पुनराद्रिते ॥२५॥

पयसि संभृत एव यथापुरं जलनिधौ मिलिता जलजन्तवः ।
यदि भवन्ति कथंचन संपदो भवति का स्वजनेषु दरिद्रता ॥२६॥

सगरनन्दनरन्ध्रसमुत्पतद्भुजगराजपुरीतिमिरावृते ।
जलनिधेः कुहरे लुठनादभूत्सुरनदीसलिलेष्वपि नीलता ॥२७॥

९. कथापशेषितो 'इति रव' मातृकायां वर्तते ।
१०. सरस्वति = समुद्रे-सरस्वान् सागरोऽर्णवः इत्यकरः ।

समुपलभ्य पयांसि यथापुरं मुमुदिरे न तथा जलमानवा: ।
सलिलशोषदशासु लयं गतान् समनुचिन्त्य शिशूनरुदन्यथा ॥२८॥

समधिकोष्मणि तत्र विलिल्यिरे निपतिता: प्रथमे सरिदूर्मय: ।
सपदि पूरितसागरवीचिकाप्रतिहताश्चरमे तु निवर्तिता: ॥२९॥

चुलुकितो मुनिनापि गतत्रप: परिजुघोष पुरेव तदार्णव: ।
मतिमताध्वनितव्यमदोषवत्क इव वेद गतं सदसच्च वा ॥३०॥

अयमगाहत शोषमिह स्थिता जलचरा बहव: प्रलयं गता: ।
इति तदम्बु नरा मुदिता: क्षणादकथयन्गतकल्पकथामिव ॥३१॥

अथ पतन्तममुं नृपते रथं तमपि सागरपूरणनिस्वनम् ।
युगपदेव पपु: सुखमीक्षणैरनिमिषैरहिलोकपुरन्ध्रय: ॥३२॥

फणधरालयमूलनिवासिनं[११] प्रमथनाथमवेक्ष्य भयेन वा ।
क्षणनिरुद्धतरङ्गरया पुन: परिपतात भगीरथबोधिता ॥३३॥

कनकभूधरमूलमणित्विषा गलितसंतमसेऽथ रसातले ।
भुजगराजभुजार्गलपालितां धुरि ददर्श स भोगवतीं पुरीम् ॥३४॥

प्रवसतो विनिवर्तयितुं पतीन्कृतधिय: किल यत्फणिकन्यका: ।
पथि कुहापि तदीक्षणगोचरे परिनिपत्य भवन्ति गतज्वरा: ॥३५॥

स्वयमुपेतसमीरकृताशनै: स्फुटितभूविवरोदरशायिभि: ।
फणधरैरनपेक्षितवेतनै: प्रभुरवर्तत यत्र स वासुकि: ॥३६॥

सदनमेत्य[१२] स जग्धिकृते सखीन्स-
मुपहूय निवेश्य च पङ्क्ति: ।
विदधति व्यजनैरुपवीजनं
किमपि यत्र मुखेष्वनिलाशना: ॥३७॥

सति फणावलयातपवारणे सति च तन्मणिदीपशिवाङ्कुरे ।
घनतटिज्जटिलेषु घनागमेश्वभिसरन्ति न यत्र फणिस्त्रिय: ॥३८॥

न विधुरस्ति न दक्षिणमाहत: क इव तद्विधुर: कुसुमायुध: ।
तदपि शासनमस्य दुरुत्तरं शिरसि बिभ्रति यत्र फणिस्त्रिय: ॥३९॥

कतिचिदच्युतमञ्चकुलोद्भवा: कतिपये हरकुण्डलवंशजा: ।
रविरथाश्वगुणान्वयजा: परे तदिह तार्क्ष्यभयं न यदोकसाम् ॥४०॥

---

११. निवासिन प्रमथनाथ 'इति रव' मातृकायां ।
१२. सदनमेत्य च 'इति रव' मातृकायाम् ।

अधृतसिद्धशिरोमणिभूषणो ग्रथनविश्लथनासहकञ्चुकः ।
अधृतकुण्डलमुग्धमुखाम्बुजो जयति यत्र भुजङ्गवधूजनः ॥४१॥

सति महावरणेऽपि हि यज्जना न दधते परिखाखनने त्वराम् ।
तनुतराप्रभवाण्डकरण्डकाधरकपालपरिक्षतिशङ्कया ॥४२॥

परिपतत्सु ततः स समन्ततः स्वमवलोकयितुं पुरवासिषु ।
वहिरभीतवदास्त हृदा पुनः परिजजाप पतङ्गपतेर्मनुम् ॥४३॥

पतति तत्र सुधाशनदीजले फणधराः कतिचित्पथि पातिनः ।
प्रविशिशुर्भयसंकुचिताङ्गका रथविटङ्क पदेषु महीपतेः ॥४४॥

प्रमथनाथजटापटलापतत्फणधरेन्द्रमुखादखिलां कथाम् ।
श्रुतवतां किल तन्नगरौकसां सुरनदी न बभूव भयावहा ॥४५॥

प्रविशतीषु रसातलमण्डलं त्रिदशसिन्धुजलोरगपङ्क्तिषु ।
अजनि बन्धुसमागमसंभवः फणभृतां प्रतिमन्दिरमुत्सवः ॥४६॥

अथ परीत्य स भोगवतीं पुरीममरसिन्धुसखी वसुधेश्वरः ।
शुचि विविक्तमनोरममासदद्भगवतः कपिलस्य तपोवनम् ॥४७॥

कपिलकोपहुताशनसंभृतं स पुरतः पितृभस्म निरीक्ष्य तत् ।
प्रमदशोकसमागममूर्च्छितो द्विविधमश्रु दधौ युगपद्दृशा ॥४८॥

अथ रथादवतीर्य भगीरथो सगरजानुपसर्पति वीक्षितुम् ।
भसितराशिममज्जयदम्भसा भगवती सुरलोकतरङ्गिणी ॥४९॥

सुरसरित्कवलीकृतशेषितं दिवि यदास्त पदं त्रिदिवौकषाम् ।
तदपि तत्क्षणनिर्हृतकल्मषैरपहृतं बलिभिः सगरात्मजैः ॥५०॥

प्रथमलब्धसुरालयसंभृतप्रतिनवामृतपानगलत्तृषः ।
तदपवर्जितमञ्जलिमम्मसामपि पपुः पितरः सुतवत्सलाः ॥५१॥

अथ नदीमवगाह्य विनिर्गतः क्षितिपतिः परिपूर्णमनोरथः ।
मृदुगभीरपदामशृणोद्दिवि स्तुति (ततिं) चतुराननगुम्फिताम् ॥५२॥

न सगरोऽयमविन्दत नांशुमात्र च भवज्जनकस्तपसि स्थितः ।
तमपि लब्धवतोऽद्य मनोरथं तव यशो न गिरां पथि वर्तते ॥५३॥

श्रुतिगिरोऽपि विचित्य विचित्य यं विफलयन्ति परिश्रममात्मनः ।
समुपलभ्य तमेव महेश्वरं क इव नाम नियोजयितुं प्रभुः ॥५४॥

दशमुखोऽपि यदङ्घ्रिनियन्त्रितान्परिचकर्ष पुरा न भुजान्निजान् ।
क इव तस्य कपर्दपथंगतां सुरनदीमपि कर्षतु साहसी ॥५५॥

यदभजन्त दिवं सगरात्मजा यदपि सिन्धुरपूर्यत शोषितः ।
यदुपयन्ति नराश्च परं पदं तदखिलं तव तात तपोबलात् ।।५६।।

तव भगीरथ वत्स सुतार्थिनस्तनुभवा सरिदस्त्वियमादिमा ।
इति निशम्य गिरं परमेष्ठिनः परिजहौ स तपोजनितां व्यथाम् ।।५७।।

ततः समामन्त्र्य वियन्नदीं तां तदम्बुसंपातपथेन देवः ।
अपाङ्गपातैः फणिसुन्दरीणामनुद्रुतः प्राप तटं पयोधेः ।।५८।।

ततश्चिरादेत्य तटं पयोधेः प्रतीक्षमाणा नृपतेर्निवृत्तिम् ।
चमूसमेताः सचिवास्तदीयास्तमुत्पतन्तं सलिलादपश्यन् ।।५९।।

समुद्यतस्तस्य[१३] जलान्नृपस्य मुखेन मुग्धस्मितसुन्दरेण ।
उल्लासमासादयति स्म सेना वेलेव सिन्धोः शशलाञ्छनेन ।।६०।।

तपोविपाकेन निसर्गतोऽपि तमप्रधृष्यं च शनैरुपेत्य ।
पौरैरहंपूर्विकया प्रणेमे तदद्रविन्यस्तमहोपहारैः ।।६१।।

दृष्ट्यानुकम्प्यानथ संबभाषे संभाषितव्यान्पुनरालिलिङ्ग ।
आलिङ्गितव्यान्प्रणनाम वीरः पौरैश्चिरादुत्सुकतां प्रपन्नः ।।६२।।

प्रख्यापितं प्राक्सुरलोकसिन्धुतरङ्गरेखाजयडिण्डिमेन ।
पृष्टं प्रधानैः सचिवैरुदन्तं संगृह्य वीरः स्वमुदाजहार ।।६३।।

अलङ्घ्यवाक्यैरथ बन्धुवर्गैराप्तैरमात्यैरनुजीविभिश्च ।
संप्रार्थ्यमानः सममंस्त वीरः स राजनेपथ्यविधिं तदानीम् ।।६४।।

मन्दाकिनीमज्जनपूतकेको विस्रंसयन्नस्य जटाकलापम् ।
उन्नम्य मौलिं ग्रथयांबभूव मुक्तामयैर्दामभिरेव सान्द्रम् ।।६५।।

स मुग्धसिन्धूदरजन्मनेव शुद्धेन रेजे श्रुतिमौक्तिकेन ।
कीर्त्येव कर्णङ्गतया दिगन्तसमाग्रमोदन्तनिवेदनाय ।।६६।।

आपाण्डरे चन्दनचर्चिकाभिरामुक्तमुक्तासरलोभनीये ।
वक्षः पदे तस्य चिरेण लक्ष्मी र्भस्माङ्गरागव्यसनं मुमोच ।।६७।।

चचार कर्णद्वयसानुरागे चित्ते यदन्तःपुरसुन्दरीणाम् ।
स तेन संरक्त इवाभासे परिष्कृतः काञ्चनकञ्चुकेन ।।६८।।

स पादमूलग्रथितासिधेनुराबद्धतूणः समुपात्तचापः ।
मुखेन रक्तान्तविलोचनेन मूर्त्तो रसो वीर इवाबभासे ।।६९।।

१३. समुद्यतः तस्य 'इति रव' मातृकायाम् ।

हृष्टेन गङ्गानयनान्नदीनां पत्या धुरि न्यस्तमिवोपहारम् ।
सखायमुच्चैः श्रवससतुरङ्गं स पाण्डरं कंचिदुपारुरोह ॥७०॥

पदेन किंचिच्चलितेन सैन्धवं भ्रुवा च पर्यन्तविलोलया चमूम् ।
प्रचालयामास समं भगीरथः शनैस्ततः सागरतीरवर्त्मना ॥७१॥

दृगन्तरान्धंकरणं फणाभृतां दिगन्तगन्धद्विपकर्णदारुणम् ।
मुकुन्दनिद्रारसमोषभीषणं बबन्ध भेरी पुरतोऽस्य मौखरीम् ॥७२॥

तदानकध्वानतरङ्गसंप्लवैर्बबन्धशय्याबलिहन्तुरन्धताम् ।
समीपमासेदुषि सा किमन्यथा विशङ्कमासीत विहंगपुंगवे ॥७३॥

दिवौकसः पाणिविहारमात्रतो दृशोर्निकोचेन परं फणाभृतः ।
अनेन तेनापि नरा व्यवहरन्नथ क्षणं गर्जति तस्य दुन्दुभौ ॥७४॥

कठोरधाराङ्कुशपातसंकुचत्सवृंहितोदस्तमुखा विषाणिनः ।
चमूचराः कोशवितीर्णसंभ्रमैर्निषादिभिर्दूरत एव निन्यिरे ॥७५॥

तनुच्छदासञ्जितचर्मपट्टिकानिबद्धकौक्षेयनिषङ्ककार्मुकाः ।
खलीनरज्जुग्रहणोच्छ्रितानना: प्रचेलुरश्वाः पुरतोऽस्य सङ्घशः ॥७६॥

पताकिनीमूलचरो भगीरथः समन्त्रिवर्गैश्चतुरैरतकर्यत् ।
अनुद्रुतः प्राक्चिरमभ्रगङ्गया स्वयं च तां किंचिदनुद्रवन्निव ॥७७॥

यौधैः स्म रङ्गाननु निष्पतद्भिर्भङ्गैश्च योधाननु धावमानैः ।
मिथो मृषायुद्धमिवाततान महार्णवत्यस्य बलार्णवेन ॥७८॥

प्राप्तोपगूहा इव वारिराशेः पर्यन्ततालीवनमर्मरेण ।
तरङ्गरेखाविलयान्तरेषु सेनारवाः शुश्रुविरे नृपेण ॥७९॥

दिव्यं पयः क्षोणितलेऽवतार्य संपन्नकीर्तिं तमिवानुकर्तुम् ।
भौमं रजो वाजिखुरप्रसूतं पताकिनी तस्य दिवं निनाय ॥८०॥

सैनिकावतरदीर्घतरङ्गा संददर्श सरयूमविदूरे ।
सानुरागमुपगूहितुमग्रे संप्रसारितकरामिव देवः ॥८१॥

ततो विलम्ब्य क्षणमागमय्य पताकिनीमप्यनुसंपतन्तीम् ।
स राजचिह्नैरुपसेव्यमानः शनैरयोध्याभिमुखं प्रतस्थे ॥८२॥

तृष्णाकटुष्णां पततामभीक्ष्णं पौराङ्गनालोचनमण्डलानाम् ।
उत्सारणायेव स चामराभ्यां संवीज्यमानः शनकैरयासीत् ॥८३॥

तस्याग्रतो निर्मलमावभाषे साम्राज्यचिह्नं नवमातपत्रम् ।
पुरौकसां दर्शयितुं, नृपेण नीतः कियानंश इवाभ्रसिन्धोः ॥८४॥

आलिप्तहर्म्याग्रपदं सुधाभिराबद्धहेमध्वजलोभनीयम् ।
संमृष्टरथ्यं च समन्ततोऽपि भगीरथस्तन्नगरं विवेश ॥८५॥

पताकिनीभिः प्रविशन्तमन्तर्लाजैरवर्षन्पुरयोषितस्तम् ।
गङ्गावतारावसरे पुरेव दिव्यैः प्रसूनैर्दिवि देवकन्याः ॥८६॥

आह्लादिभिर्मङ्गलतूर्यघोषैराशीर्वचोभिश्च समं जनानाम् ।
सौधाधिरूढैः शतशोऽवरोधैः संदृश्यमानः सदनं विवेश ॥८७॥

संभाव्य देवः क्रमशो द्विजातीन्बन्धूनमात्याननुजीविनश्च ।
द्वारान्तिकस्तब्धवधूसमाजसंबाधमन्तःपुरमाविवेश ॥८८॥

वियोगखिन्नास्तपसा विषण्णं स्वप्रेक्षिताः स्वप्नदशानुभूतम् ।
स्मेराननाः स्मेरमुखारविन्दं तमभ्युपेयुस्तरुणं तरुण्यः ॥८९॥

पादे निपेतुः परिरभ्य दीर्घं तस्थुर्मुखैस्तस्य मुखं चुचुम्बुः ।
संकल्पयोगाच्चिरविप्रलब्धास्तथापि तं नैव विशश्वसुस्ताः ॥९०॥

संरक्षन्ननुजीविनो वितरणैः संप्रीणयन्नर्थिनः
पौराञ्जानपदानपि प्रतिदिनं पश्यन्दयादृष्टिभिः ।
आ वेधोगृहमारसातलमपि स्वं नाम विश्रावयन्
दीनत्राणकृता भुजेन बुभुजे देवः समस्तां भुवम् ॥९१॥

वाचं व्याकुरुते चिरंतनगिरं मीमांसते चोभयीं
पान्थः काव्यपथेषु पादकमले सक्तः पुरारेरिति ।
मामेतत्कथयिष्यतीति वा न वा तदुपरि न्यस्तः समस्तो भरः ॥९२॥

साहित्यं न हि जानते कतिपये शास्त्रैकनिष्ठा यदि
क्षन्तव्यं विदुषामिदं क्व नु पुनः सर्वत्र सर्वज्ञता ।
उत्पन्नाः किल धूमकेतव इव क्लिश्नन्ति यत्साहिती
दुर्वैदग्ध्यलवेन केचिदिह तद्दुःखाय विद्यावताम् ॥९३॥

अस्पृष्टाः कलयापि दुष्कविकुलैरज्ञैरनाकर्णिता
ज्ञानाज्ञानवतां कदाप्यपतिता दूरे दुरूहाध्वनि ।
खेलन्तु श्रुतिसंपुटीचुलुकिताः स्वैरं रसज्ञैर्जनैः
प्रत्युक्तिच्यवमाननूतनसुधासाराः कवीनां गिरः ॥९४॥

**इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-निर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचिते गङ्गावरणे भगीरथनगरप्रवेशो नामाष्टमः सर्गः ॥**

**॥ सम्पूर्णोयं ग्रन्थः ॥**



# गङ्गालहरीशतकं-गङ्गामाहात्म्यम् सटीकम्

**।। ओंस्वस्ति श्रीगणपतयेनमः ।।**

श्रीकाशीन्तत्पतिञ्चापि शिवंसेभास्यशैलजम् ।
प्रणमामि गुरोः पादौ पितरौ चापि भक्तितः ।।१।।
रामम्भक्तिप्रियं वन्दे सर्वस्वान्तैकसाक्षिणम् ।
कर्म्मोपक्रमपूर्त्यादिसिद्धिदम्परमं मनुम् ।।२।।

इह खलु परमपरिनिष्ठितस्सद्गुणगणैकनिलयस्तत्रभवान्महानुभावः श्रीमाँल्लक्ष्मीनारायणाभिधानस्सुकविः ।। नद्यश्चपर्वतास्सर्वे द्विरूपाश्च स्वभावतः ।। तोयं नदीनां रूपन्तु शरीरमपरन्तथा। स्वाथरम्पर्वतानान्तु रूपङ्कायस्तथाऽपरइति कालिकापुराणद्वाविंशाऽध्यायवचनप्रामाण्यात् ।। नदीस्वरूपद्विविधत्वमवगम्य। तिस्रः-कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ।। सर्वदा कलिकाले तु गङ्गायां नाऽत्र संशय इति भविष्योत्तरवचनात् ।। श्रीगङ्गास्तुत्या सकलतीर्थस्तुतिरिति चावधार्य ।। कलेर्दशसहस्रान्तेविष्णुस्त्यक्ष्यति मेदिनीम् ।। तदर्द्धेजाह्नवीतोयन्तदर्द्धंग्रामदेवतेतिवचनार्थम् । यावद्धरण्यान्तुलसी प्रपूज्यते गुरुर्न्नभस्स्थो दिवि कल्पपादपः ।। यावत्समुद्रे बडवानलश्च वसामि राजंस्तव चक्रखातइतिप्रायश्चित्ततत्वसमुद्धृतभविष्यपुराणवचनेन ।। पृथिवी गङ्गया हीना भविष्यत्यन्तिमे कलौ। तदैव

ॐ विधिरपि तव गङ्गे शीलयन्सद्गुणाब्धिं
यदपि समयते नो तस्य पारङ्गमत्वम् ।
तदपि दुरितनुत्यै देवि तद्विन्दुनुत्यै
चपलयति मनो मे त्वत्पदाब्जानुरागः ।।१।।

विष्णुस्त्यजति मेदिनीं नरपुङ्गवेतिविष्णुपुराणवचनेन च ।। कल्पान्तकलियुगपरं व्यवस्थाप्य च ।। आशीर्न्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखमितित्रिविधिमङ्गलमध्ये ।। आदौ निर्विघ्नताद्यवाप्तये ।। बहलप्रेमभरान्तःकरणविधेयस्तुत्यात्मकतया ।। नमस्कारात्मकंश्रीगङ्गास्वरूपवस्तुनिर्देशात्मकञ्चेतिद्विविधं मङ्गलं मनसा विहितमपि शिष्यशिक्षार्थम् निबध्न् चिकीर्षितं श्रीगङ्गालहरीशतकनामकं श्रीसुरधुनीमाहात्म्यस्तवमालक्षयति ।। विधिरित्यादिना। त्रिषु लोकेषु। अविरतमविहतञ्च गच्छतीतिगङ्गा ।। तत्सम्बुद्धौ हे गङ्गे ।। मनुष्यादिव्यावृत्तये ।। दीव्यति स्वोदारगुणैः-शरणानततारकत्वादिभिरितरानभिभवतीति देवी ।। देवतास्वरूपे इत्यर्थः ।। यदपि-यद्यपि ।। विधिरपि सकललोकपितामहश्चतुराननोऽपि ।। अन्येषाङ्का कथा। तवस-

ग्रन्थकारः- लक्ष्मीनारायण, टीकाकारः- गुरुप्रसादः, रचनाकाल संवत् १९६० आ.शु., स.भ.पु.पा.लि.सं. २३७५५ पत्र १-२८ लि.पि.दे.ना. ।

द्गुणाब्धिं सहृदयहृदयपरिचुम्बितनिखिलप्राणिसमुद्धारकत्वादिसमीचीनगुणाम्भोनिधिम् ॥ शीलयन् गाहमानः ॥ तव गुणगणं सम्यग्ध्यायन्विलोडयन्विचिन्तयन्निगद-न्निति यावत् ॥ तस्य तव सद्गुणाब्धेः पारङ्गमत्वमशेषावगाहनपूर्वकोत्तरकोटिनिवेश-कर्तृत्वम् ॥ नो समयते न सङ्गच्छति ॥ तदपि तथापि ॥ दुरितनुत्यै निजप्रबल-कल्मषप्रहाणाय ॥ तद्बिन्दुनुत्यै तस्य तव सद्गुणाब्धेर्विन्दुः पृषत् तस्य कस्यापि ॥ नुत्यै स्तुत्यै ॥ त्वत्पदाब्जानुरागस्त्वत्पादपद्मप्रीतिः ॥ मे मम मनो मानसम् । चपलयत्त्युत्तरलीकरोति । किम्बहुना । एकोऽपि श्रीगङ्गागुणाब्धिविन्दुस्स्तुतस्त्व-त्कृतार्थतायै पर्य्याप्त इति द्रागितस्ततः प्रवर्तयतीत्यर्थः ॥ मालिनी छन्दः ॥ ननममययुतेयं मालिनीभोगलोकैरितिलक्षणात् ॥१॥ इदानीं शरीरिधन्यत्वापादकं श्रीगङ्गाया ध्यानञ्चतुर्दशभिः कुलकेनाह ॥ तलक्षणन्तु ॥ द्वाभ्यां युग्ममिति प्रोक्तन्त्रिभिः श्लोकै र्विशेषकम् ॥ कलापकञ्चतुर्भिस्स्यात्तदूर्द्धङ्कुलकं स्मृतमिति । विपुलेति ॥ हे देवि भागीरथि रविकुलतिलकनृपतिवरभगीरथानीते ॥ ये केऽपि जनाः ॥ जितचित्तास्स्वायत्तीकृतमानसास्सन्तः ॥ सकृदेकबारमपि ॥ विपुलं महत् ॥ विमलरोचिः स्वच्छदीप्ति च हैमं हेमनिर्म्मितञ्च रत्नैर्म्मणिभिः उप्तञ्चितञ्च गेहं मन्दिरं यस्यास्सा तान्त्वाम् हृदयपद्मे हृत्कमले दधति धारयन्ति ध्यायन्तीति यावत् । ते जनाः कृतकृत्यास्सफलजन्मानः न किम्, अपितु कृतार्था एवेति पञ्चदशेनान्वयः ।

विपुलविमलरोचिर्हैमरत्नोप्तगेहां मृदुरुचिरमनर्घ्यम्पट्टवासो दधानाम्
ललितकुसुमभूषाचैलसौवर्णकान्तिव्यजनचमरदण्डच्छत्रभास्वत्सखीकाम् ॥२॥
मकरवरमहोद्यत्पृष्ठसंशोभितोच्चैः कलितमणिकलापस्वर्णपर्यङ्कसंस्थाम्
स्फटिकविशदमूर्त्तिं श्रीकृताशैकपूर्तिं स्मितमधुरमुखाब्जाङ्किञ्चिदानम्रदृष्टिम् ॥३॥

एवमवशिष्टान्यपि विशेषणानि तेनैव पञ्चदशपद्यस्थेन त्वामितिविशेष्यपदेन-योज्यानि । तथाहि मृदुसुकुमारं सुस्पर्शमित्यर्थः रुचिरं मनोहरं दर्शनीयमित्यर्थः । अनर्घ्यममूल्यम् च पट्टवासः कौशेयवसनम् उत्तरीयमिति यावत् । दधानामाच्छा-दयन्तीम् । ललितानि परमेप्सितानि यानि कुसुमभूषाचैलानि पुष्पाभरणवासांसि सौवर्णया कान्त्या गौरवर्णया सर्वाङ्गीणया छायया व्यजनचमरदण्डच्छत्रैस्तालवृन्तक-चामरयष्ट्यातपत्रैः, यद्वा ललितैस्स्वरामणीयकशोभितैः कुसुमादिच्छत्रान्तैः भास्वन्त्य-श्शोभमानाः सख्या वयस्या यस्यास्सा ताम् नद्यृतश्चेतिबहुब्रीहौ कप्, केण इतिप्राप्तस्य ह्रस्वत्वस्य नकपीतिनिषेधः । चमरश्चामरे स्त्री तु मञ्जरीमृगभेदयो-रितिमेदिनी । तथा चादिकविर्मुनिर्वाल्मीकिः वारस्त्रीश्चमरमरुतावीजितोभूमिपालइति ॥२॥ मकरेति मकरवरस्य यादोविशेषश्रेष्ठस्य मकरो यादसो भेदे निधिराशिप्रभेदयोरिति मेदिनी । महद्विस्तृतम् उद्यदत्युन्नतञ्च पृष्ठशरीरस्य पश्चाद्भागः महीसम्मुखोरस्थलत्वा-दुपरिप्रदेशइत्यर्थः तस्मिन् संशोभितस्सुस्थितस्त्वान्निरतिशायि सुषमाङ्गतो यः उच्चैर्म्म-होत्सेधः कलितमणिकलापो विविधामूल्यरत्ननिकरः । खचितः स्वर्णस्य हेम्नः पर्यङ्कः

तत्र सम्यक् सुखपूर्वकं सावकाशमित्यर्थः तिष्ठतीति सा ताम् स्फटिति सा ताम् स्फटिकविशदा शुभ्रा मूर्त्तिः कायो यस्यास्सा ताम्। मूर्त्तिः कायकटिन्य-योस्त्रियामिति मेदिनी। श्रीर्मोक्षैकलक्ष्मीः विभूतिस्समीचीनामतिर्वातद्विषपिणी कृता सम्पादिता या आशा चित्तवृत्तिविकारविशेषः तस्याः एका पूर्त्तिः अनन्यसम्पत्तिरूपा। अथवा प्रधाना पूर्त्तिः पूरणं यस्याः सकाशात्सा ताम् यद्वा श्रिया त्रिवर्गसम्पत्त्या कृता विहिता आशाया भक्तजनाभिलाषस्य एका पूर्त्तिः पूरणंयया सा ताम् यद्वा श्रीभिर्न्निजातिहृदयङ्गमकलेवरातिरुचिरशुभ्रदीप्तिच्छटाभिः श्रीर्वेशरचनाशोभा-भारतीसरलद्रुमे, लक्ष्म्यान्त्रिवर्गसम्पत्तिविधोपकरणेषु च विभूतौ च मतौ चेति मेदिनी, कृता सम्पादिता आशानां सर्वासान्दिशाम् एका पूर्त्तिः पूरणं यया सा ताम्, स्मितेन मधुरं मनोहरम् मुखमाननम् सादृश्यात् अब्जङ्कमलमिव यस्यास्सा ताम् किञ्चिदल्पतरमेव, आसमन्तात् नत्वेकस्मिन्नेव प्रदेशे।

कलितललितवेशस्त्रीकगन्धर्वराज
द्विविधमधुरगानाकर्णनाञ्चत्किरीटाम् ।
मणिमयसुरमौलिप्रस्फुरद्दीप्तिसम्प-
द्विलसदमलरत्नस्यूतहैमाङ्घ्रिपीठाम् ॥४॥

नम्राऽधोमुखी दृष्टिर्यस्यास्सा ताम् लोकोत्तरशीलसंवलितदृष्टिप्रसारामिति यावत् ॥३॥ कलितेति कलितो धृतः ललितस्सुशोभनः निजलावण्यानुरूपइत्यर्थः। वेशो वस्त्रालङ्कारादिप्रसाधनस्वरूपविशेषो नेपथ्यो याभिः। वेशो वेश्यागृहेगृहे-नेपथ्येचेतिमेदिनी। तादृश्यस्त्रियो देवललनाः सन्ति सम्पादिकाः साभिनयनर्त्तनगान-कर्त्र्यो वा यत्र तत् इत्येका विधा। गन्धर्वाणान्तुम्बरुप्रभृतीनाम् राजानोऽधिपाः श्रेष्ठा इत्यर्थः हाहाद्या इति यावत्। गायका यत्र तत् इति द्वितीया विधा तच्च ता इति कृत्वा द्विविधम्। यद्वा कलितललितवेशास्स्त्रियो ललना येषान्ते च ते गन्धर्वास्सङ्गीतकर्म्मप्रधानादेवयोनिविशेषा हाहाद्याः विद्याधरोऽप्सरोयक्षरक्षोगन्धर्व-किन्नराः पिशाचोगुह्यकस्सिद्धोभूतोऽमीदेवयोनयइति, हाहाहूहूश्चैवमाद्या गन्धर्वास्त्रि-ङ्गोपाङ्गत्वादतिशोभमानम् विविधं रागभेदाद् ग्रामस्वरादिभेदात्तत्तद्देशभेदाद्वा नाना-प्रकारकम् मधुरं श्रवणेन्द्रियातिसौहित्यजनकम् यद्गानम् तस्य यदाकर्णनं श्रवणम् तेनाञ्चल्लयादौ मन्दमुत्तमाङ्गधूननेन किञ्चिच्चलत् किरीटं मुकुटं यस्याः सा ताम्। अथ मुकुटं किरीटम्पुन्नपुंसकमित्यमरः मणिमया नानाविधामूल्यदिव्यरत्नखचिता ये सुराणान्दर्शनसमर्चनार्थे समागतानामिन्द्रप्रमुखानान्देवानाम् मौलयः किरीटानि। मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् नाऽशोकद्रौस्त्रियाम्भूमाविति मेदिनी तेषाम् स्फुरन्ती अविच्छिन्नन्देदीप्यमाना या दीप्तिसम्पत् प्रकाशसमृद्धिः तथा

विलसत्प्रणामावसरे तन्मौलिलग्नमणिकिरणपटलरूक्षिततत्वादतीव शोभमानम् अमलै-र्न्निर्दोषैरतीव स्वच्छैर्वा रत्नैर्न्नानाविधैः पुष्परागहीरकवैदूर्यादिभिर्म्मणिभिः स्यूतम्परितो बद्धङ्खचितमिति यावत्। हैमं स्वर्णनिर्मितम् अङ्घ्रिपीठम्पर्यङ्कोपर्य्यवस्थितिसमये पादपद्मद्वयाधारीभूतञ्चरणचतुष्कशोभिकनकवरमणिमयम्फलकं यस्यास्सा ताम् ॥४॥

लसदमलमरीचिव्रातसौवर्णराज
न्मधुरिमरवनानापादपाथोजभूषाभू ।
मणिखचितविमृष्टस्वर्णकाञ्चीमयूख
स्फुरदभिनवशाटीशोभितश्रोणिदेशाम् ॥५॥

अभिनवगजमुक्तायष्टिदीप्तिप्रसार
स्फुरदसितसुचोलकान्तवैदूर्य्यकान्ताम् ।
मणिनिकरचकासत्स्वर्णकेयूरनानाविध-
वलयविराजद्बाहुविद्योत्तमानाम् ॥६॥

अथ च मानवा मौलितो वर्ण्याः देवाश्चरणतः पुनरिति कविकल्पलतोक्त-कविसम्प्रदायानुसरणेन देवतानाम् चरणतस्समारभ्य वर्णनीयत्वं समालोच्य तत एव सुरासुरवन्दनीयां श्रीभागीरथीं देवतां वर्णयति लसदेति। लसन्तस्संस्फुरन्तः अमलानाम्परमस्वच्छानाम् मरीचीनाम् चरणाभरणानां मणिमयत्त्वात् किरणानाम् व्राताः पटलानि यासु ताः सौवर्ण्यो जातरूपमय्यः राजन् श्रवणमात्रादेव हृदयाह्लाद-सम्पादकत्वादतिशोभमानः मधुरिमा माधुर्य यस्य तादृशो रवश्शब्दश्शिञ्जितमिति यावत्। यासान्तास्तथोक्ताश्च नाना बहुविधाः पादपाथोजयोश्चरणपङ्कजयोः भूषा भूषणानि नूपुरादीनि यस्यास्सा तथोक्ता ताम् मणिभिर्मरकतादिभी रत्नैः खचिता बद्धा विमृष्टा समुज्ज्वलीकरणसाधनपाषाणविशेषसङ्घर्षणादिना सम्पादितातिनैर्म्मल्या स्वर्णकाञ्चीहाटकमेखला तस्या मयूखैरंशुभिः स्फुरन्ती देदीप्यमाना याऽभिनवाऽति-नूतना शाटी परिधानमधोवस्त्रमित्यर्थः तया शोभितस्सञ्जातच्छविः श्रोणिदेशः कटिप्रदेशः लक्षणया नितम्बबिम्बं वा यस्यास्सा तथोक्ता। ताम्। कटिश्श्रोणिः ककुद्मतीत्यमरः ॥५॥ अभिनवेति अभिनवास्सद्यो विनिस्सृताः याः गजमुक्ताः करिराजकुम्भमौक्तिकानि तासां या यष्टयो हारलतापरम्पराः यष्टिः पुंसि स्याद्भुजदण्डके द्वयोर्हारलताभाग्योर्मधुकाशस्त्रभेदयोरितिमेदिनी। तासाम् दीप्तिप्रसारैः स्फुरन्नतिविलसन् असितो गौरच्छव्यनुरूपो मेचकवर्णो यस्सुचोलः कण्ठाद्वस्तिप्रदेशपर्यन्तं लम्बमानः कुचमण्डलमात्रव्याप्तो वा शोभमानः कूर्पासकः चोलः कूर्पासकोऽस्त्रियामित्यमरः। तत्र क्रान्तैस्सीवनसाधनलोहमयसूच्यादिरन्ध्रप्रोतहेमादिसूक्ष्मतन्तुसन्नद्धैः वैदूर्यैर्विदूराख्य-देशोत्पन्नैः पीतवर्णैर्म्मणिविशेषैः कान्तां सुशोभमानाम् मणिनिकरैरनेकविधरत्नसमूहैः चकासतो विद्योतमानाः स्वर्णस्य काञ्चनस्य केयूराण्यङ्गदानि केयूरमङ्गदन्तुल्यमित्यमरः।

नानाविधा बहुविधाः वलयाः कटकानि चूडिकाद्यपरनामधेयानि भुजभूषणमात्राणीत्यर्थः। तेषान्तेषाञ्चेतरेतरयोगं विधाय तै राजन्तोऽतिबन्धुराः ये बाहवो भुजाः तैर्विद्योतमानामतीवप्रकाशमानाम् ॥६॥ अथ श्लोकद्वयेन लक्षणविशेषलक्षितांश्चतुरोहस्तान्वर्णयति चलदेत्यादिना। चलत् सौरभ्यवशंवदत्वादितस्ततो बम्भ्रम्यमाणम् अलीनाम्भ्रमराणाम् कुलं समूहो यत्र तादृशम् फुल्लं विकसत् प्राज्यसौरभ्यम्बहुलामोदसम्भृतञ्च यत्पद्मन्दिव्यकमलम् तस्य प्रचलेन परिभ्राम्यमाणत्वादितस्ततः प्रचलता विमलेन साधुप्रक्षालनात्पङ्कलवेनाप्यपाकृतेनातिस्वच्छेनेति यावत् नालेन दण्डेन। नालाननापद्मदण्डे इति मेदिनी। भ्राजितश्शोभितः अवामो वामेतरो दक्षिणः

चलदलिकुलफुल्लप्राज्यसौरभ्यपद्म
प्रचलविमलनालभ्राजितावामहस्ताम् ।
भवभयपरिखिन्नस्वान्तसंशुद्धिवाञ्छा
शरणगजनसान्त्वप्रस्फुरद्वामहस्ताम् ॥७॥

सुमणिशकलभास्वत्स्थूलमुक्ताफलस्रग्-
रुचिरकनककुम्भभ्राजिवामोद्ध्वेंहस्ताम् ।
सुरचनवरमुद्राचारुदक्षोद्ध्वहस्ता-
मतिमृदुकरशाखाराजमानोर्म्मिकौघाम् ॥८॥

उपरितनस्य वक्ष्यमाणत्वादधस्तन एवात्र हस्तः करो यस्यास्सा ताम् भवस्य जन्ममरणादिबहुविधदुःखप्रवाहरूपस्य संसारस्य यद्भयम्भीतिः तेन खिन्नन्दीनतामुपगतम् यत्स्वान्तं हृदयम् तस्य या सम्यक् ब्रह्मविद्ब्रह्मनिष्ठसद्गुरूपदेशपूर्वकम् शुद्धिस्सर्वक्लेशप्रहाणातिनिर्वृतियोग्यतासम्पादकं नैर्म्मल्यम्। तस्याः वाञ्छया समभिलाषेण शरणगा निजरक्षितृविश्वासेन समागता ये जनाः तेषां सान्त्वाय सादराभयप्रदानाय स्फुरन्नुन्नमन् वामो हस्तो यस्यास्सा ताम्। अत्रापि पूर्ववदधस्तन एव ॥७॥ सुमणीति शोभना मणयो मरकतादयः तेषाम् यानि शकलानि खण्डानि अणुदीर्घावयवा इत्यर्थः। तेषाम् भासो दीप्तयः विद्यन्ते यस्यासौ। यद्वा स्वखचितैस्तैः भास्वान्देदीप्यमानश्चासौ स्थूलमुक्ताफलस्रग्रुचिरोऽतिपुष्टगजमौक्तिकमालातिरमणीयश्चासौ कनककुम्भः काञ्चनकलशः। तेन भ्राजते तच्छीलः वामो दक्षिणेतरः ऊद्ध्वः उपरितनः हस्तो यस्यास्सा ताम् सुरचना शोभनावयवसंस्थानसुभगा या वरमुद्राऽभिलषितार्थप्रदानचिह्नाकृतिः तया चारुरतिरमणीयः दक्षो दक्षिणपार्श्वस्थः ऊद्ध्व उपरिस्थः हस्तो यस्यास्सा ताम्। अतिमृद्योऽतिकोमलाः याः करशाखा अङ्गुल्यः। अङ्गुल्यः करशाखास्स्युरित्यमरः। तासु यथायोग्यम् राजमानस्स्वर्णमणिमयत्वादतिशोभमानः ऊर्मिकौघोऽङ्गुलीयकसमुदायः न तु प्रत्यङ्गुल्येकैकोर्मिमकेत्यर्थः। यस्यास्सा ताम्। अंगुलीयकमूर्मिमकेत्यमरः ॥८॥ धवलेति धवला वलक्षा विमला-

स्वच्छा कान्तिस्फूर्त्तिर्दीप्तिच्छटास्फुरणम् यस्यास्तादृशी या उरस्सूत्रिका मुक्ताफल-स्रग्विशेष: । अथोर:स्सूत्रिका मौक्तिकै: कृतेत्यमर: । तया आढ्यां युक्ताम् मणयो नानाविधानि रत्नानि कनकं स्वर्णञ्च स्वोपादानकारणम् तैश्शोभमाना भा द्युतिः यासाम् तास्तथाभूता: कण्ठभूषा नानाविधानि कण्ठाभरणानि दधानान्धारयन्तीम् कनकेन हेम्ना कलिता घटिता ये तन्तव: सूक्ष्मतरसूत्राणि तेषु प्रोता ग्रथिता ये मुग्धाच्छमुक्तानिकरास्सुन्दरविमलमौक्तिकव्रजा: मुग्धस्सुन्दरमूढयो रित्यमर: । तै रुचिरा काम्यमाना या कम्बुग्रीविका शङ्खनिभा रेखात्रयवती कन्धरा कम्बुग्रीवात्रिरेखा सेत्यमर: । तया रोचमानामतिशोभायुताम् ॥९॥ सरसेति सरसमन्तस्साररससम्भृतम्

धवलविमलकान्तिस्फूर्त्युरस्सूत्रिकाढ्यां
मणिकनकमुभास: कण्ठभूषां दधानाम् ।
कनककलिततन्तुप्रोतमुग्धाच्छमुक्ता
निकररुचिरकम्बुग्रीविकारोचमानाम् ॥९॥

सरसतरुणबिम्बद्योतिसूक्ष्मौष्ठबिम्बां
नवतरविमलाञ्चत्सज्जपापुष्पजिह्वाम् ।
परिणतशुकचञ्चूचारुमुक्ताविभूषा ।
स्फुरदगुरुविराजन्नासिकाराजमानाम् ॥१०॥

तरुणम्प्ररूढम् यत् विम्बम्बिम्बिकाफलम् तद्वद्द्योतिनौ शोणिम्नाऽतिप्रकाशशीलौ सूक्ष्मौ ओष्ठौ रदनच्छदावेव बिम्वौ मण्डलीभूतौ यस्यास्सा । यद्वा तद्वद्द्योति सूक्ष्मयोरोष्ठयो: बिम्बं मण्डलं यस्यास्सा ताम् । बिम्बन्तु प्रतिविम्बेऽपि मण्डले पुन्नपुसकम् । बिम्बिकाया: फले क्लीवङ्कृकलासे पुन: पुमानिति मेदिनी । नवतरं सद्योजातम् विमलं रजोविरहितम् अञ्चत्सुभगतया पूजितं स्तुतमिति यावत् । सत् सरन्ध्रत्वादिदोषरहितम् यत् जपापुष्पमोड्रपुष्पम् । अत्रजपाशब्दोबद्वितीयोऽपि ओड्रपुष्पञ्चवेत्यमर:, ओड्रपुष्येऽपिवृक्षेऽपि जवाशब्द: प्रकीत्तित इति त्रिकाण्डशेष: । जवावेगवतित्रिषु पुल्लिङ्गस्तुभवेद्वेगेचौड्रपुष्पे जवास्मृतेतिमेदिनी । पद्वितीयपाठेतु जवायान्तु जपास्त्रियामितिधर्म्मदास: । ओड्रपुष्पन्तुजपेतिहेमचन्द्र: जवास्याज्जपया-सहेतिशब्दभेदप्रकाश: । अथ च जपाशब्देन वाड्रपुष्पग्रहणे पुन: पुष्पशब्द: प्रशस्त-परोऽनुसन्धेय: । करिकलभ इत्यादौ करिपदवत् वस्तुतस्तु ओड्रो जने जपापुष्पे ओड्र: ख्यातो जवापुष्पे इति हेमचन्द्रमेदिनीकरोक्तिपर्य्यालोचने पुष्पान्तोऽपि जपाशब्दस्साधीयानेव । तथा च भगवान् कालिदास: पश्चादुच्चैर्भुजतरुवनं मण्डले-नाभिलीनस्सान्ध्यन्तेज: प्रतिनवजपापुष्परक्तन्दधान:नृत्यारम्भेहरपशुपतेरार्द्रनागाजिनेच्छां शान्तोद्वेगस्तिमितनयनन्दृष्टभक्तिर्भवान्येति । तद्वत् जिह्वा रसना यस्यास्सा ताम् । यद्वा शाकपार्थिवादित्वाद्रक्तपदलोपोऽत्र बोध्य: । रसज्ञा रसना जिह्वेत्यमर: तथाच

सौन्दर्य्यलहर्यां श्रीमान् शङ्कराचार्यः, जपापुष्पच्छाया तवजननि जिह्वा जयति सेति। परिणता परिपाकावस्थापन्ना या शुकञ्चूः कीरत्रोटिः चञ्चूस्त्रोटिरुभेस्त्रियामित्यमरः तद्वच्चारुरतिसुभगा मुक्तामौक्तिकमेव विभूषा भूषणम् तया स्फुरन्ती देदीप्यमाना च अगुरुरगुर्वी वा तन्त्री अतएव विराजन्ती या नासिका तया राजमाना शोभमाना ताम् स्थलत्रये पुंवद्भावः ॥१०॥ विविधैरनेकविधैः विमलैर्मलरहितैः भास्वद्भिः प्रकाशमानैः घृणिभिः किरणैः देदीप्यमानानि पुनः पुनरतिशयेन वाद्योपमानानि यानि प्रियाणि लोकस्वान्तरञ्जकानि मणीनाम् तनूनि सूक्ष्माणि खण्डानि शकलानि तैस्स्यूतौ निबद्धौ खचितावित्यर्थः। हैमौ स्वर्णमयौ अवतंसौ कर्णभूषणविशेषौ यस्यास्सा ताम् अवतंसो न स्त्रियां स्यात्कर्णपूरे च शेखरे इति मेदिनी। यद्वा विविधानि विमलानि भास्वद्रश्मिदेदीप्यमानानि रविकिरणद्योतमानानि यानि प्रियमणितनुखण्डानि तैस्स्यूतौ हैमावतंसौ यस्यास्सा ताम् किरणोस्त्रमयूखांशुगभस्तिघृणिरश्मयः भानुःकरोमरीचिस्त्रीपुंसयोर्दीधितिः स्त्रियामित्यमरः। अत्र घृणिशब्दे ञिघृपा प्रागल्भ्ये इत्यस्मात्कर्त्तरि बाहुलकान्निर्गुणाभावश्चावगन्तव्यः। वृष्णिरितिपाठे वृषु सेचने इत्यस्मात् सृवृषिभ्याङ्किदितिनिः किञ्च पृष्णिरित्येके पेठुः। अत्र स्पृशस्पर्शने अस्य सलोपो गुणाभावश्च घृणिपृश्नीतिनिपातितः पर्शति पृशुसेचनेवा श्रुतिकलितङ्कर्णधृतम् मनोज्ञानि स्वच्छानि राजन्ति प्रकाशमानानि च पलाशानि दलानि यस्य तत् पत्रम्पलाशञ्छदनन्दर्पणञ्छदः पुमानित्यमरः। स्फुटं विकचम् मरकतस्य मणेः कान्त्या स्पर्द्धि तत्पराभवेसु अनिर्वचनीयनीलिमेति यावत्। अत्र यद्यपि मरकतमणिसाम्यात्पलाशेषु हरितवर्णत्वं समायाति। तथापि कमलासम्पदोः कृष्णहरितोर्नागसर्प्ययोः पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु इत्यादिनाऽलङ्कारशेखरकृद्विहितः हरितकृष्णयोरभेदोऽवगन्तव्यः। दिव्यमलौकिकम् अब्जयोरर्थान्नीलयोः कमलयोः युग्मं युगलम् यया सा ताम् ॥११॥

तनुतरवरसान्द्रश्यामसुस्निग्धपक्ष्म
प्रचुररुचिरभृङ्गभ्राजमानाम्बुजाक्षीम्।
कुसुमशरविराजद्दृप्तचापाभिमान-
च्छिदुरनिविडनीलभ्रूलताद्वन्द्वरम्याम् ॥१२॥

शिशुशिशिरखरांशुप्रोल्लसच्चारुबिम्ब-
प्रतिभटतिलकोच्चैः कान्तिपुञ्जातिकान्ताम्।
जलदपटलमुक्तस्वच्छरश्मीन्दुखण्ड
च्छविविजयधुरीणप्रोल्लसद्भालदेशाम् ॥१३॥

तनुतरति तनुतराण्यतिसूक्ष्माणि वराणि दर्शनीयानि सान्द्राणि निविडानि न तु विरलानि श्यामानि मेचकानि सुस्निग्धानि अतिमसृणानि यानि पक्ष्माणि

नेत्रप्रावरणलोमानि तैः प्रचुरे रुचिरे बहुलरमणीये। यद्वा तनुतरादिविशेषणविशिष्टानि पक्ष्माणि ययोः तथाभूते अतएव प्रचुररुचिरे कनीनिकाभिप्रायेण भृङ्गभ्राजमानाम्बुजे इव मध्यस्थभ्रमरशोभमानपद्मे इव अक्षिणी नेत्रे यस्यास्सा ताम्। नेत्रत्रयकल्पनायान्तु विशेषणानि विशेष्याणि च बहुवचनान्तानि विधाय समासः कर्त्तव्यः। कुसुम-शरस्यपुष्पवाणस्य त्रिभुवनविजयिनः श्रीकामदेवस्येत्यर्थः विराजन्नतीवमनोहरः दृप्तो निखिललोकविजयाद्गर्वितोयश्चापो धनुः तस्याभिमानन्त्रिभुवनविजयोत्थन्दर्पम्। छिनत्ति निजकौटिल्यादिशोभया दूरीकरोतीति तथोक्ता 'भिदिविदिच्छिदेः कुरजिनिकुरच्। छिदुरछेदनद्रव्येधूर्त्तेवैरिणिचत्रिषु' इति मेदिनी साचासौ निविडाऽतिसान्द्रा च नीलाऽतिश्यामलवर्णा च भ्रूलता भ्रूवल्ली तस्याः द्वन्द्वेन युगलेन रम्या। मनोज्ञरूपा ताम्॥१२॥ शिश्विति शिशुर्बालः प्रातःकालिक इत्यर्थः शिशिरस्य ऋतोः खरांशुर्म्मार्त्तण्डः तस्य प्रोल्लसद्देदीप्यमानम् अतएव चारु अतिहृदयङ्गमम् यत् बिम्बं मण्डलम् तस्य प्रतिभटसिन्दूरादिप्रकृतिकत्वात्प्रतिस्पर्द्धी यः तिलको विशेषकम् तमालपत्रतिलकचित्रकाणि विशेषकम् द्वितीयञ्च तुरीयञ्च न स्त्रियामित्यमरः। तस्य उच्चैर्महान् यः कान्तिपुञ्जो दीप्तिप्रसारः तेन अतिकान्ताऽतिसुभगस्वरूपा ताम्। जलदपटलमुक्तस्य वारिदापवारणरहितस्य स्वच्छरश्मेः प्रस्फुरत्किरणस्य इन्दुखण्डस्य चन्द्रार्द्धभागस्य या छविर्द्युतिः तस्याः विशेषेण निश्शेषतया जये पराभवविशेषं धुरीणो धुरन्धरोऽतिकुशलः अतएव प्रोल्लसन्प्रकाशमानः भालदेशो ललाटप्रदेशः यस्यास्सा ताम्। भालं स्याल्ललाटे महस्यपीति हेमचन्द्रः॥१३॥

ललितकुलितभृङ्गश्रेणिनीलामलोद्यन्
मृदुल कुटिलसूक्ष्मस्वच्छमुक्तालकास्याम्।
रुचिरकिरणचञ्चद्रत्नवारोल्लसत्सत्
कनक कलितभास्वद्दीप्तिराजत्किरीटाम्॥१४॥

रुचिरमुकुटकोटिप्रस्फुरच्चित्तहारि-
स्फुटसुरभिविसारिस्फारमन्दारमालाम्।
सकृदपि जितचित्ता देविभागीरथि त्वां
दधति हृदयपद्मे ये न किन्ते कृतार्थाः॥१५॥

ललितेति ललिताअतिकमनीयाः ललिता मन्दमन्दंस्फुरिताः भृङ्गश्रेणिवन्नीला श्यामाः अमला रजोलेशेनाप्यस्पृष्टाः उद्यन्तो देदीप्यमानाः मृदुलाः कोमलस्पर्शाः कुटिलाश्चलदुरगकुमारवद्वक्राः सूक्ष्मस्वच्छमुक्तास्तनुतरातिविमलमौक्तिकग्रथिताः अकला-श्चूर्णकुन्तला यत्र अकलाश्चूर्णकुन्तलाइत्यमरः तादृशमास्यं मुखं यस्यास्सा ताम् रुचिरकिरणैर्म्मनोहरमयूखैः चञ्चन्देदीप्यमानो यो रत्नवारो विविधमणिसमूहः तेन उल्लसदतिदीप्तिभृत् सत्समीचीनम् लोकोत्तररचनमित्यर्थः। कनककलितं स्वर्णनि-र्म्मितम् अतएव भास्वद्दीप्ति प्रौढप्रचण्डमार्त्तण्डप्रकाशम् अतएव राजदतिशोभमानम्

यद्वा भास्वतो दीप्तिः तथा राजत् तादृशम् किरीटमुत्तमाङ्गस्थं मुकुटं यस्यास्सा ताम् ।।१४।। रुचिरेति रुचिराः मुकुटकोटिषु किरीटशिखरेषु रुचिरस्य मुकुटस्य कोटिष्विति वा प्रस्फुरन्त्यस्सर्वतः प्रसरन्त्यः चित्तहारिण्यो मानसाकर्षिण्यः स्फुटा विकसिताः सुरभयो घ्राणतर्प्पणाः विसारिण्यो दशसु दिक्षु विसरणशीलाः स्फारस्तु स्फरकादीनाम्बुद्बुदे विपुलेऽपिचेति हेमचन्द्रः । मन्दारमालास्सुरतरुपुष्पस्रजो यस्यास्सा ताम् उत्तरार्द्धन्तु द्वितीयपद्यव्याख्यावसरे व्याख्यातमेव समाप्तङ्कुलकम् ।।१५।।

भगवति तवतीरम्प्रोच्छलत्स्वच्छनीरम्-
मृदुसुरभिसमीरं साधुकूजत्सुकीरम् ।
कुसुमिततरुवारम्प्रोल्लसद्वल्लिभारं
वरमति रधिसारङ्कोजहात्यर्त्तिहारम् ।।१६।।

अथ ध्यानं वर्णयित्वा इदानीं सप्तभिः श्रीगङ्गान्तीरसौभाग्यवर्णनव्याजेन स्तोतुकामः प्रथमन्तीरत्यागानर्हतां वर्णयति । भगवतीति हे भगवति पूर्णैश्वर्यादिगुण-षट्कशालिनि गङ्गे प्रकर्षेण उच्छलन्त्युद्गच्छन्ति स्वच्छान्यतिनिर्म्मलानि नीराणि जलानि यस्मिंस्तत् मृदवो मन्दगतयस्सुस्पर्शा वा सुरभयस्तत्रत्यवारिजादिसम्पर्कात् घ्राणतृप्तिकरगन्धशोभिनः समीराः पवना यत्र तत् साधु सम्यक् कूजन्तोऽतिमधुरं शब्दङ्कुर्वाणाः अतएव शोभनास्स्वरूपेणापि रमणीयाः कीराश्शुका यत्र तत् कुसुमानि पुष्पाणि सञ्जातान्येषान्ते कुसुमितास्सञ्जातपुष्पाः पुष्पभरमनोहरा इत्यर्थः । तदस्यसञ्जा-तन्तारकादिभ्यइतजितीतच् । तरुवारास्तालतमालादिवृक्षसमूहा यत्र तत् प्रोल्लसन्बहु-शोभमानः वल्लीनां नानाविधानाम्पुष्पभरभूषितानां लतानाम् भरो बाहुल्यं यत्र तत् अधिकस्त्रिभुवनमण्डलादतिरिक्तः सारस्स्थिरांशस्स्वर्ग्गादिप्रदातृत्वलक्षणो यत्र तत् । यद्वा अधिकं यथास्यात्तथा सारं वरम् त्रिभुवनवर्त्तिनि पदार्थजातेऽतीवश्रेष्ठमित्यर्थः । सारो वले स्थिरांशे च मज्जि पुंसि जले धने न्याय्ये क्लीवस्त्रिषु वरे इतिमेदिनी । अर्त्तीस्सांसारिकीः पीडाः हरति समूलञ्छिनत्तीति तथाभूतम् कंर्म्मण्यण् तव तीरन्तटम् । कर्म्मवरा विवेकशालिनी मतिर्म्मनीषा यस्य स तथोक्तः विवेकीत्यर्थः को जहाति त्यजति । न कोऽपीति भावः । एतत्त्यागात्यागाभ्यामेव अविवेकित्त्वं विवेकित्वपरीक्षा-जनानामिति तात्पर्यार्थः । अत्र विशेषणसप्तकेन श्रीगङ्गातीरस्य सप्तलोक्युत्तमत्वं सूचितम् । अत्रानुप्रासविशेषनिर्वाहाय न समाप्तपुनरात्तत्वन्दोषावहम् ।।१६।। अथ चान्यत्रवासिनः सार्वभौमादपि श्रीगङ्गायास्तटवासिजनोत्कर्षवर्णनव्याजेन तांस्तौति । उटजमिति हे देवि गङ्गे त्वत्तटे त्वत्तीरे यः कोपि मनुष्यः जितमना विषयाना-कृष्टान्तःकरणः भैक्षवृत्तिर्भिक्षालब्धान्नकृतभोजननिर्वाहश्च सन् भैक्षम्भिक्षाकदम्ब-कमित्यमरः । उटजमपि पर्णशालामपि विधाय निर्म्माय पर्णशालोटजोऽस्त्रियामित्यमरः वसति वासम् कुरुते तस्य साम्यन्तुल्यताम् नृपतीनां मण्डलेश्वराणाम् मुकुटकोटिभिः किरीटाग्रैः स्पृष्टम्प्रणामावसरे लब्धसंस्पर्शम् पादाब्जपीठञ्चरणकमलाधारकनकमणिमय-

उटजमपि विधाय त्वत्तटे देवि गङ्गे
वसति जितमना यो भैक्षवृत्तिर्म्मनुष्यः
नृपतिमुकुटकोटिस्पृष्टपादाब्जपीठः
सुवसतिरपि सम्राट् तस्य किं याति साम्यम् ॥१७॥

तव तटकुहरेऽयन्दर्दुरस्सन्निषण्णः
सुरभिपवननीतत्त्वत्तरङ्गाम्बुसिक्तः
सुरयुवतिगृहीतैश्चन्दनार्द्रैस्सरत्नैः
परिहसति सुरेशं वीजितन्तालवृन्तैः ॥१८॥

चतुष्पादो विष्टरो यस्य स तथोक्तः विष्टरः पीठमस्त्रियामितित्रिकाण्डशेषः। शोभना रजतस्वर्णमणिमयत्वादतीवरमणीयाः वसतयो दुर्गप्रासादादीनि नानाविधानिसदनानिं यस्य स तथोक्तः सम्राट् चक्रवर्त्ती राजेति यावत् अन्यत्र स्थित इति शेषः। याति प्राप्नोति किम् न यातीत्यर्थः। अनेन राज्यसुखभोगान्ते सम्राजो निरयाधिगमः। नानाव्रतोपवासादिदुःखानुभवजनितमनःपीडां विनैव श्रीगङ्गातटवासमहिम्नैव श्रीगङ्गातटवासिनः स्वर्गादिलाभयोग्यताधिगमश्चसूचितः ॥१७॥ अथ च कदाचिज्जलविहारमहोत्सवादौ श्रीगङ्गातटविवरस्थितम्भेकं समवलोक्य तस्येन्द्रतोऽपि समुत्कर्षतावर्णनव्याजेन भागीरथीं स्तौति। तवेति। हे गङ्गे इत्यनुवर्त्तनीयम्। तव तटकुहरे प्रवाहोपरितनकुड्याकारतीरविवरप्रदेशे सम्यङ्निर्भयतया निषण्णःसुखोपविष्टः सुरभिपवननीतेन तत्रत्यसरसिजादिसौरभ्यसम्वलितमारुतसमाकृष्टेन त्वत्तरङ्गाम्बुना भवदीयवीचिजलेन सिक्तः कृतसेकः अयम्पुरोवर्त्ती मदक्षिगोचरः दर्दुरो मण्डूकः। भेके मण्डूकवर्षाभूशालूरप्लवदर्दुरा इत्यमरः। सुरयुवतिगृहीतैर्देववधूटीकरधृतैः चन्दनार्द्रैर्दिव्यपाटीरपङ्कसरसैः सरत्नैः कनकमयत्वात् नानाविधमणिखचितैः तालवृन्तैर्व्यजनैः व्यजनन्तालवृन्तकमित्यमरः वीजितं लब्धकृतिममन्दपवनस्पर्शसुखम् सुरेशन्त्रिभुवनाधिपतिमिन्द्रमपि, अन्येषाङ्का कथा, परिहसति बहुलतरदुःखलब्धनाकीयविषयभोगासक्ततया क्षीणपुण्यः पुनः पुनर्जन्ममरणयोग्यतामापन्नोऽयं सुरराट् श्रीगङ्गाजलविन्दुस्पर्शक्षीणाशेषसंसृतिनिदानदुरितविसरस्वमोक्षाधिकारिणस्तिर्यग्योनिमापन्नस्यापि मम सादृश्यम्प्राप्नोति किमित्युपहासङ्कुरुते। अनेन श्रीगङ्गातटवासिनो दर्दुरस्यापि ईदृशी स्थितिश्चेत्तर्हि तथाभूतस्य मानवस्य का कथेति सूचितम् ॥१८॥ अथ श्रीगङ्गायास्तटप्राप्तौ सत्यां निजमुक्तौ सन्देहो न विधेयइतिप्रतिपादनद्वारा तां स्तौति। शरणेति– हे भगवति गङ्गे शरणं रक्षकङ्गच्छन्तीति शरणगा आश्रयम्प्राप्ताः। शरणङ्गृहरक्षित्रोरित्यमरः। ते च ते जनाश्च मनुजास्तेषाम् या वाञ्छा मनोरथपरम्परा तस्याः पूरणे समग्रसम्पादने यदौदार्य्यन्दानशूरत्वम् तेन पूर्णमुपचितमसम्भृतमिति यावत् त्वत्तटम्भवत्तीरप्रदेशम् कर्म भाग्ययोगात् जन्मान्तरीयपुण्यौघपरिपाकवशात् समुपेत्य प्राप्यापि निजमुक्तौ आत्मनो भवबन्धनान्निर्मोके पुनः तथोक्तत्वत्तावाप्त्यनन्तरम् योजनाः सन्दिहानास्सञ्जातसंशयाः अस्माकं

शरणगजनवाञ्छापूरणौदार्य्यपूर्णम्-
भगवति समुपेत्य त्वत्तटम्भाग्ययोगात्।
पुनरपि निजमुक्तौ सन्दिहाना जना ये
शिव शिव मतिरेषान्देवि गङ्गे गता क्व ॥१९॥

जननि पुलिनदेशस्तेतरङ्गैर्विमुक्त
स्सुरभिमृदुलशीतस्वान्तद्वातयुक्तः।
वृहदजिनसमूहैरास्तृतो जह्नुकन्ये
मुनिवरगणरम्यो नास्ति चेतोहरः किम् ॥२०॥

मुक्तिर्भविष्यति नवेति कोटिद्वयदोलायमानमानसा इत्यर्थः। भवन्तीति विशेषः। हेदेवि गङ्गे शिवशिवेति खेदे आश्चर्य्ये वा। एषाम् मुक्तिप्रदन्त्वत्तटङ्गत्वाऽपि मुक्तिसन्देहङ्कुर्वाणानाम् मतिर्विचारचतुरा बुद्धिः क्व गता न ते मतिमन्तइत्यर्थः। अनेन श्रीगङ्गातटं मुक्तेस्साधनान्तरानपेक्षं साधनमिति सूचितम्। तदुक्तङ्कौर्म्मेकलौ गङ्गैव केवलम्। कः कलौ मुक्तिमाप्नोति गङ्गासेवां विना नर इति ॥१९॥ अथ सलिलवर्जितत्वात्तटाव्यवहितसंसर्ग्गित्वाच्च पुलिनमपि तटान्तःपातित्वेन वर्णयन्गङ्गां स्तौति जननीति। हे जननि मातेव सर्वदैव हितकारिणि जगदुत्पादनप्रभावशालिनि वा हे जह्नुकन्ये जह्नुनामकराजर्षिसमनुगृहीतपुरस्सञ्चारे तरङ्गैरूमिर्भिः मुक्तश्शनैश्शनैः परित्यक्तः सुरभिभिस्सर्वतस्समानीतजलजादिवदामोदभरत्वात्सुगन्धिभिः मृदुलैस्सुख-प्रदश्पर्शैः शीतैस्तपःक्लेशापहारि शैत्यसुभगैः अतएव स्वान्तहृद्भिस्तत्रत्यजनमनःप्रियैः वातैस्सर्वतोऽविच्छिन्नं समागच्छद्भिर्म्मारुतैः युक्तो व्याप्तः वृहदजिनसमूहैस्साङ्गो-पाङ्गविशालकृष्णमृगादिचर्म्मपरम्पराभिः आस्तृतः कृतास्तरणः मुनिवराणान्तपश्चर्या-परायणानां वेदतत्त्वावगन्तृणाम् गणैः तत्र तत्राजिनास्तरणेषु कृताधिष्ठानैस्समूहैः रम्यस्सञ्जातशोभातिशयः ते तव पुलिनदेशः सद्यो वारिनिर्ग्गतरोधस्समीपस्थप्रवाह-भूम्यन्तर्वर्त्तिप्रदेशविशेषः। तोयोत्थितन्तत्पुलिनमित्यमरः। चेतोहरो द्रष्टृ जनानां हृदयलोभनः नास्ति न भवति किम्? अस्त्येवेति काकुः। अनेन गङ्गापुलिनस्य तत्वज्ञजनसमाश्रयत्वेन चतुर्वर्गसम्पत्साधनत्वं सूचितम्। उक्तञ्चनारदीये किमष्टाङ्गेन योगेन किन्तपोभिः किमध्वरैः वास एव हि गङ्गायाम्ब्रह्मज्ञानस्यकारणमिति ॥२०॥

विबुधनदि किमेतैरम्बुजन्मोपमेतैः
परिलसदपवादै र्न्निष्फलैर्हन्त पादैः।
वृहदघहृतिधीरं स्वर्म्मदध्वंसितीरं
तव न सकृदयन्ते ये मुधाऽथो रमन्ते ॥२१॥

अथ श्रीगङ्गायास्तीराप्तेरेव भङ्ग्यन्तरेण जन्मसाफल्यसम्पादकत्वमुपपादयं-स्तांस्तौति। विबुधेति हे विबुधानान्देवानां नदि सरित् श्रीगङ्गइत्यर्थः ये मनुजाः

तव वृहतां महताम् अघानाम्पापानाम्ब्रह्महत्यादीनाम् ब्रह्महत्यासुरापानंस्तेयङ्गुर्वङ्ग-नागमः महान्तिपातकान्याहुस्संसर्गश्चापि तैस्सहेतिमनुः। अस्त्रीपङ्कम्पुमान्पाप्मापा-पङ्किल्विषकल्मषम् कलुशंवृजिनैनोऽघमंहो दुरितदुष्कृतमित्यमरः। हृतिर्हरणम् तत्र धीरं सर्वथैव समर्थम् स्वस्स्वर्गस्य मदो गर्वः समुन्नतसुखाधिष्ठानत्वजनितमानसोत्सेक-स्वरूपः मदो रेतसि कस्तूर्याङ्गर्वे हर्षेभदानयोरितिमेदिनी। तन्ध्वंसयति विनाशयति तिरस्करोति तच्छीलन्तत्तथोक्तम्। तीरं रोधः कर्म सकृदेकवारमपि न अयन्ते न गच्छन्ति नाप्नुवन्तीति यावत्। अथो अथ च मुधा व्यर्थम् क्षणिकसुखार्थमित्यर्थः। रमन्ते क्रीडन्ति इतस्ततो भ्रमन्तीत्यर्थः हन्तेति खेदे। यत्तदोर्न्नित्यसम्बन्धात् तेषां मनुजानाम् अम्बुजन्मनः कमलस्य उपमां सादृश्यम् इतैः प्राप्तैः द्वितीयेतियोगविभा-गात्समासः। परिलसन्नुद्बुद्धः अपवादः श्रीगङ्गातीरमगतान् व्यर्थमितस्ततोभ्रमतः पादान्धिगिति निन्दा येषान्तैः अतएव निष्फलैर्व्यर्थजन्मभिः एतैः दृश्यमानैः पादै-श्चरणैः किम् न किमपि फलमित्यर्थः। यद्वा ये पादाः उक्तलक्षणन्तव तीरम् न अयन्ते अथो मुधा रमन्ते तैरुक्तस्वरूपैः एतैः पादैः किमिति योजना। अनेन ये सकृदपि स्नानाय श्रीगङ्गान्नगताः ते व्यर्थपादाः पङ्गव एवेति सूचितम्॥२१॥

सुरतटिनि तटे ते गोहिरण्यादिदानैः
क्षितिविबुधवरान्ये सादरन्तर्प्पयन्ति।
उभयकुलपितॄंस्ते नो किमुद्धृत्य सद्यः
पदममरदुरापङ्क्षीणतापं व्रजन्ति॥२२॥

त्रिभुवनपरिधानन्तावकं वारि गङ्गे
त्रिभुवनसुनिधानन्तावकं वारि गङ्गे।
त्रिभुवननतिभूमिस्तावकं वारि गङ्गे
त्रिभुवनसुखभूमिस्तावकं वारि गङ्गे॥२३॥

अथ श्रीगङ्गातीरे दानमाहात्म्यवर्णनव्याजेन श्रीगङ्गां स्तौति। सुरेति हेसुर-तटिनि देवनदि गङ्गे ये जनाः ते तव तटे तीरभूप्रदेशे सादरमादरेण सह नतिप्रीति-वचनादिपूर्वकमित्यर्थः गोहिरण्यादीनान्धेनुस्वर्णादीनाम् आदिनाऽन्नरत्नरजतवसनादि-ग्रहः। दानैस्स्वस्वत्वनिवृत्तिपूर्वकम् मूल्यं विना परस्वत्त्वसम्पादनलक्षणैः क्षितिविबुध-वरान्स्वकर्मनिष्ठान्विप्रवरान् सन्तोषयन्ति ते जनाः उभयकुलपितॄन्मातापितृवंशपूर्व-पुरुषान् सद्यस्तत्क्षणमेव उद्धृत्य निरयादिभ्यो निस्सार्य अमरदुरापन्देवैर्दुष्प्रापम् क्षीण-तापन्द्वन्द्वादिदुःखविरहितम् पदं बैकुण्ठशिवलोकादिस्थानम् ब्रह्मस्वरूपं वस्तु वा पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः। नो व्रजन्ति न प्राप्नुवन्ति किम् व्रजन्त्येवेति काकुः। अनेन सर्वतीर्थेभ्यः श्रीगङ्गातीरे दानस्य लोकोत्तरफलोत्कर्ष स्सूचितः॥२२॥ अथैकविंशता श्रीगङ्गाजलमाहात्म्यवर्णनद्वाराश्रीगङ्गा स्तोतुमारभते

तत्रादिमेन श्रीगङ्गाजलस्य त्रिलोकीसारत्ववर्णनव्याजेन श्रीगङ्गां स्तौति त्रिभुवनेति। हेगङ्गे तावकन्त्वदीयम् वारि जलम् आपस्त्रीभूम्निवार्वारिसलिलङ्कमलञ्जलम् पयःकीलालममृतञ्जीवनम्भुवनंवनम् कबन्धमुदकम्पाथः पुष्करं सर्वतोमुखम् अम्भोऽर्णस्तोयपानीयक्षीरानीराम्बुशम्वरम् मेघपुष्पङ्घनरसइत्यमरः। त्रयाणाम्भुवनानां लोकानाम् स्वर्गभूमिपातालाख्यानाम् परिधानन्तत्र वर्त्तमानत्वादधोवस्त्रं छन्नतापहारकमित्यर्थः अस्तीतिशेषः अग्रेऽप्येवम्। भवन्नीराभावे नग्नजनवदशोभमानान्येव भुवनानि स्युः परिधानमेव सर्वशृङ्गारशिरोरत्नम् तत्तु त्रिभुवनस्य भवद्वार्येवेति भावः। अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुक इत्यमरः पुनः हे गङ्गे तावकं वार्येव त्रिभुवनस्य शोभनमितरनिधानेभ्यो विलक्षणं निधानं रत्नादिसञ्चयस्थानमस्ति न केवलम्परिधानवदतिशोभाविधानमात्रेण जनाभिप्रेतार्थनिर्वाहकम् किन्तु सर्वसामर्थ्यसम्भृतत्वाल्लोकोत्तरनिधानरूपतयासकलाऽभीप्सितप्रापकमपीत्यर्थः। पुनः हे गङ्गे तावकं वार्येव त्रिभुवनसुखभूमिस्त्रिलोकीसुखसाधनमस्ति। पक्षपातविरहेण सर्वजन्तुसमुद्धारकत्वात् त्रिभुवनस्यलोकोत्तरसुखसमुत्पादकमित्यर्थः। अनेन श्रीगङ्गाजलस्य त्रिभुवनसर्वस्वत्वं सूचितम्॥२३॥

अपहरति य एको दृष्टमात्रो जनाना-
ङ्कृतगुरुदुरितानां रौरवाद्याधिकारम्
त्रिदशनदि मदीयं मानसं सानुरा-
गम्भवतु महति तस्मिंस्तावके वारिपूरे॥२४॥

तनुतरमपि गङ्गे तावकं हन्ति नीरम्-
बहुजनिजनितानाम्पातकानां समूहान्।
परिमितपरिहीणन्तूलराशिं न किं वा
दहति कथय मातर्वह्निलेशोऽप्यशेषम्॥२५॥

अथ दुर्द्धरदुःखनिवारणैकक्षमश्रीगङ्गाप्रवाहे निजभक्तिम्प्रार्थयमानः श्रीगङ्गां स्तौति। अपेति हेत्रिदशनदि देवनदि श्रीगङ्गे यः तावकस्त्वदीयः वारिपूरो जलप्रवाहः एक एवासहाय एव अनपेक्षितसाधनान्तर इत्यर्थः दृष्टमात्रो दर्शनविषयतामात्रतामापन्न एव कृतानि विहितानि गुरूणि महान्ति ब्रह्महत्यादीनि दुरितानि पापानि यैः तेषाञ्जनानां मानवानाम् रौरवाद्याधिकारं रौरवप्रभृतिनरकपतनयोग्यताम् अपहरति दूरीकरोति पुण्यलोकगतियोग्यतापादनेन निवारयतीति यावत्। तस्मिंस्तावके महति लोकोत्तरगौरवे पूजनीये वारिपूरे मदीयम् मानसमन्तःकरणम् सानुरागं सभक्तिभावम् भवतु। अनेन गङ्गाप्रवाहदर्शनमात्रस्यैव दुरितनिवारकत्वं सूचितम्॥२४॥ अथ वारिपूरस्य का वार्त्ता श्रीगङ्गाजलस्य कणिकाऽपि जन्मजन्मान्तरसम्पादितपातकनिवारणेऽतीवशक्तेति वह्नितूलदृष्टान्तेन वर्णयन् श्रीगङ्गां स्तौति। तनुतरेति हेगङ्गे तनुतरमपि स्वल्पतरमपि कणिकामात्रमपीत्यर्थः। तावकम् नीरञ्जलम् बहुजनिज-

नितानामसङ्ख्यातजन्मजन्मान्तरोपार्जिनाम् पातकानाम्पापानाम् समूहान् राशीन् हन्ति समूलमुन्मूलयति। स्नानपानाद्युपभोगक्षमस्य तस्य का वार्त्तेति भावः। उक्तार्थे दृष्टान्तन्दर्शयति। हे मातर्मदेकशरणस्वरूपे जननि वह्निलेशः कणिकामात्रस्वरूपोऽपि पावकः स्पर्शमात्रादेव परिमितिपरिहीणमपरिमितम् अशेषन्निश्शेषं यथास्यात्तथा नैव दहति। किं वा भस्मसान्नैव करोति किंवेति त्वङ्कथय, वद दहत्येवेति काकुः। अपिरेवकारार्थे अनेनावाप्तजलकणा अपि निष्पापा भवन्तीति सूचितम् ॥२५॥

सुरसरिदतिदूरन्तावकं वारिपूरम्-
कथमपि ननु वातो याति संस्पृश्य यत्र।
तदवनिसमुपेता जन्तवोऽप्यन्तकाले-
किमु न सुरवधूटीमानसं मोदयन्ति ॥२६॥

सकलभुवनपावि स्वर्गमुख्यालयावि
प्रबलदुरितलावि स्वावबोधैकभावि।
शशिभृदलिकचारि स्वान्तसंम्बुद्धिकारि-
द्युतटिनि तव वारि स्तान्ममैनोऽपहारि ॥२७॥

अथ श्रीगङ्गाजलस्पृष्टपवनस्पृष्टा दूरदेशस्था अपि जनाः स्वर्गाद्यवाप्तियोग्या भवन्तीति वर्णयन् श्रीगङ्गोत्कर्षं निरूपयति। सुरसरिदिति हे सुरसरिद् गंङ्गे तावकम्भवत्सम्बन्धिनम् वारिपूरञ्जलप्रवाहम् कथमपि केनापि प्रकारेण गतिस्वभावान्मेघाद्रिप्रेरणावसरे वा। न तु निश्चयेन। संस्पृश्य वातः पवनः अतिदूरं यथास्यात्तथा यत्र यस्यामवनौ याति प्राप्नोति सा चासाववनिश्चेति तदवनिं समुपेतास्सम्प्राप्ताः जन्तवोऽपि कृमिकीटादयः प्राणिनोऽपि अन्तकाले प्राणोत्क्रमणावसरे समागमसम्भावनामात्रेणापीति भावः। सुरवधूटीनान्देवयुवतीनाम् मानसं मनः न मोदयन्ति किमु मोदयन्त्येवेत्यर्थः। अनेन श्रीगङ्गास्पृष्टमारुतपवित्रीकृतदेशवासिनोऽपि प्राणिनः स्वर्गसुखमनुभवन्ति चेत्तर्हि तत्कृतस्नानादयस्तदनुभवन्तीति किमु वक्तव्यमिति सूचितम् ॥२६॥ अथ च लोकोत्तरशक्तिशालिश्रीगङ्गाजलप्रसादादात्मनः पावित्र्यम्प्रार्थयमानः श्रीगङ्गां स्तौति। सकलेति हे द्युतटिनि स्वर्गतरङ्गिणि श्रीगङ्गे सकलानि सम्पूर्णानि सर्वाणि वा त्रीणीत्यर्थः नत्वेकन्द्वे वा भुवनानि लोकान्स्वर्ग्गादीन् पुनाति स्वकीयसञ्चारवशात्पवित्रीकरोतीति तथोक्तम्। स्वर्गमुख्यान्नाकादीन् आलयान्स्थानानि वैकुण्ठादीनां मुख्यपदेन ग्रहः अवति स्वस्नानादिसम्भृतपुण्यप्राणिप्रापणाद्रक्षति भूषयति वा तत्तथोक्तम्। प्रबलानि महोत्कटानि दुरितानि पापानि लुनाति च्छिनत्तीति तथोक्तम् स्वावबोधमात्मज्ञानम् एकं मुख्यम् भावयति स्वोपभोगजनितान्तःकरणशुद्धिद्वारा संसारनिवर्तकन्तत्वज्ञानञ्जनयतीति तत्तथोक्तम्। अतएव शशिभृतोऽमृतांशुधारिणस्त्रिभुवनार्चितचरणसरसिजस्य श्रीमहादेवस्य अलिके ललाटे चरति

वर्त्तते विलसतीति यावत्। तत्तथोक्तम्। ललाटमलिकङ्गोधिरित्यमरः। स्वान्तानां स्वसेविजनमनःस्नानम् सम्यक्शुद्धिसंसृतिनिदानकषायमलराहित्यम् करोति विदधातीति तथोक्तन्तत् तव वारिजलम् मम त्वदेकपरायणस्य निजकिङ्करस्य एनांसि जन्मजन्मान्तरञ्चितानि जन्ममरणादिदुःखजनकानि पापानि अपहरतीति तथोक्तम्। तादृशम् स्याद्भवतु। अत्र सर्वत्र शीलार्थे णिनिः अत्र विशेषणषट्केन श्रीगङ्गाजलसेविनो जनस्य षडूर्मिराहित्येन शिवमयत्वं सूचितम्॥२७॥

अयि भगवति गङ्गे देवि राजत्तरङ्गे
गुणविजितमहेशन्तावकं वारिलेशम्।
कथमपि दधते ये प्राणिनो भालदेशे
यमशिरसि पदन्ते किं न धृत्वोद्व्रजन्ति॥२८॥

विबुधनदि शरण्ये प्राणिनाञ्जह्नुकन्ये
भगवति यदि दृष्टन्तेऽम्बु किन्तर्हि शिष्टम्।
तदपि हृदयरागाद् गर्हणोच्छित्तये वा
जननि तव पयोभिः पावयाम्येतदङ्गम्॥२९॥

अथश्रीगङ्गाजललवादरमहिमा यमादपि निर्भयत्वन्दर्शयन् श्रीगङ्गां स्तौति अयीति– अयीतिकोमलामन्त्रणे भगवति गङ्गे देवि राजत्तरङ्गे शोभमानवीचिपरम्परे इति प्रेमप्रवाहनिमग्नतया सम्बुद्धिचतुष्टयं युगपदेव कविरवदत्। ये प्राणिनो जीवाः तावकम्भवदीयम् गुणैश्शरणागतसमुद्धारकत्वादिभिश्शुभ्रत्वादिभिर्वा विजितः स्वायत्तीकृतः महेशः कोटिब्रह्माण्डनायकः श्रीशङ्करो येन स तम्। वारिणो जलस्य लेशः लवलेशकणाणवइत्यमरः। भालदेशे मस्तकप्रदेशे कथमपि केनापिप्रकारेण न तु श्रद्धयैव दधते धारयन्ति ते प्राणिनः यमशिरसि लोकोत्तरदर्प्पसमुद्धतेप्रेतराजमूर्द्धप्रदेशे पदं स्वकीयञ्चरणम् धृत्वा तदीयं शासनमनादृत्येत्यर्थः। उत् ऊर्द्धम् सद्गतिमिति यावत् न व्रजन्ति किम् व्रजन्त्येवेति काकुः अनेनश्रीगङ्गाजललवादरमहिम्ना दण्डधरदण्डदण्डने कुशलत्वम्प्राणिनामिति सूचितम्॥२८॥ अथ च कविः कदाचित् श्रीगङ्गातीरं समासाद्य तदीयजलदर्शनमात्रेणैवात्मानङ्कृतार्थं मन्यमानः स्नानपानादिप्रवृत्तौ व्यवस्थान्दर्शयंस्तां स्तौति विबुधेति हे विबुधनदि प्राणिनाञ्जन्तूनाम् शरण्ये शरणागतजन्मरक्षणसाध्वि जह्नुकन्ये भगवति यदि चेत् ते तव अम्बु जलम् दृष्टं स्वदृग्गोचरीकृतम् तर्हि किं स्नानपानादिकर्म शिष्टमवशिष्टम् न किमपीत्यर्थः। त्वदम्बुदर्शनमात्रेणैव कृतार्थत्वात्। किन्तदवशिष्टमिति पाठे तु तत्तर्हि किमवशिष्टम् वशिष्टमिति सएवार्थः। भागुरिमते अवाकारलोपोऽप्यवगन्तव्यः। तदपि तथापि हे जननि मातः हृदयरागादन्तःकरणभक्तिभराद्धेतोः वाऽथवा गर्हणायाअयगङ्गास्नानादिकं नकुरुतेऽतो नास्तिक एवेति निन्दायाः उच्छित्तये निवारणायानुत्पत्तय-

इत्यर्थः तव पयोभिर्ज्जलैः तदितिशरीरस्य हस्तेन निर्देशः। अङ्ङ्गात्रम् अङ्गमन्तिक-गात्रयोः उपसर्जनभूतेस्यादप्युपायप्रतीकयोः। अङ्गोनीवृद्विशेषेस्यादितिहेमचन्द्रः, पावयामि सर्वथैव पवित्रीकरोमीत्यर्थः। अनेन श्रीगङ्गाजलदर्शनमात्रमेव सर्वश्रेय-स्सम्पादकमिति सूचितम् ॥२९॥

कृतभुवनविहारं शम्भुशीर्षप्रचारम्-
निखिलनिगमसारन्देवि सन्तोषकारम्।
समुपचितनदीनञ्जीवनन्तावकीनं
श्रयतु बहुलमीनम्मानसं मामकीनम् ॥३०॥

अमृतममरलोके देवि केचिद्वदन्ति
प्रचुरतरतरङ्गे केचिदेवेन्दुविम्बे।
सुकविवचसि केचित्केचिदेवाङ्गनौष्ठे
त्रिभुवननुतमम्भस्तेऽस्ति तन्मे मतन्तु ॥३१॥

अथ श्रीगङ्गाजलैकलग्नमनस्कताम्प्रार्थयन् श्रीगङ्गां स्तौति कृतेति हे देवि दीपनशीले त्रिभुवनक्रीडाभूमे वा श्रीगङ्गे मामकीनम्मदीयम् मानसञ्चेतः कृतो विहितः भुवनेषु त्रिषु लोकेषु विहारो मनोविनोदाय विहरणेन तत्। यद्वा कृताभुवना-नान्तात्स्थ्यलक्षणया भुवनान्तर्गतानाञ्जनानाम् विना गरुडाख्येन पक्षिणा शकुन्तिपक्षि-शकुनिशकुन्तशकुनद्विजाः पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः नगौकोवाजिविकरविवि-ष्किरपतत्रयः नीडोद्भवागरुत्मन्तपित्सन्तोनभसङ्गमाइत्यमरः। हारो हरणं वैकुण्ठप्रापणं येन तत् त्रिभुवनजनान्देहावसाने विष्णुरूपान्विधाय विष्णुलोकं नीतवदितिभावः। शम्भोस्सकललोककल्याणविधायिनस्सुरासुरनरनमस्कृतस्यश्रीशिवस्य शीर्षे मूर्ध्नि प्रकर्षेण निखिलस्वसेविसमुद्धारकत्वोत्कर्षेण चरति विहरतीति तत्थोक्तम् यद्वा तत्र प्रचारस्सानन्दं विहारो यस्य तत्। उत्तमाङ्गंशिरश्शीर्षमूर्द्धानामस्तकोऽस्त्रिया-मित्यमरः। निखिलानां सर्वेषाञ्चतुर्णामिति यावत् निगमानामृगादीनां वेदानाम् निगमो वाणिजे पुर्याङ्कटे वेदे वणिक्पथेइतिमेदिनी। सारम्प्रमेयं वस्तु सर्ववेदप्रति-पादितमाहात्म्यमित्यर्थः। सन्तोषं स्वजनस्य वाञ्छापूर्त्याऽतीवाह्लादम् करोतीति तत्तथोक्तम्। कर्मण्यण् समुपचितस्सम्यग्वर्द्धितः नदीनामिनः पतिर्नदीनस्सरित्पतिस्समुद्रो येन तत्। उक्तञ्च भारते वनपर्वणि– चतुरधिकशततमाध्यायारब्धागस्तिपीतसमुद्रकथा-वसरे नवाऽधिकशततमाध्याये। समासाद्यसमुद्रञ्चगङ्गया सहितोनृपः पूरयामासवेगेन समुद्रंवरुणालयमिति, इनः पत्यौ नृपार्कयोरिति मेदिनी। बहुला बहवः मीना मत्स्याः यत्र तत् मीनादिसञ्चारशोभितमित्यर्थः। तावकन्त्वदीयम् जीवनञ्जलम् कर्म श्रयतु सेवताम्। अनेनश्रीगङ्गाजलस्य सर्वथैव सर्वजनाश्रयणीयत्वं सूचितम् ॥३०॥ अथश्रीगङ्गाजलेऽमृतत्वं व्यवस्थापयन्। श्रीगङ्गां स्तौति अमृतमिति। हे देवि गङ्गे

केचित्पौराणिका जनाः अमरलोके देवलोके स्वर्गेइत्यर्थः। अमृतंक्षीराब्धि-निस्सृतांसुधाम् वदन्ति पौराणिकीभिः कथाभिर्निरूपयन्ति। हेप्रचुरतरतरङ्गे बहुलतर-वीचिशोभिते मातर्गङ्गे केचित्तु ज्योतिस्सिद्धान्तवेत्तारो जनाः इन्दुविम्बेऽमृतांशुमण्डले तत् वदन्ति सुधामयरश्मिस्पर्शमात्रेण सर्वौषधीपोषकत्वेन प्रतिपादयन्तीत्यर्थः, केचित्तु प्राचीनकविनिर्म्मितसरसकाव्यनाटकादिलग्नैकमानसास्सहृदयाः सुकवीनां शक्त्यादिकाव्यनिर्माणहेतुसम्पन्नसत्काव्यकर्तॄणाञ्जनानां वचसि अतिसरसमनोहरपदसन्दर्भे तत् वदन्ति कथयन्ति। केचित्तु रसालङ्कारशास्त्रनिष्णातबुद्धयो विद्वांसः अङ्गनाया लोकोत्तरलावण्यभरभूषितायाअभिनवयौवनसौभाग्यातिशयगर्विताया ललनायाः ओष्ठेऽधरबिम्वे तत् वदन्ति। विविधोक्तिभङ्गिप्रभेदैस्तद्रसास्वादासक्तचित्तया वा प्रतिपादयन्ति। वस्तुतस्तु तदमृतङ्किमिति मत्तः पृच्छसि चेत्तर्हि समाकर्णयेत्य-भिमुखीकृत्याह– मे मम मतं सिद्धान्तस्तु मतंस्यात्सम्मते ज्ञाते, इति मेदिनी। त्रिभुवननुतङ्कृमिकीटादिसर्वसाधारणसमुद्धारकत्वमहिमातिशयेन त्रिलोकीस्तुतम् ते तव अम्भो जलम् पूर्वोक्तन्तु न तादृगित्यभिसन्धिः। तदमृतम्पीयूषमस्तीति ज्ञेयम्। अनेनानितरवर्त्तिस्वाश्रितसद्गतिप्रापकत्वोक्तामृतवादिपरिणुतत्वाभ्यां श्रीगङ्गाम्भ एवा-मृतमिति सूचितम्॥३१॥

जननि तव पयोभिस्सङ्गतानाञ्जनानां
शशिभुजगपिनाकव्याघ्रचर्म्मैणभूतीः।
दधदपि भवतीन्द्राक् सद्वपुर्देववन्द्य-
ङ्किमु न पदमनन्तं शैवमुद्याति सद्यः॥३२॥

पतितजनसमूहान्भस्मलेशावशेषान्-
सुरपतिसमभोगान्यत्करोति स्वसङ्गात्।
तदपरिमितवीर्यञ्चालितस्वर्ग्गिधैर्य्यम्-
भगवति सलिलन्ते माम्पवित्रीकरोतु॥३३॥

अथश्रीगङ्गाजलोपयोगात्साक्षान्महेश्वरविग्रहावगतिं वर्णयन् श्रीगङ्गां स्तौति। जननीति हे जननि सर्वेभ्यो निर्विशेषम्पयोदानात्त्रिभुवनमातर्गङ्गे तव पयाभिर्नीरैः पक्षेक्षीरैश्च पयः क्षीरे च नीरेचेति हैमः। सङ्गतानां स्नानपानाद्युपयोगावसरे मिलिता-नाञ्जनानाम्प्राणिनाम् शशिभुजगपिनाकव्याघ्रचर्म्मैणीभूतीरभिनवसुधांशुहारग्रैवेयकय-ज्ञोपवीतादिस्वरूपोरगाजगवनामकधनुर्द्वीपिकृत्तिकृष्णमृगभस्मानि भवतीं श्रीगङ्गानाम-धेयां नदीरूपान्त्वामपि दधद्धारयत् अतएव सत्सर्वोत्तमतया विराजत् वपुश्शरीरम् कर्त्तृ। अथकलेवरम् गात्रंवपुस्संहननंशरीरंवर्ष्मविग्रहः कायोदेहः क्लीवपुंसोस्स्त्रि-यांमूर्त्तिस्तनुस्तनूरित्यमरः देवैरिन्द्रादिभिः वन्द्यं नमस्करणीयं स्तुत्यं वा सत् अनन्तं-महाप्रलयेप्यविनाशि शैवङ्कोटिब्रह्माण्डाधिपतिश्रीशङ्करसम्बन्धि तदधिष्ठितमचिन्त्य-

रूपलक्षणं वा पदं स्थानं वस्तु वा सद्यःप्राणोत्क्रमणावसर एव नोद्याति किमु नोद्गच्छति किमु किन्तूद्यात्येवेति काकुः। अत्र देववन्द्यमितिपदविशेषणं चेत्यनुसन्धेयम्। अनेन श्रीगङ्गाजलसमागमादतीवदुर्लभो मोक्षोऽपि यदि सुलभस्तर्हि त्रिवर्गसम्पत्ते ति सूचितम्। उक्तञ्च गङ्गामधिकृत्य वाराहेन्ब्रह्महा गुरुहा गोघ्नस्स्पृष्टो वा सर्वपातकैः तस्यास्तोयैर्न्नरस्स्पृष्टस्सर्वपापैः प्रमुच्यते, इति। अथ ब्राह्मे सर्वाणि येषाङ्गागेयैस्तोयैः कृत्यानि देहिनाम्। देहन्त्यक्त्वा नराश्शैवे पदे तिष्ठन्ति सर्वदेति। अथ महाभारते यद्यकार्यशतङ्कृत्वा कृतङ्गङ्गाभिषेचनम् सर्वन्दहतिगङ्गाम्भस्तूलराशिमिवानलइति। अथ ब्रह्माण्डे गङ्गायान्त्यजतः प्राणान् कथयामि वरानने। कर्णे तत्परमम्ब्रह्म ददामि मासेकम्पदमिति ॥३२॥ अथश्रीभागीरथ्याविचित्रशक्तिशलित्वन्दर्शयस्तांस्तौति पतितेति हेमगवति लोकोत्तरवैभवशालिनि गङ्गे भवीयोत्पत्तिभञ्जनमित्यर्थः कर्मण्यण् तव अभलस्यदोषमलरहितस्य स्वच्छस्येतिवा जलस्यपयसः पानम् मया नो अकारि नविहितम् भवदीयञ्जन्मसहकारिदुः खभयहारिवारि नपीतमितिभावः इत्यहम् जानेतर्कयामि यद्यस्माद्धेतोः इहास्मिञ्जनुषि जन्मनि जनुर्ज्जननजन्मानि जनिरुत्पत्तिरुद्भवइत्यमरः मातुर्जनन्याः जनयित्रीप्रसूम्मीताजननीत्यमरः कुक्षिवासोद्भवानाञ्जठरनिवासहेतुकानाम् पिचण्डकुक्षीजटरोदरन्तुन्दमित्यमरः लसन्तस्वकीयप्रौढ़िप्रभावेणातीवस्फुरन्तो येऽसुखभरा नानाप्रकारकदुःखातिशयाः तेषाम् साधु सम्यक् न तु न्यूनतया चर्वणम्पूर्णास्वादम् समनुभवमितियावत् अहम् अकार्षङ्कृतवानस्मि। अनेन श्रीगङ्गाजलपायिनां न कथमपि भाविसांसारिकदुःखानुभवः सम्भवतीतिसूचितम् ॥३५॥

भुवनजननरक्षासंहृती राजसाद्यैस्त्रिभिरपि
किल रूपैः कर्त्तुमीशोऽप्यनीशः।
महदिह मनुते यं वैभवं स्वङ्गिरीशः
स भवतु सलिलौघस्तेऽम्ब ? मत्सत्कृतीशः ॥३६॥

अथ तत्त्रिलोकीपतिमहेश्वरशिरोधारणगौरवम्प्रकाशयन् स्वोद्धाराङ्गीकाराय श्रीगङ्गाम्प्रार्थयते भुवनेति। हेअम्ब ? त्रिभुवनजननि ? गङ्गे ? किलेत्यैतिह्ये वाक्यालङ्कारेऽवधारणे वा। राजसाद्यै राजससात्विकतामसैः रूपैर्ब्रह्मविष्णुरुद्राभिधेयैराकारैः रूपं श्लोकशब्दयोः पशावाकारे सौन्दर्ये वा लोके नाटकादिके इति। हेमचन्द्रः भुवनानां लोकानाम् जननरक्षासंहृतीरुत्पत्तिपालनप्रलयान् कर्त्तुं विधातुम् ईशोऽपि अनीशोऽसमर्थ इतिविरोधः। नास्ति न विद्यते ईशः प्रभुर्नियन्ताऽन्यः कश्चिदपि यस्य स इति विरोधपरिहारः। गिरीशः श्रीशङ्करः यम् ते तव सलिलौघञ्जलप्रवाहम् ओघः प्रवाहस्सङ्घातो द्रुतनृत्तम्परम्परा उपदेशश्चेति हेमचन्द्रः। महल्लोकोत्तरमहिमपूजनीयं वा स्वमात्मीयम् स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियामिति मेदिनी। विभव एव वैभवमैश्वर्य-

सर्वस्वमिति यावत्। स्वार्थेऽण् विभवो रैमोक्षैश्वर्ये इति मेदिनी इहास्मिन्निखिलेऽपि ब्रह्माण्डे मनुते जानाति अन्यथा कथं मूर्द्धप्रदेशेऽविरतं सादरातिशयम् धारयतीति भावः। स ते तव सलिलौघः मत्सत्कृतौ सकलदुरितपरिहारपूर्वकसमुद्धरणकृते मदङ्गीकारस्वरूपे मत्सत्कारे ईशः प्रभुस्समर्थः भवतु जायताम्। अयमतीव पापीयान्समुपेक्षणीय एवेति मदुपेक्षाम् न करोत्विति भावः। अनेन यस्यास्तवप्रवाहं श्रीमहेश्वरः सर्वस्वबुद्ध्या मस्तकप्रदेशे दधाति तस्यास्तव महिमानं को वदेदिति सूचितम्॥३६॥

त्रिभुवनवसतीनान्धर्म्मकर्म्मोन्मतीना-<br>
ङ्कृतसदुपकृतीनान्त्वद्रतीनां यतीनाम्।<br>
अमितजननजातं मूर्तिमत्पुण्यमस्तु<br>
द्युतटिनि ? तव नीरम्मद्भवध्वंसधीरम्॥३७॥

त्रिभुवनपतिरीशो न्यस्य भाले सुधांशुं<br>
निजशिरसि दधार त्वज्जलङ्गौरवाद्यत्।<br>
सवृजिनहृतिशक्ति प्रोच्यते तत्सुधीभि<br>
स्सुमहदपि सुधातो देवि ? सौन्दर्य्यमस्य॥३८॥

अथ सकलविवेकिमहानुभावजनसमाश्रयणीयत्वपर्यालोचनया स्वकीयसंसृतिमहार्त्तिविच्छेदम्प्रार्थयन् श्रीगङ्गां स्तौति। हे द्युतटिनि ? स्वस्सरित् ? श्रीगङ्गे ? त्रिभुवनवसतीनां लोकत्रयवासिनाम् धर्मकर्मोन्नतीनाम्पुण्यकार्योत्सुकबुद्धीनाम् निजवर्णाश्रमानुकूलधर्मोन्मुखधियां वा कृतास्सम्पादितास्सतास्तान्दुष्कृतपराङ्मुखानां महात्मनाम् उपकृतय उपकारा यैस्तेषाम् परार्थैकफलजन्मनामित्यर्थः। यद्वा कृताः सत्यः प्रत्युपकाराभिलाषराहित्येनोत्तमा उपकृतयो यैस्तेषां त्वपि रती राग निर्दम्भो भक्तिभाव इत्यर्थः। येषान्तेषाम् रतिः स्त्रीस्मरदारेषुरागेसुरतगुह्ययोरिति मेदिनी। यतीनां मोक्षावाप्तिसाधनसम्पत्तितत्पराणां मुमुक्षूणाम् ये निर्ज्जितेन्द्रियग्रामा यतियो यमयश्च ते इत्यमरः। अमितजननजातमसङ्ख्यातजन्मार्ज्जितम् मूर्त्तिमन्मूर्त्तम् सविग्रहमिति यावत् पुण्यन्धर्मः शास्त्रसम्मतस्ववर्णाश्रमानुकूलकर्मविशेषइत्यर्थः स्याद्धर्ममस्त्रियाम्पुण्यश्रेयसीसुकृतम्वृषइत्यमरः। तत्स्वरूपम् तव नीरम्पानीयम् कर्त्तृ मम त्वदेकपरायणस्य सुकृतलवपराङ्मुखस्य दुरितैकसक्तमानसस्याप्यस्य भवध्वंसे जन्ममरणादिनानोत्कटदुःखास्पदसंसारनिवर्त्तने धीरन्धैर्य्यवत् धृतोत्साहमित्यर्थः अस्तु भवतु। मां मुक्तसंसारबन्धनं विदधात्विति यावत्। अनेन श्रीगङ्गाजलस्य सकलमुमुक्षुजनमानसासत्त्यतिशयास्पदत्वेनानायासमोक्षावाप्तिसाधनत्वन्ध्वनितम्॥३७॥ अथ चामृतादपि श्रीगङ्गाजलस्य समुत्कर्षतान्दर्शयन् श्रीगङ्गां स्तोतुमारभते त्रिभुवनपतिरिति। हेदेवि ? देवस्वरूपे ? श्रीगङ्गे ? यद्यस्माद्धेतोः त्रिभुवनपतिस्त्रिलोक्यधीशोऽपि ईशः यो महादेवः ईशः प्रभौ महादेवे इति मेदिनी भाले स्वकीये ललाटे सुधांशुममृतरश्मिञ्चन्द्रमस-

मित्यर्थः । न्यस्य क्षिप्त्वा, न तु धृत्वा इत्यतीवानादरावसायि पदप्रयोगः । निजशिरसि समुपदर्शितसुधांशुप्रक्षेपस्थानभालादत्यन्तोच्चैः स्वकीयमूर्द्धप्रदेशे त्वज्जलन्त्वदीयमम्भः गौरवात्सत्कारबाहुल्यात् दधार धृतवान्। तत्तस्माद्धेतोः सुधीभिर्विचारशालिबुद्धिभिः अनुमानप्रधानैस्तार्किकैरितिभावः । अस्य श्रीमहादेवेन निजशिरोदेशे सादरन्धृतस्य त्वज्जलस्य सुधातोऽमृतादपि सुमहदतिबहुलम् शोभनं वृहच्चा वा, यतश्च वृजिनानाम्ब्रह्महत्यादिमहापापानाम् हृतौ हरणे हृतये हरणाय वा या शक्तिस्सामर्थ्यम् तया सह वर्त्तते तत्तथोक्तम्। सौन्दर्य्यं सुभगत्वम् सर्वोत्कर्षशोभाशालित्वं वा प्रोच्यते प्रकर्षेण कथ्यते। निश्शङ्कतया निरूप्यते इत्यर्थः । अनेन सर्वथैव सर्वदैव मोक्षाकाङ्क्षिभिर्ज्जनैरमृतात्यन्तानास्थापूर्वकमेवश्रीगङ्गाजलं सेवनीयमिति ध्वनितम् ॥३८॥

जलजजनिमुखेभ्यश्शुद्धिमद्भ्यश्चतुर्भ्य-
स्समधिगतजनुर्भि र्देवि वेदैश्चतुर्भिः ।
तव यदिदममानि स्वं नु सर्वस्वमम्भ-
स्स्फुरतु मम तदेनःकर्दमक्षालनाय ॥३९॥

समभिलषति गङ्गे त्वामुपैतुं सकृद्य-
स्समभिलषति शक्रः प्रोद्धृतिन्तत्पितृणाम् ।
विहितमहह येन स्नानमम्ब त्वदीये
पयसि हरि दुरापं नैति किं सत्पदं सः ॥४०॥

अथ चास्य श्रीगङ्गाजलस्याखिलवेदसारसर्वस्वत्वं वर्णयन् श्रीगङ्गां स्तौति जलजेति। हे देवि देवसदृशं सर्वजनोपास्ये भागीरथि! नु वितर्केऽनुनये वा। शुद्धिमद्भ्यो मिथ्यावादादिदोषविरहितत्वादतीवपावनेभ्यः चतुर्भ्यश्चतुःसङ्ख्याकेभ्यः श्रीमद्ब्रह्मदेववदनेभ्यः पूर्वादिक्रमेण यथासङ्ख्यम् समधिगतजनुर्भिस्सम्यग्लब्धजन्मभिः उत्पन्नैराविर्भूतैरिति यावत्। चतुर्भिर्ऋगादिभिर्वेदैराम्नायैः यत्तवेदम्मदीयदृग्गोचरीभूतम् अम्भो जलम् स्वमात्मीयम् सर्वस्वं सारस्वरूपम् सर्वाधिकतया एतन्माहात्म्यवर्णनादिति भावः । अमानि मतम्। उक्तञ्च पण्डितराजैः, श्रुतीनां सर्वस्वमिति। तत्तवेदमम्भः मम त्वदेकधृतनिजनिखिलभारस्य एनः पापमेव कर्दमः पङ्कः निषद्वरस्तुजम्बालः पङ्कोऽस्त्रीशादकर्द्दमावित्यमरः। तस्य क्षालनाय मार्ज्जनाय स्फुरतु स्फुरणम्प्राप्नोतु। वद्धपरिकरो भवत्वित्यर्थः। क्रियार्थोपपदस्येति चतुर्थी। अनेन श्रीगङ्गा जलमाहात्म्यस्य निखिलवेदप्रतिपाद्यत्वं सूचितम् ॥३९॥ अथ श्रीगङ्गेप्सास्नानफलतारतम्यवर्णनकपटेन श्रीगङ्गां स्तौति। समभीति। हेगङ्गे मातः यः कोऽपि जनः सकृदेकवारमपि। सर्वदैवेप्सोस्तु का वार्त्तेति भावः। त्वाम्भोगमोक्षैकप्रदात्रीम्भवतीम् उपैतुम्प्राप्तुम् त्वदन्तिकङ्गन्तुमित्यर्थः। समभिलषति वाञ्छति। ममापि श्रीगङ्गादर्शनम्भवेदितिमनोरथङ्कुरुते इति भावः। तस्य पितरः पूर्वपुरुषाः तेषामपि तस्य तु का कथेति भावः। प्रोद्धृतिम् प्रकर्षेण यथा

पुनर्दुर्गतिङ्कथमपि नाप्नुवन्तु तथेत्यर्थः। उद्धृतिम् स्वकीयदुष्कर्म्मभराधिगतातिदुस्सह-निरयदुःखेभ्य उद्धारम् शक्रस्त्रिलोकीश्वरो महेन्द्रः समभिलषति, अवश्यकर्त्तव्यतया वाञ्छति। अथ च हे अम्ब जगज्जननि। अहहेत्यद्भुते। येन केनापि प्राणिना त्वदीये त्वत्सम्बन्धिनि पयसि जले प्रवाहमध्यवर्त्तिनीति भावः स्नानमवगाहनम् विहितङ्कृतम्। सः प्राणी हरिणेन्द्रेण यमानिलेन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाकि-पिभेकेषुहरिर्नाकपिले त्रिष्वित्यमरः। दुरापन्दुष्प्रापम् तदधिष्ठातृदेवतादर्शनादि विना तत्प्राप्त्यनुकूलपुण्यैर्विना वा दुर्ल्लभमित्यर्थः। अतएव सत् सर्वोत्तमतया समुत्कर्षशालि विनाशरहितं वा पदं स्थानं वस्तु वा नैति न प्राप्नोति किम्? किन्त्वेत्येवेति भावः। अनेन श्रीभागीरथीप्सुजनपूर्वपुरुषाणामनायासमेव दुर्गतिपरिहारपूर्वकं स्वर्गाधिगमः कृतश्रीगङ्गास्नानस्य जनस्य त्विन्द्रादिदुर्ल्लभाक्षयपदलाभ इति सूचितम्॥४०॥

तव पयसि दरिद्रा अप्यहो ये कथञ्चित्
सकृदपि वरभाग्यैः कुर्वते स्नानमम्ब।
अमरपरिवृढाद्यैः कम्रसत्कारनम्रै
धृतवरशिविकान्तास्ते न किं स्वर्विशन्ति॥४१॥

विबुधसरिदिदानीम्मद्वचस्संशृणु त्वम्
त्वदमलजलयोगः केवलम्पार्थिवं नो।
मलमपनयति द्रागप्यविद्याभिधानं
वद किमधिकमस्मादस्ति पूतञ्जगत्सु॥४२॥

अथात्यन्तवराकजनानामपि श्रीगङ्गास्नानप्रभाववशादिन्द्रादिकृतबहुलसत्कार-पुरस्सरन्त्रिदशालयावाप्तिकं वर्णयन् श्रीगङ्गां स्तौति तवेति। हेअम्ब मातृवत्सदैव सदयदृष्टेश्रीगङ्गे दरिद्रा अपिसर्वजनानादरास्पदीभूता निर्द्धना अपि ये जनाः। अहो आश्चर्ये। कथञ्चित्केनापि योगेन सकृदेकवारमपि वरभाग्यैस्तर्काविषयैश्शुभदैवैः। दैवन्दिष्टम्भागधेयम्भाग्यंस्त्रीनियतिर्विधिरित्यमरः। तव पयसि प्रवाहसलिले स्नानम् कुर्वते विदधति ते दरिद्रा जनाः कम्रसत्कारनम्रैरकृत्रिमतया मनोज्ञादरजनितनम्रता-ऽवलम्बिभिः कान्तञ्च कमनङ्कमनीयं मनोहरम् अभिरामं रमणीयं रम्यं सौम्यञ्च सुन्दरम् चारु श्लक्ष्णञ्च रुचिरं शस्तं हृद्यञ्च बन्धुरम् दर्शनीयं मनोज्ञञ्च चित्तपर्य्याय-हारिचेति धनञ्जयः। अमरपरिवृढाद्यैस्सुरराजप्रमुखैर्देवैः। आद्येन यमवरुणकुबेरा-दीनाङ्ग्रहणम्। धृतास्स्कन्धप्रदेशे स्थापिताः वरायास्स्वर्णमणिमौक्तिकादिमयत्वाद-त्यन्तसुभगायाः शिविकाया याप्ययानापर नामधेयस्य मनुष्यवाह्यस्य चतुरस्रस्य यानविशेषस्य शिविकायाप्ययानंस्यादित्यमरः। अन्त उभयतसः स्थूलतरदण्डविशेष-प्रान्तप्रदेशो येषान्ते तथोक्तास्सन्तः स्वरूपेऽन्तमतं क्लीवं नस्त्रीप्रान्तेऽन्तिकेत्रिष्विति विश्वलोचनम्। स्वस्स्वर्ग्गम् न विशन्ति किम् अपितु विशन्त्येवेत्यर्थः। अनेन तथाभूतानान्दरिद्राणामपि स्थितिरियं यदि तर्हि बहुलतरधनव्ययपूर्वकं सश्रद्धोत्सा-

हास्सन्तो ये श्रीगङ्गास्नानं विदधति ते ईदृशं सुखमनुभवन्तीति किमु वक्तव्यमिति ध्वनितम् ।।४१।। अथश्रीगङ्गाजलोपभोगस्संसारबन्धननिदानाविद्यानिवारक इति वर्णयन् श्रीगङ्गां स्तौति विबुधेति। हेविबुधसरिदमरनदि श्रीगङ्गे ! इदानीं सम्प्रति मद्वचो वक्ष्यमाणं मम वचनम् त्वम् संशृणु समाकर्णय। किमितिचेदित्याह– त्वदमलजलयोगो नानाम्बुदोषमलरहितत्वदीयपानीयसंस्पर्शः केवलमेकम् पार्थिवम्भौमम् मलं मालिन्य-हेतुङ्किट्टं नापनयति न दूरीकरोति। मलोऽस्त्रिपापविट्किट्टेकृपणेत्वभिधेयवदिति मेदिनी। अपितु अविद्याभिधानं संसारकारणाज्ञाननामकमपि मलम्। अथाज्ञानमविद्याहम्मति-स्स्त्रियामित्यमरः। द्राग्झटिति स्पर्शसमकालेमेवेत्यर्थः। अपनयति निवर्त्तयति। अन्यथा कथं मोक्षपात्रतेति भावः। अतः जगत्सु त्रिषु लोकेषु अस्मात्त्वदमलजलयोगात् बुद्धिस्थितात्त्वज्जलाद्वा अधिकं पूतम्पवित्रम्पवित्रताजनकमिति यावत्। किमस्तीति त्वं वद कथय। न किमप्यस्तीति तात्पर्य्यार्थः। अनेन श्रीगङ्गाजलस्पर्शस्य ज्ञानसाध-नतासूचिता। तथा च देवीभागवते नवमे स्कन्धे द्वादशेऽध्यायेयत्तोयकणिकास्पर्शे पापिनां ज्ञानसम्भवः। ब्रह्महत्यादिकम्पापङ्कोटिजन्मार्ज्जितन्दहेदिति ।।४२।।

तरुणतरदबोद्यत्कीलजालोरुलीला-
विजयकुशलकामक्रोधसन्तापतप्तम्।
जननि तवतरङ्गप्रोच्छलन्नृत्यभङ्गी-
भृदमलजलविन्दोर्मे मनश्शान्तिमेतु ।।४३।।

अथ च स्वमनश्शान्तिम्प्रार्थयन् श्रीगङ्गां स्तौतितरुणेति। हे जननि हृद्गतदुःखपरम्परानिवेदनयोग्यतास्पदीभूते मातर्गङ्गे तरुणतरोऽतिप्रौढः यो दवो वनाग्निः दवदावौवनारण्यवह्नी इत्यमरः। तस्य उद्यन्तः प्रबलतरा ये कीला ज्वालाः वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिश्शिखास्त्रियामित्यमरः। तेषां यानि जालानि वृन्दानि जालजालङ्ग-वाक्षआनायेक्षारकेदम्भवृन्दयोरिति मेदिनी। तेषाम् उरुलीलास्सर्वतो-दिक्प्रसरणलक्षणाः पृथुलविलासाः विशङ्कटम्पृथुवृहद्विशालम्पृथुलं महत् वह्नोरु-विपुलमित्यमरः। तासाम् विजये सर्वप्रौढतया तदधस्तात्करणस्वरूपे पराजये कुशलौ चतुरौ समर्थावित्यर्थः। यौ कामक्रौधौ ताभ्यां निमित्तभूताभ्याम् यस्सन्ता-पस्सज्वरो मनःपीडाविशेष इत्यर्थः। सन्तापस्सज्वरस्समावित्यमरः। तेन सन्तप्तमती-वसञ्जातव्यथम् मे मम मनश्चित्तम् कर्तृ तव त्वत्सम्बन्धिनान्तरङ्गाणां वीचीनाम् प्रोच्छलत उद्गच्छतः अतएव नृत्यभङ्गीभृतो नर्त्तनप्रकारविशेषजुषः अमलस्य स्वच्छस्य जलस्याम्भसः विन्दुः पृषत् तस्मादेकस्मादेव यथासम्भवम् दृष्टात् स्पृष्टात्पीताद्वेति-शेषः। शान्तिन्निखिलक्लेशप्रहाराणकारणीभूतं स्वरूपावस्थितिस्वरूपविशेषं शमम् एतु प्राप्नोतु। कामक्रोधादिविकारशून्यतया निश्चलम्भवत्वित्यर्थः। अनेन श्रीगङ्गा-जलविन्दोरत्यन्तदुस्साध्यमनोविशुद्धिहेतुत्वन्ध्वनितम् ।।४३।।

कपिलमुनिदृगुत्थक्रोधवैश्वानरोग्र-
स्फुरदपरिमितोद्यज्ज्वालभस्मीकृताङ्गैः ।
सलिललवमहिम्ना तेऽम्ब लब्धामरत्वै
र्दिवि सगरतनूजैर्गीयसे किन्न भक्त्या ॥४४॥
सुरसरिदिह लोके भाग्यहीनो मनुष्यः
सकृदपि सलिले ते स्नातुकामोऽपि नो यः ।
दुरितनिचय उच्चैस्सादरन्त्यक्तशङ्क-
म्भगवति वद तेन प्राग्भवे को व्यधायि ॥४५॥

अथ श्रीकपिलमुनिकोपाग्निदग्धसगरसूनुसमुद्धारकथनव्याजेन श्रीगङ्गाया माहात्म्यातिशयन्दर्शयन् तां स्तौति कपिलेति। हे अम्ब मातृवत्सर्वदैव शुभकारिणि श्रीगङ्गे कपिलस्य विष्ण्ववतारविशेषस्यैतन्नामकस्य मुनेः दृगुत्थो दृष्टिपातसमुत्पन्नो यः क्रोधवैश्वानरो निर्विकल्पकसमाधिविक्षेपजनितः कोपानलः तस्य उग्रा अत्यन्त-भीषणाः स्फुरन्तो विष्वग्देदीप्यमानाः अपरिमिता असङ्ख्याता मितिरहिता वा उद्यन्त ऊर्ध्वं ज्वलन्तः ये ज्वालाश्शिखाः तैर्भस्मीकृतानि तत्क्षणमेव दग्ध्वा भसितमात्रा-वशिष्टीकृतानि अङ्गानि शरीराणि सर्व एव शरीरावयवा वा येषान्ते तथोक्तास्तैः ते बहुतरप्रयासैर्नृपतिवरभगीरथसमानीतायास्तव सलिललवमहिम्ना जलकणस्पर्शप्रभावेन लब्धामरत्वैरवाप्तदिव्यशरीरैः सगरस्यैतन्नामकस्य पुराणेतिहाससमुद्घुष्टप्रतापातिशयस्य सार्वभौमस्य राजविशेषस्य तनूजैः षष्टिसहस्रसङ्ख्याकैरात्मजैः दिवि स्वर्गलोके भक्त्या स्वोद्धारजनितेनानुरागविशेषेण त्वम् न गीयसे, नानाविधस्तोत्रप्रबन्धैः न स्तूयसे किम् ? अपितु सानुरागङ्गीतगुणासीतिभावः। अनेन भस्मसम्पर्कमात्रादेव सगरसूनुसमुद्धारदर्शनात् श्रीगङ्गाजलस्याचिन्तनीयमाहात्म्यशालित्वन्ध्वनितम् ॥४४॥ अथ चाकृतगङ्गास्नानमनुष्यनिन्दाव्याजेन श्रीगङ्गा स्तौति सुरसरिदि हेति हे सुरसरिदमरनदिश्रीगङ्गे इहास्मिँल्लोके मर्त्यलोके भाग्यैश्शुभदैवैः हीनोऽत्यन्तविरहितः दुर्दैवमन्दीकृतबुद्धिरित्यर्थः। यो मनुष्यो मानवव्यक्तिमात्रधारी असफलीकृतमानवत्व इत्यर्थः सकृदप्येकवारमपि ते तव सलिले प्रवाहात्मके जले स्नातुकामो निमज्जनेप्सुरपि नो अस्तीति शेषः। तेन मनुष्येण प्राग्भवे पूर्वस्मिञ्जन्मनि। भवस्सत्ताप्तिजन्मसु, रुद्रेश्रेयसिसंसारे इति हेमचन्द्रः। सादरं ससत्कारम् सचित्तासक्तीति यावत्, यथा स्यात्तथा। त्यक्तशङ्कम्परिहृतलोकशास्त्रातङ्कलेशञ्च निर्ल्लज्जञ्चेति च। यावत् यथास्यात्तथा उच्चैः सर्वेभ्यः पापत्वावच्छिन्नेभ्यः पापेभ्यस्समुन्नतो महान्वा दुरितानाम्पापानाम् निचयस्समूहः कः किंस्वरूपः व्यधायि विहितः सम्पादितः। हे भगवति इति त्वम् वद ब्रूहि। अन्यथा कथमेतादृशी मतिरिति भावः। अनेन, येषाम् श्रीगङ्गास्नानकृते सङ्कल्पोऽपि नोदेति तेऽत्यन्तमन्दभाग्याः निष्फलजन्मान इति सूचितम्। ये गच्छन्ति स्वतो गङ्गाम्परांश्च प्रेरयन्ति ये।

इह ते सर्वभोगानामन्ते ज्ञानस्य भाजनमिति ब्रह्माण्डे श्रीगङ्गास्नानार्थम्परप्रेरणाया अपि माहात्म्यस्य दर्शनात् ।।४५।। अथ सर्वदैव श्रीगङ्गायां स्नानप्रभावाधिगत-पुण्यातिशयेनावाप्तपञ्चत्वस्य देहिनस्सर्वोत्तमानन्तभाग्यशालित्वं वर्णयंस्तांस्तौति, प्रतीति। हे जननि पुत्रत्वसाधारणतया सर्वजनलालनाज्जगन्मातः श्रीगङ्गे! यः कोपि प्राणी इहास्मिन्पुरोवर्त्तिनि दृश्यमाने इत्यङ्गुलीनिर्देशः। तावकीने भवत्प्रवाह-सम्बन्धिनि तोये सलिले प्रतिदिनम्प्रत्यहम् एककालन्द्विकालं वा त्रिकालं वेति यथासम्भवमिति भावः निमज्जन्स्नानम् कुर्वन् अतएव परिचितानाञ्जन्मजन्मान्त-रञ्चितानाम् सानुरागविधानाल्लब्धसख्यानां वा दुरितानाम्बहुविधानाम्पापानाम् ओघान्समूहान्प्रवाहान्वा आशु स्नानसमय एव दूरतोऽतिदूरम् मुञ्चंस्त्यजंश्च सन्। अथ च निरयगपितृपूगांस्तपनावीचिमहारौरवकुम्भीपाकादिनरकस्थपूर्वपुरुषवृन्दानि, स्यान्नारकस्तु नरको निरयोदुर्गतिस्स्त्रियामित्यमरः। पूगस्तु क्रमुके वृन्देफल-सारेऽभिधेयवदिति मेदिनी। स्वस्स्वर्गङ्गतास्स्वर्गताः तान् द्वितीयाश्रितातीतेति समासः।

प्रतिदिनमिह तोये तावकीने निमज्जन्
परिचितदुरितौघान्दूरतश्चाशु मुञ्चन्।
निरयगपितृपूगान्स्वर्गतांश्चापिकुर्व-
स्त्यजति जननि योऽसूंस्तस्य भाग्यं वदेत्कः ।।४६।।

सुरसरिदुपविश्य त्वत्तटे पुण्यलब्धै-
र्विदधति तवतोयैस्तर्प्पणं ये पितृणाम्।
पितर उत तदीयाः क्षीणपापा दुरापान्
हरिहरविधिलोकान्सत्कृताः किं न यान्ति ।।४७।।

स्वर्गनिवासिनोऽपि च कुर्वन् असून्प्राणांस्त्यजति पञ्चत्वमवलम्बते तस्य प्राणिनः भाग्यं शुभदैवम् को वदेत्। वक्तुङ्कश्शक्नुयान्नकोऽपीत्यर्थः। यद्वा अहो भाग्यमस्येति तस्य भाग्यम् कः साक्षाद्ब्रह्मदेवः वदेदवश्यमेव कथयेदिति सम्भाव-नायां लिङ्। को ब्रह्मणि समीरात्मयमदक्षेषुभास्करे कामग्रन्थौ चक्रिणि च पतत्रिपार्थिवे तथा मयूरेऽग्नौ च पुंसि स्यान्मुखशीर्षजलेषुकमिति मेदिनी। अनेन प्रतिवासरङ्कृत-गङ्गास्नानस्यान्ते निखिलस्वपितृसमुद्धारपूर्वम् प्राप्तसद्गतेल्लोकोत्तरभाग्यभृत्त्वं-सूचितम् ।।४६।। अथ च श्रीगङ्गाजलतर्प्पणमाहात्म्यं वर्णयन् श्रीगङ्गा स्तौति सुरेति। हेसुरसरिद्देवधुनि श्रीगङ्गे ये जनाः त्वत्तटे त्वत्तीरे उपविश्य कुशासनाद्युपरि स्थित्वा पुण्यलब्धैः पूर्वार्ज्जितसुकृतराश्यवाप्तैः तव तोयैः पयोभिः पितृणां निजपूर्वपुरुषाणाम् तर्प्पणम् अमुकगोत्रोऽमुकशर्मा पिता तृप्यतामिदञ्जलं सतिलन्तस्मैस्वधेति तृप्तिम् विदधति कुर्वन्ति। उत वितर्के। तदीयास्तस्य तर्प्पणकर्त्तुर्ज्जनस्य सम्बन्धिनः पितरः पितृपितामहप्रपितामहाद्याः पूर्वपुरुषाः क्षीणपापाःविगलिताखिलदुष्कृतास्सन्तः अथ

च सत्कृतास्तत्तल्लोकाधिपतिभिरादृतास्सन्तः दुरापानपुण्यजनदुष्प्रापान् हरिहर-विधिलोकान् विष्णुशिवविरञ्चिलोकान् वैकुण्ठकैलासब्रह्मलोकसमाख्यान् न यान्ति न प्राप्नुवन्ति किम् ? अपितु यान्त्येवेति भावः। अनेन स्वपितृसमुद्धारार्थमत्यन्तदुर्ल्लभभाग्यवशलब्धश्रीगङ्गाजलतर्प्पणमितरकार्यसहस्रमपि अपहाय विवेकिनोऽवश्यमेव प्रत्यहङ्कुर्वन्तीति ध्वनिम् ॥४७॥ अथ श्रीगङ्गाजलपाचितान्नब्राह्मणभोजनमाहात्म्यन्दर्शयन् श्रीगङ्गां स्तौति– अमृतेति। हे देवि श्रीगङ्गे ! ये जनाः अमृतस्य सर्वदेवैकजीवातोस्सुधायाः विजयिभिस्स्वकीयमहत्त्वस्वादुत्वादिगुणगणमहिम्ना विजयकारिभिः अमृतादप्यत्यन्तोत्तमैरित्यर्थः। यतः पावनैः निजसेविपवित्रताजनकैः ते तव तोयैः जलैः संस्कृतं विधिपूर्वकं पाचितम्। अतएवातिरुचिरं स्वरूप स्वादुत्वाभ्यामतीव रमणीयम् अन्नमदनीयम्भक्षणीयम् अपूपादिकम् प्रमोदात्प्रीतिपूर्वकमित्यर्थः। मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदा इत्यमरः। भोजयित्वा भोजनङ्कारयित्वा। लेह्यादीनामुपलक्षणमेतत्। क्षिति विबुधवरान् स्वकर्मनिरतत्वादुत्तमान्

अमृतविजयिभिस्ते पावनैर्देवि तोयै-
रतिरुचिरमिहान्नं संस्कृतम्भोजयित्वा।
क्षितिविबुधवरान्ये तर्प्पयन्ति प्रमोदा-
दुभयकुलपितॄंस्ते स्वर्न्नकिम्प्रापयन्ति ॥४८॥

त्रिदिवधुनि मुनीनाम्मानसाह्लादसम्पज्-
जननपटुतरन्ते तीरमासाद्य मर्त्त्यः।
दुरितहरणदक्षं यावदम्भस्तवैतत्
पिबति न किमु तावन्मुक्तिपात्रत्वमेति ॥४९॥

ब्राह्मणान् तर्प्पयन्तितृप्तान् कुर्वन्ति अतीव तुष्टाञ्जनयन्तीति यावत्। ते जना उभयकुलपितॄन्मातृपितृवंशीयपूर्वपुरुषान् स्वस्स्वर्ग्गं न प्रापयन्ति किम् ? अपि तु प्रापयन्त्येवेति भावः। अनेन यत्पाचितान्नब्राह्मणभोजनाद् दातृवंशद्वयपितृसमुद्धारः तस्य श्रीगङ्गाजलस्य माहात्म्यातिशयवर्णने कस्समर्थ इति सूचितम् ॥४८॥ अथश्रीगङ्गाजलपानाभिलाषाभिसन्धिमात्रान्मुक्तिपात्रतां वर्णयन् श्रीगङ्गां स्तौति त्रिदिवधुनीति। हे त्रिदिवधुनि नाकनदि श्रीगङ्गे मर्त्त्यो मरणधर्म्मा मनुष्यः मुनीनां वेदशास्त्रार्थतत्त्वमननतत्पराणाञ्जनानाम् मानसाह्लादसम्पदश्चित्तप्रमोदसमृद्धेः जनने समुत्पादने पटुतरमतिचतुरम् समर्थमित्यर्थः। दर्शनमात्राल्लोकोत्तरानन्दजनकमितिभावः। ते तव तीरन्तटम् आसाद्य प्राप्य दुरितहरणदक्षम्ब्रह्महत्यादिमहापापानां समूलमुन्मूलनकुशलम् एतन्मद्दृष्टिगोचरम् अम्भः पानीयम् यावद्यावत्कालपर्य्यन्तम् पिबति पास्यति यावत्पुरानिपातयोर्ल्लडितिभविष्यदर्थे लट्। तावत् तावत्कालपर्य्यन्तमित्यर्थः जलपानस्याभिलाषसद्भावे सत्यपि तदर्वागेवेति भावः। मुक्तिपात्र-

त्वङ्कैवल्यभाजनताम् नैति न प्राप्नोति किमु एत्येवेत्यर्थः। अनेन श्रीगङ्गाजलस्य दर्शनेनापि यदि मुक्तियोग्यतालाभः तर्हि तदवगाहनादिना स इति किमु वक्तव्यमिति ध्वनितम् ।।४९।। अथश्रीगङ्गाजले प्राणोत्क्रमणमाहात्म्यमाख्यापयन् श्रीगङ्गां स्तौति। तवेति— हे देवि दीपनशीले श्रीगङ्गे पुण्यजन्माऽतिपवित्रोद्भवो वा धर्महेतुकोत्पत्तिर्वा अतिधन्योऽतीवप्रशंसनीयः स्मृतस्स्मरणविषयीकृतः एकोऽद्वितीयस्सर्वेषु देवेषु पूजनीयो वा मुख्यो वा। एके मुख्यान्यकेवला इत्यमरः। उरुभिर्बहुभिस्त्रिभुवनान्तर्वर्त्ति-भिक्तैरित्यर्थः। गीयते इत्युरुगायः श्रीविष्णुः श्रीमहेश्वरो वा स्वोपास्यदेव इति यावत्। येन स तथोक्तः। यो मनुष्यः तत् त्वत्सम्बन्धिनि पवित्रे पावने दुरितनिवारके इति भावः। चित्राण्यद्भुतानि चञ्चन्ति देदीप्यमानानि चरित्राणि दुरुद्धरपापिसमुद्धार-लक्षणानि वृत्तानि कर्माणि वा यस्य तस्मिस्तथोक्ते यद्वैतत्सम्बुद्धिपदम्। पयसि प्रवाहजले यत्र कुत्र स्थिते वा जले निहितः स्थापितः चरमोऽन्तिमः कट्यधस्ताद्वर्त्ती कायो देहो येन यस्य वा स तथोक्तस्सन्। अहहेत्यदद्भुतोद्रेके। अहहेत्यद्भुतेखेदे-

तव पयसि पवित्रे चित्रचञ्चचरित्रे
निहितचरमकायस्संस्मृतैकोरुगायः।
व्यसुरहह भवेद्यःपुण्यजन्मातिधन्य-
स्स किमु न भवति द्राग्देवि मुक्ताग्रगण्यः ।।५०।।

भगवति नयनाभ्यान्निष्फलाभ्यां क्किमाभ्यां-
हरिचरणनिसृष्टन्तेऽम्बु याभ्यान्न दृष्टम्।
श्रुतिभिरपि किमाभिर्नश्रुतन्देवि याभि-
र्दुरितनिकरहारि त्वद्यशःपुण्यकारि ।।५१।।

इत्यमरः। व्यसुर्विगतप्राणस्समधिगतपञ्चत्व इति यावत्। भवेज्जायेत स मनुष्यः द्राग्झटिति प्राणपरिहाणादनन्तरमेव मुक्तानाम्प्राप्तकैवल्यानाम् अग्रगण्योऽग्रेसरः प्रथमपरिगणनीय इति यावत्। न भवति किमु भवत्येवेत्यर्थः। अनेन श्रीगङ्गाजले ईश्वरस्मरणपूर्वकम्प्राणपरित्यागस्यालौकिकफलहेतुत्वादुर्ल्लभत्वन्ध्वनितम् ।।५०।। अथपूर्वार्द्धेनानवलोकितगङ्गाजलनयननैष्फल्यम् उत्तरार्द्धेनानाकर्णितगङ्गाकीर्त्तिश्रुति-निरर्थकताञ्च कथयन् श्रीगङ्गां स्तौति। भगवतीति हेभगवति सर्वेश्वरि श्रीगङ्गे याभ्यां नयनाभ्यां नेत्राभ्याम् हरिचरणनिसृष्टं विष्णुपदपद्मजनितम्, इत्यत्यन्तपावन-त्वोक्तिः। ते तव अम्बु जलम् न दृष्टं न स्वगोचरीकृतम् ताभ्यामाभ्याम्पुर-स्स्थिताभ्यामङ्गुलीद्वयस्पृष्टाभ्यां वा निष्फलाभ्यामुत्पत्तिफलशून्याभ्याम् नयनाभ्यामस्म-दादिजनानान्नेत्राभ्याम् किम्? न किमपि फलमित्यर्थः। अथ च हे देवि श्रीगङ्गे याभिः श्रुतिभिः श्रवणेन्द्रियैर्दुरितनिकरहारि श्रवणमात्रादेव पापराशिनिर्म्मूलनकारि अथ पुण्यकारि सुकृतजनयितृ पुण्यं शोभने त्रिषु क्लीवन्धर्म्मे च सुकृते इतिमेदिनी।

त्वद्यशस्त्वत्कीर्त्तिः न श्रुतन्नाकर्णितम्। नस्वविषयीकृतमित्यर्थः। ताभिराभिः प्रसिद्धाभिः अस्मदादिजनसम्बधिनीभिः श्रुतिभिः किम्? न कापि फलसिद्धिरिति भावः। अनेन प्राणिभिस्स्वनयनसाफल्यकृते श्रीगङ्गादर्शनम् स्वकीयश्रुतिसार्थकतायै श्रीगङ्गायशःश्रवणञ्चावश्यमेव विधेयमिति सूचितम्॥५१॥

किममरनदि हस्तैश्चर्म्मखण्डादशस्तै-
स्सुकृतलवनिरस्तैरङ्गुलीभिस्समंस्तैः।
अपरिमितमहाघप्रोद्धुरोत्साहभिस्ते-
भगवति जललेशोऽधारि नो यैः कदाचित्॥५२॥

भगवति पयसा ते स्वर्गिभिर्दुर्ल्लभेन-
स्मृतिदुरितहरेण श्रीप्रदस्पर्शनेन।
सकलमहह येषाञ्जायते कर्म्म तेषां
किमु कथयितुमीशः पुण्यराशि फणीशः॥५३॥

अथश्रीगङ्गाजलस्पर्शपराङ्मुखहस्तनिन्दाद्वारा श्रीगङ्गां स्तौति किमिति। हे भगवति पूर्णैश्वर्य्यादिके श्रीगङ्गे! यैर्हस्तैरेतन्मानवकरैः अपरिमितानामसङ्ख्यातानाम् महताम्बहुलतरपीडाप्रदत्वाद्बृहताम्ब्रह्महत्याप्रमुखानाम् अघानाम्पापानाम् प्रोद्धुरः प्रोत्कटः यः उत्साहो नानाविधमहाक्लेशप्रदानस्वरूपस्समाकाङ्क्षाविशेषः तम् भिनत्ति छिनत्ति नाशयतीत्यर्थः। स तथोक्तः। ते तव जललेशोऽम्भःकणः कदाचिदपि नो अधारि धृतः। हे अमरनदि देवतरङ्गिणि चर्मखण्डादपि अशस्तैर्निकृष्टै स्तत्तु तत्तत्काय्र्योपयोगित्वात्सफलमेवेति भावः। यतः सुकृतलवनिरस्तैर्भवदीयजलस्पर्शप्रभावजनितपुण्यलेशविरहितैः अङ्गुलीभिः करशाखाभिः समस्तै परिपूर्णैः भवदीयजलधारणयोग्यैरपीत्यर्थः। तैर्हस्तैः किम्? न किमपि फलमिति भावः। अन्यप्रकारविशेषसाध्यानाङ्कर्म्मणां निर्वाहस्तु तद्विरहितैरपि क्रियते। अतस्तदेकानासक्तत्वादिमे निष्फला एवेति तात्पर्य्यार्थः। अनेन निजहस्तसाफल्याय विवेकिभिर्ज्जनैः श्रीगङ्गाजलेन तर्प्पणसन्ध्योपासनादिकर्म्मापराङ्मुखैरवश्यमेव भाव्यमिति ध्वनितम्॥५२॥ अथश्रीगङ्गाजलेनैव साधितसर्वकृत्यानां नृणाम्भाग्यातिशयवर्णनद्वारा श्रीगङ्गां स्तौति–भगवतीति। हे भगवति भगवन्नारायणसम्बन्धातिप्रशंसनीयमहत्त्वे श्रीगङ्गा स्वर्गिभिः केवलमधुररसास्वादफलकसुधापानैकलग्नमनस्कैस्स्वर्गवासिभिर्देवैः दुर्ल्लभेन दुष्प्रापेण स्मृत्या स्वस्मरणमात्रेणैव दुरितानान्दुष्कृतानाम् हरतीति हरम् पचाद्यच्। तथात्केन श्रीस्त्रिवर्गसम्पत्तिर्म्मोक्षलक्ष्मीर्वा ताम् प्रकर्षेण समग्रतोत्कर्षेण ददाति वितरतीति तथोक्तम्। स्पर्शनं स्नानपानाद्युपयोगीस्पर्शः यस्य तत्तथोक्तम्। तेन ते तव पयसा जलेन। अहहेत्यद्भुते। येषां शुभदैवानां मानवानाम् सकलं सम्पूर्णम् कर्म्मा-

स्नानपानशरीरशुद्ध्यादिकार्य्यम् भवतीति शेषः। दैवयोगात्कूपादिजलालाभे भवदीय-जलेनैव ये साधितसकलकर्म्माणो भवन्तीति भावः। तेषाम् पुण्यराशिन्तज्जनितसुकृत-परम्पराम् पूर्वसम्पादिततन्निदानीभूतधर्म्मकर्मसमूहं वा कथयितुम्परिसङ्ख्यातुं फणीश-स्सहस्रवदनः श्रीशेषो भगवान् ईशः प्रभुस्समर्थइत्यर्थः किमु ? नैवेत्यर्थः। ईशः प्रभौ महादेवे इतिमेदिनी। उक्तञ्च काशीखण्डेऽष्टाविंशतितमेऽध्याये– सर्वाणियेषा-ङ्गाङ्गेयैस्तोयैः कृत्यानि देहिनाम्। भूमिस्थाअपि ते मर्त्या अमर्त्याएव वै हरे इति विष्णुं प्रति महेश्वरेण। अनेनातीवशुभभाग्यावाप्तश्रीगङ्गाजलानिशोपभोगभाजो जनास्सफलजन्मानो वदनसहस्रेणापि शेषानाख्येयमहिमान इति ध्वनितम्॥५३॥

पुरहरपुरवासे प्रेमहेतुस्त्वमेव पुरहरपुरशोभाकारहेतुस्त्वमेव।
पुरहरपुरवासिक्षेमहेतुस्त्वमेव पुरहरपुरसारज्जह्नुकन्ये त्वमेव॥५४॥

अथ चासमाप्ति सप्तचत्वारिंशत्पद्यकदम्बकेन भङ्गीविभेदैः श्रीगङ्गां स्तोतुमारभमाणः कविः प्रथमेन श्रीकाशीसर्वस्वत्वेन वर्णयन् श्रीगङ्गां स्तौति पुरेति। हे जह्नुकन्ये श्रीगङ्गे पुरहरपुरे त्रिभुवनविजयसमुद्धतशासनासुरराजत्रिपुरा-सुरबधकारिश्रीमदनादिराजधान्यां श्रीकाश्याम् यो वासो निवासः इतरदेशयियासापरित्यागपुरस्सरावस्थितिरित्यर्थः तत्र यः प्रेमा यत्प्रेम वा स्नेहः मानसासक्तिरिति यावत्। प्रेमानाप्रियताहार्दम्प्रेमस्नेह इत्युभयत्राप्यमरः। तस्य हेतुः कारणम् हेतुर्ना-कारणम्बीजमित्यमरः। त्वमेव असीति शेषः। एवमग्रेऽपि एवकारोऽन्यनिवृत्तिपरत्वे-नावधारणे। श्रीकाशीवासान्तरायीभूतनानोपद्रवसहनपूर्वकमत्र त्वदभावे को वसेदिति भावः। अथ च पुरहरपुरस्य शोभायास्सौन्दर्यस्य दर्शनीयताया इति यावत्। यः भर एवभारोऽतिशयः सङ्ख्याया गुरुत्वपरत्वेन भारो राशिः तस्यापि हेतुस्त्वमेव। भरोऽतिशयभारयोः। भारोदशशतीद्वये पलानां वीवधे चापीत्युभयत्रापि हेमचन्द्रः। त्वां विना कास्य शोभेति भावः। अथ च पुरहरपुरवासिनां श्रीकाशीवासिनां प्राणिनां क्षेमस्य भवदुःखपरम्परानिवृत्तिलक्षणस्य मङ्गलस्य श्वः श्रेयसं शिवम्भ-द्रङ्कल्याणं मङ्गलं शुभम्। भावुकम्भविकम्भव्यङ्कुशलङ्क्षेमम्स्त्रियामित्यमरः। हेतुः कारणम् त्वमेव। अन्यथा काश्यामपि विहितपापानां नृणाङ्कथङ्कल्याणमिति भावः। अथ च पुरहरपुरे सारं वरं वस्तु त्वमेव, अन्यथा कोटिब्रह्माण्डनायकः श्रीविश्वनाथः प्राणाधिकप्रियां श्रीपार्वतीं वामपार्श्वे निधाय निखिललोकसमर्चनास्पदवेदाधारभूदेव-कुलभूपालकलानिधिकलाञ्च भाले विन्यस्य सर्वथैवादरणीयनिजजटाजूटप्रदेशे कथं सादरं सगौरवञ्च भवतीन्धृतवानिति भावः। अनेन श्रीगङ्गायाः श्रीकाशीजीवातुत्वं सूचितम्। अथ चात्र सारो बलो स्थिरांशे च मज्ज्नि पुंसि जले धने न्याय्ये क्लीबन्त्रिषु वरे इति मेदिनीकारोक्तेः वरार्थकस्य सारशब्दस्य यद्यपि स्त्रीत्वमेवोचितम् तथापिन्संसारसारमबला तस्याः सारङ्गनाश्लेषः तस्यापि सारमम्बरविरहितवक्षोरुहस्पर्श-

इत्यलङ्कारतिलके श्रीमद्भानुलेखात्, राज्ये सारं वसुधा वसुन्धरायाम्पुरम्पुरे सौधम् सौधे तल्पन्तल्पे वराङ्गनाऽनङ्गसर्वस्वमिति काव्यप्रकाशे श्रीमन्मम्मटलेखाच्च नपुंसकत्वमपि साधीय एवेत्यनुसन्धेयम्। अथ चात्र सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः वा पादान्तेत्वसौ वक्र इतिभट्टकेदारोक्तौ टीकाकृतभास्कररायेण। यद्यपि पादोऽत्र समो ग्राह्य इत्युक्तम् तथापि, तस्याः खुरन्यासपवित्रपांसुमपांसुला-नान्धुरिकीर्त्तनीयेति, आसीदनाविष्कृतदानराजिरन्तर्म्मदावस्थ इवद्विपेन्द्र इति, विसृष्ट-पार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्येति च रघुवंशे द्वितीयेसर्गे कालिदासकृतौ. कौबेरदिग्भागमपास्यमार्गमागस्त्यमुष्णांशुरिवावत्तीर्णइति, यतो वृहत्पार्वणचन्द्रचारु तस्यातपत्रम्बिभराम्बभूवे इति, अवाप बाल्योचितनीलकण्ठ-पिच्छावचूडाकलनामिवोर इति च शिशुपालवधे तृतीयेसर्गे माघकृतौ, प्रसह्य चेतस्सुसमासजन्तमसंस्तुतानामपि भावमार्द्रमिति, निरास्पदम्प्रश्नकुतूहलित्व-मस्मास्वधीनङ्किमुनि स्पृहाणामिति, त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतम्प्रेमपर-गुणेष्विति च किराताज्र्जुनीये भारविकृतौ, चक्रे स चक्रनिभचङ्क्रमणच्छलेन नीराजनाञ्जनयतान्निजबान्धवानामिति नैषधीयेद्वितीयेसर्गे श्रीहर्षकृतौ च विषमेऽपि पादेऽन्त्यलघोर्गुरुत्वदर्शनात् एवकारान्तरवर्त्तिनो ह्रस्वस्याकारस्य गुरुत्वेन न च्छन्दोभङ्गः। एवमन्यत्राप्यूहनीयम् ॥५४॥

विबुधनदि मिलित्वाऽयन्त्वयैव प्रयागः
प्रभुरभवदयत्नात्तीर्थवृन्दस्य सद्यः।
गिरिपरिवृढकन्याभीतचित्तोऽपि शम्भुः
शिरसि वसतिमुच्चैर्द्दत्तवान्नैव ते किम्? ॥५५॥

अथश्रीगङ्गायाः श्रीप्रयागमाहात्म्यकारणतां शिरोऽवस्थितिदानेन श्रीमन्महा-देवादवाप्तगौरवताञ्च वर्णयंस्तां स्तौति। विबुधेति हेविबुधनदि देवनदि श्रीगङ्गे अयम् लोके वेदादौ वा प्रसिद्धतरः प्रयागः। एतन्नामकस्तीर्थविशेषः त्वयैव मिलित्वा सङ्गत्य सद्यस्त्वरितमेव अयत्नाज्जपोपवासादिप्रयासातिशयं विनैव तीर्थवृन्दस्य निखिलभूमण्डलपुण्यक्षेत्रसमूहस्य प्रभू राजा अभवत्सञ्जातः। प्रयागस्य तीर्थराजत्वे भवदीयसमागम एव कारणमस्तीति भावः। अतएव गिरिपरिवृढस्य पर्वतराजस्य हिमालयस्य राजाऽधिपः पतिः स्वामी नाथः परिवृढः प्रभुः ईश्वरो विभुरीशानोभर्त्तेन्द्रइनईशितेत्युभयत्र धनञ्जयः। तस्य या कन्या पुत्री सकलभुवनेश्वरी श्रीपार्वती तस्यास्सकाशात् भीतम् एतच्छिरोनिवेशनेन जगदीश्वरी धर्म्मपत्नीश्रीगौरी रुष्टा न भवेदित्यापन्नभयम् चित्तश्चिन्तनधर्मप्रधानञ्चेतो यस्य स तथाभूतस्सन्नपि शम्भुर्निखिललोककल्याणविधानबद्धपरिकरः श्रीमहादेवः उच्चैस्त्यन्तोन्नते शिरसि मूर्द्धनि वसतिमवस्थानम्। वसतिस्स्यादवस्थाने निशायां सदनेऽपि चेति हेमचन्द्रः।

ते तुभ्यम् नैव दत्तवान्किम् ? अपि तु दत्तवानेव। त्वमेतादृशातिप्रशंसनीय-माहात्म्यातिशयशालिन्यसि यां निजार्द्धशरीररूपाया: परमप्रेमास्पदीभूताया निजपाणिगृहीत्या: कोपजत्रासादिकमपि विषह्य उत्तमतरनिवेशनं निजोत्तमाङ्गमेव सदाशिवो नीतवानिति भाव:। अनेन श्रीगङ्गायास्तीर्थराजप्रयागमाहात्म्यातिशायि माहात्म्यशालित्वं श्रीगौरीगौरवविजयिगौरवाश्रयत्वञ्च ध्वनितम् ।।५५।।

करटनिशितचञ्चूभिन्ननेत्रप्रदेशो
लसदुदरगुरुत्व: कीर्णकेशोऽचलाङ्ग:।
त्वदमलविततताम्भोरम्यशय्यश्शवोऽयं
वद खलु कमकार्षीज्जह्नुजे पुण्यपुञ्जम् ।।५६।।

अथ चैकदा सानन्दम् सवयस्य: श्रीवाराणसीपरिसरसुरसरिद्रोधसि निषण्ण: श्रीमांस्तत्रभवाँल्लक्ष्मीनारायण: कवि: मन्दमन्दम् श्रीगङ्गाया: प्रवाहे चलन्तम् यथादृष्ट-चरम् कञ्चन मानवशवं महाभाग्यतया वर्णयंस्तांस्तौति- करटेति- हेजह्नुजे श्रीगङ्गे करटस्य। मस्तकस्थस्य काकस्य। काके तु करटारिष्टवलिपुष्टसकृत्प्रजा: ध्वाङ्क्षात्म-घोषपरभृद्वलिभुग्वायसाअपीत्यमर:। निशिताऽतितीक्ष्णाग्रा या चञ्चूस्त्रोटि: तया भिन्न: तद्गतकनीतिकाभक्षणार्थे विदीर्णीकृत: नेत्रप्रदेशश्चक्षुरिन्द्रियगोलकप्रदेशो यस्य स तथोक्त:। लसच्चमत्कृति सत् उदरगुरुत्वम् चिराय जलसम्बन्धवशाज्जठरवृद्धि-र्यस्य स तथोक्त: कीर्णा मुक्तग्रन्थित्वाद्विष्वक्प्रसृमरा: केशाश्शिरोरुहा यस्य स तथोक्त: अचलानि तरङ्गपवनादिदोषविरहितत्वादचञ्चलानि अङ्गान्यवयवा यस्य स तथोक्त:। अङ्कङ्गात्रेप्रतीकोपाययो: पुम्भूम्निनीवृतीति मेदिनी। दूरतस्सानन्दं सुप्तवत्प्रतीयमानत्वात् तव अमलं स्वच्छम् विततमुन्नतानतभावशून्यत्वात् विस्तृतम्। विततेत्यत्र विशदेति पाठे विशदं शुभ्रम् यदम्भस्तोयम् तदेव रम्या रमणीया शय्या शयनीयं यस्य स तथोक्त:। शय्यायां शयनीयवत् शयनमित्यमर:। अयं मम दृष्टिविषय: शव: कुणप: मृतकशरीरमित्यर्थ:। कुणपश्शवमस्त्रियामित्यमर:। किंस्वरूपम् पुण्यपुञ्जसुकृतराशिम् जीवदवस्थायाम् अकार्षीदकरोत् इति त्वम् खलु निश्चयेन वद कथय। अन्यथा कथमियमतीव दुर्ल्लभा व्यवस्थितिरिति भाव:। अनेन जन्तोश्शवभस्मकणस्य श्रीगङ्गाजलस्पर्शवैभवात्सद्गतिर्भवति। समग्रशवस्य श्रीगङ्गाप्रवाहपाते तु न जाने किम्फलमिति सूचितम् ।।५६।।

परिहृतसुतदारप्राज्यराज्यप्रसङ्गा
हरिविधिसुरराजस्थानलिप्साविहीना:।
मणितृणसमचित्ता मानवा ज्ञानिनोऽपि
त्वयि भगवति गङ्गे लोभिनश्चित्रमेतत् ।।५७।।

अथश्रीगङ्गाया निखिलदृश्यजातसमदृष्टितत्त्वविज्जनानुरागविषयत्वेन लोकोत्तरशक्तिविशिष्टत्वम्प्रतिपादयंस्तां स्तौति परिहृतेति। हेभगवति गङ्गे परितस्सर्वतो- वाह्याभ्यन्तरभेदात् हृतस्त्यक्तः सुतदारप्राज्यराज्यप्रसङ्गः पुत्रकलत्रनिरातङ्काखण्ड- भूमिपतित्वसम्बन्धो यैस्ते तथोक्ताः सर्वम्परिहाय गृहीतसन्यासा इत्यर्थः। अथ च हरिविधिसुरराजस्थानानां वैकुण्ठब्रह्मलोकामरावतीसमाख्यानाम् या लिप्सा लब्धुमिच्छा तया विशेषेण सर्वथैव हीना रहिताः आत्मलाभे तेषामप्यकिञ्चित्करत्वादिति भावः। अथ च मणिष्वपि अनर्घरत्नेष्वपि तृणसममतितुच्छतया तृणवत् चित्तञ्चेतो येषान्ते तथोक्ताः। यद्वा मणितृणयोः सममुत्तमाधमवैषम्यहीनञ्चित्तं येषान्ते तथोक्ताः। यद्वा मणितृणयोः सममुत्तमाधमवैषम्यहीनञ्चित्तं येषान्ते तथोक्ताः। शरीरयात्रोपयोगि- वस्तुसत्कारकारिण इत्यर्थः। यतस्तत्त्वज्ञानिनोऽपि सञ्जाततत्त्वविवेका अपि मानवा मनुष्याः त्वयि विषये लोभिनो लोभवन्तः त्वत्त्यागमसहमाना इत्यर्थः। सन्तीति शेषः। एतच्चित्रमतीवाश्चर्यमिति भावः। अनेन यया तत्त्ववेतारोऽपि स्वमहिम्ना स्वविधेयीकृताः तस्यास्तवप्रभावातिशयङ्को वर्णयेदिति ध्वनितम्॥५७॥

गमिति ननु कथञ्चिन्मानवः कोऽपि गङ्गे
परिपठति यदैव क्वापि देशे स्थितो यः।
वद किमु न तदीयाः पापपुञ्जास्तदैव
स्फुरदनुपमकम्पा दूरतो विद्रवन्ति॥५८॥

अथ कथमपि गङ्गापदपूर्वभागीभूतगमित्युच्चारणमाहात्म्यदर्शनद्वारा श्रीगङ्गां स्तौति– गमितीति। हे गङ्गे यः कोऽपि मानवः पण्डितत्वोत्तमवर्णाश्रमत्वापेक्षयानु- सन्धानेन मनुष्यविग्रहमात्रभृत्। ननु निश्चये। क्वापि देशे पूतापूतविवेकविरहेण कस्मिं- श्चिदपि भूम्यादिप्रदेशे स्थितो वर्त्तमानस्सन् कथञ्चित्केनापि प्रकारेण गङ्गागञ्जागण्ड- गन्तृगन्धेत्याद्युच्चारणस्वरूपेण यदैव यस्मिन्नेव समये गमिति गङ्गेति भवन्नामाद्यक्षरम् परिपठति समुच्चारयति तदैव तस्मिन्नेव काले उच्चारणसमकालमेव न तु विलम्बेन तदीयास्तत्पाठकजनसम्बन्धिनः पापपुञ्जा दुष्कृतराशयः स्फुरदनुपमकम्पा उद्यदतुल- वेपथवस्सन्तः दूरतोऽतिदूरम् न विद्रवन्ति न पलायन्ते किम्? त्वम् वद कथयेति पूर्वोक्तसमर्थनप्रश्नः। अपितु तम्परित्यज्य कम्पमानाः क्वचिद्दूरप्रदेशे लीना भवन्तीति भावः। अनेन प्रकरणवशान्नामैकदेशोच्चारणस्यापि यदीदृक् फलम् तर्हि श्रद्धया ज्ञानपूर्वकम् गङ्गेति समग्रपदोच्चारणे कियत्फलमिति को वेदेति सूचितम्॥५८॥

विबुधपतिपुरोगाः प्रोल्लसद्दिव्यभोगा
सुरनदि भगवत्या देवि जाता भवत्या।
जननि जगति धर्म्मो लालितोऽयन्त्वयैव
व्रजति सपरिवारः किन्न गुर्वीम्प्रतिष्ठाम्॥५९॥

अथ निखिलामरसुखलाभजगज्जीवातुधर्मस्थितिकारणत्वं श्रीगङ्गायां व्यवस्थापयंस्ताँ स्तौति विबुधेति। हे सुरनदि निर्ज्जरधुनि गङ्गे देवि ! विबुधपतिपुरोगा इन्द्रादयो देवाः भगवत्या ऐश्वर्य्यादिषड्गुणशोभिन्या भगवत्या त्वयैव प्रोल्लसद्दिव्यभोगाः प्रोल्लसदलौकिकशर्म्माणो जातास्सम्पन्नाः त्वत्सेवयैव स्वर्ग्गादिसुखलाभस्तेषामिति भावः। अथ च हे जननि। मातः ! सपरिवारा जपहोमदानदेवार्चनादिनिजपरिजनसहितः अयम् दृश्यः प्रवर्त्तमानः वर्णाश्रमस्थितिहेतुर्धर्म्मस्सुकृतविशेषः आचारविशेषो वा। धर्म्मोऽस्त्रीपुण्यआचारेस्वभावोपमयोः क्रतौ– अहिंसोपनिषन्न्याये नाधनुर्यमसोमभ इति मेदिनी। त्वयैव लालितश्शिशुवत्सादरं संरक्षितस्सन् जगति भुवने गुर्वीमतिबहुलाम् प्रतिष्ठां ङ्गौरवम् न व्रजति न प्राप्नोति किम् ? अपितु व्रजत्येवेत्यर्थः। अनेन श्रीगङ्गाया लोकोत्तरवैभवशालित्वं सूचितम् ॥५९॥

स्मरति जननि यस्त्वाञ्जायते सोऽति पूत-<br>
स्तव पयसि च गङ्गे स्नाति यश्शङ्करस्सः।<br>
पिबति तव जलं यः सोऽस्ति मातः परात्मा<br>
वसति च तव तीरे यो न जाने स कोऽस्ति ॥६०॥

अथ श्रीगङ्गायास्स्मरणादिचतुष्टयस्य माहात्म्यव्यवस्थान्दर्शयंस्तांस्तौति– स्मरतीति। हे जननि गङ्गे यः कोऽपि जनः त्वां स्मरणीयगुणगणाम्भवतीम् स्मरति ध्यायति स जनः अतिपूतोऽतिपवित्रो दुरितविरहित इत्यर्थः जायते भवति। अथ हे गङ्गे तव पयसि जले प्रवाहे प्रविश्येत्यर्थः। यः स्नाति शरीरनिमज्जनं विदधाति सः शङ्करश्शिवरूपो जायते। हे मातः ! अथ च यः तव जलन्दुरितापगमपूर्वकसुकृतसमूहोत्पादनपटुतरम्पानीयम् पिबति सः परात्मा साक्षात्परब्रह्मस्वरूपो जायते। सांसारिकदुःखविरहितो भवतीत्यर्थः। अथ च यस्तव तीरे त्वदीयतटप्रदेशपार्श्वे वसति निवासम् कुरुते अर्थात् तव तटे निवसन् प्रत्यहमेव दर्शनस्नानपानादिभिस्त्वदीयजलोपभोगं विदधाति सः कोऽस्तीत्यहं न जाने न निश्चिनोमीत्यर्थः। ब्रह्मत्वाधिकस्याभावादिति भावः। अनेनाद्भुतमाहात्म्याऽसीति ध्वनितम् ॥६०॥

श्रुतिकटुतरनाम्नामेनसामाश्रया ये<br>
निजकुलजनमुक्ता क्वाऽपि नास्थाङ्गता ये।<br>
भगवति सुरवन्द्ये तेऽतिगुण्यां शरण्याम्<br>
किमथ न समुपेत्य त्वाम्भवन्ति प्रतीक्ष्याः ॥६१॥

अथ चातिबीभत्सपापविधायिजनसमुद्धाराख्यानव्याजेन विचित्रप्रभावां श्रीगङ्गां स्तौति। श्रुतीति। हे भगवति सुरवन्द्ये देवनमस्करणीये श्रीगङ्गे ये केऽपि मानवा मनुष्यदेहमात्रधारिणः श्रुतिकटुतरनाम्नां नाममात्रश्रवणात्कर्णव्यथोत्पादकानामतीव

कुत्सितानामित्यर्थः। एनसां मातृभगिनीगुरुपत्नीप्रभृतिगमनादिपापानाम् आश्रयास्तत्कर्तृत्वादाधारा ये च निजैरात्मीयैः पितृभ्रातृपुत्रादिभिः कुलजनैरात्मीयवंशीयजनैः एकवंशोत्पत्त्या लब्धसम्बन्धैर्ज्जनैश्च मुक्ताः विहिताश्लीलपापप्रायश्चित्तविधानयोग्यताऽनास्पदत्वात् सहवासैकासनैकपङ्क्तिभोजनादौ दूरतः परित्यक्ताः अतएव क्वापि क्वचिदपि आस्थां स्थितिं स्वोद्धारायावलम्बनमित्यर्थः। न गता, न प्राप्ताः। आस्थायत्नालम्बनयोरास्थानापेक्षयोरपीति हेमचन्द्रः। ते पूर्वोक्ता जनाः। अथ निर्दिष्टदशानन्तरम् अतिगुण्यां लोकातिशायिदीनदयालुत्वादिगुणगणोपेताम् शरण्यां शरणे शरणागतजनरक्षणे साध्वीसमुपेत्य चतुराऽतिशक्तेत्यर्थः। सा तथोक्ता। ताम् त्वाम्भवतीम् सम्यक् सश्रद्धाभक्ति शरणागतत्वेन प्राप्य प्रतीक्ष्या निष्कल्मषत्वात्सर्वजनैः पूज्याः न भवन्ति किम्? अपितु भवन्त्येवेति भावः। पूज्यः प्रतीक्ष्य इत्यमरः। अनेन श्रीगङ्गायाः अगतिकगतित्वं सूचितम्॥६१॥

जननि मदधिकः कः पापकर्म्माऽस्ति लोके-
जननि मदधिकः कः क्षीणधर्म्माऽस्ति लोके।
जननि समधिकः कस्त्वद्विधाता विशुद्धेः
जननि समधिकः कस्त्वत्प्रदाता समृद्धेः॥६२॥

अथ स्वस्मिन्पापाश्रयत्वधर्मकर्मविरहितत्वे श्रीगङ्गायान्दुरितनिवारकत्वमहैश्वर्यप्रदातृत्वे च निरूपयंस्तां स्तौति- जननीति। हे जननि मातः लोकेऽत्र जगति मन्मत्तः अधिकः। अत्रैकम्पदम्पदद्वयं वेत्यनुसन्धेयम्। एवमग्रेऽपि कः पापकर्मा पापहेतुकर्मकारी अस्ति, न कोऽपीत्यर्थः। लोकोत्तरपापकर्म्मकर्त्ताऽहमेवात्रेति भावः। अथ हे जननि विशुद्धेर्निखिलपापराहित्यस्य विधाता कर्त्ता त्वत्त्वत्तः समधिकस्स-मतिशायी समर्थतर इत्यर्थः। कः? त्वां विना न कोऽपीत्यर्थः। अथ च, हे जननि समृद्धेस्सर्वालौकिकवस्तूपचयस्य प्रदाता त्वत्त्वत्तः समधिकः कः? न कोऽपीत्यर्थः। त्वमेवैतादृशीति परमार्थः। अनेनास्मिन्ब्रह्माण्डेऽधमतरोऽहमेवास्मि। अथाधमतरोद्धारिणी त्वमेवासीति सूचितम्॥६२॥

विविधकुसुमजालैर्देवि साम्भोजमालै-
र्बहुभिरपि विशालैः क्षीरकुम्भै रसालैः।
रसभरपरिपूर्णैर्भक्ष्यभोज्यादिभिर्यः
सुरनदि यजते त्वाङ्को वदेत्तस्य पुण्यम्॥६३॥

अथ गङ्गासप्तम्यादौ नानाविधसामग्रीभिः श्रीगङ्गायाः पूजनमाहात्म्यं वर्णयंस्तां स्तौति विविधेति। हे सुरनदि गङ्गे देवि! यः पुण्यवाञ्जनः विविधानाम्बहुभेदानाम् तत्तदृतूत्पन्नानाम् कुसुमानाम्पुष्पाणाम् जालैर्वृन्दैः तद्ग्रथितमाला-

भिरित्यर्थः। यद्वा जालैरानायैर्वितानाद्युपयोगिभिरित्यर्थः। साम्भोजमालैर्ग्रीवानिहित-विकसितकमलस्रगतिरमणीयैः बहुभिः प्रचुरैरनेकैरित्यर्थः। क्षीरकुम्भैर्दुग्धपूर्णैर्घटैश्च रसालैः परिपक्वैरतिपुष्टैः इक्षुभिराम्रफलैर्वा। रसालं सिह्लके वोले रसालश्चेक्षुचूत-योरिति मेदिनी। रसभरैर्मधुरादिसमुपादेयरसबाहुल्यैस्स्वादबाहुल्यैर्वा परिपूर्णास्सम्भृताः तैः। रसो गन्धरसे जले। शृङ्गारादौ विषेवीर्य्येतिक्तादौद्रवरागयोः देहधातुप्रभेदे च पारदस्वादयोः पुमानिति मेदिनी। भक्ष्यभोज्यादिभिः पदार्थैश्च। आदिना लेह्यादिग्रहः। त्वाम्भवतीम् यजते पूजयति। तस्य पुण्यं सुकृतं कः वेद यदियत्तया कथयेत्— न कोऽपीत्यर्थः। परिगणनीय प्रमाणाधिकसुकृतशाली स इत्यनेन सूचितम्। अथ वैशाखशुक्लगङ्गासप्तम्यादौ कर्त्तव्यः श्रीगङ्गापूजन-विधिः— वस्त्राच्छन्नमवाच्छिद्रजलपूर्णघटस्थिताम्। सौवर्णीं राजतीं यद्वागङ्गामूर्त्तिम्प्र-पूजयेत् ॥१॥ अथध्यानम्— वराभीत्यम्भोजस्फटिकघटहस्तान्त्रिनयनां शरच्चन्द्र-ज्योत्स्नामदविजयिनीं स्वांशुपटलैः सुरार्च्यां सख्याढ्यां वरवसनभूषां मकरगामहं श्रीगङ्गे त्वामिह हृदि दधे पाहि भवतः ॥२॥ अथावाहनम् ॥ ब्रह्माद्यैरर्च्चनीया या त्रिलोकीभूषणञ्च या ॥ श्रीगङ्गे सा त्वमायाहि तिष्ठात्र स्वागतन्तव ॥३॥ इत्यावाहनम् ॥ श्रीमन्मुरारिपादाब्जस्पर्शपूतजलोद्भवे ॥ गङ्गे गृहाण मद्दत्तमिदम्पाद्य-ङ्कृपाङ्कुरु ॥४॥ यन्नामस्मरणान्मर्त्यो जायतेऽत्यन्तशुद्धिभृत् ॥ श्रीगङ्गे सात्वगेवैतद्-गृहाणाचमनीयकम् ॥५॥ इत्याचमनीयम्। दध्याद्यादिनिर्मितङ्गङ्गे दिव्यं स्वादु मनोहरम्। मधुपर्कङ्गृहाणेमं सर्वदा भव सर्वदा ॥६॥ इति मधुपर्कः ॥ श्रीचन्द्रमौलि-मौलिस्थ श्रीगङ्गे त्रिदशार्च्चिते ॥ शुद्ध्यै मुखस्य भूयोऽपि गृहाणाचमनीयकम् ॥७॥ इति पुनराचमनीयम् ॥ शुद्धये तव देवेशि जगतां शुद्धिकारिणि। जलैस्तीर्थोद्भवैर्गङ्गे स्नानन्ते कल्पयाम्यहम् ॥८॥ इति स्नानम् ॥ मुक्तये निजभक्तानां कृताविर्भावसद्दये। गङ्गे गृहाण हेमाढ्यं नीलपट्टाम्बरद्वयम् ॥९॥ इतिवस्त्रद्वयम् ॥ स्वभावसुभगे गङ्गे नानामणिगणाद्भुतम्। कारुण्येन गृहाणेमं सौवर्णम्भूषणव्रजम् ॥१०॥ इति भूषणानि ॥ त्रैलोक्यव्यापिसौरभ्यं मनोहारिणमुत्तमम्। श्रीगङ्गे कृपया गन्धमङ्गीकुरु विधेहि शम् ॥११॥ इति गन्धः ॥ शीतस्पर्शानि रम्याणि सुगन्धीन्यमलानि च। गङ्गे गृहाण पुष्पाणि कल्याणङ्कुरु सर्वदा ॥१२॥ इतिपुष्पाणि ॥ नानाविधैरतिस्वच्छै-र्गन्धद्रव्यैस्सुसाधितम्। जह्नुकन्ये गृहाणेमन्धूपं वर्द्धय सम्पदः ॥१३॥ इतिधूपः ॥ शुद्धवर्त्तिः पवित्राज्यो महाद्योतस्तमोऽपहः। मणिहेममयो दीपो मया गङ्गेऽर्पि-तस्तव ॥१४॥ इति दीपः ॥ मणिकाञ्चनपात्रेषु नानारससुशोभनम्। भक्ष्यभोज्या-दिकङ्गङ्गे नैवेद्यन्ते मुदेऽर्प्पितम् ॥१५॥ इति नैवेद्यम् ॥ शीतं लघ्वमलम्पथ्यं वातघ्नं हृदयङ्गमम्। स्वादु गङ्गे गृहाणेदं हेमपात्रस्थितञ्जलम् ॥१६॥ इति जलम् ॥ एलालवङ्गकर्प्पूरकस्तूरीक्रमुकादिभिः। संमिश्रं मधुरङ्गङ्गे ताम्बूलन्ते मयार्प्पितम् ॥१७॥

इति ताम्बूलम् ।। घनसारगवाज्याभ्यां सुवर्णे स्वर्णभाजने । सम्पादितमिदङ्गङ्गे मया नीराजनन्तव ।।१८।। इति नीराजनम् ।। मनःप्रह्लादने दक्षस्ससौरभ्योऽनुरागतः । श्रीगङ्गे त्वन्मुदे चैष मया पुष्पाञ्जलिः कृतः ।।१९।। इति पुष्पाञ्जलिः ।। ओंनमोभगवति ऐं हिलिहिलिमिलिमिलि गङ्गे माम्पावय स्वाहा इति मूलमन्त्रेण वा अङ्गन्यासादिकं विधाय सर्वा श्रीगङ्गापूजा कार्येत्यलम्पल्लवितेन ।।६३।। अथ पूर्वनिदिष्टपूजायाः स्नानपानाद्युपभोगस्वरूपसेवाया वा सकृदपि सम्पादने माहात्म्यन्दर्शयन् श्रीगङ्गां स्तौति— कुशलमिति । हे गङ्गे देवि ! ये जनाः इहलोके कुशलन्ददानां कल्याणविधात्रीम् तेजसा सर्वदेवाधिकप्रतापेन दीप्यमानाम्प्रकाश-

कुशलमिह ददानान्तेजसादीप्यमानां-
वृजिनदमनशक्तिञ्जातभक्तानुरक्तिम् ।
सकृदपि भवतीं ये देवि गङ्गे भजन्ते
किमु न कलिकराग्राते विमुक्ता भवन्ति ।।६४।।

मानाम् वृजिनदमनशक्तिम्पूर्वार्ज्जितभक्तजनकलुषापगमक्षमसामर्थ्याम् । जाता समुत्पन्ना भक्तेषु स्वस्मरणादिकर्त्तृजनेषु अनुरक्तिवात्सल्यस्वरूपोऽनुरागो यस्याः सा ताम् भवन्तीं त्वाम् सकृदप्येकवारमपि वह्वादप्येकवारमपि । बह्वावृत्तेस्तुका कथा भजन्ते सेवन्ते ये जनाः कलेरेतन्नामकयुगाधिष्टातृदेवस्य कराग्रात्समग्रात्करादित्यर्थः । विमुक्ताः कलिकल्मषविरहिता इत्यर्थः । न भवन्ति किम् ? अपितु भवन्त्येवेति भावः । अनेन गङ्गासेवा कलिदोषनिवारणातिशक्तेति ध्वनितम् ।।६४।।

यदवधि किल गङ्गे प्रादुरासीद्वपुस्ते
तदवधि निरयाणां शून्यताऽभून्नितान्तम् ।
तदवधि पुनरम्ब स्वर्ग्गभूर्भूरिशोभा
तदवधि जगदण्डन्देव्यखण्डं विदण्डम् ।।६५।।

अथश्रीगङ्गायाः प्रादुर्भावप्रभाववैभवन्दर्शयंस्तांस्तौति यदवधीति । हेगङ्गे यदवधि यस्मात्कालात् ते तव वपुः प्रवाहरूपं शरीरम् प्रादुरासीत्प्रकटमासीत् तदवधि तस्मात्कालात् । किलेति निश्चयेऽलीकेवाक्यालङ्कारे ऐतिह्ये वा । निरयाणां नरकाणाम् नितान्तमत्यन्तम् शून्यता जनराहित्यविशिष्टत्वम् अभूत् जाता । हे अम्ब मातः पुनर्भूयः तदवधि तस्मात्कालात् स्वर्ग्गभून्नाकभूमिः भूरिशोभाऽतीवरमणीया अभूत् । त्वत्सेवकानाम् दिव्यविग्रहं समेत्य तत्र प्राप्तत्वादिति भावः । किम्बहुना तदवधि तस्मात्कालात् अखण्डम्परिपूर्णम् जगदण्डम्ब्रह्माण्डम् विदण्डं यमदण्डविरहितम् अभूत् । मूर्त्तित्रयेण तत्र वर्त्तमानत्वादिति भावः । अनेन श्रीगङ्गायाः प्रादुर्भावो जगदुपद्रवनिवारक इति सूचितम् ।।६५।।

सकलदिविषदां यः पीडयत्येव चित्तम्-
कथमपि किल गङ्गे दूरदेशे श्रुतोऽपि।
अपि च निगमविद्भिर्देवि योऽपाकृतोऽस्ति
प्रभवति स उपेत्य त्वान्न किन्तद्विशुद्ध्यै ।।६६।।

अथासम्भावनीयसमुद्धारस्यापि जनस्य श्रीगङ्गासमागमप्रभावात् इतरसमुद्धारकत्वन्निरूपयन् श्रीगङ्गां स्तौति– सकलेति। हे गङ्गे यो जनः किल निश्चयेन दूरदेशेऽपि, समीपे तु का वार्त्तेत्यर्थः। कथमपि केनापि प्रकारेण श्रुतस्समाकर्णितस्सन् सकलानान्दिविषदां नाकवासिनामिन्द्रादीनामपि चित्तं मनः पीडयत्येव। सान्तस्तापमवश्यन्दुःखीकरोत्येवेत्यर्थः। अपि च किञ्च हे देवि निगमविद्भिर्वेदाभिज्ञैर्वेदतदर्थावलम्विधर्म्मशास्त्रप्रतिपादिततत्तत्प्रायश्चित्तव्यवस्थाप्रतिपादनेतिकर्त्तव्यताऽतिकुशलैरित्यर्थः। यो जनः अपाकृतोऽस्ति अत्युग्रपापकारित्वादस्य प्रायश्चित्तविधाने वयमतीवकुण्ठितबुद्धयः अतोऽयमतो दूरं यात्विति निरस्तो भवति। 'निगमाः पूर्वणिग्वेदनिश्चयाध्ववणिक्पथा' इति हेमचन्द्रः। स जनः त्वां सकलशरणागतप्राणिसमुद्धारकर्मबद्धपरिकराम्भवतीम् उपेत्य सम्प्राप्य न तु त्वयि स्नानादिकङ्कृत्वा स्नानादितः प्रागेवेत्यर्थः। तेषान्दिविषदादीनाम् विशुद्ध्यै विशिष्टपावनतायै स्वविशुद्ध्यै किमु वक्तव्यम्। न प्रभवति न समर्थो भवति किम् अपि ? तु प्रभवत्येव। समुपेत्येति पाठे तु यत्तदोर्नित्यसम्बन्ध इति न्यायात्तच्छब्दोऽध्याहर्त्तव्यः। सम्यक्श्रद्धानुरागसंस्कृतमनस्कस्सन्नुपेत्येत्यर्थकल्पना च कर्त्तव्या। अनेन श्रीगङ्गायास्समागमस्याचिन्तनीयः प्रभावस्सूचितः ।।६६।।

त्वयि सुरनदि दृष्टा याऽद्य दुर्न्नीतिरुच्चै-
रहह न भुवने सा क्वापि सत्यम्ब्रवीमि।
पशुपतितपुलिन्दब्रात्यहीनान्त्यजेभ्यो
दिशसि यदपरीक्ष्य प्रेक्षणादेव मुक्तिम् ।।६७।।

अथ निन्दाव्याजेन श्रीगङ्गायास्स्तुतिन्निरूपयंस्तां स्तौति– त्वयीति। हे सुरनदि ! देवधुनि ! सोल्लुण्ठनेयं सम्बुद्धिः। अद्येदानीम् त्वयि भवत्याम् उच्चैर्महती यादुर्न्नीतिर्दुष्टानीतिरन्यायशालितेति यावत्। दृष्टा शास्त्रदृष्ट्या समवलोकिता स्वमनोविषयीकृतेत्यर्थः। अहहेत्याश्चर्य्ये। सा दुर्न्नीतिः भुवनेऽस्मिन्ब्रह्माण्डगोलके क्वापि हरिहरविधिरविदेवीगजाननादौ क्वचिदपि नास्तीति शेषः। नदृष्टेति वा इत्यहम् सत्यममिथ्यैव ब्रवीमि कथयामि। कुत इति चेदतआह यद्यतः अपरीक्ष्य अयं विशुद्धिपूर्वकं मुक्तियोग्योऽस्ति न वेति परीक्षामकृत्वैव प्रेक्षणादेव दृष्टिपात–मात्रादेव पशवो गवादिकाः पतिता अप्रकृष्टकर्म्ममहिम्ना सजातीयजनच्युताः पुलिन्दाश्चाण्डालविशेषाः भेदा किरातशवरपुलिन्दा इत्यमरः। ब्रात्याः उपनयन-

संस्कारशून्याः उक्तसावित्रीग्रहणकालातिक्रमणात् सावित्रीपतिताः ब्रात्यस्संस्कार-हीनस्स्यादित्यमरः। आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते। आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतोर्विशः। अतऊर्द्धन्त्रयोऽप्येते यथाकालमसंस्कृताः सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिता इति। द्विजातयस्सवर्णासु जनयन्त्यव्रतांस्तु यान् तान्सावित्रीपरिभ्रष्टोन्व्रात्यानिति विनिर्दिशेदिति च मनुः। हीनाः जात्या कुलेन वा अपकृष्टाः श्रेणिप्रमुखाः श्रेणिमुखाः अन्त्यजा वर्द्धक्यादयः। वर्द्धकी नापितो गोपआशापः कुम्भकारकः वणिक्किरातकायस्थमालाकारकुटुम्बिनः वरटोमेदचाण्डाल-दासश्वपचगोलकाः एतेऽन्त्यजास्समाख्याता येचान्ये च गवाशनाः। एषां सम्भाष-णात्स्नानन्दर्शनादर्कवीक्षणमिति व्यासः। तेभ्यः मुर्क्तिमोक्षम् दिशसि वितरसि तान्मुक्तसंसारबन्धनान् विदधासीत्यर्थः। अनेनोक्तानौचित्यनिन्दया एतादृशा अपि-त्वत्समक्षंतामेत्यैव परमपवित्रतामधिगम्य मुक्ता भवन्तीत्यतस्तव प्रभावोत्कर्षशालिताङ्को वर्णयेदिति स्तुतिस्सूचिता ॥६७॥

मृदुलहृदयभित्ते प्रोल्लसत्पुण्यवृत्ते
त्वदमलजलवित्ते मामके देवि चित्ते।
विहितकलुषभङ्गे जातुचिन्नास्तु गङ्गे
कथमपि समुपेक्षा सन्निधेस्सन्निधेस्ते ॥६८॥

अथ श्रीगङ्गाया अभ्यर्णनिवासासक्तिप्रौढिम्प्रार्थयंस्तांस्तौति। मृदुलाऽति-सुकुमारा मादृशातिदुःखितजनार्त्तिभरमसहमानेत्यर्थः। हृदयभित्तिरन्तःकरणकुड्यम् भक्तजनचित्तलेखनाधारप्रदेश इति यावत्। यस्यास्सा तत्सम्बोधनम्। भित्तिस्त्रीकुड्य-मित्यमरः। प्रोल्लसन्ती पुण्या पवित्रा वृत्तिश्शरणागतजनशुभोदयविधायिमनस्स्फुरणं यस्याः। यद्वा प्रोल्लसदतिशोभनम् पुण्यम्पावनम् वृत्तन्ततत्पुराणप्रसिद्धस्स्वजनो-द्धारलक्षणो वृत्तान्तो यस्यास्सा। तत्सम्बोधनम्। विहितस्सम्पादितः कलुषाणां निजजनपापानाम् भङ्गो भञ्जनम् विध्वंस इति यावत्। यया सा तत्सम्बोधनम्। हे गङ्गे देवि। अत्र सम्बुद्धिपञ्चकेन श्रीपञ्चवक्त्रप्रियत्वं सूचितम्। तव अमलन्दोष-मलवर्ज्जितम् यज्जलम् तदेव वित्तन्धनं स्वासक्तिस्थानं यस्य तस्मिन् मामके मत्सम्बन्धिनि चित्ते हृदि जातुचित्कदाचिदपि अन्तरायपरम्परासमागमावसरेऽपीत्यर्थः। कथमपि केनापि प्रकारेण लाभालाभप्रतिष्ठाऽप्रतिष्ठादिसम्भावनावशेनापीत्यर्थः। सन्निधेरुत्तमशङ्खादिनिधिहेतुत्वात्तत्स्वरूपस्य सतां सर्ववस्तुजातोत्कर्षशालिनान्धर्म्मा-र्थाद्यलभ्यलाभाम् निधीयतेऽस्मिन्निति निधिराश्रयस्तस्य वा ते तव सन्निधेस्सन्निकर्षस्य सामीप्यस्येत्यर्थः। सन्निधिस्सन्निकर्षणमित्यमरः। समुपेक्षा परित्यागबुद्धिः नास्तु न भवतु। अनेन सर्वार्थसिद्धिनिदानस्य श्रीगङ्गानिकटवासस्य निखिलसुखसाधन-सम्पत्तिसमुपरतसज्जनैकसर्वस्वत्वन्ध्वनितम् ॥६८॥

सकलधरणिजातन्तीर्थजातं सुजात-
न्ननु कृतसमुपेक्षन्देवि जातम्मयाऽद्य।
त्वयि सुरनदि सत्यामत्र कस्यादरस्स्तात्-
सति दिनकरविम्बे का कथा दीपकानाम् ॥६९॥

अथेतरतीर्थनिकरारुचिपुरस्सरं श्रीगङ्गैकपरायणत्वप्रकाशकपटेन श्रीगङ्गां स्तौति-- सकलेति। हे देवि गङ्गे नन्ववधारणे। प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः। सकलधरणिजातमखिलभूमण्डलान्तर्वर्त्ति सुजातं स्वमहिम्नाऽतिसुन्दरम्। तथा च भगवान् कालिदासः– दिनेषु गच्छत्सु नितान्तपीवरन्तदीयमानीलमुखं स्तनद्वयम्। तिरश्चकारभ्रमरावलीढयोस्सुजातयोः पकंजकोशयोः श्रियमिति तदुपरि-मल्लिनाथः– सुजातयोस्सुन्दरयोरिति। तीर्थजातम्पुण्यक्षेत्रौघः जातं व्यक्तौघजन्मसु क्लीबन्त्रिलिङ्गमुत्पन्न इति मेदिनी। अद्य सम्प्रति त्वत्समागमावसर एव मया त्वदेकानुरक्तमनसा कृता विहिता सम्यक् समीचीना अचञ्चलेत्यर्थः। उपेक्षा सम्बन्ध-मात्राऽरुचिविशेषः यस्य तत्तादृशम् जातमुत्पन्नम्। सम्प्रति त्वय्येव बद्धानुरा-गोऽस्म्यहमिति भावः। अथ काक्वोक्त्यार्थं समर्थयति। हेसुरनदि त्रिदशसरित्! सर्वोत्कर्षद्योतिनीयं सम्बुद्धिः। त्वयि भवत्यां सत्यां वर्त्तमानायाम् अत्र जगत्याम् कस्य त्वदतिरिक्तस्य तीर्थस्य आदरस्सत्कारो गौरवव्यवहारलक्षणः स्ताद्भवतु। न कस्यापीति भावः। तदेव दृष्टान्तयति- दिनकरबिम्बो मार्त्तण्डमण्डले सति दीपका-नान्दीप्तिकारकाणान्दीपानामल्पदीपज्वालानां वा का कथा का गणना न कापीत्यर्थः। दीपकं वागलङ्कारे वाच्यवद्दीप्तिकारक इतिमेदिनी। अनेनश्रीगङ्गायास्सकलतीर्थ-मौलिमाणिक्यत्वन्ध्वनितम् ॥६९॥

तव विमलसमाख्यागानमात्रेण गङ्गे
तदिह ननु लभन्ते मानवा वस्तु किञ्चित्।
बहुभिरपि तपोभिश्चाथ सर्वस्वदानै
र्न किल सकलतीर्थस्नानतो लभ्यते यत् ॥७०॥

अथ श्रीगङ्गाया निखिलतपोदानतीर्थेभ्योऽधिकफलदातृत्ववर्णनव्याजेन तां स्तौति तवेति। हे गङ्गे तव विमलानां स्वच्छानामखिलदोषमलापहारिकाणां वा समाख्यानाङ्गङ्गासुरधुनीत्रिपथगाभागीरथीत्यादीनां समीचीनानां नाम्नाम् अथाह्वयः आख्याह्वेअभिधानञ्चनामधेयञ्चनाम चेत्यमरः। गानमात्रेण कथमप्युच्चारणमात्रेण हेतुना इहास्मिँल्लोके मानवा मनुष्याः तत्किञ्चिद्वाङ्मनसागोचरङ्किमपि वस्तु। ननु लभन्ते प्राप्नुवन्त्येव। यद्वस्तु बहुभिर्बहुलैरपि तपोभिः कायक्लेशसाध्यधर्म्म-विशेषैः चकाराद्देवाद्यर्चनैरपि। अथ किञ्च सर्वस्याखिलस्य स्वस्यात्मीयत्वेन मानसा-सक्तिविषयस्य धनस्य पदार्थमात्रस्य वा दानैस्स्वस्वत्वनिवृत्त्या सुपात्रस्वत्वा-

पादनरूपैः। अथ च सकलतीर्थस्नानतस्त्वदितराखिलपुण्यक्षेत्रनिमज्जनात्। स्नानपदमत्रदर्शनादेरुपलक्षणम्। न लभ्यते। किलेति सम्भाव्यार्थे किल शब्दस्तु वार्त्तायां सम्भाव्यानुशयार्थयोरिति मेदिनी। अनेन तपःप्रमुखपराङ्मुखत्वेनापि श्रीगङ्गानामोच्चारणपरायणानामपि कैवल्यलाभ इति ध्वनितम्॥७०॥

विधिविहितसपर्याद्विष्णुपादात्सरन्ती
त्रिपुरहरजटायां सन्ततं सञ्चरन्ती।
तुहिनगिरितटान्तान्मेदिनीमाव्रजन्ती
जननि विजयसे त्वं विष्टपम्पावयन्ती॥७१॥

अथ हेतुचतुष्टयसम्पादितसर्वोत्कर्षसम्भृतत्वप्रतिपादनेन श्रीगङ्गां स्तौति- विधीति। हे जननि गङ्गे विधिविहितसपर्याद्ब्रह्मदेवकृतार्हणात्। पूजा नमस्यापचिति- स्सपर्याऽर्चाऽर्हणास्समा इत्यमरः। विष्णुपादाद्बलिनिग्रहार्थधृतवामनावतारत्रिविक्रमनाम- धेयश्रीनारायणचरणात् सरन्ती निर्गच्छन्ती। वामनावतारे बलेर्बन्धनाय त्रिर्विक्रमयतो विष्णोः पादं वियति समवलोक्य निजकमण्डलुजलाभिषेकेण समर्चयितुन्तदुपरि कमण्डलुजलं निक्षिप्तवान्विधाता। तदेव जलं समर्चितवामनपादतस्सादरङ्कमण्डला- वेव पुनर्दधार। ततस्तं समर्च्य कृततपसा भगीरथेन राजर्षिणा भक्तिसन्तुष्टीकृत- श्रीमन्महादेवजटाजूटद्वारा कमण्डलुतो धरणीतलमानीतन्तत् कपिलमुनिकोपाग्निदग्धतत्पू- र्वजसगरसुतनिकरसमुद्धारञ्चकार। गङ्गेति परमपावननामधेयताञ्च जगामेति पौराणिकी- ङ्कथामादायोक्तङ्कविना। विष्णुपादात्सरन्तीति त्रिपुरहरजटायां श्रीमन्महादेवलग्नकचसमूह- स्वरूपायाम्। जटालग्नकचे मूलेइति विश्वलोचनम्। सन्ततमविरतम् सततेऽनार- ताऽश्रान्तसन्तताऽविरताऽनिशमित्यमरः। सञ्चरन्ती सोल्लासं विहरन्ती तुहिनगिरित- टान्ताद्गिरिराजहिमाद्रिसुरादिसंसेवितस्थलपार्श्वप्रदेशात् मेदिनीमुपत्यकादिक्रमेण भूमितलम् आव्रजन्ती समागच्छन्ती। विष्टपं सकलञ्जगत् अथो जगतीलोकोविष्टपम्भुवनञ्जग- दित्यमरः। पावयन्ती पवित्रीकुर्वाणा सती विजयसे- सर्वोत्कर्षेण वर्त्तसे। पावयन्तीत्यत्र स्वार्थे णिच्। अनेन स्मारिततत्तत्पुराणकथाप्रसङ्गप्रकाशितवैभवा- तिरेकमहिम्ना श्रीगङ्गायामलभ्यवस्तुत्वन्द्योतितम्॥७१॥

त्रिजगति तव कीर्त्तिर्भासमाना समाना
त्रिदशसरिदनेकैश्शोभते देवि रूपैः।
क्वचिदमरगजेन्द्रः क्वाप्यनन्तः फणीन्द्रः
क्वचिदपि च सितांशुः कुत्रचित् क्षीरसिन्धुः॥७२॥

अथश्रीगङ्गायाः प्रकारविशेषेण निजकीर्त्तिशुभ्रितभुवनत्वन्दर्शयंस्तां स्तौति। त्रिजगतीति। हे त्रिदशसरित् श्रीगङ्गे देवि अनेकैर्बहुभिः रूपैः ऐरावताद्याकारैः। रूपं स्वभावेसौन्दर्येनालोकेपशुवृन्दयोः। ग्रन्थावृत्तौनाटकादावाकारश्लोकयोरपीति

मेदिनी। भासमाना सदैकरसम्प्रकाशमाना समाना सदैव न्यूनाधिकभावशून्या यद्वा मानेन सर्वसत्करणीयतोत्थितया चित्तोन्नत्या सह वर्त्तते सा तथोक्ता। यद्वा मानेन परिमाणेन सह वर्त्तते इति समाना परिमिता, सा न भवतीति असमा-नाऽपरिमिता अकारप्रश्लेषेणायमर्थः। यद्वा नास्ति समानस्सदृशो यस्यास्साऽसमाना अनुपमा प्रतिपक्षशून्या या। मानश्चित्तोन्नतौ ग्रहे क्लीवम्प्रमाणेप्रस्थादाविति मेदिनी। तव कीर्त्तिर्य्यशः त्रिजगति जगत्रये। जगति च तवेतिपाठे चकारः किञ्चेत्यर्थे जगति लोकइत्यर्थः। शोभते हृदयङ्गमतयाराध्यते। कथमिति चेत्तथा दर्शयति। क्वचिदर्थात्स्वर्गलोके अमरगजेन्द्रऐरावतरूपेणपरिणता क्वापि पाताले अनन्तोऽनन्त-नामकः फणीन्द्रस्सर्प्पराजः श्रीशेषः अवलम्बितशेषस्वरूपा क्वचिदपि चान्तरिक्षे सितांशुश्शुभ्रांशुः चन्द्ररूपताङ्गता कुत्रचित्। अत्र क्वापि चेति वा पाठः। भूलोके क्षीरसिन्धुर्दुग्धसमुद्रः क्षीरवारिधिविग्रहा नैते ऐरावतादयः किन्तु तत्तद्रूपेण परिणता तव कीर्त्तिरेवेति भावः। कीर्त्तेश्शुभ्रतया कविनये वर्णनादिदन्निरूपणमित्यभिसन्धिः। अनेन सर्वातिशायिनी तव कीर्त्तिरिति ध्वनितम्॥७२॥

हरिहरविधिमुख्यान्केचिदर्च्चन्ति रागात्-
कतिचिदिह तपोभिः कुर्वते कायकार्श्यम्।
विविधकृतिकलापान्केऽपि कुर्वन्ति यज्ञान्-
विबुधनदि विना त्वां नैव जानेऽहमन्यत्॥७३॥

शृणु भगवति गङ्गे मामकं वाक्यमेतत्-
त्रिदिवसरिदयन्ते जृम्भते किं स्वभावः।
पतितमपतितं वा यन्नरं वा खरं वा
तटगतमपरीक्ष्य स्वर्गयोग्यङ्करोषि॥७४॥

अथ स्वस्यानन्यगतिकत्वन्दर्शयन् श्रीगङ्गां स्तौति— हरीति। हे विबुधनदि! सकलकलाकुशले तरङ्गिणी देवैरप्याश्रितेत्यर्थः। श्रीगङ्गे केचित्केऽपि जनाः। अरुचिग्रस्तमेतत्। एवमग्रेऽपि हरिहरविधिमुख्यान्विष्णुरुद्रविधातृप्रभृतीन् रागादनुरागात् भक्तिभावादित्यर्थः। अर्च्चन्ति पूजयन्ति। कतिचिज्जनाः इहा-स्मिँल्लोके तपोभिस्तपस्याभिः कायकार्श्यं शरीरकृशताम् कुर्वते विदधति। केऽपि केचिदपि जनाः विविधा नानाविधा बहुक्लेशप्रदा इति भावः। कृतिकलापाः कर्म्मकलापा येषु तान् यज्ञानग्निष्टोमराजसूयप्रमुखानध्वरान् कुर्वन्ति अनुतिष्ठन्ति। यज्ञस्सवोऽध्वरोयागस्सप्ततन्तुर्म्मखः क्रतुरित्यमरः। अहन्तु त्वाम्भवतीम् विना अन्यदितरत् स्वोद्धारकर्त्तृ किमपि न जाने न परिचिनोमि। सेवे वेति किमु वक्तव्यम्। अनेन त्वदेकपरायणोऽस्मीति ध्वनितम्॥७३॥ अथश्रीगङ्गायाः पात्रापात्रविवेकवर्ज्जसर्वजन्तुसाधारणसद्गतिकर्त्तृत्वमुपालम्भकपटेन वर्णयंस्तांस्तौति।

शृण्विति। हे गङ्गे भगवति मामकं मत्सम्बन्धि एतदग्रे वक्ष्यमाणम् वाक्यं वचनम् शृणु त्वं समाकर्णय। हे त्रिदिवसरित्स्वर्गनदि सम्बुद्धित्रयमेतत्प्रकृतोपालम्भ-पुष्टिविधायीत्यनुसन्धेयम्। अयं लोकप्रसिद्धो मद्बुद्धिस्थो वा वक्ष्यमाणः ते तव स्वभावो निसर्गोऽवश्यकर्त्तव्यताऽऽग्रहविशेष इति भावः। स्वरूपञ्च-स्वभावश्च। निसर्ग इत्यमरः। किमिति प्रश्ने किमर्थे विजृम्भते निश्शङ्कतया वर्त्तते। यद्वा किङ्कुत्सितो विजृम्भते। नोचितमिति भावः। किङ्कुत्सायां वितर्केच निषेधप्रश्नयोरपीति उभयत्र मेदिनी। कुत इति चेदतआह। यद्यतः पतितम्पापिनम् समुद्धारायोग्यमित्यर्थः अपतितम्पुण्यवन्तं वा नरं मनुष्यम् खरङ्गर्दभं वा चक्री-वन्तस्तु वालेया रासभा गर्दभाः स्वरा इत्यमरः। तटगतं निजतीरसम्प्राप्तमात्रमेव अपरीक्ष्यैव अयम्प्राणी स्वर्गीयसुखोपभोगयोग्योऽस्ति न वेति परीक्षणमविधायैव स्वर्गयोग्यं शतक्रतुप्रभृतिमहानुभावनिवासार्हनाकवर्त्तमाननानादिव्यस्त्रक्चन्दन-वनिताद्युपभोगयोग्योऽस्ति नवेति परीक्षणमविधायैव स्वर्गयोग्यं शतक्रतुप्रभृति-महानुभावनिवासार्हनाकवर्त्तमाननानादिव्यस्त्रक्चन्दनवनिताद्युपभोगसुखोचतिम् करोषि विदधासि। अनेन श्रीगङ्गायाः अचिन्तनीयमाहात्म्यसंवलितमहौदार्य्यशोभिलोकोत्तर-वैभवशालित्वन्ध्वनितम् ।।७४।।

उदयति हृदि बुद्धिर्य्यस्य पुण्यैकराशेः
सुरधुनि तव दृष्टौ प्रस्फुरद्भाग्यभारैः।
त्रिदिवपरिवृढोऽयन्तत्सपर्याकृते किं
सुरदुरधिगमा नो संविधास्सञ्चिनोति ।।७५।।

अथ श्रीगङ्गाया दर्शनमात्रादलौकिकम्फलमिति कथनद्वारा तां स्तौति। उदयतीति। हेसुरधुनि निर्ज्जरतटिनि श्रीगङ्गे पुण्यैकराशेरतीवपुण्यकारित्वात्सुकृतसमूहरूपस्य यस्य प्राणिनः पापिनस्तु त्वदर्शनवाञ्छैव दुर्ल्लभेति भावः। हृद्यन्तःकरणे प्रस्फुरद्भाग्यभारैरुदितप्राक्तनसुकर्म्मपुण्यफलशुभदैवसमूहैः करणैः नत्वेकेन केनचि-द्भाग्येनेत्यर्थः। तव दृष्टौ दर्शने दर्शनायेत्यर्थः। चर्मणिद्वीपिनंहन्तीतिवन्निमित्तार्थे सप्तमी। बुद्धिर्म्मनोवृत्तिविशेषः उदयति प्रस्फुरतीति यावत्। उदयति यदि भानुः पश्चिमे दिग्विभागे इत्यादिवदत्रापि अनुदात्तेत्वनिमित्तिकात्मनेपदस्यानित्य-त्वात्परस्मैपदम्। तस्य प्राणिनः सपर्य्याकृते पूजाकरणाय कृते इत्यव्ययश्चतुर्थी-प्रतिरूपकम्। अयम्प्रसिद्धः त्रिदिवपरिवृढः स्वर्गाधिपतिश्शक्रः सुरदुरधिगमादेव दुर्ल्लभः सम्यग्विधीयते क्रियते सुखाद्यनुभवः। आभिरिति संविधाः पूजासामग्र्यताः कर्म। आतश्चोपसर्गे इति कप्रत्ययः। अकर्त्तरिच कारके सञ्ज्ञायामिति कर्माद्यर्थत्वम्। तथा च रघुवंशे कालिदासः– सत्यामपि तपस्सिद्धौ नियमापेक्षया मुनिः। कल्पवत्कल्पयामास वन्यामेवास्य संविधामिति। नो सञ्चिनोति किम् ?

स्वभृत्यैरितरस्मादपि देवलोकादानीय नो सम्पादयति किम्। अपितुचिनोत्येवेति भाव:। अनेन श्रीगङ्गाया दर्शनमात्रेच्छामात्रस्य यदीदृशम्फलम् तर्हि साक्षाद्दर्शनस्य तु तत्किमिति को जानातीति ध्वनितम् ॥७५॥

सुरतटिनि भवत्यां शर्वसौभागवत्याम्
जितसुमतिपवित्रं यन्मयादर्शि चित्रम्।
न किल तदितरस्मिन्यन्मुरारे: पदेन
स्फुटमहह विहीना तन्निजेभ्यो ददासि ॥७६॥

अथाद्भुतार्थरचनया श्रीगङ्गां स्तौति। सुरतटिनीति। हेसुरतटिनि श्रीगङ्गे शर्वस्य श्रीमहादेवस्य यत्सौभाग्यं सुभगत्वम् तद्वत्यान्तदाश्रयभूतायाम् सर्वोत्कर्षतानिदानीभूतायामित्यर्थ:। यद्वा शर्वेण सौभाग्यवत्याम् तदेकनाथायामित्यर्थ:। भवत्यान्त्वयि विषये जिता: तेषामपि बुद्ध्यविषयत्वात् परास्ता: सुमतयो विवेकिनोऽपि येन तत्। अथ च पवित्रम्पावनम् नतु ग्लानिजनकम्, यत् चित्रमद्भुतम्। चित्रङ्गेतिलकेऽद्भुते आलेख्येकर्वुरे इति हेमचन्द्र:। मया अदर्शि दृष्टम् शास्त्रदृष्ट्याऽवगतमितिभाव:। किलेत्यैतिह्येऽवधारणे वा। तच्चित्रम् इतरस्मिंस्त्वत्तोऽन्यस्मिन् विष्णुश्रीशङ्करादावित्यर्थ: नास्तीतिशेष: नाऽदर्शीति वा। कथमितिचेत्दाकर्णय यद्यत: मुरारे: श्रीवामनावतारस्य विष्णो: पदेन स्वोत्पत्तिस्थानेन चरणेन विहीनापि तत्परित्यज्य भूमावागताऽपि तच्छून्यापीति यावत्। अहहेत्यद्भुते। अहहेत्यद्भुतेखेद इत्यमर:। तत् मुरारे: पदम् निजेभ्यश्शरणागतेभ्यो भक्तेभ्य: स्फुटं यथास्यात्तथा न तु गुप्तमिति भाव:। ददासि वितरसि। यद्वस्तु यत्पार्श्वे न विद्यते तद्वस्तु स कथं स्वेभ्यो ददात्येवेत्यद्भुतं विरोधञ्जनयति। तन्मुरारे: पदं स्थानं वैकुण्ठं सारूप्याख्यं वस्तु वेत्यर्थेन तु विरोधाभाव:। अनेनात्राद्भुतार्थप्रदर्शनाल्लोकोत्तराश्चर्यास्पदत्वं श्रीगङ्गायास्सूचितम् ॥७६॥

तरुणधवलरश्मिप्रस्फुरत्पाण्डरांशु-
व्रजविजयधुरीणप्रोल्लसत्सत्तरङ्गे।
वरविभवविहङ्गेऽनङ्गविद्वेषिसङ्गे
कुरु मम भवभङ्गे शेमुषी देवि गङ्गे ॥७७॥

अथश्रीगङ्गायाश्चतुर्वर्गप्रदानवदान्यत्वं सम्भाव्य वक्तुमशक्यं सांसारिकन्दु:खमनुसन्धाय तन्निवृत्तिम्प्रार्थयंस्तां स्तौति तरुणेति। तरुण: पार्वणो यो धवलरश्मिश्चन्द्रमा: तस्य प्रस्फुरन्विलसन्य: पाण्डरश्शुभ्र: अंशुव्रज: किरणनिकर: तस्य विजये अधस्तात्करणे धुरीणा धुरन्धरा: अतिसमर्था इत्यर्थ:। अतएव प्रोल्लसन्तस्समुल्लासमप्राप्नुवन्तस्सन्तस्सर्वगुणसम्पन्ना: दोषलवेनाप्यस्पृष्टा इत्यर्थ:। तरङ्गा

ऊर्मयो यस्यास्सा। तत्सम्बोधनम्। वरविभवा महैश्वर्य्या विहङ्गाश्शुकसारिकादयः पक्षिणो यया यस्या यस्यां वा सा। तत्सम्बोधनम। अनङ्गविद्वेषिणः कामारेः श्रीशङ्करस्य सङ्गस्समागमो यस्या यया वा सा तत्सम्बोधनम्। हे देवि गङ्गे मम भवभङ्गे संसारदुःखविध्वंसे शेमुषीम्बुद्धिम् कुरु विधेहि। मम मुक्तिङ्कुर्वित्यर्थः। आत्यन्तिकदुःखलयाय सर्वथोपास्यत्वं सूचितम् ॥७७॥

कतिचन सुरसिन्धो प्राणिनः पुण्यवन्त-
स्त्वयि परिहृतदेहास्स्वर्गगेहा भवन्ति।
कतिचन शिवबन्धो ब्रूहि जायन्त एते
श्रुतिपथविगताख्या निर्निकेताः किमेतत् ॥७८॥

अथ भङ्ग्यन्तरेणोपालम्भविधया श्रीगङ्गायाः कैवल्यप्रदात्रीत्वम्प्रतिपादयं-स्तांस्तौति- कतिचनेति। हे सुरसिन्धो देवनदि श्रीगङ्गे। सिन्धुर्वमथुदेशाब्धिनदेना-सरितिस्त्रियामिति मेदिनी। कतिचन केऽपि पुण्यवन्तस्त्वत्सेवनादर्ज्जितसुकृतभाराः प्राणिनः त्वयि प्रवाहरूपायाम् परिहृतदेहास्सन्त्यक्तकलेवरास्सन्तः स्वर्गगेहा अमर-लोकवासिनो भवन्ति सम्पद्यन्ते। पुनः हे शिववन्धो हेश्रीमन्महादेवप्रिये कतिचन केऽपि एते प्राणिनः त्वयि परिहृतदेहास्सन्तः श्रुतिपथविगताख्याः क्वचिदप्य-श्रूयमाणनामानः अथ च निर्निकेताः क्वचिदप्यनधिगतनिवासस्थानाः जायन्ते भवन्ति। एतत्किमिति प्रश्ने त्वम्ब्रूहि कथय। त्वयि नैतादृग्युक्तमिति सोपालम्भोक्तिः। वस्तुतस्तु नामधामादिशून्यनिर्वाणपदप्राप्त्यर्थावगमेन सुकृततारतम्यवशाद्भोग-मोक्षप्रदात्रीत्वं श्रीगङ्गाया सूचितम् ॥७८॥

त्रिदिवधुनि मुनीन्द्रैर्म्मानवेन्द्रैस्सुरेन्द्रैः
परिणुतगुणपुञ्जे मानसाकर्षिकुञ्जे।
निजशिरसि भवेन प्रोल्लसद्वैभवेन
प्रचुररुचि धृताहो त्वम्भवं हंसि किन्नु ॥७९॥

अथापि भङ्ग्यन्तरेण सोपालम्भोक्त्या श्रीगङ्गायाम् संसारनिवर्त्तकत्वन्दर्शयं-स्तां स्तौति त्रिदिवेति। हे त्रिदिवधुनि नाकनदि मुनीन्द्रैर्म्मुनिश्रेष्ठैर्न्नारदादिभिः मानवेन्द्रैर्मनुष्यप्रवरैर्भगीरथादिभिः सुरेन्द्रैः परिणुतास्संस्तुताः गुणपुञ्जा दयालुत्वशरण्य-त्ववदान्यत्वादिकाऽसाधारणगुणगणा यस्यां यस्या वा सा तत्सम्बोधनम्। मानसा-कर्षिणो द्रष्टृजनमनोहारिणः कुञ्जा लताप्रतानप्रच्छन्नप्रदेशा यस्याः यत्समीपवर्त्तिन इत्यर्थः। सा तत्सम्बोधनम्। हेश्रीगङ्गे प्रोल्लसद्वैभवेन सर्वोन्नतैश्वर्येण भवेन श्रीचन्द्र-शेखरेणेशेन। भवक्षेमेशसंसारसत्तायाम्प्राप्तिजन्मनोरिति मेदिनी। प्रचुररुचि बहुतर-सत्काराभिलाषं यथास्यात्तथा निजशिरसि निजोत्तमाङ्गे धृता सादरं संस्थापिता त्वम्।

नु वितर्के। नु वितर्कापमानयोः। विकल्पानुनयातीतेप्रश्नेहेत्वपदेशयोरिति मेदिनी। भवम् किम् हंसि मारयसि। नोचितमिति सोपालम्भोक्तिः। भवं संसारम् हंसि निवर्त्तयसि इति परमार्थे तु तत्परिहारः। किमिति कुत्सार्थे वा। अत्र भवविशेषणम्। अनेन सगौरवातिशयम् श्रीगङ्गायाः विचित्रम् माहात्म्यं सूचितम्॥७९॥

वितरति निजदेहं सर्वदुर्गन्धगेहम्
त्रिभुवनभगवत्यै यश्शरीरी भवत्यै।
शशिमृगवृषनागव्याघ्रचर्म्मादिरम्यान्
दिशसि किमिति तस्मै शाङ्करीन्देवि मूर्त्तिम्॥८०॥

अथ वस्तुविनिमये विचाराकौशलवर्णनव्याजेन श्रीगङ्गाया विलक्षणशक्तिमत्त्वन्दर्शयंस्तां स्तौति– वितरतीति। हे देवि गङ्गे यश्शरीरी देही नृपशुकीटपतङ्गादिः त्रिभुवनस्य वा भगवत्यै महैश्वर्य्यशालिन्यै पूज्यायै वा भवत्यै तुभ्यम् सर्वे च ते। दुष्टो घ्राणेन्द्रियव्यथाजनकः गन्धआमोदो येषान्तेदुर्ग्गन्धाः मज्जापूयश्लेश्मशोणितादयः तेषाम् गेहं निवासस्थानम् अतीवापवित्रमित्यर्थः। निजदेहमात्मीयशरीरम् प्राणान्तावस्थायाम् वितरति ददाति समर्प्पयतीति यावत्। गन्धस्सम्बन्धलेशयोः गन्धकामोदगर्वेष्विति हेमचन्द्रः। सर्वदुर्ग्गन्धिगेहमितिपाठं तु बहुब्रीहौ निष्पन्ने इत्त्थमतीव दुर्लभम्। तथापि कर्मधारयात् इनौ मत्वर्थीये कृते तत्सुसाधनम्। तत्रापि न कर्म्मधारयान्मत्वर्थीयो बहुब्रीहिश्चेत्तदर्थप्रतिपत्तिकर इतिवाक्यमुपन्यस्य तां विदुषां विरुद्धपक्षपोषकेण प्रत्ययस्थादितिसूत्रस्थेनासुब्बत इति भाष्यप्रयोगेणाभीष्टं साध्यते इत्याद्यनुसन्धेयम्। तस्मै वितीर्णतथोक्तदेहाभिमानिने शरीरिणे जीवाय शशिमृगवृषनागव्याघ्रचर्म्मादिरम्याम्बालेन्दुकृष्णहरिणमहोक्षशेषनागशार्दूलकृत्तिशोभनीयाम्। मृगे कुरङ्गवातायुहरिणाजिनयोनयइति। उक्षाभद्रोबलीबर्दऋषभोवृषः अनड्वान्सौरभेयोगौरिति। शार्दूलद्वीपिनौ व्याघ्रे इति अजिनञ्चर्मकृत्तिस्त्रीति चामरः। शाङ्करीं शङ्करसम्बन्धिनीम् मूर्त्तिङ्कायम्। मूर्त्तिः कायकाठिन्ययोरिति मेदिनी। दिशसि त्वन्ददासि। इत्येतत्किम्? किमिति प्रश्ने एतादृशो विनिमयः केन क्रियते। विचारय मनसि। क्क गतो विवेकस्तवेत्युपालम्भः। अनेन स्वजले सन्त्यक्तशरीरम्प्राणिमात्र श्रीशङ्करम् विदधासि। अतस्तेऽतीवाचिन्तनीयं महत्वमितिसूचितम्॥८०॥

अगणितजनिजातप्रोत्कटैनोनिवृत्त्यै
सुरनदि यदि भूमावाव्रजिष्यो न च त्वम्।
अतिपतितजनौघव्याप्त्यकम्याऽप्यगम्या
कथमियमभविष्यत्सर्वसौभाग्यरम्या॥८१॥

अथश्रीगङ्गायां निखिलभूमण्डलसौभाग्यकारणतां वर्णयंस्तां स्तौति अगणितेति। हे सुरनदि सुपर्वसरित् श्रीगङ्गे चकारः पूर्वस्मात्समुच्चये। यदि चेत्

अगणिताभिरगणितासु वा जनिभिर्ज्जन्मभिः जनिषु जन्मसु वा जनुर्ज्जननजन्मानिजनिरुत्पत्तिरुद्भवइत्यमरः। जातानि समुत्पन्नानि यानि प्रोत्कटानि भयङ्कराणि श्रवणमात्रात् हृदयकम्पजनकानि एनांसि त्वत्पराङ्मुखजनपापानि तेषाम् निवृत्त्यै स्वकीयसन्निधिमात्रेण समुच्छेदाय भूमौ पृथिव्याम् त्वम् न आव्रजिष्यः न आगमिष्यः तर्हि अतिपतितजनानाम् ओघेन समुदायेन ओघस्य समुदायस्य वा या व्याप्तिस्सर्वतोव्याप्यवर्त्तमानता तया अकम्याऽकमनीयाऽनाकाङ्क्षणीया वा अतएव अगम्याऽनाश्रयणीया प्रवेशाऽयोग्या वा अपि इयम्भूमिः सर्वसौभाग्यरम्या परिपूर्णसुभगतारमणीया सर्वथैव मानसासंक्तिविषयइत्यर्थः। कथमभविष्यत्? न कथमपीत्यर्थः। लिङ्निमित्तेलृङ्क्रियाऽतिपत्ताविति लृङ्। कलौ बहुलतरदुरितविधानैकतानमानसजनव्याप्तिदोषेण सर्वथैव परिहरणीयताऽऽस्पदमप्ययम्भूलोकः विविधदुरुद्धरवृजिनभरनिवारणोद्धुरभवदीयागमनप्रसादेनातिहृदयङ्गमतां समागत इति भावः। अनेन इदम्भूण्डलम् सर्वैश्वर्या भगवत्या भवत्यैव मण्डितमिति सूचितम्॥८१॥

यदवधि तव मातस्सर्वपापापहत्यै
दृढपरिकरताऽभूदात्मसेवापराणाम्।
तदवधि रविसूनोः पत्तनम्पाशबद्धाः
करुणमतिरुदन्तः के गतास्सेवकास्ते॥८२॥

अथ भङ्ग्यन्तरेण श्रीगङ्गायाः पापनिवारणतत्परत्वम्प्रतिपादयंस्तां स्तौति यदवधीति। हेमातर्ज्जननि सर्वथैव सदयहृदये यदवधि यस्मात्समयादारभ्य आत्मसेवापराणां निजस्नानपानाद्यर्चनैकतानचेतसाञ्जनानाम् सर्वपापापहत्यै निखिलकलुषनिराकरणार्थम् तव दृढपरिकरताऽनुन्मोचनीयाच्छेद्यगात्रिकाबन्धता परिपक्वविवेकता वा अभूदभवत्। भवेत्परिकरस्सङ्घेपर्यङ्कपरिवारयोः प्रगाढगात्रिकाबन्धे समाचारविवेकयोरिति मेदिनी। आकरवचनादत्र यद्यपि परिकरशब्दस्यैव दृढगात्रिकाबन्धवाचित्वात् दृढशब्दस्य व्यर्थताऽऽपत्तिः, तथापि अत्यर्थकत्वेन विवेकांशोपयोगित्वेन वा सार्थक्यमित्यनुसन्धेयम्। तदवधि तस्मात्समयादारभ्य पाशबद्धाः करकटिकण्ठपादादौ यमदूतैः पाशसन्दानिताः अतएव करुणङ्करुणरसप्रधानम् यथास्यात्तथा अतिशयेन रुदन्तः उच्चैस्स्वरेण रोदनङ्कुर्वन्तस्सन्तः के ते तव सेवकाः पूजकाः त्वयि स्नानादि कुर्वाणा इत्यर्थः। रविसूनोस्सूर्यात्मजस्य यमस्य पत्तनं नगरीम् गताः प्राप्ताः नानाविधनरकदुःखमन्वभवन्नित्यर्थः। न केपीति काकुः। धर्मराजः पितृपतिस्समवर्त्तीपरेतराट् कृतान्तोयमुनाभ्राताशमनोयमराड्यम कालोदण्डधरः श्राद्धदेवोवैवस्वतोऽन्तकइत्यमरः। पुरम्पुरीपूर्न्नगरीपत्तनम्पुटभेदनमितिधनञ्जयः। अनेन श्रीगङ्गासेविभिः पुण्यवद्भिर्ज्जनैः स्वप्नेऽपि निरयदुःखानुभवसम्भावनाऽपि न विधेयेति सूचितम्॥८२॥

स्वचरितदुरिताशुध्वंससामर्थ्यवत्या-
दृतकलुषविशेषान्दूरदेशान्भवत्या।
खरकरंसुतदूता दण्डपाशादिहस्ताः
कथय कथमयन्ते पापिनोऽन्विष्य धर्त्तुम् ॥८३॥

अथश्रीगङ्गाया माहात्म्यकथाप्रसङ्गप्रभावातिशयवर्णनद्वारा तांस्तौति स्वचरितेति। मातरिति पूर्वतोऽनुवर्त्तनीयम्। हेमातः श्रीगङ्गे स्वचरितैरतीवदुर्द्धरदुरितन्यक्कारयोगिजनदुर्ल्लभसद्गतिसत्वरप्रापणादिस्वरूपतत्तपुराणेतिहासप्रसिद्धपौराणिकजनकथितात्मीयवृत्तैः दुरितानान्तद्देशीयप्राणिसम्पादितानाम्पापानाम् आशु तच्छ्रवणसमकालमेव ध्वंसस्समुच्छेदः। तत्र यत्सामर्थ्यं शक्तिमत्वम् तदस्यामस्या वाऽस्तीति सा तथोक्ता। तया भवत्या त्वया हृतकलुषविशेषान्निवारितविशिष्टपापात् दूरदेशान् त्वत्प्रवाहतो विप्रकृष्टान्देशान् दण्डपाशादयो हस्तेषु येषान्ते तथाभूतास्सन्तः आदिना गदातोमरकुन्तशक्तिखड्गच्छुरिकादिग्रहः। खरकरस्योष्णरश्मेः श्रीमार्त्तण्डस्य सुतस्सूनुर्यमः तस्य दूताः यूयं यमेनाहूता इति सन्दिश्य तत्क्षणमेव पाशादिना निबध्य सहैव नेतारः किङ्कराः अन्विष्येतस्ततोऽन्वेषणङ्कृत्वा पापिनस्तत्तद्देशवर्त्तिनो दुरितकारिणो जनान् धर्त्तुङ्गृहीतुम्। कथं अयन्ते कथङ्गच्छन्ति इति त्वङ्कथय वद। व्यर्थमेव तदानयनाय तत्र तेषाम् गमनमिति भावः। अनेन यस्मिन्देशेश्रीगङ्गायाः अत्यन्तपवित्राः अद्भुतार्थाः कथाप्रसङ्गाः जनैस्सादरंश्रूयन्ते तद्देशवासिनोऽपि जनाः यमराजशासनविरहिताः साक्षात्त्वत्सेवासावधानहृदयास्तथाभूता भवन्तीति किमु वक्तव्यमिति सूचितम् ॥८३॥

द्युनदि वियति यत्र प्रागदर्शि क्वचिन्नो
सविबुधसुबधूटीदिव्यगानं विमानम्।
दरमुरजविपञ्चीदुन्दुभिध्वानरम्यैः
किमिति न तदिदानीन्दृश्यते सङ्कुलन्तैः ॥८४॥

अथश्रीगङ्गायाः प्रसादवैभवतो जनानामूर्द्ध्वगतिं वर्णयंस्तां स्तौति द्युनदीति। हे द्युनदि स्वस्तरङ्गिणि श्रीगङ्गे प्राक्पूर्वस्मिन्समये त्वदागमनात्पूर्वमित्यर्थः। यत्र वियति व्योम्नि क्वचिदपि प्रदेशे विबुधसुवधूटीनां सुरवरयुवतीनाम् रम्भोर्वशीप्रमुखानामप्सरसामित्यर्थः। दिव्यगानन्दिव्यगीतम् तेन सह वर्त्तते तत्तथोक्तम्। विमानमेकमपि ब्योमयानम् नो अदर्शि न दृष्टम्। गीतङ्गानमिमे समे इति, व्योमयानं विमानोऽस्त्रीत्युभयत्राप्यमरः। तद्वियत् इदानीमस्मिन्समये दरमुरजविपञ्चीदुन्दुभिध्वानरम्यैश्शङ्खमृदङ्गबीणाभेरीशब्दरमणीयैः तैर्बहुभिर्विमानैः सङ्कुलङ्क्लिष्टं व्याप्तन्निरन्तरालमिति यावत् सत् न दृश्यते नैवावलोक्यते किमपीति शेषः। इत्येतत्किम् ? किङ्कारणमत्रेति

वदेत्यर्थः। तथा च भागवते दशमस्कन्धे सप्ततितमेऽध्याये– मृदङ्गबीणामुरज-वेणुतालदरस्वनैः। ननृतुर्ज्जगुस्तुष्टुवुश्च सूतमागधवन्दिन इति, तदुपरि श्रीधरस्वामिनः दरश्शङ्ख इति। अथ च तत्रैव षष्टेस्कन्धेऽष्टमेऽध्याये हरिर्विदध्यान्ममसर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे। दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः। त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् दरेन्द्र विद्रावय कृष्णपूरितोभीम-स्वनोऽरेर्हृदयानि कम्पयन्निति मृगङ्गामुरजाइति वीणा तु वल्लकी विपञ्चीति भेरीस्त्री-दुन्दुभिः पुमानिति चामरः। अनेन श्रीगङ्गायास्स्नानादिविधानजनितपुण्यप्रभावा-त्प्राणिभिः स्वर्गादिषु विमानैर्गम्यते इति सूचितम्॥८४॥

प्रविहितबहुकृच्छ्रैःकिं ममास्तीह कृच्छ्रै-
रमरधुनि वराकैः किम्पुनर्म्मे पराकैः।
शिववितरणधन्यैर्देवि तीर्थैः किमन्यैः
प्रभवसि यदि लोके त्वं हताऽशेषशोके॥८५॥

अथ च संशुद्धिकारणकृच्छ्रादिव्रतसर्वतीर्थोपासनाऽत्यरुचिकथनव्याजेनात्म नस्तदेकपरायणत्वम्प्रतिपादयन् श्रीगङ्गां स्तौति प्रविहितेति। हेअमरधुनि देवनदि श्रीगङ्गे प्रविहितानि साधनावस्थायां कृतानि बहूनि बहुलानि कृच्छ्राणि कष्टानि यैः तानि तथोक्तानि। तैः कारणा तु यातना तीव्रवेदना पीडाबाधाव्यथादुःखमामन-स्यम्प्रसूतिजम् स्यात्कष्टङ्कृच्छ्रमाभीलमित्यमरः। कृच्छ्रैस्सान्तपनादिभिर्व्रतविशेषैः कृच्छ्रं सान्तपनादिकमित्यमरः। कृच्छ्रमाख्यातमाभीलेपापसान्तपनादिनोरिति मेदिनी। तत्स्व-रूपन्त्वाह एकभक्तैश्चनक्तैश्च तथैवाऽयाचितैरपि उपवासैश्चतुर्भिस्तुकृच्छ्रं षोडशभिर्दिनैः। एकभक्तेन नक्तेन तथैवायाचितेन च उपवासेन चैकेन पादकृच्छ्रम्प्रकीर्त्तितम्। द्वाभ्यां द्विपादकृच्छ्रं स्यात्त्रैगुण्येन त्रिपादकम् षोडशैदिवसैर्यत्तु पूर्णङ्कृच्छ्रम्प्रकीर्त्तितमिति स्मृतिसारे पराशरः। बहुवचनेन सान्तपनमहासान्तपनपर्णकृच्छ्रतप्तकृच्छ्रादीनाम्पादकृच्छ्रादीनां वा सङ्ग्रहः। इहास्मिँल्लोके मम किम् तर्हि प्रयोजनमितिशेषः। अस्ति विद्यते न किमपीत्यर्थः। एवमुत्तरत्रापि पुनर्भूयः वराकैश्शोचनीयैरतितुच्छैरित्यर्थः। वराकस्सङ्गरे पुंसि शोचनीयेऽभिधेयवदिति मेदिनी। पराकैरेतन्नामकैर्व्रतविशेषैः, द्वादशाहोपवासेन पराकः परिकीर्त्तित इतियाज्ञवल्क्यः। मे मम तर्हि किम्प्रयोजनमस्ति, न किमपीत्यर्थः। बहुवचनेन चात्र चान्द्रायणादिग्रहः। हे देवि प्रकाशस्वभावे श्रीगङ्गे शिववितरणेन निजशरणगजनकल्याणदानेन धन्यैः पुण्यवद्भिः पावनैरित्यर्थः। धन्याधान्यामलक्यो-स्स्याद्धन्यम्पुण्यवतिप्रियेष्विति मेदिनी। अन्यैस्त्वत्तोभिन्नैः तीर्थैः प्रभासपुष्करादिभिः क्षेत्रैः मे मम तर्हि किम्प्रयोजनमस्ति ? न किमपीत्यर्थः। हे हताशेषशोके दूरीकृता-खिलनिजजनदौर्मनस्ये लोकेऽस्मिन्भुवने लोके जनेऽपि भुवन इति मेदिनी। यदि

चेत् त्वम् प्रभवसि। तत्तत्कर्त्तव्यशुद्ध्यादिकर्म्मविधाने प्रभुरसि समर्थतरासीति यावत्। अनेन सर्वव्रततीर्थानुष्ठानार्चाभ्योऽधिकतरमाहात्म्यशालित्वं श्रीगङ्गायास्सूचितम्॥८५॥

त्रिदिवनदि मदीयं मानसं वाञ्छतीद-
ङ्किमिति च यदि मत्तः पृच्छसि त्वं शृणुष्व।
सरदसुविगमार्वागस्तु न त्वद्वियोगो
लुठतु च वपुरेतत्त्वय्यसूनाम्प्रयाणे॥८६॥

अथ मनोऽभिलाषं सम्प्रार्थयन् निखिलवाञ्छितप्रदानधुरीणायां स्वमहिमवैभववर्द्धनप्रवीणायां सम्पादितशरणगजनसांसारिकदुःखभङ्गायां भक्त्यतिशयन्दर्शयति। हे त्रिदिवनदि स्वर्गनदि श्रीगङ्गे! मदीयम्मामकम् मानसञ्चेतः चित्तन्तु चेतो हृदयं स्वान्तंहृन्मानसं मन इत्यमरः। इदं मद्बुद्धिस्थम् किञ्चित् वाञ्छति समभिलषति च पुनः यदि चेत् भवदीयं मानसम् किं वाञ्छति इतीत्थम् मत्तो माम्। सार्वविभक्तिकस्तसिः। पृच्छसि पृच्छां विदधासि तर्हि। यत्तदोर्न्नित्यसम्बन्धइतिन्यायात्तर्हीत्यस्याध्याहारः। त्वम् शृणुष्व समाकर्णय। अकर्म्मकाच्चेति शृणोतेरात्मनेपदम्। तदेव कथयति– अभ्यन्तराद्वहिः वाह्यादभ्यन्तरम् सरन्ति चलन्ति ये तेषाम् असूनाम्प्राणानाम्। पुंसिभूम्न्यसवः प्राणाश्चैवमित्यमरः। यो विशेषेण गमो गमनं विनाशः वहिर्न्निर्गत्य पुनर्न्नान्तःप्रवेश इति यावत्। तस्मादर्वाक् पूर्वमेव यावदहम् जीवामीत्यर्थः। त्वद्वियोगोऽत्तीवदुष्कृतसम्पत्तिसूचकस्त्वद्विरहः नाऽस्तु न भवतु। यावज्जीवन्त्वन्निकटे मम निवासो भवत्वित्यर्थः। च पुनः असूनाम्प्रयाणे सति पञ्चत्वे सतीत्यर्थः अर्थान्ममेत्यध्याहारः एतदित्यङ्गुल्या निर्देशः। मदीयं वपुश्शरीरम्। अथकलेवरम् गात्रंवपुस्संहननंशरीरं वर्ष्मविग्रहः कायोदेहःक्लीवपुंसोस्स्त्रियांमूर्त्तिस्तनुस्तनूरित्यमरः। त्वयि प्रवाहस्वरूपायाम् लुठतु परिवर्त्तनं विदधातु। अनेन श्रीगङ्गानिकटनिवासस्य सर्वसारत्वं सूचितम्॥८६॥

शृणु शृणु मम गङ्गे प्रार्थनावाक्यमेतत्
कुरु कुरु मयि मातस्सानुकम्पं मनस्त्वम्।
मनसि मनसिजार्त्तेर्म्मे निधेहि प्रशान्तिं
वितर वितर मह्यं मङ्क्षु कैवल्यमुक्तिम्॥८७॥

अथ स्वाभिलषितत्रयम्प्रार्थयते शृण्विति। हे गङ्गे मम एतद्वक्ष्यमाणम् प्रार्थनावाक्यं याच्ञाप्रवणानुनयपदावलीम् शृणु शृणु नित्यम्पुनः पुनर्वाऽवधेहि। तत्किमित्यपेक्षायामाह– हे मातर्ज्जननि मयि मद्विषये स्वमात्मीयम्। स्वस्स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियामिति मेदिनी। मनश्चित्तम् सानुकम्पं सदयम्

कारुण्यङ्करुणाघृणा कृपादयानुकम्पास्यादनुकोशोऽपीत्यमरः। कुरुकुरु नित्यं विधेहि अन्यथा कथं मममनोऽभिलषितसिद्धिरिति भावः। किञ्च मे मम मनसि मानसे मनसिजार्त्तेः कामपीडायाः अर्त्तिः पीडाधनुष्कोट्योरित्यमरः। त्वम् शान्तिमुपशमम् निधेहि संस्थापय। विधेहीति पाठे तु कुर्वित्यर्थः। त्वत्प्रसादात्संसारतरुमूलत्रिभुवन-विजयिमदनविकारदुःखितम्मन्मनो न भवत्वित्यर्थः। किञ्च मह्यम् मङ्क्षु झटिति जन्मान्तरप्रदानकुशलनानाविधकुकर्मविधानात्प्रागेवेत्यर्थः। द्राग्झटित्यञ्जसाह्नायद्रा-ङ्क्षुसपदिद्रुतेम इत्यमरः। कैवल्यमुक्तिमौपनिषदज्ञानजन्यम्पुनरावृत्तिविरहितन्निर्गलित-वेद्यान्तरमानन्दस्वरूपं मोक्षमित्यर्थः। वितर वितर देहि देहि। अनेन श्रीगङ्गायास्सर्व-सामर्थ्यशालिमहिमवैभवाश्रयत्वन्ध्वनितम् ॥८७॥

अमरनदि भवत्या नाम गङ्गेति पूतं
सकृदपि मनुजो यो भाषतेऽन्ते कथञ्चित्।
किमिति किमिति पाशीभूतनागोरुदेहै
र्व्यथयसि गलगेहैस्तं समारुह्य शीर्षम् ॥८८॥

अथ निन्दाव्याजेन श्रीगङ्गायास्स्तुतिङ्कुर्वन् सप्रणयन्तामभिमुखीकुरुते अमरन-दीति। हे अमरनदि त्रिदशततटिनि श्रीगङ्गे यो मनुजो यः कोऽपि मर्त्त्यः सकृदपि एकवारमपि कथञ्चित्केनापि प्रकारेण भवत्यास्तव गङ्गेति पूतम्पवित्रं सञ्चिताखिलकल्मष-विलयकुशलमित्यर्थः नामाभिधानम् अन्ते प्राणोत्क्रमणसमये भाषते समुच्चारयति शीर्षमारुह्य तस्य शिरसि अधिष्ठिता भूत्वेत्यर्थः। गलस्तस्य मनुजस्य कण्ठ एव गेहङ्गृहं येषान्तैः, समावेष्टिततत्कण्ठैरित्यर्थः। पाशीभूतानां रज्वादिस्वरूपबन्धनसाधनी-भूतानाम् नांगानां सर्प्पाणाम् उरवोऽतिदीर्घा ये देहा भोगास्ते तथोक्तास्तैः करणैः तम् स्वकीयम्पूतं नाम भाषमाणम् मनुजम् व्यथयसि सम्पीडयसि इत्येत्किमिति प्रश्ने अद्भुतार्थप्रकाशनात् वीप्सायान्द्वित्वम्। अतीववैपरीत्यमित्यर्थः। स तु त्वन्नामोच्चा-रकः त्वन्तदतिपीडाप्रदेति निन्दया कथमपि सकृदपि स्वनामोच्चारणकर्त्तारं मनुजमात्रम् श्रीमन्महादेवविग्रहं विधाय कण्ठदेशे नागैः मूर्द्धि निजप्रवाहेण भूषयसीत्यतीवाचिन्तनीय-प्रभावासीति स्तुतिर्गम्यते। अनेन श्रीगङ्गानामप्रभावो लोकोत्तर इति सूचितम् ॥८८॥

हरिपदजनितस्ते शम्भुकेशैश्च बन्धा-
ज्जलधिशिखरिपुत्र्योर्ग्गर्ववत्यो र्विवादम्।
जननि परिहरन्तीं स्वाम्बुपानादिरक्तान्
हरिगिरिशतनूकान्कुर्वतीन्त्वाम्प्रपद्ये ॥८९॥

अथश्रीगङ्गाया भङ्ग्यन्तरेण जलपानादेरद्भुतफलवैभवन्दर्शयंस्तां स्तौति। हरिपदेति। हेजननि मातर्गङ्गे स्वस्यात्मनः श्रीगङ्गाया इत्यर्थः। यत् अम्बु जलम्

तस्य पानादौ आदिनाऽवगाहनादिग्रहः। रक्ताननुरागवतो देहिनः पञ्चत्वावसरे हरिगिरिशयोः श्रीविष्णुश्रीशङ्करयोः तनूरिव तनूश्शरीरं येषान्तांस्तथोक्तान्। बहुव्रीहौ कप्। कुर्वतीम् पुण्यानां सूक्ष्मतरतारतम्यात् कांश्चिद्विष्णुविग्रहान् कांश्चिच्छङ्करविग्रहान् विदधतीमित्यर्थः। अतएव हरिपदजनितः श्रीमद्विष्णुपादपद्मप्रादुर्भावात् च पुनः शम्भुकेशैः अर्थात् श्रीमन्महादेवातिसान्द्रदृढतरजटाजूटैः बन्धाद्वन्धनाद्वेष्टनात्सन्दाननादित्यर्थः। गर्ववत्योरभिमानवत्योः जलधिशिखरिपुत्र्यो रत्नाकरगिरिराजकन्ययोर्ल्लक्ष्मीपार्वत्योरित्यर्थः। यथाक्रमम् कदाचित् श्रीमहादेवदर्शनार्थम् कैलासयात्रावसरे रहसि सहावस्थित्यवस्थायाम् विवादम्। यतः मत्पत्युः श्रीविष्णोः पादावनेजनीभूता यतश्च अतएव गौरवात् त्वत्पतिना महादेवेन शिरसा सत्कृता श्रीगङ्गा अतएव अहम् त्वत्तोऽतीवप्रशस्तास्मि। नहि नहि कोऽपि नास्ति त्रिभुवनमण्डले मद्धारणसमर्थइति निजश्यामलीभावसम्भावनया भयान्नीलोत्पलदलकान्तिकान्तविष्णुपादाङ्गुष्ठनखमात्रमेव स्पृष्ट्वा आगत्य स्वास्थ्यमनुभूय तिष्ठामीति च तद् दुर्दर्प्पपर्वतदलनातिप्रौढकुलिशीभूतेन मत्स्वामिना त्रिभुवनेश्वरेण महेश्वरेण निरायासमेव स्वजटाजूटैकशिखाभागे वन्दीकृतास्ति श्रीगङ्गा। अतस्त्वत्तोऽतीवाहं श्रेष्ठास्मीति परस्परविरुद्धं वादम् परिहरन्तीन्त्वाम् अहम् प्रपद्ये शरणं व्रजामि। अनेन श्रीगङ्गायाअनिर्वचनीयमाहात्म्यशोभित्वं सूचितम्॥८९॥

त्वदधिगममनस्कास्त्यक्ततेजस्तमस्का
स्स्वनियतिपरतन्त्रा प्रोक्तगौरीशमन्त्राः।
जननि पथि मृता ये सत्पदे तेऽनपाये
किमु न हरिसमाना भान्ति सन्तस्समानाः॥९०॥

अथ श्रीगङ्गास्नानाय गृहान्निर्गत्य मार्ग एव लब्धपञ्चत्वानां मानवानां सद्गतिप्राप्तिं वर्णयन् श्रीगङ्गां स्तौति त्वदधीति। हे जननि मातः श्रीगङ्गे त्वदधिगमे भवदीयसमागमे मनश्चित्तं येषान्ते तथोक्ताः। शेषाद्विभाषेति बहुव्रीहौ कप्। एवमग्रेऽपि त्यक्ततेजस्तमस्काः परिहृतपराक्रमकार्यरजोगुणनिर्विवेकत्वजनकतमोगुणाः सत्वैकप्रधानाइत्यर्थः। तेजोदीप्तौप्रभावेच स्यात्पराक्रमरेतसोरिति मेदिनी। तमो राहौगुणेपापेध्वान्ते शोकेजवेबलेइति हेमचन्द्रः। स्वनियतिपरतन्त्रा निजदैवपराधीनाः निजदैवानुरोधादलब्धत्वद्दर्शनमनोरथसिद्धय इत्यर्थः। दैवन्दिष्टम्भागधेयम्भाग्यं स्त्रीनियतिर्विधिरित्यमरः। अतएव प्रोक्तो गौरीशमन्त्रः नमः शिवायेति पंचाक्षर स्वरूपो गौरीवृभेति, त्र्यक्षर स्वरूपो वा यैस्ते तथोक्ताः सन्तः। ये मानवाः पथि त्वामप्राप्यैव त्वन्मार्गरव मृताः गताः शवीभवन्तीतिशेषः– ते मानवाः हरिसमानास्सुरेन्द्रतुल्या विष्णुसदृशाश्शिवसदृशा वा सन्तो भवन्तः हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु कपौसिंहे-

हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् वाच्यवत्पिङ्ग हरितोरिति मेदिनी। अथ च समानास्तत्तल्लोकनिवासिभिस्सम्पादितसत्काराः देवरूपत्वात्मदृष्टयो वा सन्तः अनपाये यद्गत्वा न निवर्त्तन्ते तद्धाम परमं ममेति वचनाद्विनाशरहिते सत्पदे उत्तमस्थाने परमेश्वरलोके वा न भान्ति किमु भान्त्ये वेति विमर्शः। किमु सम्भावनायां विमर्श इति हेमचन्द्रः। अनेन कृतस्नानादिसङ्कल्पानां यदीदृशी गतिस्तर्हि कृतस्नानादीनान्तु कीदृशीति ध्वनितम् ॥९०॥

निजजनशुभचेतो धर्म्मकर्म्मैकहेतो
भवजलनिधिसेतो मोक्षसम्पत्तिकेतो।
तव गुणनिकुरम्बन्नो यया गीतमम्ब
त्रिदिवधुनि तयेह व्यर्थया जिह्वया किम् ॥९१॥

अथश्रीगङ्गाया गुणगानशून्यजिह्वानिष्फलतां वर्णयंस्तां स्तौति निजेति। निजजनशुभेषु स्वसेवकजनकल्याणेषु चेतश्चित्तं यस्यास्सा तथोक्ता तत्सम्बोधनम् आत्मभक्तसमुद्धारोत्सुके इत्यर्थः। श्वश्श्रेयसं शिवम्भद्रङ्कल्याणं मङ्गलं शुभम् भावुकम्भविकम्भव्यङ्कुशलङ्क्षेममस्त्रियामित्यमरः। धर्म्मकर्मणाञ्जपदानतपोहोम-यज्ञदेवाद्यर्चनादिधर्मकार्याणाम् हेतुः कारणन्तत्सम्बोधनम्। धर्मकर्म्मस्थितिकारण-स्वरूपे इत्यर्थः। भवजलनिधेर्न्नानाविधजन्ममरणादिदुःखस्वरूपसंसारसमुद्रस्य सेतुरालिः पाषाणादिनिबद्धः पादचारेण नद्यादिपारतीरगमनसाधनविशेषः पुल्लेति भाषया प्रसिद्धः। तत्सम्बोधनम्। स्वसेवकसंसारोद्धारकुशले इत्यर्थः। सेतुरालौ-स्त्रियाम्पुमानित्यमरः। मोक्षसम्पत्तेर्मोक्षसम्पदः कैवल्यैश्वर्यस्येत्यर्थः। केतुः पताका तत्सम्बोधनम् शरणागतजनकैवल्यमुक्तिसिद्धिसूचकध्वजस्वरूपे इत्यर्थः। केतुर्न्ना-रुक्पताकाऽविग्रहोत्पातेषुलक्ष्मणीति मेदिनी। हे अम्ब जननि श्रीगङ्गे यया जिह्वया रसनया तव गुणनिकुरम्बं सचरितातिरमणीययशस्संवलितपतितजनो-द्धारधुरन्धरत्वादिगुणसमूहम्। गुणो मौर्व्यामप्रधाने रूपादौ सूदइन्द्रिये। त्यागशौर्या-दिसत्वादिसन्ध्याद्यावृत्तिरज्जुष्विति मेदिनी। समूहो निवहव्यूहसन्दोहविसरव्रजाः स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः समुदायस्समुदयस्समवायश्चयोगणः। स्त्रियान्तु संहतिर्वृन्दंनिकुरम्बङ्कदम्बकमित्यमरः। नो गीतम् प्रेमरससंस्कृततत्तत्स्वरग्रामादिगो-चरताम् नो प्रापितम्। यद्वा सज्जनगोष्ठीषु नो कथितम्। हे त्रिदिवधुनि स्वर्णदि! इहास्मिन् देहे लोके जन्मनि वा व्यर्थया अक्षयसुखसाधनत्वदीय-सुगुणगणगानपराङ्मुखत्वेन निष्फलसद्भावया तया जिह्वया किम्। न किमपि फलमित्यर्थः। एतादृशी जिह्वा छागीकण्ठस्तनवन्निष्फलैवेति भावः। अनेन विवेकिभिस्सर्वदैव श्रीगङ्गागुणगानं विधेयमिति ध्वनितम् ॥९१॥

व्यपगतसुविवेकाः पूर्वजन्माघभारै-
रविरतनिरयस्थाः किन्न जायन्त एते।
भुवननुतगुणायान्त्वय्यजाद्यर्च्चिताया-
मितरसरिति वाऽहो ये मतिङ्कुर्वतेऽम्ब ॥९२॥

अथश्रीगङ्गायां साधारणनदीबुद्धिफलन्दर्शयंस्तां स्तौति व्यपगतेति। हे अम्ब मातः श्रीगङ्गे पूर्वजन्माघभारैः प्राक्तनानेकजन्मसञ्चितदुष्कृतसमूहैः अन्यथा कथमेतादृगविवेकवैभवमित्यर्थः। व्यपगतो विनष्टस्सुविवेकः सत्यतया सदसद्वस्तुविचारो येषान्ते तथोक्ताः ये जनाः भुवननुतगुणायान्त्रिजगत्संस्तुतदयालुत्ववदान्यत्वशरण्यत्वपतितजननिरयपातनिवारणोत्सुकत्वादिसद्गुणगणायाम् अजादिभिस्साक्षाद्ब्रह्मदेवादिभिरपि इतरेषाङ्का वार्त्तेति भावः। अर्चितायाम्पूजितायां सत्कृतायामित्यर्थः। अन्यथा त्वत्स्नानादिनाऽपगतपापान् ब्रह्मलोकादिगतान्प्राणिनः कथंतेसत्कुर्युरित्यर्थः। अजश्छागे हरेविष्णौ रघुजेवेधसि स्मरे इति हेमचन्द्रः। त्वयि साक्षाद्ब्रह्मद्रवस्वरूपायां श्रीगङ्गायाम्। अहो इत्याश्चर्ये। महदाश्चर्यमेतदित्यर्थः इतरसरिदिव साधारणतया-अन्यनद्यामिव। व शब्दोऽत्रेवार्थो। वम्प्रचेतसि जानीयादिवार्थे च तदव्ययमिति मेदिनी। शात्रवं च वपुर्यश इति रघुकाव्ये। मतिम्बुद्धिम् कुर्वते। यथान्यास्सहस्रशो नद्यो भूमौ वर्त्तन्ते तथेयमप्येका नद्यस्ति कोऽस्त्यस्यां विशेषइति मनसि निश्चिन्वन्ति इत्यर्थः। ते एते प्रक्रान्तवृत्ता जनाः अविरतं निरन्तरमविच्छिन्नम्बहुकालपर्य्यन्तमित्यर्थः। निरयेषु रौरवकुम्भीपाकादिनामधेयेषु नरकेषु तिष्ठन्तीति तथाभूताः न जायन्ते। न भवन्ति किम्? अपितु जायन्त एवेत्यर्थः। अनेन आस्तिकेन मानवेन जातुचिदपि श्रीगङ्गायामन्यनद्यामिव जलमात्रबुद्धिर्न्न विधेयेति द्योतितम् ॥९२॥

बहुभिरपि किमेभिर्देवि धान्यै धनै र्वा
धृतिमतिकुलशीलैः किन्नयाचारशौर्य्यैः।
यमनियमतितिक्षादानदाक्षिण्यमुख्यै:
किमथ न हृदये चेत्तेऽम्ब जागर्त्ति भक्तिः ॥९३॥

अथ श्रीगङ्गायां भक्तिं विना बहुलतरधनधान्यादिवैफल्यं वर्णयन् तां स्तौति बहुभिरपीति। हेअम्ब मातः श्रीगङ्गे चेद्यदि हृदये मनुष्याणाम्मानसे ते तव भक्तिरनुरागविशेषः न जागर्त्ति नोद्बुद्धोस्ति तर्हि हे देवि एभिर्दृश्यमानैः बहुभिरपरिमितैः धान्यैर्ब्रीह्यादिभिः वाऽथवा धनैर्न्नानाविधैर्द्रव्यैः किम्? न किमपीत्यर्थः। ऐहिकसुखमात्रसाधनत्वात्तेषान्निरर्थकत्वमेवेति भावः। धृतिर्धैर्यम् मनसो विक्षोभहेतौ सत्यपि अक्षोभता मतिस्सर्वत्रैव कार्यजातेऽतिकुशला बुद्धिः। कुलं निष्कलङ्कोऽतिख्यातोऽनुत्तमो वंशः। शीलं स्ववर्णाश्रमाविरुद्धसुचरिताश्रयणमनस्कत्त्वम्, शुचौ तु चरिते शीलमित्यमरः। तैश्च किम्? न किमपीत्यर्थः।

केवलं लौकिकसिद्धिहेतुत्वात्तेषाम्मोघत्वमिति भावः। अथ नयो नीतिः धर्म्यमाचरणमित्यर्थः। शास्त्रदृष्टेन विधिना निजसर्वकर्मप्रवृत्तिरूपो व्यापारविशेषः। शौर्य्यं शूरत्वम् क्वचिदप्यकातरत्वमित्यर्थः। तैः किम्? न किमपीत्यर्थः। ख्यातिमात्रफलकत्वात्तेषामपि वैफल्यमित्यर्थः। यमा अहिंसादयः पञ्च, तत्राहिंसासत्याऽस्तेयब्रह्मचर्य्याऽपरिग्रहा यमा इतिभगवान्पजञ्जलिः। नियमाश्शौचप्रमुखाः पञ्च तथा च शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमा इति भगवान्पतञ्जलिः। शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः नियमस्तु स यत्कर्म नित्यमागन्तुसाधनमित्युभयत्राप्यमरः। तितिक्षा क्षान्तिर्द्वन्द्वदुःखसहनमित्यर्थः। क्षान्तिस्तितिक्षेत्यमरः। दानं स्वस्वत्वनिवृत्तिपूर्वकं शास्त्रीयपात्रस्वत्वप्रतिपादनम्। दाक्षिण्यं सर्वस्मिन् कर्मणि चातुर्य्यम्। तन्मुख्यैस्तत्प्रभृतिभिः। अथ किम्? न किमपीति भावः। तेषाङ्क्षयिष्णुस्वर्गीयस्त्रक्चन्दनबनितादिसमुपभोगफलत्वाद्यर्थत्वमेवेति भावः। अनेन सर्वेभ्योऽत्यधिकाऽक्षयिष्णुनिर्वाणसुखहेतुत्वादेका श्रीगङ्गाभक्तिरेव सर्वथैव विवेकिभिर्विधेयेति ध्वनितम्॥९३॥

हरिरसरलदृष्टिर्दत्तपृष्ठो गिरीशो
विधिरपिविधिशून्यो दीनदीनो दिनेशः।
निखिलमपि च तीर्थं न्यङ्मुखं यस्य शुद्ध्यै
जननि विजयसे त्वन्तन्दिवम्प्रापयन्ती॥९४॥

अथश्रीगङ्गाया हरिहरादिभ्योऽप्यधिकसामर्थ्यशालित्वन्दर्शयंस्तां स्तौति हरिरिति। हे जननि श्रीगङ्गे यस्यातीवपापकारिणः प्राणिनः शुद्ध्यै शुद्धिङ्कर्त्तुम् पापमोचनायेत्यर्थः। क्रियार्थोपपदस्येत्यादिना चतुर्थी। हरिश्शरणागतजनदुःख निवारैणकगृहीतदीक्षः श्रीविष्णु असरला केन मूर्खेणात्रानीतोऽयमतीव पापिष्ठो जनस्त्वरितमेवातो निर्गच्छत्वितिवक्रतरा दृष्टिः प्रेक्षणं यस्य स तथोक्तो भवतीति शेषः। यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवतिर्वा प्रथमपुरुषो प्रयुज्यते इतिन्यायोऽत्र प्रमाणम्। गिरीशोऽखिलब्रह्माण्डनायकः सुरनरनागसमर्चितपादाम्बुजोऽतिदयालुस्सत्वरप्रसादिस्वभावो महादेवोऽपि दत्तपृष्ठः नाऽयन्दर्शनीयोऽतिदुष्कृतकारी शरीरीति पृष्ठपरिवर्तनं विधाय पराङ्मुखो भवति। अथ च विधिर्न्रिखिललोकविधानकुशलस्सर्वस्य जगतः पितामहो वेदयोनिः ब्रह्मदेवोऽपि विधिशून्यः नास्त्यस्य पापिष्ठस्य क्वचिदपि वेदे शास्त्रे पुराणे वा प्रत्यवायनिवर्तकप्रायश्चित्तविधानमिति विधानरहितो भवति। विधिर्न्नानियतौकालेविधानेपरमेष्ठिनीति मेदिनी। अथ च दिनेशः सकलविश्वान्धकारनिवारणप्रचण्डतरतेजस्कः श्रीमान्मार्त्तण्डोऽपि दीनदीनः कथमस्य दुरिताकरस्य जीवस्य शुद्धिर्भवेदिति विचारव्यग्रमानसतयाऽतिनिस्तेजस्को भवति। अपि च निखिल त्रिभुवनमध्यवर्त्ति सर्वम् तीर्थम्पुण्यक्षेत्रम्

न्यङ्मुखम्। अनेन दुष्टेन पापिजनशिरोमणिना स्वशुद्ध्यसमर्थानामस्माकम्प्रतिष्ठा धूल्याम्मेलितेत्यधोमुखम्भवति। तं हरिप्रमुखैर्निराकृतम्प्राणिनम् निजदर्शनादिमात्रेण निष्कल्मषं विधाय दिवं स्वर्ग्गम् प्रापयन्ती सती त्वम् विजयसे सर्वोत्कर्षेण वर्त्तसे। दिवमिति वैकुण्ठादेरुपलक्षणम्। अनेन श्रीगङ्गाया अलौकिकमाहात्म्यवैभवदर्शनव्याजेनावश्यसेवनीयत्वन्ध्वनितम्।।९४।।

विधिकृतसुकृतानाञ्जायते स्वर्न्निवासो
दुरितरतमतीनान्दुर्गतौ चाप्यवश्यम्।
सफलमुदितमेतत्तत्र यत्राऽस्ति नाम्ब
त्रिभुवनसुपवित्रा सञ्चरित्रा कथा ते।।९५।।

अथ पुनरपि भङ्ग्यन्तरेण श्रीगङ्गाया माहात्म्यकथाप्रभाववर्णनब्याजेन तां स्तौति विधीति। हे अम्ब मातः श्रीगङ्गे यत्र यस्मिन्देशे त्रिभुवनं त्रिजगत् सुशोभनमतिरमणीयम् पवित्रम्पूतञ्च यया सा तथोक्ता। त्रिभुवने त्रिलोक्याम् सुशोभना चासौ पवित्रा च सा तथोक्ता। उ.तिशयो वा स्वर्थः। तेन पवित्राऽतिपवित्रेत्यर्थः। सन्ति समीचीनानि प्रशंसनीयानीत्यर्थः। चरित्राणि विविधपतितजनसमुद्धारवृत्तानि यस्यां सा तथोक्ता ते तव कथा भवदीयगुणगणकथनस्वरूपा नाऽस्ति न वर्त्तते तत्र तस्मिन्देशे विधिकृतसुकृतानां शास्त्रनिर्दिष्टविधानविहितनानाविधपुण्यानाम् नृणाम् स्वस्स्वर्गे निवासो जायते। स्वरव्ययंस्वर्गनाकत्रिदिवत्रिदशालयाः सुरलोको द्योदिवौद्वेस्त्रियां क्लीबे त्रिविष्टपमित्यमरः। अथ च दुरितरतमतीनाम्पापैकासक्तबुद्धीनां मनुजानाम् अवश्यमेव दुर्ग्गतौ नरके। दुर्गतिनरिके निस्स्वेस्त्रीति मेदिनी। निवासो जायते। एतदुदितमुक्तम् स्मृतिपुराणप्रतिपादितमित्यर्थः। सफलं सार्थकम् भवतीति शेषः। त्वत्कथाप्रसङ्गपवित्रीकृते देशे वसताञ्जनानाम् नियतस्वर्गाद्युत्तमलोकप्राप्तेरवश्यम्भावित्वान्न तत्रेति भावः। अनेन यस्मिन्देशे श्रीगङ्गाकथा सज्जनैर्ग्गीयते श्रूयते स्मर्यते श्रद्धीयते च स देश एव नमस्करणीयः। तद्वासिनान्तु का वार्त्तेति ध्वनितम्।।९५।।

प्रतिकृतिमभिरूपान्तेऽम्ब निर्दिष्टरूपां-
कुशलरचितउच्चैर्म्मन्दिरे स्थापयित्वा।
सविधि सदुपचारैः प्राच्र्य संस्तौति भावात्
स किमु न गतशोके तावके याति लोके।।९६।।

अथ सुन्दरमन्दिरस्थापनापूर्वकस्वर्णादिनिर्मितश्रीगङ्गामूर्त्तिपूजनमाहात्म्यं निरूपयन् श्रीगङ्गां स्तौति- प्रतीति। हे अम्ब मातः श्रीगङ्गे अभिरूपां मनोज्ञाम्। प्राप्तरूपस्वरूपाभिरूपाबुद्धमनोज्ञयोरित्यमरः। निर्दिष्टोऽत्रैव ध्यानप्रतिपादिते कुल-

केऽन्यत्र पुराणादौ वा दर्शितः रूप आकारो यस्यास्सा तथोक्ता ताम्। रूपं स्वभावसौन्दर्ये नालोके पशुवृन्दयोः ग्रन्थावृत्तौनाटकादावाकारश्लोकयोरपीति मेदिनी। ते तव प्रतिकृतिन्तात्त्विकदिव्यभवदीयविग्रहप्रतिनिधिहेमादिनिर्मितां मूर्त्तिमिति यावत्। प्रतिकृतिरथार्चायाम्प्रतिनिधिप्रतिकारयोश्च स्त्रीति मेदिनी। कुशलैश्शिल्पशास्त्राभिज्ञैः रचिते सुनिर्म्मिते उच्चैर्म्महत्युन्नते वा महत्युच्चैरित्यमरः। मन्दिरे प्रासादे स्थापयित्वा विधिपूर्वकं निधायेत्यर्थः। यो भाग्यशाली मनुष्यः सविधिशास्त्रोक्तार्चाविधिपूर्वकम् सदुपचारैर्न्निर्दोषैः षोडशसङ्ख्याकैः पूजोपकरणैः आसनं स्वागतञ्चार्घ्यम्पाद्यमाचमनन्तथा मधुपर्कार्चनस्नानवसनाभरणानिति। गन्धपुष्पेधूपदीपौनैवेद्यञ्चन्दनन्तथेति षोडशोपचारा आचारचिन्तामणौ। प्रार्च्य प्रकर्षेण सोत्साहमित्यर्थः। अर्चयित्वा भावाद्भक्तिसंस्कृताभिप्रायात् भावोऽभिप्रायवस्तुनोः स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु। चेष्टायोन्योर्बुधेजन्तौशृङ्गारादेश्चकारणे शब्दप्रवृत्तिहेतौ चेति हेमचन्द्रः। चन्द्रालोके जयदेवस्तु रतिर्देवादिविषया सन्ति च व्यभिचारिणः। वेद्यमाना निगद्यन्ते भावास्साहित्यवेदिभिरित्याह। तदुपरि पायगुण्डोपाध्यायवैद्यनाथाः देवादिविषयिणीरतिर्भावः आदिना नृपगुरुमुनिविषयापीति अतो भावाद्रतेरित्यर्थः। स्तौति वैदिकैः पौराणिकैः प्राकृतैर्वा स्तोत्रैः स्तवनम् कुरुते। तव सुगुणगणवर्णनं विधत्ते। स मनुष्यः गतशोके आधिशून्ये तावके त्वदीये लोके तव विष्णुपदीत्वात् वैकुण्ठे शङ्करशीर्षस्थितत्वाच्छिवलोके वेत्यर्थः। याति न प्राप्नोति किमु! किन्तु यात्येवेत्यर्थः। अनेन श्रीगङ्गाभक्तिरससान्द्रतरहृदयैः सद्गतिसाधनीभूता श्रीगङ्गामूर्त्यर्चा सर्वथैव बिधेयेति सूचितम्॥९६॥

सुविमलविधयस्ते पुण्यवन्तस्त एव
श्रुतिविहितसपर्यातोषितेशास्त एव।
त्रिजगति सुधियस्ते सत्समज्ञास्त एव
स्थिरतरसुखदा त्वम्भक्तितस्सेविता यैः॥९७॥

अथ श्रीगङ्गासेवकानाङ्कृतकृत्यतान्निरूपयंस्तां स्तौति सुविमलेति। हे श्रीगङ्गे इत्यध्याहारः। यैस्सुकृतिभिर्भक्तैः भक्तितो न तु दम्भलोभादितः स्थिरतरसुखदा निर्वाणपरमानन्दप्रदा त्वम् सेविता समर्चिता असीति शेषः। त एव सुविमलविधयश्शोभनस्वच्छभाग्याः अन्यथा कथम् त्वदीया भक्तिरित्यर्थः। अतएव त एव पुण्यवन्तोऽनुमितपूर्वजन्मसुकृतराशयः अतएव त एव श्रुतिविहितसपर्यातोषितेशा वेदोक्तपूजाऽतितुष्टीकृतश्रीशङ्कराः भवत्सेवैव श्रीशङ्करसेवेत्यर्थः। यद्वा पूर्वजन्मसमूहसमर्चितश्रीचन्द्रशेखरप्रसादलब्धेयन्तेषाम्भवदर्च्चेति भावः। अतएव त एव त्रिजगति त्रिभुवने सुधियः पण्डिताः भवदीया भक्तिरेव विवेकशालिबुद्धेः फलमिति भावः। विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः धीरोम-

नीषीज्ञ:प्राज्ञस्सङ्ख्यावान्पण्डित: कवि: धीमान्सूरि: कृतीकृष्टिर्ल्लब्धवर्णो विचक्षण: दूरदर्शीदीर्घदर्शीत्यमर:। अतएव त एव सत्समज्ञाश्शोभनकीर्त्तय: यश:कीर्तिस्स-मज्ञाचेत्यमर:। भवत्सेवां विना कथं शुभ्रं यश इति भाव:। अनेन जन्म-साफल्यनिदानम् श्रीगङ्गाया निर्व्याजसपर्यैवेति ध्वनितम् ॥९७॥

श्रुतिभिरपि सहाङ्गैस्सेतिहासै: पुराणै-
स्स्मृतिभिरुपपुराणैस्सत्प्रबन्धैर्निबन्धै:।
तनुमपि महिमानं शक्यते ते न गातुं
यदि तदतिवराकी गीर्म्मदीयाऽम्बु काऽत्र ॥९८॥

अथ श्रीगङ्गाया स्तुतिविधाने निजगर्वम्परिहरंस्ताँ स्तौति श्रुतिभिरिति। हेअम्ब मात: श्रीगङ्गे यदि चेत् अङ्गैश्शिक्षादिभि: षड्भि: सह सार्द्धम् शिक्षा-कल्पोव्याकरणंनिरुक्तञ्ज्योतिषाङ्गण: छन्दसां विचितिश्चेति षडङ्गो वेद उच्यते। इति श्रुतिभिरपि चतुर्भिरपि वेदै: श्रुतिस्त्रीवेदआम्नाय इत्यमर: इतिहासैर्भार-तादिभिस्सह वर्त्तन्ते इति, तैश्च पुराणैरष्टादशभिर्म्मत्स्यपाद्मस्कान्ददिभि: स्मृतिभि-रष्टादशभिर्म्मनुसंहिताप्रभृतिभि: उपपुराणैरष्टादशभि: कालिकापुराणादिकै: सन्तो निर्दोषशुभगरचनाशोभिन:। प्रबन्धा अवान्तरग्रन्था येषान्तै: निबन्धैर्नूतनसत्कवि-निर्म्मितैर्ग्रन्थै:। सङ्ग्रहग्रन्थैस्त्रिस्थलीसेतुप्रभृतिभिर्वा ते तव तनुमपि स्वल्पमपि महिमानं महत्त्वम् गातुङ्कथयितुं न शक्यते न पार्यते समर्थैर्न्नभूयते इति-यावत्। तर्त्तर्हि अतिवराकी स्वल्पतरसामर्थ्यविशिष्टत्वादतिशोचनीयाऽतितुच्छेति यावत्। मदीया गीर्वाणी अत्र भवदीयमहिमगाने का ? न कापीत्यर्थ:। कथमपि न शक्तेति भाव:। अनेन श्रीगङ्गागुणमहिम्नोऽपरिच्छिन्नत्वं सूचितम् ॥९८॥

गुणकणमपि गङ्गे तावकीनं मनुष्यो
विमलतरगुणौघे स्तौति यो भक्तिभावात्।
स भवति कृतकृत्यो देवि तद्गी: कृतार्था
सुकविसदसि गुर्वीमेति चासौ प्रतिष्ठाम् ॥९९॥

अथ मम पूर्णगुणमहिमवर्णने सर्वस्याशक्तत्वादल्पगुणगानेन किमिति वदन्ती श्रीगङ्गाम्प्रति स्वकीयस्वल्पगुणवर्णनमाहात्म्यं श्रावयन्स्तौति गुणकणेति। हे विमलतरगुणौघे स्वच्छतरगुणनिकरे गङ्गे मात: तावकीनन्त्वत्सम्बन्धिनम् गुणकणमपि स्वल्पमपि गुणमित्यर्थ: भक्तिभावात्सानुरागम् नत्वौदासीन्यात्। यो मनुष्यो य: कोऽपि मानव: स्तौति स्तुतिविधया कथयति स: मनुष्य: कृतकृत्यस्सफलजन्मा भवति। अथ हे देवि ! तस्य गीर्वाणी कृतार्था सफला भवति। च पुन: असौ त्वद्गुणकणस्तोता सुकवीनां सत्कवीनाम् सदसि सभायाम् समाजे इत्यर्थ:। गुर्वीं

महतीम् प्रतिष्ठां सम्मानम् एति प्राप्नोति। अनेन यथाशक्ति सर्वैरेव सर्वथा सप्रेमभरम् श्रीगङ्गागुणगानङ्कर्त्तव्यमिति ध्वनितम् ॥९९॥

तव ननु नुतिमेतां स्वस्तरङ्गिण्यकार्षं
न जननि निजकीर्त्यै देवि सत्यम्ब्रवीमि।
विविधबहुलमिथ्यावादकालुष्यपूर्णाम्
भगवति निजवाणीङ्किन्तु शुद्धां विधातुम् ॥१००॥

अथ सानुनयम् श्रीगंङ्गायास्स्तुतिप्रवृत्तिनिमित्तं वर्णयंस्तांस्तौति तवेति। हे स्वस्तरङ्गिणि स्वर्णदि जननि मातः श्रीगङ्गे! एताम्प्रक्रान्ताम् वृत्तशतकविषयाम् नुतिं स्तुतिम् निजकीर्त्यै निज़ाङ्कीर्तिम् लोके विस्तारयितुमित्यर्थः। नाऽकार्षं न व्यधाम। हे देवि सत्यम् ब्रवीमि ययार्थङ्कथयामि। न मिथ्येत्यर्थः। किन्तु हे भगवति षडैश्वर्य्यसम्पन्ने विविधो बहुविधः बहुलोऽनल्पः यो मिथ्यावादः तत्तत्प्रसङ्गसम्भाषणावसरेऽसत्यसम्भाषणम् स एव, तेन वा यत्कालुष्यम्पापमालिन्यम् तेन पूर्णां सम्भृताम् गर्हणीयामित्यर्थः। निजवाणीं स्वकीयाङ्गिरम् शुद्धां मिथ्यावादजनितपापमलविरहिताम् विधातुङ्कर्त्तुम् अकार्षम्। ननु फलार्थम्वृक्षारोपणस्य च्छायेव कीर्त्तिस्तु आनुषङ्गिकम्फलमितिभावः। अनेन श्रीगङ्गास्तुतेर्वाणीदोषनिवारकत्वं संसूचितम् ॥१००॥

शरणगजनबन्धो देव कारुण्यसिन्धो
तुहिनकिरणमौले सर्वदेवैकमौले।
परमितिशतसङ्ख्याः पद्यगङ्गालहर्यः
तव गिरिश जटाया म्मामिकाः प्रोल्लसन्तु ॥१०१॥

सर्वदां सर्वदा देवा देवीङ्गङ्गां स्तुवन्ति याम्
भोगमोक्षाभिलाषी तां स्तोतुकामो न को भुवि ॥१०२॥

गङ्गालहरीशतके यः श्रुतिजिह्वामनांसि
मज्जयति स भवति गङ्गास्नायी स्वपितृसमुद्धारकः ॥१०३॥

अथैतत्स्तोत्रनामधेयम्प्रकारविशेषेण दर्शयन्नेतत्स्वप्रयत्नसाफल्याय त्रिभुवनेश्वरे श्रीमहेश्वरे सम्पर्प्यति शरणेति। हेशरणगजनबन्धो शरणागतानाञ्जनानां सर्वापन्निवारणाद्बान्धव हे देव सर्वान्तर्यामिन् दीप्तिशालिन्वा हे कारुण्यसिन्धो। कृपारसाब्धे! दीनदयालो! हे तुहिनकिरणमौले! चन्द्रचूड! निखिलजनाह्लादनिदानश्रुतिगणविहाराक्रीडवाडवकुलभूपालामृतांशुमुकुटमणे वा। सर्वेषान्देवानाम्। एकमौलिमुख्यकिरीटमिव स तथोक्त स्तत्सम्बोधनम्। हे सर्वदेवातिप्रशस्त इत्यर्थः। अत्र

श्रीशङ्करस्य पञ्चवक्त्रत्वात्सम्बोधनपञ्चकेन सम्मुखीकरणमुचितमेवेत्यभिसन्धिः। परङ्केवलम् शतसङ्ख्याः ममेमां मामिकां मन्निर्मिमितां इत्यर्थः। पद्यानि मालिनी नामानि वृत्तानि एव गङ्गालहर्य्यः श्रीमद्भागीरथीमहोर्म्मयः तरङ्गे भङ्गवीच्यूर्म्यु-त्कलिकाभहतितिविह लहर्य्युल्लोल्लकल्लोला इतिहेमचन्द्रः। हेगिरिश पर्वतवर-कैलासनिवासिन् समुपभोगेन शैलोत्तमकैलासतनुत्वविधायिन्वा असङ्ख्यात-तरङ्गिणीविलासाश्रयकैलासाचलशयनप्रियेति वा। इदं षष्ठं सम्बोधनन्तु पुनः विज्ञप्त्यवसरे तच्छ्रवणैकतानमनस्कतया सम्मुखीकरणार्थमित्यनुसन्धेयम्। तव जटायाङ्कस्याञ्चिदेकस्यामेव जटाजूटशाखायाम् प्रोल्लसन्तु। अत्युत्तमाश्रय-लाभात्समुल्लासम्प्राप्नुवन्त्वित्यर्थः। अनेन श्री महादेवे समर्प्पितं वस्तु सफलम्भवतीति ध्वनितम् ॥१०१॥ अथ श्रीगङ्गास्तवनौचित्यं सर्वेषूपदिशति सर्वदामिति। सर्वदां मनोभिलषितमात्रप्रदात्रीम् याङ्गङ्गां देवीम् सर्वदा नित्यम् सर्ववरप्रदातारो वा देवा अपि स्तुवन्ति ताङ्गङ्गाम् भुवि भूलोके भोगमोक्षाभिलाषी ऐहिकपारलौकिकोभयसुखेप्सुः को मनुजः स्तोतुकामः तद्गुणवर्णनेच्छुर्न्न भवेदिति शेषः। किन्तु सर्व एव भवेदिति भावः। अनेन श्रीगङ्गाया भुक्तिमुक्तिप्रदत्वन्ध्वनितम्॥ इदम्पथ्यावक्त्रञ्छन्दः। युजोर्जेनसरिद्भर्त्तुः पथ्यावक्त्रम्प्रकीर्त्तितम् इतिलक्षणात्॥१०२॥ अथश्रीगङ्गालहरी-शतकनामकस्यास्य स्तोत्रस्यपाठश्रवणमननमाहात्म्यं वर्णयति गङ्गेति। यः शुभभाग्य-भरसम्भृतो मनुष्यः गङ्गालहरीशतके एतन्नामकेऽस्मिन्स्तोत्रे श्रुतिजिह्वामनांसिकर्णरसन-चेतांसि मज्जयति स्नपयति सादरमेतत्स्तोत्रम् शृणोति पठति विचारयति चेत्यर्थः। भवति जायते। स मनुष्यः गङ्गास्नायी गङ्गास्नानकर्त्ता साक्षाद्गङ्गास्नानफलभागित्यर्थः। भवति जायते। स पुनः स्वपितॄणामात्मीयोभयकुलपूर्वपुरुषाणाम् सम्यक् यथा पुनर्न दुर्गतिम्प्राप्नुवन्तु तथोद्धारकोऽत्युच्चैः पदप्रापको भवेदित्यर्थः। अनेन श्रीगङ्गागुणगानश्रवणमननानां भोगमोक्षादिसाधनत्वन्ध्वनितम्॥ आर्य्येयदञ्छन्दः लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः॥ षष्ठोऽयं नलघू वा प्रथमेर्द्धे नियतमार्य्यायाः॥१॥ षष्ठेद्वितीयला-त्परकेन्लेमुखलाच्च सयतिपदनियमः॥ चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो ल इति लक्षणात्॥२॥१०३॥

पातालाग्न्यङ्कपृथ्वीपरिमितिकलिते वैक्रमे नन्दनेऽब्दे
माघे शुक्ले सुरगुरुदिवसेऽहेस्तिथौ सद्गुणायाम्।
लक्ष्मीनारायणस्य प्रमथपतिपदद्वन्दसंसेविनो मे
श्रीशम्भो राजाधान्याङ्कृतिरिति समगात्पूर्णताङ्काशिकायाम्॥१०४॥

**इति श्रीमत्कौशल्यगोत्रोद्भवसारस्वतकुलतिलकसकलविद्यारत्नरत्नाकरपण्डितवरठाकुर-दत्तशर्म्मान्तेवासि लक्ष्मीनारायणाह्वयकविवरविरचितं श्रीगङ्गालहरीशतकं सम्पूर्णम्॥**

अथैतत्स्तोत्रे निर्माणसमयादिकन्निर्दिशति पातालेति। पातालाग्न्यङ्क-पृथ्वीनाम् या परिमितिस्सङ्ख्या परिमाणम् अङ्कानां वामतो गतिरितिवचनात् एकनवत्रिसप्तस्वरूपेत्यर्थः १९३७ तया कलिते सिद्धे सप्तत्रिंशदधिकैकोनविंशतिशततमे इति यावत्। वैक्रमे विक्रमादित्यनृपतिवरसम्बन्धिनि नन्दने नन्दननामके अब्दे संवत्सरे। संवत्सरो वत्सरोऽब्दो हायनोस्त्रीशरत्समा इत्यमरः। माघे मासि अथ शुक्लपक्षे सुरगुरुदिवसे वृहस्पतिवासरे सद्गुणायांसन्तमहोत्सवाद्युत्तमगुणविशिष्टायाम् अहेस्सर्पस्य तिथौ पञ्चम्याम् वसन्तपञ्चमीति ख्यातायामित्यर्थः तिथीशावह्निकौगौरीगणेशोऽहिर्गुहोरविः शिवोदुर्गान्तकोविश्वो हरिः कामश्शिवश्शशीति रामदैवज्ञः। श्रीशम्भोभंगिमोक्षैकदिनानार्धनस्य श्रीविश्वनाथस्य राजधान्याम्प्रधाननगर्याम् श्रीवाराणस्याम् प्रमथपतिपदद्वन्दसंसेविनः पश्चिमे देशस्थसैन्धवारण्यमध्यवर्त्तिकटाक्षेतिप्रसिद्धामरकुण्डाह्वयसत्तीर्थसमीपवितस्ताख्यसन्नदीदक्षिणकूलविराजमानविद्वद्वरसमलङ्कृतातिरमणीयप्रासादधारिणीव भूषितसर्ववस्तुसमृद्धिसमृद्धयोगीन्द्रश्रीकायनाथसंरक्षितवेदान्तविद्यैकनिवासास्पदभयहरनामकनगरवरजन्मभूमेरपि श्रीकाश्याम् मनसा क्षेत्रसन्यासमङ्गीकृत्य श्रीमन्महाराजविश्वेश्वरपदपद्मद्वयसेवैकपरायणस्य लक्ष्मीनारायणस्य लक्ष्मीनारायणानामकस्य मे मम इत्येषा श्रीगङ्गालहरीशतकस्वरूपा कृतिर्न्निर्म्मितिकर्म पूर्णताम्परिसमाप्तिम् समगात्सम्प्राप्ता। अत्र प्रमथेत्यादिपदैः अस्यान्ते मङ्गलवत्त्वं सूचितम्। इदं स्रग्धरावृत्तम्। भ्रम्नैर्यानान्त्रयेण त्रिमुनियतियुता स्रग्धराकीर्त्तितेयमिति लक्षणात्। फाल्गुनस्य सिताष्टम्यां वस्वग्निनवभूमिते वैक्रमेऽब्देशनौटीका पूर्णा लवपुरेऽभवत्॥१॥ विवृतिरियमतीव प्रेमपात्रस्य सख्युस्सहृदयकविमौलेस्स्वान्तसन्तोषहेतोः। अमरसरिदुदारस्तोत्रसम्बन्धरम्या व्यरचि खलु मयासौ विज्ञवर्य्यैकगम्या॥२॥ एकस्मिन्नेव सूनौ सति मुदितमनाश्शङ्कराचर्चाऽनुरक्तस्सक्तस्सद्विद्यगोष्ठ्याम्भयहरनगरात्स्वोद्भवस्थानतो यः॥ काश्यामागत्य कृत्वा निवसति नितराङ्क्षेत्रसन्यासमन्तर्ल्लक्ष्मीनारायणोऽसौ स्तवमिममकरोज्जन्मसाफल्यहेतोः॥३॥ ॥१०४॥

**इति श्रीमद्वाराणसीपुरवास्तव्यलवपुरसंस्कृतपाठशालाप्रधानाध्यापक-महामहोपाध्यायत्रिवेदगुरुप्रसादाभिधानकपण्डितवरविरचिता श्रीमल्लक्ष्मी-नारायणाह्वयविरचितश्रीगङ्गालहरीशतकस्तोत्रव्याख्या श्रीगङ्गालहरीसमुल्लाससमाख्या सम्पूर्णा**

**॥ सं० १९६० श्रा० शु०॥**

●

# गङ्गास्तुतिः[१]

## (गङ्गाविज्ञप्तिः)

।। श्रीगणेशाय नमः ।।

।। अथ मयूरपन्त-विरचितार्यानिबद्धश्रीगङ्गास्तुतिप्रारम्भः ।।

जय जय भगवति गङ्गे त्वं गेयगुणा प्रतीपकुलदयिते ।
अयि तेऽस्तु दया त्वत्तोये येन्ये दीने मतिक्षमामयि ते ।।१।।

बलिना कलिना मलिनानुद्धर्तुमसि त्वमेव सत्यमलम् ।
गायन्ति यशः कवयस्तव यत्पीयूषतोपि सत्यमलम् ।।२।।

भविता त्वयि मज्जनतः शुचिराशु तथा जपन्न गङ्गेऽहम् ।
रुचिरमपि वपुः पापं हेयमिह यथा सपन्नगङ्गेऽहम् ।।३।।

शरणागतो दयावति दीनस्त्याज्यस्त्वया न गङ्गेऽयम् ।
कः स्मरतु त्वां हि त्वां सन्तानं विषयिणां न गङ्गेयम् ।।४।।

भागीरथि तव दृष्टिः प्रभर्वसि पुरुषार्थसंपदे विनते ।
ईषन्मात्रमपि श्रुतमौदासीन्यं जनेषु देवि न ते ।।५।।

मूर्तिमती त्वमसि दया देवस्य हरेर्जगद् भयादवतः ।
त्रातं हि लीलयेदं विश्वं संसारतस्त्वयादवतः ।।६।।

जय देवि जह्नुकन्ये भजदघसंहारसद्व्रते धन्ये ।
सन्तु बहवः किमन्ये त्वामेव जगद्धितावहां मन्ये ।।७।।

वससि विशंकं शंभोः कृतशिञ्जितविहितमर्मरा शिरसि ।
दुर्गाया अपि तेन त्वं भगवत्यतुलशर्मराशिरसि ।।८।।

शरणागतजीवानां प्रक्षालितसर्वपापजम्बालाम् ।
वन्दे हरेर्हरन्तीं त्रासं त्वां त्रिविधतापजंबालाम् ।।९।।

पतितः काकोऽपि भवति पयसि भवत्याः सुरापगे हंसः ।
भजति यशः सुकृतौघस्त्वयि कृतमज्जनसुरापगोऽहंसः ।।१०।।

हरितां ददासि जाह्नवि जन्तुभ्यस्त्वं तथा मुदा हरताम् ।
किं मे न दर्शनं वाक् सत्यास्तु यशःकथामुदाहरताम् ।।११।।

---

१. स्तोत्रकारः= मयूरपन्तः, पत्र १=२, स.भ.पु.पा.लि.सं. २१७८६, लिपि= दे.ना., पूर्ण ।

उत्तम ईशितुरङ्गे नटसि नदीश्वरि नटी यथा रङ्गे ।
कृतजगदनगभङ्गे सन्मतसङ्गे नमोस्तु ते गङ्गे ॥१२॥

स्वस्तुत्यनभिज्ञेऽपि त्वत्करुणामयि कृतानतावस्तु ।
वस्तु प्राप्नोत्वयमयि जलजन्तुभिरपि तवाप्यते वस्तु ॥१३॥

दयमानमानसे त्वं पुष्णास्यपि दुर्दुरं वकं मीनम् ।
पीनं कुरुषे मकरं धनहीनं त्यजसि किंद्विजं दीनम् ॥१४॥

भक्तमयूरघनघटे कुधियामस्माकमुचितमत्यागः ।
स्वयशो मा त्यज मातर्महतां महितो न शुचितमत्यागः ॥१५॥

विष्णुपदि प्रतिकूलं व्यावर्तयितुं क्षमासि नतदिष्टम् ।
सति सति सामर्थ्येऽपि प्रणमदनवनं यदम्ब नतदिष्टम् ॥१६॥

कास्ते त्रिविक्रमाङ्घ्रेर्ध्यायिस्वद्रोरिहाप्तजनमान्या ।
सर्वासु देवतासु स्वर्धुनि मातस्त्वमेव सन्मान्या ॥१७॥

नमनादमनाक् करुणे देवि ! भवत्या भवव्यथाः शमिताः ।
अमिताः प्रजाः कृतार्थाः प्राप्ता भव्यं वरं परं शमिताः ॥१८॥

स्पृष्ट्वा त्वां मां वातः स्पृशतु सुखं स्वमिव बालकं तातः ।
मास्तु मम विपदि पातः संसारात्तारयाऽऽशु भो मातः ॥१९॥

भवतीं विना प्रमुदितं कर्तारो दीनमातुरङ्के ते ।
मलिनोपि शिशुरशङ्कं सुखमयमपि लुठतु मातुरङ्के ते ॥२०॥

शरणागतस्य मम खलु तव चापि यशस्करीमिमामुक्तिम् ।
मानय मानय निकटं परिपालय देहि वत्सले मुक्तिम् ॥२१॥

सन्तापमपाकर्तुं कादम्बिन्या यथा मयूरेण ।
गङ्गाया विज्ञप्तिः प्रेम्णैव कृता तथा मयूरेण ॥२२॥

**श्रीः इति श्रीरामवंदनमयूरविरचितार्यारूपा श्रीमद्गङ्गाविज्ञप्तिः ।**
**"श्रीः" शुभं भवतु ।**

## श्री गणेशाय नमः

पित्रा त्यक्तो भृगुपातादिव्यसनार्तोयस्तं त्रातुं नरहरिरूपं भवतात्तम् ।
तद्वृत्तं मामवितुं तद्वत्कृपया भो भूत्वा भूत्वा पालय दीनं यदुवीर ॥१॥

मात्रा सम्प्रतिषिद्धो मात्रादिष्टो ध्रुवस्तथा चक्रे ।
अहमपि तथैव भगवन् दीनदयाब्धे रमापते पाहि ॥२॥

मात्रा पित्रा दत्तां भ्रातृनिषिद्धामपि त्वदनुकूलाम् ।
ऐषणा सागर विष्णो भैमीमिव मन्मतिं हर स्वामिन् ।।३।।

रिपुदुर्बोधनिमग्रां विषयबंध्वादिभिः परित्यक्तां ।
पांचालीमिव मन्मतिमव विष्णो दीनजनसुखारामाम् ।।४।।

भवाभिधमहाग्रहादखिलपापसद्विग्रहात्
स्वकर्मकृतविग्रहात् धृतविवेकसद्विग्रहात् ।
गजेन्द्रमिव नक्रतः सपदि मोचयाशु द्विजं
द्विजेन्द्रशुभवाहनश्रवणमङ्गलश्रीपते ।।५।।



# गङ्गातरङ्गः[1]

॥ श्रीगणेशाय नमः ॥

श्रीगङ्गे भागीरथि श्रीशंकरमौलिमालतीमाले ।
करुणावति जय भगवति पाहि कृपापाङ्गतः शिवसदये ॥१॥

पंक्तावुपविष्टानां सर्वेषां तर्पणं समं न्याय्यम् ।
मम तु श्रोत्रं तृप्तं गङ्गे ! रीतिः कथं त्वदीयेयम् ॥२॥

सर्वेन्द्रियसौहित्यं यथा भविष्यति तथा लघु विधेयम् ।
अद्यावधि यज्जातं जातं गङ्गे ! त्वया दया कार्या ॥३॥

दयनीयोऽयं गङ्गे सर्वैधर्मादिभिः परित्यक्तः ।
यामि शरणं कमधुना त्वया विना व्रात्यराजोऽहम् ॥४॥

पूर्वं समुद्धृतः कति सम्प्रत्युद्धर्तुमनलसासि त्वम् ।
अग्रे समुद्धरिष्यसि तन्मध्ये मादृशो नैव ॥५॥

पूर्वं न चैव मादृङ् नोचेदानीं पुरः कुतो भविता ।
इति संख्यातुमनलसा भव भवति जाह्नवि त्रिपथगे त्वम् ॥६॥

पापिन उद्धर्तुं त्वं बद्धपरिकरा श्रुतं मनीषिभ्यः ।
इत्थं सति मद्विषये गङ्गे केयं प्रमीला त्वम् ॥७॥

प्राक्कर्म पचेलिमतामाप्तमिदानीन्तने जनुषि ।
इति विदितमहो गङ्गे प्रोत्का यत्सेवनाय धिषणेयम् ॥८॥

तव भवतु नमस्कारो मद्विषये देवि ! भो नमस्तुभ्यम् ।
करुणावति जय गङ्गे पाहि कृपापाङ्गदृष्टिपातैः ॥९॥

कतिचिद् ब्रुवन्ति विन्दुं नितम्बमात्रं च जानुदघ्नं च ।
केचिद् गुल्फद्वयसम्भवसिन्धुं देवतान्तराश्रयणात् ॥१०॥

तव संश्रयाद्धि गङ्गे भवसिन्धोरस्तितां न मन्येऽहम् ।
अथवा मन्ये भ्रमं खेनगरं शशविषाणमंशुजलम् ॥११॥

शरदां पञ्चसहस्री तवस्थितेर्मानमिति विदामाज्ञा ।
गङ्गे यदवधि विदिता तदवधि मां पीडयत्यधीरत्वम् ॥१२॥

---

१. विषयः स्तोत्रम्, ग्रन्थकारः– बालकविः (मयूरानुजसूनुः) स.भ.पु.पा.लि.सं. १८१०८, पत्र १-४, पूर्ण लिपि-शारदा

यस्मिन्कस्मिन् हि भवे तिर्यञ्चित्वं समुद्धरिष्यसि माम् ।
इति सत्यमथाप्यस्मिँश्चरमभवे पासि चेच्चमत्कारः ॥१३॥

वीचीपतितं सर्वा नद्यः सन्तारयन्ति किं चित्रम् ।
त्वमवीचीपतितमपि हि गङ्गे सन्तारयस्यहो चित्रम् ॥१४॥

वंशानुत्पादयसि त्वं वर्द्धयसे तथैव जीवयसि ।
रक्षसि विस्तारयसि स्वस्मिन्पतितं हि तारयसि ॥१५॥

सद्वंशभवे वंशोद्धारिणि गङ्गे नमस्करोमि त्वाम् ।
वंश्यमपि दीनं द्विजं किं त्वं नाद्यापि तारयसि ॥१६॥

नो तारयसि हि मां चेन्मा तारय देवि भोः स्वतन्त्रा त्वम् ।
मज्जयसि तर्हि मज्जय गङ्गे स्वस्मिन्सुगण्डशैलमिव ॥१७॥

मा मास्तु मदुद्धारो नैव त्वामर्थये कदाचिदपि ।
क्षुद्रं यादोजातं विधाय मां स्थापयाशु निजजठरे ॥१८॥

यद्यपि यादः क्षुद्रं चरति महच्चेत्तथापि मदनुमतिः ।
किं तव गतमत्र परं मज्जय नामाशु मा विधेहि चिरम् ॥१९॥

भवसिन्धौ मज्जाया विभ्यति ताभ्यः सुविद्वांसः ।
नाहं विभेमि मातर्भवसिन्धौ त्वयि ममास्तु मज्जैव ॥२०॥

लक्ष्मीनाथं त्यक्त्वा मत्वा श्लाघ्यं कपर्दिसंबन्धम् ।
गङ्गे भूमौ विचरस्यतः कपर्द्यस्मि दृग्विषयः ॥२१॥

गोमूत्र्यश्वत्थादीनितरत्र त्वं कुरुष्व मा माम्भोः ।
कृमिमशकवेतसादीन् प्रविधाय स्थापयाशु निजजठरे ॥२२॥

सगरानुद्धर्तुमना भूरन्ध्रप्लावनं कृतवती त्वम् ।
सगरोऽस्मि बहुलरन्ध्रः प्लावयसि न मां सुरापगे किमिति ॥२३॥

सुरसङ्गात्सुरधुनिता प्राप्ता याता तथापि नोक्षरता ।
भूसुरसंगादधिकैकाक्षरताप्तिः कथं न सा व्रियते ॥२४॥

त्वन्मज्जनमेव परं श्लाघ्यं मान्यं श्रुतेर्वचोऽस्माकम् ।
नान्यत्रामरमुक्तावलिनीराजितपदं पदं शाक्रम् ॥२५॥

अच्युतपदच्युतापि हि दातुं नैजं पदं स्वतन्त्रा त्वम् ।
काऽन्येदृशी द्वितीया स्वपदभ्रष्टा सती तदर्पयितुम् ॥२६॥

दोषत्रयापनुत्यै त्रिविधा मर्त्यास्त्वयि प्रमज्जन्ति ।
द्विचतुर्दशदोषाढ्यांस्तांस्त्वं कुरुषे कथं त्वेतत् ।।२७।।

कश्चित्कश्चिच्छ्रयतेत्याधिक्यं लब्धुमिति जनस्थित्याम् ।
भूतं चतुर्विधं त्वं त्रिविधं कुरुषे कथं गङ्गे ! ।।२८।।

अम्ब ! त्वद्दर्शनतो मुक्तिर्न स्नानजं फलं जाने ।
इति यद्वदति विपश्चित्तदलीकं: स्नानतस्त्रिमूर्तित्वम् ।।२९।।

त्रिगुणांशं पङ्कमार्ष्टिं कर्तुं मर्त्यास्त्वयि प्रमज्जन्ति ।
तानविशेषेण त्वं करोषि निजलीलया त्रिगुणमूर्तीन् ।।३०।।

गङ्गे नश्यति जननं त्वन्मज्जनतो वदन्ति तदलीकम् ।
जन्तुनिवहो निमज्जँस्त्वयि भवति हि शंकरो विधिर्विष्णुः ।।३१।।

स्वर्गादधः पतन्ती स्वोर्ध्वं गङ्गे निमज्जतो नयसि ।
सोढ्वाऽपि विपद्गणमथ सन्तः परकार्यसाधने व्यग्राः ।।३२।।

गङ्गाप्रार्थनातरङ्गो गङ्गाचरणे समर्पितः शिशुना ।
सगुणो विगुणो वा स्तां श्राव्यं कलभाषणं हि शिशोः ।।३३।।

**इति श्रीमदार्याचार्यमयूरपण्डितानुजसूनुबालकविरचितो गङ्गार्थनातरङ्गः शिवाय भूयात् ।।**



विश्वगुणादर्शचम्पूः श्रीवेङ्कटाध्वरिकृता[1]

# गङ्गानदीवर्णनम्

**इति विमानं दक्षिणतः प्रस्थाप्य कृशानुमुद्दिश्य—**

शिथिलितभवखेदा श्लिष्टवैकुण्ठपादा
कृतविपदपनोदा क्लृप्तचित्तप्रसादा।
विमलतरतरङ्गा विश्रुताम्भोधिसङ्गा
विहितदुरितभङ्गा वीक्ष्यतामत्र गङ्गा ।।७४।।

**कृशानु—** उपेक्षणीयानि भागीरथीयानि पानीयानि किमिति वीक्षणीयानि ।।१९।।

इति विमानं दक्षिणतः दक्षिणस्यां दिशि 'दक्षिणोत्तराभ्यामतसुच्' इत्यतसुच्। प्रस्थाप्य नीत्वा कृशानुमुद्दिश्य, आहेति शेषः।

शिथिलितेति। शिथिलितः विनाशितः भवस्य संसारस्य खेदः दुःखं यया तादृशी श्लिष्टौ आलिङ्गितौ आश्रिताविति यावत्। वैकुण्ठस्य विष्णोः पादौ यया तथाभूता। कृतः विपदाम् आपत्तीनाम् अपनोदो निवारणं यया तथाभूता। पुनश्च क्लृप्तः रचितः चित्तस्य प्रसादः प्रसन्नता यया तादृशी। यस्यादर्शनमात्रेणैव मनः सन्तापो जायते इत्यर्थः। विमलतराः अतिशयेन निर्मलास्तरङ्गा वीचयो यस्याः सा तथा भूता। 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु 'इत्यमरः। विश्रुतः प्रसिद्धः। अम्भोधेः समुद्ररूपस्य पत्युः सङ्गः संगतिर्यस्याः सा। अत एव विहितः कृतः दुरितानां पापानां भङ्गः विनाशो यया तथाभूता। अत्रास्मिन्स्थले गङ्गा भागीरथी नदी वीक्ष्यतां दृश्यतां, त्वयेति शेषः। मालिनीवृत्तम्।

वीक्षणीयानि भागीरथीयानि गङ्गासंबन्धीनि पानीयान्युदकानि किमिति कुतो हेतोः वीक्षणीयानि अवलोकनीयानि ? अत्रोपेक्षणीयानीत्यस्य 'उप समीपे ईक्षणीयानि दर्शनीयानि' इति श्लिष्टार्थो मुद्रितपुस्तके मधुरसुब्बाशास्त्रिविरचित-टीकायामुपलभ्यते। एवं स न युक्तः, वीक्षणीयानि इत्यग्रिमपदेनैव तदर्थलाभात् पुनरपि तथैवार्थकरणे श्लेषस्वरसाभावात् पुनरुक्तिदोषापत्तेश्च ।।१९।।

दक्षिण दिशा में विमान को ले जाकर कृशानु को सम्बोधित कर— सांसारिक दुःखों की नाशकर्त्री, प्रभु के चरणों की आलिङ्गनकर्त्री, विपत्तियों को निवारण करने वाली, चित्त को प्रसन्नकर्त्री, अत्यन्त निर्मल लहरियों से युक्त, विख्यात सागर की संगति वाली, पापों को नष्टकर्त्री गङ्गा नदी यहाँ देखो।

---

१. स.भ.पा.लि.सं. १०४६९०

गङ्गा का जल तो उपेक्षणीय है, किस लिये इन्हें दर्शनीय कहते हो ? ॥१९॥

**यतः—**

येषां जनिश्चरणतस्तु हिरण्यहर्तु-
दोंषाकरेण गुरुदारविटेन मूर्ध्नि ।
ब्रह्मोत्तमाङ्गभिद एव सहस्थितिश्च
ख्यातो लयो जलनिधौ किल गाङ्गवाराम् ॥७५॥

वीक्षणीयत्वाभावमेव दर्शयति– यतः येषामिति येषां गङ्गायाः इमानि गाङ्गानि तादृशानि च वारि उदकानि च तेषाम्, 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः। गङ्गोदकानामित्यर्थः। जनिरुत्पत्तिस्तु 'जनिरुत्पत्तिरुद्भवः' इत्यमरः। हिरण्यहर्त्तुः सुवर्णचोरस्य चरणतः आचरणात् जातेति शेषः। तथा ब्रह्मणः ब्राह्मणस्य उत्तमाङ्गं शिरः। 'उत्तमाङ्गं शिरः शीर्षम्' भिनत्ति छिनत्तीति उत्तमाङ्गभित् तस्य ब्रह्महन्तुरित्यर्थः। मूर्ध्नि मस्तके 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः।

गुरोरध्यापकस्य दाराणां भार्यायाः विटेन जारेण 'भार्या जायाऽथपुंभूम्नि दाराः' इत्यमरः। 'विटोऽद्रौ लवणे षिड्गे (जारे) मूषिके खादिरेऽपि च 'इति मेदिनी च। अत एव दोषाणाम् आकरेण उत्पत्तिस्थानेन सह स्थितिः वासश्च। तथा लीयते एकीभूयते अनेनेति लयः मैत्रीति यावत्। जलानां डलयो सावर्ण्यात् जडानां मद्यपानेन मत्तानां निधौ समुदाये, ख्यातः प्रसिद्धः एव। किलेत्यैतिह्ये। अनेन भागीरथीजलानां पञ्चमहापातकवत्त्वं सूचितम्। तथा चाह मनुः–

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥

इति अयमर्थस्त्वापाततः। वास्तवस्तु येषां गंगावारां जनिः प्रादुर्भावः, हिरण्यहर्तुर्हिरण्यकशिपुनामकदैत्यस्य हन्तुः। नामैकदेशेन नामग्रहणात् हिरण्यशब्देन हिरण्यकशिपोर्ग्रहणम्। विष्णोरिति यावत्। चरणतः पादात्, ब्रह्मणः– ब्रह्मदेवस्योत्तमाङ्गं पञ्चमशिरः तद्भिनत्ति छिनत्तीति तथाभूतस्य शिवस्येत्यर्थः। शिवेन हि ब्रह्मणः पञ्चमं शिरश्छिन्नमिति पुराणप्रसिद्धिः। मूर्ध्नि गुरुदारविटेन वृहस्पतिपत्नीविटेन दोषाकरश्चन्द्रः तेन सह स्थितिश्च ख्याता। जलनिधौ समुद्रे च लयः ख्यातः इति। एवं च विष्णुचरणोत्पत्या, शिवमस्तके चन्द्रेण सह स्थित्या च परमपावनत्वं गङ्गाजलानां सूचितमिति ज्ञेयम्। अत्र श्लेषमूलिका व्याजस्तुतिर्ज्ञेया। मुखे निन्दायाः स्तुतौ पर्यवसानात्। तदुक्तम् व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा', इति। अतः परं पूर्वकथितवृत्तानां नामलक्षणं नैवोच्यते ॥७५॥

सुवर्णचोर (हिरण्यकशिपु के प्राणहर्त्ता) विष्णु के चरण से गङ्गा के जिन जलों की उत्पत्ति है, ब्रह्मा के शिर का भेदन करने वाले (शिव) के मस्तक पर गुरुपत्नी के साथ दुराचार करने वाले समस्त दोषों के स्थानभूत (चन्द्र) का सहवास है, और समुद्र में ही विलय है, ऐसी ख्याति है ।।७५।।

विश्वाव० शान्तम् पापम्। मन्दमते किं मुकुन्दपादारविन्दनिष्यन्दिनी—धुनीमपि निन्दसि ? ।।२०।।

**पश्य—**

गाङ्गानि वारि गरुडध्वजपादपद्मा-
दाविर्वभूवुरपुनन् पुनरिन्दुमौलिम्।
निन्युर्विचित्रममृतं सगरान्वयं च
नेतोऽधिकं भुवि पवित्रतमं समं वा ।।७६।।

एवं कृशानूक्तं निन्दनमसहमानं आह विश्वावसुः शान्तमिति। शान्तं पापं पापवचनं नोच्चारणीयमित्यर्थः। हे मन्दमते मन्दबुद्धे, मुकुन्दस्य श्रीकृष्णस्य पादारविन्दाच्चरणकमलात् निष्यन्दिनीं प्रस्रवन्तीं, अनेन तस्याः परमपावित्र्यं सूचितम्। धुनीं गङ्गानदीमपि किं कस्माद्धेतोः निन्दसि ? ।।२०।।

**निन्दानर्हत्वमेव प्रतिपादयति—** गाङ्गानीति। गाङ्गानि गङ्गासंबन्धीनि वारि जलानि, रेफान्तोऽयं वारशब्दः। गरुडः ध्वजे यस्य तस्य विष्णोरित्यर्थः। पादपद्माच्चरणकमलात्, आविर्बभूवुः प्रकटीबभूबुः। नैतावदेव, अपि तु इन्दुश्चन्द्रः 'चन्द्रमाश्चन्द्र इन्दुः कुमुदवान्धवः' इत्यमरः मौलौ मस्तके यस्य तं शंकरमित्यर्थः। अपुनन् पवित्रीचक्रुः। कालकूटदाहं शमयामासुरित्यर्थः। 'पूञ् पवने' इत्यस्मात् धातोर्लङ् प्रथमपुरुषबहुवचनम्'। अपि च विचित्रं कपिलमहामुनिशापात् अधोगतिरूप-विचित्रदशापन्नं सगरस्य राज्ञोऽन्वयं वंशं च। 'संगतिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः 'इत्यमरः' अमृतं मोक्षं निन्युः प्रापयामासुः। तस्मात् उपर्युक्तप्रभावात्, इतः गङ्गाजलेभ्योऽधिकम्, इत इत्यत्र सार्वविभक्तिकस्तसिः। भुवि पवित्रतममति-शयपवित्रं वाथवा समं तुल्यमपि न। अस्तीति शेषः। अपि तु अन्यानि सर्वाण्यपि तीर्थानि न्यूनान्येवेति भावः ।।७६।।

गाङ्गानि वारि गरुडध्वजपादपद्मात् आविर्बभूवुः, पुनः इन्दुमौलिम् अपुनन्, विचित्रम्, सगरान्वयम् च अमृतम् निन्युः, भुवि इतः अधिकम् पवित्रतमं वा समम् न।

गङ्गाजी के जल गरुडध्वज (विष्णु) के चरण कमल से उत्पन्न हुए हैं, फिर चन्द्रमौलि (शंकर) को पवित्र करते हुए विचित्र गति प्राप्त सगर

के वंश को मोक्ष दिये, पृथ्वी पर इससे अधिक पवित्र या इसके सदृश तुल्य कुछ भी नहीं है ।।७६।।

**किञ्च–**

सा सर्वतोमुखवती तटिनी सरागां
मूर्तिर्विधेरिव विभर्ति सरस्वती च।
भेदस्त्वियान् वलिभिदश्चरणारविन्दा–
दाद्या बभूव चरमा किल नाभिपद्मात् ।।७७।।

**अन्वयः–** सर्वतोमुखवती सा तटिनी विधेः मूर्तिः इव सरागाम् सरस्वतीम् विभर्ति। भेदः तु इयान् किल, आद्या बलिभिदः चरणारविन्दात् चरमा नाभिपद्मात् बभूव ।।

**किंञ्च–** सेति। सर्वतोमुखवती प्रशस्तजलयुक्ता, प्राशस्त्ये मतुप्। 'पुष्करं सर्वतोमुखम्' इत्यमरः; यद्वा सर्वतः स्वर्ग पातालभूलोकेषु मुखानि प्रवाहरूपेणैव प्रसरणानि यस्याः सा तथाभूता 'मुखं निःसरणे वक्त्रे प्रारम्भोपाय-रोरपि' इति मेदिनी। पक्षे सर्वतश्चतुःपार्श्वेषु मुखानि यस्याः सा तथाभूता च। सा प्रसिद्धा तटिनी नदी भागीरथीत्यर्थः। 'तटिनी ह्रादिनी धुनी 'इत्यमरः। विधे ब्रह्मणः मूर्तिर्देह इव रागेन रक्तिम्ना अनुरागेण च। रागोऽनुरागे लाक्षादौ मात्सर्यालोकयोरपि' इति वैजयन्ती। सहिता युक्ता तां सरस्वती नाम नदीं, वाणी च 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती', चन्द्रभागा सरस्वती इत्युभयत्राप्यमरः। विभर्ति धारयति।

**उभयोर्भेदमाह–** भेद इति। उभयो र्भागीरथीब्रह्ममूर्त्योः आद्या प्रथमा भागीरथी, बलिं भिनत्तीति बलिभिद्विष्णुस्तस्य 'सत्सू' इत्यादिना क्विप्। चरणा-रविन्दात् चरणकमलात् बभूव उत्पन्ना चरमा अन्त्या ब्रह्ममूर्तिरित्यर्थः। नाभिपद्मान्ना-भिकमलात् बभूव। इयानेव तु भेदः। किलेति निश्चये। उपमालंकारः ।।७७।।

स्वर्गादि लोकों में फैली हुई प्रसिद्ध नदी गङ्गा ब्रह्मा के शरीर की तरह अनुरागवती सरस्वती (नदी) को धारण करती है। भेद इतना ही है कि पहली मूर्ति (गङ्गा) विष्णु के चरण कमल से, दूसरी मूर्ति नाभिकमल से उत्पन्न हुई ।।७७।।

**अपि च–**

भागीरथीं प्राप्य बुधाः पितृभ्यो जलाञ्जलीन् सादरमर्पयन्ति।
पापानि सर्वाणि ततः पितृणां भवन्त्यहो दत्तजलाञ्जलीनि ।।७७।।

**अन्वयः—** बुधाः भागीरथीम् प्राप्य पितृभ्यः सादरम् जलाञ्जलिम् अर्पयन्ति, अहो! ततः पितॄणाम् सर्वाणि पापानि दत्तजलाञ्जलीनि भवन्ति।

**नैतावदेव, अन्यदपि तन्महित्वं शृण्वित्याह—** अपि चेति भागीरथीमिति। बुधाः पण्डिताः शास्त्रतस्तन्माहात्म्याभिज्ञा इत्यर्थः। भागीरथीं प्राप्य गत्वा, पितृभ्यः जलाञ्जलिमुदकाञ्जलिम् आदरेण पूज्यभावेन सहितं यथा स्यात्तथा अर्पयन्ति ददति। एवं कृते किं भवति तदाह तत इति। ततः उदकाञ्जलिः समर्पणात् पितॄणां सर्वाणि पापानि दुरितानि, दत्तः समर्पितः जलाञ्जलिरुदकाञ्जलिः 'अद्यप्रभृति पितृणामस्माकं च न कोऽपि संबन्धः' इत्युत्त्वा जलनिक्षेपो यैस्तथाभूतानि भवन्ति। अर्थात् अञ्जलिसमर्पणक्षण एव पितृणां सर्वाणि पापानि नश्यन्तीति भावः। अहो इति विस्मये ॥७८॥

पण्डितजन भागीरथी को पाकर पितरों के लिये आदरपूर्वक जलाञ्जलि समर्पित करते हैं, आश्चर्य है कि उसी से पितरों के सारे पाप परित्यक्त हो जाते हैं ॥७८॥

**अन्यच्च—**

भागीरथीं यः पटुधीरुपास्ते यथाक्रतुन्यायत एव धन्यः।
देवत्वमेत्य त्रिदिवे सुधायां भागी-रथीति व्यपदेशमेति ॥७८॥

**अन्वयः—** यः पटुधीर्भागीरथीम् उपास्ते एषः धन्यः यथाक्रतुन्यायतः देवत्वम् एत्य त्रिदिवे सुधायां भागीरथी इति व्यपदेशम् एति।

**अन्यदप्याह—** भागीरथीमिति। यः पट्वी कुशला धीर्बुद्धिर्यस्य सः 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्' इत्यादिना पटुशब्दस्य पुंवद्भावः। भागीरथीं गङ्गाम् उपास्ते सेवते भजते इति यावत्। उपपूर्वकस्य 'आस उपवेशने' इत्यादादिकस्य लटि रूपम्। अतएव धन्यः पुण्यवान् 'सुकृती पुण्यवान् धन्यः' इत्यमरः। एषः भागीरथ्युपासकः यथाक्रतुन्यायतः क्रतुन्यायमनतिक्रम्य क्रत्वनुष्ठायीवेति यावत्। देवत्वं देवरूपमेत्य प्राप्य, त्रिदिवे स्वर्गे सुधायाम् अमृतमध्ये इत्यर्थः। भागी भागवान्, रथी रथयुक्तः विमानयुक्त इति यावत्। इत्येवं रूपं व्यपदेशं व्यवहारम् एति प्राप्नोति। अर्थात् भागीरथीं संसेव्य स्वर्गे लोके देवस्वरूपं संपाद्य विमानेन संचरतीति ज्ञेयम् ॥७८॥

अनु० जो कुशलबुद्धि गङ्गा की उपासना करता है, वह पुण्यवान् मनुष्य यज्ञकर्ताओं की तरह देवत्व प्राप्त कर स्वर्ग में अमृत के मध्य में ऐश्वर्य एवं विमानात्मक व्यवहार को प्राप्त होता है।

**किञ्च—**

सरस्वत्याऽऽश्लिष्टा सवितृतनयालिङ्गितझरा।
स्फुरद्गुच्छस्वच्छा प्रकृतिरिव भाति त्रिगुणभाक्।
तथाप्येषा दोषापनयनपटुः स्वाकलनया।
प्रगल्भं संसारं प्रशमयति कंसारिपदभूः ॥८०॥

**अन्वयः—** सरस्वत्या आश्लिष्टा, सवितृतनयालिङ्गितझरा, स्फुरद्गुच्छस्वच्छा कंसारिपदभूः त्रिगुणभाक् प्रकृतिः इव भाति। तथापि दोषापनयनपटुः एषा स्वाकलनया प्रगल्भम् संसारम् प्रशमयति।

सरस्वत्येति। किञ्च कंसारेः श्रीविष्णोः पदाच्चरणाद्भवति उत्पद्यते इति कंसारिपदभूः श्रीकृष्णचरणकमलोत्पन्ना भागीरथीत्यर्थः। सरस्वत्या रक्तया नद्या आश्लिष्टा आलिङ्गिता कृतसंगमेति यावत्। तथा सवितृतनया सूर्यकन्या यमुनाभिधा नीलवर्णा नदी तया आलिङ्गितः संगतः झरः प्रवाहो यस्याः सा तथाभूता। यमुनाप्रवाहसंगमित्यर्थः। स्वतस्तु स्फुरन् प्रफुल्लितः यः गुच्छः पुष्पस्तवकः स इव स्वच्छा शुभ्रवर्णा एषा पुरो दृश्यमाना गङ्गा त्रीन् गुणान् सत्त्वरजस्तमोरूपान् पक्षे शुक्ल-रक्त-कृष्णवर्णान् भजतीति तथाभूता। प्रकृतिरिव प्रपञ्चोत्पादिका मायेव भाति केवलम् उपरितनरूपेण दृश्यते। भवन्मायाया हि, अजामेकां लोहित-शुक्लकृष्णाम्' इत्यादि श्रुत्या' दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति भगवद्गीतया च त्रिगुणत्वं प्रतिपादितम्' अन्ततस्तु न तथा। कुतः ? तदाह तथापीति। यद्यपि त्रिगुणात्मिकेव भाति, तथापि दोषाणां प्रापञ्चिकदुःखानाम् अपनयने नितारणे पटुः समर्था। पटुशब्दात् 'वोतो गुणवचनात्' इति विकल्पात् ङीषभावः। एषा भागीरथी स्वस्याः आकलनया सेवया, प्रगल्भं प्रौढं विस्तृतमिति यावत्। संसारं जन्मजरामरणादिरूपं प्रशमयति विनाशयति। प्रकृतिस्तु संसारं जनयतीति भावः। तस्मादतुलमाहात्म्यवतीयमित्यर्थः ॥८०॥

अनु० सरस्वती (नदी) द्वारा आलिङ्गित, सूर्यपुत्री (यमुना) के सङ्गत प्रवाह वाली, विकसित पुष्पगुच्छों की तरह स्वच्छ, विष्णु के चरण-कमल से उत्पन्न गङ्गा सत्त्वरजस्तमोमयी प्रकृति की तरह (शुक्ल-रक्त-कृष्ण तीनों गुणों से युक्त) दिखाई देती है तथापि समस्त दोषों को दूर करने में समर्थ यह स्वकृत सेवा द्वारा विस्तृत जगत् (जन्मादि प्रपञ्च) को शान्त कर देती है ॥८०॥

**किञ्च—**

गाम्भीर्येण गदाधरस्य हृदयं माधुर्यतस्तद्गिरम्
श्वेतिम्ना च यशस्तदीयमनघं शैतल्यतस्तत्कृपाम्।
नैर्मल्यातिशयेन तस्य धिषणां नित्यं प्रसादेन तद्
वक्त्रं चानुसरन्ति तत्पदभुवो वाराशिदारा इमे ॥८१॥

**अन्वयः—** तत्पदभुवः इमे वाराशिदाराः गाम्भीर्येण गदाधरस्य हृदयम्, माधुर्यतः तद्गिरम् च श्वेतिम्ना तदीयम् अनघम् यशः शैतल्यतः तत्कृपाम् नैर्मल्यातिशयेन तस्य धिषणाम् प्रसादेन तद्वक्त्रम् नित्यम् अनुसरन्ति ॥

किंच इयं तावत्सर्वचेष्टितैः श्रीविष्णुमेवानुसरति इत्याह गाम्भीर्येणेति। तस्य गदाधरस्य श्रीविष्णोरिति यावत्। पदाच्चरणात् भवन्ति उत्पद्यन्ते इति तत्पद्भुवः। सर्वनाम्नः प्रकृतपरामर्शकत्वात् तच्छब्दस्य गदाधरपदेन संबन्धः। इमे पुरोवर्तिनः वारां जलानां राशिः समुदायः समुद्रस्तस्य दाराः पत्नी गङ्गेत्यर्थः। दारशब्दस्य पुंसि नित्यं बहुवचनत्वात्। भार्या जायाथ पुंभुम्नि दाराः स्यात्तु कुटुम्बिनी इत्यमरः। वाराशिरित्यत्र 'वार् राशिः' इति स्थिते 'रो रि' इति रेफस्य लोपः। गम्भीरस्य निम्नस्य भावः गाम्भीर्यम् अगाधत्वमिति यावत्। 'निम्नं गभीरं गम्भीरम्' इत्यमरः। तेन गदाधरस्य विष्णोः हृदयमन्तःकरणम्, इत आरभ्य 'गिरम्' यशः इत्यादि सर्वपदानाम् अनुसरति' इत्यनेनान्वयः। माधुर्यतः स्वादुतया, तृतीयार्थे तसिः। तस्य विष्णोः गिरं वाणीं, श्वेतस्य शुक्लस्य भावः श्वेतिमा शुक्लेनेत्यर्थः। 'वर्ण दृढादिभ्यः' इति भावार्थे इमनिच्। तदीयं श्रीविष्णुसंबन्धि अनघं निर्मलं, यशः कीर्तिः, शैतल्यत; शीतलत्वेन, 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् प्रत्ययः तस्य कृपां, नैर्मल्यस्य निर्मलत्वस्य अतिशयेनोत्कर्षेण तस्य विष्णोः धिषणां बुद्धिं 'बुद्धिर्मनीषा धिषणा' इत्यमरः। नित्यं प्रसादेन प्रसन्नतया, तस्य भगवतो वक्त्रं मुखं च अनुसरन्ति अनुकुर्वन्ति। एवं च पूर्वोक्तसकलोदात्तगुणविशिष्टत्वाद्भगवती भागीरथी दोषशल्यमपि नार्हति, किन्तु संततप्रशंसामेवार्हतीति सूचितमिति भावः ॥८१॥

विष्णु के चरण कमल से उत्पन्न यह समुद्र कीपत्नी (गङ्गा) गम्भीरता से विष्णु के अन्तःकरण, सुस्वादु होने से उनकी वाणी, शुक्लवर्ण द्वारा विष्णु के निर्मल यश, शीतलता से उनकी कृपा, अत्यन्त स्वच्छ होने से प्रभु की बुद्धि, प्रसन्नता से उनके मुख का नित्य अनुसरण करती हैं ॥८१॥

**किंच—**

न गाहन्ते गङ्गामपि नटजटासार इति ये
न मज्जन्त्यम्भोधौ लवणरसवेशन्तकइति।
न पञ्चैवं गव्यान्यपि पशुशकृत्सार इति हा
पिबन्त्वेषां दोषान्क इह निपुणः स्याद्गणयितुम् ॥२३७॥

**अन्वयः—** ये नटजटासार इति गंगामपि न गाहन्ते। लवणरसवेशन्तक इति अम्बोधौन मज्जन्ति, पशुशकृत्सार इति पञ्चगव्यानि न पिबन्ति। एवं एषां दोषान् गणयितुं कः निपुणः स्यात् 'नेति' ये तेङ्गलाख्याः गङ्गामपि लोकपावनीं

नटस्य नर्तकस्य शिवस्य जटानाम् आसारः वर्षमिति विगर्हयन्तीति शेषः। न गाहन्ते न स्नान्ति अम्भोधौ समुद्रे, लवणरसः क्षाररसस्तस्य वेशन्तकः पल्वलमिति, 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। न मज्जन्ति न स्नान्ति। एवं पञ्चगव्यान्यपि पशोः शकृत्सारः पुरीषभाग इति न पिबन्ति। एवं सति एषां दोषान् गणयितुम् इह कः निपुणः स्यात्? न कोऽपीत्यर्थः। हेति खेदे ॥२३७॥

जो रामानुजीय 'शिव की जटाओं का धारा सम्पात' कह कर गङ्गा जी में स्नान नहीं करते, 'क्षार रस का अल्पसर' ऐसा समझ समुद्र में मज्जन नहीं करते, पशु का पुरीष भाग वता पञ्चगव्यों को भी नहीं पीते इस तरह इन लोगों के दोष गिनाने में कौन पुरुष समर्थ हो सकता है? ॥२३७॥

प्रहसति भवशोषकरी भवेन परितोषिता सुवर्णनदी।
दुर्वर्णरुचिरफेनैः सह्यसुता जाह्नवीमसह्यसुताम् ॥३९१॥

**अन्वयः**— भवशोषकरी, भवेन परितोषिता सुवर्णनदी सह्यसुता दुवर्णरुचिरफेनैः असह्यसुताम् जाह्नवीम् प्रहसति।

पूर्वस्मिन् पद्ये गङ्गासाम्यं प्रतिपादितं कावेर्याः। अधुना गङ्गाया अप्याधिक्यं प्रतिपादयति। उत्प्रेक्ष्या प्रहसतीति भवस्य संसारस्य शोषकरी नाशकरी भवेन शिवेन संसारेण च परितोषिता, सह्यस्य सह्याद्रेः सुता कन्या तत्रोत्पन्नेत्यर्थः। सुवर्णा कनकमयी च नदी कावेरी, दुर्वर्णैः कृष्णताम्रादिरागैः, दुर्वर्णमिव रजतमिव च दुर्वर्णं रजतं रूप्यं इत्यमरः। रुचिराः मिश्रिताः सुन्दराश्च फेनाः तैः असह्यस्य निन्द्यत्वात् सोढुमशक्यस्य अकारो वासुदेवः स्यात् इति कोशात् अस्य विष्णोः सह्यां मनोहरत्वात् सहनीयां लालनीयामिति यावत्। सुतां कन्यां जाह्नवीं गङ्गां प्रहसति उपहसत्येवेति गम्योत्प्रेक्षेयम्। श्लेषमूलिका गम्योत्प्रेक्षेयम् ॥३९१॥

(चारो तरफ सुन्दर आम्र वृक्षों से शोभित दुकूलों वाली मध्यभाग में रङ्गराज से सुशोभित) यह सुवर्ण नदी कावेरी प्रपञ्च शमनकर्त्री संसार से प्रशंसित सुन्दर वर्णवाली सह्याद्रिसुता कावेरी नदी नाना वर्ण के मनोहर फेनों द्वारा विष्णु की प्रियपुत्री जाह्नवी का मानो उपहास कर रही है ॥३९१॥

त्रैविक्रमस्त्रिपथगाजनकः स पादः-
पायात्पुरस्य मरुतां मरुतां निहन्ता।
शम्भोः स्फुरन्मुकुटभूषणदानचुञ्चु-
मम्भोनिधेः श्वशुरमाप्तगिरो यमाहुः ॥३११॥

**अन्वयः**— त्रिपथगाजनकः मरुताम् पुरस्य मरुताम् निहन्ता त्रैविक्रमः स पादः पायात् यम् आप्तगिरः शम्भोः स्फुरन्मुटभूषणदानचुञ्चुम्, अम्भोधेः श्वशुरम् आहुः।

त्रैविक्रमेति। त्रिपथगायाः गङ्गायाः जनकः उत्पादकः अत एव मरुतां देवानां पुरस्य स्वर्गस्य मरुतां निर्जलदेशत्वं निहन्ता निवारकः, गङ्गोत्पत्तेः पूर्वं तत्र जलाभावादिति भावः। त्रैविक्रमः स पादः चरणः पायात् नः सर्वान् रक्षतु। कथंभूतः सः। यं त्रैविक्रमपादम्, आप्तगिरो वेदवाण्यः शंभोः स्फुरत् प्रकाशमानं यन्मुकुटभूषणं तस्य दानेन प्रसिद्धम्। शिवस्य गङ्गाशिरस्त्वादिति भावः। तेन वित्तश्चुञ्चुप्चणपौ इति प्रसिद्धार्थे चुञ्चुप् प्रत्ययः। तथा अम्भोनिधेः समुद्रस्य श्वशुरं च, तस्य गङ्गाजानित्वात् आहुः प्रथयन्ति। स इति सम्बन्धः ॥३११॥

गङ्गा का उत्पादकः, देवों के नगर के मरुपन का नाशक त्रिविक्रम भगवान् का वह चरण हमारी रक्षा करें, जिसको वेदवाणी शंकर के प्रकाशमान मुकुट के आभूषण प्रदान से प्रसिद्ध सागर का श्वशुर कहती है ॥३११॥

गङ्गातरङ्गावलिभिः सुधांशोः सुधाझरैश्चानिशमार्द्रमूर्ध्नः।
वृथाभिषेकं कलयन्ति शम्भोस्तृप्ताय तोयस्य ददत्यपः के ॥३२२॥

**अन्वय–** गङ्गातरङ्गावलिभिः च सुधांशोः सुधाकरैः अनिशम् आर्द्रमूर्ध्नः शम्भोः अभिषेकम् वृथा कलयन्ति, अतः तोयस्य तृप्ताय अपः के ददति ?

**उक्तामाशङ्कामेव द्रढयति–** गङ्गेति। गङ्गायास्तरङ्गावलिभिः ऊर्मिपङ्क्तिभिः सुधांशोश्चन्द्रस्य सुधाझरैः अमृतप्रवाहैश्च अनिशं सततम् आर्द्रमूर्ध्नः क्लिन्नमस्तकस्य शम्भोः तद्भक्ता इति शेषः। अभिषेकं रुद्रसूक्तादिमन्त्रस्नानं वृथा कलयन्ति कुर्वन्ति। यतः षष्ठी। तृप्ताय अप उदकानि पुनः पातुमित्यर्थः के ददति प्रयच्छन्ति ? अपि तु केऽपि नैव ददतीत्यर्थः ॥३२२॥

गङ्गा के तरंगावली और चन्द्र के अमृत प्रवाह से निरन्तर भीगे मस्तकवाले शिव का अभिषेक व्यर्थ ही लोग करते हैं 'क्योंकि' जल से तृप्त के लिए कौन जल देता है ॥३२२॥

ज्वलनाकलनाद्विषस्य पानाद्विषभाजां वहनाच्च तप्तमूर्तेः।
अनिशं त्रिदशापगाधरस्याप्यभिषेकप्रियता शिवस्य जाता ॥३२३॥

**अन्वयः–** ज्वलनाकलनात्, विषस्य पानात् विषभाजाम् वहनात्, तप्तमूर्तेः, अनिशम्, त्रिदशापगाधरस्य अपि शिवस्य अभिषेकप्रियता जाता।

**किं तदित्यपेक्षायामाह–** ज्वलनेति। ज्वलनस्य ललाटस्थतृतीयनेत्राग्नेः आकलनात् स्वीकारात्, विषस्य कालकूटसंज्ञकस्य पानात् प्राशनात् विषभाजां

सर्पाणां कटककुण्डलाद्यलंकारत्वेन वहनाद्धारणाच्च हेतो: तप्ता संतप्ता मूर्ति: शरीरं यस्य तस्य शिवस्य अनिशं सततं त्रिदशापगाया: गङ्गाया: धरस्य धारकस्यापि सत:, अभिषेकप्रियता जाता ।।३२३।।

नेत्रस्थ अग्नि के धारण, कालकूट के पान और विषैले सर्पों के धारण किये रहने से सन्तप्त शरीर सतत गङ्गा के धारक भी शिव का अभिषेक प्रेम हुआ ।।३२३।।

अङ्गानुषङ्गोदितशीतबाधामिन्दोर्द्युसिन्धोश्च समन्वयेन ।
हर्तुं वहत्यग्निमयीं तृतीयां हरो हसन्तीमिव हन्त दृष्टिम् ।।२२१।।

**अन्वयः—** इन्दो: च द्युसिन्धो; समन्वयेन अङ्गेषु अनुषङ्गोदितशीतबाधाम् हर्तुम् अग्निमयीम् तृतीयाम् दृष्टिम् हसन्तीम् इव धारयति ।।

चन्द्र और गङ्गा के सम्बन्ध से अङ्गो में फैलनेवाली उत्पन्न शीतपीडा को हटाने के लिए अग्नियुक्त तृतीय दृष्टि को हसन्ती (शिगड़ी) की तरह धारण किये हैं ।।२२१।।

**यद्वा—**

काञ्चीनाम्नि पुरे सुरेन्द्रमहिते प्राक्पश्चिमोद्देशयो-
श्चित्रं दैवतयोश्चिरं निवसतो रीतिर्विरुद्धा मिथ: ।
एको हि द्विजराजमप्यधरयत्यन्यस्तमुत्तंसय-
त्यङ्घ्रौ हन्त विभर्ति कश्चिदपर: स्वे मूर्धनि स्वर्धुनिम् ।।३३८।।

**अन्वयः—** सुरेन्द्रमहिते काञ्चीनाम्नि पुरे प्राक्पश्चिमोद्देशयो: चिरम् निवसतो: दैवतयो: मिथ: विरुद्धा रीति: । हि एक: द्विजराजम् अपि अधरयति अन्य: उत्तंसयति । हन्त ! कच्चित् स्वर्धुनीम् अङ्घ्रौ अपर: स्वे मूर्धनि विभर्ति ।।

**पक्षान्तरेणापि तदेवोपपादयति—** काञ्चीनाम्नीति । सुरेन्द्रेणेन्द्रेण महिते पूजिते काञ्चीनाम्नि पुरे नगरे, प्राक्पश्चिमोद्देशयो: पूर्वपश्चिमदिशोरित्यर्थ: । चिरं बहुकालं निवसतो: वासं कुर्वतो: दैवतयो: वरदराजैकाम्रेश्वरयो: मिथ: परस्परं विरुद्धा रीति: आचार: । हि यस्मात् एक: वरदराज: द्विजराजं पक्षिराजं ब्राह्मणराजं चापि, अधरयति वाहनत्वेनाधरीकुरुते तिरस्करोति च । अन्य: एकाम्रेश्वरस्तु तं द्विजराजं चन्द्रम् उत्तंसयति पूजयति शिरोभूषणत्वेन स्वीकरोति च । हन्तेत्याश्चर्ये कच्चिदेक: स्वर्धुनीं गङ्गाम् अङ्घ्रौ चरणे विभर्ति धारयति, अपर: स्वे मूर्धनि मस्तके च स्वर्धुनीं विभर्ति । एतद्वा चित्रमाश्चर्यं पश्येति पूर्वेणान्वय: ।।३३८।।

इन्द्रपूजित काञ्ची नामक नगर में पूर्व और पश्चिम दिशा में बहुत दिन से निवास करते हुए दोनों देव आपस में एक दूसरे से भिन्न आचरण करते हैं। क्योंकि एक (वरदराज) द्विजराज (पक्षिराज) को नीचे करता है दूसरा द्विजराज (चन्द्र) को ऊपर (मस्तक पर) उठाता है। आश्चर्य है कि कोई गङ्गा को चरण में, दूसरा अपने मस्तक पर धारण करता है ।।३३८।।

पातञ्जले विष्णुपदापगायाः पातञ्जले चापि नयेऽवगाहम्।
आचक्षते शुद्धिदमा प्रसूतेराचक्षते रागमधोक्षजे च ।।५७२।।

**अन्वयः—** पातञ्जलेः नये पातम्, अपि च विष्णुपदापगायाः जले अवगाहम्, अधोक्षजे रागम् आ प्रसूतेः आ क्षतेः च शुद्धिदम् आचक्षते ।।५७२।।

पातञ्जल इति। पतञ्जलेः एतन्नामकमुनेः शेषावतारस्य अयं पातञ्जलस्तस्मिन्, तेन रचिते इत्यर्थः। नये व्याकरणमहाभाष्यरूपे शास्त्रे पातं प्रवेशम् अभ्यासमित्यर्थः। तथा विष्णुपदापगायाः गङ्गायाः जले चापि अवगाहं स्नानम् अधोक्षजे भगवति विष्णौ च रागं भक्तिं च आ प्रसूतेः जन्मारभ्य आ क्षतेर्मरणपर्यन्तं च शुद्धिं क्रमेण वाचिकीं शारीरीं मानसीं च पवित्रतां ददाति समर्पयतीति तथाभूतम् आचक्षते कथयन्ति। पण्डिता इति शेषः ।।५७२।।

पतञ्जलि निर्मित शास्त्र में प्रवेश और गङ्गा के जल में स्नान और विष्णु में अनुराग और जन्म से प्रारम्भ कर मरण पर्यन्त पवित्रता देने वाला कहा जाता है ।।५७२।।

गङ्गाझरी परिचिताङ्घ्रि जगन्निदानं
रङ्गादिधामसु चिरात्कृतसन्निधानम्।
विश्वं स्वतो विशदमेव विलोकमानं
वन्दस्व वस्तु वरदार्तिहराभिधानम् ।।५८१।।

गङ्गा के प्रवाह से परिचित चरण, संसार के आदिकारण स्वनिर्मित विश्व को स्वयं ही प्रसन्नता से निरीक्षण करते हुए रङ्गादि स्थानों में बहुत समय से कृत निवास, इच्छित फलदाता, दुःखहर्त्ता नाम से प्रसिद्ध समस्त प्राणियों के अन्तर्यामी को नमस्कार करो ।।५८१।।



# गङ्गालहरी टीका[1]

## बाल बोधिनी

**।। श्रीगणेशाय नमः ।।**

भागीरथी त्रिदशसेवितपादपद्मा पद्माभयामृतकराऽब्जवराग्रहस्ता ।
मुक्ताविभूषणविराजितचारुदेहा पापं विनाशयतु मे सुकृतप्रवाहा ।।१।।

दुर्गाराममहं प्रणम्य पितरं गोविन्दरामात्मज-
साहित्यालयरंगनाथतनयं श्रीकृष्णभट्टं गुरुम् ।
टीकां बालमुदे करोमि विशदां गङ्गालहर्याः परां,
तुष्यन्तु प्रतिभाजुषश्चपलतां वीक्षार्भकस्य स्फुटाम् ।।२।।

अत्र चिकीर्षितस्य पीयूषलहर्य्याख्यस्तवराजस्य निर्विघ्नसमाप्तिकामनया जगन्नाथाभिधेयः पण्डितवर्यः स्तवाधिष्ठात्रीं देवतां स्तौति समृद्धेति–

ॐ समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्-
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।

हे गङ्गे ! ते सलिलं जलं नोऽस्माकमशिवमकल्याणं शमयतु शान्तिं प्रापयतु । किं लक्षणं तत्, सकलवसुधायाः समृद्धं सौभाग्यं सकला समस्ता या वसुधा वसुमती तस्याः 'भूर्भूमिर्वसुधावनिर्वसुमतीति' हलायुधः, अथवा कलाभिः कलनाभिः सह वर्तते सकला सा चासौ वसुधेति विग्रहः 'कलना कालकलयोः कलेति' विश्वः' समृद्धं सम्यक् ऋद्धं वृद्ध्यर्थं कादृध्नोतेः कर्मणिक्तः समृद्धं नाम वृद्धिमत् । एतादृशं सौभाग्यं सुभगस्य षडैश्वर्यस्य भावः सौभाग्यम् प्यजन्तमेतत् अनुसतिकादित्वादुभयपदवृद्धिः । पुनः किं लीलाजनिजगतः लीलया अनायासेन जनितं उत्पादितं जगत् येन तस्य 'लीला विलासक्रिययोरित्यमरः' । खण्डपरशोः शंकरस्य खण्डपरशुः परशुरामे 'शंकराभे शंकरे चूर्ण लेपिनीति मेदिनी' किमपि वचनानिर्देश्यं महैश्वर्यं महच्च तदैश्वर्यं च महैश्वर्यं, महच्छब्दस्य परिमाणार्थतयाऽपरिमितैश्वर्यं वा पूज्यमैश्वर्यं ।

**समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्**
**महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।**
**श्रुतीनां सर्वस्वं सुकृत मथ मूर्त्तं सुमनसाम्**
**सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु ।।१।।**

---

१. **टीकाकार–** दलपतिरामः, रङ्गनाथः, **विषयः–** स्तोत्रम्, स.भ.पु.पा.लि.सं. २०१३२, २०१३०, **पत्र संख्या–** १-२७, **लिपि–** दे.ना. पूर्ण । **रचनाकाल–** संवत् १८१६ ।

अथवा महेनोत्सवेन युक्तमैश्वर्यं मह उद्धव उत्सव इत्यमरः। महश्चात्रानन्दः, आनन्दो ब्रह्मेति व्यज्ञानात् इति श्रुतेः। चिदंशकलया व्याप्तमैश्वर्यमित्यर्थः। एतेन शङ्करस्य सृष्टिस्थितिलयकार्यत्वमेव कारणीभूतमिति ध्वनितम्।

गङ्गा पुनः किं ? श्रुतीनां वेदानां सर्वस्वं सर्वं च तत् स्वं चेति विग्रहात् सकलं धनमिति भावः। इरावती मधुमतीत्यादिरूपां, अथवा श्रुतीनां कर्णानां सर्वस्वं समस्तात्मा कर्णस्य शब्दविषयत्वाच्छब्दाश्रयत्वाच्च। 'श्रुतिः श्रोत्रं च तत्कर्मण्याम्नायोक्तं तयोः स्त्रियामिति' मेदिनी। गंगेति कर्णविवरे पतितं कदाचित्तस्यास्ति संपदखिला तृणतुल्यरूपेत्याचार्याः।

अथानन्तरं सुमनसां देवानां मूर्त्तं मूर्तिमत्सुकृतं पुण्यं द्रवरूपेण भूतलमापतितं सन्मर्त्यानां चक्षुर्विषयकमासीदित्यर्थः। अथवा सुष्ठु मनो येषां ते सुमनसस्तेषां सुमनसां सज्जनानां। ज्ञेयाः सुमनसो देवाः कुसुमानि च सज्जना इत्यनेकार्थः। अतएवोक्तं त्रिपुरतापिन्याम् :—

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम्॥

कामरहितमनसां सज्जनानां मूर्त्तिधारि सुकृतं गङ्गारूपम्। पुनः सुधा सौन्दर्यसुधायाः सकाशात्सौन्दर्यमाधुर्यं यस्य तत्।

ननु सुधासदृशं किंचिद्यां पीत्वाऽमरतां व्रजेदिति कथमेतस्याः सलिलस्य सुधातोऽपि सुन्दरत्वमिति चेदुच्यते। न हि सुधापानेन सायुज्याद्यवाप्तिः। अतएवाचार्यचरणाः 'सुधामवाप्याऽऽस्वाद्य प्रतिभयजरामृत्यहरिणीं विपद्यन्तो विश्वे विधिशतमखाद्यादिविषद' इति एतेन सुधापानकर्तृणामपि मरणश्रवणादेतत्सलिलस्य सुधातः सौन्दर्यं स्फुटमेव। यदाह भगवान्कालिदासः—

कत्यक्षीणि करोटयः कति कति द्वीपिद्विपानां त्वचः
का कोलाः कति पन्नगाः कति सुधाधाम्नश्च खण्डाः कति।
किञ्च त्वञ्च कति त्रिलोकजननी त्वद्वारिपूरोदरे
मज्जज्जन्तुकदम्बकं समुदयत्येकैकमादाय यत्॥

कदम्बं प्राणिसमूहः। एतेन यदीयसलिलपानकर्त्तृणां निर्वाणपदवी न दवीयसीति भावः। समृद्धमित्यारभ्य शरच्चन्द्रश्वेतामित्यन्तं शिखरिणीवृत्तम्। तल्लक्षणं विस्तरभयान्नोक्तम्॥१॥

**विलीनं वै वैवस्वतनगरकोलाहलभरो;**
**गता दूता दूरं क्वचिदपि परेतान् मृगयितुम्**
**विमानानां व्रातो विदलयति वीथीर्दिविषदां**
**कथा ते कल्याणी यदवधि महीमण्डलमगात् ।।२।।**

विलीन इति। हे मातः ते कल्याणी कल्याणकर्त्री। कथ्यते इति कथा गुणानुवर्णनमित्यर्थः। यदवधि। क्रिया सामान्ये नपुंसकम्। यत्कालमारभ्य-महीमण्डलं पृथ्वीचक्रवालं चक्रवालं तु मण्डलमित्यमरः।' अगात् आगता तदवधि। यत्तदोर्नित्यसंबन्धात्तदवधि तत्कालमारभ्य वैवस्वतनगरकोलाहलभरः। विवस्वतोऽपत्यं पुमान् वैवस्वतो यमस्तस्य नगरं संयमनी तस्यां कोलाहलभरः कलकलसमूहः। पापिनामिति शेषः। अथवा दूतानामिमंपापिनं हन्यताममुं च्छिन्ध्यतामित्यादि-शब्दसमूहः। विलीनो नष्टः त्वत्कथायाः भूतले संप्राप्ते पापिनो मुक्ता अभूवन्। यमनगरं रिक्तमभूदित्यर्थः। तथा चोक्तम्।

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।।इति।।

वै पादपूरणे निश्चये वा। परेतान्मृगयितुं गवेषितुं मृतानां मार्गणायेत्यर्थः। दूताः यमभृत्याः क्वचिदपि दूरं गताः। विमानानां व्योमयानानां व्योमयानं विमानो-ऽस्त्रीत्यमरः। व्रातः समूहः 'समा भर व्रात व्रजा समूह निचयावपीति' वैजयन्ती।। दिविषदां आदितेयानां। 'आदितेया दिविषदो लेखा अदितिनन्दना इत्यमरः।' वीथीस्त्रीपद्धतिर्मार्गोऽयनमध्वा च वर्त्म चेति' केशवः। विदलयति संकोचयति। त्वदीयांभसि परेत्य निर्गतानां मनुष्याणां विमानैर्गगनमार्गो रुद्ध आसीदिति भावः ।।२।।

**दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां**
**द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिं।**
**अपि द्रागाविद्यद्रुमदलनदीक्षागुरुरिह**
**प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ।।३।।**

दरिद्राणामिति। ते तव वारां वारीणां प्रवाहः, पुरः नोऽस्मभ्यं अपारां न पारोऽतो यस्यां अनंतामित्यर्थः। श्रियं त्रिवर्गसम्पत्तिं दिशतु ददातु। श्रीर्वेषरचनाशोभाभारती सरलद्रुमे। 'लक्ष्म्यां त्रिवर्गसंपत्ताविति' मेदिनी।

अथ नाम मंगलरूपः। 'मंगलानंतरारंभप्रश्नकार्येष्वऽथो' चेत्यमरः। दरिद्राणां अकिंचनानां दैन्यं दीनतां द्रुतं शीघ्रं दूरीकुर्वन्। 'लघु शीघ्रमरं द्रुत' मित्यमरः। पुनः किं ? दुर्वासनहृदां दुष्टवासना येषु तानि दुर्वासनानि। दुर्वासनानि हृदि येषां

तेषां दुष्टवासनाक्रान्तमनसां पापिनामित्यर्थः। 'स्वांतं हृन्मानसं मन' इत्यमरः। दुरितं दुष्कृतं दूरीकुर्वन्। पुनः किं इह लोके दृष्टिसरणिं नेत्रपथं सकृदेकवारमपि यदि उपगतः प्राप्तस्तदा 'अप्यर्थे यदि वाऽर्थैः स्यादिति' केशवः। द्राक् झटिति आविद्यः अविद्याया अयं आविद्यः अविद्याजनित इत्यर्थः। अज्ञानमूलक इति यावत्। आविद्यश्चासौ द्रुमश्चाऽऽविद्यद्रुमस्तस्य दलनं उन्मूलनं तस्य दीक्षागुरुः ब्रह्मज्ञानोपदेष्टेति भावः। दीक्षायाः फलं नरकव्यावृत्तिः। तदुक्तमीश्वरेण समग्रवेदाध्ययनोऽपि विप्रो दीक्षाविहीनो नरकं प्रयाति। इति। सा च गुरुमन्तरा न लभ्यते। एवं च अविद्यादलनदीक्षागुरुत्वेन तदीयप्रवाहस्याऽधिक्यं कथमिति चेदुच्यते।

एतदीयवारां प्रवाहस्तु जन्ममरणरूपवृक्षोन्मूलनसमर्थो दृष्टिसरणिं सकृदुपगतः सन् भवतीति वैलक्षण्याद्दीक्षागुरोरप्याधिक्यं अस्येति रहस्यम्।।३।।

**उदञ्चन्मात्सर्य्यस्फुरकपटहेरम्बजननी,**
**कटाक्षाव्याक्षेपक्षणजनितसंक्षोभनिवहाः।**
**भवन्तु त्वर्यन्तो हरशिरसि गाङ्गा पुनरमी**
**तरङ्गाः प्रोत्तुङ्गा दुरितभयभङ्गाय भवताम्।।४।।**

**उदञ्चन्मात्सर्येति।** अमी गाङ्गाः गङ्गासम्बन्धिनस्तरङ्गाः पुनर्भवन्तीति ते पुनर्भवन्तस्तेषां पुनः संसारे उत्पद्यमानानामस्मदादीनामिति शेषः। दुरितभरभंगाय दुष्कृतसमूहनाशाय भवन्तु। तादर्थ्ये चतुर्थी। किंल्लक्षणाः? प्रोत्तुंगाः उन्नताः। पुनः किं उदञ्चतीति उदञ्चत्। सर्वाङ्गीणं यन्मात्सर्यं परोत्कर्षाऽसहनं मत्सरः। अत्र परा सपत्नी गङ्गा रूपा तस्या उत्कर्षो महतः पत्युः शिरोधिरोहणरूपस्तेन स्फुटं वाहीकं यत्कपटं तेन युक्ताया। हेरम्बजननी पार्वती तस्याः कटाक्षाः ईर्ष्ययाऽवलोकितानि तेषां व्याक्षेपेण व्याक्षिप्त्या जनितः जातः क्षणं क्षणमात्रं संक्षोभनिवहो उद्वेलनसमूहो येषां अतएव हरस्य महादेवस्य शिरसि त्वर्यन्तः त्वरया गच्छन्तः। एतावता यस्य पुरुषस्य गृहिणीद्वयं तिष्ठति तयोरनपत्या न प्रेयस्करीति लोके प्रसिद्धिः। महादेवस्य तु हेरम्बस्य सकलविघ्नाटवीदावानलस्य जननी माता। एतादृशीं पार्वतीं वामाङ्गे धारयति। त्वां च पुनरुत्तमाङ्गे धारयामास। अतस्त्वदीयरूपशीलपरोपकारादिगुणसम्पत्या महादेवोऽपि तवाधीनतां समधिगत इति भावः।।४।।

**मरुल्लीलालोल्लहरिलुलिताम्भोजपटल-**
**स्खलत्पांशुव्रातच्छुरणविलसत्कौंकुमरुचि।**
**सुरस्त्रीवक्षोजक्षरदगुरुजम्बालजटिलम्**
**जलं ते जंघालं मम जननजालं जरयतु।।५।।**

मरुल्लीलेति। ते तव जंघालं बलवत्तरं। अथवा जंघालं जंघापरिमितं 'आदन्तेभ्यो लजिष्यते' इति वचनात् क्वचित् परिमाणेपि लघूसंभवति। उदाहरणं तु स्वधियोह्यं सुधीभिः। जंघापरिमितजलस्य आबालादिस्नानयोग्यत्वात्। जलं मम जननजालं जरयतु शिथिलयतु। जननानां जन्मनां। 'जनुर्जननजन्मानि' इत्यमरः। जालं कर्मरूपमानायः। 'आनायः पुंसि जालं स्या' दित्यमरः। उक्तं च। 'स्वकर्मसूत्रग्रथितो हि लोकः इति। अथवा, जननानां जालं समूहं चतुरशीतिलक्षयोनिरूपम्। 'जालं समूह आनाय' इत्यमरः। किं लक्षणं जलम्? सुरस्त्रीणां अङ्गरुहस्तस्य जंबालः पंकस्तेन जटिलं मिश्रितम्। पुनः किं? मरुतां पवनानां लीला मन्दं मन्दं वहनं तेन लोलत्यः चपला या लहर्य्यस्ताभिः लुलितानि कंपितानि अंभोजपटलानि कमलसमूहास्तेभ्यः स्खलन् अधः पतन् यः पांशुव्रातः रजसमूहः। पांशुर्नान द्वयोरज इत्यमरः। तस्य छुरणं मेलनं तेन विलसत् विलसन-शीलम् विसरद् इति पाठे विसरणशीलं तेन कौंकुमरुचि कुंकुमस्य केसरतुल्यकान्तिः। एतेन कमलपरागसम्पर्कितं जलं घ्राणे निद्रया ह्लादकृद्भवतीति सूचितम्॥५॥

**स्फुरत्कामक्रोधप्रबलरससंजातजटिल-**
**ज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम्।**
**हरन्तां सन्तापं कमपि महदुल्लासलहरी-**
**छटाचंचत्पाथः कणसरणयो दिव्यसरितः॥६॥**

स्फुरत्कामेति। दिव्यसरितः दिवि भवाः दिव्यास्तेषां सरित् नदी दिव्यपदं सरितो विशेषणं वा। तस्याः दिव्यसरितः स्वर्नद्याः मरुत् उल्लासलहरी छटा-चंचत्पाथः कणसरणयः। महतां उल्लास उल्लसनं तेन लहरी छटाभिः चंचत् चंचलं यत्पाथः उदकम्। 'कबन्धमुदकं पाथः' इत्यमरः तस्य कणाः शीकराः। 'शीकरोम्बुकणाः स्मृता' इत्यमरः। तेषां सरणयः पंक्तयः। प्रतिदिनं प्रत्यहं नोऽस्माकं कमपि वचनाऽगोचरं संतापं संज्वरं। 'सन्तापः संज्वरः समौ' इत्यमरः। आध्यात्मिकाऽधिदैविकाऽधिभौतिकरूपं, जातित्वादेकवचनम्। अतएवोक्तम् :—

तापत्रयावरकमौषधमद्वितीयं ।
गाङ्गं पयो भवहरं भज हे मुमुक्षो॥इति॥

हरन्तां दूरीकुर्वन्तु। किंल्लक्षणानां नः। स्फुरन्नुपायो यः कामोऽभिलाषः इदं मे भूयादिदं मया लब्धमिदं लप्स्ये इत्याकारः। कामःस्मरेऽभिलाषे च कामं रेतो निवासयोः। अव्ययं त्वऽभ्यनुज्ञायामिति विश्वः।तस्माद्यः क्रोधः परकृतापमानादिजन्यः अत्र पञ्चमीतत्पुरुषेण कामक्रोधयोर्जनकजन्यत्त्वं संभवति। अतएवोक्तं गीतायां संगात्संजायते कामः कामात् क्रोधोऽभिजायते इति।

तस्य प्रबलो यो रसद्रवः। 'रसः स्यात्पारदे शृंगारादौ वीर्ये द्रवे जले' इति धरणिः। एवं च स्वल्पस्यापि द्रवीभूतस्य द्रव्यस्य सर्वाङ्गप्रसारित्वमनुभवसिद्धम्। तेन संजातः सम्यक्तयोत्पन्नः। जटिलः जटायुक्तः जटिलापिप्पलीमांस्योजटायुक्ते तु वाच्यवत्' इति मेदिनी। स चासौ ज्वरस्तापाग्निस्तस्य ज्वालानां शिखानां। 'वह्नेर्द्वयोर्ज्वालकीलाचर्चिहेतिः शिखास्त्रिया' मित्यमरः। जालं समूहस्तेन ज्वलितं दग्धं वपुः शरीरं येषां तेषामित्यर्थः ॥६॥

**विनिंद्यान्युन्मत्तैरपि च परिहार्याणि पतितै**
**रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः।**
**हरन्ती लोकानामनवरतमेनांसि कियतां**
**कदापि श्रान्ता न त्वमिव जननि त्वं विजयसे ॥७॥**

विनिंद्यानीति। उन्मत्तैरपि उत्पथगामिभिरपि विनिंद्यानि विशेषेण गर्ह्याणि पितृहननादीनि। स्यादुन्मत्तस्तु धत्तूरे तथा चोत्पथगामिनीति रभसः। च पुनः पतितैरपि परिहार्याणि परितः आसमंतात् हर्त्तुं युक्तं योग्यानि ब्रह्महननादीनि। व्रात्यैश्चण्डालविशेषैरपि अवाच्यानि अगम्यागमनादीनि। सपुलकं सरोमांचं यथा स्यात्तथा पिशुनैः कर्णेजपैः अपास्यानि अपास्तुं क्षेप्तुं योग्यानि स्वमातृजार-संकथनादीनि। एतादृशानि कियतां कतिपयानां लोकानां जनानां एनांसि वृजिनानि। 'कलुषं वृजिनैनोघमंहोदुरितदुष्कृत' मित्यमरः। अनवरतं अजस्रं 'नित्यानवरताजस्रं' इत्यमरः। हरन्ती नाशयन्ती त्वं कदापि कस्मिंश्चित्कालेऽपि न श्रान्ता। न खिन्ना। अतः कारणात् हे जननि त्वमिव त्वं विजयसे सर्वोत्कर्षेण वर्तसे। अत्र यदि तव तुल्यमुपमानं स्यात्तदा त्वमुपमेया स्याः। अत स्त्वदुपमा त्वमेव। अत्राऽनन्वयालङ्कारः। तदुक्तं चन्द्रालोके 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः' इति लक्षणात् ॥७॥

**स्खलन्ती स्वर्लोकादवनितलशोकापहृतये**
**जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा।**
**अये निर्लोभानामपि मनसि लोभं जनयतां**
**गुणानामेवायं तव जननि दोषः परिणतः ॥८॥**

स्खलन्तीति। अये इति कोमलामन्त्रणे। अये जननि! स्वर्लोकात् त्रिदिवात् स्खलंती निपतंती त्वं। किमर्थमित्यपेक्षायामाह। अवनितलशोकापहृतये अवने भूमेर्यत्तलं अधरः।

'तलश्चपेटे तालद्रौ तले ज्याघातवारणे।
स्वरौ स्वभावाऽधरयोस्तंत्रीघाते च सव्यतः इति मेदिनी।

अत्राऽवनि शब्देन मञ्चाः क्रोशन्तीतिवत् लक्षणया अवनीतलस्था मनुष्याः लक्ष्यन्ते। शोको मानसो धर्मः। शोकमोहौ तु मानसाविति वचनात्। तस्यापहतये नाशाय। एतेन एतस्याः परोपकारित्वं सूचितम्। यत् यस्मात् कारणात् पुरभिदा त्रिपुरारिणः जटाजूटग्रन्थौ कपर्दग्रन्थौ। कपर्दोस्य जटाजूट- इत्यमरः। निबद्धासि गूहितासि। अतः कारणात् तव गुणानां, किं लक्षणानां निर्लोभानां अलुब्धानामपि मनसि लोभं जनयतामुत्पादयतां अयमेव परिणतः परिपक्वो दोष इति व्यञ्जना ॥८॥

**स्वभावस्वच्छानां सहजशिशिराणामयऽपा-**
**मपारस्तेमातर्जयति महिमा कोपि जगति।**
**सदा ते गायन्ति द्युतलमनवद्यद्युतिभृतः**
**समासाद्याऽद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥९॥**

स्वभावेति। हे मातः ते तव अपां जलानाम्। किं लक्षणानां? स्वभावस्वच्छानां निसर्गनिर्मलानां। पुनः किं? सहजशिशिराणां स्वाभाविक-शीतलानां अयं संनिकृष्टवर्त्ती कोपि अनिर्वचनीयः महिमा जगति विश्वेऽस्मिन् जयति सर्वोत्कर्षेण वर्त्तते। किं लक्षणः? अपारः न परो अन्तो यस्य स अपारः। अनन्त इत्यर्थः। अपारत्वे हेतुमाह यं महिमानं अद्यापि इदानीमपि मुदा हर्षेण। 'मुत्प्रीतिः प्रमदोहर्ष' इत्यमरः। द्युतलं स्वर्गलोकम्। 'सुरलोकोद्यो-दिवौद्वेस्त्रियामित्यमरः। सगरजाः सगरपुत्राः। आसाद्य प्राप्य। किंलक्षणाः? अनवद्यद्युतिभृतः निर्मलकान्तिधारिणः। पुनः किं स्फुटपुलकसान्द्राः संतः। सद्यः निरन्तरं गायन्ति गानं कुर्वन्ति। स्फुटो बहिर्गतः। यः फुलको रोमांचः। पुलकः कृमिभेदेस्यादुत्कर्षमणिदोषयोः। 'गजान्नपिण्डरोमाञ्च' इति विश्वः। तेन सान्द्राः आप्लुताः प्रेमपरिपूर्णा इत्यर्थः। त्वदीयजलसम्पर्कसंक्षालितसकलाघौघाः। षष्ठिसहस्त्रं सगरनृपात्मजा दिव्यदेहधरिणः एतावत्कालपर्यंतमपि हृष्टाः संतः स्वर्गे त्वदीयाऽनिर्वचनीयमहिमानं गायन्तीति भावः ॥९॥

**कृतक्षुद्राऽघौघानऽथ झटिति संतप्तमनसः**
**समुद्धर्त्तुं संति त्रिभुवनतले तीर्थनिवहाः।**
**अपि प्रायश्चितप्रसरणपथातीतचरितान्-**
**नरानूरीकर्तुं जगति खलु जागर्त्ति भवती ॥१०॥**

कृतक्षुद्रेति। त्रिभुवनतले ब्रह्माण्डोदरे तीर्थनिवहाः तीर्थसमूहाः कृतक्षुद्रा-घौघान् कृतः क्षुद्रः स्वल्पोऽघौघो यैस्तान्। अथ तत्करणानन्तरं झटिति द्राक् झटित्वेजसाह्वाय' इत्यमरः। संतप्तं मनो येषां तान् 'पश्चात्तापे भवेदर्द्धमिति' वचनात्

पापं कृत्वा पश्चादनुतापं कुर्वाणानित्यर्थः। एतादृशान् जनान् समुद्धर्त्तुं पापादुद्धारं कर्त्तुं सन्ति भवन्ति। अपि निश्चयेन। प्रायश्चित्तप्रसरणपथातीतचरितान् प्रायश्चित्तं कृच्छ्रादि तस्य प्रसरणं विधिस्तस्य पंथा इति प्रायश्चित्तप्रसरण पथस्तस्मादतीतमतिक्रान्तं चरितमाचरणं येषां तान् प्रायश्चित्तविधानशून्यकृतकर्मण इत्यर्थः। नरान् मनुष्यान् ऊरीकर्त्तुं अङ्गीकर्तुं जगति विश्वस्मिन्। खलु निश्चयेन भवती जागर्त्ति विनिद्राति। येषां क्वचिदपि उद्धारो न जायते तेषां उद्धारस्त्वदधीन इति भावः ॥१०॥

**जडानन्धान् पंगून्प्रकृतिबधिरानुक्तिविकलान्**
**ग्रहग्रस्तानस्ताऽखिलदुरितनिस्तारसरणीन् ।**
**निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो**
**नरानेव त्रातुं त्वमिह परमं भेषजमसि ॥११॥**

जडान् इति। हे अंब जडान् मूर्खान्। जडो मूर्खो हिमग्रस्ते शूकशिंव्यां जडामतेति· विश्वः। विवेकरहितान्। अतएवोक्तम्—

आहार निद्रा भयमैथुनानि चत्वारि चिह्नानि वसन्ति देहे।
एको विवेकोप्यधिको मनुष्ये तेनैव हीनः पशुभिः समानः॥

इति। मूर्खस्यापि शास्त्रप्रसिद्धं पशुत्वम्। अथवा जडान् वृक्षादीन्। अन्धान्नेत्रहीनान्। अथवा अंधयतीति अन्धं अज्ञानं तदस्ति एषामिति 'मत्वर्थीयोऽच्'। ज्ञानहीनान् पंगून् पादरहितान् प्रकृतिबधिरान् प्रकृत्या स्वभावेन बधिरान्। उक्तिविकलान्। व्याहारउक्तिर्लपितमित्यमरः। ग्रहैः रव्यादिभिः ग्रस्तान् पीडितान्। अतस्तानखिलदुरितनिस्तारसरणीन्। अखिलं समग्रं यत् दुरितं अखिलदुरितं तस्य निस्तारस्तरणं तस्य सरणिः पंक्तिः अस्ताऽखिलदुरितस्य निस्तारसरणिर्येषां तान्॥ निलिंपै र्देवैः। 'शोभानिलिंपाद्युषदः स्वद्रिणिश्चनभः सद इति त्रिकाण्डशेषः। निर्मुक्तान् त्यक्तान् अपि च परं निरयान्तर्निपातः। निरयस्य नरकस्य अंतर्मध्यं तत्र निपतन्त निमज्जंतः 'अन्तर्मध्ये तथा प्रान्ते स्वीकारार्थेपि दृश्यते' इति विश्वः। एतद्विशिष्टान् तान् नरान् त्रातुं पालयितुं इह संसारे परमं परमा शक्तिर्यस्य तत्परमसमर्थम्। भेषजं औषधं त्वमसि त्वं भवसि॥११॥

**निधानं धर्माणां किमपि च विधानं नवमुदां**
**प्रधानं तीर्थानाममलपरिधानं त्रिजगतः।**
**समाधानं बुद्धेरथ खलु तिरोधानमधियां**
**श्रियामाधानं नः परिहरतु तापं तव वपुः ॥१२॥**

निधानमिति। हे गंगे! तव वपुः नोऽस्माकं तापं परिहरतु दूरीकरोतु। किंलक्षणं धर्माणां वृषाणां निधानं शेवधिं निधीयते अस्मिन्निति निधानं

अधिकरणे ल्युट्। धर्मालयमिति यावत्। च परं नवमुदां नवा अपूर्वामुदस्तासाम-पूर्वहर्षाणां किमपि अनिर्वाच्यं विधानं करणम्। तीर्थानां पुष्करादीनां प्रधानं अग्रग्रण्यं। 'प्रधानमग्रग्रण्ये पुंस्यऽमात्ये प्रकृतौ स्त्रियामिति' चामरे। पुनस्त्रिजगतः त्रैलोक्यस्य अमलपरिधानं परिधीयते इति परिधानं वस्त्रं। अमलं निर्दोषं च तत्परिधानं चेति। समस्तजगद्विषयकपापाऽऽवरणमित्यर्थः। अत्राऽमलत्वं परिधीयमानं सत्परिधातुः सकलदायकं भूत्वा। 'क्षीणे पुण्ये मर्त्यलोके विशंति' इत्यादि-दोषरहितत्वेऽपि परिधाने बोद्धव्यम्। अयमाशयः। गमाऽऽगममलवर्जितत्वदीय-जलरूपवस्त्रप्रावृत्तानां न भूयोऽन्यत्परिधानमवशिष्यत इति। पुनः किम्? बुद्धेर्ज्ञानस्य समाधानं समाधायकं यत् प्राप्य बुद्धेः समाधानं जायत इत्यर्थः। अथानन्तरं खलु वाक्यभूषायां 'स्यात् जिज्ञासादौ च सांत्वने इति' विश्वः। अधियां न धीर्येषां तेषां प्रज्ञाहीनानां तिरोधानं दोषान्तर्द्धायकम्। पुनः किम्? श्रियां त्रिवर्गसंपत्तीनां आधानं आधायकम्। श्रीवेषरचनाशोभा भारतीसरलद्रुमे। 'लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे' मतेति विश्वः॥१२॥

**इदं हि ब्रह्माण्डं सकलभुवनाभोगभुवनं**
**तरंगैर्यस्यान्तर्लवति परितस्तिन्दुकमिव।**
**स एष श्रीकण्ठाप्रतिहतजटाजूटजटिलो**
**जलानां संघातस्तव जननि पापं हरतु नः॥१३॥**

इदमिति। हे जननि। तव जलानां स एष संघातः प्रवाहः। नो अस्माकं पापं दुष्कृतं हरतु दूरीकरोतु। किं लक्षणः। श्रीकण्ठस्य नीलकण्ठस्याप्रति-हतोऽपरिमितो यो जटाजूटः केशसमूहस्तेन जटिलो मिश्रितः। पुनः किम्? यस्य संघातस्य तरंगैः ऊर्मिभिः। हि इति निश्चयेन सकलभुवनाभोगभवनं सकलानां समस्तानां भुवनानां लोकानां चतुर्दशानामिति यावत्। आभोगः पूर्णता। आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपीति विश्वः। तस्य भवनमावासः। 'आवासो वसथं गृह च भवनमिति' हलायुधः। इदं ब्रह्माण्डं परितः समन्तात् अन्तः मध्ये तिन्दुकमिव तिंदुकफलमिव लुठति इतस्ततः प्रसरति। अयमभिप्रायः। कल्पान्ते विकीर्णमहादेव-जटाजूटनिर्गतत्वदीयजलसंघातसंप्लावितमेतद्ब्रह्माण्डं तिन्दुकवत् प्रतिभाति। एतेन एतदीयप्रवाहस्य ब्रह्माण्डाऽऽविर्भावतिरोभावकारणत्वं सूचितम्॥१३॥

**नगेभ्यो यान्तीनां कथय तटिनीनां कतमया**
**पुराणां संहर्त्तुः सुरधुनि कपर्द्दोऽधिरुरुहे।**
**कया वा श्रीभर्त्तुः पदकमलमक्षालि सलिलै-**
**स्तुलालेशो यस्यां तव जननि दीयेत कविभिः॥१४॥**

नगेभ्यो इति। हे जननि कविभिर्वाल्मीक्यादिभिः यस्या नद्या तवतुलालेशः

तुलायाः सादृश्यस्य। 'तुलापलशते राशौ भाण्डे सादृश्यमानयोः' इति विश्वः। लेशो लव एकदेश इति यावत्। दीयेत उपमीयेत। हे सुरधुनि स्वर्गं ते तां त्वं कथय वद। ननु नर्मदादृषदः सर्वाः शंकराः ता न संशय इति रेवा खण्डे हरिहरक्षेत्रमाहात्म्ये च– गण्डकी प्रभवाः सर्वाः शिला नारायणात्मका इति वचनात् कथं तुलालेशो रेवाप्रभृतिषु न संघटत इत्यत आह– नगेभ्यो हिमालयादिभ्यो यांतीनां गच्छन्तीनां मध्ये कतमया नद्या। पुराणां अथवा पुराणां चतुर्दशलोकानां संहर्त्तुः संहारकर्त्तुः महादेवस्य कपर्दः जटाजूटो अधिरुरुहे आरूढः। अपितु न कतमया। वा अथवा श्रियाः लक्ष्म्याः भर्त्तुः कांतस्य 'कान्तः स्यात्कमितः पतिर्वरयिता भर्त्ता च भोक्ता धव इति' हलायुधः। विष्णोः सलिलैः स्वकीयपाथोभिः पदकमलं चरणारविन्दम् 'पदं वस्त्रसितित्राणस्थानलक्ष्म्यांध्रिवस्तुषु' इत्यमरः। अक्षालि क्षालितं धौतमित्यर्थः। अपितु न कयापीति काकुः। यदि तुलालेशदानयोग्या न कदाचिदपि तदा सामग्र्येण तुलायोग्या क्व लभ्यत इति भावः ॥१४॥

**समुत्पत्तिः पद्मारमणपदपद्मामलनखा-**
**न्निवासः कंदर्पप्रतिभटजटाजूटभवने।**
**अथायं व्यासङ्गो निखिलजननिस्तारणविधे**
**र्न कस्मादुत्कर्षस्तव जननि जागर्त्ति जगति ॥१५॥**

समुत्पत्तिरिति। हे जननि जगति तवोत्कर्ष आधिक्यं कस्मान्न जागर्त्ति। जागरूको भवति। अपि तु सर्वस्मादेवेति भावः। पद्मारमणपदपद्मामलनखात् पद्मायाः कमलायाः, पद्मालयापद्माकमलाश्रीर्हरिप्रिया' इत्यमरः। रमणः प्राणनाथः विष्णुरिति यावत्। 'रुच्याभीकाश्वरणः प्राणनाथोतथानुक' इति हलायुधः। तस्य पदपद्मं चरणकमलं तस्यामलो यो नखस्तस्मात्तव समुत्पत्तिः जनिः। 'जनिरुत्पत्तिरुद्भव' इत्यमरः। एतेन योनितः श्रैष्ठ्यमुक्त्वा स्थानतोपि श्रैष्ठ्यमाह। कन्दर्पोऽनङ्गः। 'कन्दर्पोदर्पकोऽनंगः' इत्यमरः। तस्य प्रतिभटः प्रतिद्वन्दी महादेवस्तस्य जटाजूट एव भवनं गृहम्। तत्र निवासः वसतिः। स्थानतः श्रैष्ठ्यमुक्त्वा व्यवसायादपि श्रैष्ठ्यमाह। अथानन्तरं अयं सन्निकृष्टवर्त्ती निखिलजननिस्तारणविधेः। निखिलानां समस्तानां जनानां प्राणिनां निस्तारणं पापसकाशादुद्धारणं तस्य विधिः विधानं कारणमिति यावत्। 'विधिर्विधानदैवेपि' इत्यमरः। तस्य व्यासङ्गः उद्योगः प्रयत्न इति यावत्। एतेन सकलनदीशिरोमणिस्त्वमिति भावः ॥१५॥

**त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ**
**करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः।**
**इमं तं मामम्ब त्वमपि करुणापूर्णहृदये**
**पुनाना सर्वेषामघमथनदर्पं दलयसि ॥१६॥**

त्रपन्त इति। इह लोके तीर्थानि पुष्करादीनि। तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। 'अवतारर्षिजुष्टांभस्त्रीरजस्सु च विश्रुतमिति विश्वः। यस्य मल्लक्षणस्य जन्तोः उद्धृतिविधौ उद्धारकरणविषये त्वरितं सत्वरं यथास्यात्तथा त्रपन्ते लज्जां प्राप्नुवन्ति। किलेति संभावनायां, 'किलशब्दस्तु वार्तायां संभाव्यानुनयाऽर्थयोरिति' विश्वः। कपाली महादेवो प्रभृतिर्मुख्यो येषां ते कपालिप्रभृतयोऽपि देवाः करं हस्तं कर्णे कुर्वन्ति। एतदीयवार्त्तामपि न शृणुम इति कर्णं विदधति। अहङ्कारभरान् मुखतो निषेद्धुमशक्नुवन्तः कर्णं विदधाति। अहङ्कारभरान् मुखतो निषेद्धुमशक्नुवन्तः कर्णे हस्तं दत्वा त्वां समुर्त्ततुं वयं न समर्था इति सूचयन्तीति भावः। हे अम्ब करुणापूर्णहृदये करुणया परदुःखहरणेच्छालक्षणया दयया पूर्णं व्याप्तं हृदयं यस्यास्तत्संबुद्धौ। इमं पुरोवर्त्तिनं तं पूर्वोक्तं इयं त्वं पुनाना पावयन्ती सर्वेषां पुष्करादीनां तीर्थानां कपालिप्रभृतीनां देवानां अघमथनदर्पं, अघस्य पापस्य यन्मथनं विलोडनं तत्र यो दर्प अभिमानः। वयं पापात् उद्धर्त्तुं समर्था इत्याकारस्तं दलयसि शिथिलीकरोषि। त्वत्तः परो न कोऽपि पापादुद्धर्त्तुं समर्थ इति भावः ॥१६॥

**श्वपाकानां व्रातैरमितविचिकित्साविचलितै-**
**र्विमुक्तानामेकं किल सदनमेनःपरिषदाम्।**
**अहो मामुद्धर्त्तुं जननि दृढयन्त्याः परिकरं**
**तव श्लाघां कर्त्तुं कथमिव समर्थो नरपशुः ॥१७॥**

श्वपाकानामिति। हे जननि मातः श्वपाकानां श्वपचानां व्रातैः समूहैः। किं लक्षणैः? अमितविचिकित्साविचलितैः। अमिता अपरिमिता विचिकित्सां विशेषेण चिकेतुमिच्छा विचिकित्सा तत्र विचलितैः व्याकुलैः सन्देहवद्भिः इति यावत्। अतएव विमुक्तानां त्यक्तानां एनःपरिषदां पातकसमाजानां किलेत्यनुनये। एकं अद्वितीयं सदनं निलयं निवासस्थानमिति यावत्। एतादृशं मामुद्धर्त्तुं उद्धारं कर्त्तुं परिकरं गात्रिकाबन्धं दृढयन्त्याः दृढं कुर्वन्त्याः तव श्लाघां प्रशंसां कर्त्तुं, अहो इत्याश्चर्ये, नरपशुः। पश्यति समतया सर्वमिति पशुः नरेषु पशुः नरपशुः सदऽसद्विवेकरहितं कथमिति समर्थः शक्तो भवतीति न कथमपीति भावः। 'समर्थस्तु हिते शक्ते संबंधेऽप्यन्यलिङ्गक' इति मेदिनी। सर्वतया सर्वमपश्यतः अविवेकशीलस्य पुरुषस्य कथं वचनगोचरा भवती भवेदिति भावः ॥१७॥

**न कोप्येतावन्तं खलु समयमारभ्य मिलितो**
**यदुद्धारादाराद्भवति जगतो विस्मयभरः।**
**इतीमामीहान्ते मनसि चिरकालं स्थितवती-**
**मयं संप्राप्तस्त्वां सफलयितुमम्ब प्रणयतः ॥१८॥**

न कोप्येतावंतं इति। एतावंतं समयं कालं 'समय: शपथाचार-कालसिद्धान्तसंविद' इत्यमर:। आरभ्य कोऽपि मादृश: पापिजनो मिलित: न संगत:। खलु सांत्वने। 'खलुस्याद्वाक्यभूषायां जिज्ञासादौ च सांत्वन' इति विश्व:। यत् यस्य उद्धारात् उद्धरणाज्जगतो लोकस्य। आरात् दूरे समीपे च। 'आराद्दूरसमीपयो' रित्यमर:। विस्मयभर आश्चर्यराशिर्भवति स्यात्। विस्मयोद्भुतमाश्चर्यं चित्र' मित्यमर:। इति एतत् प्रकारं, 'इति हेतुप्रकरणप्रकारादि समाप्तिषु' इति विश्वश्च:। ते तव मनसि मानसे चिरकालं बहुकालं स्थितवतीं स्थितां इमां पूर्वोक्तां ईहां इच्छां सफलयितुं सफलां कर्तुं प्रणयत: प्रेम्णा याच्ञया वा। 'प्रणय: प्रेम्णिविश्रम्भे याञ्चाप्रसरयोरपीति' विश्व:। अयं मल्लक्षणो दुष्कृती। हे मात: हे अंब हे जननि। त्वां उद्धारेच्छावतीं संप्राप्त: प्रत्यागत:। त्वदीया ईहापालनप्रयोजनाय अहमागत:। मम तु न किमपि प्रयोजनमिति स्वकीयनिस्पृहत्वं दर्शयतीति भाव: ॥१८॥

**स्ववृत्तिव्यासंगो नियतमथ मिथ्या प्रलपनं**
**कुतर्केष्वभ्यास: सततपरपैशुन्यमननम्।**
**अपि श्रावं श्रावं मम तु पुनरेवं गुणगुणान्**
**ऋते त्वत्को नाम क्षणमपि निरीक्षेत वदनम्॥१९॥**

श्ववृत्तिरिति। शुनां वृत्तिर्वर्त्तनमिव वृत्तिर्येषां ते श्ववृत्तयस्तेषु व्यासंग: आसक्तिर्यस्य स:। अथवा। शुनां वृत्तिरिव वृर्त्ति येषां तानि श्ववृत्तीनि इन्द्रियाणि पुन: पुनर्विषयेषु असंतुष्टानि तेषु व्यासंगो यस्य स:। इन्द्रियाणां विषयोन्मुखकरणे यतमान इत्यर्थ:। अथानन्तरं नियतं नियमेन मिथ्या प्रलपनम्, अनर्थवागुच्चारणमनृतभाषणमिति यावत्। तथाच स्मृति:—

'न सत्यात् परमो धर्मो नाऽनृतात्पातकं परमिति'। 'यद्यप्यत्र प्रलापोऽनर्थकं' इत्यमरकोशात् प्रलपनपदस्याऽनर्थकवचनतया मिथ्यापदमनर्थकं प्रतिभाति तथापि विशिष्टवाचकानां पदानां सति पृथक् विशेषणवाचकपदमवधाने विशेष्यमात्रपरताया: सर्वत्र दक्षत्वान्न कश्चिद्दोष:। कुतर्केषु कुत्सितास्तर्का: कांक्षास्तत्राऽभ्यासोऽभ्यसनम्। तर्क: कांक्षा वितर्कोहकर्मभेदेषु कीर्त्यते। इति विश्व:। पुनरपि भूयोपि सततं निरंतरं परपैशुन्यस्य। परमर्मोद्धाटनं। तु पाद पूरणे, एवं प्रकारान्मम गुणगणान् गुणसमूहान् श्रावं श्रावं श्रुत्वा श्रुत्वा। णमुलन्तमेतत्। त्वदृते नाम प्रकाश्ये संभाव्ये। 'नाम प्रकाश्यसंभाव्यकुत्साभ्युपगमेषु चेति' विश्व:। क्षणमपि क्षणमात्रं मम वदनं मुखं क: निरीक्षेत् अपि तु न कोपि निरीक्षेतेति भाव: ॥१९॥

**कियन्तः सन्त्येके सततमिह लोकार्थघटकाः**
**परे पूतात्मानः कति च परलोकप्रणयिनः ।**
**सुखं शेते मातस्तव खलु कृपातः पुनरयं**
**जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ।।२०।।**

कियंत इति। सततमिहलोकार्थघटकाः। इह लोकार्थं घटयन्ति निर्णयन्ति ते इहलोकार्थघटकाः देहात्मवादिनः। स्वर्गोऽयमेव नरकः केन दृष्ट इति ब्रुवन्तः, एके अन्ये। एके मुख्यान्यकेवलाइत्यमरः। कियन्तः कति न सन्ति। अपि तु बहवः सन्ति च परं परलोकम्। प्रणयिनः परलोकप्रेमवन्तः। अस्तीति वादिनः, अतएव पूतात्मानः पवित्रदेहाः पवित्रमनसो वा पुण्यवन्तः इत्यर्थः। 'आत्मादेहेमनो-ब्रह्मस्वभावधृतिबुद्धिषु' इति विश्वः। परे कति न सन्ति। बहवः सन्तीति भावः। हे मातः गङ्गे! खलु निश्चयेन तव कृपातः कृपया। सार्वविभक्तिकस्तसिः। पुनः अप्रथमम्। 'पुनरप्रथमे भेदे' इति विश्वः। अयं त्वत्पुरोवर्त्ती जगन्नाथः। शश्वत् निरन्तरं त्वयि त्वदाधारे निहितः क्षिप्तः लोकद्वयस्य ऐहिकाऽऽमुष्मिकयोर्भरोभरो येन सः तथाभूत्वा सुखं यथास्यात्तथा निश्चितमित्यर्थः। शेते निद्राति। त्वदीयकृपैव मत्कार्यसाधिका मया किमर्थं चिन्ता विधेयेति भावः ॥२०॥

**विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं**
**न याभ्यामालीढा परमरमणीया तव तनुः ।**
**अयं हि न्यक्कारो मनुजहतकस्य श्रवणयो-**
**र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ।।२१।।**

विशालाभ्यामिति। इह संसारे खलु निश्चयेन विशालाभ्यां दीर्घाभ्यां आभ्यां नयनाभ्यां नेत्राभ्यां किं फलम्। परमरमणीया निरवधिकमनीया तव तनुः प्रवाह-रूपेति शेषः। तनुः संहननं शरीरं कलेवरं विग्रहदेहकाया' इति हलायुधः। न आलीढा नास्वादिता अनन्यतया न दृष्टा तर्हि ताभ्या न किंञ्चत् फलमिति भावः। हीति निश्चयेन मनुजहतकस्य मनुजेषु मनुष्येषु हतकस्य वराकस्य अयं न्यक्कारः शाठ्यम्। 'कुसृति र्निष्कृतिः शाठ्यं' इत्यमरः। ययोः श्रवणयोः कर्णयोः अंतर्मध्ये तव लहरिलीलाकलकलः लहरीणां लीलाकलकलो क्रीडा कोलाहलः। अथवा लहरीणां लीलातया मन्दमन्दगत्या कलेषु अव्यक्तमधुरेषु कलोऽव्यक्तमधुरः श्रोतः सुखकरीति यावत्। 'कलोमंद्रस्तुगंभीर' इत्यमरः। न यातः न प्राप्तः ॥२१॥

**विमानैः स्वच्छन्दं सुरपुरमयं ते सुकृतिनः**
**पतन्ति द्राक् पापा जननि नरकान्तः परवशाः ।**
**विभागोऽयं तस्मिन्नशुभमयमूर्त्तौ जनपदे**
**न यत्र त्वं लीलादलितमनुजाऽशेषकलुषा ।।२२।।**

विमानैरिति। सुकृतिनः पुण्यवन्तः सुकृतीपुण्यवान् धन्य इत्यमरः। स्वच्छन्दं स्वैरं विमानै व्योमयानैः। सुरपुरं स्वर्गं अयन्ते गच्छन्ति। पापाः पापवन्तः। हे जननि। परवशाः पराधीनाः संतः द्राक् झटिति। नरकान्तः निरय मध्ये पतन्ति मज्जन्ति। पुण्यवान् स्वःसुखं भुंक्ते दुष्कृती यमयातनामित्ययं विभागो विवेकोऽशुममयमूर्त्तौ पापस्वरूपे तस्मिन् जनपदे 'राष्ट्रे जनपदो देशो विषये च निगद्यते' इति केशवः। यत्र यस्मिन् लीलादलितमनुजाशेषकलुषा लीलया अनायासेन दलितं क्षालितं मनुजानां मर्त्यानां अशेषं निःशेषं कलुषं पातकं यया सा एतादृशी त्वं न वर्त्तसे इति शेषः॥२२॥

**अपि घ्नंतो विप्रानविरतविशन्तो गुरुसतीः**
**पिबन्तो मैरेयं पुनरपहरन्तश्च कनकम्।**
**विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषा**
**मुपर्यम्ब क्रीडन्त्यखिलसुरसम्भावितपदाः॥२३॥**

अपिघ्नं इति। विप्रान् ब्राह्मणान् घ्नंतः नाशयन्तः विप्रानिति बहु वचनेन अनेकब्राह्मणवधकारिणः। गुरुसतीर्गुरुपत्नीरपि अविरतं विशंतः अजस्रं गच्छन्तः। पुनः मैरेयं मदिरां पिबंतः। 'मैरेयं शीधुमदिरा मद्यंहालासुराऽऽसव' इति रभसः। कनकमपि सुवर्णमप्यपहरन्तो मुष्णन्तः चकारादुपपातकानि समुच्चीयन्ते। एतादृशाः चतुर्विधमहापापकारिणः मनुष्याः अन्ते मरणसमये त्वयि तनुं शरीरं विहाय त्यक्त्वा अतनुदानाध्वरजुषामन्यस्य दानयज्ञकर्त्तॄणां उपरि उपरिष्टात् ब्रह्मलोकादौ सकलामरेप्सितयदीयस्थानाः संतः। हे अंब जननि। क्रीडन्ति दिव्यन्ति। महादानाध्वरैस्तु स्वर्गलोकप्राप्तिः। गङ्गायां शरीरत्यागेन तु ब्रह्मीभाव इति कथमेतयोः साम्यं निर्वहेत्। अतएवोक्तं भगवता कालिदासेन—

कस्मादुर्वशि गर्वितासि भविता मान्यःपतिर्मेनके
क्वासौ पश्य वपुर्विमुञ्चति पुनः स्वर्गाऽऽपगावारिणि।
मुग्धे किं विदिता न जन्हुतनया यस्यां प्रमीतो जन-
स्त्रैलोक्यश्रियमुद्विहाय तृणवद्ब्रह्मास्पदं गच्छति॥इति॥

**नृणामीक्षामात्रादपि परिहरन्त्या भवभयं**
**शिवायास्तेमूर्त्तेः क इह महिमानं निगदतु।**
**अमर्षम्लानायाः परममनुरोधं गिरिभुवो**
**विहाय श्रीकण्ठः शिरसि नियतं धारयति याम्॥२४॥**

नृणामिति। नृणां मनुष्याणां। ईक्षामात्रादीक्षणादेव अपीति निश्चयेन भवभयं संसारभीतिं परिहरन्त्याः नाशयन्त्याः। ते तव मूर्त्तेः। कथं भूतायाः? मंगलरूपायाः

'शिवं भद्रं कल्याणं मंगलं शुभ' मित्यमरः। इह लोके महिमानं महत्त्वं को निगदतु ? कः निगदेत् ? लिङर्थे लोट्। अपि तु न कोपीत्यर्थः।

अत्र हेतुमाह। अमर्षेण क्रोधेन म्लानायाः म्लानिं प्राप्तायाः गिरिभुवः पार्वत्याः परमं सर्वातिशयमनुरोधं संकोचं विहाय परित्यज्य श्रीकण्ठः महादेवः शिरसि मस्तके नियतं नियमेन यां त्वां धारयति धत्ते। अतः पार्वत्याः सकाशादपि त्वय्यनुरागातिशयो महादेवस्येति भावः ॥२४॥

**अलभ्यं सौरभ्यं हरति नियतं यः सुमनसां**
**क्षणादेवं प्राणानपि विरहशस्त्रक्षतहृदाम्।**
**त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्**
**पुनीते सोपि द्रागहह पवमानस्त्रिभुवनम् ॥२५॥**

अलभ्यमिति। यः पवमानः वायुः सुमनसां पुष्पाणां अलभ्यं लब्धुमशक्यं इतरैरिति शेषः। सौरभ्यं सौगन्ध्यं नियतं हरति मुष्णाति। ननु अचेतनानां हरणेन तादृशं पापमित्यत आह– एवं प्रकारेण विरहो वियोग एव शस्त्रं तेन क्षतं छिन्नं हृत् हृदयं येषां तेषां विरहव्याकुलानामित्यर्थः। क्षणात् प्राणानपि हरति। सोऽपि परप्राणापहरणशीलोपि सन् त्वदीयानां त्वत्समुद्भूतानां लीलाचलित-लहरीणां लीलाभिश्चलितानां चंचलानां तरंगाणां व्यतिकरात्संपर्कात् संपर्कं प्राप्य द्राक् शीघ्रं। अहहेत्यऽद्भुते खेदे इति विश्वः। त्रिभुवनं त्रैलोक्यं पुनाति। यदि चेत्तदा चेतनाधातुको वायुस्त्वदीयलहरिंसंपर्कं प्राप्य त्रिभुवनं पुनाति। तर्हि अहिंसकस्य तु का कथेति भावः ॥२५॥

**प्रभाते स्नातीनां नृपतिरमणीनां कुचतटीं**
**गतो यावन्मातर्मिलति तव तोयैर्मृगमदः।**
**मृगास्तावद्वैमानिकशतसहस्रैः परिवृता**
**विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ॥२६॥**

प्रभात इति। प्रभाते उषसि। स्नातीनां मज्जन्तीनां नृपतिरमणीनां राजदाराणां असूर्यम्पश्या राजदारा इति प्रभात पदेन व्यज्यते। कुचतटीं स्तनपरिसरं गतः प्राप्तः अङ्गरागाय परिधृत इत्यर्थः। मृगमदः कस्तूरिकाया इति यावत्। हे मातः जननि तव तोयैर्जलैः मिलति तावन्मृगाः विमानैश्चरन्ति। वैमानिका देवास्तेषां शतसहस्राणि तैः परिवृता अनुगताः। किं लक्षणाः ? विगतः मलः पापं येभ्यस्तानि निष्पापानि वपूंषि शरीराणि येषां ते विमलवपुषः दिव्यदेहाः सन्तः। स्वच्छंदं स्वैरं यथा भवति तथा नंदनवनं इन्द्रोपवनं विशन्ति प्राप्नुवन्ति। कस्मिंश्चित्काले प्रमीतानां मृगानां परम्परया तव तोयसंपर्क-तो दिव्यदेहधारित्वं यदि तर्हि साक्षात् सम्पर्कवतां तु का कथेति भावः ॥२६॥

**विधत्तां निःशंकं निरवधि समाधौ विधिरहो**
**सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।**
**कृतं प्रायश्चित्तैरलमथतपोदानयजनैः**
**सदैवं कामानां यदि जगति जागर्ति भवती ।।२७।।**

विधत्तामिति। भवती कामानां अभिलाषाणां 'कामोभिलाषतर्षश्चे' त्यमरः। सवित्री सूते सा सवित्री दात्री यदि जगति लोके जागर्त्ति विनिद्रा भवति। तदा विधिः ब्रह्मा निरवधि समाधिं अवधेः सीम्नः निष्क्रांतः निरवधिः 'अवधीस्त्ववधानेस्यात् सीम्नि कालेविलेपुमानिति' मेदिनी। सा चासौ समाधिश्च तं निरवधिसमाधिं निःशङ्कं यथास्यात्तथा इति क्रियाविशेषणम्। शंका चात्र ब्रह्मणः, मयि समाधिस्थे प्रजानां का गतिरित्याकारा विधत्तां करोतु। विध्यर्थेलोट्। अहो इति करुणायां 'अहो धिगर्थशोके च करुणार्थविषादयोरिति' विश्वः। हरिः विष्णुः सुखं सुखेन शेषे शय्यायां शेतां स्वापं करोतु। अविरतं निरंतरं हरो महादेवः। नृत्यतु नृत्यं करोतु। स्व स्व कर्मणि प्रवृत्ताः भवन्त्वित्यर्थः। प्रायश्चित्तैः कृच्छ्रचान्द्रायणादिभिः 'कृतं जातं कृतं क्लीबेति निष्फल' मित्यमरः। अथानन्तरं, तपश्चेन्द्रियनिग्रहः दानं स्वसत्ताध्वंसपूर्वकं परसत्तापादनम् यजनं देवतामुद्दिश्य मन्त्रपूर्वकं वह्नौ हविर्निक्षेपः, तैरलं पर्याप्तं पूर्वोक्तानां सर्वेषां एकैकफलदातृत्वम्। त्वं तु पुनरेका सत्यऽनेकानि फलानि ददासीति तेषां प्रयासैरलमिति भावः ।।२७।।

**स्मृतं सद्यः स्वांतं सुखयति नितांतं सकृदपि**
**प्रगीतं यत्पापं झटिति भवतापं च हरति ।**
**इदं तद् गङ्गेति श्रवणरमणीयं खलु पदं**
**मम प्राणप्रांते वदनकमलांतर्विलसतु ।।२८।।**

स्मृतमिति। खलु भृषायाम्। मम प्रान्ते प्राणानां प्रान्ते प्राणानां प्रांतो नाशस्तस्मिन्समये इदं तद्गङ्गेति पदं वदनमेव कमलं वदनकमलं तस्यातर्मध्यं मुखसरोजमध्ये इत्यर्थः। विलसतु विलासं करोतु। किं लक्षणं इदं तत्? श्रवणरमणीयं श्रवणयोः कर्णयोः गतं सत् रमणीयं कमनीयम्। अथवा श्रवणेन आकर्षणेन रमणीयम्। श्रवणफलं उक्त्वा स्मरणफलमाह। पुनः किं लक्षणम्। यत् स्मृतं सत् सद्यः स्मरणसमकालमेव स्वांतं मानसं नितांतमत्यन्तं सुखयति आह्लादयति। स्मरणफलमुक्त्वा कीर्त्तनफलमाह।

पुनः किं? यत् सकृदपि एकवारमपि प्रगीतं प्रकीर्त्तितं सत् झटिति सत्वरं पापं च परं, भवतापं भवस्य संसारस्य तापं संतापं हरति नाशयति ।।२८।।

**कपर्दादुल्लस्य प्रणयमिलदर्द्धांगयुवतेः**
**पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ ।**
**भवान्याः सापत्न्यस्फुरितनयनं कोमलरुचा**
**करेणाक्षिप्तास्ते जननि विजयन्तां लहरयः ।।२९।।**

कपर्दादिति। हे जननि ते तव लहर्य्यः जलवीचयः विजयन्ताम् सर्वोत्कर्षेण वर्त्तन्ताम्। किं लक्षणाः ? प्रणयमिलदर्द्धांगयुवतेः। प्रणयेन स्नेहेन मिलत् संगच्छत् अर्द्धाङ्गं अर्द्धशरीरं युवतौ स्त्रियां यस्य तस्य अर्द्धनारीश्वरस्येत्यर्थः। एतादृशस्य पुरारेः त्रिपुरशत्रोः कपर्द्दाज्जटाजूटादुल्लस्य निर्गत्य भवान्याः भवपत्न्याः। मृदुलतरसीमन्तसरणौ अतिशयेन मृदुरिति मृदुलतरः स चासौ सीमंतः केशपद्धतिः तस्याः पंक्तिः सरणिःपंक्तिवर्त्मनोरिति विश्वः। तत्र प्रेखंत्यो वल्गंत्यो मिलन्त्य इत्यर्थः। पुनः किं ? काकाक्षिगोलकन्यायेन भवानी पदस्य उभयत्र संबंधः। भवान्याः कोमलरुचा कोमला रुक् यस्य तेन करेण हस्तेन सापत्न्यस्फुरितनयनं सपत्न्याः भावः सापत्न्यं सापत्न्येन स्फुरिते सेर्ष्यावलोकितेन येन नेत्रेण यस्मिन्कर्मणि यथास्यात्तथा आक्षिप्ताः विधूताः। एतेन महादेवस्य त्वं अतिप्रेयसीति सूचितमिति भावः ।।२९।।

**अनार्यः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां**
**पतन् विश्वोद्धर्त्रीं गदविगलितः सिद्धिभिषजं ।**
**सुधासिन्धुतृष्णाऽऽकुलितहृदयोमातरमये**
**शिशुः सम्प्राप्त स्त्वामहमिह विदध्याः समुचितम् ।।३०।।**

अनार्यइति। अये मातः अहं शिशुः संप्राप्त संगतः। किं लक्षणः अनार्यः दुःशीलः। किं लक्षणं त्वाम्। स्नेहेन प्रेम्णा आर्द्रां परिप्लुताम्। दुःशीलमपि पुत्रं जननीं न समुपेक्षत इति भावः। उक्तञ्च। अपराधपरम्परावृतं न हि माता समुपेक्षते सुतमिति। पुनः किम् ? शिशुः विगलितगतिः विगलिता शिथिला गतिर्गमनं यस्य। अथवा विगलिते निषिद्धकर्मणि गतिर्व्यापारो यस्य सः। पुनः किंलक्षणं त्वाम् ? पुण्यगतिदां धर्ममार्गदाम्। पुनः किं ? पतन् परितः ? नरकं संगच्छन् धर्मपथात् स्खलित इति भावः। पुनः किं त्वां विश्वोद्धर्त्रीं विश्वस्य जगतः उद्धर्त्रीं उद्धारकर्त्री यदि विश्वोद्धारे तव सामर्थ्यं तर्हि विश्वान्तर्गतस्य ममोद्धारकरणे तव कः प्रयासोऽधिकमिति भावः। किं शिशुः ? गदेन जरामरणरूपरोगेण विगलितः शिथिलितः जर्जरीभूत इति भावः। पुनः किं त्वाम् ? सिद्धभिषजं सिद्धोषधिं। पुनः किम् ? शिशुः तृष्णाकुलितहृदयः। तृष्णाया मृगतृष्णाया आकुलितं व्याकुलं हृदयं यस्य सः। पुनः किम् ? त्वां, सुधासिन्धुम्। अमृतनदीं अतः कारणादिह मदीयदुरवस्थासमये

यत्तव समुचितं योग्यं तत् त्वं विदध्याः कुरु। उक्तञ्च। अनार्यचरितं दुष्टं पाखण्डिनमनर्थकम्। न हि त्यज्यन्ति सुधियो महान्तः शरणागतमिति। अन्यच्च। 'क्षुद्रेपि नूनं शरणं प्रपन्ने ममत्वमुच्चै शिरसां सतीवेति' ॥३०॥

**भवत्या हि व्रात्याधमपतितपाखण्डपरिषत्-**
**परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा।**
**मयाप्येवं प्रेमा दुरितनिवहेष्वेव जगति**
**स्वभावो यं सर्वैरपि खलु यतो दुष्परिहरः ॥३१॥**

भवत्येति। हीति निश्चयेन। खलु वाक्यभूषायां हे अम्ब! भवत्या त्वया व्रात्याधमपतितपाखण्डपरिषत्परित्राणस्नेहः। व्रात्यश्चण्डालविशेषः अधमो दुर्जनः। पतितः कुपथासक्तः। पाखण्डो धर्माभासवान्। व्रात्याश्च अधमश्च पतितश्चपाखण्डश्च व्रात्याधमपतितपाखंडाः, तेषां परिषद् समाजः तस्य परित्राणं परिपालनं तत्र स्नेहो हार्द्दं श्लथयितुं शिथिलयितुं यथा अशक्यः शक्तुं योग्यः शक्यः न शक्यः अशक्यः। एवं पूर्वोक्तरीत्या मयापि दुरितनिवहेषु पातकसमूहेषु प्रेमा स्नेहः श्लथयितुमशक्यः। कुतः, यतः कारणात् जगति लोके सर्वैरपि खलु यतो ब्रह्मादिमशकांतैरपि खलु निश्चयेनाऽयं स्वभावः। दुःपरिहरः परिहर्त्तुमशक्यो दुःपरिहरः। एतावता नहि दुर्जनो दौर्जन्यं त्यजति। सज्जनास्तु साधुतां न त्यजन्तीति भावः ॥३१॥

**प्रपद्यन्ते लोकाः कति न भवतीमत्र भवतीं**
**परं त्वत्रोपाधेः स्फुरति यदभीष्टं वितरसि।**
**शपे तुभ्यं मातर्मम तु पुनरात्मायमनघे**
**निसर्गादेव त्वय्यमितमनुरागं विधृतवान् ॥३२॥**

प्रपद्यन्त इति। अत्र भवतीं पूज्याम्। अत्र तत्रभवच्छब्दौ पूजार्थौ। भवत उपाधेः कैतवात्। 'उपाधिर्धर्मचिंतायां कैतवेपिविशेषण' इति विश्वः। हेतौ पंचमी। कति लोकाः न प्रपद्यन्ते अपि तु सर्वे प्रपद्यंत इति भावः। परन्तु अत्र विषये यदभीष्टं अभिलषितं स्फुरति प्रकाशते तत् त्वं वितरसि प्रददासि। हैतुकानामप्यभीष्टदात्री भवत्येव जगति विराजत इति भावः। अथवा उपाधेः सकाशान्न्रायाया इत्यर्थः। यत्स्फुरति उपाधिं परित्यज्येति ल्यब्लोपे पञ्चमी। यद् ब्रह्माऽख्यं स्फुरति तत्त्वं वितरसि। यद्वा नभीर्भयमरणरूपं येषां तेऽभिभयः तेषां अभिभयानां विकाररहितचेतसां यत् इष्टं ईप्सितं तत् सद्रूपं वितरसि ददासि। तदुक्तं कालिदासेन।

विकारहेतौ सति विक्रियन्ते।
येषां न चेतांसि त एव धीराः ॥इति॥

हेअनघे स्वभावसरले हे मातः अहं तुभ्यं शपे त्वत्शपथं करोमि। पुनर्निश्चयेन मम तु मत्संबंधी अयं त्वत्पुरोवर्त्ती आत्मा नः। 'आत्मा देहे मनो ब्रह्म स्वभावधृतिबुद्धिषु' इति विश्वः। निसर्गात् स्वभावात्त्वय्येव अमितम- परिमितमनुरागं प्रीतिं विधृतवान् विशेषेण धृतवान् विहितवानिति यावत्। एतेन नैसर्गिकानुरागिणोऽहेतुकस्य ममोपेक्षणं तव नोचिमिति भावः ॥३२॥

**पयः पीत्वा मातस्तव सपदि यातः सहचरै**
**र्विमूढैः संरन्तुं क्वचिदपि न विश्रांतिमगमम्।**
**इदानीमुत्सङ्गे मृदुपवनसंचारशिशिरे**
**चिरादुन्निद्रं मां सदयहृदये शायय चिरम्॥३३॥**

पयः पीत्वेति। हे मातः अहं एतस्मात् पूर्वं तव त्वत् संबंधि पयः जलं पीत्वा पानं कृत्वा सपदि तत्कालं विमूढैः नितरां मूर्खैः प्रवृत्तिमार्गपरैरि- त्यर्थः। एतादृशैः सहचरैः सहयायिभिः सहस्त्रं संरंतुं विहर्तुं यातः गतः स्वदेशमिति शेषः। परन्तु क्वचिदपि कुत्रचिदपि विश्रांतिं विश्रामं श्रमापनोदमिति यावत्। न अगमम्– गतः। इदानीं वर्तमानकाले चिरात् बहुकालमारभ्य उन्निद्रं उद्गता निद्रा यस्य तं विनिद्रमित्यर्थः। दुःखिनी निद्रापि न भवतीति भावः। एतादृशं मां सदयहृदये सदयं हृदयं यस्यास्तस्याः संबोधने हे सदयहृदये। मृदुपवनसंचारशिशिरे मृदु मंदं यः पवनो वायुस्तस्य संचारः संचरणं तेन शिशिरे शीतले एतादृशे उत्संगे तीरे तव इति शेषः। चिरं बहुकालं शायय निद्रापय ॥३३॥

**तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा**
**मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः।**
**इदानीमौदास्यं यदि भजसि भागीरथि तदा**
**निराधारो हा रोदिमि कथय केषामिह पुरः॥३४॥**

तवालम्बादिति। हे अंब हे जननि तवालंबादाऽऽश्रयादालम्बं प्राप्येत्यर्थः। अथवा हेतुपञ्चमी। स्फुरदलघुगर्वेण स्फुरतीति स्फुरन् न लघुः अलघुः अलघुश्चासौ गर्वश्च अलघुगर्वः स्फुरन् जागरूकः अलघुः गुरुः यो गर्वोऽभिमानो यस्य तेन गर्वोऽभिमानोऽहंकार' इत्यमरः। एतादृशेन मया सहसा आकस्मिकं अविचार्येति यावत्। सर्वे समस्ताः सुरगणाः सुराणां देवानां गणाः समूहाः। अवज्ञासरणिं अवज्ञायाः अवमाननायाः सरिणं श्रेणिम्। 'रीढाऽवमाननाऽवज्ञा' इत्यमरः। नीताः प्रापिताः। अथ सुरगणावज्ञानन्तरमिदानीं वर्तमानकाले हे भागीरथि यदि त्वं औदास्यं उपेक्षां मयीति शेषः। भजसि। तदा निराधारः निर्गतः आधारो आश्रयो यस्य सः एतादृशमहं इह संसारे केषां पुरः सन्निधौ। रोदिमि रोदनं करोमि।

तत् त्वं कथय। वद। सुरगणाऽवज्ञाकारिणोद्धारः त्वदधीनः। त्वया च अहं नोपेक्षणीय इति भावः ॥३४॥

**सदैव त्वय्येवाऽर्पितकुशलचिंताभरमियं**
**यदि त्वं मामम्ब त्यजसि समयेस्मिन्सुविषमे।**
**तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते**
**निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥३५॥**

सदैवेति। हे अंब सदैव सततमेव त्वय्येवार्पितकुशलचिताभरम्। अर्पितः कुशलस्य कल्याणस्य या चिंता अहर्निशं विचारस्तस्या भरः समूहो येन तं मां सुविषमे विकटे अस्मिन् समये यदि त्वं त्यजसि तदाऽयं त्वन्निष्ठो लोकानां विश्वासः आस्तिक्यं त्रिभुवनतलात् त्रिलोकीमध्यादस्तं अयतेऽस्तं प्राप्नोति। च पुनः खलु निश्चयेन इयं निर्व्याजकरुणा व्याजादपदेशान्निष्क्रांता। निर्व्याजा सा चाऽसौ करुणेति विग्रहः। 'व्याजोपदेशो लक्ष्यं चोपधयछद्मकैतवे' इत्यमरः। फलानुसन्धानरहिता अहैतुकीत्यर्थः। निराधारा निराश्रया भवति जायते ॥३५॥

**अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा**
**विलोलद्वानीरं तव जननि तीरं श्रितवताम्।**
**सुधातः स्वादीयं सलिलभरमातृप्ति पिबतां**
**जनानामानन्दः परिहसति निर्वाणपदवीम् ॥३६॥**

अपीति। हे जननि प्राज्यमपि बहुलमपि राज्यं सर्वाधिपत्यं तृणमिव-सहसाऽविचार्य परित्यज्य त्यक्त्वा तव विलोलद्वानीरं, विलोलतः कंपन्तो वानीरा जलवेतसः यत्रेति। एतादृशं तीरं तटं श्रितवताम् समाश्रयतां। पुनः किंलक्षणानां सुधातोऽमृतात् स्वादीयमतिशयेन स्वादु सलिलभरं जलसमूहम्। आतृप्ति पिबतां तृप्तिं आ इति आतृप्ति यथेष्टं पिबतां पानं कुर्वतां जनानां लोकानां 'जनो लोके मरुल्लोकात्परलोके च पामरे' इति मेदिनी। एतादृशानां जनानां आनंदः प्रमोदः। निर्वाणपदवीं निर्वाणस्य मोक्षस्य पदवीं सरणिं परिहसति हास्यं करोति। निर्वाणं निर्वृत्तौमोक्षेविनाशे गजमज्जने इति विश्वयादवौ ॥३६॥

**प्रदोषान्ते नृत्यत्पुरमथनलीलोद्धृतजटा-**
**न्तराभोगप्रेङ्खल्लहरभुजसंतानविधुतिः।**
**विलक्रोडक्रीडज्ज्वलडमरुडंकारशुभग-**
**स्तिरोधत्तां पापं त्रिदशतटिनीतांडवविधिः ॥३७॥**

प्रदोषांतेति। त्रिदशतटिनीताण्डवविधिः। मम बालकस्येति शेषः। पापं दुरितं तिरोधत्तां तिरस्कुर्वतां आशिषि लोट्। त्रिदशानां। 'त्रिदशा विबुधाः सुरा' इत्यमरः। तटिनी धुनी। तटिनी ह्रादिनी धुनी इत्यमरः। तस्याः ताण्डवे

नटने। तांडवं नटनं नाट्यमित्यमरः। तस्य विधिर्विधानं विधिर्नानियतौ काले विधाने परमेष्ठिनीतिमेदिनी। किंलक्षणः। प्रदोषान्ते प्रदोषस्य रजनीमुखस्य। प्रदोषो रजनीमुखम् इत्यमरः। अन्तः मध्यं तस्मिन्। किंलक्षणः। नृत्यत्पुरमथनलीलोद्धत-जटान्तराप्रेंखल्लहरिभुजसंतानविधुतिः। पुरं त्रिपुरं मथ्नातीति पुरमथनः महादेवः नृत्यति नर्त्तनं करोति इति नृत्यन् नृत्यंश्चासौ पुरमथनश्च नृत्यत्पुरमथनः तस्य लीलाविलासस्तया उद्धता उत्क्षिप्ताः। धातूनामनेकार्थत्वात् उत्क्षिप्तेतिपर्यायः। जटा केशसमूहः तस्या अंतरं मध्यं तस्य आभोगः परिपूर्णता। 'आभोगो वरुणच्छत्रेपूर्णतायत्नयोरपीति' मेदिनी। तत्र प्रेंखंत्यश्चंचलाः लहर्यस्ता एव भुजास्तेषां संतानः सम्यक् तानः संतानः। नृत्योपकरणं हस्तचालनविशेषः। तानसंख्या काशी खण्डे– तानास्त्वेकोनपंचाशदित्युक्ता। अथवा। भुजां संतानः समूहः तस्य विधुतिः कंपनं यत्र पुनः किंलक्षणः। विलक्रोडेक्रीडज्ज्वलडमरुडंकारसुभगः। विलं कुहरं। 'कुहरं विवरं विल' मित्यमरः। विलस्य कुहरस्य क्रोडः अंकः उत्संग इति यावत्। 'क्रोडः शनौ शूकरे नानपुमानंऽकरक्षसोरिति' मेदिनी। विलक्रोडे क्रीडति हरत् यज्जलं तस्य डमरुवत् डंकारे स्तदनुकरणशब्दः डमरुवाद्यं प्रसिद्धं तेन सुभगः सुन्दरः। एतेन महादेवस्य नृत्यसहायिनी त्वमेवेति ध्वनितम्॥३७॥

**पुरोधावंधावं द्रविणमदिराघूर्णितदृशां**
**महीपानां नानातरुणतरखेदस्य नियतम्।**
**ममैवायं मन्दः स्वहितशतहन्तुर्जडधियो**
**वियोगस्तेमातर्यदिह करुणाऽतः क्षणमपि॥३८॥**

पुरो धावं धावमिति। द्रविणमदिराघूर्णितदृशां द्रविणं द्रव्यमेव मदिरा। मादकत्वात्तया घूर्णिताः भ्रामिताः दृशो येषां तेषां महीपानां महीपालानां पुरः अग्रे नियतं नियमेन धावं धावं धावित्वा धावित्या वीप्सायां णमुल्। नानातरुणत-रस्वेदस्य नानाविधो यस्त तरुणतरो जागरूको स्वेदो यस्य। पुनः किम्? स्वहितशतहन्तुः स्वस्य हितानां शतं तस्य हन्तुः स्वीयार्थघातुकस्य अतएव जडधियः मूढबुद्धेः ममैवायं वक्ष्यमाणरूपो हन्तुरपराधः हन्तुः पुंस्यऽपराधेपि मनुष्येपि प्रजापंताविति' मेदिनी। सः कः इत्यपेक्षायां आह हे मातः यत् यस्मात् कारणात् क्षणमपि क्षणमात्रमपि ते तव त्वत्संबंधिवियोगः विरहः अतः कारणादिहास्मिन्मल्लक्षणे जने त्वया करुणा दया विधेयेति शेषः॥३८॥

**स्मृतिं याता पुंसामकृतसुकृतानामपि च या**
**हरत्यन्तस्तन्द्रां तिमिरमिव चण्डांशुसरणिः।**
**इयं सा ते मूर्त्तिः सकलसुरसंसेव्यसलिला**
**ममांतःसंतापं त्रिविधमथतापं च हरताम्॥३९॥**

स्मृतिं यातेति। या अकृतसुकृतानामपि न कृतं पुण्यं यैस्तेषां पुंसां नराणां। च पादपूर्तौ। अतः अन्तःकरणे स्मृतिं याता गता सती। तन्द्रां निद्रां अज्ञानं 'निद्रा तन्द्राप्रमीलास्या' दित्यमरः। चण्डांशुसरणिः चण्डांशोः सूर्यस्य सरणिः गतिः तिमिरमिवान्धकारं नाशयति। सा पूर्वोक्ता इयं पुरोवर्त्तिनी ते तव मूर्त्तिः जलरूपेति शेषः। किंलक्षणा ? सकलसुरसंसेव्यसलिला सकलैः समस्तैः सुरैर्देवैः संसेव्यं सलिलं यस्याः सा देवाऽऽराध्यमानायाः तव सेवने अस्मदादीनां नृणां अवसर एव दुर्लभः। ममांतः अंतकरणे स्थितमिति शेषः। संतापं आधिं। अथाऽनन्तरं त्रिविधं कायिकवाचिकमानसिकरूपं पापं च हरतां तिरस्कुरुताम् ॥३९॥

**ललाटे या लोकैरिह खलु सलीलं तिलकिता**
**तमो हन्तुं धत्ते तरुणतरमार्त्तण्डतुलनाम्।**
**विलिम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिम्**
**त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥४०॥**

ललाटेति। लौकैर्जनैः। खलु वाक्यभूषायां। इह मर्त्यलोके ललाटे भाले। सलीलं सविलासं यथास्यात्तथा। तिलकिता तिलकीकृता सती। तमो हर्त्तुं अन्धकारं दूरीकर्त्तुम्। तरुणतरमार्त्तण्डतुलनां मध्याह्नकालीनसूर्यतुलां धत्ते धारयति। तदुक्तं भारते भीष्मयुधिष्ठर संवादे। जाह्नवीतीरसम्भूतां मृदं मूर्ध्नि बिभर्त्ति यः। विभर्त्ति रूपं सोर्कस्य तमोनाशाय केवलमिति। या सद्यः धारणसमकालमेव विधिलिखित-दुर्वर्णसरणिं विधिना दैवेन लिखिता दुर्वर्णानां दुष्कर्मणां या सरणिः परम्परा तां विलिम्पंती मार्जयन्ती सा पूर्वोक्ता त्वदीया त्वत्संबन्धिनी मृत्स्ना मृत्तिका। मम कृत्स्नां सर्वामपि शुचं शोकं हरतु नाशयतु ॥४०॥

**नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो**
**हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः।**
**पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्**
**सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥४१॥**

नरानिति। तत्तज्जनपदेषु स्वस्वराष्ट्रेषु समासक्तं मनो येषां तान्। अतएव मूढान् विवेकरहितान्। नरान् मनुष्यान् विकचकुसुमव्रातमिषतः। विकचानि विकसितानि कुसुमानि पुष्पाणि तेषां व्रातो व्रजः तस्य मिषतः व्याजेन। सार्व-विभक्तिकस्तसिल्। सोल्लासं सानन्दं यथास्यात्तथा हसन्तः हास्यं कुर्वन्तः। पुनः किं सततं निरंतरं नित्यमलिनान् निसर्गमलिनान्। अलिनो द्विरेफान्। सौरभ्यैः सौगन्ध्यैः पुनानाः पावयन्तः त्रिदशतटिनीतीरतरवः स्वर्गङ्गातटस्थद्रुमाः। नो अस्माकं सखायः सुहृदः। सन्तु भवन्तु ॥४१॥

**यदन्तः खेलन्तो बहलतरसन्तोषभरिताः**
**न काका नाकाधीश्वरनगरसाकांक्षमनसः ।**
**निवासाल्लोकानां जनिमरणशोकस्य हरणं**
**तदेतत्तेतीरं श्रमशमनधीरं भवतु नः ।।४२।।**

यदंत इति। यस्यांतर्मध्ये खेलन्तः क्रीडन्तः। काकाः वायसाः किंलक्षणाः ? बहलतरसंतोषभरिताः बहलतरेण अदभ्रतरेण संतोषेण भरिताः पुष्टाः सन्तः। नाकाधीश्वरनगरसाकांक्षमनसः नाकस्य स्वर्गस्य अधीश्वरः इन्द्रः। 'स्वरव्ययं स्वर्गनाक' इत्यमरः। तस्य नगरं पुरं अमरावती तत्र साकांक्षं आकांक्षया सह साकांक्षं मनाग्येषां ते। नाकाधीश्वरनगरसाकांक्षमनसः। न आसन् नाभूवन्। यदि त्वत्तीरविहारपरितुष्टमानसानां काकानां नाकाधीश्वरनगरं तुच्छं तदा बुद्धिमतां का कथेति भावः। निवासादाश्रयात् लोकानां जनानां जनिमरणशोकापहरणं जनिर्जन्ममरणं मृत्युस्तयोः शोकस्य हरणं नाशकरं तत्पूर्वोक्तलक्षणं एतन्ममपुरोवर्त्ति ते तव तीरं तटं नोऽस्माकं श्रमशमनधीरं श्रमस्य जन्ममरणखेदस्य शमनं नाशनं तत्र धीरं समर्थं भवतु अस्तु ।।४२।।

**महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्**
**न लभ्यं घोराभिः सुविमलतपोराजिभिरपि ।**
**अचिन्त्यं तद्विष्णोः परमखिलसाधारणतया**
**ददाना केनासि त्वमिह तुलनीया कथय नः ।।४३।।**

महादानैरिति महादानैः। भूमिसरस्वतीकपिलाप्रभृतिभिः। बहुविधवितानैः नानाविधयज्ञैः। 'वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकमिति' मेदिनी। च पुनः। ध्यानैरपि। ध्यानलक्षणं उक्तम्– समाहितेन मनसा चैतन्यान्तरवर्त्तिना। आत्मनोऽभीष्टदेवानां मननं ध्यानमिहोच्यते इति। सुविमलतपोराजिभिरपि अदोषाभिः तपश्चर्यापंक्तिभिरपि। किंलक्षणाभिः ? घोराभिः क्लोशवहाभिः यत्र लभ्यं न प्राप्यं तत् वाङ्मनोगोचरमचिन्त्यं असंज्ञं विष्णोः व्यापकस्य पदं स्थानं सायुज्यरूपम्। 'पदं व्यवसितित्राणस्थानलक्ष्म्यांघ्रिवस्तुषु' इत्यमरः। तथा च श्रुतिः। 'तद्विष्णोः परमं पदं सदा पश्यंति सूरयः इति। एवं भूतं पदमखिलसाधारण तया सर्वप्राणिसामान्यतया ददाना प्रापयन्ती त्वमिह ब्रह्माण्डे केन वस्तुना साकं तुलनीया तुलयितुं योग्याऽसि भवसि। तन्नोऽस्माकं कथय वद ।।४३।।

**न यत्साक्षाद्वेदैरपि गलितभेदैर्निगदितं**
**न यस्मिन्जीवानां प्रभवति मनोवागवसरः ।**
**निराकारं नित्यं निजमहिमनिर्वासिततमो ।**
**विशुद्धं यत्तत्वं सुरतटिनि नित्यं न विषयः ।।४४।।**

नयदिति। वेदैः आम्नायैरपि 'श्रुतिः स्त्रीवेद आम्नाय' इत्यमरः। सत्साक्षात्प्रत्यक्षं न निगदितं न वर्णितम्। साक्षात्प्रत्यक्षतुल्ययो' रित्यमरः। किं लक्षणैः निगमैः ? गलितभेदैः गलितः निरस्तः भेदो येषां तैः। यस्मिन् जीवानां प्राणिनाम्। जीवो वृक्षप्रभेदेस्याज्जीवः प्राणिनि गीष्पताविति विश्वः। मनोवागवसरः मनश्चवाक् च तयोरवसरः। न प्रभवति न शक्नोति। 'अवसरो वर्षप्रस्तावयोरपि' इति विश्वः। वाङ्मनोगोचरमित्यर्थः। यत् निराकारं निरवयवं नित्यमविनाशि पुनः किं लक्षणं ? निजमहिम्ना माहात्म्येन निर्वासितं तमोऽज्ञानं येन तत्। विशुद्धं गुणत्रयशून्यं न विषयः। घटवन्न। हेसुरतटिनि तत् ब्रह्म त्वमसि। एतेन तत्वमस्यादि वाक्यैः प्रतिपादितमपरोक्षं तत् त्वमेवाऽसीति भावः ॥४४॥

**यजन्त्येके देवान्कठिनतरसेवांस्तदपरे**
**वितानव्यासक्ता यमनियमरक्ताः कतिपये।**
**अहं तु त्वन्नामग्रहणभृतकामस्त्रिपथगे**
**जगज्जालं जाने जननि तृणजालेन सदृशम् ॥४५॥**

यजंतीति। एके अन्ये कठिनतरसेवान् कठिनतराः दुःसाध्या सेवा सेवनं एषां तान्देवान् यजन्ति आराधयन्ति। तदपरे तदितरे वितानव्यासक्ताः विताने यज्ञकर्मणि व्यासक्ता विशेषेण आसक्ताः व्यासक्ताः। 'वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि' इति विश्वः। कपितये केचन यमनियमरक्ताः। यमाश्च नियमाश्च यमास्तु 'अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः। आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यक्षमाऽभयमिति। यमास्तु शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम्। 'तीर्थाटनं परार्थेहातुष्टिराचार्यसेवनमिति'। तेषु रक्ताः अनुरक्ताः आसक्ता इति यावत्। हे त्रिपथगे त्रिपथगामिनि। अहं तु त्वन्नामग्रहणभृतकामः। तव नामग्रहणं त्वन्नामग्रहणम्। ग्रहणं तूपलब्धौस्याद्दाने च ग्रहणे करे 'ग्रहोपरागे स्वीकार' इति विश्व। त्वन्नामग्रहणेन स्वीकारेण भृतः पूर्णः कामोभिलाषो यस्य सः। एतादृशः सन्। हे जननि हे मातः। जगज्जालं विश्वसमूहम्। तृणजालेन तृणसमूहेन सदृशं तुल्यं जाने ज्ञातवान् ॥४५॥

**अविश्रान्तं जन्मावधि सुकृतकर्मार्जनवतां**
**सतां श्रेयः कर्तुं कति न कृतिनः संति विबुधाः।**
**निरस्तालंबानामकृतसुकृतानां च भवतीं**
**विनाऽमुष्मिंल्लोके न परमवलोके हितकरम् ॥४६॥**

अविश्रान्तमिति। अविश्रान्तं विश्रामरहितं यथास्यात्तथा जन्मावधि सुकृतकर्माऽर्जनवतां आजन्मपुण्यसंचयवतां सताम्। सल्लक्षणमुक्तं हरिणा।

मनसि वचसि काये पुण्यपीयूषपूर्णाः ।
परधनमुपकारश्रेणिभिः प्रीणयन्तः ।।
परगुणपरमाणून्यपर्वतीकृत्य नित्यं ।
निज हृदि विकसन्तः सन्ति संतः कियंतः ।।

साधूनां श्रेयः कल्याणं कर्त्तुं विधात्तुं । कति विबुधाः देवाः कृतिनः कुशलिनः सन्ति भवन्ति । अपि तु सर्वे भवन्ति । तदुद्धरणं तु पिष्टपेषणवत् इति भावः परन्तु निरस्तालम्बानां निर्गतः आलंबो आश्रयो येषां तेषां । पुनः किं ? अकृतसुकृतानां अविहितपुण्यकर्मणां पुण्यहीनानामित्यर्थः । प्राणिनामिति शेषः । भवतीं त्वां विना अमुष्मिँल्लोके मर्त्यलोके परं अन्यं हितकरं कल्याणकारकं नावलोके न पश्यामि पापिनां उद्धारकरणे त्वमेव समर्था इति भावः ।।४६।।

**बधान द्रागेव द्रढिमरमणीयं परिकरम्**
**किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।**
**न कुर्यास्त्वं हेलामितरजनसाधारणतया**
**जगन्नाथस्यायं सुरधुनि समुद्धारसमयः ।।४७।।**

बधानेति । हे सुरधुनि हे देवसरित् । द्रागेव झटित्येव द्रढिमरमणीयं द्रढिम्ना दार्ढ्येन या रमणीयं सुन्दरं परिकरं गात्रिकाबन्धं । 'भवेत्परिकरो व्राते पर्यंकपरिवारयोः प्रगाढगात्रिकाबंधे' इति विश्वः । बधान । पुनः किरीटे मुकुटे बालेन्दुं बालशशिनं किरीटस्थितमित्यर्थः । पन्नगगणैः भोगिसमूहैः 'उरगः पन्नगो भोगी' इत्यमरः । नियमय– दृढय । इतरजनसाधारणतया स्वल्पपातकीमनुष्यसामान्यतया हेलां अवज्ञां न कुर्याः मा कुरु । 'हेलावज्ञा विलासयोश्चेति' विश्वः । अयं समुद्धार-समयः उद्धारकालः । जगन्नाथस्योद्धारः तावदत्यन्तश्रमापादक इति भावः ।।४७।।

**शरच्चंद्रश्वेतां शशिशकलशोभालमुकुटां**
**करैः कुंभाभोजे वरभयनिरासौ च दधतीं ।**
**सुधासाराकाराऽऽभरणवसनां शुभ्रमकर-**
**स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ।।४८।।**

इदानीं दूरस्थानां दुर्लभगंगास्नानादीनां मनुष्याणां उद्धृतये ध्यानमाह । शरच्चंद्रश्वेतामिति । शरच्चन्द्रश्वेतां शरदिन्दुसमुज्वलां शरच्चन्द्रस्य अतीवनिर्मलत्वा-दुपमानम् । पुनः किं लक्षणं शशिशकलशोभालमुकुटां शशिशकलेन चन्द्रखण्डेन शोभालः शोभावान् मुकुटो यस्याः सा । आदन्तेभ्यो लजिष्यते– इति वचनात् मत्वर्थीयो लच् प्रत्ययः । पुनः किं करैर्हस्तैः । कुभांम्भोजे कुंभश्च अम्भोजं च कुंभाम्भोजे कुम्भः सुधाघटः अंभोजं कमलं वरो नाम भक्ताऽभिलाषदानसूचिका मुद्रा । भयनिरासः । भयस्य भीतेर्निरासो निरसनं अभयं दधतीम् च– पादपूरणे ।

पुनः किं लक्षणं ? सुधासाराकाराऽऽभरणवसनां आभरणवसनां आभरणानि च वसनानि च सुधासारस्य आकार इव आकारो येषां तानि सुधासाराणि आभरण-वसनानि यस्याः सा आभरणानि भूषणानि वसनानि वासांसि। पुनः किं लक्षणं ? शुभ्रमकरस्थितां श्वेतग्राहवाहनां त्वां ये नराः ध्यायन्ति हृदि शीलयन्ति तेषां नराणां परिभवः तिरस्क्रिया पापेभ्यः इति शेषः। न उदयति न समुदेति ॥४८॥

**मंत्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः**
**स्रस्तं किं च सुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः।**
**वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि**
**त्वं तापं तिरयाऽधुना मम भवव्यालावलीढात्मनः ॥४९॥**

मन्त्रैरिति। मंत्रैर्मीलितं मनुभिर्मीलितं निलीनं। औषधैर्भेषजैर्मुकुलितं संकोचितम्। सुराणां देवानां गणैः समूहैः रुद्रादिभिः त्रस्तं भीतम्। गारुत्मतैः। गरारातिभिः। 'गारुत्मतो गरारातिर्गरुड़ोद्गीर्ण इत्यपि' इति केशवः। ग्रावभिर्मणिभिः विदलितं विदीर्णं वीचिक्षालितं कालियाहितपदे वीचिभिः ऊर्मिभिः क्षालितं कालियस्य नागविशेषस्य अहितः शत्रुः विष्णुः तस्य पदं चरणौ यस्याः सा तत्संबुद्धौ। हे स्वर्लोककल्लोलिनि अधुनेदानीं मन्त्रादिभिः उपेक्षितकालेत्यर्थः। भवः संसार एव व्यालः सर्पः तेनावलीढः दष्टः आत्मा देहो यस्य तस्य भवव्यालावलीढात्मनो मम तापं तिरय तिरस्कुरु। एतेन जगत्पालकस्य विष्णोः कालियविषसमाक्रांतं पदं क्षालितं निर्विषीकृतम्। तर्हि भवसर्पदष्टस्य मम तापाऽपनोदे कियान् तव प्रयासः इति भावः। शार्दूलविक्रीडितं वृत्तमिदम् ॥४९॥

**द्यूते नागेन्द्रकृत्तिप्रमथफणिमणिश्रेणिनन्दीदुमुख्यम्**
**सर्वस्वं हारयित्वा स्वमथपुरभिदि द्राक् पणीकर्त्तुकामे।**
**साकूतं हैमवत्या मृदुलहसितयः वीक्षिताया स्तवांबु-**
**व्यालोल्लोलासिवल्लल्लरिनवघटातांण्डवं नः पुनीताम् ॥५०॥**

द्यूतेति। द्यूते प्रवृत्ते सति। पार्वतीमहादेवयोरिति शेषः। नागेन्द्रकृत्तिप्रमथ-फणिमणिश्रेणिनंदीदुमुख्यं नागेन्द्रस्य गजेन्द्रस्य गजासुरस्येति यावत्। 'प्रग्रहाहि गजानागा' इति वैजयन्ती। तस्य कृत्तिश्चर्म। 'कृत्तिश्चर्म त्वचो भूर्ज, इति मेदिनी। प्रमथाः पारिषदाः। 'प्रमथाः स्युः पारिषद' इत्यमरः। फणिनां सर्पाणां मणिश्रेणिः मणिपंक्तिः। नन्दी वाहनो वृषभः इन्दुश्चन्द्रः ते च ते मुख्याः आदयो यस्मिँस्तत्। एतादृशं सर्वस्वं समस्तं धनं हारयित्वा पराधीनतां प्रापयित्वा। अथ सर्वस्वपराजया-नंतरं पुरभिदि पुराणि भिनत्तीति पुरभित् तस्मिन् पुरभिदि महादेवे द्राक् झटिति स्वं आत्मानं स्वंज्ञातावात्मधनयोरात्मीयेपि प्रचक्षति' इति विश्वः। पणीकर्त्तुकामे ग्लहीविधातुकामे सति। ननु जगद्गुरोर्महादेवस्य इदमनुचितं एव,

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।।

इति सत्पथगर्ह्यं द्यूतं असमंजसमिति चेदुच्यते। महादेवक्रीडनम्। देवदेव तव क्रीडाऽखिलं ब्रह्माण्डगोलकम्। या सा द्वादश ये नाथ ते सारिफलके ग्रहाः। कृष्णाऽकृष्णोत्तरा या वै तिथयस्ताश्च सारिकाः। द्विपं च दशमासे यास्त्वक्षं तथाऽयने। 'सृष्टिप्रलय संज्ञौ द्वौ ग्लहौ जयपराजयौ।'

देवीजये भवेत्सष्टिरसृष्टिधूर्जटेर्जये ।।
भवतोः खेलसमयो यः सा स्थिति रुदाहृता ।।
इत्थं क्रीडैव सकलमेतद्ब्रह्माण्डमीशयोः ।

इति स्कन्दपुराणे नारदवचनात्। द्यूतं प्राकृतम् प्राकृताऽतिरिक्तस्य तस्य तु न दोषः। तथाचोक्तं भागवते– 'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा' इति महतां क्रीडनं सृष्टिस्थितिप्रलयापादकमित्यलं पल्लवितेन।

मृदुलं मन्दं हसितया हासं विदधत्या यदाश्रयत्वं समधीनतां प्राप्तश्चेत् त्वमपि प्राप्तैव पूर्वं त्वयाऽहंक्लेशितेदानीं त्वामहं क्लेशयामीति भावः। हैमवत्या हिमालयस्य अपत्यं स्त्री हैमवती गौरी। हरीतकी हैमवती गौरीशुक्लवचापि चेति' त्रिकाण्डशेषः। साकूतं सावज्ञानं यथा स्यात्तथा। 'अथाकूतं त्वाशयः स्यादवज्ञानमपात्यय' इति केशवः। वीक्षितायाः आलोकितायाः तव। व्यालोलल्लासि। व्यालोलं सपत्नीपरा भवामीत्याकम्पि सत्। उल्लासि। उद्गतो विगतो लासो विलासो उल्लासः सोऽस्यास्तीति उल्लासि। पुनः किं लक्षणम् वल्लल्लहरी नवघटा तांडवं वल्लल्लहरीणां च चल्लहरीणां नवाभिः सद्यःकालीनाभिः घटाभिः घटनाभिः। तांडवं नर्तनं इतस्ततो भ्रमणं यस्य तत्। घटा घटनगोष्ठी भयघटनासु च दृश्यतामिति विश्वः। एतादृशं अंम्बु जलं नोऽस्मान्पुनीतां पुनातु। पराधीनायास्तस्याः अंम्बु कथं पावनसमर्थमिति चेदुच्यते। महतां दुःखमप्यन्येषां सुखायेत्यतो न शंकाऽवकाशः। उक्तञ्च महते रुजन्नपि गुणाय महानिति। पुष्पदन्तोपि स कल्माषः कंठे तव न कुरुते न श्रियमहो विकारोपि श्लाघ्यो भुवनभयभंगव्यसनिन, इति। स्रग्धरावृत्तमेतत् ।।५०।।

**दरस्मितसमुल्लसद्वदनकांतिपूरामृतै-**
**र्भवज्वलनभर्जिताननिशमर्जयन्ती नरान् ।**
**चिदेकमयचंद्रिकाचयचमत्कृतिं तन्वती**
**तनोतु मम शंतनोः सपदि शंतनोरंगना ।।५१।।**

दरस्मितेति। शंतनोः नृपविशेषस्य अंगना गृहिणी मम तनोः शरीरस्य सपदि तत्कालं कल्याणं तनोतु विस्तारयतु। किं लक्षणम् चिदेकमयचन्द्रिका चयचमत्कृतिं तन्वती चितः संविदः एकमयी केवलम् प्रचुरा। 'एकं तु

केवले श्रेष्ठे' इति विश्वः। या चन्द्रिका अज्ञानतमोविनाशिनी ज्योत्स्ना 'चन्द्रिका कौमुदीज्योत्स्ना' इत्यमरः। तासां च यस्य समूहस्य चमत्कृतिं चमत्कारं तन्वती विस्तारयती। पुनः किं लक्षणं ? दरस्मितसमुल्लसत् वदनकान्ति पूरामृतैः दरवत् उज्वलं स्मितम्। ईषत् विकसितं दंतहास्यं तेन समुल्लसत् वदनकांतीनां मुखज्योत्स्नानां पूरः प्रवाहः परंपरेति यावत्। अतएव अमृतानि पीयूषाणि 'पीयूषममृतं सुधे' त्यमरः तैः करणैः। भवज्वलनभर्जितान् भवः संसार एव ज्वलनोऽग्निः तेन भर्जितान् विप्लुष्टान् नरान् मनुष्यान् अनिशं निरंतरं अर्जयंती प्रापयंती प्राणयंती। एतत् पृथिवीवृत्तम्॥५१॥

**विभूषितानंगरिपूत्तमांगा सद्यःकृतानेकजनार्तिभंगा।**
**मनोहरोत्तुंगचलत्तरंगा गंगा ममांगान्यऽमलीकरोतु॥५२॥**

इमां पीयूषलहरीं जगन्नाथेन निर्मितां
यः पठेत्तस्य सर्वत्र जायन्ते सर्वसंपदः॥१॥
श्रीजगन्नाथ विरचितापीयूष लहरी सं० ॥

विभूषितेति। गङ्गा भागीरथी ममांगानि शरीरावयवान् प्रसंगं प्रतीकोऽवयवो' इत्यमरः। अमलीकरोतु निष्पापानि विदधातु। किं लक्षणं। अनंगस्य कामस्य रिपुर्महादेवस्तस्योत्तमांगं मस्तकम्। उत्तमांगं शिरः 'शीर्षं मूर्द्धानामस्तकोऽस्त्रियां' इत्यमरः। विभूषितं अनंगरिपूत्तमांगं यया सा। पुनः किम् ? सद्यः दर्शनसमकालं कृतः विहितः। अनेक जनानां असंख्यमनुष्याणां आर्त्तेः पीडायाः भंगो च्छेदो यया सा। 'भंगस्तरंगेरुग्भेदे छेदे जयविपर्यये' इति विश्वः। मनोहरा मनोहारिणो उत्तुंगाः उन्नताः चलंतः तरंगाः लहर्यो यस्याः सा मनोहरोत्तुगचलत्तरंगा। उपजालिवृत्तमेतत्॥५२॥ इदानीं स्तोत्रनामस्वनाममनिबंधनपूर्वकं स्तोत्रपठनफलमाह। इमामिति। इमामुक्तलक्षणां पीयूषलहरीं पीयूषस्य अमृतस्य लहरीव लहरी पीयूषलहरी पठनकर्त्तृणो मोक्षदायकत्वात् अक्षररूपायाः स्तुतेः पीयूषलहरीत्वेनोपमानम्। जगन्नाथेन जगन्नाथनाम्ना कर्त्रा निर्मितां कृतां यः पुमान् पठेत् तस्य पुंसः सर्वत्र सर्वकालं जयसंपदो जायन्ते सर्वोत्कर्षसंपदा उत्पद्यन्ते इति शिवम्॥५३॥

**संवद्वेरसरद्विदन्तकुमिते वर्षे शुभे माधवे**
**मासे कृष्णदले शशांकदिवसे च द्वादशी सत्तिथौ।**
**दुर्गारामतनूजनिर्दलपतिः गङ्गालहर्याः स्तुतेष्टीकां**
**बालविबोधिनीं स निरमाद्भागीरथीप्रीतये॥**

**॥ इति श्रीदुर्गारामसूरिरङ्गनाथविरचिता गङ्गालहरी टीका बालविबोधिनीनाम्नी समाप्ता॥**

**॥ श्रीरस्तुः सर्वेषाम्॥**



# गङ्गाष्टपदी[1]

॥ श्रीगङ्गायै नमः ॥

॥ रामगंरारागे यत्तिताले ॥

मधुमथनमूर्त्तिवरमिन्दुकरकार्मुकं वहसि वहद्वारि सुप्तरङ्गे तरङ्गे ।
हरिचरणनखत्रिपुरगजदृतनिर्गता ब्रह्मजलपात्रकृतसङ्गे ।
नमो देवि गङ्गे नमोमातर्गङ्गे ।
हर निखिलमघमलकनन्दने ॥ ध्रुवपदं० ॥१॥

त्वमसि जनपावनी चतुरुदधिगामिनी सप्तरुचिकेलिसुकीर्तिसारे
कनकगिरिलम्बिता सकलमुनिवन्दिता हर मुकुटशिरा कुसुममाले ।
नमो देवि गङ्गे नमो मातर्गङ्गे ॥२॥

तीर्थवरकारिणी स्वर्गजोद्धारिणी हेमशैल-
पाषाणभेदेन तारयसि नागरं पूरयसि सागरं ।
सङ्गतविन्ध्यगिरिग्राहे ।
नमो देवि गङ्गे नमो मातर्गङ्गे ॥३॥

इह निखिल सुरगणैरिह निखिल मुनिगणैरिह निखिलवेदैरुदारे ।
स्तूयसे गीयसे गायसे जाह्नवि सुकीर्तितेति संसारसारे ।
नमो देवि गङ्गे नमोमातर्गङ्गे ॥४॥

शुभसलिलविधृतपुलिनमुपकुर्वती तव नाम निर्मलालापम् ।
सेविता चिन्तिता यास्तावगाहिता मज्जिता मम हरसि पापम् ।
नमो देवि गङ्गे नमो मातर्गङ्गे ॥५॥

सगरसुतसङ्गमे लसितवरसुन्दरीदूतिके दुष्कृतिदुरापे ।
निरयगतिबाधिके निर्वाणपदसाधिके ।
भक्तजनदलितसन्तापे नमो देवि गङ्गे ॥६॥

गण्डूषजलसत्तरङ्गकरनिकरमकरगम्भीरतोये ।
तटिनि सुधारसि परपाङ्करसि सघनसाधनोपाये ।
नमो देवि गङ्गे ॥७॥

१. ग्रन्थकारः– जयदेवः, विषयः– साहित्यम्, स.भ.पु.पा.लि.सं. ४१६५४, लिपि– मैथिली ।

इति रामलक्ष्मणौ कौशिकानुज्ञया सुरसरित्कृतनमस्कारे ।
वहति सुकृतमुदारं धीरजयदेवविरचितं कवतारयसि नव जलधिपारे ।
नमो देवि गङ्गे नमो मातर्ङ्गंगे ।।८।।

**।। इति जयदेवविरचितगीतगोविन्दे कविश्रीजयदेवकृतौ गङ्गाष्टपदी सम्पूर्णा ।।**

## गङ्गातिलकः

ललाटे केशवं विद्याद् नारायणं यथोदरे ।
हृदये माधवं विद्याद् गोविन्दमुत्तुपके ।।
विष्णुञ्च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् ।
त्रिविक्रमं कर्णदेशे वामे कुक्षौ च वामनम् ।।
श्रीधरं च करे वामे हृषिकेशं तु कर्णिका ।
पद्मनाभस्ततः पृष्टे ककुद् दामोदरं स्मरेत् ।।

संवत् १८३१ शाके १६९६ प्रवर्तमाने उत्तरायणे ज्येष्ठमासे शुक्लपक्षे ९ नवम्यां तिथौ शनिवासरे श्री वाराणसीमध्ये लिखितं भट्टनथुरामविजनरामेण स्वयं पठनार्थम् वाचकपाठकयोः जयोस्तु ।

॥ श्रीगुरुः शरणम् ॥

# गङ्गालहरी सटीका

॥ श्रीगणेशाय नमः॥ श्रीसरस्वत्यै नमः॥ ॐ नमो विश्वेश्वराय॥

लम्बोदरं सुन्दरमाश्रयेऽहं विद्याप्रदं विघ्नसमूहहन्त्रे।
उमेशपुत्रं विधृतात्मसूत्रं दीनातपत्रं च जडात्पवित्रम् ॥१॥

प्रचण्डतरमार्तण्डसहस्रकिरणप्रभम्।
वक्रतुण्डमहं वन्दे विघ्नध्वंसैकपण्डितम् ॥२॥

गङ्गावारितरङ्गा दुरिताङ्गारा भवन्तु भव्याय
संसृतिपारावारे श्रमतान्नः सन्ति तारका नान्ये ॥३॥

जगन्नाथाख्यविदुषा या गंगालहरी कृता।
समारभेऽहं तद्व्याख्यां नत्वा सुरतरङ्गिणीम् ॥४॥

तस्यास्तात्पर्यबोधाय श्लोकसङ्गतिसिद्धये।
विद्वन्मनोरमां टीकां कुर्वेऽहं जनिमुक्तये ॥५॥

तत्रादौ विचारः प्राप्तः। अहो! इह खलु विद्वद्भिः केवलं सामान्यग्रन्थः क्रियते। तत्र तद्वाक्यानां सर्वत्र प्रामाण्यमस्तीति न नियमः। किन्तु क्वचिन्नीतिप्रदर्शकवाक्येषु 'अहो दुरन्ता बलवद्विरोधिता' इत्यादिषु प्राप्तम्। वस्तुतस्तु भ्रमप्रमादादिरहितवेदवाक्यसदृशव्यासादिसदृशोक्तवाक्यानामेव प्रामाण्यं विलक्षणापूर्वोत्पादकत्वं च नान्येषामिति राद्धान्तः।

एतद्ग्रन्थस्य तु केवलं व्याख्यावाक्यवत् प्रवृत्तिरकुण्ठिता दृश्यते। एवं च आधुनिकस्येदृशी प्रवृत्तिरयुक्ता। अतो विचारस्त्वावश्यकः। तत्राप्येतद्ग्रन्थकर्तुः कर्माचरणं तु विश्रूयते।

तथाहि- कश्चन जगन्नाथाख्यः पण्डितम्मन्यः, स च विषयलम्पटो भूत्वा काञ्चन यावनीं परिगृह्य तया सार्द्धं रममाणः तत्संसर्गजपापभीतिं तृणीकृत्य रेमे। ततः कतिपयदिवसैः श्रीमद्वाराणसीक्षेत्रं समागत्य श्रीमतीं भागीरथीं स्तुवन् तयैव नीतस्तस्यामेव लीनो बभूवेति। एवं च ईदृशस्येदृशीगतिर्न युज्यते।

अतः कार्यात् कारणमनुमेयमिति न्यायेन इदमीश्वरप्रसादान्यथानुपपत्त्या एवं कल्प्यते। अहो अयं तु विप्रकुलोत्पन्नस्तत्रापि शास्त्रनिपुणश्च। अतः पूर्वं

---

ग्रन्थकार- पण्डितराज जगन्नाथ, टीकाकार- पूर्णानन्द, प.प. ब्रह्मानन्द शिष्यः। पत्र- १-३१, ग्रन्थ संख्या- १८१४३ स.भ.पु., विषय- स्तोत्रम्, रचनाकालः- सं० १६२८

शास्त्रीयं परोक्षज्ञानं सम्पाद्य ईश्वरास्तित्वपूर्वकं ब्रह्मात्मैकत्वं विज्ञाय असङ्गनिशिताज्ञानासिदग्धाशेषमलः सन् दृश्यमात्रं ब्रह्मरूपतया पश्यन् विधिनेषेधातीतः। अभिमानवर्जित एव अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभमित्यादि सिद्धान्तानुसारेण प्रारब्धकर्मणां भोगादेव क्षय इत्यवश्यभोक्तव्यतया स्वकृतं क्षपयन् प्रसङ्गसङ्गत्या प्राप्तां तामङ्गीकृत्य विहरन् लोकनिन्दां स्वेष्टं मन्यमानः लोकदृष्ट्या दुराचरणं कर्म कर्त्तुं समुद्यतः तथा कृतवानित्यनुमितिर्जायते। नोचेदीदृशपापकर्मरतस्येदृशीगतिर्नैव। तथा च विदितात्मतत्वानां पापलेश एव नास्तीति प्रदर्शयितुकाम एवं प्रवृत्त इति सिद्ध्यति। तत्र श्रुतिः—

तस्यैवात्मा पदवित्तं विदित्वा क्रमेणालिप्यते पापकेनेति। किं च। निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध इति महद्वाक्यप्रदर्शितार्थस्य सत्यतां प्रदर्शयितुमेवैनां नीचां तां हस्तेनावलम्ब्य अविदितात्मतत्त्वलेशानां तत्त्वविचारे प्रवृत्तिरनायासेन भवत्वित्यभिप्रायेण "न कर्मणा न प्रजयेत्यादि श्रुतिप्रतिपादितमर्थं च ग्राहयन् अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥" इत्यादिना अस्ति ब्रह्मरूपं जगद् रूपं यस्य दृश्यमात्रे विद्यमानत्वात् पदार्थमात्रस्य अस्त्येव ब्रह्मरूपता। तत्र भगवद्वचनं—

यो यो या यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥

–इति भगवत्प्रतिज्ञायाः पदार्थमात्रस्य इष्टफलप्रदातृत्वं च। तदेव स्पष्टीकर्तुं द्विपञ्चाशत्सोपानान्तरितोच्चस्थाने उपविश्य प्रकृतचाक्षुषप्रत्यक्षविषयीभूतस्यैतद्गङ्गासलिलस्यापि इष्टप्रदातृत्वमस्ति न च सर्वैः, इति तदाह्वाने समुद्युक्तः स्तव्यनिष्ठगुणाभिधानरूपस्तुतिप्रतिपादकशब्दसन्दर्भरूपस्तोत्रेण ता स्तोतुमुपचक्रमे–

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्-
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु॥१॥

समृद्धं........इत्यादिना। तत्र ते सलिलं नः अशिवं अकल्याणं शमयत्विति अन्वयः, शमयत्विति प्रार्थनायां लोट्लकारः, तत्र सकलवसुधायाः समृद्ध सौभाग्यमित्यादिविशेषणानि तु सलिलपदविशेष्यरञ्जनायैवेति सर्वत्र विशेषणानां तत्प्रभावसूचकत्वनियमादित्यर्थः। सौभाग्यमित्यस्य सुष्ठुभगं श्रीर्यस्य तत् सुभगं तस्य भावः सौभाग्यमिति भावे ष्यञ्, सौभाग्यातिशयादित्यर्थः। अतएव समृद्ध्या विशेषणसंगतिश्च। आस्ताम्, ननु ते सलिलमिति निर्देशाद्देवतासलिलयोः पृथक्त्वं

प्रदर्शितमिति प्रतिभाति। तत्र सलिलमिति चेत् तदाशयस्त्वेवं प्रथमं पूज्यस्वरूपापरिज्ञाने स्तुत्यादिष्वप्रवृत्तेरिष्टसिद्धिर्नस्यात्। अतस्तज्ज्ञानमावश्यकमिति च दृश्यमानस्यैतत् सलिलस्य को वा प्रभाव इति मनसि विचारयन् तदधिष्ठात्रीं देवतां सितमकर-निषण्णामित्यादिना तदधिष्ठात्रीं देवतां स्वबुद्धिस्थां कृत्वा तत्प्रभावातिशयतामन्वीक्ष्य तदभिन्नशक्तिकमेवेदं सलिलमिति निश्चित्य स्वकृतदुष्कृतस्यानिवार्यत्वं निचित्य देवताराधनं विना मदुद्धारो दुर्घट इत्याशङ्क्य तत् प्रार्थनमेव युक्तं ज्ञात्वा ते सलिलमिति पृथक्त्वं प्रदर्शितम्। तत्र मयेति प्रयोगापत्तिश्च। तत्र पृथक्त्वाङ्गीकारे प्रमाणं च– 'संसारसागरोत्तीर्णकारणाय नृणां सदा।' श्रीगङ्गा द्रवरूपेण त्रैलोक्यं व्यवतिष्ठतीति ब्रह्मवैवर्तोक्तेः, अतएव सलिलप्रार्थनासंगतिश्च। ननु देवतासलिल-योरभेदशक्तिग्रहे देवताप्रार्थनमप्रयोजकमिति—

तत्रैवमस्ति। महत्सु स्वापराधनिवेदनमेव सम्यक्। तदुक्तं "सतां समीपे पापानि गोपनीयानि नैव हि। भस्मीभवन्ति पापानि महाग्नौ तूलराशिवदिति महदुक्तेः लोकेऽपि एवमनुभवः महत्सु स्वापराधं निवेद्य तदुपशान्तिं सम्पादयन्तीति अतः तत्र स्वापराधं निवेदयति अहो! अहं तु महत्पापं कर्तुं समुद्यतस्तदपि बुद्धिपूर्वकमेव "तत्राप्यकुशलं कर्म आत्मनः अहितप्रदमिति जानन्नपि दृष्टश्रुतदण्डौ तुच्छीकृत्य पापमकरवम्। अतो दण्डनीय एव अहम् लोकेऽपि बुद्धिपूर्वकापराध-कर्त्तुर्दण्डदर्शनात् यथा बुद्धिपूर्वककृतपादप्रहारादिः क्षन्तुमशक्यः, एवं मत्कृता-पराधोपीति विज्ञाय दीनार्त्तिविच्छेदनहेतुर्भूत्वा त्वमसीत्युपश्रुत्य शरणं प्राप्तोस्मि। तत्र प्रमाणं च—

श्रुताऽभिलषिता दृष्टा स्पृष्टा पीता च गाहिता।
गङ्गा तारयते तेषामुभौ वंशौ विशेषतः॥

इति श्रवणात् यद्यपि "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेति भगवद्वचनं तथैव बुद्धिपूर्वककृतं पापं कृत्स्नं दहति वह्निवदित्यादिना च तादृशा-पराधस्य ज्ञानमात्रनिवर्त्यत्वे सत्यपि मादृशानां तादृशब्रह्मापरोक्षसाक्षात्कारजनक-ज्ञानाभावात् त्वदेकशरणोऽस्मीति भावः। वस्तुतः त्वत्सम्बन्ध्युदकस्य समस्तजन-वृजिननिरसनसामर्थ्यमस्तीति न ज्ञात इति न, किन्तु ज्ञानं सम्यक्, तथाप्यस्मत्स-दृशदुरितध्वन्सदक्षमस्ति न वेति संशयः।

न चात्र वस्तुशक्तिरङ्गीकार्येति वाच्यम्' क्वचित् तददर्शनादित्यर्थः। तत्र दृष्टान्तः यथा वह्नौ सर्वदाहानुकूला शक्तिरस्ति, अतः सर्वं दहति च, तथापि पारदादिभस्मीकरणे तस्य स्वतः सामर्थ्यं नास्तीति सर्वानुभवः। किन्तु रसविशेषसंयोगे दाहकत्वं सर्वानुभूतं तथैव देवताकृपाकटाक्षसंयोगमन्तरा स्वोद्धारस्योद्घाटितत्वं

मन्यमानः ते सलिलमिति पृथक्त्वप्रदर्शनपूर्वकं देवताप्रार्थनं कृतवानित्येव तदाशयः। आस्तां नन्दिवदिदं सलिलं सकलवसुधासौभाग्यमित्युक्तं तन्न घटते। कुत इत्युक्तौ ईदृश्यो विस्तृता नद्यस्तत्तद्देशावच्छेदेन सत्यः सन्ति तत्र तत्र तासां भूषणत्वं मन्यत एव।

किं बहुना भूमिभूषणत्वेन विद्यमानान्यनेकानि, यथा उपवनादौ पुष्पितफलितनानाद्रुमाणामेव भूषणत्वं क्षेत्रे सस्यादिसम्भृतत्वस्यैवं क्वचित् स्थले हीरकाद्युत्पत्तेरेव, अतो वसुधाया इदमेव भूषणं इति वक्तुमशक्यं तत्राप्येतज्जलस्यैकदेशवृत्तित्वात् सुतरां न घटत इति भावः, किं च सकलपदप्रयोगभङ्गापत्तिप्रसंगश्च इति चेन्न, तत्र सकलवसुधेति प्रयोक्तुराशयस्त्वन्य एवेति। न चैतज्जलस्य स्त्रीकल्पितभालस्थकुङ्कुमरेखेव एकदेशवृत्तित्वसत्त्वेऽपि सकलवसुधाभूषणत्वं वाच्यम् तादृशविषयरूपवसुधाभूषणत्वकथने ग्रन्थकर्तुस्तात्पर्याभावादिति भावः, ततः कुत इति चेत्। तथाहि वसुधापदशक्तिः पृथिव्यामेव सा च शरीरेन्द्रियविषयभेदेन त्रिविधेति शास्त्रप्रसिद्धिः। तत्रेयं दृश्यमाना मृत्पाषाणादिरूपा एतस्या भूषणत्वकथने तस्य तु न किंचित् प्रयोजनम्, तस्मात् वसुधापदस्यान्याऽर्थः कल्पनीय एव। अत्रैवमस्ति। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायात् विना प्रयोजनं न कस्यचित् प्रवृत्तिः। अस्य तु स्वकलेवरसार्थक्यमेव प्रयोजनम्, अतो वसुधा शब्देन अस्मदादिशरीरं गृहीत्वा उपपत्तिः कार्या। वस्तुतः प्रतिबन्धकसंसर्गाभावस्यैव कार्यमात्रजनकत्वनियमात् कर्तुः प्रयोजनाभावरूपं प्रतिबन्धकमस्तीत्यन्यार्थावलम्बनस्यौचित्यम्। तत्र वसु धत्तेऽसौ वसुधा इति व्युत्पत्त्या शरीरे वसु धनं किमस्तीति चेत् शास्त्रप्रामाण्यतः प्रमाणप्रमेयगतासम्भावनाविपरीतभावनानिरासपूर्वकं ब्रह्मात्मैकत्वविज्ञानमेवात्र वसु ज्ञेयम् ईदृग्वसूत्पत्तावेतच्छरीरस्यैवाधिकारात्।

**तदुक्तं वासिष्ठे—**

'जातास्त एव जगति जन्तवः साधुजीविताः।
ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः॥'

इत्यनेन ज्ञानसम्पादनस्यैव आवश्यकत्वसूचनात्। श्रुतिश्च तत्त्वमस्यादिवक्योत्थज्ञानं मोक्षस्य साधनम् इति सर्वं समञ्जसमेवेत्यर्थः। नन्वन्यार्थावलम्बने कृतेऽपि जीवसामान्यस्य ज्ञानमुत्पद्यत एवेति नियमोऽस्ति किम्? इति चेन्न नियमः। किन्तु तादृशवाक्योक्तज्ञानसम्पादनस्य अतिकष्टसाध्यत्वात् जीवसामान्यस्य तु दुर्लभमेव। तथापि एतज्जलस्य तु तादृशज्ञानप्राप्यफलप्रदातृत्वमस्तीति सर्वश्रुतिस्मृतिपुराणानामुद्घोषः। तस्मात् सकलवसुधाभूषणमिदमेवेति सिद्धम्।

अतस्त्वदेकशरणा वयं जानीहि, आस्तां तत्र किमपि इत्यस्य अनिरुक्तत्वमर्थः। तथा हि तीरवासात्तत्र मृतेर्देहास्थिपतनादपि मुक्ता एव भविष्यन्ति

जना अप्यतिपापिनः' इति पुराणोद्घोषः। एवं ... जपदानाद्यनपेक्ष्यैव केवलं पृथुकेन्द्रपदन्यायवदनिर्वचनीयान्यसुदुर्लभमुक्तिरूपफलप्रदानकर्तृत्वात्तदपि सङ्गतमेवेति दिक्। लीलाजनितजगत इति। ननु लीलया जनितानि जगन्ति यस्मादिति विग्रहे अनन्तब्रह्माण्डनिर्मातुरिदमैश्वर्यं कथमिति चेत्। शृणु! तदेव समर्थयितुं इतिहासं प्रमाणयति। तदुक्तं केदारखण्डे–

एकदा आदिशक्तिर्लीलया करकमलाभ्यां शिवनेत्रे पिधाय नामुञ्चत्, तदा शिवो मुञ्च मुञ्चेति तां सम्प्रार्थ्य उपायान्तरमदृष्ट्वा स्वभालस्थतृतीयनेत्रं समुद्घाट्य नेत्रज्वालया तत्करावपीडयत्, तेन शक्तिः स्वेदकरा सत्यसहमाना नेत्रे व्यमुञ्चत्। ततः शिवोपि स्वनेत्रे समुन्मील्य बहिरवलोकयन् तद्धस्तस्वेदौघे अनन्तब्रह्माण्डानि जलनिमग्नान्यपश्यत्। ततः स्वशक्तेर्विलक्षणं सामर्थ्यं वीक्ष्य हृष्टः समभवत्। पुनर्ब्रह्माण्डदर्शनधिया स्वजटाजूटेन तज्जलं प्रशोष्य आधारार्थमर्द्धं विमुच्य अर्धं जटासु संस्थापितवान्। ततः कतिपयदिवसैः ब्रह्मा सृष्टिं कर्तुं इच्छँस्तदुपायमजानन् शिवं समाराध्य तज्जलं प्राप्य सृष्टिसमर्थः अभवत्। तदुक्तम्–

सृष्ट्यनुग्रहभूतं तच्छक्तेः स्वेदोदमादरात्,
ददौ लम्बं सर्वसृष्टिकार्यानुग्रहहेतुकम्॥

इति तदेव शिवज्ञानाद्यैः ब्रह्माणं समाराध्य इन्द्रादिभिः प्राप्तमिति पुराणप्रसिद्धिः। जाता स्वर्गतरङ्गिणीति सैवात्र भगीरथकृततपःफलरूपेण सम्प्राप्तेति प्रसिद्धेः। सकलसृष्टिकारणीभूतत्वं एतत्सलिलस्य उपपन्नमेव, अतस्तन्महैश्वर्यं ज्ञेयम्। तथा खण्डपरशोरिति विशेषणेनापि तदैश्वर्यं वक्तुं शक्यम्। खण्डयति रिपूनिति खण्डः तादृशः परशुः शस्त्रविशेषो यस्येति विग्रहे एतत् सलिलस्यापि पापरूपरिपुखण्डनक्षमत्वात् च तदैश्वर्यत्वोपपत्तिरिति।

आस्ताम्, ननु श्रुतिसर्वस्वत्वं एतज्जलस्य कथमिति चेत्, श्रुतयः ताश्च स्वतः प्रामाण्यबलेन अनिर्देश्यब्रह्मबोधनाय प्रवृताः सत्यः विधिनिषेधमुखाभ्यां वसन्ते ब्राह्मणमुपनयीत नेति नेतीत्यादिना च प्रवृत्तिनिवृत्तिमार्गावुपदिश्य सर्व निषेधावधिभूतं किंचिदस्तीत्यर्थात्प्रदर्श्य विरामं प्राप्ताः। तदुक्तं शुकेन—

"शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धि"रिति महदुक्तेः। तथा च तत्प्रतिपाद्यं वस्तु ब्रह्मैव तदेवेदं सलिलमिति निश्चित्य श्रुतिसर्वस्वत्वविशेषणं प्रयुक्तम्। तदुक्तं–

योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः॥

इति महदुक्तेः सर्वं सङ्गतमेवेत्यर्थः। सुमनसां सुकृतमिति तदर्थं चैवं सुष्ठु मनांसि येषां तेषां भगीरथसदृशपुण्यवतामित्यर्थः। तत्र सुष्ठुपदेनेदं ध्वनितम्, ''जन्मलाभः परं पुंसामन्ते नारायणस्मृतिरिति न्यायेन यदीयपुरुषाः केवलं तपोनिष्ठाः सन्तः परलोकं गताः अतिशयितप्रयत्नवन्तः इत्यर्थः। एवं च तादृशानां सुकृतं पुण्यमेव मूर्तत्वेन विराजत इत्यर्थः। मूर्तत्वं च क्रियाश्रयत्वं नोचेदीदृशलाभस्याघटितत्वादित्यर्थः।

नन्वस्मिन् जले सुधासौन्दर्यलेशस्याप्यविद्यमानत्वेन तत्तुल्यत्वदानमेतज्जलस्यानुचितमिति चेत् न, सुधावदमृतवत् सौन्दर्यं यस्येति विग्रहे गौण्या वृत्त्या सुधानिष्ठाजरामरत्वदानकर्तृत्वगुणसजातीयगुणवत्वात्सर्वमुपपद्यत इति भावः।

आस्तां श्लोकतात्पर्यं तु ईदृग्विशेषणविशिष्टस्य ब्रह्मणः साक्षाल्लाभे तदृते कमन्यं शरणं गच्छेदित्यभिप्रायेण। अहो भाग्यमस्माकमित्यलभ्यलाभं मत्वा एतत्सलिलस्य आर्त्तत्राणपरायणत्वाच्च अशिवशमनयाच्ञया कृपणं मां समुद्धरेदिति प्रार्थनारहस्यम् ॥१॥

पूर्वश्लोके स्वबुद्धिस्थदेवतायाः विलक्षणं प्रभावं ज्ञात्वा तदीयतनुत्वेन विराजमानस्यैतज्जलस्य श्रुतिसर्वस्वत्वादिविशेषणैर्ब्रह्मरूपतां प्रदर्श्य केवलमशिवशमनं प्रार्थितम्। इदानीं प्रवाहदृष्टिर्भूत्वा किंञ्चिदाशायुक्तः समभवत्।

अहो, इयं सुरतरङ्गिणी अतिकरुणावतीति श्रुतपूर्वम् अतो मदुद्धरणायैव चञ्चला जातेति विनिश्चित्य प्रार्थयते– दरिद्राणां दैन्यमिति।

दरिद्राणां दैन्यं दुरितमथदुर्वासनहृदां
द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम्।
अपि द्रागाविद्यद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥२॥

नन्वेवं दृष्टिभेदः कुत इतिचेत्? एवं शास्त्ररीतिः। घटाकारवृत्तौ जातायां तत्क्षणावच्छेदेन पटाकारा वृत्तिर्नोत्पद्यत इति नियमः। वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं पूर्ववृत्तेः स्थायित्वनियमादनुभवाच्च दृष्टिभेदस्त्वावश्यक इत्यर्थः। प्रकृतमाह– अयि जननि! ते वारां उदकानां प्रवाहः दरिद्रदैन्यं तथा दुर्वासनहृदां दुरितं च दूरीकुर्वन् प्रवाहो गच्छत्विति शेषः। ननु दारिद्र्यनिवारणमेतत्साधनेन न क्वचिद्दृष्टम्, अतस्तत् प्रार्थनमनुचितमितिचेत् सत्यं तत्र दरिद्रपदस्य अकिञ्चनार्थत्वे तादृग्दोषप्रसङ्गः, अत्र तु अन्यार्थ एव दृश्यते। ग्रन्थकर्तुस्तादृगर्थस्वीकारे प्रयोजनाभावात्, अन्य एव तदाशयः कल्पनीयः। तथा च दरिद्रा दुर्गताविति धातुः, तेन दरिद्रतीति दरिद्राः दुर्गतिमन्तः तेषां यद्दैन्यं निरयपातनभीतिप्रयुक्ता मनोग्लानिः

कथं मे स्यादित्याकारिका, तन्निरसनप्रार्थनमेव तदुचितम्। तदुक्तं "दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रिय इति शुकोक्तेः। एवं च दुर्गतिहेतुरसन्तोष एवेति यावत्। तत्रापि तस्य मुक्तेः समस्तभोगत्वाच्च दुर्गतिनिरसनप्रार्थनमेव उचितमिति सिद्धम्। वस्तुतः असंतोषस्तु श्रीमतामप्यस्तीत्यत्र अविवादः। अतः सर्वे दुर्गतिमन्त एवेति अन्यार्थावलम्बनस्य औचित्यम्। दुर्वासनहृदामिति दुष्टवासनापूरितानि हृदि येषां तेषाम्।

अथ दुरितं समस्तपापमित्यर्थः। अथेत्यस्य कृत्स्नार्थकत्वात् तत्रापि द्रुतं शीघ्रमित्यर्थः। तच्च कियता कालेनेति चेत्, सकृदुपगत इति प्रथमदर्शने-नेत्यर्थः। एतेन किं ध्वनितम्? अस्मद्देहस्थितेरनियमात् दर्शमात्रेणानन्तजन्मार्जित-दुरितध्वन्सेऽश्रुतदण्डो न स्यादिति भावः, तत्र प्रवाह– प्रार्थनाबीजं तु त्वज्जल-निमज्जनादिना प्रक्षालितपापस्य प्रवाहपतितत्वात्पुनर्दर्शना भावः सूचित इति।

नन्वहो दुर्वासनाक्रान्तानामहर्निर्शं दुर्वासना– सन्ततेरविच्छिन्नतया सत्कर्म-लेशप्रसक्त्यवसरा भावात्। किञ्च तेषां निर्वाहोऽपि मित्रद्रोहादिनैव भवितुमर्हति। एवं च तत्कृतपापस्य अपरिहार्यत्वमेवेति तेषां निरयगतिरावश्यकी, तदुक्तम्–

मित्रद्रोही कृतघ्नश्च यस्तु विश्वासघातकः।

ते नरा नरकं यान्ति यावच्चन्द्रदिवाकराविति– महदुक्तेः तेषामुद्धारः शशविषाणतुल्य एवेति चेन्तत्वत्प्रभावस्यातुलफलप्रदातृत्वात् मोक्षः करस्थ एवेति सिद्धान्तः। तदुक्तं देवर्षिणा—

'अम्ब! त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलम्' इति श्रुतिस्मृतिप्रामाण्यात् सर्वं सङ्गतमेवेत्यर्थः। आविद्यद्रुमदलनेति अविद्याया अयमाविद्यः अविद्या च स्वाकारवृत्त्यावरकं मूलाज्ञानं तज्जनितो यो द्रुमः अहं ममेत्यसद्भावरूपः, तद्दलने नाशने दीक्षागुरुः संवर्तकालानलवद्दाहको भवतु इति शेषः। तत्र अयीत्यस्य कोमलामन्त्रणार्थकत्वात् सम्बुद्धेश्च स्वाभिमुखीकरणशीलत्वाच्च दीनं मां पश्येति तदर्थः सूचितः, तदपि द्राक् झटितत्यनेन देहपातात्पूर्वमेव गुरुर्यथा स्यादिति भावः।

ननु गुरुणा विना एमुद्धारो न भवेदिति चेत् सत्यमेव। तत्र दीक्षाफलं तु नरकव्यावृत्तिः, सा च गुरोः सकाशादेव सिद्ध्यति। तदुक्तमीश्वरेण—

"समग्रवेदाध्ययनोऽपि विप्रो दीक्षाविहीनो नरकं प्रयातीति आचार्यवान्पुरुषो वेदेति श्रुतिश्च गुर्वाराधनमावश्यकमेवेति भावः। अपारां श्रियमिति न पारो यस्या इति व्युत्पत्त्या मोक्षलक्ष्मीं दिशतु, ददात्वित्यर्थः। यद्यपि श्रीशब्द–

स्त्रिवर्गसम्पत्तिवाचकस्तथापि ग्रन्थकर्तुस्तादृगर्थे प्रयोजनाभावात् श्रीशब्देन पुनरा-वृत्तिरहितशाश्वतब्रह्मपदप्राप्तिप्रदैवात्र ग्राह्या, तदुक्तं शुकेन—

राय: कलत्रं पशव: सुतादयो गृहा मही कुञ्जरकोशभूतय: ।
सर्वेऽर्थकामा: क्षणभङ्गुरायुष: कुर्वन्ति मर्त्यस्य कियत्प्रियं चला: ।।''

इति महदुक्ते:। एवं च श्वशृगालतुल्या पुत्रकलत्रादय एव कर्मणा अत: परलोकसहकारिणो न भवन्तीति सूचितत्वात् श्रीशब्दस्य तादृशार्थ एवेति प्रतिज्ञातम्। अत्र श्लोकतात्पर्यं तु दुर्वासनादिदोषविशिष्टानां न: समुद्धरणे तव प्रवाह एव समुद्युक्तो भूयादिति प्रार्थनाशय:। अलमतिविस्तरेण ।।२।।

पूर्वश्लोके दैन्यादिनिरसनं कुर्वन् ते प्रवाह: अपारां श्रियं दिशत्विति प्रवाह-मुद्दिश्य प्रार्थितवान्। अधुना तरङ्गान् दृष्ट्वा विचारयति। अहो वस्तुत: समीरणहेतुका एव तरङ्गा:, अत्र तु तदभावेऽपि दृश्यन्ते। किमिदं चित्रमित्याशङ्क्य कार्यात्कारण-मनुमेयमिति न्यायेन अकारणं तरङ्गोत्थानं तु मदर्थमेवेति निश्चित्य प्रार्थयते—

उदञ्चन्मात्सर्यस्फुटकपटहेरम्बजननी-
कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहा: ।
भवन्तु त्वङ्गन्तो हरशिरसि गाङ्गा:पुनरमी
तरङ्गा: प्रोत्तुङ्गा दुरितभरभङ्गाय भवताम् ।।३।।

उदञ्चन्मात्सर्येति। अमी गङ्गासम्बन्धिनो गाङ्गास्तरगङ्गा इह संसारे असकृद् भवतां भवन्ति ते भवन्तस्तेषां मुहर्जन्मवतां इत्यर्थ:। एवं च तादृशानां अस्मदादीनां दुरितभरभङ्गाय पापपुंञ्जध्वसाय प्रोन्नता अत्युच्चा: भवन्तु इत्यन्वय:। एतेन किं ध्वनितम्? अत्रोपरि आगत्य मां नेतुं समुद्युक्ता भवन्तु इति। तादृक् प्रार्थनाबीजं तु इयं भक्तकामकल्पद्रुमेति प्रख्यापनायैव केवलम्। तथा दुरितभरभङ्गप्रार्थनं तु जननमरणकारणं दुरितभर एवेति, तदुक्तं—

क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवत: सुरागिण: ।
धर्मेतरौ तत्र पुन: शरीरं पुन: क्रिया चक्रवदीर्यते भवे ।।इति।।

**तत्राप्यहं दुरितभरेण भारीभूत: पृथिव्याम्। तत्र पृथ्वीवाक्यम्—**

ब्रह्मसत्यात्परोऽधर्म इति हो वाच भूरिय सर्वं
वोढुमलं मन्ये ऋतेऽलीकपरं नरम् ।।इति।।

एवं च न मे भक्त: प्रणश्यतीति भगवद्वचनम्, अत: असत्यदृष्टेर्मम दुरितभरभङ्गस्त्वया विधेय इति यावत्। आस्तां इदानीं स्वार्थमेव तरङ्गोत्थानमित्यत्र हेतुभूतविशेषणद्वयं प्रदर्शयति— उदञ्चन् उदयन् प्राप्नुवन् यो मत्सरभाव: तद्युक्तं मात्सर्यं स्फुटं च तत्कपटं चेत्यनेन स्पष्टतया प्रदर्शिता ये हेरम्बजननीकटाक्षव्याक्षेपा:

व्यापाराः ईर्ष्यायुक्तावलोकनानि चिरं कटाक्षस्थितिरित्यर्थः तेन प्रतिक्षणं जनितः संक्षोभनिवहः भयसमूहः येषां ते तथा च उदञ्चन् मात्सर्यश्चासौ हेरम्बजननी-कटाक्षव्याक्षेपश्चेति, तत् क्षुभितास्तरङ्गा इत्यर्थः। तत् सम्भावनाय विशेषणं, हरशिरसीति हरस्य महादेवस्य मस्तके त्वङ्गन्तः, त्वङ्गि कम्पने। कम्पन्त इत्यर्थः इतस्ततो धावमाना वा। त्वर्यन्त इत्यपि पाठः। त्वरया गच्छन्त इत्यर्थः। अनेनेदं ध्वनितं- श्रीगंगापार्वत्योरेकत्र स्थितिस्तु कदाऽपि न घटते। कुत इति चेत् सपत्नीभावस्त्वतिकठिनतर एव, तत्रापि यस्य गृहिणीद्वयं तयोरनपत्या न प्रेयस्करीति लोकप्रसिद्धिः। अत्र तु विपरीतं भाति। पार्वत्याः हेरम्बजननीत्वात् सा पुत्रवती तां च वामाङ्गे धारयति, एनां शिरसा बिभर्ति इत्याश्चर्यम्। एवं च तदीयसौन्दर्यादिसम्पत्त्या शिवस्तदधीनतां प्राप्त इति सिध्यति। वस्तुतस्तु कलहकथने प्रयोजनं नास्ति। किन्त्वस्मदाद्यदृष्टवशादेव गङ्गापार्वत्योरेकत्रस्थितिः। अयमलभ्यलाभ इति सूचितम्। नो चेत् क्व महादेवः, क्वेमे विराजमानास्तरङ्गाः क्वाऽहं मन्दभाग्यः क्व एकत्र सम्मेलनं सर्व घटितमेवेत्यर्थः। वस्तुतो विचार्यमाणे हरशिरसि दोलायमान-तरङ्गाणामत्रागमनन्तु दीनोद्धरणायैव केवलमिति पर्यवस्यति। अहो भाग्यमस्माकं इति भावः, तस्माद्दुरितभरभंगप्रार्थनमुचितमेव। पद्यतात्पर्यं तु केवलं अहङ्कारत-रङ्गाहतानां गतिस्त्वत्तरङ्गा एवेति ॥३॥

पूर्वश्लोके तरङ्गोन्नतिं सम्प्रार्थ्य दुरितभरभङ्गस्त्विति सामान्यतः प्रार्थितम्। इदानीं दुरितभरभङ्गस्त्वतिकठिन इत्यमन्यत। कुतः ? विषयवासनावासितान्तः-करणानां प्रतिक्षणं कायिकाद्युत्पत्तेः तद्वशादन्तःसंतापोऽपि सिद्ध एव। एवं च तयोः प्राचीनकर्मजन्यत्वादनिवार्यत्वं विचिन्त्य भीतः सन् क्षणान्तरे तन्माहात्म्यं विलक्षणं स्मृत्वा सन्तुष्टः सन्प्रार्थयते—

स्मृतिं याता पुंसामकृतसुकृतानामपि च या
हरत्यन्तस्तन्द्रातिमिरमिव चण्डांशुसरणिः।
इयं सा ते मूर्त्तिः सकलसुरसंसेव्यसलिला
ममान्तःसन्तापं त्रिविधमथ पापं च हरताम् ॥४॥

स्मृतिं यातेति। अहो या गङ्गा स्मृतिं प्राप्ता सती स्मृतिविषयीभूता सती अकृतसुकृतानां न कृतं सुकृतं यैस्तेषामपि अन्तस्तन्द्रां बहिस्तन्द्रा तु नेत्रनिमीलनादिः अन्तस्तन्द्रा तु ईश्वरो नास्ति न भातीत्यादिव्यवहारप्रयोजकीभूतमज्ञानं तत् हरन्तीति तदर्थः। अपि शब्दस्वारस्यं तु स्मृतेः संस्कारमात्रजन्यत्वात् अपुण्यतां तु श्रवणादिप्र-वृत्त्यभावात्पूर्वसंस्कारोऽपि नास्तीति सूचितम्। चकारादापाततः श्रवणे अनादरपूर्वक-श्रवणेऽपि पारलौकिककर्मालस्यं वृथाद्रव्यध्वन्स इति या अप्रवृत्तिस्तां हरतीति यदा तदा किमु वक्तव्यं अकृतसुकृतानां ब्रह्माकारवृत्त्यावरकं मूलाज्ञानं हरतीति

हरत्येवेत्यर्थः। अत्र दृष्टांतः- यथा चण्डांशोः गतिः सरणिः सवितृप्रकाशः उदयसमकाल एव तिमिरं नाशयति तद्वद्गङ्गाऽपीति शास्त्रप्रसिद्धिः। अत उक्तम् भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुरिति महदुक्तेः। एवं च ईदृक्सामर्थ्यवती या सैवेयं ते जलरूपा तनुः मूर्त्तिः मम अन्तःसन्तापं त्रिविधं पापं च हरतामिति प्रार्थना। तत्र त्रिविधं च कायिकादिभेदेन अन्तः सन्तापस्तु मानसी व्यथैव। सा च पुरा कृतसुकृतकर्मणा यावदानुकूल्येऽपि कुष्ठक्लीवत्वादिसम्प्राप्तौ अन्तःसंतापो जायते स एवेत्यर्थः। एवं च प्राक्कृतदुष्कृतेनैव तदुत्पत्तेरनिवार्यत्वम्। अतस्तद्विषयिणी प्रार्थना युक्तैवेति भावः। अधुना तादृक्सामर्थ्यद्योतनायैव इद विशेषणं सकलसुरसंसेव्येति। सकलसुरा ब्रह्मादयः तैरपि सेवनीयं सलिलं यस्याः इति विग्रहे निरन्तरामृतपानतृप्तानामपि अपेक्षाबुद्धिर्यदा तदा मृत्युवशानामस्मदादीनां प्रवृत्तौ किमाश्चर्यं नैवेत्यर्थः, ननु त्रिविधपापनिवृत्त्यै धर्मशास्त्रादौ प्रायश्चित्तान्युक्तान्येवेति चेत्सत्यम्, तथापि त्रिविधपापनिवारणं तु दुर्घटं प्रतिभाति, तदुक्तं शैवागमे- मनोवाक्कायकर्मभ्यः कृतं कर्म शुभाशुभम्। भुञ्जाना एव मुच्यन्ते नान्यथा कल्पकोटिभिरित्यादिना इतरव्यवच्छेदात् तन्निवृत्तिर्नास्त्येव तथा व्युत्पत्त्याऽप्यनिवार्यत्वमेव। तथाहि कायेन कृतं कायिकमित्यर्थे तस्य आत्ममनः-संयोगजन्यसंकल्पाभावात्तन्निवृत्तिरास्तां नाम्, वाचिकमानसिकयोस्तु तेन विना असम्भव एव। अतस्तयोर्न परिहारः। तदुक्तं वातुलशुद्धतन्त्रे कायिकं वाचिकं हार्दमुत्तमं चोत्तरोत्तरम्- इति। अतः पापतारतम्यमित्यर्थः। वस्तुतः आत्मा मनसा संयुज्यते मनः इन्द्रियेण इन्द्रियमर्थेनेत्येवं शास्त्ररीतिः। अतः आत्ममनःसंयोगासंयोगभेदेन तारतम्यं ज्ञेयम्। अत्र लोकानुभवश्चैवम्:—

अज्ञानसम्भूतचाण्डालादिस्पर्शे सद्यः शुद्धिर्भवति। अथ च दुर्वाक्यताडितपुरुषस्य पुनः प्रार्थनायां कृतायां बहिःशुद्धिरेव, नान्तःशुद्धिः, अयं शीघ्रकोपीत्याद्यामरणं तिष्ठतीत्यर्थः। तथा विवादाद्यसामर्थ्यात्तदनिष्टचिन्तनजन्यपापस्य तु निवृत्तिर्नास्तीति किमु वक्तव्यं नास्त्येवेत्यर्थः। एवं च संकल्पपूर्वककृतं कर्म यथा बाधकं तथा नान्यत् इति भावः। तदुक्तं वशिष्ठेन—

मनः कृतं कृतं नाम न शरीरकृतं कृतम्।
येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥इति॥

अतस्तादृक्प्रार्थनं युक्तमेवेति भावः। एवं च कायिकस्याज्ञातकृतत्वात्तन्निवृत्तिरङ्गीकार्या। वाचिकमानसयोर्न परिहार इति सिद्धम्।

ननु कायिकनिवृत्त्यङ्गीकारे द्विविधपापमित्येवोचितमिति चेत् सत्यम्। तथाप्यस्मत्सदृशास्वतंत्रजीवानां विशकलितान्तःकरणानां मनोनिग्रहलेशाभावात् कृतेऽपि प्रायश्चित्ते पुनस्तदाचरणसंभवात्, पापत्रैविध्यग्रहणमेव सम्यक्। तस्मात्त्रितयमनिवार्यमि-

त्येव सिद्धम्। श्लोकतात्पर्यं तु अविद्यापरिकल्पितदेहगेहादिष्वेव सत्यत्वग्रहस्तद्ग्रह-गृहीतानामस्मदादीनां प्रायश्चित्तादिना अनिर्वाहात् त्वत्स्मरणलेशबुध्यभावाच्च यथा त्वत्स्मरणं स्यात्तथा कर्तुं त्वत्कृपाकटाक्षलेशसमुद्युक्तो भूयादिति प्रार्थनाबीजम् ॥४॥

पूर्वश्लोके गत्यन्तराभावं प्रदर्श्य अतिकष्टसाध्यपापनिरसनं प्रार्थितम्, इदानीं जन्मैव माभूदिति वदति। तत्र हेतुः— देहसम्बन्धेनैव पुण्यपापोत्पत्तिः, तद्भोगाय देहप्राप्तिः, ततो भोगः, पुनर्देहान्तरारम्भककर्मोत्पत्तिः, पुनर्देहः। एवं संसृतेर्भ्रमिमच्चक्ररूपत्वाज्जन्म माऽस्त्विति तिरस्कारः। एवञ्च जन्माभावे अनेकयोनि-सम्बन्धजन्यक्लेशाभावः स्यादतः प्रार्थयते—

मरुल्लीलालोलल्लहरिलुलिताम्भोजपटल-
स्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कुमरुचि।
सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलम्
जलं ते जङ्घालं मम जननजालं जरयतु ॥५॥

मरुल्लीलालोलल्लहरीति। भो मातः! त्वज्जलं मम जन्मजालं चतुरशीति-लक्षयोन्यटनानेकत्वं जरयतु शिथिलीकरोत्वित्यन्वयः। "ब्रह्मविदाप्नोति परमित्या-दिश्रुत्या जन्मपङ्क्तिनिवारणं तु ब्रह्मज्ञानवतामेवेति सिद्धान्तः।

अतो मत्प्रार्थनया किं तवेति चेत् तव जलदर्शनमेव तादृक्सामर्थ्यं सूचयतीति वदति विशेषणद्वयेन। मरुतां विषयवायूनां या लीलाः मन्दामन्द गमनं तेन लोलन्त्यश्चपला या लहर्यस्ताभिर्लुलितानि कम्पितानि यान्यम्भोजपटलानि कमलसमूहास्तेभ्यः स्खलन् अधःपतन् यः पांसुव्रातः परागसमूहः तस्य च्छुरणं मेलनं तेन विसरन्ती प्रसरणशालिनी या कौङ्कुमी रुचिः केशरकान्तिः सा यस्मिन् तत्तथाभूतं जलमित्यर्थः। अनेनेदं ज्ञापितं कमलकिञ्जल्कमिश्रितत्वादतिसौगन्ध्यमिति प्रवृत्तिहेतुभूतमित्यर्थः। किञ्च सुरस्त्रीवक्षोजेति सुरस्त्रियो देवताः ताश्च स्वर्गीयसुख-सम्भोगनिर्वृताः तासामपि त्वज्जलनिमज्जनादौ प्रवृत्तिरस्तीत्याश्चर्यं प्रयोजनाभावा-दित्यर्थः। वस्तुतः प्रयोजनं विना मन्दस्याप्यप्रवृत्तेः एवमनुमीयते तत्रत्यसुखापेक्षया अधिकं सुखं स्यादेवेति तासां प्रवृत्तिरिति तत्रापि तत्प्रवृत्तेर्निरवधित्वं दर्शयन् वदति– तासां वक्षोजौ स्तनकलशौ ताभ्यां क्षरत् स्रवत् यः अगुरुजम्बालः चन्दनपङ्कः तेन जटिलं मिश्रितमित्यर्थः इदृग्जलविशेषणेनेदं सूचितं प्रतिक्षणं स्नातुमिच्छन्त्यः बहुवारं स्नानमिषेण आलिङ्गन्त्यः स्वशरीरस्थानेकजन्मकारणी-भूतान् पापरेणूनेव क्षालयन्त्यस्तथा चक्रुरिति पर्यवस्यतीत्यर्थः। अत्रैवं "दिव्यस्त्रीकर-चारुचामरमरुत्सम्वीज्यमानः कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः" इति महदुक्तेः तासामत्यन्तप्रवृत्तिरुचितैवेति। एवञ्च यत्र यत्रातिप्रेयस्त्वं तत्र तत्रालिङ्गनेच्छाया निरवधिकत्वं सर्वानुभूतम्। तदुक्तं वाल्मीकीये– यदा रामो

वनवासाय निर्गतस्तदा कौशल्या सीतायास्तदनुगमनं श्रुत्वा अतिप्रेमबद्धा सती अनुधावमाना किं कृतवती तदुक्तम्—

तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत्।
मम रामो वनं याति तं रक्षस्व विशेषतः ॥

इति सम्बोध्य तथा सर्वाः स्त्रियः असत्य एव कष्टङ्गतं पतिं तिरस्कुर्वन्ति– इति प्रदर्श्य त्वं धन्यासीति बोधितवती। एवञ्च श्वश्रूपदेन तयोरालिङ्गनं परस्परं अघटितमिति सूचितम् तस्मादतिप्रेमलक्षणमालिङ्गनमेवेति सिद्धम्। तत्रापि जङ्घालं वेगवत्तरम्। अत्र वेगवत्तरत्वमनुपयुक्तमतोऽर्थान्तरं जङ्घापरिमितमित्यर्थः। तत्र परिमाणार्थे लच् प्रत्ययः तेन जङ्घापरिमितमित्यर्थलाभः। तथा च वातान्दोलितपद्म-परागमिश्रितत्वेनातिसौगन्ध्या घ्राणाय देवता आगच्छन्तीति बहिर्भावः। अन्तर्भावस्तु जङ्घालमित्यस्य जङ्घापरिमितार्थकत्वेन तत्परिमितजले एव तासां प्रवृत्तिर्युज्यते। तत्र हेतुस्ता देवस्त्रियः सर्वाङ्गजलसंसर्गाभिप्रायेण विवस्त्रा भूत्वा जङ्घापरिमितजल एव ता विहरन्तीत्यभिप्रायः स्वीकार्यः। अन्यथा कुचसम्बन्ध्यगुरुजम्बालमिश्रितत्वं जले नोपपद्येत, अतस्तथैवोपपत्तिरङ्गीकार्या। आस्तां तथा चेदृगर्थोपपत्त्युक्त्या स्वकीयजन्मजालनिवृत्तिप्रतिबन्धकीभूतपापजालनिरसनसामर्थ्यं तव जलस्यास्त्येवेति प्रदर्शितम्। विशिष्टपद्यतात्पर्यं तु स्वर्गसुखसम्भोगतत्पराणां देवतानां दुःखाभावेऽपि अधिकसुखापेक्षया प्रवृत्तिरस्ति तदा सुखलेशाभासत्वेन विद्यमानशब्दादिविषयतत्पराणां तदलाभतप्तानामस्मदादीनां का वा गतिरन्या न कापीति मद्वाञ्छासाफल्यमेवेति ॥५॥

ननु नश्वरे जन्मजालं जरयत्विति प्रार्थितं त्वया, तच्च योगिनामप्यसाध्यम्। अतस्तद्विषयकप्रार्थनमयुक्तमिति चेत् शृणु– तत्र केवलं त्वन्माहात्म्यमविदित्वा प्रार्थितमिति न जानीहि अहं तु सर्वं जानामीत्याह– निधानं धर्माणामिति—

निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः।
समाधानं बुद्धेरथ खलुतिरोधानमधियां,
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥५॥

हे गङ्गे ते तव वपुः जलमधियामबुद्धीनां नस्तापं परिहरतु इत्यन्वयः। तत्र धर्माणां निधानं त्वमसि। निधीयते स्थाप्यते यस्मिन्निति निधानम्, अधिकरणमित्यर्थः। नन्वहो चोदनालक्षणोऽर्थो धर्म इति जैमिनिसूत्रम्, वेदप्रणिहितो धर्म इति शुकोक्तिश्च, अतस्तादृशधर्मनिधांन तु वेद एवेति चेत्सत्यम्। तदुपपत्तिश्चैवं कल्प्यते 'स्वधर्माचरणं शक्त्या विधिना च निवर्तनम्' इतिशुकवाक्यं, तत्र शक्त्येति पदप्रयोगस्वारस्यं तु शास्त्रोक्तरीत्या स्वधर्माचरणं न कदापि घटते इति ध्वनितम्, तथैव स्वशक्त्यनुसारेण च तदाचरणं न घटत एवेति सर्वानुभवश्च।

तथा च स्वधर्माचरणाभावे चित्तशुध्यभावः तदभावे च तत्फलीभूत-ज्ञानानुत्पत्तौ स्वस्वरूपसुखस्याप्रसक्तेः दुर्गतिप्रसङ्ग एवापतेत्सर्वेषाम्। वस्तुतो वेद-प्रवृत्तिनिमित्तं किमितिचेत् शृणु—

अविद्यावृतजीवानां सुखमनायासेन यथा स्यात्तथा कर्त्तव्य इत्यभिप्रायेणैव बलाबलतया प्रवृत्तिः श्रुतीनां इत्यवभाति। तत्र श्रुतिः—

"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति,
सितासिते सरिते यत्र सङ्गते तत्रा-
प्लुतासो दिवमुत्पतन्ति ये वै तन्वां ३
विसृजन्त धीरास्ते जनासो अमृतत्वं भजन्ते।"

इति च। एवं चैतच्छ्रुतेर्बलवत्तरत्वमेमेवेति प्रतिभाति। कुत इत्युक्तौ पर्जन्यवत् सर्वजीवसाधारणतरणोपयोगित्वादित्यर्थः। तथा च यावन्निधानत्वोक्तौ मम का वा लज्जेति भावः। तत्रापि केवलं जलावगाहमात्रेण तथा तनुत्यागमात्रेण च यदा अमृतत्वं श्रुत्या प्रतिपादितम्। अतो धर्मनिधानं त्वमस्मन्मते सिद्धम्।

नवमुदां विधानमिति, नवमुदं नूतनहर्षाणां विधानं विधीयतेऽनेन विधानं कारणमित्यर्थः। तथाहि अत्र हि विद्यानन्दादयः जन्मान्तरसहस्रेण अनुभूता एव। अतोऽत्र नवमुदशब्देन अनधिगताबाधितार्थविषयकानन्दो ग्राहयः, अनधिगतः अज्ञातः अबाधितः अविनाशी एतादृशो योऽर्थः आत्मा तद्विषयंक इत्यर्थः।

तत्र विषयाद्यानन्दानां नूतनत्वाभावादित्यर्थः। तत्र ब्रह्मानन्दस्येकत्वा-द्बहुवचनस्य का गतिरित्युक्तौ तादृशानन्दस्य समुद्रवदनन्तत्वमङ्गीकृत्य बहुत्वस्य चारितार्थ्यं ज्ञेयम्। तीर्थानां प्रधानमिति तत्र तीर्थप्रधानत्वं तु पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथेति महदुक्तेः तत्त्वं तेषामेव, अतः अत्र तीर्थशब्देन गुर्वादयो ग्राह्याः, 'निपानागमयोस्तीर्थमृषिमृष्टजले गुरौ' इत्यमरः। तथा च तीर्थशब्दव्यवहृता ये तेषामपि तीर्थत्वेन सेव्यत्वेन वर्तसे, अतस्तीर्थप्रधानत्वं स्रोतसामस्मि जान्हवीति भगवदुक्तेश्च, तादृगर्थेऽस्य सम्यक्त्वं ज्ञयम्।

अमलपरिधानमिति। त्रिजगतः इत्येन स्वर्गमृत्युपाताललोकानां तत्र लोक-वासिनां जनानामिति लक्षणया अर्थः स्वीकार्यः। एवं च तेषाममलपरिधानं निर्मलपरिधानं प्रावरणं रक्षकमिति यावत्।

अत्र अमलत्वविशेषणेनेदं ध्वनितम्। यद्यपि जगद्रक्षकत्वेन विद्यमानानि सन्ध्यावन्दनादिवाजपेयान्तानि तानि तु स्वस्वाधिकारेण साध्वनुष्ठानवतामेव रक्षकाणि, एवं च तेषां तारतम्यानुसारित्वात्समलान्येव। जलरूपेण विराजमानमिदं त्वद्वपुस्तु सुकृतिदुष्कृतिसाधारणानां समानफलदातृ। अतोऽमलपरिधानत्वम्।

बुद्धेः समाधानमिति 'बुद्धिर्निश्चयरूपिणी' ति वार्तिकोक्तेः साभासबुद्धेः कर्तृत्व-निश्यचात् तस्याश्च निश्चयस्त्वयथार्थप्रपञ्च एव अतस्तस्याः समाधानं उपशान्तिर्न कुत्रापि दृष्टा। तदुक्तम्—

धनेषु जीवितव्येषु स्त्रीषु भोजनवस्तुषु।
अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च॥

इति। एवञ्च तदिच्छाया निरवधित्वात् समाधानं त्वमेवेति सिध्यति। पुनर्देहप्राप्त्यभावादित्यर्थः। अधियां तिरोधानमिति, न धीर्येषामिति विग्रहे जीवमात्रस्य बुद्धेः सत्त्वादधियः केऽपि न सन्त्येव, अतः अन्य एवार्थः, अत्र धीशब्देन प्रत्यङ्मुखता सा नास्ति येषां तेषामज्ञानिनामित्यर्थः। तिरोधानं तिरोधीयतेऽनेनेति तिरोधानमाच्छादकं संसृतितापनिवारकमिति यावत्। तदुक्तम् "त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गो वर" मिति महदुक्तेः। श्रियामाधानमिति श्रीशब्देन राजलक्ष्म्याद्यष्टैश्वर्यं तस्याधानं स्थानमित्यर्थः। सर्वश्रियां त्वत्सकाशादेवोत्पत्ते-रितिभावः। तत्र श्रुतिः— एतस्यैवानन्दस्य मात्रामुपजीवन्तीति श्रुतेः। खल्विति जिज्ञासायां। त्वमेव वदेत्यर्थः। तथा चेदृग्विशेषणविशिष्टं त्वद्वपुस्तापमाध्यात्मिका-दित्रितयजन्यम् आध्यात्मिको ज्वरादिः, आधिदैविकः आकस्मिको वज्रपातादिः, आधिभौतिको वृश्चिकव्याघ्रादिजन्यः, एतत्त्रिविधतापं हरत्विति प्रार्थनम्। वस्तुतस्ता-पत्रितयनिवृत्तौ ज्ञानमेव समर्थं जाने। तच्चास्माकमसाध्यं भाति, तदुक्तं भगवता—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥

इति एवञ्चाल्पायुषां त्वमेव गतिरित्याशयः। तत्र प्रमाणं च 'तापत्रयावर-कमौषधमद्वितीयं गाङ्गं पयो भवहरं भज हे मुमुक्षो! इति महदुक्तेः।' विशिष्ट-पद्यतात्पर्यं तु स्वधर्माचरणेऽत्यन्तालस्यवतां नः जन्ममरणप्रवाहो दुर्निवारः। अत-स्त्वदाश्रया वयं तस्मादस्मत्कृतापराधान् तुच्छीकृत्य पुनरपराधा यथा न स्युस्तथा समुद्धरेत्यस्मदभिप्राय इति द्योतितम्, अलमतिविस्तरेण॥६॥

नन्वरे त्वयोक्तं त्वन्माहात्म्यं विदित्वैव प्रार्थितमिति तत्र मद्विषयकज्ञाने जाते दुःखावसर एव कुतो नैवेत्यर्थः। तस्मात्तापनिरसनप्रार्थनावैयर्थ्यमेवेति चेत्सत्यम्। तत्र त्वदीयं वास्तवस्वरूपं जानामीति न तस्यार्थः। किन्तु दृश्यमानानात्मपदार्था-धिष्ठानं त्वमसीति शास्त्रीयं परोक्षज्ञानमस्तीति तदर्थः। कुतः ? ब्रह्मादयोऽपि न विदुः पदवीं यदीयामिति शुकोक्तेः, तत्र का कथा मदीयेति भावः, तत्राप्यास्तां नाम परिपक्वमानसानां तादृशब्रह्मज्ञानविषयिणी वार्ता। तत्र नास्माकमधिकारः। अहं तु संसारतापतप्तोस्मीति प्रार्थयते—

स्फुरत्कामक्रोधप्रबलतरसञ्जातजटिल-
ज्वरज्वालाजालज्वलितवपुषान्नः प्रतिदिनम्।
हरन्तां सन्तापं कमपि मरुदुल्लासलहरी-
च्छटाचञ्चत्पाथः कणसरणयो दिव्यसरितः ॥७॥

स्फुरत्कामक्रोध इति, स्फुरँश्चासौ कामक्रोधश्चेति विग्रहः अत्र क्रोधस्यैव मुख्यत्वात् कामक्रोध इत्यत्र षष्ठी। तदुक्तम्—

क्रोधमूलो मनस्तापः क्रोधः संसारबन्धनम्।
धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं परित्यजेत् ॥

इति, ''कामात्क्रोधोऽभिजायते'' इति गीतोक्तेः। तथा च जन्यजनकभावमाश्रिताविवत्यर्थः, एतेनेदं ध्वनितम् सङ्गात्सञ्जायते काम इति भगवदुक्त्या केवलं देहसम्बधमात्रेण कामादिपरम्परोत्पत्तेः तेषामुत्पत्तिविशिष्टानां निवारणमतिकठिनं इति, अतएव प्रबलतरत्वविशेषणम्। प्रबलरसइति पाठे रस इव रसः प्रबलश्चासौ रसश्चेति, अत्र रस पदेन पारदः तद्वत्सर्वशरीरव्यापीत्यर्थश्च। रसः स्यात् पारदे शृङ्गारादौ वीर्येऽपि जलेऽपि वेति धरणिः। आस्तामीदृशो यः कामक्रोधस्तत्सञ्जातस्तदुत्पन्नो यो जटिलज्वरः विवर्धमानसन्तापाग्निः, इदं मे स्यादिदंमेत्यादिपरोत्कर्षासहनरूपस्तस्य या ज्वालाः परापकारानुकूलाः कृतयस्तासां यज्जालं तादृशकृतिबाहुल्यं तेन ज्वलितं दग्धं भ्रष्टमिति यावत् तादृक्वपुर्येषां तादृशानां नः सन्तापं हर्षासूयादिना इष्टानिष्टादिसम्प्राप्त्यसम्प्राप्तिवैपरीत्यजन्यसन्तापं ते दिव्यसरित्कणसरणयः हरन्तामित्यन्वयः। तत्रापि प्रतिदिनं प्रतिक्षणमित्यपि पर्यवसितोऽर्थः। तदुक्तं शुकेन— शारीरा मानसास्तापा मुहुर्दैहिकभौतिकाः इति, आस्ताम्। ननु कामादीनां कामः संकल्पो विचिकित्सेति श्रुत्या मनोधर्मत्वात्ते जेतुमक्त्या एव, अतो मनोविजये यत्नः कार्य इति चेत् सत्यम्। वस्तुतो विचार्यमाणे सांख्ययोगशास्त्रपरिशीलनतत्पराणामपि यदशेयं तज्जयस्त्वस्माकं शशविषाणतुल्य एव। तदुक्तं वासिष्ठे—

'मनो हि मर्कटप्रायमजेयमिति यत्नतः' इति 'तत्राप्यकरणान्मन्दकरणं श्रेय' इति न्यायेन यत्नः कार्यः। तर्हि बलवत्तरप्रतिबन्धकीभूतदुष्टस्वजनसंसर्गपीडावशात् तदपि कर्तुं न शक्यते। अतएव ईदृशी प्रार्थनेति सूचकं विशेषणं मरुदुल्लासलहरीति। मरुतः वायोर्य उल्लास आनन्दोल्लसनमागमनं तद्धेतुका या लहरीच्छटास्तत्परम्पराः अन्वन्वागमनं ताभिश्चञ्चत् उद्गच्छत् पुनः पुनरूर्ध्वोर्ध्वगमनं तद्युक्तं यत्पाथ उदकं तत्कणा अणुमात्रलेशाः तत्सरणयः पङ्क्तस्तुषारसमूहा नः सन्तापं हरन्तामिति प्रार्थना ज्ञेया। तत्र कमपीत्यस्य उदकमपीत्यर्थः। तदाशयस्त्वेवं मूढजनदृष्ट्या केवलं जलसामान्यवद्भासमानमप्यस्मत्सन्तापहरणसमर्थमेवेति तत्क-

थमित्युक्तौ दिव्यसरित इत्यनेनैव तादृक्सामर्थ्यं स्पष्टं दर्शितम्, अतो वयं त्वदेकशरणाः। आस्ताम्। विशिष्टपद्यतात्पर्यं तु त्वदीयवास्तवस्वरूपज्ञानाभावजनितषड्रिपुकृतबाधानिवृत्तिप्रयोजकास्त्वदम्बुकणा मदीयशरीरान्तर्वर्त्यसूयादिदुष्टदमनायशरा एवेदानीं शरीभूताः सन्तः पानादिद्वारा मद्देहे प्रविशन्त्विति, अलमतिविस्तरेण ॥७॥

नन्वरे त्वदुक्तिविलासेन मूढा मां भजन्तु। ज्ञातॄणां प्रवृत्त्यभावदर्शनात् वृथा प्रलपसीति भाति तदुक्तं भगवता—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येवच सन्तुष्टस्तस्य कार्यं न विद्यते॥

इति। तस्मात्त्वदुक्तिरसङ्गतैव, वस्तुतो ब्रह्मवित् परं व्याप्नोति' 'शोकं तरति चात्मवित्' 'रसो ब्रह्म रसं लब्ध्वाऽऽनन्दीभवति नान्यथे' विद्यारण्योक्तेस्तस्मादितरव्यावृत्तिः स्पष्टैव। अतो ब्रह्मज्ञानमन्तरा मार्गान्तराभाव इति सिद्धम्, तथा च तादृग्विचारं परित्यज्य स्वाभीष्टसिद्धये मामेव किमिति स्तौषि इति चेत् अनन्तकालावधिकृतविचारप्राप्यं वस्तु त्वमेवासीत्याह—

न यत्साक्षाद्वेदैरपि गलितभेदैर्निगदितं,
न यस्मिन् जीवानां प्रसरति मनोवागवसरः।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि! त् त्वं न विषयः॥८॥

न यत्साक्षाद्वेदैरिति, भो सितमकरनिषण्णे! सुरतटिनि! यद् ब्रह्म गलितभेदैर्वेदैः अद्वैतप्रतिपादकैः एकमेवाद्वितीयं नेह नानास्तीत्यादिवाक्यैर्न निगदितम्, इदमित्थमिति न निश्चितमित्यर्थः। यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति' श्रुतिभिस्तथा प्रतिपादनात्, इत्यभिप्रायः। आचार्योक्तिश्चैवं 'तदिदं तादृशमीदृशमेतावत्तदिति च यन्न भवेत् ब्रह्म तदित्यभिधेयं नो चेद्विषयो भवेत्परोक्षं' चेति।

अतएव यस्मिन् जीवानां व्यासादिसदृशानामपि मनोवागवसरः, मनश्च वाक् चेति द्वन्द्वेनैकवद्भावः एवं च तयोरवसरो व्यापारो न प्रसरति न विसर्पतीत्यर्थः। अपि पदप्रयोगस्वारस्यं तु स्वतः प्रमाणीभूतानां वेदानां तत्र प्राथमिकप्रवृत्तेः निश्चेतुं शक्यम्। तत्र प्रमाणं च 'अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः' इति वेदस्तुतौ, अनेन किं बोधितं तासामकुण्ठितगतित्वमिति ताभिरपि यदा प्रत्यक्षेण न निगदितं न स्पष्टीकृतं तदा का वार्ता इतरेषामित्यर्थः। आस्तामिदानीं ब्रह्मप्रतिपत्तिकराणि विशेषणानि निराकारं नित्यमिति निराकारम् आकारशून्यमविनाशीत्यर्थः नित्यं कालत्रयाबाध्यम्, अपाणिपादमिति श्रुतेः, निजमहिमनिर्वासिततमम् इति निजमहिम्ना स्वप्रभावेण निर्वासितं दूरीकृतं

तमो येन तत् स्वप्रकाशमित्यर्थः। अतएव विशुद्धम् अविद्यावृत्तिसम्बन्ध-शून्यमित्यर्थः, एवं चैतावद्विशेषणबोध्यं यद् ब्रह्म तत्त्वमसीति शेषः।

नेतरविषयवत् विषयभूताऽसि केवलमतिकरुणया अस्मदुद्धारार्थमेवास्मिन् समये प्राप्ताऽसि। तत्र दृष्टान्तः—

यथाऽमृतस्य सम्प्राप्तिर्यथा वर्षमवर्षके।
यथान्धस्येक्षणप्राप्तिर्भवदागमनं तथा॥

इति। अर्थे ज्ञात्रज्ञातृसाधारणानां प्रवृत्तिः समुचिता, न केवलं मूढानामेव प्रवृत्तिरिति क्वचिद् बलवदनिष्टप्रददुरदृष्टस्य कस्यचिदप्रवृत्तौ तस्यैव स्वार्थक्षतिर्नाशः, न तव लघुत्वं वस्तुतः, अनन्यगतिकत्वेन कश्चन दिव्यसरित्तीरे निष्प्रयत्नोऽपि तिष्ठेच्चेत्तावन्मात्रेण ब्रह्मविचारजनितस्वंस्वरूपसाक्षात्कारस्तस्य करामलकवत् सुलभ एवेति मदीयोऽभिप्रायः, तत्र महद्वाक्यं—

'त्वदीयं मोक्षार्थे श्रयति जनता जीवनपदम्।' इति तस्मादज्ञानध्वान्तदीपि-कायाः सुरतटिन्याः संसर्गादिमात्रेण मादृशानां सद्गतिरस्त्येवेति मे निश्चयः, एतद्विषये वचनशतसहकारित्वात् न भीतिरस्माकमिति त्वन्नैकट्य्यसम्पादनमिति पद्यतात्पर्यम्॥८॥

ननु त्वदुक्तरीत्या अनन्यगतित्वेन सर्वेषां प्रवृत्तिः कुतो न भवति, वद, यतः इतरेषामप्रवृत्तिः, अतस्त्वं किञ्चिदपि न जानासीति चेत्, इष्टापत्तिमेव मन्ये, अस्तु नाम तथा। मम निश्चयस्त्वेवमित्याह—

यजन्त्येके देवान् कठिनतरसेवाँस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये।
अहन्तु त्वन्नामग्रहणभृतकामस्त्रिपथगे!
जगज्जालं जाने जननि! तृणजालेन सदृशम्॥९॥

यजन्त्येके देवानिति। भो जननि! केचन पुरुषाः कठिनतरसेवान्देवान् यजन्ति कठिनतरा सेवा येषां तान् यजन्ते। इदमन्यदेवताभजनं तु सकामानामेव। तत्र सूतवाक्यम्– 'पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सव' इति। एतेन ते सर्वे मूढा इत्येव ज्ञापितम्। तत्राप्यतिकठिनतरा सेवा तदर्थानुष्ठाने न्यूनाधिकं चेद्विक्षिप्ता भवन्तीति प्रत्यक्षानुभवः, सर्वेषामल्पफलप्रदातृत्वाच्च, असेव्या इत्यर्थः, तथा केचन वितानव्यासक्ता यज्ञविस्तारतत्परास्तेऽपि सकामा एव। तत्र श्रुतिः– ''अपाम सोमममृता अभूमेति। फलेच्छया तेषां प्रवृत्तिः तत्र क्लेशभूरित्वादल्पफलप्रदत्वाच्च विफलत्वम्, अतस्तत्कर्तारोऽपि तथैव ज्ञेया इत्यर्थः। तत्र केचन यमनियमरताः, तयोरप्यतिकाठिन्यमेव। तत्र यमाः– अहिंसादयः नियमाः शौचाचारादयः, तत्कर्तृणामपि दुःखभूयस्त्वमेव। तदुक्तं शिवेन—

'न जितेन्द्रियता लोके न वैराग्यं वृषोऽपि न' इति। एवं च जितेन्द्रियतां विना न किञ्चित् भवितुमर्हति। सा च दुःसाध्येति सर्वैरनुभूयत एव इत्यर्थः।

'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः' इति भगवदुक्तेश्च यथा बह्व्यः सपत्न्यः स्वपुरुषं यथा लुनन्ति तद्वत्। ननु अल्पज्ञानां मा भवतु, विदुषां तु भवितुमर्हतीति—

मात्रा स्वस्रा दुहित्रा वा नो विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥

इत्यनेन दुर्लभत्वमेव प्रतिपादितम्। तथाप्यन्यदेवतायजने केषाञ्चिदभिनिवेशश्चेद् यजन्तु नाम तन्निन्दास्तुतौ नास्माकं प्रयोजनं किन्तु मदीया प्रीतिस्तादृक्कर्मसु न प्रवर्तत इत्यर्थः, अहं तु त्वन्नामग्रहणभृतकामः त्वन्नाममात्रेण पूर्णकाम इत्यर्थः तदुक्तं ब्रह्मोत्तरखण्डे—

अशक्तः क्वचिदुत्स्रष्टुं प्रायो विषयवासनाः।
मुक्तिमिच्छन्स देहान्ते तेषां धर्मोऽयमीरितः ॥

इति महर्ष्युक्तेस्तत्र त्रिपथगे इति सम्बोधनेनातिकरुणावतीति सूचितम्। हे भगवति ! अहं तु त्वन्नामबलेन जगज्जालं अनन्तब्रह्माण्डैश्वर्यमपि तृणजालसदृशं जाने मन्ये। एवं च त्वदतिरिक्तस्याप्रयोजकत्वं ज्ञात्वा त्वत्तीरे विहरामि। तस्मादिति करुणार्द्रदृष्ट्या "अजा सिंहप्रसादेन ह्यारूढा गजमस्तके इति न्यायवत् मद्गुणान् पर्वतीकृत्य दोषान् तृणीकृत्य समुद्धरेति श्लोकतात्पर्यम्।

**तत्रैवमस्ति–**

सतां शरणमासाद्य पुनर्नायाति दुर्गतिम्।
यो वा को वा महापापी दयासारा हि साधवः ॥
इति अलमतिविस्तरेण ॥९॥

पूर्वश्लोके केवलं शास्त्रदृष्ट्या सर्वे पुरुषार्थास्तृणतुल्या इत्युक्तम्। इदानीं नामग्रहणमात्रेण पूर्णकामकत्वं मन्ये। कया रीत्या ? तत्प्रदर्शयति—

स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि
प्रगीतं यत्पापं झटिति भवतापं च हरति।
इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं
मम प्राणप्रान्ते वदनकमलान्तर्विलसतु ॥१०॥

स्मृतं सद्यः स्वान्तमिति। भो मातः ! त्वन्नाम स्मृतं चेत् सद्यः तत्क्षणे स्वान्तं मनस्तत् शान्तं विरचयति, रागद्वेषादिरहितं करोतीत्यर्थः। तथाहि– इह

संसारे दुःखबाहुल्यात् पुण्यसञ्चयसम्पादनहेतुभूतद्रव्याद्यलाभात् क्वचित्तापोत्पत्तौ तत्समकाले इतः परं गङ्गैव शरणमस्माकमिति निश्चित्य त्वत्तीरमाश्रित्य यथासुखं वसन्ति इति प्रत्यक्षानुभवः। तस्मादन्तःकरणशान्तिर्जातैवेति सिद्धम्। अथ च सकृदेकवारं प्रगीतं सत् प्रकर्षेण गीतं गङ्गेति प्लुतपूर्वमाह्वानं तदेव प्रगीतं तच्च पापं झटिति हरतीति सर्वानुभवः। तथाहि कश्चन पुरुषः ऋणग्रस्तः क्षणिकविरागतो गुरोः सकाशान्मन्त्रं गृह्णाति ततश्च भिक्षाशी सन् विहरति तदा पापाभिन्नमृणं तं पुरुषं नाभिभवति न बाधत इत्यर्थः। अतः सद्यः पापनिवृत्तिर्जातैव। तथा सकृदित्यस्य प्रेषोच्चारणमिति यावत्। आस्ताम्। चकारात् भवतापं तस्य कोऽर्थः, भवे तापो भवताप इति विग्रहे भवः शिवः तद्विषयको यस्तापः तत्प्राप्त्य-भावजन्यः। हे परमेश्वर! मदीया गतिः कथमित्यादि सर्वतापं हरन्ति, इति तदर्थः, तत्र हेतुः भवतापः संसारसम्बन्धी आध्यात्मिकादिरेव तन्निवृत्तिर्नैव दृश्यते। हरन्तीत्यस्य वर्तमानार्थकत्वात्स एवार्थः समीचीनः। तत्र प्रमाणम्—

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

तस्मादिदं गङ्गेतिपदं श्रवणरमणीयं योग्यं खलु, खल्विति जिज्ञासाऽत्र, अत इदं याचे मम प्राणप्रान्ते प्राणोत्क्रमणसमये तन्नाम वदनकमलान्तर्मुखसरोजमध्य इत्यर्थः। विलसतु विलासं करोतु, नामोच्चारणं भूयात्, इत्यर्थः। अतएव ऋषिभिरेवं प्रार्थितं तच्च स्खलनक्षतपतनविजृम्भणादिदुःखविवशानां नः स्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्त्विति। पद्यतात्पर्यं तु कर्मोपासनाज्ञानवैराग्याद्यन्यतमसम्पादनासमर्थानां तारकं नामैव, तदुक्तम्, हरेर्नामैव नामैव नामैव मम जीवनम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथेति महद्भिरिवरव्यवच्छेदः सूचितः। अतो मत्प्रार्थना सङ्गतेति भावः ॥१०॥

ननु त्वयोक्तं मरणसमये त्वन्नाम वदनकमले वसत्विति तत्र मन्नाम्नः प्रभावं त्वं जानासि चेत् तव किमनुभव इति चेत् शृणु— त्वन्नाममाहात्म्यं तु दूरतस्तिष्ठतु। तस्य त्वाभ्यन्तरप्रयत्नसापेक्षत्वात् तदुक्तम्—

अहो बत श्वपचोऽतो गरीयान्, यज्जिह्वाग्रे वर्तते नाम तुभ्यम्।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या, ब्रह्मानूचुर्नाम गृणन्ति ते वै।

इति शुकोक्तेः तस्यौत्कृष्ट्यमस्त्येव, इदमतिचित्रं कश्चन अत्रागत्य त्वां स्पृशन् गतश्चेदन्यान् पवित्रीकर्त्तु समर्थो भवतीत्याह—

अलभ्यं सौरभ्यं हरति नियतं यः सुमनसां
क्षणादेवं प्राणानपि विरहशस्त्रक्षतहृदाम् ।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्-
पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥११॥

अलभ्यं सौरभ्यमिति, सहजगतिमान् नीरूपोऽयं वायुः स्वशरीरैकदेशेन त्वज्जलं संस्पृश्य गच्छति त्रिलोकीं पुनाति च, तच्चरितं त्वेवं दूरदेशस्थपुष्पाणामलभ्यं सौरभ्यं, सुरभेर्भाव इति भावे ष्यञ्, उत्कृष्टमित्यर्थः। हरति नित्यं स्वीकरोतीत्यर्थः, तथा विरहशस्त्रक्षतहृदां प्राप्तविषयविरह एव शस्त्रं तेन क्षतं छिन्नं हृद् येषां तत्प्राणाँश्च हरति प्राणधर्मान् क्षुत्तृषौ हरतीति तदर्थः, प्राणहरणस्य कुत्राप्यदृष्टत्वादित्यर्थः। तथा च स्वयं विषयलम्पटोऽन्यान्विषयलम्पटीकरोति। दुष्ट इत्यर्थः। तथापि त्वदीयानां लीलाचलितलहरीणां लीलाभिश्चलिताः चञ्चला या लहर्यस्तासां व्यतिकरात् संसर्गात् त्रिभुवनं त्रिलोकस्य जनान्पुनातीत्यर्थः। 'वायु; पूतः पवित्रेणेति' श्रुतेः। एवं चेदृग्बुद्धिकृतपूर्वस्यानायासकृतस्य यदेदृक्प्रभावः, तदा त्वन्नामग्रहणप्रभावकथने कः समर्थो भवति ? न कोपीत्याशयः ॥११॥

ननु वायोर्देवतात्वेन परिगणितत्वात्, अस्तु नाम तादृक्सामर्थ्यं तत्र वृथाप्रलापेन तव किं फलमिति चेत् शृणु, यज्ज्योतिष्टोमादिलभ्यं फलत्वेन कल्पितं स्वर्गसुखं तदपि त्वत्तीरवासिनस्तुच्छं मन्यन्ते, पश्येत्याह—

यदन्तः खेलन्तो बहलतरसन्तोषभरिता
न काका नाकाधीश्वरनगरसाकांक्षमनसः।
निवासाल्लोकानां जनिमरणशोकापहरणं
तदेतत्ते तीरं श्रमशमनधीरं भवतु नः ॥१२॥

यदन्तः खेलन्त इति, यस्य तीरस्य अन्तः मध्ये क्रीडन्तः काकाः करटाः अनेन ते पक्षिजातावतिधूर्ता इति ज्ञापितं सर्वभक्षाश्च, 'किं न भक्षन्ति वायसाः' इत्यादिना अतिचपला इत्यर्थः। एतेन किं ध्वनितं— वह्निमत एतेषां त्याज्यांश एव नास्तीति, तथापि नाकाधीश्वर इन्द्रस्तस्य यन्नगरं तद्विषयेऽपि साकांक्षमनसः स्पृहावन्तो भवन्तीत्यर्थः। कुत इत्युक्तौ तत्र हेतुर्बहलतर इति बहलतरश्चासौ सन्तोषश्च तेन भरिताः पूर्णाः सन्त इत्यर्थः।

नन्वत्र को वा सन्तोष इति चेत् अस्यां कर्मभूमौ तीरवासमात्रेण यत् सुखं तदन्यस्य तु दुर्लभमेव तच्चास्माभिरदृष्टवशात् सम्प्राप्तमिति स्वर्गतिरस्काराशयः। तदुक्तम् 'श्रुतं च दृष्टवद्दुष्टा श्रद्धासूयात्ययव्ययैरिति। ननु काकरवस्यास्पष्टाक्षरत्वात् तदुक्तिज्ञानमन्तरा त्वया कथं ज्ञातमिन्द्रसाम्राज्यं न वाञ्छतीति चेत् इदं गङ्गापुराणे स्पष्टम्। तथाहि—

इन्द्रो विमानमारुह्य विचरन् तीरगान्पथि।
काकान् दृष्ट्वा समाहूय वाक्यं चेदमुवाच ह ॥
हे काकाः! स्वर्गमायान्तु विहारार्थं समुद्यताः।
इति श्रुत्वा तदा वाक्यं नायाम इति तेऽवदन् ॥

इति, अतो मया ज्ञातमित्यर्थः। तथा च ईदृशदुष्टपक्षिणामपि त्वत्तीरे वासलोभो यदा तदा मादृशानां साध्वसाधुपरिज्ञानवतां वासलोभश्चेत् को वा दोषो न कोपीत्यर्थः। ननु मत्तीरवासेच्छावतां का वा प्राप्तिरिति चेत्? जनिमरण-शोकापहरणमिति जनिरुत्पत्तिः तत्काले दुःखं गर्भे भवति तदुक्तं रामायणे शिवगीतायां च—

जन्म कर्म स्मरन् गर्भे वक्तुं रोदितुमेव वा।
न शक्नोति क्वचित् तत्र विचारं च करोति सः ॥

इति। तथा मरणकालेऽपि शोकः कथं कलत्रपुत्रादीन् परित्यज्य गच्छामि मद्विना कथमेतेषां निर्वाह इति गतासूनगतासूँश्च शोचति, एवं च तन्निवर्तकं यत् तदेवैक्ते त्वत्सम्बन्धितीरं श्रमशमनेधीरं श्रमशमने समर्थं भवतु, इत्यस्याभिप्रायः जन्ममरणशोकापहारकत्वं त्वयि स्वभावसिद्धमेव तद्विषये नास्माकं प्रार्थना, किन्तु जनिमरणशोकनिवृत्तये उपायान्तरप्रयत्नजन्यपरिश्रमोपशामकं भवत्विति मनोभिप्रायः न इदानीं श्रमशमनधीरं भवत्वित्याशयः। अत्रैवमस्ति— यस्य कस्यचित् पदार्थस्य अनायासेन प्राप्तौ सत्यामत्यायासप्रतिपत्त्यर्थप्रवृत्ति र्न कुत्रापि इति न्यायात् मद्वाचां साफल्यमेव ॥१२॥

ननु मत्तीरवासमात्रेण ईदृशपक्षिणामप्यतिसुखमस्तीति ब्रूषे, तत् कथं घटत इत्याश्चर्यं भाति, कुतः? सत्कर्मानुष्ठानतत्परस्य सुखं कदाचिद् भवतु। तत्र प्रमाणं च- 'कर्मणाऽपितृलोको विद्यया देवलोक इति श्रुतेः। पक्षिणां तु तदभावात् इति चेच्छृणु- त्वच्छक्तेर्विलक्षणत्वादिदमतिविचित्रं पश्येत्याह—

प्रभाते स्नान्तीनां नृपतिरमणीनां कुचतटी-
गतो यावन्मातर्मिलति तव तोयैर्मृगमदः।
मृगास्तावद्वैमानिकशतसहस्रैः परिवृता
विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ॥१३॥

प्रभाते स्नान्तीनामिति, हे मातः! प्रातः काले स्नानं कुर्वतीनां राज-सुन्दरीणां कुचतटीगतः कुचप्रान्तलग्नो मृगमदः कस्तूरिका यावत् यस्मिन्नेव काले त्वत्तोयैर्मिलति। सहयुक्ते तृतीया सम्बन्धो भवति। तस्मिन्नेव काले ते मृगाः वैमानिकशतसहस्रैः विमानैः सञ्चारिणो देवास्तेषां यच्छतसहस्राणि तैः परिवृताः विमलवपुषो भूत्वा नन्दनवनं विशन्ति इत्यन्वयः।

तत्र प्रभाते स्नानमेव राजसुन्दरीणां सम्भवति। असूर्यम्पश्या राजदाराः इत्यनेन नृपतिरमणीदर्शनमन्यसुदुर्लभं ज्ञेयम्, अतः कादाचित्कं तासां प्रभातस्नानमिति योजना, तत्र नृपत्तिरमणीत्वविशेषणेन ब्राह्मणादिस्त्रीकुचतटीगतमृगमदासम्भवः सूचितः। स्वच्छन्दमित्यनेन देवा एव तदाज्ञया चरन्तीति सूचितम्। ननु केवलं जलेन साकं मृगमदस्य सम्बन्धः, तावन्मात्रेण यस्मिन्कस्मिँश्चित्काले मृतानां मृगाणां देवतुल्यं सुखं वदसि तत्कथं घटत इति चेत्, शृणु— यथा प्रचण्डमार्तण्डकिरणसम्बन्धः क्क तथा गृहनिष्ठतृणाच्छादिताम्रफलानि च क्क, तयोः साक्षात्सम्बन्धस्तु नैव किन्तु परम्परासम्बन्धस्तथापि फलानां रूपान्तरं रसान्तरञ्चोत्पद्यते, इत्यत्राविवाद एव। तथा हरिद्रासुधयोः संबन्धसमकाल एव रक्तरूपोत्पत्तिर्भवति, तथा हरिद्रानवनीतसम्बन्धवत् कुतो न भवतीत्युक्तौ तत्तद्वस्तुशक्तेर्विलक्षणत्वमङ्गीकरणीयमावश्यकमेव। एवमेव श्रीविष्णोर्वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वकटाहाण्डविवरेण प्रविष्टाया ईदृग्विलक्षणशक्तिरस्तु तत्र का वा हानिस्त्वं वद। तत्र प्रमाणं च—

न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकं च विद्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥

इति श्रुतेः। तथा च तज्जलस्नातृणामङ्गलग्नभस्मादिक्षालनेनापि तत्तत्कुलानामपि स्वर्गप्राप्तिर्भविष्यतीत्यत्र विचारः कः? एवञ्च त्वत्तीरवासमात्रेण सकलमनोरथप्राप्तिरिति वाल्मीकिना प्रदर्शितं। त्वत्तीरे तरुकोटरातरगतो गङ्गे! विहङ्गो वरं त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः। इति ऋषिप्रोक्तेः। एतद्विषये बहुतरग्रन्थेषु तदभिप्रायकाणि वचनानि बहूनि सन्ति, अतो मदुक्तिः सङ्गतैवेति भावः। विशिष्टपद्यतात्पर्यं तु मृगपक्षिनदीनदयोनिगतानां निन्दास्पदत्वमेव। तथापि तादृशानां त्वत्तीरवासमात्रेण सत्कर्माचरणतत्पराणामपि यद्दुर्लभं सुखं तत्साहजिकं तेषामिति महद्भिः प्रतिपादितं तदाऽस्माकं भविष्यति न वेति शङ्का दूरतोपास्तेति मनोऽभिप्रायः॥१३॥

नन्वरे! मन्महिमा त्वयाऽतिशयेन वर्णितः खलु। इतः परं यथेच्छसि तथा वर्णय नाहं किञ्चिद्ब्रवीमीति चेत्, एवं तिरस्कारं मा कुरु त्वन्महिमानं त्वमेव न जानासीत्याह—

नृणामीक्षामात्रादपि परिहरन्त्या भवभयं
शिवायास्ते मूर्तेः क इह महिमानं निगदतु।
अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकण्ठः शिरसि नियतं धारयति याम्॥१४॥

नृणामीक्षामात्रादिति, हे दीनोद्धारिणि ! त्वन्महिमानं इह जगति को निगदतु, निगदेत्। लिङर्थे लोट्, न कोऽपीत्यर्थः। कुत इत्युक्तौ रामकृष्णादयोऽपि दीनोद्धारका एव तत्र न संशयः। ते तु बहुकालानुष्ठानेन तारकाः। कथं वसुदेवदेवक्योः श्रीकृष्णो भयं ददौ– 'युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत्। चिन्तयन्तौ कृतस्नेहौ यास्यथो मद्गतिं परामिति श्रीकृष्णोक्तेः, त्वं तु ईक्षामात्राद् भवभयं संसृतिभयं परिहरन्ती, अतएव शिवायाः कल्याणकर्त्र्यास्ते तव मूर्तेः महिमवर्णने कः समर्थ इत्युक्तम्। नन्ववलोकमात्रेण भवभयपरिहरणसामर्थ्यमस्तीति कथं ज्ञातमिति चेत् मयाऽनुमीयते। कथम् ? शितिकण्ठः शिवः स्वशिरसि गङ्गां किमिति धारयतीति विचारे कृते इतराङ्गेषु कराङ्गुष्ठनखपृष्ठादिष्वधृत्वा मूर्धसु धारणे प्रयोजनं त्वति श्रेष्ठत्वेनैवेति सिध्यति, कथमित्युक्तौ अमर्षम्लाना क्रोधखिन्ना या गिरिभूः हिमाचलपुत्री अनेन दृषद्हृदया पाषाणप्रायं हृद् यस्या इति सूचितम् एतेनातिधैर्यवत्यपि ग्लानिं प्राप्तवती। को हेतुरिति चेत् ? इयं का मत्स्वामिमस्तके समारूढेति सेर्ष्यमवलोक्य शिवं प्रत्याह– भगवन् ? अन्यस्त्रीलम्पटत्वं महतां नोचितमिति स्वरोषं प्रदर्शितिवती। तथापि न मेने। एवञ्च या अर्धशरीररूपा, अतस्तस्या अनुसरणमावश्यकम्, तथापि शिवस्तस्या अनुरोधं संकोचं विहाय यतः स्वमस्तके गङ्गां नियतं दधार अतएव श्रैष्ठ्यं भवति। तत्र प्रमाणान्तरं तदुक्तं शैवागमे—

'यामिष्टमहिषीत्वेन दधार शिरसा शिवः।'

इति वचनाच्च श्रेष्ठत्वमित्यर्थः। ननु मत्सपत्न्याः पार्वत्या अप्याराधने न तादृशफलं स्यादेवेति चेत्सत्यम्, किन्तु चिरकालेनैव सिद्धिरिति प्रतिभाति तदुक्तं वातुलशुद्धतन्त्रे पार्वतीवाक्यम्—

यदेव रूपं मे तात मनसो गोचरं तव।
तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव॥

चिरकालसेवाप्रतिपादिता, त्वं तु साधुवल्लोकहितकारिणी। साधुत्वं च परदुःखप्रहाणेच्छावत्वमेव, तच्च त्वयि साहजिकम्, अम्ब ! त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलमिति महदुक्तेः, तथा च तव विलक्षणगुणं वीक्ष्यैव शिरोभूषणत्वेन स्वीकृताऽसि लोकेऽप्यतिशयितगुणवतो हीरकादेर्मस्तके धारणदर्शनात् किं बहुना क्रीडार्थं पालितशुकहरिणवानरादेरपि धारणे आनन्दोद्गारो जायते। तदा किमु वक्तव्यं त्वयि प्रीतिरधिका शिवस्येति सर्वं सङ्गतमेवेति भावः॥१४॥

पूर्वश्लोके त्वन्महिमवर्णने कः समर्थ इत्युक्तम्। इदानीं तु त्वत्सम्मतैव कस्य चिन्तास्तीत्याह श्लोकैः महादानैर्ध्यानैरिति। भो सर्वेश्वरि ! यत्सर्वैरलभ्यं विष्णुपदं प्रतिपादितमस्ति तदितरैरचिन्त्यं तत्र श्रुतिः– 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति सूरयो विवेकिनस्त एव पश्यन्ति इतरव्यवच्छेदादन्येषां

दुर्लभं ज्ञापितम्। तत्र तत्साधनत्वेन महादानादीनि उक्तानि तादृशयज्ञदानाध्ययनादिभिरप्यलभ्यमेव। कुतः? तत्तत्कर्मफलेच्छावासनाक्रान्तत्वादित्यर्थः, तदनुभवस्त्वेवम्। दाने यशइच्छा प्रतिबन्धिका, धर्मः क्षरति कीर्तनात्' इति वचनात्- तथा यज्ञे स्वर्गीयसुखेच्छा लोकेऽतिविशिष्ट इति श्रवणेच्छा च, तथा ध्यानेऽपि अहं तपस्वी सर्ववन्द्यो भूयासमित्यादिना दम्भे पर्यवसानात्। दानादिभिरलभ्यमित्युक्तम्। वस्तुतः पुनर्जन्म माभूत् इतिबुद्धेर्दुर्लभतैवेति सूचिता। तथैव सुविमलतपोराशिभिरपि अलभ्यमेव, तथाहि सुष्ठ विमलं सुविमलम् अत्र मलशब्देन आणवं कार्मणं मायिकमिति त्रिविधं तत्राणुर्जीवः तस्याहं जीवो न ब्रह्मेति अनादिजीवतापादकं आणवं तथा अनादिकर्मफलवासनारूपं कार्मणम्, तथा अस्ति प्रकाशत इति व्यवहारबाधकं, नास्ति न भातीति व्यवहारप्रयोजकं मायिकमिति मलत्रयम्। तत्कार्याणि च मारणजारणस्तम्भनवशीकरणानि तानि शुभेप्सुभिस्त्याज्यान्येव, एवञ्चैतत्त्रितयापाकरणे प्रवृत्तेऽपि सन्, तादृशतपोराशेरतिक्लेशवहत्वान्नैव घटते इत्यर्थः, कदाचिददतिनिश्चयवतः सम्भवेऽपि अहं ज्ञानीति रूढगर्वः पतति। अतएवाचिन्त्यं विष्णुपदं तच्चेश्वरप्रसादेन विना न प्राप्नोति। अतएव घोराभिः सुदुःखसाध्यैः, इति विशेषणं ज्ञेयम्, अलभ्यमेवेति भासते। तथा चेदृगचिन्त्यं विष्णुपदमखिलजनानां साधारणतया सर्वप्राणिमात्रस्य ददाना दात्री त्वमसि। अतः इह ब्रह्माण्डे केन वस्तुना तुलनीयाऽसि। न केनापीत्यर्थः? कथयेत्यस्य कोऽर्थः? त्वं सर्वज्ञाऽसि, सकलवेदशास्त्रार्थविचारकुशलाऽसि त्वद्व्यतिरिक्ताः सर्वे वाक्यानामनेकत्वाद् विमोहिता भवन्ति।

**तदुक्तं गङ्गामाहात्म्ये—**

वक्ताऽपि भक्तिमान् विप्रो वेदशास्त्रार्थसारवित्।
दृष्टान्तकुशलो धीरो विरक्तश्च जितेन्द्रियः ।।इति।।

एवञ्चेदृशवक्तुर्दौर्लभ्यमेवेति सूचितम्, तथा च जनानां स्वकर्मसूत्रग्रथितत्वात् सुखदुःखसाक्षात्कारस्यानिवार्यत्वमेव, तादृशदुष्परिहार्यप्रारब्धस्याप्यन्यथाकरणसमर्था काऽन्येति विचारय, आस्ताम्, अहं तु त्वदन्यं नैव जाने। मम तु साध्वसाधुवाक्यपरिज्ञानाभावात् सर्वतो रक्षणीय इति प्रार्थनाबीजम्।।१५।।

ननु त्वयोक्तम् अखिलजनोद्धर्त्रीति तत्र किं मम तारतम्यज्ञानं नास्तीति वदसीति चेत् नेत्याह—

स्वभावस्वच्छानां सहजशिशिराणामयमपा-
मपारस्ते मातर्जगति महिमा कोऽपि जयति।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतो
समासाद्याद्याऽपि स्फुटपुलकसान्द्राः सगरजाः ।।१६।।

स्वभावस्वच्छानामिति, भो मातः स्वभावस्वच्छानां तव अपामुदकानां महिमा जगति कोऽप्यनिर्वचनीयोऽस्ति इत्यन्वयः।

तत्र स्वभावस्वच्छत्वन्तु जले शुक्लरूपत्वमस्त्येव, तत्र स्वभावस्वच्छत्वं किन्तु मलसंसर्गवशान्मलिनोऽपि लोकपावित्र्यकरणसमर्थत्वमेव स्वच्छत्वं तथा सहजशिशिरत्वं सहजशीतलत्वं तत्र शीते जले इति शास्त्रोक्तशीतत्वं न, कुतः ? सर्वजलेषु विद्यमानत्वात् शिशिरत्वमित्यस्य शीतत्वमर्थः, तथा च केवलं दर्शनायोग्यस्यातिपापिनोऽप्यागमने क्रोधलेशानुदयस्त्वय्येवास्ति तदुक्तं माहात्म्ये—

माघमासे रटन्त्यापः किंञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥

इत्युक्तत्वात्, सहजशिशिरत्वमीदृक् त्वय्येवास्तीति नान्यत्रेत्यर्थः। अयमित्यनेन इदानीन्तनजनैः श्लाघ्यमानोऽपारमहिमाऽनन्तमहिमा अविनाशीति तदर्थः। कथं सगरजाः सगरपुत्रा इत्यनेन कपिलब्राह्मणशापेन निर्दग्धा अपीत्यर्थः। अतएवानुद्धार्याः। प्रमाणं च—

न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च।
नारकाश्चापि गृह्णन्ति यां यां योनिमसौ गतः ॥

इति शुकोक्तेः। ईदृशा अपि त्वदीयजलसम्पर्कमात्रेण द्युतलं स्वर्लोकं समासाद्य स्फुटपुलकसान्द्राः स्फुटबहिर्निर्गतो यो रोमाञ्चः पुलकस्तेन सान्द्रा व्याप्ता अद्यापि वर्तन्त एवेति जना गायन्तीत्यन्वयः। अत्र जन पदमध्याहार्यम्। कैश्चिदेवं लप्यते— सगरात्मजाः दिवं प्राप्य हर्षेण गायन्तः सन्तो वर्तन्त इति। तत्र ते गायन्तीति कथने ग्रन्थकर्तुः प्रयोजनाभावादित्यर्थः। तथा चेदृशानिवार्यपातकिनामपि सदा स्वर्गसुखप्रदात्र्यसि। तदा किमु वक्तव्यं त्वज्जलस्नानपानादिना पापिनः समुद्धृता इति।

इदन्तु तव, तारतम्यज्ञानाभावेनोद्धारं करोषीति न, किन्तु स्वभावस्वच्छानां करुणासमुद्ररूपत्वाद् दीनोद्धरणं समुचितमेवेति मत्वेति भावः। अतस्त्वत्तीरे पतितोऽस्मि, आगन्तुकानामन्ते निवेश इति, यावन्मां समुद्धरेत्यर्थः। पद्यतात्पर्यं तु महदपराधोपशममिच्छतामतिशान्ता एव शरणपात्रम् अतस्तच्चरणसेवा नैव त्याज्येति स्वान्ताशय इति ॥१६॥

पूर्वश्लोके सगरात्मजा ब्रह्मदण्डदग्धास्तेऽपि त्वयोद्धृता इत्याश्चर्यं मत्वा प्रतिपादितं तत्र युक्तं मदीयं वाक्यम्, कुतः ? पतितापतितसाधारणोद्धारतत्पराणामिदं कियत्, तस्मादहमेवादीर्घदृष्टिः। त्वया सोढव्योऽपराधः, अहो किं वक्तव्यमित्याह—

विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै
रवाच्यानि ब्रात्यैः सपुलकमपास्यानि पिशुनैः।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदापि श्रान्ता न त्वमिव जननि त्वं विजयसे ॥१७॥

विनिन्द्यान्युन्मत्तैरिति, हे जननि! उन्मत्तैरुत्पथगामिभिः निन्दकैरिति यावत् तैर्विनिन्द्यानि पितृताडनादीनि, पतितैरपि परिहार्याणि त्याज्यानि ब्रह्महननादीनि, तथा ब्रात्यैरसंस्कृतैरुपनयनादिरहितैश्चाण्डालैरप्यवाच्यानि अगम्यागमनादीनि तथा पिशुनैः खलैरपि। अपास्तुं त्यक्तुं योग्यानि सपुलकं रोमाञ्चितं यथा तथा स्वमातृजारसंकथनादीनि एवं चेदृशपापकर्मरतानां मुखानि तु केवलं विकारोपेत-कटाक्षव्यापारैरप्यनवलोकनीयानि, इतरेषां त्वं तु तादृशानामप्येनांसि कलुषौघं हरन्ती सती अनवरतमजस्रं कदापि श्रान्ता श्रमयुक्ता न भवसि, अतः कारणात् त्वमिव त्वमेव विजयसे, सर्वोत्कर्षेण वर्तसे। अत्र यदि त्वत्तुल्यमुपमानं स्यात्तदा त्वमपि उपमेया स्याः। अत्रानन्वयालङ्कारः, तदुक्तं चन्द्रालोके—

'उपमानोपमयेत्वं यदेकस्यैव वस्तुन' इति लक्षणात्। आस्ताम्। अतः प्रार्थितं— मदीयोपराधः सोढब्यः क्षन्तव्य इति, विशिष्टपद्यतात्पर्यं तु त्वदीयं शीलमपतितं तिरस्कृत्य पतितपापनिरसनं कर्तुं सदा पापिनं मृगयत इति सिद्ध्यति, सर्वत्र पाप्युद्धारश्रवणादिति ॥१७॥

नन्वरे किमहं परिमितसामर्थ्यवती! अतः न श्रान्तेति ब्रूष इति चेन्न, किन्तु निरवधिकरुणावारिधेस्तव गुणगणैकदेशकथने प्रवृत्तः सन् तथोक्तं वस्तु-तस्त्वद्गुणा निर्वक्तुमशक्या एवेत्याह—

विलीनो वै वैवस्वतनगरकोलाहलभरो
गता दूता दूरं क्वचिदपि परेतान्मृगयितुम्।
विमानानां व्रातो विदलयति वीथीर्दिविषदां
कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥१८॥

विलीनो वै वैवस्वत इति, भो महाराज्ञि! यत्कालमारभ्य ते तव कल्याणकत्रीकथा भूमण्डले विस्तृता तदारभ्य संयमिन्यां यमपुर्यां कोलाहलभरः कलकलध्वनिः एनं बन्धय बन्धय मारय मारय त्रोटय त्रोटयेति स च विलीन एव एतेन किं बोधितम्? ईश्वरकल्पितवृत्तीनामविविक्तपरव्यथानां मशकमत्कुणा-दीनामपि हनने रौरव प्राप्तिरिति, एवञ्च यावन्नरकास्ते सर्वेषां तारतम्येन भवन्तीति सिद्धान्तः, स च त्वदीयाम्भसि परेतानां मृतानां तस्य श्रवणमेव नास्ति किं वर्णनीयमत्र। तत्र यमवाक्यम्—

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम्।
कृष्णाय नो नमति यच्छिर एकदाऽपि,
ताननयध्वमसतोऽकृतविष्णुकृत्यानिति ॥

अतो हेतुत्वेनाद्भुतं कथयति क्वचिद्यमदूताः परेतान् मृतान्मृगयितुमन्वेष्टुं गताः, तदा को वा मार्ग इति भ्रान्ता अभूवन्, कुत इत्युक्तौ दिविषदां देवानां विमानव्रातः समूहो वीथीर्मार्गान् विदलयति मार्गो निरुद्ध आसीदिति भावः। नन्वन्यमार्गेण कुतो न गता इति चेत्? ते त्वत्कल्याणी यदवधि कीर्तिर्मही-मण्डलमगात् अगमत् तत्र तत्र मार्गाभाव आसीदित्यर्थः। अतएव त्वद्गुणैक-देशकथने प्रवृत्तोऽस्मीति पूर्वं प्रार्थितम्॥१८॥

नन्वेतावानाग्रहः किमिति तव, अन्ये मत्सदृशाः किं न सन्तीति चेत्, नेति को ब्रूते। तीर्थानि तु बहूनि सन्ति तथाप्यस्मत्सदृशानामुद्धरणे कस्यापि सामर्थ्यं नेति दृश्यत इत्याह—

कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरानम्ब! त्रातुं जगति खलु जागर्ति भवती॥१९॥

कृतक्षुद्रैनस्कानिति, कृतं क्षुद्रमल्पमतिशयितं पलाण्डुभक्षणतुल्यं वा यैः, अत्र क्षुद्रशब्दस्य प्रकर्षार्थत्वं चास्ति ते कृतक्षुद्रैनस्काः, अथ झटिति अव्यवहि-तोत्तरमेव सन्तप्तमनसः अनुतापवन्त इत्यर्थः, एवं तादृशान् समुद्धर्तुं तीर्थनिवहाः समुदायाः सन्ति, तत्रापि त्रिभुवनतले भुवर्लोकादितले अधो भूर्लोक इत्यर्थः। अनेन किं सूचितं गोदावर्यादिसमूहा निकटवर्त्तिनोऽपि पश्चात्तापे भवेदर्धमिति वचनप्रामाण्यात् अवशिष्टार्धपापक्षपयितारो वर्तन्त इति, नन्वन्यनिन्दायां प्रवृत्तोऽसि कुत इति चेत्, न हि निन्दितुं प्रवृत्तोऽस्मि किन्तु श्रुतिबलात्तथोक्तं तत्र श्रुतिः—

'सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति'

इति। यत्र तत्रेति प्रोक्तत्वादितरव्यावृत्तिर्भासते। अर्थात् सिद्धं नेतरेति, तत्र मुद्गलर्षिवाक्यं च– 'सुकृतिर्नैषत्पापे प्रायश्चित्तं रघूत्तम प्रोक्तमिति, एवं चेषत्पाप' नाशने सर्वे समर्थाः, किन्तु प्रायश्चित्तप्रसरणपथातीतचरितानिति, प्रायश्चित्तं कृच्छ्रचान्द्रा-यणादिकलुषनाशनकरो धर्मविशेषः, तस्य प्रसरणं विध्याचरणं तस्य पन्था मार्ग इति प्रायश्चित्तप्रसरणपथः तस्मादतीतं अतिगतमाचरणं येषां तान्। अनेन किं फलितं बहुकालावधि बुद्धिपूर्वकमहत्पापाचरणेन अकृतप्रायश्चित्तलेशान् इत्यपि शब्दाभिप्रायः, तादृशनरान्, इत्यनेन श्रुतस्वधर्माचरणत्वं नराणां साध्वसाधु इदमिष्टमिदमनिष्टमित्या-

दिज्ञानविशिष्टत्वं सूचितम्। एवं च तादृशानुद्धार्यानपि, ऊरीकर्तुमङ्गीकर्तुमस्मिन् जगति कर्मभूमौ भवती जागर्ति विनिद्रासि खलु वदेत्यर्थः। ननु दीनोद्धरणे परिश्रान्ता भवसीति वदसि इति चेत् तत्रात्र संसारिणस्तापत्रयाक्रान्ताः सन्तः केचन ध्यायन्ति केचन स्मरन्ति केचन गङ्गेति पदमुच्चरन्ति, एतावता तत्र तत्र करुणार्द्रदृष्ट्या अवलोकयितुं प्रवृत्ता त्वमालस्यं न करोषीत्यर्थः। आस्ताम्, प्रार्थनाबीजं तु प्रायश्चित्तस्यातिकठिनतरत्वात् केनापि कर्तुं न शक्यते, तदुक्तमाङ्गीरसा—

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
तपोनिश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते॥इति॥

एवञ्च अवश्यं पापं निवर्तेतेति निश्चयाभावान्नेत्यर्थः। तदर्थं त्वदाश्रयणमुचितमेवेति मे मतिरिति॥१९॥

नन्वरे मूढ! त्वमन्यान्निदिन्तुं प्रवृत्तोऽसीति त्वदुक्त्या भासते, इदं किं तवोचितमिति चेत् शृणु, इत्याह—

नगेभ्यो यान्तीनां कथय तटनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोधिरुरुहे।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि! दीयेत कविभिः॥२०॥

नगेभ्यो यान्तीनामिति, हे जननि! नगेभ्यः हिमाचलादिपर्वतेभ्यः सकाशात् यान्तीनां निर्गच्छन्तीनां मध्ये कतमया एकया नद्याऽपि पुराणां पातालादिचतुर्दश लोकानां संहर्तुः संहारकर्तुर्महादेवस्य कपर्दः जटाजूटः कया अधिरुरुहे– आरूढा इति काकुः। न कापीत्यर्थः। तत्र पुरसंहर्तुर्महादेवस्येत्यनेन किं ध्वनितं तदपेक्षया कोऽपि न श्रेष्ठ इति, तत्र श्रुतिः—

'एक एव रुद्रो न द्वितीयाय तस्थे' इति आस्ताम्, किं च श्रीभर्तुर्लक्ष्मीकान्तस्य विष्णोश्चरणपङ्कजं त्वद्व्यतिरिक्तया कया वा सलिलैरक्षालि क्षालितं धौतमित्यर्थः। अत्रापि काकुः। न कयापीत्यर्थः, तस्माद्धे सुरधुनि! कया वा एतदुभयं साधितम्? त्वमेव कथय वद—

एवञ्चानेनैवं प्रदर्शितं त्वं तु सर्वज्ञाऽसि। अतस्त्वयैव निरुक्तिः कर्तव्येत्यर्थः। आस्ताम्। वस्तुतस्तु विचार्यमागे यस्यां विद्यमानः तुलापलशतै राशौ भाण्डे सादृश्यमानयोरिति" विश्वः। तत्परिमाणलेशस्तल्लेशयोग्याऽपि अन्या न दृश्यते यदा तदा त्वत्तुलना सर्वांशेन कविभिः कथं दीयते? नैव दातुं शक्यत इत्यर्थः। अतस्त्वमनुपमेयेति सिद्धम्। तस्मान्मदीयं वृथा प्रलपनं मा तर्कय। किन्त्वनुगृहणीष्वेति, विशिष्टपद्यतात्पर्यं तु "काकः काकः पिकः पिक"

इति न्यायेन काकपिकयोर्मूढदृष्ट्या समानाकृतित्वेन दृश्यमानयोरपि कठोरमधुरध्वनिभेदेन शब्देन पिकस्यैव कीर्तिर्न तु काकस्य तथैव त्वत्कीर्तिः, श्रुतिपठिता। एवं च श्रुतीनां बलाबलपक्षज्ञानं सम्यङ्नास्ति। तथापि बहुवादिसम्मतत्त्वात्तथा यावता प्रवृत्तिदर्शनेन च तथोक्तं सर्वं क्षमस्वेति ॥२०॥

नन्वेवमस्ति गतानुगतिको लोक इति न्यायेन स्वमनोरथानुसारेणैकं वरिष्ठं मत्वा स्तुवन्ति तथा त्वमपि स्तौसीति चेन्न, विचारपूर्वकमेव स्तौमीत्याह—

समुत्पत्तिः पद्मारमणपदपद्मामलनखा-
न्निवासः कन्दर्पप्रतिभटजटाजूटभवने।
अथायं व्यासङ्गो निखिलभवनिस्तारणविधे
र्न कस्मादुत्कर्षस्तवजननि! जागर्ति जगति ॥२१॥

समुत्पत्तिः पद्मेति। पद्मा लक्ष्मीस्तद्रमणः श्रीविष्णुस्तस्य यत्पदपद्मं चरणकमलं तत्सम्बन्धी योऽमलनखस्तस्मात् तवोत्पत्तिः खलु, एतेन किं सूचितं श्रीविष्णुरपि त्वत्प्रीतिभावं चिन्तयन् लोकोद्धरणाय इयमेव गरीयसीति निश्चित्य ऊर्ध्वपादः समभवदिति प्रतिभाति। तत्र हेतुः, "स्वात्मज्ञानं विना कष्टं यातनां प्राप्त ईदृशीम्। सम्प्राप्य दैववशतस्तां दृष्ट्वा स मृतिं तरेत्" इत्यभिप्रायेणैव नखविलेखने प्रयत्नवान् भवेदिति, तत्र श्रुतिः— "त्रिपादूर्ध्व उदैत्पुरुष" इति, अतएव महतां प्रवृत्तिर्दृश्यते "यत्पादसंज्ञया सूतमुनयः प्रशमायनाः। सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवयेति" व्यासोक्तेः। एवञ्च परमपुरुषचरणनिःसृतत्वात्तथात्वमित्युत्पत्त्या श्रैष्ठ्यमुक्तं किं वर्णनीयमिति भावः। आस्तां। त्वन्निवासस्थानं च विलक्षणं दर्शयति कन्दर्पप्रतिभट इति, कन्दर्पो मदनस्तत्प्रतिभटः शत्रुर्महादेवस्तस्य जटाजूट एव भवनं गृहं तव, एतेन स्वात्मारामाणामप्यतिप्रेयसीति सिद्धम्, तस्मात् स्थानतोऽपि श्रैष्ठ्यमेव। तत्रैकं चित्रं पश्य लोके यत् किञ्चित् सम्पदं प्राप्य मदान्धा भवन्ति—

"कनकं यस्य हस्तेऽस्ति मदस्तस्य किमद्भुतमिति।"

एवञ्च तव तु मदलेशोऽपि नास्ति। किं बहुना तव व्यासङ्गश्च कीदृशः? अखिलजनेति, अखिलानां प्राणिमात्राणामपि, यन्निस्तारणं निर्मुक्तिस्तस्या विधाने तत्सम्पादने व्यासङ्गस्तदेकतानवृत्तित्वमिदं तु श्रीमतां दुर्लभमेवेत्यर्थः। अतएव हे जननि! तवोत्कर्षे जगति बाल्मीक्यादिभिर्घुष्टं जानीहि। श्लोकतात्पर्यं तु जलमिश्रितदुग्धपानसमये तयोर्जलं सन्त्यज्य दुग्धग्रहणं करोतीति या कीर्तिर्हंसस्य तत्कीर्तिवदकुण्ठितकीर्तेस्तव अस्मत्स्तवनमकिञ्चित्करं तदपि स्वकार्यार्थमेवेति ॥२१॥

पूर्वश्लोके मयोक्तं सकलतटिनीनां शिरोमणिस्त्वमसीति इदानीं मन्मते त्वेवं भातीत्याह—

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः।
अयं हि न्यक्कारो मनुजहतकस्य श्रवणयो
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥२२॥

अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः
पिबन्तो मैरेयं पुनरपहरन्तश्च कनकम्।
विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषा-
मुपर्यम्ब ! क्रीडन्त्यखिलसुरसम्भावितपदाः ॥२३॥

विशालाभ्यामिति। विशालाभ्यां विस्तृतेनेत्राभ्यामिदानीं विद्यमानाभ्यामित्यर्थः, देहावसानपर्यन्तमिन्द्रियपाटवस्यानियमात्, अतएवोक्तं शैवागमे—

अरण्ये सन्ति पत्राणि नद्यां स्वादूदकानि च
सन्ति हस्तौ च पादौ च कथं नाराध्यते हरिरिति।

अतस्तादृशनयनाभ्यां त्वज्जलरूपा तनुर्द्रष्टव्या। इदमेव फलं खलुनयनाभ्यामित्युपलक्षणं सफलेन्द्रियाणामपीत्यर्थः। तथा यन्नयनाभ्यां यस्य तनुर्नालीढा नास्वादिता इतरविलक्षणत्वेन न विलोकिता। तस्य मनुजहतकस्य मनुष्येषु हतकस्य दुर्भाग्यस्य श्रवणयोः कर्णशष्कुल्यवच्छिन्ननभसोः, अयं तव लहरीणां लीलाकलकलः गम्भीरशब्दो यदि नान्तर्यातो न प्राप्तस्तर्हि तस्य न्यक्कारस्तिरस्कारोऽस्त्वित्यर्थः। कुतः इत्युक्तौ श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति प्रथमं श्रवणविधानात् तदभावे मननाद्यप्रसक्तेरित्यर्थः। ननु श्रवणयोग्यानि शारीरकभाष्यादीनि वर्तन्त एवेति चेत् तत्र वक्तृबहुत्वान्मोहकानि भवन्तीत्यर्थः, एवं चास्मत्सदृशानां ज्ञानलवदुर्विग्धानां त्वल्लीलाकलकलशब्दश्रवणेनैव तादृशार्थः सुलभ इति दिक्, त्वदनुसरणमेवास्माकं साधनमित्यस्मत्सिद्धान्त इत्यर्थः।

श्लोकतात्पर्यं तु पूर्वपुण्यवशादिन्द्रियपाटवे प्राप्तेऽपि कुतो न मृत इति निन्दास्पदो निरयभीतिनिष्पत्तिसाधनानि न साधयेच्चेदुत्पन्नक्षण एव भवत्यतः स्तुतिमिषेण प्रलपनं न करोमीति जानीहीति ॥२२॥

नन्वरे ! इह जगति सिद्धान्तवेत्ता त्वमेवासि नान्यः कश्चन वर्तत इति चेन्नेत्याह 'अपि घ्नन्तो विप्रानिति, हे अम्ब, शास्त्रप्रामाण्येन त्वत्समता कस्यापि नास्तीति जाने। तदुक्तं काशीखण्डे—

यदि काशीपुरीतुल्या भवेदन्या क्वचित् पुरी।
तदा स्वर्गतरङ्गिण्याः साम्यमन्या नदी लभेत् ॥इति॥

इतरव्यवच्छेदस्य स्पष्टतयोक्तत्वान्मम का वा भीतिः आस्ताम्। ममाप्याश्चर्यं भासते विप्रान् ब्राह्मणान् घ्नन्तो नाशयन्तः, अनेकवधासक्ता इति बहुवचनाभिप्रायः। तथा गुरुसतीः, अविरतं विशन्त उपदेशकर्तुस्तल्पगामिन इत्यर्थः, तथा मदिरां पिबन्तस्तथा कनकं सुवर्णं हरन्तश्च एते सर्वेऽन्ते मरणकाले त्वयि तनुं स्वकलेवरं विहाय विसृज्य अतनुदानाध्वरजुषामनल्पदानयज्ञादिकर्तॄणामुपरि उपरिष्टात् क्रीडन्ति रमन्त उपरमन्त इति यावत्। एतेनेदं ज्ञापितमध्वरादिभिः स्वर्गतिं प्राप्नुवन्तिं तनुदानेन त्वमृतत्वं लभन्त इति श्रुत्या प्रतिपादितमस्ति, अतो मदुक्तिः सङ्गतेति भावः। एवञ्च केवलं तनुमात्रपरित्यागेन सकलसुरसम्भावितपदाः सकलामरेप्सितस्थाना यदा भवन्ति तदा किं वर्णनीयस्ते महिमा। अलमतिविस्तरेण। पद्यतात्पर्यं त्वहं तु कृतापराधोऽपि वृथा प्रलापी यद्यपि तथाप्यनिर्वचनीयपापकर्तॄन्पुनाना मां न त्यजसीति मत्वा त्वत्तीरे शरीरपातं कृत्वा निश्चिन्तोऽस्मीत्यभिप्रायः ॥२३॥

पूर्वश्लोकेऽन्यतीर्थानादरणबोधकवाक्यं प्रयुज्य त्वदीयस्तुतिविषय आदृतोऽस्मि। तत्र किं बीजमिति चेदिदमेव बीजमित्याह—

त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः।
इमं तं मामम्ब त्वमपि करुणापूर्णहृदये!
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥२४॥

त्रपन्ते तीर्थानीति, हे अम्ब! पुष्करादीनि तीर्थानि यस्य मल्लक्षणस्य जन्तोरुद्धरणविषये त्रपन्ते लज्जां प्राप्नुवन्ति। कुत इत्युक्तौ अहो इह संसारे सुखलेशो न दृश्यते सिद्धान्ते, क्वचित्सुखाभासमात्रं तदर्थमेते यत्नं कुवन्ति, तत्राप्यस्तु नाम मूढानां किमिदं विदुषामपि प्रवृत्तिः। तस्माद्गतत्रपाणां मुखं न पश्येदिति पराङ्मुखा भवन्तीत्यर्थः। किं च तथा कपालिप्रभृतयोऽपीति कपाली महादेवस्तत्प्रभृतयो देवास्तथा ज्ञानिनश्चैतदीयवार्तां न शृणुम इति करं हस्तं कर्णे कुर्वन्ति। कर्णौ पिधाय तिष्ठन्तीत्यर्थः। तत्रापि देवानां क्रोधकटाक्षोऽस्तु ज्ञानिनस्तु समदृष्टयस्तेषां प्रभावोऽपि विलक्षणः, तदुक्तं संक्षेपे—

यस्यानुभवपर्यन्ता दृष्टिस्तत्त्वे प्रवर्तते।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैरिति ॥

एवञ्च तेऽपि दर्शनपथं नायान्तीत्यर्थः, एतावता दुरदृष्टानां नस्त्राता त्वद्विना न कोपीति सिद्धम्। त्वन्तु अस्मत्सदृशान् पुनाना पावयन्ती सती सर्वेषां तीर्थानामघमथनदर्पं गर्वं पापादुद्धर्तुं वयं समर्था इत्याकारकं दलयसि खलु शिथिलीकरोषीत्यर्थः। अतो मदीयैवं प्रार्थना। भो करुणापूर्णहृदये करुणया

पूर्णं सम्भृतं हृदयं यस्यास्त्वमिमं मां पुरोवर्तिनमविचारेण समुद्धर। कुत इत्युक्तौ मत्सदृशाः पापिनो दुष्पापाः न मिलिष्यन्तीत्यर्थः। तदुक्तं शिवगीतायां—

"अधर्मनिरतः शत्रुर्लभ्यते पूर्वपुण्यत इति" तस्मादुराप एवाहं अतस्त्वया नोपेक्षणीय इति श्लोकतात्पर्यम् ॥२४॥

ननु त्वं मत्पुण्यवशादेव लब्धोऽसि किमेतावत्कालं केऽपि नोद्धृता मयेति चेत्? शृणु! तदाशयस्त्वन्य एवेत्याह—

श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम्।
अपि श्रावं श्रावं मम तु पुनरेवं गुणगणान्
ऋते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥२५॥

श्ववृत्ति व्यासङ्ग इति, शुनां वृत्तिरिव वृत्तिर्येषां तानि श्ववृत्तीनीन्द्रियाणि तत्तद्विषये दुःखमनुभूयपुनस्तद्विषयेऽसन्तुष्टानि भवन्ति। तत्संसर्गकरणेऽहं यतमानः स एव व्यासङ्गो ममेति, अनेन किं ध्वनितम्? दुष्टसंसर्गवशात् पापमात्रसम्भवो भवतीत्यर्थः।

एवञ्च 'एकैकमप्यनर्थाय किमु यत्र चतुष्टयमिति' न्यायेन तथा नियतं विषयाभिलाषहेतुना मिथ्याप्रलपनं च सम्भवति। अनर्थवागुच्चरितमत्र प्रलपनमित्यस्यानर्थवाचकतया मिथ्येतिपदप्रयोगो नोचित इति वक्तव्यम्, तथापि विशिष्टवाचकपदानां पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति न विरोधः।

आस्ताम्। तथा कुतर्केषु कुत्सिततर्केष्वभ्यासो गुरुणा तत् त्वमसीत्युपदिष्टे, एवं न भवतीत्यसद्धेतुप्रतिपादितानां तस्मिन्नभ्यासः। अथ च 'पैशुन्यमननमिति' पैशुन्यं परमर्मोद्धाटनं तत्र मननमत्यभिनिवेशः। एतेनेदं सूचितं परदुःखप्रदानतत्परत्वात् मद्गुणान् श्रावं श्रावं, णमुलन्तमेतत्, श्रुत्वा श्रुत्वा अतस्त्वदृते मम वदनं कोपि निरीक्षते न निरीक्षेतेति भावः। अत एवोक्तं पुण्यवशाल्लब्धोऽस्मीति। तथा च 'यथा यक्षस्तथाबलिरिति न्यायेन मत्समः पापिष्ठस्त्वत्सम पापघ्नी च पृथिव्यां दुर्लभ एव न संशय इति भावः। अतोऽवश्यं समुद्धरेति पद्याभिप्रायः ॥२५॥

पूर्वश्लोके मत्समो न मिलिष्यतीत्युक्तं तद्यथार्थं वाऽयथार्थमिति मनसि विचारय। तत्रापि त्वन्मनोगतमहं जाने इत्याह—

न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो
यदुद्धारादाराद्भवति जगतो विस्मयभरः।
इतीमामीहा ते मनसि चिरकालं स्थितवती-
मयं सम्प्राप्तस्त्वां सफलयितुम्ब! प्रणयतः ॥२६॥

न कोऽप्येतावन्तं कालमिति, त्वन्मनसि यदुद्धारात् यस्योद्धरणेनेत्यर्थः, जगतः लोकस्य, आरात्, समीपे त्वरितमित्यर्थः विस्मयभरः परिपूर्णाश्चर्यः भवति चेन्ममेष्टसिद्धिरिति ईहा चिरं चिरकालं स्थितवती। तामिच्छां सफलयितुं तत्काल-मारभ्येदानीन्तनकालपर्यन्तं कोऽपि न मिलितः, खल्विति जिज्ञासायामतस्तामिच्छां परिपूरयितुमेव, अयं पापिशिरोमणिः प्रणयतः प्रेम्णा त्वयि उपकारभारसमर्पणायैवागत इति जानीहि। नो चेदीदृशलम्पटस्यात्रागमनं तु दुर्घटमेव। तथा च मदागमनं त्वदुपकारायैवेति फलितमित्यर्थः।

हे अम्ब! इत्थमतिर्धाष्ट्योक्तिश्च केवलं त्वदीयकृपादृष्ट्यवलोकनफलमेव, अतः साध्वसाधु वा तत् क्षम्यताम्।

तदुक्तमाचार्यैः- क्षुधातुरास्ते जननीं स्मरन्तीति तद्वन्मदीयागमनमिति भावः। पद्यतात्पर्यं तु अत्यन्तपातकिनो लज्जाद्यभावात् श्रीमतां क्रोधोत्पत्तिपर्यन्तमपि यत्ने कृते एवमान्तुकानामन्ते निवेश इति न्यायेन तत्कार्यं कुर्वन्तीति गले पतिता इति ॥२६॥

नन्वरे धूर्त! त्वं तु मदुपकारायैवागतोऽसि, तव तु न किमपि कार्यमस्ति तस्मात् गच्छ यथेष्टं विहरेति चेदिष्टापत्तिरेवाहं मन्ये इत्याह—

विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः
पतन्ति द्राक् पापा जननि! नरकान्तः परवशाः।
विभागोऽयं तस्मिन्नशुभमयमूर्त्तौ जनपदे
न यत्र त्वल्लीलादलितमनुजाशेषकलुषाः ॥२७॥

विमानैः स्वच्छन्दमिति। अत्रैवमस्ति केवलं नरकभीतिनिवारणायैव तदाश्रयणं तच्चास्माकमनायासेन वर्तत एव। कथमत्युक्तौ, ये सुकृतिनः पुण्यवन्तः 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतिबलात् ते विमानैर्विगतमानैर्दैवैः सह विमानमारुह्य सुरपुरं स्वर्गमयन्ते गच्छन्ति तत्रत्यसुखं भुञ्जते।

अथ च पापाः पातकिनः निरयान्तर्निरयमध्ये द्राक् पतन्तीति योऽयं विभागः स च यत्र त्वं न वर्तसे तस्मिन् अशुभमयमूर्तौ अशुभस्वरूपे देशविशेषे आस्ताम्। अत्र तु न कापि भीतिरस्ति, अहो इत्याश्चर्ये। लीलादलित इति लीलया लीलामात्रेण दलितं क्षालितं मनुजानां मनुष्याणामित्युपलक्षणं जीवमात्राणामित्यर्थः। अशेषं निःशेषं कलुषं पापं यया एतादृशी सा तदुक्तं वाल्मीकिना—

'त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गो वरम्' इत्यादि महदुक्त्या त्वदाश्रय-बलेन नरकपदश्रवणमपि शशविषाणतुल्यं तत्प्राप्तिस्तु दूरतोऽपास्ता। तस्मान्मदीयो-ऽहङ्कारः सफल एवेति भावः। विशिष्टपद्यतात्पर्यं तु—

अहो ईश्वरमाहात्म्यं जनताविस्मयावहं।
पत्रमात्रेण सन्तुष्टो यो ददाति निजं पदमिति॥

तत्र तु पत्रपुष्पदानेन सन्तुष्टिर्मया त्वात्मसमर्पणं तनुसमर्पणं कृतं यतः मदुद्धारो निःसन्देह एवेति॥२७॥

ननु त्वदुक्तं सर्वमास्तां नाम यथार्थम्, न तु मदीयो वाग्विवादः परन्त्वेदृग-विलक्षणसामर्थ्यबीजं किं त्वं जानासीति चेज्जानामीत्याह स्खलन्ती स्वर्लोकादिति, अये जननि।—

स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः॥२८॥

अवनितलशोकापहृतये तत्र लक्षणया अवनितलस्थमनुष्यादीनां शोकना-शायैव यतः स्वर्लोकात्पतन्ती, अतः पामरापामरसाधारणजनोद्धारणसामर्थ्यवतीति जाने तत्र प्रमाणं च—

'पतिता जाह्नवी पुण्या पुण्ये रुद्रस्य मूर्धनीति' शैवागमोक्तेः। नन्वेवं चेत्तर्हि, अस्यां कर्मभूमौ एकधारया भानं न घटते, अत्युच्चनिपतितत्वात् तस्मादनेकधाराभिर्भानं समुचितम् तच्च नास्ति। लोकेऽप्यत्युच्चनिपतितस्य फलादेः, अनेकशकलत्वेन भानं जायत इति प्रसिद्धिः। तद्भावात्त्वदुक्तिरसंगतेति चेन्न तत्र हेतुः 'जटाजूटग्रन्थौ' इति, यतः पुरभिदा रुद्रेण जटाजूटग्रन्थौ विनिबद्धाऽसि विशेषेण दृढं प्रतिबद्धाऽसीत्यर्थः। तत्र पुरशब्देन स्थूलसूक्ष्मकारणशरीराणि तानि भिनत्तीति तदर्थः। अनेन किं ध्वनितम्– बहुकालं तपसा शरणं प्राप्तस्य पुरत्रयं भित्वा उद्धरिष्यामीत्यभिमानवान्, शिव इति तदुक्तं शिवपुराणे—

योगी वाऽप्यथवाऽयोगी विरक्तः कामुकोऽथवा।
लिङ्गमेवार्चयेन्नित्यं मम नामानि वा स्मरेत्॥इति॥

त्वं तु पतितापतितसाधारणोद्धरणव्रतं स्वीकृत्य भगीरथकृतपतःफलदानं निमित्तीकृत्य, अहमागमिष्यामीति प्रतिज्ञाय विनिर्गताऽसि। अतस्त्वमतीव श्रेष्ठेत्यर्थः, अतएव शिवस्त्वां शिरसा विभर्ति। ननु त्वया विनिबद्धेत्युक्तं तस्मादहं बन्धनयोग्येति सिद्धमिति चेत्सत्यमेव। तत्रैवमस्ति—

'ये गुणागुणविवेकचतुरास्ते परगुणान् गृह्णन्त्येवेति नियमः। तदुक्तं मैत्रेयेण—

गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात्।
मैत्रीं समानादन्विच्छेन्न तापैः परिभूयते॥इति॥

एवञ्च त्वमतिप्रेम्णा बद्धाऽसीत्यर्थः। तत्र प्रमाणं च 'तामिष्टमहिषीत्वेन दधार शिरसा हर' इति शैवागमोक्तेः। ननु तर्हि राजसभां प्रविष्टा गुणिनः प्रतिबद्धा स्युरिति चेन्न निर्लोभानामपीति निर्गतलोभानां शिवसदृशज्ञाननिष्ठानामपि लोभं जनयन्तस्ते तवैव गुणाः, अपि शब्दस्वारस्यं तु ते पूर्णकामा आत्मारामत्वात् तथापि त्वज्जलनिमज्जनादौ तत्परा सेवन्ते। ननु स्वयं प्रतिबद्धस्य 'सर्पग्रस्तो यथा पर' इति न्यायेन परेषां प्रतिबन्धविनिर्मुक्तिसामर्थ्याभावान्मदागमनमजागलस्थ-स्तनतुल्यमेवेति चेन्न, त्वं तु यथा—

'बन्धनस्थोऽपि मातङ्गः सहस्रभरणक्षमः' इति न्यायेन समर्थैव, किन्त्वस्म-दाद्यदृष्टवशादेव त्वदीयगुणानां दोषः अस्मत्प्रतिबन्धकरूपेण परिणतः परिणामं प्राप्त इत्येव फलितम्। कुत इत्युक्तौ वस्तुमात्रे गुणदोषयोर्विद्यमानत्वात् अस्मद्धानिरेव जातेति भावः।

पद्यतात्पर्यं तु— अस्मदुद्धरणायैव भगीरथेनातिप्रयासत आनीता। परं च मन्दभाग्यानां दुर्लभा यद्यपि तथापि मया साधितेति अश्रमेण तरिष्यामीति ॥२८॥

ननु त्वयोक्तं त्वद्गुणानां दोषपरिणामे अस्मद्धानिर्जातेति तत्र तव तु, अहं सुलभैव इति चेत् सत्यम् त्वद्दर्शनग्रहणसमर्थानां न क्वचिद्धानिः किन्तु तदसमर्थानां का गतिरिति चेतः खिद्यते। तथाहि अस्मदाद्यदृष्टवशात् स्वर्गतरङ्गिण्यत्र प्राप्ता, तथापि बलवदनिष्टानुबन्धिदुरदृष्टप्रतिबन्धकहेतुना रुद्रजटासु बद्धा सती अत्यायासलभ्येति पर्यवसन्ना, अतो रोदिमीत्याह—

जडानन्धान् पङ्गून्प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलरदुरितनिस्तारसरणीन्।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब! त्रातुं त्वमिह परमं भेषजमसि ॥२९॥

जडानन्धान् पङ्गूनिति। हे तापसाराध्ये! भगवति! ये जड़ाः मूर्खाः केवलमाहारनिद्रादिषु प्रसक्ता विवेकरहिता इत्यर्थः, तदुक्तम्—

'एको विवेकोऽप्यधिको मनुष्ये तेनैव हीनः पशुभिः समान' इति। एवञ्चै-तादृशानां त्वद्दर्शनं दुर्लभमेव। तेषां शास्त्रवचनेष्वनादरादित्यर्थः। तथा येऽन्धाः पुत्रहीनाः "अपुत्रस्य गर्तिनास्तीति प्रसिद्धेः। यद्वा चक्षुर्विहीना वा तेषामनुपयोगित्वात् त्वद्दर्शनाद्यसमर्थास्तथा पङ्गुरङ्गविहीनः तस्याप्यनुपयोगित्वादेव दर्शनदौर्लभ्यम्। तथा प्रकृतिबधिरानिति प्रकृत्या जन्मना बधिरा श्रवणेन्द्रियहीनास्तेषामश्रुतत्वात् प्रवृत्त्य-सम्भवाद्दुर्लभमेव, तथैवोक्तिविकला असन्दर्भभाषणकर्तारस्तेषां व्यवहारज्ञानशून्यत्वाद्-दुर्लभमेवेत्यर्थः। अथ च ये ग्रहग्रस्ता ग्रहशब्देन न नवग्रहाः। कुत इत्युक्तौ

एकतरस्याप्यनिष्टसूचकस्य विद्यमानत्वात् किमत सर्वेषां अतो ग्रहशब्देन भूतप्रेतादय एव ग्राह्याः, तेन ग्रस्तत्वान्नेतुमशक्य एवेत्यर्थः। अथ च अस्ताखिल-दुरितनिस्तारेति अखिलं समग्रं यत् दुरितं तस्य निस्तारः नितरां तरणं तस्य या सरणिः पद्धतिर्मार्गः अस्ता अखिलदुस्तारसरणयो येषां ते अतएव निलिम्पै र्देवैर्निर्मुक्तान् परित्यक्तानित्यर्थः। तदुक्तं शुकाचार्यैः 'भजन्ति ये यथा देवान् देवाअपि तथैव तान्' इति। एवञ्च स्वकृतकर्मविनिर्मितबन्धविनिर्मुक्तिहेतुभूतकर्माचरणासमर्थानां पूर्वोक्तजडादीनाम्, अनेकयोन्यटनसम्प्राप्तेरावश्यकतया जन्मादिप्रवाहानिवृत्तेः, अतः निरयान्तस्तन्मध्ये निपततो जनान् अहं रोदिमीति शेषः। अतः हे अम्ब! एतादृशान्नरान् त्रातुमिह संसारे भेषजं परमं यथाभवति तथौषधमसि। एतेनेदं सूचितम्। उदरगतस्यौषधस्येव सर्वजनेषु समानगुणकारित्वाद् येन केनाप्यमित-त्वज्जलबिन्दुमात्रेण नामोच्चारणेन वा अगतिकान् जनान्समुद्धरेति प्रार्थना। तस्मा-त्वत्प्राप्तिः सुलभा भवत्विति प्रार्थनारहस्यम्॥२९॥

**पूर्वश्लोके परमं भेषजमसीत्युक्तम्। तदुपपादयति–**

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं जननि! तव तीरं श्रितवताम्।
सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां
जनानानामानन्दः परिहसति निर्वाणपदवीम्॥३०॥

अपि प्राज्यं राज्यमिति। चिदेकरसरूपिणि! भो जननि सर्वं परित्यज्य त्वत्तीरमाश्रित्य केवलं स्थितानां जनानामानन्दो हर्षः स च निर्वाणपदवीं मोक्षपदवीं हसति। नन्वयं जनः प्राज्यं प्रभूतं यद्राज्यं तदपेक्षया कलत्रादीनधिकं मन्यमानः पुत्रे नष्टेऽहं नष्ट इत्यबाधितप्रतीतेः। राज्यादिपरित्यागस्तस्य सुतरां दुर्घट इव भाति। तदुक्तं शुकेन– कोऽन्वर्थतृष्णां विसृजेत्प्राणेभ्योपि य ईप्सितः। यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक्॥ इति महदुक्त्या अपरिहेयत्वमेवेति चेन्न, एवमस्ति आपाततो महद्वाक्यमुपश्रुत्य सर्वत्र बाधितप्रतीत्यनुभवे गृहीते आसमुद्रान्तभूमेः तुच्छत्वेन तृणवन्मन्तुं शक्यते। तथा च प्राणाधिकं यद्यपि राज्यं तथापि बाधितानुवृत्त्या तत्परित्यज्य त्वत्तीरवासेच्छया प्राप्तानां तादृशानामानंदः सुलभ एवेत्यर्थः। ननु निर्वाणपदवीं हसतीत्युक्तं तत् कथमिति चेत्? शृणु! यदि विषयमात्रे दोषानुसन्धानं कृतं तदा तन्मनः किञ्चिदुत्कृष्टमवलम्बत एवेति नियमः। तत्र तत्पदप्रतिपाद्यं ब्रह्मैवावलम्बनाश्रयम् तथा च तद्विषयकं ज्ञानमतिदुर्लभं वस्तुतो यत्साक्षादपरोक्षं ब्रह्मेति श्रुत्या अपरोक्षानुभवसमर्थत्वेऽपि अहमज्ञ इत्यादिविषयकविपरीतानुभवरूपप्रतिन्धकहेतुना मनःशान्तिर्न भवति, अतः विलोल-द्वानीरमिति, विलोलन्तो वानीराः वेतसवृक्षा यस्मिन् इत्यनेन किं सूचितम्?

त्वत्तीरवासिनः पुरुषा वेतसवन्नम्रीभूय स्थिताश्चेदनायासेन केवलं क्रियाविरहितेनापि तादृगुक्तफलं लभन्त एवेति।

ननु सर्वपरित्यागे यावदनुकूलपदार्थस्य विनाश एव भवितुमर्हति तदा तस्य सुखलेशाप्रसिद्या आनन्दलेशाभावः स्यादिति चेन्न, अत्रानन्दे हेतुं प्रदर्शयति- सुधातः स्वादीयमिति, सुधातः अमृतादप्यधिकं स्वादीयः सलिलं पिबतः इत्यनेन सुधापानतत्पराणां सुधाशब्दश्रवणमात्रं न तु पानानुभवः इदमित्यनेन बृहत्पात्रत्वेन निर्दिश्यमानमित्यर्थः। अतएव पिबतामिति बहुवचनसङ्गतिस्तत्राप्यातृप्ति इति क्रियाविशेषणं तथा च एतज्जलसेविनां य आनन्दः स च परिपूर्ण एवेति सिद्ध्यति, तदुक्तम् कौपीनवन्तः खलु भाग्यवन्त इति महदुक्तया तेषामेव परिपूर्णानन्दला- भाज्जीवन्मुक्तिसुखप्राप्तेर्निर्वाणपदव्याः करगतत्वाद् देहपातोत्तरं मुक्तिरिति पक्षाश्रयणं कुर्वतां पदवीं एतस्य त्वत्तीरवासिनस्त्वदमृतपानजन्यो विलक्षणानन्दो हसतीति किमाश्चर्यं ? न किमपीत्यर्थः। अतः परमं भेषजमसीत्युक्तिमास्ताम्, एवं च केवलं सर्वत्र बाधितानुवृत्तिप्रदाने त्वमेव समर्थाऽसीति मदीयो गूढोऽभिप्रायः ॥३०॥

नन्वरे! त्वयोक्तं बाधितानुवृत्तिप्रदाऽसीति तत्र बाधितानुवृत्तिर्न सुलभा। कुत इत्युक्तौ अनेकजन्मान्तरार्जितदुरितरूपप्रतिबन्धकस्य सत्त्वादित्यर्थः। तदुक्तम् कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तत इत्यादिना ज्ञानमन्तरा दृश्यप्रतिबन्धनि- वृत्तेरसम्भवादिति चेन्न। तदेव शृण्वित्याह—

प्रदोषान्ते नृत्यत्पुरमथनलीलोद्धतजटा-
न्तराभोगप्रेङ्खल्लहरिभुजसन्तानविधुतिः।
विलक्रोडक्रीडज्जलडमरुडङ्कारसुभग-
स्तिरोधत्तां पापं त्रिदशतटिनीताण्डवविधिः ॥३१॥

प्रदोषान्ते नृत्यदिति, भो मातः! ते त्रिदशतटिनीताण्डवविधिः। त्रिदशा ईन्द्रादयो देवास्तेषां तटिनी तरङ्गिणी गङ्गा तस्यास्ताण्डवविधिर्नृत्यविधिः, अस्मत्पापं तिरोधत्ताम्। आशिषि लोट्। आच्छादयत्वित्यर्थः। तदाच्छादनप्रार्थनयेदं ध्वनितम्। प्रारब्धसञ्चितकर्मणां भोगादेव क्षय इति सिद्धान्तात् तादृशदुरितध्वंसनकर्माचरणालस्य- वतां मादृशानां पापक्षयाप्रसक्तेः, अतस्तान्याच्छादितान्येव तिष्ठन्तु। स्वोदरे स्थाप- येति प्रार्थनम् तदर्थश्चैवम् तेन पापाचरणं विलक्षणं कृतमिति मनसि नानेयमिति भावः। नन्वरे त्वत्कृतपापं तु विषपाषाणवदति कठिनतरं पचनयोग्यं नेति चेत् अतएव ताण्डवविधिप्रार्थनं जानीहि, स च विधिः कीदृश इत्युक्तौ इदं विशेषणम् नृत्यत्पु- रमथनेति, नृत्यति नर्तनं करोतीति, नृत्यन् स चासौ पुरमथनश्चेदृशो महादेवस्तस्य लीलाविलासस्तादृशक्रीडानुकूलो व्यापारस्तेनोद्धृता उन्नता ऊर्ध्वं धृता इत्यर्थः। ईदृशा या जटा संयतकेशसमूहस्तासां यदन्तरं मध्यं तस्याभोगः पूर्णता 'आभोगः

पूर्णयत्नयोरिति' मेदिनी। तथा च तत्तज्जटान्तरे मध्ये मध्ये तत्र प्रेङ्खन्त्यश्चचलन्त्यः प्रयत्नं कुर्वत्यो या लहर्यो वीचयस्ता एव भुजा बाहवस्तेषां सतानं दीर्घीकरणं तस्य विधुतिर्हस्तचालनविशेषः नृत्यसाहित्यमित्यर्थः। तद् यत्र विधौ इति ज्ञेयः। अत्र पुरमथनपदेनैवं भाति। त्रिपुरासुरमथनाव्यवहितोतरक्षणएव तस्यातिहर्षः समुत्पन्न इति, तत्र हेतुः प्रदोषो रजनीमुखमित्यर्थे शत्रुबधनृत्यकालयोर्विशेषव्यवधानं नेति प्रतिभाति, प्रदोषान्त इति नृत्यकालसूचनादित्यर्थः। तथा च अत्यन्तानन्दसमये अयं विधिरयमविधिरिति भानाभावात् तत्कालीनं नर्तनं तु वर्णितुमशक्यमिति सिद्ध्यति। एवं च तादृङ्नृत्यसहकारिणी त्वमसि तस्मादस्मदाचरितदुरिततिरोधानं तव सुकरमेवेति भावः। ननु त्वयोक्तं नृत्यसहकारिणीति तत्र नृत्योपकरणं किं तन्न जानासि किं तु वृथा प्रलपसीति चेन्न, बिलक्रोड इति, भो मातः! नृत्यस्यमुख्यसाधनीभूतः कालक्रियामानसूचकस्ताल एव खलु, स चास्त्येव, तथाहि विलं विवरं तस्य क्रोडोऽन्तर्गभीरस्थलं तत्र विलक्रोडे क्रीडद्विहरद्यज्जलं तस्य यो डमरुवड्डङ्कारो डंग् डंग् डंग् इति तदनुकरणध्वनिः तादृशनिनादकर्तारो वानरक्रीडोदरम्भरा लोकेऽपि विचरन्ति तद्वदित्यर्थः।

एवञ्च तस्य यो निरन्तरध्वनिस्तेन सुभगः सुन्दरस्ताण्डवविधिरित्यर्थः, तस्मात्त्वं नृत्यसहकारिणीति सिद्धम्। तत्रापि शिवस्य नृत्यं तु प्रदोषकाल एव अत एवोक्तम्—

दुर्बुद्धिरपि दीनो वा मन्दभाग्यः शठोऽपि वा।
प्रदोषे पूज्य देवेशं विपद्भ्यः सम्प्रमुच्यते॥

इति ब्रह्मोत्तरखण्डे। आस्तां त्वत्ताण्डवविधिस्तु सर्वदैव तस्मादेवमर्थः पर्यवस्यति। श्रीसदाशिवस्यात्मारामत्वात्, ब्राह्मानन्दः कदाचित्तु इति, अतः स्वविलासेच्छायाः स्वताण्डवविधिना तं प्रसाद्य केवलं स्वायत्तीकृत्य शिरोभूषणत्वेन विराजमानाऽसि। एवञ्च तादृशज्ञानवतो महादेवस्य स्वान्ताकर्षणे तव यत्नः सफलो यदा तदा विषयानुसन्धानवतामस्मदादीनां मनोहरणे तव कोऽति प्रयासो लगिष्यति? न कोपीत्यर्थः, तस्माद्बाधितानुवृत्त्युदयः स्यादेवेति। विशिष्टपद्यतात्पर्यं तु शिवा स्वाधीनवल्लभेति महदुक्त्या शिवसन्निधौ मदपराधान्निवेद्य विषयानुसन्धानविच्छेदं कारयिष्यति मनोभिलषितमित्यलमतिविस्तरेण॥३१॥

ननु त्वदुक्तं सर्वं तिष्ठतु इदमेकं पृच्छ्यते मया, अन्तःकरणचतुष्टयनियन्तृत्वं तु संकर्षणादीनामेव। तत्र भगवदुक्तिश्च—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥

इत्यनेन तेषामेवाग्रहः, अतस्त एव समर्था इति चेत्शृणु, सर्वं सामर्थ्यं तवैवास्तीत्याह—

इदं हि ब्रह्माण्डं सकलभुवनाभोगभुवनं
तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुकमिव।
स एष श्रीकण्ठः प्रतिहतजटाजूटजटिलो
जलानां सङ्घातस्तव जननि! तापं हरतु नः ॥३२॥

इदं हि ब्रह्माण्डमिति। स्वात्मान्दलवीभूतब्रह्माद्यानन्दसन्तते हे जननि! ते जलानां सङ्घातः जलसमूहोऽस्मत्तापमनात्मशरीरादावात्मत्वबुद्धिजन्यस्तापः, अनेक वेदान्तवाक्यश्रवणेनापि पदार्थमात्रे यथार्थतया दोषानुसन्धानं नोत्पद्यते, किं कर्तव्यमितः परमित्याद्यनुपायजन्यं तापं निवारयतु इत्यन्वयः। ननु ईदृक्तापनिवारणयत्नस्तु सुकर एव,

**तदुक्तं भगवता-**

शनैः शनैरुपरमेद्बुध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥

इत्युक्तत्वादुपरमे एवाभ्यासः स्वीकार्य इति चेत् इदं तु न सम्भवति तप्तायःपिण्डवद्देहतादात्म्यमापन्नः अहमज्ञोऽहं मनुष्य इति निश्चित्यैव सदाऽतिष्ठते। तस्माद्देहपात्तोत्ररमेवाहङ्कारनिवृत्तिः। तदुक्तं शुकेन—

'देहसम्बन्ध एतावानामृत्योरिह देहिनाम्- इत्युक्तत्वादित्यर्थः। अतएव तापनिवारणप्रार्थनं संगतमिति भावः। वस्तुतस्त्वज्जलप्रभावः किं वर्णनीय इति प्रदर्शयति। इदं दृश्यमानं ब्रह्माण्डं सकलभुवनानां चतुर्दशलोकानां आभोगभुवनं भोगशब्दस्य सुखवाचकत्वात् आश्चाभिव्याप्त्यर्थत्वाच्च परिपूर्णसुखालय इत्यर्थः। तथा च अत्रैव यावदानन्दोत्पत्तिरिति भावः, अतएवोक्तं "यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः" शुकेन।

एवञ्चेदृगपि ब्रह्माण्डं त्वज्जलघातैः तरङ्गैः तिन्दुकमिव तिन्दुकफलमिव अतिलघुतयेत्यर्थः। लुठति इतस्ततो धावतीत्यर्थः। तथा च तदन्तर्वर्तिन एव सर्वे ब्रह्मादय इति ध्वनितम्। अतस्तेऽपि त्वन्मायामोहिता एवेति तदुक्तं भगवता—

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इति, 'भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यतीति' च। एतावता तेऽपि याच्ञातत्पराः सन्तः विल्वतुलसीदूर्वाङ्कुरैरपि तृप्तिं मन्यमाना भक्तान् मृगयन्तो विचरन्ति तन्नोचितमित्यर्थः। तदुक्तम्—

"आशासानो न वै भृत्यः स्वामिन्याशिषमात्मनः।
न स्वामी भृत्यतत्स्वाम्यमिच्छन्यो राति चाशिषः ॥"

इति याञ्चानिषेधात् तेऽस्मत्सदृशैरसेव्या इत्यर्थः।

आस्तां त्वन्तु किञ्चिदपि नापेक्ष्यास्मदुद्धरणे समुद्युक्ताऽसि। तत्रापि स एव। तच्छब्दस्य प्रसिद्धार्थकत्वम्। एष प्रसिद्धं महदाश्रयेणेति दर्शयितुं श्रीकण्ठप्रतिहत इति, श्रीकण्ठो महादेवस्तेनाप्रतिहतोऽपरिमितो विकीर्णो यो जटाजूटस्तेन जटिलः सम्मिलित इत्यर्थः। अनेनेदं सूचितम् श्रीविष्णोर्वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वकटाहाण्डविवरेण जलसङ्घातोऽन्तःप्रविश्य यदा प्लावितुं प्रवृत्तस्तदा श्रीकण्ठोऽपि लोकहितार्थं तं जटासु रुरोधेति, तथाप्यस्मद्भाग्यवशादेव दृष्टिपथं गत इत्यर्थः। तस्मात् हे जननि! त्वदीयजलसङ्घातस्यानन्तब्रह्माण्डाविर्भावतिरोभावसमर्थस्य मादृशानां पिण्डब्रह्माण्डतिरोभावेन को वाऽतिप्रयासः। न कोऽपीत्यर्थः? विशिष्टपद्यतात्पर्यं तु अस्मदादिबहिर्मुखानां केवलं स्वोदरपरिपूर्तितत्परत्वादन्यदेवताराधनं तु दुर्घटमेव, अतो वात्सल्यमङ्गीकृत्यास्मदपराधं क्षन्तुं त्वज्जलसङ्घातमाज्ञापयस्वेति मनोऽभिप्रायः ॥३२॥ इदानीमत्यौत्सुक्यवशात्पुनः प्रभावं वर्णयन् तदुत्कर्षं याचते—

कपर्दादुल्लस्य प्रणयमिलदर्द्धाङ्गयुवतेः
पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ।
भवान्याः सापत्न्यस्फुरितनयनं कोमलरुचा
करेणाक्षिप्तास्ते जननि! विजयन्तां लहरयः ॥३३॥

प्रणयमिलदर्धाङ्गेति। कपर्दादुल्लस्येति भो जननि। ते लहर्यो वीचयः विजयन्तां सर्वोत्कर्षेण वर्तन्तामितिप्रार्थना द्योतनायप्रणयमिलदर्धांगेति प्रणयेन नग्नतया मिलिता तत्र विलक्षणं– प्राप्ता। अर्धाङ्गे युवतिर्यस्येति विग्रहः, अनेनेदं ध्वनितं शिवः स्वलीलाविहारार्थं शक्तिं स्वयमेवाङ्गीकरोतीति, अतएवार्द्धनारीश्वर इति त्रिपुराररिति च प्रसिद्ध इति नोचेद्ब्रह्मणस्तदसम्भवादित्यर्थः, आस्तां तादृशस्य पुरारेः कपर्दाञ्जटाजूटादुल्लस्य निर्गत्य भवान्याः पार्वत्या मृदुलतरो यः सीमन्तः केशपद्धतिः तत्सरणिः पङ्क्तिः तत्र प्रेङ्खन्त्यः चलन्त्यः वल्गन्त्य इति यावत् ईदृश्यो लहर्य इत्यर्थः।

एवम् अत्रेदं ध्वनितम्। अतिप्रेयस्या भवान्या अपि सदा कचार्द्रीकरणतत्परा लहर्यः, अतएव सापत्न्यभावेन हेतुना पार्वत्याः कोमलरुचा स्वकीयकरेण स्फुरितेन सेर्ष्यावलोकितेन येन यत्कर्मणि यथा भवति तथा आक्षिप्ताः परिपूर्णा विधुता दूरीकृता लहर्य इति। ननु पार्वतीतिरस्कृतलहरीविजयप्रार्थनेन तव किं कल्याणबीजं दृश्यत इति चेन्न तत्र पार्वतीकृततिरस्कारमन्तरा लहरीणामौन्नत्यासम्भवात् तत्प्रार्थनमेवास्मच्छ्रेयःसम्पादकमिति भावः।

विशिष्टपद्यतात्पर्यं तु हे गङ्गे! महादेवजटाजूटसंसर्गेण तथा साक्षादादिशक्तिकरसंसर्गेण च त्वल्लहरीणां महत्त्वं वक्तुमशक्यमेव। अतोऽत्र तयोः सपत्नीभावो विजयतामिति गूढोऽभिप्रायः। अलमति विस्तरेण ॥३३॥

नन्वरे! किमौत्सुक्येन मामेव वर्धयसि इतरे केऽपि न सन्ति इति चेत् तानहं न मन्ये इत्याह—

विधत्तां निःशङ्कं निरवधि समाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ॥३४॥

विधत्तां निःशङ्कमिति, हे देवकार्यसमुद्यते देवि! भवती जगति यदि जागर्ति अनलसाऽसि तर्हि विधिर्ब्रह्मा निःशङ्कं यथा भवति तथा निर्गतः अवधिः- सीमा यस्य तन्निरवधीति क्रियाविशेषणम्, एवञ्च सोऽपि शंङ्कां परित्यज्य समाधिं चित्तैकाग्र्यं विधत्तां करोत्वित्यर्थः। तत्र शङ्का तु मयिसमाधिस्थे प्रजानां का गतिरित्याकारिकां तां परित्यज्येत्यर्थः। तथा हरिः विष्णुः पालकोऽपि तत्कर्म परित्यज्य शेषे आदिशेषे सुखं यथा तथा शेतां स्वापं करोत्वित्यर्थः। अत्रेदं ध्वनितम् पालनविषयं परित्यज्य दूरं गच्छत्विति तथा शिवोऽप्यविरतं नृत्यं करोतु। एवं च मद्धननकर्मणा पृथ्वीभारमपनेतुं कोऽन्योस्तीति शङ्कां परित्यज्य निर्मुक्तोऽहमित्यानन्देन नाट्यं करोत्वित्यर्थः। तथा कृतं प्रायश्चित्तैः कृतमित्यस्य निष्फलत्वमर्थस्तथा च निष्फलप्रायश्चित्तैरलं पर्याप्तमित्यर्थः। 'कृतं क्लीवे तु निष्फलमित्यमरः' तथा तपोदानयजनैरपि समस्तं दानयजनादिसर्वैरलमित्यर्थः। ननु तर्हि यूयं निरपेक्षा इति सिद्धम्। तस्मान्मद्याञ्चाऽप्यप्रयोजिकेति चेत् न, वयं तु सापेक्षा एव। किन्तु तदाराधने नास्माकं प्रवृत्तिरिति सूचितम्। कुतस्तेषां तत्तत्कर्मानुसारिफलदातृत्वादित्यर्थः। त्वं तु तपोदानाद्यनपेक्ष्यैव कामानां मनोरथानां सवित्री जनयित्री यावदिच्छापरिपूर्तिकरी। एवञ्च त्वयि जाग्रत्यां सत्यां नान्यापेक्षेति फलितम्। विशिष्टपद्यतात्पर्यं तु 'सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिरिति' न्यायेन अन्यदेवताभजनप्रवृत्तौ जातायामभाग्यत्वमेवापतेदतो मत्प्रवृत्तिः सम्यगेवेति गूढोऽभिप्रायः ॥३४॥

नन्वरे! त्वयोक्तं विष्ण्वादीनां प्रयोजनं नास्ति त्वल्लहयो विजयन्तामिति तत्र त्वद्वाक्यैस्त्वं भ्रान्त एवेति प्रतिभातीति चेत्, अत्रैवमस्ति। महान्तः स्वनिष्ठसद्गुणानगण्यान् जानन्तीत्यर्थः, तेषामिदमेव सल्लक्षणं तत्र श्रुतिः—

'यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं' पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुत्यर्थन्यायेन सतां गुणा एव दूतत्वं कुर्वन्ति। अतएव षट्पदाः केतकीगन्धमाघ्राय स्वयमागच्छन्ति। तद्वत् तव गुणाः परोपकृतये भवन्तीत्याह—

ललाटे या लोकै रिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम्।
विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं
त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम्॥३५॥

ललाटे या लोकैरिति। भो मातः! इदमाश्चर्यम् इह मर्त्यलोके या त्वत्तीरसम्बन्धिनी मृत्स्ना मृत्तिका कस्यचिल्ललाटे भालतले लोकैर्मित्रजनैः सलीलं यथा भवति तथा परिहासेनापि तिलकिता सती सा तमो हन्तुं हृत्स्थाज्ञाननाशाय तरुणतरमार्तण्डतुलनां तरुणतरो ग्रीष्मर्तुस्थमध्याह्नकालीनो मार्तण्डः सूर्य; एतेन गृहान्तर्वर्त्यन्धकारनाशनसमर्थत्वं द्योतितम्, एवं च तादृशमार्तण्डतुलनां समतां धत्ते दधातीत्यर्थः। नन्वियमत्युक्तिरेवेति चेन्न, तत्र प्रमाणं च भारते—

जाह्नवीतीरसम्भूतां मृदं मूर्ध्नि बिभर्ति यः।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्॥

इति शास्त्रबलान्नाहं भ्रान्त इत्यर्थः। अत्र लोकानुभवश्चैवं यस्य कस्यचिद्भालतले मृत्तिलकं पश्यन्तो जनाः अयं साधुरयं साधुर्नास्मत्सदृशः किन्तु भगवद्भक्त इति मत्वा तं नमस्कुर्वन्तीति प्रत्यक्षानुभवः। किञ्चेदमतिचित्रं सैव तिलकत्वेन विराजमाना विधिलिखितेति विधिना लिखिता या दुर्वर्णसरणिः दुष्टाश्च ते वर्णाश्चेति विग्रहे दोषविशिष्टा वर्णा ब्राह्मणोऽयं क्षत्रियोऽयं वैश्योऽयं शूद्रोऽयं भवितेत्याद्यक्षरपङ्क्तिः, तां विलुम्पन्ती मार्जयन्ती उन्मूलयन्तीत्यर्थः। एतेनेदं ध्वनितम् ब्राह्मणत्वाद्यभिमानाभिनिवेशं परित्यज्य जीवन्मुक्ततामनुभवन्तीति। ननु ब्राह्मणत्वादिसूचकाक्षराणां दुर्वर्णत्वं कथमिति चेत् तदुक्तमाचार्यैः—

'न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणा ध्यानयोगोऽपीति' महदुक्तेः, तत्र मे इत्यस्य ममेत्यर्थः। तथा च तादृशोऽहंप्रत्ययावलम्बनं तु जीवो ब्रह्मैव नापर इत्यादिना ब्रह्माभिन्नो जीव एव तत्र तु ब्राह्मणत्वादिधर्मा अध्यस्ता एव, अतस्तदुपपत्तिरित्यर्थः, तदुक्तम्—

अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम्।

रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणमिति। एवं च तद्दृष्ट्यापि विधिलिखितवर्णानां दुर्वर्णत्वमिति भावः। आस्तां तस्मात्तादृशापूर्वापूर्वशक्तिमती विधिप्रणीतं कोऽपि न लंघयतीत्यादि 'प्रसिद्धिः तथापि अनुल्लंघ्यविधिलिखितोन्मूलनसमर्था या सा मम जगन्नाथाख्यस्य कृत्स्नां शुचं प्रार्थिताप्रार्थितशोकं हरतु उन्मूलयत्विति भावः। विशिष्टपद्यतात्पर्यं तुं मोक्षार्थी' न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः। नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासयेति स्मृत्या मोक्षार्थिनोऽपि धर्मविधानादवश्यकर्तव्यत्वेऽपि तद्विरुद्धाचरणरता वयं, अतो विलक्षणशक्तिमत्येव शरणमिति॥३५॥

किञ्च हे मातः ! त्वं भ्रान्ताऽऽसीति शङ्का कृता त्वया पूर्ववाक्ये, तर्हि आस्तां नाम भ्रान्तत्वमिष्टापत्तिः । कुत इत्युक्तौ 'समानशीलव्यसनेषु सख्यमिति' नियमः, नोत्तमाधमयोः क्वचिद् दृष्टं सख्यमतस्तन्माऽस्तु । किन्तु कृपणोऽहं वरमेकं याचे, इत्याह—

नरान्मूढाँस्तत्तजनपदसमासक्तमनसो
हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनाना सौरभ्यैः सततमलिनो नित्यमलिनान्
सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥३६॥

नरान्मूढाँस्तत्तज्जनपदेति, भो त्रिदशतटिनि ! त्वत्तीरतरवो वृक्षा नः सखायः सन्तु भवन्त्वित्यन्वयः । ननु मत्तीरतरुमित्रत्वमिच्छस्यतो विक्षिप्त एव त्वमिति चेत्तदप्यास्ताम् न मानभंगः । वस्तुतो विचार्यमाणे विलक्षणशक्तिमत्या किं किं न घटते, अपि तु सर्वमुपपद्यत एवेत्यर्थः । तदुक्तं रामायणे—

जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा ।
जडसङ्गाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥इति॥

महदुक्तेः, लौकिकवाक्यं च, सत्सङ्गाद् भवति हि साधुता खलानाम् साधूनां न हि खलसङ्गमात् खलत्वमित्यर्थः । एवं च त्वत्सत्तायां विलक्षणः प्रभाव इति भावः । अत एवमनुमिनोमि त्तत्वत्तीरतरवस्तत्तज्जनपदसमासक्तमनसस्तत्त-द्देशे समासक्तं सम्यक्तया निमग्नं मनो येषां तान्पुरुषान् विकचकुसुमव्रातमिषतो विकसितपुष्पव्रातप्रदर्शनव्याजेन मूढान्नरान् सोल्लासं सानन्दं यथा तथा हसन्तो हास्यं कुर्वन्तः सन्तो वर्तन्त इत्यहं मन्ये । तत्र नराणां मूढत्वं किमित्युक्तौ अहो वयमनेकयोन्यटनपरिश्रान्तास्तत्रापि साध्वसाधुपरिज्ञानवन्तश्च । किञ्च विषय-वासनाश्च दुर्निवार्यास्तदुक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥इति॥

एवञ्च किं कुर्मो वयमित्यादिविचारविहीनत्वमेव मूढत्वमित्यर्थः । आस्तां ननु जडत्वेन विद्यमानतरुसख्यप्रार्थनया तव किं फलमितिचेन्न, ते च दयालवो भासन्ते, कथमित्युक्तौ नित्यमलिनान् गन्धविषयलोलुपानलिनो भ्रमरान् तिर्यग्-योनिगतानपि स्वसौरभ्यैस्तदीप्सितविषयैरेव पुनानाः पावयन्त इत्यर्थः । अनेनेदं ध्वनितं तत्पवित्रीकरणं तु गन्धद्वारा कुर्वन्ति, अस्मत्पवित्रीकरणं तु दर्शनेनैव भवत्विति प्रार्थनाशयः । पद्यतात्पर्यं तु भगवच्छक्तेर्विलक्षणत्वाद् भ्रमरतुल्यविषय-लम्पटानस्मान्समुद्धर्तुं तरवोऽप्यलम् तज्जलपानादिना किं वर्णनीयमिति ॥३६॥

नन्वरे ! किमयमेतावानाग्रहस्तव किमर्थमिति चेत् शृणु ! भो अनघे ! निष्कपटे ! अत्रैवमस्ति 'कृतिसाध्येष्टसाधनताज्ञानमन्तरा न कस्यापि प्रवृत्तिर्युज्यते न भवति' तत्र त्वदवलम्बनकर्तारस्तु बहवो दृश्यन्ते– एवञ्च गतानुगतिको लोको न पारमार्थिक इति न्यायेन मत्प्रवृत्तिरित्याह– प्रपद्यन्ते लोका इति।

प्रपद्यन्ते लोकाः कति न भवतीमत्र भवतीं
परं तत्रोपाधेः स्फुरति यदभीष्टं वितरसि।
शपे तुभ्यं मातर्मम तु पुनरात्माऽयमनघे !
निसर्गादेव त्वय्यमितमनुरागं विधृतवान् ॥३७॥

हे मातः अत्र भवतीं पूज्यामित्यर्थः, अत्रतत्रभवच्छब्दौ पूजार्थकौ। तथा चात्र भवतीं पूज्यां भवतीं त्वां लोका जनाः कति न प्रपद्यन्ते कियन्तो न प्रपन्ना वदेति शेषः। अपि तु बहवः शरणं प्राप्ता इति भावः। तत्र अनेकप्रवृत्तौ हेतुं शृणु– अत्र विषये त्वन्निकटे उपाधेरिति हेत्वर्थपञ्चमी। उपाधेः सत्त्वादित्यर्थः 'उपाधिर्धर्म-चिन्तायामिति विश्वः' तथा च धर्मचिन्तायाः सत्त्वाल्लोकप्रवृत्तिरिति भावः। किञ्च परं यदभीष्टमभिलषितं यदत्र स्फुरति अस्तित्वेन प्रकाशते तद् वितरसि च ददासि च, अतो हेतोरत्र बहूनां प्रीतिरिति सिद्ध्यति। मम तु जगन्नाथाभिधाभिमानिनस्तु अयं त्वत्पुरोवर्त्ती आत्मा देही चिदाभासे निसर्गात् स्वभावत एव त्वयि अनुरागं प्रीतिं विधृतवान् इति जानीहि, न तु केवलं ज्ञानतः प्रवृत्तिरिति एतद्विषये संशयश्चेत् पुनः अहं तुभ्यं शपे त्वच्छपथं करोमीति चरमोपायज्ञापनमित्यर्थः।

सर्वत्र निश्चयवाक्ये शपथदर्शनादिति भावः। विशिष्टपद्यतात्पर्यं तु 'यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोक' इति न्यायेन मदीया प्रवृत्तिः सुतरां अतः मदीयोऽयमित्यभिमानो धर्तव्यस्त्वयेति हार्दम् ॥३७॥

ननु त्वयोक्तं सर्वेषां प्रवृत्तिस्तु 'इदं मदिष्टसाधनमिति' ज्ञानपूर्वकं मदीया प्रवृत्तिस्तु केवलमनुरागेणेति सूचितम्।

वस्तुतस्तु, अनुरागस्तु दुर्लभ एव, कुत इत्युक्तौ विषयवासनावासितान्तः-करणानां तु पञ्चविषय एवानुरागस्तस्मान्मदीयोऽनुरागस्त्वय्येवेत्युक्तिरसङ्गता इति चेत्सत्यं तत्र किञ्चिदाश्रयबलेन तेषां त्वय्यनुरागो मा भूत्, मम त्वनुरागस्त्वय्ये-वास्तीत्याह–

कियन्तः सन्त्येके सततमिह लोकार्थघटकाः
परे पूतात्मानः कति च परलोकप्रणयिनः।
सुखं शेते मातस्तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ॥३८॥

कियन्तः सन्त्येक इति। इह लोके सततं लोकानामर्थघटकाः परोपकारिण इत्यर्थः 'परोपकाराय सतां विभूतय'' इति महदुक्तेः, तेषामिदमेव बलमीदृशाः कियन्तः सन्ति। पश्य बहवो वर्तन्त इत्यर्थः। तथा एकेऽन्ये पूतात्मानः पवित्रदेहा अग्निहोत्रदर्शपूर्णमासवाजपेयान्तानि कर्माणि कृत्वा शुद्धान्तःकरणाः। तदुक्तम्—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्।
मुमुक्षूणामपेक्षोऽयमात्मबोधो विधीयते ॥इति॥

महदुक्तेः तेषां तदेव बलं एतेऽपि बहवः सन्तीत्यर्थः। तथा कति च परलोकप्रणायिनः परो यो लोकः तस्यातिरिक्तं पुरुषं तं प्रणमन्ति ईश्वरबुद्ध्या नमस्कुर्वन्ति। ईदृशा अपि बहवः। एवञ्च नरकपातादिश्रवणहेतुना सत्कर्मसु प्रवृत्ता बहव इत्यर्थः।

अतस्तेषामनुरागोऽस्तु, वा मास्तु। कर्मणैव हि सिद्धिमास्थिता जनकादय इति गीतोक्तेः। ते सर्वे बलवन्त इत्यर्थः। अयं त्वत्पुरोवर्ती जगन्नाथाख्यः ईदृशनाम्ना सर्वजनप्रसिद्धस्तदाचरणं तु किं वक्तव्यं दुष्टाग्रेसरो दुराचारी निर्लज्जः कृतघ्नोऽशुचिः आशापाशशतप्रबद्धमना देहात्मवादीत्यादिदोषशतावृतः एवं च मादृशो नान्यः कश्चनेति सिद्धान्तः। तस्मान्मदीयावलम्बनं किमस्ति ? नास्त्येव खलु, तथा चेहलोके न कोप्याश्रयो यत्किञ्चित्साधनाभावात्परलोकेऽपि नास्त्येवेति सिद्धम्। वस्तुतोऽनुरागस्त्वन्तःकरणधर्मः तस्यान्तःकरणस्य सुखावलम्बेन विना क्षणं न स्थितिः। एवं च त्वय्यनुरागस्तु गले पतितः। अत्र दृष्टान्तः, यथा कृतापराधः कश्चन दण्डनीयश्चेत् स्वस्वामिनिकटं प्राप्य दीनंवदनः क्षम्यतामिति प्रार्थनसमये तस्यानुरागो नास्तीति वक्तुमशक्यं तदतिरिक्तावलम्बनाभावादित्यर्थः तथा ममाप्यबलम्वनं नास्तीति सम्यक् विचार्यैव तव कृपातः कृपाया हेतुना त्वय्येव निहितः स्थापितो लोकद्वयभरो भारो येन सः तथाभूतः। अयमेवं चैहिकसुखन्तु कीर्तिसम्पादनमामुष्मिकं तु सूर्यलोकादिसत्यलोकपर्यन्तसम्पादनं तदप्यैहिककीर्तिसम्पादनानुमेयं, एवञ्च तदुभयप्राप्तिस्त्वत्कृतकृपातः भविष्यतीति-निश्चित्य सुखं शेते निद्राति। विशिष्टतात्पर्यं तु— 'कुपुत्रो जायेत क्वचिदपि कुमाता न भवतीति' न्यायेन त्वदेकशरणम्, अतस्त्वदीयकृपैव मत्कार्यसाधिका तस्मात्किमिति चिन्ता विधेया मयेति ॥३८॥

ननु यत्त्वयोक्तं पूर्ववाक्ये अयं जगन्नाथ ऐहिकामुष्मिकभारं त्वयि संस्थाप्य शेते इति तत्रैवं भाति, अतिधाष्ट्र्योक्त्या मां जेतुमिच्छसीति चेन्न अगतिकत्वा-देवेदृशोक्तिरित्याह—

अविश्रान्तं जन्मावधि सुकृतकर्मार्जनवतां
सतां श्रेयः कर्तुं कति न कृतिनः सन्ति विबुधाः ।
निरस्तालम्बानामकृतसुकृतानां च भवतीं
विनाऽमुष्मिँल्लोके न परमवलोके हितकरम् ।।३९।।

अविश्रान्तं जन्मावधीति, वस्तुतो विचार्यमाणे बहवो वर्तन्तेऽत्र तारकास्ते के इत्युक्तौ, अविश्रान्तं विश्रामरहितं यथा स्यात् तथा जन्मावधि देहान्तरमवधीकृत्य सुकृतकर्मार्जनवन्तः पुण्यसञ्चयेच्छावन्तो ये सन्तस्तेषां श्रेयः हितं कर्तुं बहवो विबुधा देवाः पिष्टपेषणन्यायेन स्वभजनानुसारेण च प्रवृत्ताः सन्ति। न तु निरस्तालम्बानां निराश्रयाणां केऽपि सन्ति ? तत्र निरस्तालम्बाः के ? तथाहि अकृतसुकृताः– न कृतं सुकृतं यैस्ते। तत्र सुकृतं च किमित्युक्तौ सुष्ठु कृतं पर्याप्तं पूर्णमित्यर्थः, "युगपर्याप्तयोः कृतं इत्यमरः ।"

तच्चान्नधनादिभिः परप्रीणनं तथा कायेन यत्किञ्चित्परपीडानिवारणं गोब्राह्मणादीनाम्। तथा वाग्व्ययेन परोपकारश्च, तथा मनसा पराभीष्टचिन्तनमित्यादीनि सुकृतानि भवन्तीत्यर्थः। ननु सुकृतशब्देन यजनयाजनाध्यापनादीनि किन्न सन्तीति चेत्। सन्त्येव तानि तु शास्त्रोक्तरीत्या आचरितानि चेत् किञ्चित्सुखकराणि न्यूनातिरिक्तं चेत् प्रायश्चितताहार्णि भवन्ति। तदुक्तम् "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्" इति, वस्तुतस्तन्निन्दास्तुतौ नास्माकं तात्पर्यं किन्तु अल्पायासदानि बहुफलदानि चैतान्येव, तदुक्तं भगवता:–

समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम्।
तानुद्धरिष्ये न चिरादापद्भ्यो नौरिवार्णवात् ।।इति।।

एतेन किं ध्वनितम् ? ईदृक्सुलभकर्मण्यपि येषामप्रवृत्तिस्त एवाकृतसुकृतिन इति पर्यवस्यतीति भाव। तथा च ईदृशालस्यवतामस्मदादीनाममुष्मिन् लोके, 'सप्तम्या विषयत्वमर्थः। तथा च परलोकविषयकफलदाने भवतीं त्वां विना परमन्यं हितकरं कल्याणकरं नावलोके न पश्यामि, अतस्त्वत्तीरे शेतेऽयमित्युक्तम्। पद्यतात्पर्यं तु हे सर्वज्ञे ! भगवति ! मदीयं पुनरुक्तिदोषग्रस्तवाक्यमिव वाक्चालनं तु अतिकष्टाकृष्टचित्तत्वेनेति जानीहि। अन्यथेदृक्प्रार्थनमनर्थकमेव स्यात्। अतः शीघ्रं दर्शनं देहीति ।।३९।।

नन्वरे ! त्वयोक्तं दर्शनं देहीति तदर्थश्चैवं खलु 'चक्षुःप्रत्यक्षविषयीभूता भवेति' तथा चेदृशमूढोद्धरणे एतावान् प्रयासोऽपेक्षितः, किं वद शीघ्रं तस्मान्मम सामर्थ्यं नास्तीत्यभिप्रायं स्वीकृत्य भाषसे इति सिद्धम् इति चेत् तद्धेतुं शृणु इत्याह—

तवालम्बादम्ब ! स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमैदास्यं यदि भजसि भागीरथि ! तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥४०॥

तवालम्बादम्बेति, हे क्रोधाकाराङ्कुशोज्ज्वले ! भगवति ! तवालम्बात् आश्रयात् । अत्र हेत्वर्थपञ्चमी । एवञ्च त्वदाश्रयहेतोः स्फुरदलघुगर्वेण स्फुरन्देदीप्यमानो यः अलघुर्गवः पूर्णाहङ्कारो यस्य तादृशेन मया सर्वे हितार्थे प्रवृत्ता ये ते अवज्ञासरणिं नीताः प्रापिता इदमेकमनुचितं कर्मेत्यर्थः, तदपि सहसा अविचार्यैवेत्यर्थः, तत्र कोऽसौ विचार्य इत्युक्तौ एनां पावनीं सन्त्यज्य अस्मान् शरणमागच्छ वयमुद्धरिष्याम इति अनेके महान्त आहुस्तदा अहं क्षुधातुरा जननीं स्मरन्तीति महद्वाक्यं संस्मृत्य तेषामुपदेशवाक्यमनुपश्रुत्यैव अङ्गीकृतान्तां बुद्धिपूर्वमेवावलम्ब्य ताँश्च तिरस्कृत्य त्वत्पादमूलमुपसृतः । किञ्च तथा सुरगणा इन्द्रादय "इन्द्रो यातो वसितस्य राजा इति श्रुत्या तेऽपि समाराध्या यद्यपि, तथापि तत्र दोषानुसन्धानं कृत्वा तेऽप्यवज्ञासरणिं नीताः । अवज्ञाता इत्यर्थः । ननु को वा दोषस्तत्रेति चेत्तदुक्तम्—

ह्यनम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥

इति महदुक्त्या तथा प्रत्यक्षतया अनुभूयमानत्वाच्च अमृततन्वीं त्वामाश्रित्य ते तिरस्कृता इत्यपराधद्वयम् ।

एवञ्च प्राचीनकर्मणा ईदृश्यवस्थायां प्रापितायां इदानीमस्मिन् काले औदासीन्यं यदि भजसि तच्चायं देवब्राह्मणद्वेषी दुर्जनो वेदविरुद्धाचरणशीलः ईदृशः किमर्थमुद्धरणीयो मयेति उपेक्षावलम्बनं कृतं चेत्तदहं निराधार एव स्याम् । तदा हे भागीरथि ! अनायासबुद्ध्येदं दर्शितं तत्कृततपःफलदाननिमित्तेन अण्डुकटाहं भित्वा अत्रागताऽसि एवञ्चात्रागमने तेन तपः कृतमित्येव हेतुः खलु, तर्हि मयाऽपि किञ्चित्तप आचरितमवेहि, तथाहि । तप सन्तापे इति धातुः, तर्हि तप्यत इति तप इति विग्रहे तादृगर्थो लभ्यत एव । तस्मान्मदर्थं द्विपञ्चाशत्सोपानानान्तरितोच्चस्थानारोहणे तव कोऽतिप्रयासः अपि तु नैवेत्यर्थः ।

नन्वरे ! स्वेच्छया प्रवृत्तौ न प्रयासः सत्यं परञ्च परेच्छया प्रवृत्तिसङ्गमे प्रयासो नास्तीति को वदेद्ब्रूहीति चेत्, शृणु अत्रैवमस्ति– 'अहं भक्तिपराधीनोह्यस्वतन्त्र इव द्विजेति' भगवद्वचनं तस्मात् स्वप्रतिज्ञामृतां कर्तुं को नाम नानुसरेत्, अपि तु सर्वेऽप्यनुसरन्त्येवेत्यर्थः । किं बहुना जारचोरशिखामणयोऽपि स्ववाचमृतां कर्तुमनेकरीत्या प्रवर्तन्ते तदा किमु वक्तव्यं महान्तः करिष्यन्ति, करिष्यन्त्येवेति भावः । तस्मात्स्वप्रतिज्ञामृतां कुरु नो चेत्तवैव हानिरित्यर्थः । नन्वास्तां नाम हानिर्ममेति चेत्, अहं

केषां पुरोऽग्रतो गत्वेति शेषः, रोदिमि। वर्तमानसामीप्याद्वर्तमानक्रिया ज्ञेया। रुद्यां त्वमेव कथय वदेत्यर्थः। हा खेदे। अरोदीदिति भावः, विशिष्टतात्पर्यं तु श्रीमतां निकटं प्राप्य रुदिर अश्रुविमोचने धातुः। एवञ्च तद्धातुघटितपदप्रयोगे सत्येव इयं शीघ्रं सक्रोधमागमिष्यतीत्यभिप्रायेणैव श्रीसन्निधावमङ्गलपदमवश्यमिति ॥४०॥

नन्वरे दुष्ट! किमिदममङ्गलसूचकं प्रवदसि, अहं न सहे, कुत इत्युक्तौ अदातरि प्रयोगयोग्यमत्र योजयसि तस्मान्मया त्वं न निरीक्ष्योऽसि॥ यथा दीनस्यापि पदे दत्ते हीनत्वं नैव मुञ्चतीति न्यायेन धूर्तस्त्वं मिलितोऽसीति मन्ये, तथापि स्वविरुदरक्षणायैव त्वं रक्षणीय इत्येव, आस्तामधुना किं कार्यं मया, वद शीघ्रमिति चेच्छृणु इत्याह—

बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय मुहुः पन्नगगणैः।
न कुर्यास्त्वं हेलामितरजनसाधरणतया
जगन्नाथस्यायं सुरधुनि! समुद्धारसमयः ॥४१॥

बधान द्रागेवेति, भो सर्वानुल्लङ्घ्यशासने भगवति! भक्तवाक्यानुसारेणैवं वर्तस्व कुर्वित्यर्थः। तथाहि प्रत्यक्षदर्शनात् पूर्वक्षण एव द्राक् झटिति परिकरं प्रगाढगात्रिकाबन्धं बधान बन्धयेत्यर्थः। तत्र हेतुः। सर्वत्र दुर्जनविजयारम्भे परिकरबन्धनं समुचितमिदं च सर्वसम्मतमेवेत्यर्थः। अन्यच्च स्वकिरीटे विराजमानं वालेन्दुं चन्द्रं पन्नगगणैः समूहैः नियमय दृढय, एवं कार्यद्वयं कुर्वित्यर्थः। ननु किं रे! सर्वानुल्लङ्घ्यशासनेयमिति मनस्यानीयाधुना किमाज्ञापयसीति वदसि चेत्, नहि नहि तथा। किन्तु त्वदीयनिर्गमनं तु मदुद्धारायैव खलु। खल्वित्यनुनये। तर्हि निर्गमनसमये हुमिति क्रोधबीजं निर्गच्छेदेव त्वन्मुखात्। तत्र न सन्देहः। तदा त्वत्कृतहुंङ्कारमात्रेण यावता विश्वप्रलयशङ्का स्यादेव तदा त्वत्किरीटस्थशिशु-शशिनोधःपतनं कुतो न स्यात् अपितु स्यादेव। तस्मात्तदानीन्तनापशकुननिमित्तेन त्वनिर्गमनं न स्याच्चेत् ममैव कार्यहानिप्रसङ्गः। अतः प्रार्थितमिदं कुविन्दं कुर्विति। आस्तां ननु तत्र हुङ्कारेण विना कार्यं नैव स्यादिति वदसि किमिति चेत्, अत्रैवमस्ति– 'यावन्मन्त्रारम्भे कवचाय हुमिति बीजप्रयोगदर्शनात् शत्रुविजये तादृशबीजप्रयोगस्त्वावश्यक एवेति सिद्धयत्यतो बालेन्दुं नियमयेति प्रार्थितं न त्वाज्ञापितमिति भावः। वस्तुतस्त्वदीया शक्तिर्विलक्षणा तथाऽप्यस्मत्कृतबुद्धिपूर्वक-कृतापराधनिवृत्तिः स्याद्वा नवेति संशयादेवैतावत्सामग्रीसम्पादनप्रार्थना ज्ञेया।

अतो हेतोरितरजनसाधारणतया अल्पयाऽपि जनसाधारणदृष्ट्या हेलां विलासं न कुर्याः, मा कुर्वित्यर्थः। हेलावज्ञाविलासयोरिति विश्वः। तत्र हेतुः। सुरधुनीति तदर्थश्चेन्द्रादिसमाराध्येत्यर्थः। अत एवेदृशस्याद्वितीयपापिनो जगन्नाथस्या-

यमिदानीन्तनस्येत्यर्थः, समुद्धारसमयः सम्यगुद्धारकाल इत्यर्थः। ननु अयमेवोद्धार-समय इति वदतस्तव किं कालान्तरे न भवेदिति संशय इति चेन्न त्वद्दर्शनेनैव कृतार्थोऽस्मि। तदाशयस्त्वेवं मद्द्वेषकर्तृषु बहुतरेषु विद्यमानेषु सत्सु त्वदामगमनपूर्वं यदि मदुद्धरणं स्यात्तर्हि त्वदीयसामर्थ्यद्रष्टार इमे ब्रह्मादय इदमत्याश्चर्यं पश्यन्तो हाहाहाहेत्युद्धोष्य अनुहसन्तः स्वगृहं गच्छेयुरिति मन्मनोऽभिलषितं जानीहि। पद्यतात्पर्यं तु ममोद्धारोऽस्तु वा माऽस्तु परञ्चेयं दीनजने मनोरथानुकूलव्यापारवती सत्यमिति सार्वजनीनप्रतीतिरस्त्वित्यलं विस्तरेण ॥४१॥

किञ्च हे मातः! एतावत्कालपर्यन्तं यथामति यथाश्रुतं स्वमौढ्यमाच्छाद्य पण्डितवत् श्लोकरूपेण त्वं स्तुताऽसि, तथापि दृष्टिपथं नायासि किमिदमिति चित्रं एवञ्च तवैव करुणार्णवताविनाशो नास्माकमित्याह,

सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं
यदि त्वं मामम्ब! त्यजसि समयेऽस्मिन्सुविषमे।
तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते,
निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥४२॥

सदैव त्वय्येवार्पितेति, हे अम्ब! सदैव नक्तन्दिवमहर्निशं त्वय्येवार्पितः स्थापितः कुशलचिन्ताभरः सुखजनकोपायभरो भारो येन तादृशमिमं मां यदि त्यजसि विकारोपेत कटाक्षमाचरसि, अयं सदा रुदतीति, तर्हि तत्राप्यस्मिन् सुविषमसमये, एतेनेदं ध्वनितं मन्निकटवर्तिनां निन्दकानां ब्राह्मणादीनाम् अहो अद्यापि न किञ्चिद्दृश्यत इति स्वनासोर्ध्वकरणसमर्थ इत्यर्थः एवञ्चास्मिन्, काले कालविलम्बमवलम्बसे चेत् तर्हि सार्वजनीनमास्तिक्यं काचनेयं भागीरथी विश्वोद्धर्त्र्यस्तीति यो मनोव्यापारो विश्वासः, खल्विति निश्चये। अस्तमयते अस्तं प्राप्नुयादित्यर्थः। तर्हि त्वन्निष्ठनिर्व्याजकरुणा फलाभिसन्धानरहितकरुणा निराधारा स्यात् निष्फला स्यादिति भावः।

विशिष्टपद्यतात्पर्यं तु तन्नाशकथनमन्तरा अभिमानोद्वारो न स्यादतस्तदेवास्म-त्कार्यसाधकमिति यया कया वा रीत्या नास्तिकशिरोमणीनां मुखभङ्गोऽस्त्विति हृद्यम् ॥४२॥

इदानीं तादृशवाक्यप्रयोगानन्तरं दुरन्तचिन्तानिमग्नस्समभवदिति प्रतिभाति, का वा चिन्तेत्युक्तौ तथाहि अहो इतः परं किमाचरणीयं मया तत्प्रसादार्थं सामप्रकारं वाक्यं प्रयुक्तम्। ततश्च त्वत्करुणा निष्फला स्यादित्यपि कठोरवाक्यं च प्रयुक्तम्। अद्यापि भगवती न समुदेति नायाति। इतः परं वक्तव्यांशस्तु नावशिष्टस्तस्मादितो मरणमेव श्रेयस्करमिति विचार्य तदर्थमेवेतस्ततो विलोकयन् तदवसरे स्वपरिकरबन्धनतत्परां चाक्षुषप्रत्यक्षविषयीभूतां स्वसमाराध्यां देवतामपश्यत्

इत्यग्रिमवाक्येन कल्पनीयं भवत्यत: सङ्गतमेवेत्यर्थ:। तथा चादृष्टपूर्वदर्शनेनात्युत्सुकतया स्तोतुमिच्छन् स्वस्य योग्यताऽभावं प्रदर्शयन्नाह—

श्वपाकानां व्रातैरमितविचिकित्साविचलितै-
र्विमुक्तानामेकं किल सदनमेन: परिषदाम्।
अहो मामुद्धर्तुं जननि! दृढयन्त्या: परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशु: ॥४३॥

श्वपाकानां व्रातैरिति, भो भगवति! करुणार्णवे किं कृतमिदं त्वया अहो कष्टम्, मया तु केवलं 'नूनं स्वार्थपरो लोको न वेद परसङ्कटमिति न्यायेनात्र विद्यमानानां दुर्जनाग्रेसराणां दशनपातनबुध्या संस्तुताऽसि। त्वन्तु परिकरं बध्वा धावसि इदं त्वसह्यमेवेत्यर्थ:। एवं च नीचाश्रयेण महतामपमानहेतुरिति न्याय: प्रसक्त: अतएवैतदुक्तम्—

व्रीडा ममाभूत्कुजनप्रसङ्गत-
स्तज्जन्म धिग्यो महतामवद्यकृत्॥

इति महदुक्तरीत्या मां धिगस्तु, नन्वरे! अहं भक्तोदितमृतं कर्तुं जागरूकाऽस्मीति चेत्सत्यं यद्यहं त्वद्भक्तस्तदा सम्यगेव, तत्र नाहं त्वद्भक्तोऽपि तु सर्वैस्त्यक्तस्तत्रापि योग्यैरेव त्यक्तोऽस्मीति न किन्तु श्वपाका: श्वपचाश्चाण्डालास्तेऽप्यमितविचिकित्साविचलिता अतिशयितसन्देहविशिष्टास्तैरपि विमुक्ताया: परिषद; पातकसभा पापसमुदाय इत्यर्थ: तासामहमेकमद्वितीयं सदनं स्थानं किल। तथा चेदं ध्वनितम्। ते श्वपचा अपि मदपेक्षया वरिष्ठा:- कुत इत्युक्तौ, ते स्वज्ञातिकुलनियमितधर्माचरणतत्परा लोकापवादभीता इत्यर्थ:। अहं तु लोकपथातीतचरितोऽस्म्यतस्त्वन्निरीक्षणायोग्य इत्यर्थ:। तथापि मां समुद्धर्तुमिदानीं स्वपरिकरं दृढयन्त्यास्तव श्लाघां प्रशंसां कर्तुं कोऽसौ नरपशु: सदसद्विवेकशून्य: कथं प्रवर्तेत इति शेष:, नैवेत्यर्थ:। विशिष्टपद्यतात्पर्यं तु दीनजनसमुद्धरणाय किं किं न करोषि। साधूनां न किमपि दु:सहं कदर्याणामकार्यं च नास्त्येव। अत: सर्वं योग्यमेव जातमिति ॥४३॥

ननु त्वयोक्तं त्वत्प्रशंसां कर्तुं नरपशु; क: समर्थ इति तत्र त्वदुक्त्या त्वं पण्डितोऽसीति प्रतिभाति इति चेन्न, य: क्रियावान् स पण्डित इति सिद्धान्तान्नाहं क्रियावान् अत: पण्डितोऽपि नेति प्रदर्शयन्नाह—

पुरो धावं धावं द्रविणमदिराघूर्णितादृशां
महीपानां नानातरुणतरखेदस्य नियतम्।
ममैवायं मन्तु: स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातर्यदिह करुणात: क्षणमपि ॥४४॥

पुरो धावं धावमिति भो मातः! द्रविणमदिराघूर्णितेति द्रविणं बलवर्द्धनं मदिरा च देहविस्मारकमद्यं ताभ्यां धूर्णितानि प्रचलायितानि इन्द्रियाणि येषां, एतेनेदं ध्वनितं– कनकं यस्य हस्तेऽस्ति मदस्तस्य किमद्भुतमिति न्यायेन धनमदोद्धतानां धर्माधर्मविचारएव नास्तीति तत्रापि मदिरापानरता मद्यपाः किन्न जल्पन्ति इत्युक्तरीत्या समयासमयविचारशून्या एव ते। तादृशमहीपानां पुरोऽग्रे। धावं धावं वीप्सायां णमुल्। धावित्वा धावित्वेत्यर्थः, नानातरुणतरस्येति अनेकविधस्तरुणतरो नित्यनूतनः खेदो यस्य तस्य। राजसेवा मनुष्याणामसिधारावलेहनमिति प्रसिद्ध्या तत्सेवकानां न सुखं किञ्चिदस्ति, तदुक्तं को नरक; परवशता इति। एवं परवशानां तत्तुल्यखेदविशिष्टानां न सत्क्रियावसर इति भावः। ननु तर्हि यत्र यत्र दुःखं तत्र तत्र न कस्यापि प्रवृत्तिर्भवतीति चेत्सत्यम्, तच्च स्वहितपदार्थज्ञानवतामेव अहं च कीदृशः स्वहितशतहन्तुरिति स्वस्य यद्धितशतं। हिताः सदुपदेशकर्तारस्तेषां यच्छतं तस्य हन्ता तदुक्तमननुकूल इत्यर्थः।

ननु सर्वे स्वहिततत्परा एव दृश्यन्त इति चेत् न, अतएव जडधिय इति जडा धीर्यस्येति विग्रहे जडा कृत्यविचारशून्या धीर्य स्तादृशस्य त्वद्वियोगो जात इति एवञ्चायं ममैव मन्तुरपराधे न तु त्वत्प्रसादावकाश इत्यर्थः। एवं च ते त्वत्सम्बन्धिवियोगो मदपराधमूलक इति भावः। आस्तां हे भगवति! यदित्यव्ययं यस्मात् कारणात्त्वया करुणा कृता, अतः परं क्षणमपि लवनिमेषार्धमपि त्वद्वियोगो यथा न स्यात्तथा करुणा विधेयेति प्रार्थना ज्ञेया।

विशिष्टपद्यतात्पर्यं तु मत्तभूपाधमोपासनावासनाक्रान्तानामभाग्यानां भगवतीदर्शनन्त्वन्धदीपन्यायवत्प्रसक्तमतो धन्योऽस्मीति ॥४४॥

हे भगवति! वस्तुतो विचारिते त्वद्वियोगो त्वन्निष्ठानां नास्त्येवेत्याह—

शरच्चन्द्रश्वेतां शशिशकलशोभालमुकुटां
करैः कुम्भाम्भोजे वरभयनिरासौ च दधतीम्।
सुधासाराकाराभरणवसनां शुभ्रमकर-
स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ॥४५॥

शरच्चन्द्रश्वेतामिति, शरच्चन्द्रवत् श्वेतामित्यादिविशेषणविशिष्टत्वदानं तु मूढजनप्रवृत्त्यर्थं ज्ञेयम्। वस्तुतो निर्गुणस्य गुणारोपणमनुचितम्, तथापि "स्थूले भगवतो रूपे मनः सन्धारयेद्धिये" ति विधिश्रवणात्। अथ च स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेदित्यनेन सूक्ष्मरूपमावश्यकमिति सिद्धम्, तत्रापि ज्ञानाद्ध्यानं विशिष्यत इति भगवदुक्त्या तु अस्मत्सदृशानां ध्यानमेव श्रेयःसम्पादकमिति पर्यवसितोऽर्थः। तथा च शरदृतौ विराजमानचन्द्रवच्छुभ्रमित्यत्र शुभ्रत्वं च शुद्धत्वम-

विद्यावृत्तिसम्बन्धशून्यत्वं तद्वतीमित्यर्थः। एवं चायमेवार्थः सम्यगिति प्रतिभाति, कुत इत्युक्तौ भगवत्या अनुपमेयत्वादिति भावः, किञ्च चन्द्रलेखाया भूषणत्वमपि न स्यात्। अतस्तादृगर्थस्यौचित्यं ज्ञेयम्। आस्तां तथा शशिशकलेन चन्द्रखण्डेन शोभालः शोभमानो मुकुटो यस्यास्तां अत्रादन्तेभ्योलजिष्यत इति वचनान्मत्वर्थीयोऽलच प्रत्ययः। अनेन विलक्षणभूषणद्योतनेन प्रेक्षावत्प्रवृत्तिर्यथा स्यादित्यभिप्रायः। तथा करैः कुम्भाम्भोजे दधतिं कुम्भोऽमृतघटोम्भोजं कमलं च ते दधतीं तत्र घटप्रदर्शनेन भक्ताभीष्टप्रदाने पूर्णत्वं दर्शितं ज्ञेयम्। अथ चाम्भोजपदेनाम्भोजस्य पङ्कजत्वादिदं ज्ञापितं संसारपङ्कनिमग्नस्योत्पाटने कमलोत्पाटनवत् सुलभः प्रयत्न इति लीलामात्रेणेत्यर्थः, तथा वरभयनिरासौ दधतीं वरो नाम भक्ताभीष्टफलप्रदानाभिमानसूचिकां मुद्राम्। अथ च भयनिरासो निरसनमभयसूचिकां मुद्रां च दधानेत्यर्थः। तथा सुधासाराकारामिति सुधायाः सारो बलं अजरामरत्वप्रदानं स एवाकारो येषां तानि ईदृशानि वसनान्याभरणानि च यस्यास्ताम्, एवं च चतुर्भिर्हस्तैस्तैश्चत्वारि वस्तूनि स्वीकृत्य विराजमानामित्यर्थः। अथ शुभ्रमकरस्थितां शुभ्रमकरो मत्स्यस्तत्र स्थितां शुंभ्रमत्स्यवाहनामित्यर्थः। अत्र जलचरवाहनत्वप्रदर्शनेनेदं सूचितम्, ईदृशीं त्वां ये ध्यायन्ति तेषां परिभवस्त्वन्निकट इतिशेषः अनादरो नोदयति न भवतीत्यर्थः।

विशिष्टपद्यतात्पर्यं तु सगुणोपासनातत्पराणामपि निर्गुणब्रह्मसाक्षात्कारजन्य-फलदाने बद्धपरिकराऽसि। तस्मात्त्वां परित्यज्य विषयाशाहताश्चेत्तवापराधः कः न को पीति ॥४५॥

किञ्च भो मातः! अतिविषमविषयलोलुपानां मन्दानां प्रवृत्तिं दृष्ट्वा तदनुरूपमुपायं योजयेत्याह—

मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
त्रस्तं किञ्च सुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः।
वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि!
त्वं तापं तिरयाधुना मम भवव्यालावलीढात्मनः ॥४६॥

मन्त्रैर्मीलितमिति, भोस्वर्लोककल्लोलिनि! गङ्गे! मन्त्रैर्मीलितमित्या-दिष्वेककर्तुरनभिहितत्वात्कर्तरि तृतीया। तथा च मन्त्रैर्मीलितमित्यत्र भावे क्त प्रत्ययः, तथा च मन्त्रा निलीना गुप्ता इत्यर्थः। तत्र हेतुः दीक्षा प्रकरणे सप्तकोटि-महामन्त्राधिकार उक्ताः। अतः कतिपयमन्त्रा गुरुभिरुपदिष्टास्ते च विरुद्धधर्मरतं मां दृष्ट्वा मच्छरीरे लयङ्गता इत्यर्थः। एवञ्च मन्त्राधिकारं प्राप्य पुनर्नोच्चारितत्वादिति भावः। तथा औषधैर्मुकुलितं संकोचितम् एतस्य कोऽर्थ इत्युक्तौ अतिशयित-विषयसुखेच्छया विषयविनिर्मितमात्रासेवने प्रवृत्तोऽपि तत्तदौषधोपयोगाय पथ्यापथ्य-विचारावश्यकत्वात्, मम तु तदभावादौषधानि लज्जितानीति भावः। तदुक्तम्

'पथ्येऽसति गदार्तस्य किमौषधिनिषेवणम्' इति एवञ्च विषयलम्पटाः पथ्यं न कुर्वन्तीति लोकानुभवश्चास्तीति सर्वसङ्गतमेवेत्यर्थः। तथा सुराणां गणैः रुद्रादिभिस्त्रस्तं भीतमेतस्य कोऽर्थ इति चेत्- रुद्रादयः खण्डेश्वरसत्यनारायणेत्यादिसंज्ञां प्राप्य हितं कर्तुमुद्यता बहवः तथाऽप्यहं तत्कृपासम्पादनाय प्रवृत्तः सुतराम् अतस्ते देवास्त्रस्ता उपेक्षातत्परा अभवन्नित्यर्थः, तदुक्तम्—

भजन्ति ये यथा देवान् देवा अपि तथैव तान्।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः॥

इति, एवञ्च प्रति संवत्सरविहितकुलधर्माघनाचरणहेतुकानिष्टदानमपि त्यक्तवन्त इति भावः। किञ्च गारुत्मतैरिति गारुत्मतसंज्ञकोमणिविशेषस्तैः ग्रावभिर्विदलितं विदीर्णमणयः स्फुटिता इत्यर्थः। 'गारुत्मतो गरारातिर्गरुडोद्गीर्ण इत्यपि' इति केशवः।

एवञ्च यावद्रोगनिवारका मणिमन्त्रादयः सन्ति तत्र तेषां मध्ये एकोऽपि नास्मद्रोगनिवारणसमर्थ इत्यर्थः। अतो हेतोर्मम तापं निवारयेति प्रार्थनमवेहि। ननु तापं निवारयेत्युक्तं तत्र तापादिनिवारणे व्यजनादिवन्मणिमन्त्रादयो वर्तन्त एवेति कुतो न गृह्णासि इति चेन्न, मदीयतापनिवारणं तु त्वदतिरिक्तस्यासाध्यम् कुत इति चेत् भवव्यालावलीढात्मन इति, भवः संसार एव व्यालः सर्पस्तेन लीढ आस्वादितः दष्ट इति यावत् तादृशः आत्मा देहो यस्य। एवञ्च ईदृशविषयव्याप्तस्य मणिमन्त्रादयः सन्तीति को वदेन्न कोऽपीति सिद्धम्। तस्मात् त्वमेव समर्थाऽसि इति दर्शयितुं वीचिक्षालितकलियां हत पदेति कालियस्य तत्संज्ञक सर्पविशेषस्य यः अहितः शत्रुः कृष्णः, तस्य पदं चरणं ऊर्मिभिः क्षालितं तत्पदं यया तत्संबुद्धौ। इदं विशेषणं तत्र सम्बुद्धेः पराङ्मुखस्य स्वाभिमुखीकरणत्वार्थकतया अगतिकं मां पश्येति तदर्थः सूचितः। तथा च हे सुरतरङ्गिणि दुरत्ययविषसमाक्रान्तविष्णुपदप्रक्षालनसमर्थासि यदा तदा अविद्याविलसितभवव्यालसन्दष्टविषापहरणे तव न प्रयासलेश इति ज्ञापितम्।

पद्यतात्पर्यं तु- अहो अबाधितदुरिताचरणनिमग्नैः उपायान्तरसहस्रं परित्यज्य त्वमेव सेव्या। नान्यः सेवनीय इत्यधुना मन्निश्चयो दुर्धरः सम्पन्न इति॥४६॥

नन्वरे त्वद्वागविलासेन ममेत्थं भाति। आदेहपातं पापलालसैव तवास्तीति चेत् तदेव सत्यमित्याह—

भवत्या हि व्रात्याधमपतितपाखण्डपरिषत्
परित्राणस्नेहश्लथयितुमशक्यः खलु यथा।
ममाप्येनं प्रेमा दुरितनिवहेष्वम्ब जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः॥४७॥

भवत्या हि व्रातेति, हे अम्ब! अस्मिन् जगति ईदृशस्वभाव एव सर्वेषां दुरितनिवहेषु पञ्चमहापातकादिष्वेवातिप्रेमा नान्यत्रेति, नन्वरे दुर्जनशिरोमणे मत्पुरत: स्थित्वा अनन्वितं प्रलपसीति चेत्, इदमनुचितमेव नेति को ब्रूते। तथापि सर्वैर्ब्रह्मादिमशकान्तैरपि। स्वभाव: यतो दुष्परिहर: दुःखेनापि त्युक्तुमशक्य: खलु मे वद वदेत्यर्थ:। तथा च दुस्त्यजो हि स्वभाव इत्युक्त्या स्वभावस्य दुस्त्यजत्वं सर्वानुभूतं इति भाव:। ननु तर्हि 'स्वभावविजय: शौर्यमिति' महदुक्त्या तन्निग्रह-स्यावश्यकत्वं दृश्यत इति चेत्! इत्थं मा वद, कुत इत्युक्तौ ईदृक् प्रतिपादनं च मुखमस्तीति वक्तव्यं दशहस्ता हरीतकीति' वाक्यवदसम्भावितमेवेत्यर्थ:।

अत: भो मात:! अत्रैकं पृच्छते मया। क्रोधं मा कुरु त्वमेव पश्य कीदृशो मम स्वभाव इति। ननु तर्हि ममापि दुष्टस्वभाव एव किमिति चेत् तर्हि दुष्टसुष्ठुपदार्थं नाहं वेद्मि, किन्तु स्वभावो हि दुस्त्यज इत्येव वच्मि। तथाहि व्रात्याधमपतित इति, तत्र व्रात्य: संस्कारविहीनश्चाण्डालादिश्च अधमो दुर्जन: पाखण्ड: धर्माभासवादी, एवञ्च व्रात्याधर्मपतितपाखण्डा ये तेषां परिषत् समाज:, तस्य परित्राणं परिपालनं तद्विषये यस्तव स्नेह: प्रेमभर: स च भवत्या त्वयापि श्लथयितुं शिथिलीकर्तुं अशक्य:, खलु निश्चयेन, तथा मदीयस्वभावोपीति जानीहि इति भाव:। पद्यतात्पर्यन्तु श्रीमत्या: पक्षपातस्तु मादृशेष्वेव गरीयान् इति निश्चित्य सम्वादं कर्तुं प्रवृत्तं इति।।४७।।

भो मात:! एतावत्कालं यद्यन्मयोक्तं तत्सर्वं क्षमस्व गजदन्तवत् यन्निर्गतं तन्निर्गतमेव आस्तां, इत: यद्यदहं याचे तत्तदङ्गीकृत्य देयादेयविचारं परित्यज्य ईप्सितं दातुमर्हसीति वदन्नाह—

दरस्मितसमुल्लसद्वदनकान्तिपूरामृतै
र्भवज्वलनभर्जिताननिशमूर्जयन्ती नरान्।
चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वती
तनोतु मम शं तनो: सपदि शन्तनोरङ्गना ।।४८।।

दरस्मितसमुल्लसदिति भो ताराकान्तितिरस्कारिनासाभरणभास्वरे भगवति शन्तनोर्नृपस्य या सपदि सद्य: काले अङ्गना धर्मपत्नी जातेति शेष:। एतेन किं ज्ञापितं– ब्रह्मशापापदेशेन व्याजेन अकिञ्चित्कर राजन्यसन्तोषाय समागता तथापि किं वर्णनीयं तन्माहात्म्यं इति दर्शयितुं दरस्मितेति विशेषणं तदर्थश्चैवं– दरं ईषदर्थकं तथा च ईषत्स्मितेन समुल्लसत् शोभायमानं यद्वदनं तत्सम्बन्धिनी या कान्ति:, तस्या य: पूर: प्रवाह: कान्तिपरम्परेति यावत्। अतएव अमृतानि पीयूषाणि तै: करणै: भवज्वलनभर्जितान् भव ज्वलन: संसाराग्नि: तेन भर्जितान् तादृशतापविशिष्टामित्यर्थ:। एतादृशान्नराननिशं निरन्तरं ऊर्जयन्ती जीवयन्ती तत्र

अनिशपदेनेदं ध्वनितम्। ईषत्स्मितयुक्तवदननिरीक्षणमात्रेण भवज्वलनशान्तिरिति, अतएव नरानिति बहुवचनसङ्गतिश्च। तत्र ऊर्जयन्तीत्यस्य कोर्थः जीबयन्तीति जीवनं च भवज्वरनिवारणमेव खलु। तच्च प्राथमिकदर्शनमात्रसम्भवे पुनर्जीवन-प्रयोजनं नास्त्येवेति तादृशार्थस्यौचित्यं, एवञ्चेदृशी शन्तनुवल्लभा मम जगन्नाथा-ख्यस्य तनोः शरीरस्य शङ्कल्याणं तनोतु विस्तारयतु तीर्थक्लिन्नं सत् गच्छत्विति भावः। इदानीं तादृशविलक्षणत्वसमर्थनायेदं चिदेकमयं चन्द्रिकेति चितः ब्रह्मणः एकमयी केवल प्रचुरो 'एकं तु केवलं श्रेष्ठ' इति विश्वः। ईदृशी या चन्द्रिका ज्योत्स्ना माया चिच्छक्तिः तस्याः या चयचमत्कृतिः ततज्जीवोपाधितया अनेकरूपेण स्थितिः तां वितन्वती विस्तारयन्तीत्यर्थः। तदर्थश्चैवम्—

अजामेकां लोहित शुक्लकृष्णां।
बह्वीं प्रजां जनयन्ती ँ स्वरूपाम्॥

इति श्रुतिप्रतिपादिता या विद्याऽविद्यास्वरूपिणी तस्या अपि शक्तिप्रदात्री साक्षाच्चिद्रूपा सैवेयं गङ्गेत्यर्थः। विशिष्टपद्यतात्पर्यं तु, अहो इयं अघटित घटनापटीयसी, अत्रोपरि आगत्य मां प्लावितुं तीर्थक्लिन्नीकर्तुं नागमिष्यति किं आगमिष्येत्येवेति तस्मात् शरीरस्य कल्याणप्रार्थना युक्तैवेति॥४८॥

किञ्च भोः कल्मषघ्नि भगवति! पूर्ववाक्ये तनुसार्थ्यक्यं प्रार्थितं तत्र इदमेव बीजं एतच्छरीराश्रयेणैव परमेश्वरप्राप्तिः नरकप्राप्तिश्च। तत्र च 'शुक्ति पतितस्वात्युदकगति' न्यायेन एतत्तनुसंबंधवशादेव त्वद्दर्शनप्रसंगोऽयं मतः कृतघ्नता यथा नस्यात्तथा कर्तव्यं त्वयेति प्रार्थयते—

विभूषितानङ्गरिपूत्तमाङ्गा सद्यः कृतानेकजनार्तिभङ्गा।
मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु॥४९॥

विभूषितानङ्गरिपूत्तमाङ्गेति, इयं भगीरथानीतागङ्गा ममाङ्गानि शरीरावयवान् अमलीकरोतु निष्पापानि विदधातु इति। तत्र ममेति पदेन इदं ज्ञापितं सर्वेषां शरीरावयवाः स्वस्वविहितकर्मसु यदा कदा वा प्रवृत्ताः स्युः, तत् कुत इति चेत् विहितर्मानुष्ठानाकरणे प्रत्यवायश्रवणात् तत्र यमवाक्यं च—

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम्।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतो कृतविष्णुकृत्यान्॥

इति। एवञ्च मद्व्यतिरिक्ताः सर्वे यथाशक्ति प्रवृत्ता एव अहं तु दृष्टश्रुतदण्ड-भीतिं तृणीकृत्य वर्ते। अतस्तत्प्रार्थनं सङ्गतमेवेति भावः, आस्तां सा कीदृशी,

या सद्य: कृतानेकजनार्तिभङ्गा सर्वकृता वर्तमानशरीराचरिताया अनेकजनार्ति: पीडा तस्या: भङ्गो विच्छेदो यया सा इत्यर्थ:। एतद्विशेषणेन इदं ज्ञापितं वर्तमानं कृतं कर्म देहान्तरारम्भकं भवतीति नियम:, इयन्तु मादृशनियमकर्त्री विच्छेदे इदमाश्चर्ये, अतएव इदं विशेषणम् विभूषितेति विभूषितं शोभितं अनङ्गो मदन: तस्य रिपुस्मरहर नाम प्रसिद्ध:। तस्य उत्तमांङ्ग मूर्धास्थानं यया सा, अनेनेदं ध्वनितं निषिद्धकर्मरतस्यापि देहान्तरप्राप्तिबाधिका। यत: तस्माच्छिरोभूषणत्वेन धार्येति स्वीकृतेति पर्यवस्यतीत्यर्थ:।

अत: हे मात:! मनोहरोत्तुङ्गचलत्तरङ्गा सति तदर्थश्चैवं मनोहरा मन्मनसि यादृगपेक्षितास्तादृशा इत्यर्थ:। उत्तुङ्गा: उन्नता: चलन्तश्च तरङ्गा यस्यां सा एवम्भूता सती। अत्र उपरिआगत्य अङ्गान्यमलीकरोतु इति भाव:। पद्यतात्पर्यं तु 'कृतघ्ने नास्ति निष्कृति' रिति सिद्धान्तात् 'ईशानकण्ठलग्नोऽपि वासुकी वायुभक्षण' इति न्यायवत्, त्वन्निकटं प्राप्तस्य तादृशदोषसम्भवो माभूत् इति ॥४९॥

ननु हे तात अत्रागत्येत्यभिप्रायकं वाक्यमसकृत्प्रयुक्तं तत्सर्वं गृहीतं मया तत्र न सन्देह:। परञ्च एवमस्ति त्वत्प्रार्थनानुसारेण दर्शनं तु दत्तं मया। एवञ्च 'लाभाल्लोभ: प्रवर्तते' इति न्यायेन मल्लहर्यौन्नत्यं प्रार्थयसि। इदमनुचितमेव, तत्रापि पूर्ववाक्ये त्वयोक्तं हे अम्ब त्वयि निहितलोकद्वयभरोऽहं सुविषमसमये मां रक्षेत्यतंस्त्वदुक्तं सर्वमङ्गीकार्यं मयेति सिद्धं यद्यपि, तथापि कार्यमात्रं प्रत्यसाधारणकारणमहङ्कार एव तदुक्तम्—

अहङ्कारलये सुप्तौ भवेद्देहोप्यचेतन:।
अहंङ्कृतिविकारोत्थ: स्वप्न: सर्वस्तु जागर:॥

इति महदुक्ते:। एवञ्च ईदृशकार्यस्य तु पूर्णाहङ्कार अपेक्षित:, मम तु तदभावादनुचितमित्युक्तं इति चेत् इत्थं मा वद पूर्णाहंकारकारणमस्तीत्याह—

द्यूते नागेन्द्रकृत्तिप्रमथफणिमणिश्रेणिनन्दीन्दुमुख्यं
सर्वस्वं हारयित्वा स्वमथ पुरभिदि द्राक् पणीकर्तुकामे।
साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्बु-
व्यालोलोल्लासिवल्गल्लहरिनटघटीताण्डवं न: पुनातु ॥५०॥

द्यूते नागेन्द्रकृत्तिरिति। हे कर्पूरवीटिसौरभ्यकल्लोलितककुप्तटे मात:, अत्रैवमस्ति कारणं शृणु। 'द्यूते शिवशक्त्यो: परस्परविजिगीषयाक्षक्रीडासमये ब्रह्माण्डस्थितिर्भवतीति नियम:। तदुक्तं स्कान्दे—

देवीजये भवेत्सृष्टिरसृष्टि र्धूर्जटेर्जये ।
भवतोः खेलसमयो यः सा स्थितिरुदाहृता ।।

एवञ्च तयोः प्राकृतद्यूतक्रीडासमयस्त्वयमेवेति प्रतिभाति । तथा च प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लिप्त इति सांख्यमताभिप्रायेण क्रीडाचतुरा तु देव्येव । अतएव जगत्कर्तृत्वं तस्याः । शिवस्य तु केवलं ध्वंसकर्तृत्वमेव । तत्र ध्वंसकार्ये का वा चतुरता अपेक्षिता । न कापीति सिद्धं, लोकेप्येवमस्माकमनुभवः । गृहनिर्मातु-र्यथा उचितानुचितक्रियाविचारः प्रयोजनं तथा गृहध्वंसकर्तुर्नेति तस्मात् शिवस्य सर्वस्वं पार्वती हरिष्येत्येवेति सिद्धान्तः । तस्य सर्वस्वञ्च किमस्तीत्युक्तौ तद्दर्शयति । नागेन्द्रकृत्तिप्रमथफणिमणिश्रेणिनन्दीन्दुमुख्यं, तत्र नागेन्द्रस्य गजेन्द्रस्य कृत्तिश्चर्म, तथा प्रमथगणः पारिषदगणः । अथ च फणीनां मणिश्रेणयः मणिपंक्तयः स्वशरीर-भूषणीभूतफणिमणय इत्यर्थः, एतेनेदं ध्वनितम्– मणयोऽपि स्वल्पा एवेति, तथा नन्दी वाहनयोजितो वृषभः इन्दुश्चन्द्रः शिरोभूषणत्वेन कल्पितः तथा च उक्तपदार्था मुख्या यस्मिन् तत्सर्वस्वं एतावदेव । तत्र प्रतिविजये एकमेकं स्थापयित्वा क्रमतः सर्वस्वं हारयित्वा च तस्य स्वं न किमप्यवशिष्टं यदा तदा जितं मयेति करतालनयः सअभवत्, तदा पशुपतिः तस्याः आनन्दयुक्तवदनं वीक्ष्य पुरभिदि महादेवे द्राक् झटिति स्वदेहं धनं मत्वा पणीकर्तुकामे सति पार्वती मृदुलहसिता सती तया पार्वत्या साकूतं साशयं यथा भवति तथा तया त्वं वीक्षितासि । तत्र तदभिःप्रायः क इत्युक्तौ हे सपत्नि यदाश्रयबलात् उत्तमाङ्गे शिरोभूषणत्वेन विराजसे अधुना स च मया जितः अतो मदधीनः एवञ्च इतः परं तव वसतिः दुर्लभैव । तथापि वसत्यपेक्षा चेत् मदनुज्ञावर्तिनी सती क्लेशमनुभव इत्यादि भावयुक्तं वीक्षणं तत्, तस्मात्तव क्रोधोत्पत्तिः कुतो न भवेत्, वद, तत्राप्यकृतदौष्ट्यं क्वचित्सह्यं स्वजनकृतं त्वसह्यमेव तदुक्तम् 'सम्भावितस्य स्वजनात्पराभवो यदा स सद्यो मरणाय कल्पत इति ।

अतएव व्यालोलोल्लासीति व्यालोलं चञ्चलं तद्वीक्षणकम्पितं सत् उल्लासि उद्गतः विगतः लासो विलासः सोस्यास्तीति व्यालोलोल्लासि इत्थं यदम्बु अतएव वल्लल्लहरिनवघटाताण्डवमिति वल्लल्लहर्यः चञ्चला लहर्यः तासां या नवघटाः नूतनघटाः घनास्ताभिर्यत्ताण्डवं नर्तनं इतस्ततो धावनं यस्येदृगम्बुजलं नः मादृशान् पुनीतां इति चरमा प्रार्थना । विशिष्टपद्यतात्पर्यं तु 'युक्तियुक्तं वचो ग्राह्यमिति' न्यायेन बालवाक्यमपि सयुक्तिकं चेन्महान्तो गृहण्न्त्येवातो मत्कार्यन्तु जातप्रायमेवेति ।।५०।।

भो मातः अत्रैवमस्ति व्यवहारः । यस्य यथा यथा कार्यं तथा तस्य अनुधावनं अतो मदनुधावनं त्वत्तीरपर्यन्तमेवेत्याह—

अनार्यस्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन् विश्वोद्धर्त्रीगदविगलितः सिद्धभिषजम्।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमये
शिशुः सम्प्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥५१॥

अनार्यस्नेहार्दामिति भो मातः। अनार्यो दुःशीलः पुरुषं स्नेहेन प्रेम्णा आर्द्रां क्लिन्नां अनुधावति तथा विगलितागतिर्यस्य दरिद्रपीडित इत्यर्थः, सः पुण्यगतिदां उत्कृष्टैश्वर्यदां देवतामनुधावति। तथा पतन् पतितः नरकं सङ्गच्छन् विश्वोद्धर्त्रीमनुधावति तथा गदविगलितः गदेन रोगेण गदविगलितः जर्जरीभूतः सिद्धभिषजं सिद्धवैद्यमनुधावति, तथा तृष्णाकुलितहृदयः आशाबद्धहृदयः सुधासिन्धुं अमृतसमुद्रवद् यः साधुः तं धावति तथा शिशुर्बालः मातरं अनुधावति, एवञ्च स्वस्वदुखानुसारेण तत्र तत्र धावन्तीति व्यवहार एव। तत्राप्यहं च कीदृशः अनार्यः सन्मार्गभ्रष्टश्च पतनशीलश्च जरामरणरोगपीडितश्च आशाव्याकुलितहृदयश्च शिशुर्मूर्ख इत्यर्थः, एवञ्च यावद्दुर्गुणाभरणकरण्डोहं, अये भगवति अतो मदीयदुरवस्थासमये त्वां सम्प्राप्तः तस्मादेनं समुद्धर्तुं कालविलम्बस्त्वया न विधेय इति भावः। तदुक्तम्—

यदि स्यां तवपुत्रोहं मातस्त्वं यदि मामकी।
दयापयोधरस्तन्यसुधाभिः सिञ्च मामिति ॥

उक्त्या एवं रीत्या त्वदेकशरणा बहवः आगच्छन्त्येव। तत्र महतां रीतिश्चैवं तदुक्तम्—

अनार्यचरितं दुष्टं पाखण्डिनमनर्थकम्।
न हि त्यजन्ति सुधियो महान्तः शरणागतम् ॥

इति तस्माद्यदुचितं तद्विदध्याः कुरु इत्यर्थः। पद्यतात्पर्यन्तु यतो मदुद्धरणाय प्रत्यक्षविषयीभूता तस्मादियमुद्धरिष्यत्येव। इतः परं नैव किञ्चिद्-ब्रवीमीति निश्चितान्तःकरणस्तूष्णीं वसामीति हृद्यम् ॥५१॥

ननु हे तात! अमृतं बालभाषणमिति न्यायेन त्वद्वागमृतेन मोहितास्म्यहं तस्मादुचितं कुरु, इत्यौदासीन्यं मा भज किं कार्यमस्ति वद शीघ्रं तत्करोमीति, तस्याः अत्यन्ताग्रहं दृष्ट्वा महदवज्ञा न कार्येति विचिन्त्य वक्तुं प्रवृत्तः सन् इत्याह—

पयः पीत्वा मातस्तव सपदि यातः सहचरै-
र्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमम्।
इदानीमुत्सङ्गे मृदुपवनसञ्चारशिशिरे
चिरादुन्निद्रं मां सदयहृदये शायय चिरम् ॥५२॥

पयः पीत्वामातरिति, भो मातः ! कल्याणगुणशालिनि भगवति भक्त-पराधीनत्वमङ्गीकृत्य कर्तव्यमस्ति चेत् एवं कुरु, अहन्तु पूर्वप्रपूर्वजन्मनि वा त्वत्तीरमागत्य त्वदीयं पयः पीत्वा त्वज्जलं प्राश्य सहचरैर्विमूढैः कर्ममार्गरतैः सह संरन्तुं विहर्तुं यातः। तत्रानेकस्थलमटन् दारापत्याप्तसुहृज्जनतः सुखलेशमप्य-प्राप्य सुदुखितः क्वचिदपि विश्रान्तिं नागमं अनेकयोन्यटनक्लिष्टोहं सपदि त्वां प्राप्तः। अनेनेदं ज्ञापितं त्वत्तीरे तनुवियोगप्रसङ्गस्तु पूर्वागमनमन्तरा नैव घटते इति। किञ्च इदमतिचित्रम्, तथाहि दृष्टं किं वर्णनं च त्वद्दर्शनं च याम्यद्य न जाने कस्य वा फलम् क्रियाहीनस्य मन्दस्य देहोयं सफलीकृत इति, अतश्चिरादुन्निद्रं उद्गता निद्रा यस्य विनिद्र इत्यर्थः। तदुक्तम् भागवते—

"अन्ह्यापृतार्त्तकरणा निशि निःशयाना नानामनोरथधियः क्षणभग्ननिद्राः"

इति, अतएव विगतनिद्रं साहङ्कारं मां इदानीं सर्वजनदृष्टिपुरत इत्यर्थः। तव उत्सङ्गे तव मृदुपवनसञ्चारशिशिरे मृदुः मन्दो यः पवनसञ्चारः तेन शिशिरे शीतले चिरं शायय निद्रापय। अनेन, इदं ध्वनितम् मृदु पवनवदतिसूक्ष्माहङ्कारयुक्तः शान्तस्वरूपे मां एकीकुरु इति। अन्यथा अति वृद्धस्योत्सङ्गस्वापोत्यनर्थक एवेति भावः। आस्तां हे सदयहृदये इति सम्बुध्या इदं प्रदर्शितम्।

ईदृशदुर्जनशिरोमणिसमुद्धरणे तवैव दया भवितुमर्हति नान्यस्येति। ननु अहो अतिचित्रमिदं अनेन मन्दभाग्येन प्रणतिरपि न कृता। देवतामुद्दिश्य अनुचितमिदम्। अतः तत्कार्यं न जातं स्यादिति चेन्न, अत्र एवम्भाति। यद्यपि—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः॥

इत्यनेन भगवद्वाक्येन प्रणत्याद्यावश्यकमेव तथाप्येतस्या अवसरो न मिलित इत्येवं सत्यम् कुत इत्युक्तौ इमं प्राप्तं शिशुम्मे उत्संगे शाययेत्यादि बाल वाक्यवद्वाक्यमुपश्रुत्य स्वकीयां प्रतिज्ञां च मनसि आनीय न मे भक्तः प्रणश्यतीति स्वभक्ताभिमानं स्वीकृत्य हे बालेत्याहूय तं गृहीत्वानीतवती, अतएव नमः पदं चरमवाक्येऽपि न प्रयुक्तं इत्येवाशयः स्वीकार्यः। नेदमघटितमिति मन्तव्यं तदुक्तं भागवते—

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं मद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥

इति। एवञ्च कर्तुमकर्तुमन्यथाकर्तुं समर्थस्येश्वरस्य दीनजनसमुद्धरणं तु साहजिकमेव। अतो न शङ्कनीयं किमपीति भावः अलमितो वाग्विलासेन॥५२॥

श्लोकसंख्यातु द्विपंचाशदेव। इमां पीयूष लहरीं जगन्नाथेन निर्मितां यः पठेत्तस्य सर्वत्र जायन्ते जयसम्पद इति, अयं श्लोकस्त्वन्यकृत एवेति भाति, अत्र हेतुः विलक्षणापूर्वज्ञानन्तु त्रिकालज्ञानां व्यासादीनामेव। आधुनिकग्रन्थ-कर्तुर्हि तदभावान्न फलबोधकता इति ध्येयम्।

श्रीकाशीविश्वेश्वरार्पणमस्तु श्रीशुभम्।



जानन्त एव जानन्तु किम्बहूक्त्या न मे प्रभो ॥१॥
मनसो वपुषो वाचो वैभवं तव गोचरम्।
गङ्गैव शरणं सद्यो मादृशानां दुरात्मनाम् ॥२॥
अन्यत्सर्वं विमोहाय कलौ गङ्गैव केवलम्।
व्याख्याप्रवृत्तिरुदिता तदयोग्यस्य मे शिवे ॥३॥
त्वया हृदयवर्त्तिन्या प्रेरितं यत्तथा कृतम्।

। शुभमस्तु।

चातुर्वर्ण्यैकरागास्पदशुभवपुषस्तत्त्ववित्स्वेकधीराः ॥१॥
स्वानन्दानन्दमग्नास्सगुणगुणसमाक्रान्तचित्ताः सदा ये ॥२॥
लोष्टस्वर्णैकविज्ञा विजितदृढतरस्वान्तशान्तैकशान्ताः ॥३॥
श्रीब्रम्हानन्दनाथा यतिवरमणयो नासिकक्षेत्रवासाः ॥४॥
पूर्णानन्दाभिधेन त्रिपुरहरपुरे ज्ञानशिष्येण तेषाम्।
पञ्चम्यां माघशुक्ले शरकुनिधिमहीसम्मिते वैक्रमेऽब्दे ॥५॥

॥ शुभं भूयात् ॥



# गङ्गासमर्चातरङ्गः

## गङ्गाभक्ति-तरङ्गिणी

॥ श्रीगणपतये नमः ॥ श्रीगङ्गादेव्यै नमः ॥

रूपं साक्षात्प्राप्तमैशं द्रवत्वं पुञ्जीभूतं सर्वगीर्वाणतेजः ।
व्यक्तीभूतं ब्रह्म विघ्नान्निहन्यादारम्भेऽस्मिन् गाङ्गमम्भोऽस्मदीयम् ॥१॥

सद्विद्याकुलयोर्विशेषमखिलं विज्ञाय नान्यो ददौ
वृत्तिं यस्य पितामहाय निखिलां भूमण्डलाखण्डलः ।
श्रीवीरेश्वरसूनुरन्वहमसावभ्यस्य भाट्टं मतं
गङ्गाभक्तितरङ्गिणीं गणपतिर्ब्रूते सतां प्रीतये ॥२॥

प्रमाणमात्रं प्रथमं व्यवस्था तदनन्तरम् ।
ततः प्रयोगसंक्षेपात्तरङ्गेषूपवर्णितम् ॥३॥

**तत्रादौ प्रभवप्रकरणम् ।**

विष्णुपुराणे
ततः प्रभवति ब्रह्मन्! सर्वपापहरा सरित् ।
गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥४॥

विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद्ब्रह्मणः पुर्या गङ्गा पतति वै दिवि ॥५॥

सा तत्र पतिता दिक्षु चतुर्धा प्रत्यपद्यत ।
सीता चालकनन्दा च वंक्षुर्भद्रा च वै क्रमात् ॥६॥

महाभारते
महापुण्यां च गगनात् पतन्तीं वै महेश्वरः ।
दधार शिरसा देवीं तामेव दिवि सेवते ॥७॥

षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत् ।
ब्रह्मपुराणे
यावत्पुनरमावास्या दिनानि दश नित्यशः ॥८॥

शुक्लपक्षतिमारभ्य दिनानि दशसंख्यया ।
पाताले सन्निधानं तु करोति स्वयमेव च ॥९॥

शुक्लैकादशकादीनि गङ्गा स्वर्गतरङ्गिणी ।
पञ्चम्यन्तानि सा स्वर्गे सदा सन्निहिता भवेत् ॥१०॥

---

समर्चातरङ्गः

विषयः— धर्मशास्त्रम्, ग्रन्थकारः, श्रीवीरेश्वरसूनुः गणपतिः, पाण्डुलिपि संख्या ११८६५ पत्र संख्या १-८८ रचनाकालः— संवत् १७७८ ग्रन्थः पूर्णः ।

षष्ठ्यादौ भूमावधिकं फलमिति भावः ।

वृहन्नारदीये आत्माघातकपाप्मानो राजन् तव पितामहाः ।
वसन्ति नरके तेन दग्धाः कपिलकोपतः ॥११॥

तानुद्धर महाभाग ! गङ्गाजलनिषेचनैः ।
गङ्गा सर्वाणि पापानि नाशयत्येव पण्डित ! ॥१२॥

केशं वास्थि नखं दन्तं भस्म वापि जनेश्वर ।
गङ्गायाः स्पर्शमात्रेण तान्नयत्यच्च्युतं पदम् ॥१३॥

यानि कानि च पापानि प्रोक्तानि तव पण्डित ! ।
तानि पापानि नश्यन्ति गङ्गा बिन्द्वभिषेकतः ॥१४॥

इत्यादि यमवचनमाकर्ण्य जटाचीरधरो महति तपसि वर्त्तमानो राजा भगीरथो हिमाद्रिं प्रति गच्छन् गोदावरीतीरे 'विष्णुमाराधयेति भृगुणोपदिष्टो भगवन्तमाराधयन् 'त्र्यम्बकमाराध्याभीष्टं प्राप्स्यसीति' लब्धो 'वरं वृणीष्वेति' भगवता महेशेनोक्तो राजोवाच–

अनुग्राह्योऽस्मि यदि ते वरदाने महेश्वर ? ।
त्रिमार्गगाप्रदानेन उद्धरास्मत्पितामहान् ॥१५॥

**देवदेव उवाच ।**

तव दत्ता मया गङ्गा तेषां चैव परा गतिः ।
तव मोक्षवरं दत्तमित्युक्त्वान्तर्दधे शिवः ॥१६॥

कपर्दिमुकुटे भ्रष्टा गङ्गा लोकैकपावनी ।
पावयन्ती जगत्सर्वमन्वगच्छद् भगीरथम् ॥१७॥

ततः प्रभृति सा ब्रह्मन् निर्मला मलहारिणी ।
भागीरथीति विख्याता सर्वलोकेषु पण्डित ! ॥१८॥

सगरस्यात्मजा पूर्वं यत्र दग्धा मुनीश्वराः ।
तं देशं प्लावयामास गङ्गा सर्वसरिद्वरा ॥१९॥

यदा संप्लावितं भस्म सागराणां तु गङ्गया ।
तदैव नरके घोरे सागरास्ते गतैनसः ॥२०॥

पुरा समुह्यमानेन यमेन परिनिन्दिताः ।
त एव पूजितास्तेन गङ्गाजलपरिप्लुताः ॥२१॥

गतपापान्स विज्ञाय यमः सगरसम्भवान् ।
प्रणम्याभ्यर्च्य विधिवदित्याह विनयान्वितः ॥२२॥

**यम उवाच ।**

भो भो राजसुता ! यूयं नरकाद् भृशदारुणात् ।
एतावन्तं तु समयं भुक्तवन्तः स्वकर्मभिः ॥२३॥

धन्यस्त्वदन्वये जातो भगीरथ इति श्रुतः ।
तेनास्मात्तारिता यूयं नरकाद् भृशदारुणात् ॥२४॥

आरुह्याशु विमानानि सर्वभोगान्वितानि च ।
गच्छध्वं विष्णुभवनं सर्वलोकोत्तमोत्तमम् ॥२५॥

इत्युक्तास्ते महात्मानो यमेन गतकल्मषाः ।
शतकोटिकुलैर्युक्ता विष्णुलोकं प्रपेदिरे ॥२६॥

एवम्प्रभावा सा गङ्गा हरिपादाग्रसम्भवा ।
सर्वलोकेषु विख्याता महापातकनाशनी ॥२७॥

ब्रह्माण्डे महारुद्रस्य या शम्भोरुत्तमाङ्गोद्भवा शिवा ।
विनिःसृता महानन्दा दक्षिणेक्षणतः शुभा ॥२८॥

त्रिविक्रमपदोद्भूता ब्रह्माण्डशुषिरोद्भवा ।
पुरा विष्णुपदी गङ्गा समुद्रापूर्त्तिकारिणी ॥२९॥

मत्स्यपुराणे क्षितौ तारयते मर्त्यान्नागान्तारयते ह्यधः ।
दिवि तारयते देवान् तेन त्रिपथगा स्मृता ॥३०॥

भविष्यपुराणे सर्वेश्वरस्य या शम्भोर्मूर्तिरेषा सनातनी ।
त्रैलोक्यपावनार्थाय दयया धरणीङ्गता ॥३१॥

## ॥ अथ भक्तिप्रकरणम् ॥

तत्र वैदिककर्ममात्रे भक्तिश्रद्धे अवश्यं कर्त्तव्ये ।
तथाहि पाद्मे अश्रद्धया हतं सर्वं कृतं यत् पारलौकिकम् ॥
अभक्त्या च तथा वैश्यभावा शुद्धया तथा कृतम् ॥३२॥

आराध्यत्वेन ज्ञानं भक्तिः । आराधनाच्च गौरवितधीतिहेतुः ।

क्रियया वेदादिबोधितफलावश्यम्भावनिश्चयः श्रद्धा । शुचित्वेन स्वज्ञानं भावशुद्धिः । हतं स्वज्ञानं भावशुद्धिः हतं फलाभजनकम् । अतो गङ्गाभक्तिः प्रतिपाद्यते ।

**तथाहि स्कान्द-ब्राह्मयोः ।**

समातृपितृदाराणां कुलकोटिमनन्तरम् ।
गङ्गाभक्तिस्तारयते संसारार्णवतो ध्रुवम् ॥३३॥

अनन्तरं कुलकोटिकोट्यधिकमपि क्वचिदनन्तरमिति पाठः। तत्रानन्तकं भाग्वटात्[१] इत्यन्वयः।

तथा सन्तोषपरमैश्वर्ये तत्त्वज्ञानं शुभात्मना।
विमलाचारसम्पत्तिर्गङ्गाभक्तस्य जायते॥
कृतकृत्यो भवेन्मर्त्यो गङ्गां प्राप्यैव केवलम्।
तद्भक्तस्तत्परश्चेत्स्यान्मुक्त एव न संशयः॥३४॥

भक्त्या तज्जलपङ्कानि तज्जलं सेवते तु यः।
अनायासेन हि नरो मोक्षोपायं स विन्दति॥३५॥

विष्णोः परं पदप्राप्तौ पुंसां यज्ञाय यत्फलम्।
गङ्गां प्राप्य तथा स्पृष्ट्वा तत्फलं भक्तितो भवेत्॥३६॥

परं यत्फलमित्यन्वयः। यज्ञाय यज्ञनिमित्तं यज्ञप्रवृत्त्यर्थमिति यावत्।

अनृजुर्नास्तिकः कामी किल्विषो वेदनिन्दकः।
कुहको हेतुनिष्ठश्च न गङ्गाभक्तिभाग्भवेत्॥३७॥

कामी वेदनिषिद्धकामनावान्। किल्विषो मिष्टान्नपानादिना स्वमात्रोदरम्भरिः। कुहको ऐन्द्रजालिकः। हेतुनिष्ठः, अमूलकः। युक्त्या वेदनिषिद्धाचारः।

गङ्गां तु भक्तिचारेण सेवते यस्तु मानवः।
स कोटिकुलमुद्धृत्य स्वर्गलोके महीयते॥३८॥

जन्मान्तरकृतैर्दानैस्तपोभिर्नियमादिभिः।
इह जन्मनि गङ्गायां भक्तिरुत्पद्यते नृणाम्॥३९॥

निर्धूतमलपङ्कानां स्वभावामलचेतसाम्।
परलोके च भीरूणां नास्तिकानां महात्मनाम्॥४०॥

स्मृतिश्रुतिपुराणार्थादथाविभ्रंशचेतसाम्।
गङ्गायां जायते भक्तिरित्येवं वसवोऽवुवन्॥४१॥

**नास्तिकोऽत्र निर्ममः।**

स्वधर्मं यः परित्यज्य परधर्मरतिर्नरः।
स चौरस्तस्य गङ्गायां भक्तिर्नैवोपपद्यते॥४२॥

शठाश्च मानिनः क्रूरा नास्तिकाः क्रोधनाः खलाः।
असूयकाः कुतर्काश्च गङ्गाभक्तेर्न भाजनम्॥४३॥
नास्तिको बौद्धविशेषः। भङ्गेऽपि क्षणिकतावादी बौद्धः।

१. वाग्भटात् 'इति समीचीनं प्रतीयते।'

नैवात्मवादिनिपुणान् मिथ्यादृष्टान्तहेतुकान् ।
गङ्गाभक्तिविहीनांश्च वाङ्मात्रेणापि नार्चयेत् ।।४४।।

गङ्गायां वैष्णवीशक्तौ परब्रह्मविभावनम् ।
न कुर्वन्ति तु ये भक्तिं न तैः सह तु संवदेत् ।।४५।।

गङ्गाभक्तिव्रतान्याहुः श्लेष्मासृक्मूत्रसञ्चयम् ।
उच्छिष्टं न क्षिपेच्चापि स्वहस्तैर्नावताडयेत् ।।४६।।

नारायणभवं वाऽपि न निन्देच्च प्रपूजयेत् ।
गङ्गाभक्तेषु वात्सल्यं गङ्गासेवानुमोदनम् ।।४७।।

गङ्गाया दर्शनं स्पर्शं स्नानपानादिकं तथा ।
गङ्गाकथायां प्रीतिश्च कुर्याद् गङ्गां सदा स्मरेत् ।।४८।।

एवमादिव्रतान्याहुः गङ्गाभक्तस्य सूरयः ।
भक्त्या गङ्गावगाहस्य फलं वक्तुं न शक्यते ।।४९।।

स्वर्गमोक्षौ फलं तस्येत्येवमाहुर्महर्षयः ।
बहुदोषं महादुःखं ज्ञात्वा मानुष्यमध्रुवम् ।।५०।।

ज्ञात्वा कलियुगं घोरं गङ्गाभक्तिस्तु गोपिता ।
गङ्गाम्भो भक्तितो नित्यं पूजयेत्प्रीतिपूर्वकम् ।।५१।।
त एव सिद्धा मुक्ताश्च तेषां प्रज्ञा-फलं परम् ।

## ।। अथ भक्तिविघ्नप्रकरणम् ।।

**तत्र भविष्यपुराणे**

षष्टिर्विघ्नसहस्राणि गङ्गां रक्षन्ति सन्ततम् ।।५२।।
निवारयन् ये भक्तांश्च पापकर्महतान् यतः ।
कामक्रोधमहामोहलोभादिनिशितैः शरैः ।।५३।।

सन्ति तेषां मनस्तत्र स्थितिं वै नाशयन्ति च ।
गङ्गाभजनविघ्नास्तु भक्तानां विनिहन्ति च ।।५४।।

नियोगाद्देवदेवस्य ते वै घ्नन्ति विनायकाः । कुत इत्याकाङ्क्षायां देवदेवस्य नियोगात् घ्नन्तीति पुनरनुवादः ।

## ।। अथाभिलाषप्रकरणम् ।।

**भविष्यपुराणे ।**

कदा द्रक्ष्यामि तां गङ्गां कदा स्नानं लभेमहि ।।५५।।

इति पुंसाभिलषितं कुलानि दश तारयेत् ।
कालिकापुराणे वाञ्छन्ति देवता नित्यं मानुष्यं प्राप्नुयामहे ॥५६॥
सम्यक् श्रद्धालवश्चैव गङ्गास्नानं लभेमहि ।

## ॥ अथ स्मरणम् ॥

भविष्ये सहस्रयोजनस्थाश्च गङ्गां भक्त्या स्मरन्ति ये ॥५७॥
गङ्गा गङ्गेति ये ब्रूयुर्मुच्यन्ते तेऽपि पातकैः ।
हरिवंशे दिव्या देवनमस्कार्या पुण्या त्रिपथगा नदी ॥५८॥
स्मरणादेव सर्वेषामघसङ्घविनाशिनी ।
ब्रह्माण्डे मनसा संस्मरेद्यस्तु गङ्गाद्वारे स्थितो नरः ॥५९॥
चान्द्रायणसहस्रन्तु लभते नात्र संशयः ।
भविष्ये भवनानि विचित्राणि विचित्राभरणाः स्त्रियः ॥६०॥
आरोग्यं वित्तसम्पत्तिर्गङ्गा स्मरणजं फलम् ।
क्रोधेन च तपो यद्वत् कामेन च यथा मतिः ॥६१॥
मत्सरेण यथालक्ष्मीर्विद्या मानोदयैर्यथा ।
दम्भकौटिल्यमायाभिर्यथा धर्मो विनश्यति ॥६२॥
तथा नश्यन्ति पापानि गङ्गायाः स्मरणेन च ।
ये स्मरन्ति च वै गङ्गां गङ्गाभक्तिप्रियाश्च ये ॥६३॥
तेऽप्यशेषैर्महापापैर्मुच्यन्ते नात्र संशयः ।
गच्छँस्तिष्ठन् स्वपन् जाग्रन् ध्यायन् भुञ्जन्नसंस्पृशन् ॥
यः स्मरेत् सततं गङ्गां सोऽपि मुञ्चेत् स्वबन्धनात् ॥६४॥
ब्रह्माण्डे यत्र यत्र स्थितो वाऽपि मरणे समुपस्थिते ।
भक्त्या गङ्गां स्मरन् याति नरः शिवपुरं परम् ॥६५॥
स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम् ।
भेदं सहस्रधा याति गिरिर्वज्रहतो यथा ॥६६॥

## ॥ अथ कीर्तनम् ॥

भविष्ये दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्तनात् ।
स्मरणादेव गङ्गायाः सद्यः पापैः प्रमुच्यते ॥६७॥
वैष्णवे गङ्गा गङ्गेति यैर्नाम योजनानां शतैरपि ।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥६८॥

अलं दानेन विप्रेन्द्राः ! श्रुतेनाध्ययनेन च ।
इदं वः स्वर्गसोपानं गङ्गागङ्गेति कीर्तनम् ॥६९॥

**ब्रह्माण्ड पुराणे ।**

सप्तावरान् सप्तपरान् पितॄंस्तेभ्यस्तथाऽपरान् ।
गङ्गा तारयते पुंसां प्रसङ्गेनापि कीर्तिता ॥७०॥

अश्रद्धया च गङ्गायाः योऽसौ नामानुकीर्त्तनम् ।
करोति पुण्यवाहिन्याः स वै स्वर्गस्य साधनम् ॥७१॥

नारदीये	गङ्गेति कीर्तनादेव सद्यः पापात्प्रमुच्यते ।
सर्वावस्थाङ्गतो वाऽपि सर्वधर्मविवर्जितः ॥७२॥

गङ्गायाः कीर्तनादेव शुभां गतिमवाप्नुयात् ।
गङ्गागङ्गेति यैर्नाम त्रिसन्ध्यं त्रिरुदाहृतम् ॥७३॥

आग्नेये	सुदूरस्थैश्च यत्पापं हन्ति जन्मत्रयार्जितम् ।
यो गृहे वर्तमानोऽपि त्वां स्नाने कीर्तयिष्यति ॥७४॥

स यास्यति दिवं नित्यमित्याह वरुणश्च ताम् ॥
गङ्गां भागीरथीं पुण्यां श्रद्धया प्रवदेन्नरः ॥७५॥

योजनानां शतस्थोऽपि मुच्यते सर्वकिल्विषैः ।
सहस्रयोजनस्थोऽपि त्रिसन्ध्यं सुसमाहितः ॥७६॥

स्कान्दे	गङ्गा गङ्गेति यो ब्रूते स याति परमां गतिम् ।
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ॥७७॥
गङ्गेति शब्दमाकर्ण्य तानि नश्यन्ति वै ध्रुवम् ।

## ॥ अथ यात्राप्रकरणम् ॥

स्कान्दे	योगवृद्धिं शुभां देवाः प्रयच्छन्ति महात्मनाम् ॥७८॥
तेऽपि गच्छन्ति नियमं गङ्गामभिमतां वरैः ।

मनुः	यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ॥७९॥
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ।

भविष्ये	गच्छध्वं विबुधा गङ्गां ज्ञात्वा विश्वमशाश्वतम् ॥८०॥
सुधीरे च कलौ प्राप्ते मुक्तिर्वो वाञ्छिता यदि ।

दानधर्मे– गङ्गाङ्गता ये त्रिदिवङ्गतास्ते ।

## ।। अथ प्रशंसा ।।

**भविष्ये ।**

वृथा कुलं वृथा विद्या वृथा यज्ञा वृथा तपः ।
वृथा दानानि तस्येह कलौ गङ्गां न याति यः ॥८१॥

गङ्गास्नानसमायुक्तो विधिना स्वगृहात्ततः ।
निर्गत्य मध्ये च नरः कुदेशे म्रियते यदि ॥८२॥

गङ्गास्नानफलं सोऽपि नियतात्मा भवेत्सदा ।
गङ्गास्नानसमायुक्तो गङ्गास्नानोद्यतः सदा ॥८३॥

विधिना यथोक्तप्रकारेण वाराहब्रह्माण्डयोः ।
अर्घ्यादिकं गृहीत्वा तु सेन्द्रा देवाः समासते ।
आगच्छन्ति कदेत्यार्या गङ्गामभिमतां नराः ॥८४॥

स्कान्दे क्रन्दन्ति सर्वपापानि संक्रान्ताः सर्वपातकाः ।
अनिष्टानि पलायन्ते गङ्गास्नानोद्यतस्य वै ॥८५॥

अनुषङ्गेन सङ्गेन् वाणिज्येन च सेवया ।
कामासक्तोऽपि हि नरो गङ्गां प्राप्य दिवं व्रजेत् ॥८६॥

भविष्ये बहुनात्र किमुक्तेन गङ्गायाश्चैव भक्तितः ।
महापातकिनो ये च गमनाद् ब्रह्मलोकगाः ॥८७॥

ब्राह्मे स्नानं तु भक्त्या गङ्गायां कर्तुकामस्य गच्छतः ।
पदे पदेऽश्वमेधस्य फलं मर्त्यस्य जायते ॥८८॥

स्नानं भक्त्या तु गङ्गाया मौनात् कर्तुं हि गच्छतः ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥८९॥

भविष्ये तेषां न परिवर्तोऽस्ति कल्पकोटिशतैरपि ।
ये पुनस्त्यक्तदम्भाश्च गङ्गां ध्यायन्ति यान्ति च ॥९०॥

गङ्गास्नानं करोमीति मनसा यस्तु चिन्तयेत् ।
असक्तश्च स्वयं गन्तुं सामग्री यस्य नास्ति च ॥९१॥

स तया श्रद्धया भक्त्या विमुक्तः सर्वपातकैः ।
ब्रह्मलोकं समाप्नोति देहान्ते नात्र संशयः ॥९२॥

ये गच्छन्ति स्वतो गङ्गां परांश्च प्रेरयन्ति ये ।
इह ते सर्वभोगानामन्ते ज्ञानस्य भाजनम् ॥९३॥

शङ्खः तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरन्।
स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥९४॥

वाणिज्यादौ तीर्थयात्राप्राप्तौ यात्राफलं न भवति स्नानफलं भवतीति गणेश्वरः।

पैठीनसिः षोडशांशं स लभते यः परान्नेन गच्छति।
अर्धतीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥९५॥

॥ यानेन गमन-निषेधः ॥

ऐश्वर्यमदमोहेन यस्तु यानं समाचरेत्।
निष्फलं तद् भवेत्तीर्थं तस्माद्यानं विवर्जयेत् ॥९६॥

इति मत्स्यपुराणीयवचनस्य प्रयागयात्राप्रकरणस्नानात् ऐश्वर्यमदशून्यत्वे च प्रयागगमनेऽपि दोषाभावः ऐश्वर्यमदमोहेनेति विशेषोक्तेः।

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम्।
नरयाने तदर्धं स्यात्पद्भ्यां तच्च चतुर्गुणम् ॥९७॥

एतदपि प्रयागगमनमेव च। अर्धं हरति पादुकेति समप्राहवणिकमिति वृद्धाः। ब्राह्ममत्स्ययोः।

यः कश्चित्तीर्थयात्रान्तु गच्छेत् स्वयं यतः। स च पूर्वं स्वगेहे "कृतोपवासः शुचिरप्रमत्तः सम्पूजयेद्भक्तिनम्रो गणेशम्।"

देवान् पितृन् ब्राह्मणांश्चैव साधून् पितृन् किन्तु शक्त्या प्रयत्नात् प्रत्यागम्य च देवान् पितृन् ब्राह्मणान्पूजयेच्च, एवं कुर्वतस्तस्य तीर्थाद्युक्तं फलं तत् स्यान्न सन्देहः। कश्चिदास्ते देवान् पितृन् इति तीर्थयात्रां करिष्यमाणस्य देवपितृब्राह्मणानां पूजनमावश्मकं पितृन् विचिन्त्य शक्त्योक्त्यभिधानात्। अधनेनापि पूजनं विशेषतः कर्तव्यमित्यभिधीयते। शक्तिश्च दशमांशदानेन सम्पूर्णमेकां च दशगुर्दद्याद्दश दद्याच्च गोशतं शतं सहस्रगुर्दद्यादेवं धर्मो न हीयते इति समानन्यायादिति गणेश्वरः।

गच्छन् देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषाम्।
यात्रार्थमिति तत् प्रोक्तं प्रविशेच्च न संशयः ॥९८॥
एवञ्च यात्राङ्गश्राद्धे द्रव्यं घृतमेव ज्ञेयम्।

**महाभारते शङ्खस्मृतौ च।**

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥९८ क॥

हस्तसंयमनमदत्तदानादिनिवृत्त्या पादसंयमनमगम्यदेशगमननिवृत्त्या मनःसंयमनङ्कुसङ्कल्पनिवृत्त्या विद्यात्तत्तीर्थगुणादिज्ञानं शूद्रादीनामपि गमनोपदेशात्। तपश्च तीर्थोपासनादिलक्षणम् कीर्त्तिः स्वचारित्र्यादिना प्रसिद्धिः।

अकल्कको निरालम्बो लब्धाहारो जितेन्द्रियः।
विमुक्तः सर्वसङ्गैश्च स तीर्थफलमश्नुते ॥९९॥

अकल्कको दम्भरहितः। निरालम्बोऽर्जनादिव्यापाररहितः सङ्गोऽत्र विहिता शक्तिः एतच्च हस्तसंयमनादितीर्थयात्राङ्गम्।

**महाभारते।** तीर्थयात्रामुपक्रम्याभिधानात् स्नानादिकमङ्गमपि, शङ्खेन यात्राप्रकरणं विनैव स तीर्थफलमश्नुत इति सामान्याभिधानात्।

वायुपुराणे अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥१००॥

कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमाविशेत्।
न तेन किञ्चिदप्राप्तं तीर्थाभिगमनाद् भवेत् ॥१०१॥

तीर्थानि च यथोक्तेन विधिना सञ्चरन्ति ये।
सर्वद्वन्द्वसहा धीरास्ते नराः स्वर्गगामिनः ॥१०२॥

**सर्वद्वन्द्वसहा शीतातपादिक्लेशसहिष्णवः।**

अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः।
न तत्फलमवाप्नोति तीर्थयात्राऽऽगमेन यत् ॥१०३॥

ब्रह्मपुराणे सर्वेण गाङ्गेन जलेन सम्यक्
मृत्पर्वतेनाप्यथ भावदुष्टः।
आजन्मनः स्नानपरोऽपि नित्यं
न शुध्यतीत्येव वयं वदामः ॥१०४॥

**मृत्तिकापर्वतेनापि न शुध्यतीत्यर्थः,**

गङ्गादितीर्थेषु वसन्ति मत्स्यः।
देवालये पक्षिसंघाश्च नित्यम्।
भावान्वितास्ते न फलं लभन्ते
तीर्थाच्च देवानयनाच्च मुख्यात् ॥१०५॥

भावं ततो हृत्कमले विधाय, तीर्थानि सेवेत समाहितात्मा।
या काचित्तीर्थयात्रा मुनीन्द्रैः, कृता प्रयुक्ताऽप्यनुमोदिता च ॥
तां ब्रह्मचारी विधिवत् करोति सुसंयतो गुरुणा सम्प्रयुक्तः ॥१०६॥

एवं तीर्थयात्रादौ भावादिशुद्धिरावश्यिकीति मन्तव्यम्।

**मनुस्कन्दमत्स्यपुराणेषु।**

क्रोधलोभैकवृत्तीनां विपरीतकृपावताम्।
कामिनां च तथाऽन्यत्र तपोयज्ञादिनिष्फलम्॥१०७॥

गङ्गायां तत्कृतं सर्वं सफलं नात्र संशयः।
भविष्ये श्रद्धाधर्मपरः सूक्ष्मः श्रद्धाज्ञानं परन्तपः।
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धया च प्रसीदति॥१०८॥
परब्रह्मस्वरूपायाः गङ्गायास्तु स्वभावतः॥१०९॥

ब्रह्माण्डे सर्वभावाविशुद्धोऽपि गङ्गायां कुरुते च यत्।
सम्पूर्णं फलमाप्नोति हेलया नात्र संशयः॥११०॥

अज्ञानरागदोषाद्यैः पुंसां संमूढचेतसाम्।
श्रद्धयाऽपि विना धर्मो गङ्गायां नात्र संशयः॥१११॥

मत्स्यपुराणे तीर्थयात्रादिकं कृत्स्नमकुर्वाणोऽपि मानवः।
गङ्गातोयस्य माहात्म्यात्सोऽप्यत्र फलभाग्भवेत्॥११२॥

**स्मृतावपि।**

न मन्त्रो न विधिश्चैव न मृदो न च गोमयम्।
न कालनियमः कश्चित् गङ्गां प्राप्य सरिद्वराम्॥११३॥

सर्व एव शुभः कालः सर्वो देशस्तथा शुभः।
सर्वो जनस्तथापात्रं स्नानादौ जाह्नवीजले॥११४॥

इत्यादीनि शिष्टपरिगृहीतानि बहूनि वचांसि सन्ति तद्विरोधात्कथं भावादिशुद्धिनियमः।

**अतएव गणेश्वरमिश्रैः।**

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।"

इत्यादि तीर्थसामान्यप्रकारकं गङ्गान्तर्विषयकमिति स्वनिबन्धे व्याख्यातम्। एतद्वचनबलादशौचादावपि गङ्गायां फलं भवतीति च तैरेव लिखितं अनुमतञ्चैतत् विद्यापत्युपाध्यायैरिति चेत् न, "गङ्गादितीर्थेषु वसन्ति मत्स्या" इत्यादिना गङ्गायामपि भावशुद्धिप्रतिपादनेन गङ्गेतरविषयत्वस्य वक्तुमयोग्यत्वात्।

न च गङ्गादितीर्थेत्यत्र जहत्स्वार्थलक्षणा सर्वेण "गाङ्गेन' जलेन सम्यक्," इत्यत्र तदसम्भवात् गङ्गायामपि शिष्टानां भावशुद्ध्यादीनां मन्त्रविधिमृद्गोमयादीनां च सुतरां परिग्रहात् किं तर्हि क्रोधलोभैकवृत्तीनामित्यादिवचनानां तात्पर्यमिति

चेत्, इत्थं मदान्तःसंज्ञाद्यशक्त्याधिकारपरत्वं अमीषां वचनानां, न च मत्स्यपक्षिगणादीनां अपि तर्हि फलाभावप्रदर्शनं विरुद्धमिति च यथोक्तफलाभावमात्रे तत्राब्भ्यपां तु किञ्चित्फलं तु तेषामपि भवत्येवेति। अतएव।

त्वत्तीरे तरुकोटरान्तरगतो गङ्गे ! विहङ्गो वरम्।
त्वन्नीरे नरकान्तिकारणवरं मत्स्योऽथवा कच्छपः ॥

**इत्याशयोऽप्युपपद्यते। अतएव पठन्ति—**

नर्मदातीरसम्भूताः सरलार्जुनपादपाः।
नर्मदातोयसंस्पर्शात्तेऽपि यान्ति परां गतिम् ॥११५॥

तत्त्वज्ञानं लब्धवन्तो गङ्गां प्राप्तास्तु ये नराः।
ब्रह्मणः सदनं प्राप्ताः मुक्तिस्तेषां करे स्थिता ॥११६॥

महाभारते ऋषीणां परमं गुह्यमिदम्भरतसत्तम !।
तीर्थाभिगमनं पुण्यं यज्ञादपि विशिष्यते ॥११७॥

वायुपुराणे तीर्थान्यनुसरन् वीरः श्रद्दधानः समाहितः।
कृतपापो विशुध्येच्च किं पुनः शुद्धकर्मकृत् ॥११८॥

महाभारते अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥११९॥

वायुपुराणे तिर्यग्योनिं न गच्छेत कुदेशे न च जायते।
स्वर्गी भवति वै विप्रो मोक्षोपायं च विन्दति ॥१२०॥

## ।। अथ प्राप्तिः ।।

स्कान्दे कृतकृत्यो भवेन्मर्त्यो गङ्गां प्राप्यैव केवलम्।
तद्भक्तस्तत्परश्चेत्स्यान्मुक्त एव न संशयः ॥१२१॥

अन्यत्र दुर्लभं पुण्यं महापाशकरादपि।
विषयेन्द्रियसंरोधाद्यदप्यत्यन्तदुष्करात् ॥१२२॥

महाभारते तल्लभन्ते सुखेनैव गङ्गां प्राप्य शरीरिणः।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥
अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥१२३॥

अयं चोपवासः फलविशेषार्थः न त्वावश्यकः तीर्थमभिगम्य व्रतोपवासनियमयुक्तत्वात्। त्र्यहमवगाहनं त्रिरात्रमुषित्वा सर्वपापेभ्यो विमुक्तः स्वस्तिमाँश्च भवतीति देवलवचनादिति।

ब्राह्मैर्यज्ञैर्जपैश्च नियमैर्ज्ञानैः संन्यासतोऽपि वा।
यस्तत्फलं समाप्नोति गङ्गां प्राप्य तथाऽऽप्नुयात् ॥१२४॥

तन्त्रेण तन्निमित्तकं पिण्डदानमात्रमपि कर्त्तव्यम्। तच्च पिण्डनिर्माणादिपिण्डपूजान्तमिति वर्द्धमानोपाध्यायः। एकस्मिन्नहनि नानातीर्थप्राप्तौ स्नानं तीर्थश्राद्धं चावर्त्तनीयम्। निमित्तभेद एव देशभेदेऽपि श्राद्धकथनात्।

अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च।
अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥१२५॥

**अथ मात्स्यब्रह्माण्डयोः–**

पापिनां पापहन्तृत्वं स्वर्गमोक्षाप्तिहेतुना।
स्वभाव एव गङ्गायाः शैत्यं शीतरुचो यथा ॥१२६॥

भविष्ये पापखण्डनशीला हि सद्यो गङ्गास्वभावतः।
उपपातकराशीनां सा हि हन्त्री यतः स्मृता ॥१२७॥

स्कान्दे शिलोदके तु पतितं तृणपर्णादिकं यथा।
शिलात्वं भजते तत्र वस्तुशक्त्या स्वभावतः ॥१२८॥

पूतत्वमेव प्राप्नोति नरो नास्त्यत्र संशयः।
सर्वदेवमयी गङ्गा सर्वधर्मस्वरूपिणी ॥१२९॥

सर्वदेवमयी चैव परं ब्रह्मस्वरूपिणी। स्रोतसामस्मि जाह्नवी ॥ इति भगवद्गीतायाम् ॥

**भविष्यपुराणे ऋषय ऊचुः–**

ब्रह्मविष्णुमहेशानां स्कन्देन्द्रमरुता तथा।
भास्करस्य कुबेरस्य वरुणस्यानलस्य च ॥१३०॥

सोमस्य सर्वदेवानां गन्धर्वाप्सरसां तथा।
विद्याधराणां नागानां देवर्षीणां तथैव च ॥१३१॥

लोकानवाप्नुते मर्त्यः पुण्यपापे न वै तथा।
मोहलोभौ स्थिते लोके संसारश्च भयङ्करः ॥१३२॥

क्षिप्रकं कथमाप्नोति तथा मोक्षं नरो भुवि।
ब्रूतां भवन्तौ सर्वज्ञावस्माकं शरणार्थिनाम् ॥१३३॥

**नरनारायणवूचतुः–**

साधु साधु महाभागा ऋषयः शंसितव्रताः ॥१३४॥
भवद्भिः पृष्टमखिलं सर्वार्थसहितं हितम्।
परं गुह्यतमं वाक्यं शृण्वन्तु मुनिपुङ्गवाः! ॥१३५॥

ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम् ।
गङ्गैव परमो हेतुः कलिकाले विशेषतः ॥१३६॥

इदं संक्षेपतः प्रोक्तं पुनः शृण्वन्तु विस्तरात् ।
इदानीं नौ क्रियाकालो गङ्गामाहात्म्यमत्र तु ॥१३७॥

व्यासशिष्यो महाबुद्धिः वेदशास्त्रार्थपारगः ।
वेदव्यासनियोगाच्च सुमन्तुर्भवता मतः ॥१३८॥

एषोऽस्मत्सन्निधौ सर्वं यथावत्कथमिष्यति ।
परं श्रुत्वैव गङ्गाया माहात्म्यं तु महेश्वरात् ॥१३९॥
सर्वक्षेत्राणि तीर्थानि सन्त्यज्यावां स्थिताविह ।

सुमन्तुरुवाच ।

शृणुध्वं मुनयः सर्वे भूत्वा यूयं समाहिताः ।
समस्तेषु च लोकेषु वैष्णवं प्रततं यशः ॥१४०॥

तस्या माहात्म्यमखिलं वक्तुं नैवेह शक्यते ।
तथापि वक्ष्ये संक्षेपात् देवेन कथितं च यत् ॥१४१॥

ममैव परमा भूतिस्तोयरूपा शिवात्मिका ।
ब्रह्माण्डानामनेकानामाधारप्रकृतिः परा ॥१४२॥

शुद्धविद्यास्वरूपा च त्रिशक्तिः कारणात्मिका ।
आनन्दामृतरूपा च सुधाधर्मस्वरूपिणी ॥१४३॥

तामेतां जगतां धात्रीं धारयामि स्वलीलया ।
शक्तिर्ह्यनन्या गायत्री परब्रह्मस्वरूपिणी ॥१४४॥

विश्वस्य रक्षणार्थाय देवकार्यार्थमेव च ।
त्रैलोक्यपावनां गङ्गां सागराणां सुखाय च ॥१४५॥

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
पर्वाण्यपि च पुण्यानि पुण्यक्षेत्राणि यानि च ॥१४६॥

धर्मश्च सर्वदेवाश्च सर्वयज्ञा तपांसि च ।
अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्विता ॥१४७॥

अष्टाविंशतिकोट्यश्च दैवतानां तु वै सदा ।
गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः ॥१४८॥

ध्यानं कृते मोक्षहेतुः त्रेतायां तत्र वै तपः ।
द्वापरे च तपो यज्ञः कलौ गङ्गैव केवलम् ॥१४९॥

चिन्तामणिगणाश्चापि गङ्गायास्तोयबिन्दवः ।
विशिष्टा यत्प्रयच्छन्ति भक्तेभ्यश्चिन्तितं फलम् ॥१५०॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
तीर्णसर्वव्रतश्चापि यस्तु गङ्गां निषेवते ॥१५१॥

कृतानि सम्यक् तेनैव तपांसि नियमेन च ।
सर्वदानानि योगाश्च यस्तु गङ्गां निषेवते ॥१५२॥

सर्ववर्णाश्रमिभ्यश्च वेदविद्भ्यश्च वै तथा ।
शास्त्रार्थपारगेभ्यश्च गङ्गास्नायी विशिष्यते ॥१५३॥

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम् ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ॥१५४॥

कृच्छ्राच्च कृच्छ्राणि तथा कृत्वा यत्फलमश्नुते ।
सदा चान्द्रायणं चैव तल्लभेज्जाह्नवीतटे ॥१५५॥

संसारार्णवमग्नानां भूतानां शरणार्थिनाम् ।
नान्यः शरणदः कश्चिदुपायो दृश्यते क्वचित् ॥१५६॥

विना गङ्गां धर्ममयीं शरण्यां सर्वदेहिनाम् ।
गङ्गां पातकसंहन्त्रीं सर्वसत्त्वार्थसाधिकाम् ॥१५७॥

इयं हि सर्वभूतानामिहामुत्र सुखप्रदा ।
सर्वदेवमयी गङ्गा भक्तानां भद्रदायिनी ॥१५८॥

सर्वदेवमयी चैव परब्रह्मस्वरूपिणी ।
स्वानुभूतप्रमाणा हि भक्तिग्राह्या महेश्वरी ॥१५९॥

भावानुरूपफलदा गङ्गा सर्वजगद्धिता ।
सर्वज्ञानमयी देवी सर्वसंसारतारिणी ॥१६०॥

सर्वविद्यावदाता च ब्रह्मविद्यातरङ्गिणी ।
वेदवेदान्तविद्यानां सारभूता हि जाह्नवी ॥१६१॥

सर्वसारमयी गङ्गा सर्वानुग्रहकारिणी ।
सर्वोपकारिणी नित्यं सर्वतः पुण्यदायिनी ॥१६२॥

ज्ञानमध्ययनं होमो दानं ध्यानं तपो मखः ।
सर्वमेतत् स्थितं भक्त्या गङ्गायां नात्र संशयः ॥१६३॥

अहो महाप्रभावोऽयं गङ्गायाः श्रूयते सदा।
सिद्धयः सिद्धलिङ्गानि रसलिङ्गानि वै रसः ॥१६४॥

स्पर्शलिङ्गानि दिव्यानि तथा दिव्यौषधानि च।
महारत्नमयान्येव प्रदानानि बहून्यपि ॥१६५॥

दिव्यरत्नान्यनेकानि चिन्तामणिगणानि च।
गङ्गाजलान्तस्तिष्ठन्ति निगूढानि सहस्रशः ॥१६६॥

अतएव हि संसेव्या कलौ गङ्गैव केवला।
अन्यत्र तपसा यज्ञैर्दानैनानाशकेन च ॥१६७॥

**अनाशकेन अनशनेन—**

यदप्राप्यं कलौ पुण्यं तत्सुखेनैव लभ्यते ॥१६८॥
अन्यत्र दुर्लभं पुण्यं महायासकरादपि।
विषयेन्द्रियसंयोगाद्यद्यप्यत्यन्तदुष्करात् ॥१६९॥

तल्लभन्ते सुखेनैव गङ्गां प्राप्य शरीरिणः।
सुखां सुशीतलजलां सुनिर्मलमनोरमाम् ॥१७०॥

सुखस्तवां पुण्यनदीं नयनानन्दिनीं तथा।
सुखद्रवां देवतात्मां दृष्टादृष्टफलप्रदाम् ॥१७१॥

दर्शनस्पर्शपानाद्यैरनायासेन वै तथा।
विषयेन्द्रियसंयोगादपि वा नात्र संशयः ॥१७२॥

सूर्योदये तमो यद्वदिन्द्रं दृष्ट्वा यथा नगाः।
यथा मेघा महावातैस्ताक्ष्यं दृष्ट्वा यथोरगाः ॥१७३॥

तत्त्वज्ञानैर्यथा मौग्ध्यं सिंहं दृष्ट्वा यथा मृगाः।
तथा पापानि सर्वाणि गङ्गां दृष्ट्वा प्रयान्त्यलम् ॥१७४॥

तथा गङ्गायाः कणदिग्धस्य वायोः संस्पर्शनादपि।
पापशीला अपि नराः शुभां गतिमवाप्नुयुः ॥१७५॥

संसारमोक्षको देवो जनानामनुकम्पया।
गङ्गातरङ्गरूपेण सोपानं निर्ममे दिवः ॥१७६॥
अलक्षणोपसर्जा च नराणां मूर्ध्नि संस्थिताम्।
गङ्गायाः शक्तिरेवात्र तां विनाशयितुं ध्रुवम् ॥१७७॥

गङ्गां प्राप्य कृतार्थोस्मीत्यात्मानमुपलक्षयेत्।
सप्तसागरमुख्यानि सर्वतीर्थानि सर्वदा ॥१७८॥

अतीत्य स्वप्रभावेन गङ्गा भागीरथी स्मृता ।
स्वशक्तिमनतिक्रम्य तपोयोगक्षमादिभिः ॥१७९॥

सम्यक्तानीन्द्रियाण्यत्र समाहृत्य सुशक्तिभिः ।
गङ्गां सेवेत नियतः सर्वसिद्धिं स गच्छति ॥१८०॥

इन्द्रियाख्यमहाचौरैर्हृतचित्तमहाधनः ।
विषयाख्यमहाचौरैर्दृश्यमानोऽपि यो नरः ॥१८१॥

पुत्रभृत्यादिना त्यक्तः कान्दिशीकः कुमार्गगः ।
इतस्ततो धावमानः संकटे क्लेशसंवृतः ॥१८२॥

तस्य नाना इह त्राता तं गङ्गैवात्र गच्छति ।
पापापांशुमहावात्या पापमूलकुठारिका ॥१८३॥

पापेन्धनदवज्वाला गङ्गेयं पुण्यवाहिनी ।
पितरो योगिनश्चापि गाथा गायन्ति सादराः ॥१८४॥

अपि नः स कुले कश्चिद्गङ्गास्नायी भविष्यति ।
देवेभ्यश्च पितृभ्यश्च दास्यते सतिलं जलम् ॥१८५॥

अपि नः स कुले भूयात् शिवे विष्णौ च भक्तिमान् ।
तदालयकरो भक्त्या तत्र सम्मार्जनादिकृत् ॥१८६॥

परभोग्यापहर्त्तारः परद्रव्यापहारकाः ।
परस्त्रीषु रता ये च देवब्रह्मस्वहारिणः ॥१८७॥

महापातकिनो ये च सर्वपापेषु शीलिनः ।
अष्टाविंशतिकोटीषु नरकाणां क्रमेण तु ॥१८८॥

दारुणास्वतितीव्रासु मन्त्रयोग्याश्रिताग्निषु ।
ये कल्पान्ते समुत्तीर्णा वृक्षकीटादियोनिषु ॥१८९॥

तावत् कालन्तु संसारे भ्रमितुं योग्यतां गताः ।
तेऽपि वार्धकमासाद्य विमुक्ताः प्राप्य जाह्नवीम् ॥१९०॥

पश्चात् सम्पत्सचिन्ताश्च प्रपद्यन्ते शुभाङ्गतिम् ।
गङ्गायास्त्विह माहात्म्यात्प्रपद्यन्ते न संशयः ॥१९१॥

यतो विष्णुस्ततो गङ्गा यतो गङ्गा ततो वृषः ।
यतो धर्म्मस्ततो ज्ञानं यतो ज्ञानं ततः सुखम् ॥१९२॥

यत्र गङ्गा हरिस्तत्र यत्र विष्णुस्ततो जयः ।
कान्तिर्लक्ष्मीर्धृतिः सत्यं मेधा विद्या बलञ्च धीः ॥१९३॥

यत्र लोका न दृश्यन्ते भूतानि विषयास्तथा ।
इन्द्रियाणि च सर्वाणि ब्रह्माद्या देवतागणाः ॥१९४॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
चिदानन्दमयं यत्तु निर्विकल्पं निरञ्जनम् ॥१९५॥

शब्दादिरहितं चैव विज्ञानरहितन्तथा ।
अणोरणुतरं यच्च महतोऽपि महत्तरम् ॥१९६॥

सूक्ष्मं सर्वविदभ्यासमप्रमेयमनुत्तमम् ।
सर्वसारं च यन्नित्यं सन्मात्रं सर्वसंस्थितम् ॥१९७॥

ब्रह्मणाप्यपरिच्छेद्यमुपरिष्टात्परं पदम् ।
तदेवेदं शिवा गङ्गा साक्षान्नारायणी परा ॥१९८॥

तस्यास्तु दर्शनादेव विष्णुमाया विनश्यति ।
तीर्थानां परमं तीर्थं नदीनां परमा नदी ॥१९९॥

मोक्षदा सर्वभूतानां महापातकिनामपि ।
पवित्राणां पवित्रं तु मङ्गलानां तु मङ्गलम् ॥२००॥

विश्वेशशीर्षोद्भूता च सर्वपापहरा सरित् ।
देवानां तु महादेवो यथा श्रेष्ठतरस्तथा ॥२०१॥
सर्वेषामेव तीर्थानां गङ्गातीर्थं विशिष्यते ॥२०२॥

महाभारते

मेरोः समुद्रस्य च सर्वयज्ञैः
संख्योपलानामुदकस्य चापि ।
शक्या वक्तुं नेह गङ्गाजलानां
पुण्या संख्यातुं संविमातुं तथैव ॥२०३॥

सर्वतीर्थमयी गङ्गा सर्वधर्ममयो मनुः ।
सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः ॥२०४॥

नास्ति गङ्गासमं तीर्थं न देवः केशवात् परः ।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥२०५॥

विसोमा इव शर्वर्यो विपुष्पा इव पादपाः ।
तद्देशाश्च दिशः सर्वा हीना गङ्गाजलैः शुभैः ॥२०६॥

तिस्रः कोट्योऽर्ध कोटी च तीर्थानां वायुरब्रवीत् ।
सर्वदा कलिकाले तु गङ्गाया नात्र संशयः ॥२०७॥

भूतेश्वरादिह परोऽस्ति न पूजनीयो
नैवाश्वमेधसदृश: क्रतुरस्ति तात ! ।
गङ्गासमं त्रिभुवने न हि तीर्थमस्ति,
नान्यद्व्रतं हि शिवरात्रसमं तथाऽस्ति ॥२०८॥

सर्वपापहरा चैव सद्य: शुद्धिकरी परा ।
महापुण्यप्रदा सद्य: स्वर्गमोक्षप्रदेव सा ॥२०९॥

द्वि:सप्तभुवनाद्यन्तु हविश्चापि प्रयत्नत: ।
सारमुद्धृत्य धर्मस्य ज्ञानस्य च महेश्वर: ॥२१०॥

सर्वसारमयी या च स्वकीयानन्दरूपिणी ।
प्रीत्यैव लीलया धत्ते स्वमूर्ध्नि परमशेवर: ॥२११॥

योऽसौ सर्वगतो विष्णुश्चित्स्वरूपी जनार्दन: ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशय: ॥२१२॥

ब्रह्माण्डपुराणे कलौ तु सर्वतीर्थानि स्वं स्वं वीर्यं स्वभावत: ॥२१३॥

गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न तु क्वचित् ।
वामपादाम्बुजाङ्गुष्ठनखस्रोतोविनिर्गता ॥२१४॥

विष्णोर्विभक्त्या शिरसा बिभर्ति सुभृशं हर: ।
तत: सप्तर्षयो यस्या: प्राणायामपरायणा: ॥२१५॥

तिष्ठन्ति वीचिमालाभिरुह्यमानजटाजले ।
वातोच्चै: सामृतं यस्या: प्लावितं शशिमण्डलम् ॥२१६॥

भूयोऽधिकतरां कान्तिं धत्ते गङ्गा न मण्डले ।
मेरुपृष्ठे पतत्युच्चैर्निष्क्रान्ता शंशिमण्डलात् ॥२१७॥

जगत: पावनार्थाय या प्रयाति चतुर्दिश: ।
सीता चालकनन्दा च वंक्षुर्भद्रा च वै क्रमात् ॥२१८॥

एकैव या चतुर्भेददिग्भेदगतिलक्षणा ।
भेदं चालकनन्दाख्यं यस्या: सर्वोपकारकम् ॥२१९॥

दधाति शिरसा वर्षा वर्षाणामयुतं शतम् ।
शम्भोर्जटाकलापात्तु विनिष्क्रान्ता त्रिशर्करा ॥२२०॥

प्लावयित्वा दिवं निन्ये या पापात्सगरात्मजान् ।
यस्यामिष्ट्वा महायज्ञैर्यज्ञेशं पुरुषोत्तमम् ॥२२१॥

द्विजाः पूज्याः परामृद्धिमवापुर्दिवि चेह च।
स्नानादिधूतपापाश्च यजन्ते च तपःस्थिताः ॥२२२॥
केशवासक्तमनसः प्राप्ता निर्वाणमुत्तमम्।

तथा– भगवद्विष्णुपदाङ्गुष्ठविनिःसृतजलस्यैतस्य माहात्म्यं यत्र केवलमभिसन्धिपूर्वकस्नानाद्युपयोगे उपकारकमनभिसंहितमथैतत्। प्राणिनोऽस्थिचर्मस्नायुकेशाद्युपकृष्टशरीरमपि तदुपरि पतति सद्यः शरीरिणं स्वर्गं नयति।

**श्रीमहाभारते–**

तस्थुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः।
महापातक्यपि पुनः सद्यो मुच्येत बन्धनात् ॥२२३॥

तथा सन्निकर्षोऽत्र मर्त्यानां दरकारणां गङ्गां हित्वा यदन्याम्भस्तत्रत्या यान्ति शुद्धये।

ब्रह्मपुराणे

वर्णानां ब्राह्मणो यद्वत्तथा तीर्थेषु जाह्नवी।
स्वर्गस्थैर्गगनस्थैश्च तथा पातालवासिभिः ॥२२४॥

अवगाह्या सदा गङ्गा पूज्या वन्द्या च सर्वदा।
सर्वेषामेव भूतानां पापोपहतचेतसाम् ॥२२५॥

महाभारते

गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः।
ते देशास्ते जनपदास्ते शालास्तेऽपि चाश्रमाः।
येषां भागीरथी रम्या मध्ये याति सरिद्वरा ॥२२६॥

तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः।
गतिं न लभते जन्तुर्गङ्गां प्राप्य यदाप्नुयात् ॥२२७॥

पूर्वे वयसि सर्वाणि कृत्वा पापानि सर्वशः।
पश्चाद्गङ्गां सदैवैते तेऽपि यान्त्युत्तमां गतिम् ॥२२८॥

पुलस्त्यः

कपटेनापि गङ्गायां स्नानदानादिकर्मकृत्।
यो लाभख्यातिपूजार्थं कुर्यात्सोऽपि दिवं व्रजेत् ॥२२९॥

यमः

क्षेत्रस्थमुद्धृतं वाऽपि शीतमुष्णमथापि वा।
गाङ्गेयं हरते तोयं पापमामरणान्तिकम् ॥२३०॥

लिङ्गपुराणे

ब्रह्महा गुरुगोघ्नश्च स्तेयी च गुरुतल्पगः।
गङ्गाम्भांसि तु पून्येरन् नात्र कार्या विचारणा ॥२३१॥

वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं जलम्।
न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम् ॥२३२॥

गङ्गातोयाभिषिक्तां तु भिक्षामश्नाति योगवित् ।
सर्पवत् कञ्चुकं त्यक्त्वा पापानीह नरोत्तमः ॥२३३॥

स्वर्गापवर्गदां सिद्धिं प्राप्नोत्येव न संशयः ।
गङ्गाया जलदिग्धोऽपि पवनः पुरुषं प्रति ॥२३४॥

स्पृशते सोऽपि पापानां सर्वमेव व्यपोहति ।
नारदीये हिमवद्विन्ध्यसदृशा राशयः पापकर्मणाम् ॥२३५॥

गङ्गाम्भसा ते नश्यन्ति विष्णुभक्तिहतापदः ।
भविष्ये गुणवत्पात्रपूजायां न स्याद् वै तादृशं फलम् ॥
यथा गङ्गाजलस्नानपूजने विधिना कृते ॥२३६॥

जलकृत्यानि सर्वाणि गङ्गातोयेन यः सदा ।
नियमेनैव कुरुते यावज्जीवप्रतिज्ञया ॥२३७॥

स एव जीवन्मुक्तः स्यात् स मुनिः स च पण्डितः ।
तैरेव साक्षात्प्राप्तं मोक्षाख्यं परमं पदम् ॥२३८॥

गङ्गाजलस्वरूपेण तत्त्वज्ञानं व्यवस्थितम् ।
तस्मात्तज्जलसेवाऽत्र मोक्षमार्गप्रदर्शिका ॥२३९॥

**पुलस्त्यः—**

वापीकूपतडागेषु देवखातनदीसु च ।
उपर्युपरि तं श्रेष्ठं जलं गाङ्गं विशिष्यते ॥२४०॥

ब्रह्माणु पु. सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम् ।
देहं त्यक्त्वा नराः सर्वे पदे तिष्ठन्ति सर्वदा ॥२४१॥

महाभारते देवाः सोमार्कशतानि यथा सत्रादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥२४२॥

ब्रह्माणु पु. प्रभासे गोसहस्रेण राहुग्रस्ते निशाकरे ।
यत्फलं पाण्डवश्रेष्ठ ! गङ्गायां तद् दिने दिने ॥२४३॥

दानधर्मे स्वायम्भुवं यथास्थानं सर्वेषामुपरि स्थितम् ।
तीर्थानां सरितां श्रेष्ठा गङ्गा तद्वदिहेष्यते ॥२४४॥

शिव पु. नास्ति गङ्गासमं तीर्थं नास्ति देवसमा स्मृतिः ।
नास्ति मृत्युसमः पन्थाः नास्ति भूतिसमं तपः ॥२४५॥

वनपर्वणि यत्र गङ्गा महाराज ! स देशस्तु तपोवनम् ।
सिद्धिक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रयम् ॥२४६॥

प्रतिस्रोतो रजोयोगो रथ्याजलनिषेवणम् ।
गङ्गां प्राप्य न दुष्येयुः सा हि धर्मद्रवी यतः ।।२४७।।

दिनत्रयं गङ्गायामपि रजो दूषणमिति क्वचित् ।
कः समाचारः प्रमाणं तु तत्र नास्तीति ।।

## ।। अथ दर्शन-प्रकरणम् ।।

महाभारते जातान्धैरेवमतुलामृतैः पङ्गुभिरेव वा ।
समर्था येन पश्यन्ति गङ्गां पुण्यजलां शुभाम् ।।२४८।।

लावण्यैर्नेष्टविषयैर्न सूतैर्न धनागमैः ।
तथा प्रसादो नोदेति गङ्गां वीक्ष्य यथा भवेत् ।।२४९।।

## ।। गङ्गानारदसम्वादे ।।

मज्जन्ति मुनयः सर्वे त्वमेकः किन्न मज्जसे ।
मुक्तिस्त्वद्दर्शनाद्देवि ! न जाने ज्ञानजं फलम् ।।२५०।।

सर्वेन्द्रियाणां चापल्यं व्यसनासक्तिवाग्भवैः ।
शुभानामाश्रयत्वञ्च गङ्गादर्शनजं फलम् ।।२५१।।

सर्वेन्द्रियाणां चापल्यं व्यसनासक्तिवाग्भवैः ।
निर्विर्णत्वं नृणां गङ्गादर्शनादेव नश्यति ।।२५२।।

परहिंसा च कौटिल्यं परदोषाद्यपेक्षणम् ।
दाम्भिकत्वं नृणां गङ्गादर्शनादेव नश्यति ।।२५३।।

ब्रह्मपुराणे मुहुर्मुहुस्तथा पश्येत्स्पृशेच्चैव मुहुर्मुहुः ।
भक्त्या यदीच्छति नरः शाश्वतं वाऽमृतं पदम् ।।२५४।।

परापवादशीलत्वं परद्रव्याभिकाङ्क्षया ।
परधर्मरतिर्गङ्गादर्शनादेव नश्यति ।।२५५।।

स्मृतिश्च वर्तमानमतीतञ्च ज्ञानतोऽज्ञानतोऽपि वा ।
कृतं यदाऽशुभं कर्म गङ्गां दृष्ट्वा प्रणश्यति ।।२५६।।

तथा– वापीकूपतडागादिप्रपासत्रादिभिस्तथा ।
अन्यत्र यद्भवेत् पुण्यं तद्गङ्गादर्शनाद् भवेत् ।।२५७।।

**वाप्यादिलक्षणं तु वसिष्ठसंहितायां शतैर्धेनुभिः पुष्करणी त्रिभिः शतैर्दीर्घिका चतुर्भिर्द्रोणः पञ्चभिस्तडागः द्रोणाद्दशगुणा वापी इति केचित् ।**

ख्यातिं तामात्मपूजादौ यथा यातः सदा तथा ।
गङ्गायां दर्शने तत्स्यात्स वै स्वर्गस्य भाजनम् ॥२५८॥

यत्फलं जायते पुंसां दर्शने परमात्मनः ।
तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥२५९॥

शुभानामास्पदं तस्माद् गङ्गां दृष्ट्वां तु भक्तितः ।
नैमिषे च कुरुक्षेत्रे नर्मदायां च पुष्करे ॥२६०॥

स्नानात् संसेवनाच्चापि यत्फलन्तु लभेन्नरः ।
गङ्गाया दर्शनादेव कलौ प्राहुर्मनीषिणः ॥२६१॥

तावद् भ्रमति संसारे यावद् गङ्गां न पश्यति ।
अज्ञानपटलच्छन्ननेत्रास्ते प्राज्ञमानिनः ॥२६२॥

अन्ये तु नास्तिका दुष्टाः पश्यन्ति भ्रष्टचेतसः ।
गाङ्गं सुपुण्यदं वारि साधारणजलं यथा ॥२६३॥

विधूतपापास्ते मर्त्या परब्रह्मस्वरूपिणीम् ।
सहस्रसूर्यप्रतिमां गङ्गां पश्यन्ति भूतले ॥२६४॥

वेदान्तवेद्यं यत्तत्वं परब्रह्मस्वरूपिणीम् ।
पश्यध्वं तदिमां गङ्गां प्रत्यक्षं पुरतः स्थिताम् ॥२६५॥

अशोकता कीर्तिमत्वं धर्मनिष्ठा दयान्विता ।
धनधान्यसमृद्धिश्च गङ्गादर्शनजं फलम् ॥२६६॥

भविष्ये भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गादर्शनवान्मर्त्यस्तद्वत्पापात्प्रमुच्यते ॥२६७॥

**दानधर्मे—**

सप्तावरान् सप्तपरान् पितॄंस्तेभ्यश्च ये परे ।
पुंसस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च ॥२६८॥
मनोवाक्कायजैः पापैर्नरो बहुविधैरपि ॥२६९॥

वीक्ष्यमाणोऽपि गङ्गायाः पूतो भवति तत्क्षणात् ।
तथा दोषाः प्रणश्यन्ति गङ्गाया दर्शनेन च ॥२७०॥

अश्वत्थनिम्बचूतादिवृक्षारोपैश्च यत् फलम् ।
वटपुष्पादिभिश्चापि स्पर्शनात् स्यात्ततोऽधिकम् ॥२७१॥

अपहृत्य तमस्तीव्रं यथा भात्युदितो रविः ।
तथाऽपहृत्य पापानि भाति गङ्गाजलोक्षितः ॥२७२॥

ब्रह्माण्ड पु. अभक्त्याऽपि महापापी गङ्गां स्पृष्ट्वा शुचिर्भवेत् ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥२७३॥

जीवितं नरकार्थे हि यस्य मूर्खस्य पापिनः ।
तस्यापि स्वर्गहेतुः स्याद्गङ्गास्पर्शोऽथ दर्शनम् ॥२७४॥

गङ्गास्पर्शननिर्धूतपापः स्वर्गं प्रयाति हि ।
अर्थैहिकफलावाप्तिः तस्य विघ्नोऽनुमीयते ॥२७५॥

नारदीये तथेह गङ्गां संस्पृश्य ब्रह्मरूपाऽऽशु पुण्यदा ।
सङ्गाः व्रजन्ति ते सर्वे सद्य एव न संशयः ॥२७७॥

यद्यकार्यशतं कृत्वा कृतं गङ्गाभिषेचनम् ।
सर्वं दहति गङ्गाम्भः तूलराशिमिवानलः ॥२७८॥

श्रुत्वाऽभिलिखिता दृष्ट्वा स्पृष्ट्वा पीता च गाहिता ।
गङ्गा तारयते पुंसामुभौ वंशौ भवार्णवात् ॥२७९॥

दर्शनात् स्पर्शनात् पानात् तथा गङ्गेति कीर्तनात् ।
पुनाति पुरुषान् पुण्यान् मातेव जगतो हि सा ॥२८०॥

## ।। अथ प्रवेशनम् ।।

प्रवेशमात्रे गङ्गायाः स्नानार्थं भक्तितो नृणाम् ।
ब्रह्महत्यादयो दोषा दहेत्युक्ताः प्रयान्त्यलम् ॥२८१॥

## ।। अथ स्नानम् ।।

**विष्णुपुराणे–**

स्नातस्तु सलिले यस्यां सद्यः पापं प्रणश्यति ।
अपूर्वपुण्यप्राप्तिश्च सद्यो मन्त्रे प्रजायते ॥२८२॥

ब्रह्माण्ड पु. एकेन स्नानमात्रेण विधिना भक्तिमान्नरः ।
अश्वमेधफलं सद्यो गङ्गायामाप्नुयात् फलम् ॥२८३॥

अनेकजन्मसम्भूतं पुंसां पापं प्रणश्यति ।
स्नानमात्रेण गङ्गायाः सद्यः स्यात्स्वर्गभाजनम् ॥२८४॥

अन्यस्थानकृतं पापं गङ्गातीरे विनश्यति ।
गङ्गातीरे कृतं पापं गङ्गास्नानाद्विनश्यति ॥२८५॥

महाभा अलक्ष्म्या किल संयुक्तो वृत्तं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यो गङ्गायां स प्रमुच्यते ॥२८६॥

भविष्ये

गङ्गां पश्यति संस्तौति स्नाति भक्त्या पिबेज्जलम् ।
स स्वर्गं ज्ञानममलं भोगं मोक्षं च विन्दति ॥२८७॥

गङ्गास्नानरता ये च गङ्गामाहात्म्यभाविताः ।
यथा क्षिप्रं प्रमुच्येत तथा तीर्थान्तरेण हि ॥२८८॥

सर्वतीर्थेषु यत्पुण्यं सर्वेष्वायतनेषु च ।
तत्फलं लभते पुण्यं गङ्गास्नानान्न संशयः ॥२८९॥

महापातकसंयुक्तो युक्तो वा सर्वपातकैः ।
गङ्गास्नानेन विधिना मुच्यते सर्वपातकैः ॥२९०॥

गङ्गास्नानात्परं स्नानं न भूतं न भविष्यति ।
विशेषतः कलियुगे पापं हरति जाह्नवी ॥२९१॥

दुष्कुलीनः कुलीनो वा यो वा को वाऽप्यलक्षितः ।
गङ्गास्नानेन भक्त्या वा पूज्योऽसौ राजवज्जनैः ॥२९२॥

शक्तस्य पण्डितस्यापि गुणिनो दानशीलिनः ।
गङ्गास्नानविहीनस्य तस्य जन्म निरर्थकम् ॥२९३॥

निहत्य कलिजान् दोषान् कायवाचकसम्भवान् ।
गङ्गास्नानेन भक्त्या तु मोदते दिवि देववत् ॥२९४॥

स्नात्वैव तावद्गङ्गायां वृत्तहत्योत्थपातकान् ।
विमुक्त एव इन्द्रोऽपि गङ्गाम्भो नाम चाश्रयेत् ॥२९५॥

तथा सर्वासु वेलासु गङ्गास्नानं सुपुण्यदम् ।
तिथिनक्षत्रयोगादि नापेक्ष्यं तीरवासिनाम् ॥२९६॥

स्नानमात्रेण गङ्गायां पातकौघः प्रणश्यति ।
अपूर्वधर्मावाप्तिश्च तदानीमेव जायते ॥२९७॥

तथा चान्यानि तीर्थानि स्नानकाले जपे स्मरेत् ।
गङ्गायाः स्नानकाले तु गङ्गायै च जपे स्मरेत् ॥२९८॥

गङ्गास्नानरतो नित्यं महापातकजैरपि ।
सर्वैर्दोषैर्न लिप्येत पद्मपत्रमिवाम्भसा ॥२९९॥
गङ्गा तु नित्यमैश्वर्यं सदा सौख्यं ददाति च ।

ब्राह्मे–

अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति ।
स्नानमात्रेण गङ्गायां सद्यः स्यात्पुण्यमुत्तमम् ॥३००॥

भविष्ये गङ्गास्नानरतं मर्त्यं दृष्ट्वैव यमकिङ्कराः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ॥३०१॥

यमोऽपि भीतस्तं दृष्ट्वा प्रणिपत्य प्रपूजयेत् ।
न शक्नोति तथा स्थातुं तस्याग्रे पुण्यकर्मणः ॥३०२॥

मेरुमन्दरमात्रेऽपि राशिः पापस्य कर्मणः ।
गङ्गास्नानेन दग्धः स्यात्तूलराशिमिवानलः ॥३०३॥

यस्तु, नारायणं देवं स्नानकाले सदा स्मरेत् ।
साक्षाद्ब्रह्मस्वरूपायां गङ्गायान्तु विशेषतः ॥३०४॥

ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गङ्गास्नानान्न संशयः ॥३०५॥

**ब्रह्माग्नेयदानधर्मेषु–**

स्नातानां शुचिभिस्तोयैः गाङ्गेयैः प्रयतात्मनाम् ॥३०६॥
व्युष्टिर्भवति या पुंसां न साऽत्रास्तु शतैरपि ।

**व्युष्टिर्विशिष्टे वा पूर्त्तिः, स्वर्गमवाप्नोतीति, पीत्वा ज्ञानमवाप्नुयात् ।**

गङ्गास्नाने तु भक्त्या तु समाप्नोति सुखं जनः ॥३०७॥

शिष्टाः गङ्गायां मौशलं स्नानं महापातकनाशनम् ।
भविष्ये कपिलाकोटिदानाद्धि गङ्गास्नानं विशिष्यते ॥३०८॥

सकृद्गङ्गावगाहेन कुलकोटीः समुद्धरेत् ।
कुशप्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत् ॥३०९॥
मज्जयेच्च यमुद्दिश्य अष्टभागं लभेच्च सः ।

**अष्टभागं यमुद्दिश्येति शेषः अष्टवारमेतत् प्रकरणान्मज्जनं भवतीति ।**



## ।। अथ पुण्यकालविशेषे फलविशेषाः ।।

### ।। तत्रादौ स्नानप्रकरणम् ।।

शक्तः पुण्यफलविधेस्तत्र प्रतिमास्थानि निमित्तानि ।
ब्रह्माण्डे रात्रौ दिवा च सन्ध्यायां गङ्गायां तु प्रसङ्गतः ।
स्नात्वाऽश्वमेधजं पुण्यं गृहेषु धृततज्जलैः ।।३१०।।

एवं च रात्रौ स्नाननिषेधो न गङ्गायां न कालनियमः, चात्रेत्यभिधानात्, एवञ्च स्नानं तर्पणमपि च कर्तव्यम् । प्रधानविधेरेवाङ्गप्राप्तेः दिवा च मध्याह्न-व्यतिरिक्ते तत्र च विशेषश्रुतेः सन्ध्या चात्र प्रातःसन्ध्या सन्ध्यान्तरे भविष्ये विशेष-कथनात् प्रसङ्गतः आकस्मिकप्राप्तौ गृहोद्धृतजलस्नानफलमाह स्नानशक्तौ अन्यथा फलसाम्ये प्रातः स्नानेऽवृत्त्यापत्तेः, न च फलमाकल्पते कल्पनागौरवाद्वाक्यभेदापत्तेः,

भविष्ये प्रातः स्नानाद्दशगुणं मध्याह्ने समुदाहृतम् ।
सायंकाले शतगुणमनन्तं शिवसिन्निधौ ।।३१०क।।

एवं च स्नानसामान्यविहितफलानि प्रातर्मध्याह्नसायं समयव्यतिरिक्त-समये तेषु विशिष्यैव फलसूक्तव्रतैः ।

उभयोः पक्षयोर्जातास्तिस्रस्तास्तिथयः शुभाः ।
एकादशी तथा षष्ठी प्रतिपच्च विबोधिताः ।।३११।।

नन्दा तु कथिताऽस्माभिः सर्वपापहरा शुभा ।
सप्तजन्मसु यद्भुङ्क्ते पतितान्नं श्वभिस्सह ।
संसर्गतः कृतपञ्चपातकानि महान्ति च ।।३१२।।

तथाऽनिर्वचनीयानि पापानि क्षयतामयुः ।
रजस्वलायाः स्पृष्टान्नभोजनेनापि यद्भवेत् ।।३१३।।

सततासत्यभाषेन स्वर्णापहरणेन च ।
मणेश्चापि च रत्नस्य सामान्यसकलस्य वा ।।३१४।।

वस्तुनश्चापहारेण वधः सख्युर्द्विजातयः ।
मित्रहिंसा विप्रहिंसा मातृहिंसादिभिश्च यत् ।।३१५।।

जनितानि महान्ति हि रौरवादीनि यानि च ।
तेषु नैरन्तरं विप्रास्ताडयन्ति हि वारयेत् ।।३१६।।

यमस्य किङ्कराणां वै पापमाजन्म यत्कृतम् ।
बाल्ययौवनवार्द्धक्यदशपापक्षयो भवेत् ।।३१७।।

ब्रह्मलोकाधिकरणे दृष्ट्वा हंसं परत्वजम्।
धेनूनां कपिलानां तु लक्षं दत्वा द्विजन्मने ॥३१८॥
चतुर्वेदाध्यधीता च यत्फलं लभते नरः।
श्रीमन्नारायणस्येह दक्षिणे वसते भुजे ॥३१९॥
मर्त्यलोके ततो जन्म ततो बहुगुणाश्रयः।
भुङ्क्ते सर्वसुखं भोगं यशश्चाप्नोति मानवः ॥३२०॥
गङ्गास्नानेन नन्दायां नात्र कार्या विचारणा।

द्विजात इति सम्बोधनं विप्रा इति सम्बोधनं विप्रकर्षात् एवं तच्च नन्दावाक्यं सोद्देशे भवशर्मवर्धमानप्रभृतिभिः प्राचीननिबन्धभिन्नो पाठ इति मैथिलानाममूलकत्वशङ्का गङ्गापक्षात्मके स्वग्रन्थे विद्यापत्युपाध्यायैर्भविष्य इत्युपक्रम्य लिखितमस्तीति क्वचित् कालस्य समादरः।

कृष्णाष्टम्यां सहस्रं तु शतं स्यात्सर्वपर्वसु।
अमावास्यां सहस्रन्तु सहस्रं तु दिनक्षये ॥३२१॥

अष्टमी चेयं माघस्य सन्देशे सति तथा माघी त्वमावास्या गङ्गायां तु सुदुर्लभे'ति उपक्रम्य पाठात् तत्रापि माघशुक्लपूर्वपक्षस्य कृष्णादेस्तत्र शिष्टपरिग्रहात् सर्वपर्वस्विति सर्वसाधारणं सर्वपदस्वरसात्। अमावस्यायां शतगुणमिति पाठः, एवञ्च सर्वपर्वस्विति, अनेन सहगोवृषन्यायादन्वय इति वदन्ति।

अत्र कृष्णाष्टम्यां माघ्यामेव यदि सहस्रगुणफलकत्वेन शिष्टपरिग्रहस्तर्हि मांघसन्देशे स एव प्रमाणं, न चेत्तथा शिष्टपरिग्रहस्तर्हि माघान् यज्ञैः सम्पूर्णत्वेन विभक्तिविपरिणामेन प्रमाणाभावात्। सर्वकृष्णपक्षाष्टम्यामेव यमो गोभ्यः किमशनं दद्याद्दीपं दद्याच्चतुष्पथे पक्षान्तः पूर्णिमा अमावास्या च अविशेषश्रुतेः। किमशनं किञ्चिदशनमित्यर्थः।

सङ्क्रान्तौ पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः।
गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत् ॥३२३॥

अत्र यद्यपि अमावास्यां भविष्यपुराणीयपूर्वलिखितवाक्येन शतगुणफलजनकत्वमेव प्रतिपादितम् तथापि ब्रह्मसदनावाप्तये तस्य विकल्प एव, तत्वेकमुनिप्रणीतत्वमात्रेण समुच्चयः, निरपेक्षश्रुतेः।

पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ।
अमावास्यानदीस्नानं हरत्याजन्मदुष्कृतम् ॥३२४॥

व्यतीपातो वक्ष्यते। पुण्ये कुलकोटिसमुद्धारो ब्रह्मपुराणे वक्ष्यते। नद्यत्र प्रकरणाद्गङ्गैव।

जन्मभे तु कृतस्नानं गङ्गायां भक्तिभावतः।
जन्मप्रभृति वै पापं तत्क्षणादेव नश्यति ॥३२५॥

आत्मनो जन्मनक्षत्रे गाङ्गते जाह्नवीतले।
नरः स्नात्वा दिवं याति कुलकोटीस्समुद्धरेत् ॥३२६॥

अत्राप्यनन्तगुणपठितभविष्यपुराणीयवाक्यद्वये यद्यपि जन्मदुष्कृतनाशः श्रुतस्तथापि तेन समयस्य विकल्पः निरपेक्षश्रुतेः।

स्कान्दे शनैश्चरस्य वारेण वारेणाङ्गारकस्य च।
कृष्णाष्टमीचतुर्दश्योरीप्सितं फलमाप्नुयात् ॥३२७॥

**अत्र स्नानदानादिसाधारणमिदं प्रकरणात् तथा–**

सोमवारे त्वमावास्या, आदित्याहे च सप्तमी।
चतुर्थी भौमवारेण अष्टमी च वृहस्पतौ ॥३२८॥

अत्र प्रकृतये पापमंथवा धर्मसञ्चयः।
षष्टिजन्मसहस्राणि प्रतिजन्म तदक्षयम् ॥३२९॥

एतानि स्कन्दपुराणीयवाक्यानि प्रतिहस्तकसोढदेवभवशर्मवर्धमानप्रभृतिभिर्न लिखितानि विद्यापत्युपाध्यायैः स्कन्द इत्युपक्रम्य लिखितानीति समूलताशङ्का नेति।

भविष्ये शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद् यदि।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥३३०॥

स्नानं दानं तपो होम उपवासं तथैव च।
सर्वं विजयसप्तम्यां महापातकनाशनम् ॥३३१॥

इति तु शिष्टपरिगृहीतं वाक्यमकृत्रिमजलमात्रविषयं गङ्गामनुक्रमपाठात्।

प्रचेता– अमावास्या यदा वारो भवेद् भूमिसुतस्य वै।
गोसहस्रफलं दद्यात् स्नानदानेन जाह्नवी ॥३३२॥

शिनीवाली कुहूश्चैव यदि सोमदिने भवेत्।
स्नानं यन्मौनिना कृतं सामान्यजलाद्धि करणमेतत् ॥३३३॥

गङ्गामनुक्रमपाठात् मौनं चैतदरुणोदयादारभ्य स्नानसमाप्तिपर्यन्तं कृतत्वात्। न तु स्नानमात्रे तत्र मौनस्य–

उच्चारे मैथुने देवप्रस्नावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥३३४॥

**इतिस्कन्दपुराणात्प्राप्तेः, वृहद्वसिष्ठः ।**

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकम् ।
अमा वै सोमवारेण व्यतीपातः स उच्यते ॥३३५॥

नागदैवतमश्लेषामस्तकं मृगशिरः । तत्र जन्मदुष्कृतविरहो भविष्ये उक्तः, समुद्धरो ब्राह्मे च वक्ष्यते कल्पतरुकारस्तु ब्रह्मपुराणीयवाक्यं पठित्वा व्यतीपातः सूर्याचन्द्रगत्योः क्रान्तिसाम्यमिति व्याख्यातवान् । नव्यवाचस्पतिमिश्रा अपि तदेव मन्यन्ते ।

भविष्ये चतुर्दश्यां यदा युक्तो व्यतीपाते च चन्द्रमाः ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥३३५(क)॥

तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात् ।
तत्र तत्र विपन्नोऽपि गङ्गामरणजं च तत् ॥३३६॥

एवं चतुर्दश्याममावास्याक्षये योगोऽयमिति कल्पतरुकारोऽत्र प्रतिभाति ।

द्वादश्यां श्रवणे त्वर्के अष्टम्यां पुष्ययोगतः ।
आर्द्रायां च चतुर्दश्यां गङ्गास्नानं सुदुर्लभम् ॥३३७॥

एवं चानन्तरपठितभविष्यपुराणीयव्यतीपातलक्षणेनास्य विकल्पाद्व्यतीपात-लक्षणे पदे नानर्थतैव । अत एवात्र विकल्पार्थ एव वै शब्दः, अव्ययानामने-कार्थत्वात्, माघे चात्र योगे फलविशेषो वक्ष्यते ।

**स्कन्दमात्स्ययोः–** एवञ्च यत्र वारनक्षत्रयोगादिनिमित्तविशेषोऽत्र निपात फलभेदः श्रूयते तत्र सामान्यपर्वादिविहितकालमनसा संकल्पकरणमशास्त्रार्थः । विशेषश्रुतिविरोधादिति विधातव्यम् ।

पौर्णमासीषु च तासु मासार्कसहितासु च ।
एतेषां स्नानदानाभ्यां फलं दशगुणं भवेत् ॥३३८॥

एवं तु ज्यैष्ठ्यां विशेषविधेस्तदितरपूर्णिमासु बोद्धव्यम्, "अक्षस्य अक्षपूर्वासु चैतासु फलमव्ययम्," अक्षय्यमाकल्पस्थाऽपि सहपूर्वत्वफलदा पौर्णमास्यामेव मास-विहितनक्षत्रचन्द्रवृहस्पतियोगः ।

**तथा विष्णुः—**

दृश्येते सहितौ यस्यां दिवि चन्द्रवृहस्पती ।
पौर्णमास्यां तु महती ज्ञेया संवत्सरे तथा ॥३३९॥

अत्र संवत्सरपदं वर्षमात्रपरं तद्विशेषणं राजमार्तण्डानुसारात् ।

**तथा हि राजमार्तण्डे—**

माससंज्ञे यदा त्र्यक्षे चन्द्रः सम्पूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥३४०॥

इति प्रतिमासनिमित्तानि चैत्रशुक्लतृतीयायां मन्वन्तरादिरिति वक्ष्यते ।

मन्दे चार्के गुरौ वाऽपि वारेष्वेतेषु चेन्नदी ।
तत्राश्वमेधजं पुण्यं स्नातश्च लभते नरः ॥३४१॥
दानमक्षय्यतां याति पितॄणा चातिदुर्लभम् ॥३४२॥

एतच्चातिकृत्रिमजलमात्रे गङ्गामनुक्रम्य पाठात्, इति नन्दीपदमकृत्रिमोपलक्षणम्। **हारीतः—** परकीयनिपानेषु न स्नायात् स्नायाद्वा पञ्चपिण्डानुद्धृत्य आपदि अकृत्रिमजलाभावे पिण्डोद्धारश्चात्र हस्ताभ्यां यावान् कर्त्तुं शक्यते तावानिति हारीतः ।

अत्र प्रतिष्ठितस्य सर्वसत्त्वोपयोगिनस्त्यागात्। परस्वत्त्वनिवृत्तेर्न तत्र पिण्डोद्धारः किं त्वत्र प्रतिष्ठितमात्र इति हरिहरप्रभृतयः । अप्रतिष्ठितस्य पानीयेषु अपेयं सलिलं भवेत्, इत्यादि वचनादेवाप्रतिष्ठिते स्नानाप्रसक्तेः प्रतिष्ठितमात्रे पिण्डोद्धार इति वर्धमानोपाध्यायः । उद्धरेदित्यनुवृत्तौ बौधायनः ।

निरुद्धासु च मृत्पिण्डाँस्त्रीन् कूपाँस्त्रीन् धटाँस्तथा अनुत्सृष्टस्वकारित्वे न दोषः परकीयत्वाभावात् ।

**विष्णुः—** उद्धृताद्भूमिस्थादुदकं पुण्यं स्थावरात् प्रस्रवत्तस्मान्नादेयं, तस्मादपि साधु परिगृहीतं सर्वत एव गाङ्गम् ।

**योगियाज्ञवल्क्यः—**

त्रिरात्राः फलदा नद्यः याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥३४३॥
नद्यां प्रत्येकशः स्नाने भवेद् गोदानजं फलम् ।

एतद्वाक्योक्तजलाशयत्रिरात्रस्नाने यत्फलं तत्समुद्रगायां सकृत्स्नानेनेत्यर्थः समुद्रगाः साक्षात्प्रत्यभिज्ञेयसमुद्रगमनाः ।

गोप्रदानैस्तु दशभिस्तासां पुण्यं तु सङ्गमे ॥३४३(क)॥

भविष्ये शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।
शिवगङ्गेति विख्यातं तत्र स्नात्वा दिवं व्रजेत्॥३४४॥

कात्यायनः यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः॥३४५॥

**यव्यो–** माससंज्ञकः। मासपुरस्कारेण विधिनिषेधयोरसति बाधके शुक्लादिरेव ग्राह्यः इति श्रीदत्तोपाध्यायः।

स्नानं कुर्वीतेति विशेषतो हेतुनिगदे स्नानानर्हत्वमेव। न त्वाचमनाद्यधिकार इति शिष्टाः। नदीलक्षणं तु–

धनुःसहस्राण्यष्टौ च श्रुतिर्यासां न विद्यते।
न चात्यदीनशब्दवहा गर्तास्ते परिकीर्त्तिताः॥
धनुःप्रमाणं पुरुषहस्तचतुष्टयम्।

**योगियाज्ञवल्क्यः–**

अग्राह्या आगता आपोनद्याः प्रथमवेगिकाः।
अक्षोभिताश्च केनापि याश्च तीर्थाद्विनिःसृताः॥३४६॥

तीर्थाद्विनिःसृता गङ्गादिप्रवाहविच्छिन्ना नद्यन्तरिता, मन्वन्तरादित्वं चैत्र्या वक्ष्यते।

स्मृतिः वैशाखे मासि राजेन्द्र! शुक्लपक्षे तृतीयकाः।
अक्षया या तिथिः प्रोक्ता कृत्तिका रोहिणीयुता॥३४७॥

तस्यां दानादिकं पुण्यमक्षयं समुदाहृतम्।
ब्रह्म पु. वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः॥
यवानुत्पादयामास युगं चारब्धवान्कृतम्॥३४८॥
तस्मात्सर्वं प्रयत्नेन प्रयतः प्राशयेज्जवान्॥३४९॥

पूजयेच्छङ्करं गङ्गां कैलाशं तुहिनाचलम्।
भगीरथं च नृपतिं सागराणां सुखावहम्॥३५०॥

स्नानं दानं तपः श्राद्धं जपहोमादिकं च यत्।
श्रद्धया क्रियते तत्र दानं त्यागाय कल्पते॥३५१॥
सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते।

होमोऽत्र वासुदेवताकः उपक्रमे कीर्तनात्। यवप्राशनं विकारद्वारा साक्षात्तृप्त्यसमर्थत्वादिति केचित्। तत्र अदृष्टार्थत्वात् सिन्धोर्नद्या एव नदीसामान्य एव फलमेतत्। युगादित्वमस्या उक्तं वक्ष्यते च।

वैशाखे पूर्णमास्यां च माघे वै कार्त्तिके तथा।
तथा माघी त्वमावास्या गङ्गायां तु सुदुर्लभा ॥३५२॥

अत्र दुर्लभत्वफलजनकत्वं विद्यापत्युपाध्यायैर्व्याख्यातम्। प्रतिहस्तचरणैस्तु अन्तरा परिपठितं कृष्णाष्टम्यां सहस्रं तु फलं भवतीति व्याख्यातम्।

वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥३५२॥(क)॥

तां तत्र पूजयद्देवीं गङ्गां गमनमेखलाम्।
वैशाख्यामनन्तफलकत्वं वैशाखे प्रातः स्नानमामनन्ति।

गरुडपुराणे- अद्य हस्ते तु नक्षत्रे दशम्यामष्टके सिते।
दशपापहरा या च दत्तदानमकल्मषम् ॥३५३॥

विरुद्धाचरणा हिंसा परदारोपसेवनम्।
पारुष्यानृतपैशुन्यमसम्बन्धाभिभाषणम्।
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ॥३५४॥

गाङ्गेये ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां,
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम्।
पापान्यस्यां हरति हि तिथौ सा दशेत्याहुरार्याः,
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥३५४(क)॥

अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च पातकं त्रिविधं स्मृतम् ॥३५५॥

पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः।
असम्बद्धप्रलापं च वाङ्मयं स्याच्चतुर्विधम् ॥३५६॥

परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाभिनवेशश्च मानसं त्रिविधं स्मृतम् ॥३५७॥

ब्राह्मे शुक्लपक्षस्य दशमी ज्येष्ठमासि द्विजोत्तम!।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥३५८॥

अत्र गरुडपुराणानुसारेण हस्तदशमीयोगेन दशहरात्वमिति ब्रह्मपुराणीय-वचनमपि तत्परमेकमूलादपि नानाकरात्।

**गारुडे–** हस्तयोगेऽपि हरा वै यथार्था याता च, न च गाङ्गेयानुसारेण गाङ्गेययोगोऽपि पुरस्करणीय इति वाच्यम्, दशगुणवाजिमेधायुतजन्यपुण्य-जनकतयैव विशेषश्रवणात्। केचिद् गुरुडपुराणीयं गङ्गाधिकरणकं ब्रह्मपुराणीयं सामान्यजनाधिकरणकं गौडाः पठन्ति– पुण्यजनकतयैव विशेषश्रवणात्,

ज्येष्ठस्य शुक्लदशमी सम्वत्सरमुखी मता।
तस्यां स्नानं च दानं च महापातकनाशनम्॥३५९॥

यां काञ्चित्सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैः महापातकसम्मितैः॥३५९(क)॥

सेयं दशहरावन्मिलितफलकमात्राधिकारीत्युक्ता मीमांसकैः सा तु मता।

भविष्ये ऐन्द्रे गुरुः शशी चैव प्राजापत्ये र ि स्तथा।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्तिता॥३६०॥

ऐन्द्रं ज्येष्ठप्राजापत्यं रोहिणी गुरुशशिज्येष्ठानक्षत्रवर्तित्वं रवेश्च रोहिणीवर्तित्वं पूर्णिमायाश्च गुरुयोग इत्यर्थः। विना गुरुवारेणापि यदाह गारुडे।

ऐन्द्रे गुरुशशी चैव प्राजापत्यं रविस्तथा।
पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्तिता॥३६१॥

अनुराधासु चन्द्रोऽपि यदाह चाभ्रभूपतिः
शिवलिङ्गमहापुण्यं सर्वपापप्रणाशनम्।
सर्वदेवमयं चैव सर्वसिद्धिप्रदायकम्॥३६२॥

ऐन्द्रत्र्यक्षे तथा मैत्रे गुरुचन्द्रौ यदा स्थितौ।
पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्तिता॥३६३॥

केवलं ज्येष्ठनक्षत्रयुक्ता ज्येष्ठस्य पूर्णिमा।
संवत्सरे स्यात्तदाऽपि स्यान्महाज्यैष्ठी प्रकीर्तिता॥३६४॥

**तथा च राजमार्त्तण्डे–**

ज्येष्ठे संवत्सरे चैव ज्येष्ठे मासस्य पूर्णिमा।
ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी ततो भवेत्॥३६५॥

संवत्सरोऽत्र वर्षविशेषः ज्योतिःशास्त्रे विशेषलक्षणाभ्युक्तः तत्र संदंशात् सन्दासरपदवैयर्थ्यापाताच्च।

**तथा-ज्योतिःशास्त्रम्–** एते पञ्चसमायुक्ता वत्सरा ऋषिभिः पुरा। वत्सरः परिवत्सरोऽनुवत्सरः संवत्सर उद्वत्सरश्चेति लक्षणमेतेषां गणितशास्त्रे, एवं च सामान्यपूर्णिमासु दृश्यते सहितो यस्यामित्यादिलक्षणेन (क)मासार्कसहितेन वायुमाहात्म्यमुक्तम्। तत्र ज्येष्ठपूर्णिमायामित्युक्तं प्राक्–

भविष्ये
महाज्यैष्ठी सुरश्रेष्ठ! कृताञ्जलिफला स्मृता,
तस्यां तु जाह्नवीस्नानं महापातकनाशनम्॥
महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम्।
सोऽपि स्वर्गमिहाप्नोति मोक्षं गङ्गाम्बुमज्जनात्॥३६६॥

## ॥ मन्वन्तरादिश्रेयम्॥

आषाढशुक्लदशम्यां मन्वन्तरादित्वं वक्ष्यते॥३६७॥

आषाढपूर्णिमायान्तु अनन्तफलकत्वं मन्वन्तरादित्वं च वक्ष्यते। अध्ययनदानं विष्णुपूजाफलं चाप्रस्तुतत्वादत्र नोपदर्शितम्। आषाढमासस्नाने मासत्रयस्नानफलं वक्ष्यते। तत्र सौरो मासः शिष्टपरिगृहीतः श्रावणकृष्णाष्टम्यां मन्वन्तरादित्वं वक्ष्यते, भाद्रशुक्लतृतीयायां मन्वन्तरादिः।

भविष्ये
येयं भाद्रपदे मासि षष्ठी भवति सत्तम!।
इयं पुण्यप्रदा पापहरा शान्ता शुभा तथा॥३६८॥

स्नानदानादिकं सर्वमस्यामक्षयमुच्यते।
भाद्रकृष्णत्रयोदश्यां युगादित्वं च वक्ष्यते।
आश्विनशुक्लनवम्यां मन्वन्तरादित्वं वक्ष्यते॥३६९॥

संवत्सरं फलं तस्यां नवम्यां कार्तिके तथा।

**युगादित्वं चास्य वक्ष्यते–**

कार्तिकशुक्लद्वादश्यां मन्वन्तरादित्वं वक्ष्यते॥३७०॥
कार्तिक्यामनन्तफलकत्वं मन्वन्तरादित्वं च वक्ष्यते।

ब्रह्मपुराणे
आग्नेयं तु यदा त्र्यक्षं कार्तिक्यां भवति क्वचित्।
सा तिथिर्महती ज्ञेया स्नानदानेषु चोत्तमा॥३७१॥

वदाथाग्र्यन्तु भवति त्र्यक्षं तस्यां तिथौ क्वचित्।
तिथिः साऽपि महापुण्या श्रुतिभिः परिकीर्तिता॥३७२॥

(क) 'मासार्ध' शु.पा.

प्राजापत्यं यदा त्र्यक्षं तिथौ तस्यां नराधिप: ।
सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ।।३७३।।

प्राजापत्यं रोहिणी तथा या महाकार्तिकी तस्या जीवदयो: कृत्तिकास्थयो: ।

विशाखासु यदा भानु: कृत्तिकासु च चन्द्रमा: ।
स योग: पद्मको नाम पुष्करेष्वतिदुर्लभ: ।।३७४।।

**विष्णु:—** मास: कार्तिकोऽग्निदैवत्योऽग्निश्च सर्वदेवानां मुखं तस्मात्कार्तिके मासि बहि:स्नायी गायत्रीजपनिरत: सकृद्देवहविष्याशी वत्सरकृतात्पापात्पूतो भवति बहिर्ग्रामात् गृहाच्च अत्र च स्नाने प्रात: कालो नाग: ।

कार्तिकं सकलं मासं प्रात:स्नायी जितेन्द्रिय: ।
जपन् हविष्यभुग् दान्त: सर्वपापै: प्रमुच्यते ।।३७५।।

एतस्य यदि व्रतरूपत्वं तर्हि आरब्धस्याशौचेऽपि न त्याग:, व्रतपक्षे चात्राग्नि: पूज्य:, मास: कार्तिकोऽग्निदेवताक इति च वचनात्। नित्यस्नायी प्रात: स्नायी नित्यस्नानं प्रात: स्नानमिति शङ्खोक्ते: । आधाराच्च अत्र स्नानं प्रधानहविष्यभोजनादि चाङ्गमिति सम्प्रदाय: फलश्रुतेश्चाशयविशेषात्। सर्वान्वये सर्वेषामधिकार: प्रतिभाति ।

सामान्यजलाधिकरणकमिदं गङ्गामनुक्रम्य पाठात्। कार्तिकमासस्नाने चातुर्मासफलं वक्ष्यते, एतच्च व्रतीतरप्रातर्मध्याह्ननिरन्तरस्नानं विषयम्, सायं स्नानं सन्यासिनामिति। अत्र च सौरो मास इति वक्ष्यते।

**भविष्ये । महादेव उवाच—**

पौषे मासि यदाऽष्टम्यां शुक्लायां तु बुधो भवेत् ।
तदा सा तु महापुण्या महाभद्रेति कीर्तिता ।।
तस्मात्स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।।३७६।।

मत्प्रीतये कृतं देवि ! शतं साहस्रिकं भवेत् ।
तस्मात्तस्यां महादेवि ! पूज्योऽहं विधिवद्बुधै: ।।३७७।।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणै: ।

**पौष:, पौर्णमासीमधिकृत्य—**

ब्रह्म पु. पुण्ययोगे तु कर्त्तव्यं राज्ञा स्नानं तु सर्वदा ।
माघकृष्णाष्टमी सहस्रफलकेत्युक्तम् ।।
स्मृति: अरुणोदयवेलायां शुक्लमाघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतै: समा ।।३७८।।

समासतः सूर्यग्रहैः समेति पठन्ति प्राञ्चः तदनयोः पक्षयोश्चरमः शिष्टपरिगृहीतः ।

गौडाः सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
तस्या स्नानं च दानञ्च महापातकनाशनम् ॥३७९॥

तथा– अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।
अत्र चार्कपत्रसप्तत्रयं शिरसि निधाय ॥

ॐ अद्य जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥३८०॥

**इति मन्त्रेण स्नानम्** ।[1]

ॐ जननी सर्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिकन्देवि ! नमस्ते सूर्यमण्डले ॥३८१॥

**अनेनार्घं दद्यात्–** सामान्यजलाधिकरणकमिदं मन्वन्तरादिश्चेयं सप्तमी माघशुक्लाष्टम्यां देवादितर्पणानि निर्वर्त्य भीष्मतर्पणं देवविधिना कुर्यात् ।

वैयाघ्रपद्यगोत्राय सांस्कृतिप्रवराय च ।
अपुत्राय जलं दद्यान्नमस्ते भीष्मवर्मणे । इति नमस्कारदर्शनात् ।

एतस्य गौडीयस्मृतिराचारो मूलमन्तरा सर्वविषयता, असवर्णजलदाननिषेधस्तु प्रकरणात् । पित्रादिविषयः, एतदपि सामान्यजलाधिकरणकमेवम् ।

भविष्ये अष्टम्यां च यदा त्वाष्ट्रो व्यतीपातश्च वै तदा ।
गङ्गायां दुर्लभं स्नानं योगोऽप्येष सुदुर्लभः ॥३८३॥

यो माघे दैवयोगेन तदा स्नाति विधानतः ।
लभते चैत्य सद्योऽपि जातिं स्मरति पौर्विकीम् ॥

यद्यपि वृहद्वसिष्ठेन कृष्णाष्टम्यां यदा त्वाष्ट्रेति पठितं तथापि यो माघ इत्यादि भविष्यपुराणीयशुक्लाष्टम्यामिव कृष्णाष्टम्यामाद्यस्यार्द्रीयायोग्यत्वाद् वृहद्वशिष्ठेन यो माघ इत्यादेरेवादरात् । माघपूर्णिमायान्तु अनन्तफलत्वं युगादित्वं सुदुर्लभफलजनकत्वं च वक्ष्यते ।

**ब्रह्मपुराणे–** माघस्थयोश्च जीवेन्दोर्महामाघीतिकीर्तिता ।

**विष्णुः–** माघी मघायुक्ता चेत्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति । नित्यश्राद्धकालेऽपि माघी विष्णुना पठिता ।

---

१. "शोकं छिद्र रोगमिति पाठान्तरम्"

देवी पुराणे
धेनुं गुडमयीं माघ्यां दद्याद्वै चोत्तरायणे ।
सर्वान् कामानवाप्नोति ज्येष्ठे जलमयीं तथा ।।३८४।।

यमः
माघे मासि तिलप्रदः प्रजाः श्रेष्ठाः पुरुषः खलु विन्दति ।
माघे मासि विशेषेण तिलमिश्रो विशेषतः ।
माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।।३८५।।

"सर्वसत्त्वसमाकीर्णं नरकं न स पश्यति ।" माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा घृतकुल्माषान् ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति ।

**मत्स्यपुराणे—**

माघेमास्युषसि स्नानं कृत्वा दाम्पत्यमर्चयेत् ।
भोजयित्वा यथाशक्त्या माल्यवस्त्रविभूषणैः ।।३८६।।
सूर्यलोके वसेत्कल्पं सूर्यव्रतमिदं स्मृतम् ।

इदमेव केवलं माघस्नाने प्रमाणं श्रीदत्तोपाध्यायैरनुमतम् । तदा दम्पति-पूजनाचरणं च युक्तम्, एवं चारब्धमाघस्नानस्याशौचेऽपि न त्यागः व्रतपूरकत्वात् । एतत् सर्वं सामान्यजलाधिकरणमाघस्नानं चातुर्मास्यफलकमिति गङ्गाधिकरणकमिति व्रतान्तरमेव ।

भविष्ये
नैरन्तर्येण गङ्गायां माघे यः स्नाति मानवः ।
स शक्रलोके सुचिरं कालं स्थित्वा सगोत्रजैः ।।३८७।।
ततो ब्रह्मपुरे तिष्ठेत् कल्पकोटिशतं युतम् ।

अत्रापि सौरमासपरिग्रहः, शिष्टाचारात् मध्यदेशीयाः पठन्ति ।

अमाऽर्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्घोदयः स विज्ञेयः सूर्यग्रहशतान्वितः ।।३८८।।

**पातो व्यतीपातः । माघाधिकरणगारुडके—**

मातरं पितरं चापि भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत द्वादशांशं लभेत सः ।।३८९।।

पाद्मे
मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव ! ।
स्नाने दानेन मे देव ! यथोक्तफलदो भव ।
इमं मन्त्रं समुच्चार्य स्नायान्मौनं समाश्रितः ।।३९०।।

वासुदेवं हरिं कृष्णं माधवं च स्मरेत् पुनः ।
तप्तेन वारिणा स्नानं यद् गृहे क्रियते नरैः ।।३९१।।
षडब्दफलदं तद्धि मकरस्थे दिवाकरे ।

**अशक्ताश्चेत्तत्—**

बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् ।
तड़ागे द्विगुणं राजन्नद्यां तच्च चतुर्गुणम् ।।३९२।।

दशधां देवखाते च शतधा च महानदीम् ।
शतं च द्विगुणं राजन् ! महानद्यां च सङ्गमे ।।३९३।।

सहस्रगुणितं सर्वं तत्फलं मकरे रवौ ।
गङ्गायां स्नानमात्रेण लभते मानुषो नृप ! ।।३९४।।

गङ्गां ये चावगाहन्ति माघे मासि नराधिप ! ।
चतुर्युगसहस्रान्ते न पतन्ति सुरालयात् ।।३९५।।

दिने-दिने सहस्रन्तु सुवर्णानां विशाम्पते ! ।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ।।३९६।।

अनड्वाहसहस्रन्तु कपिलायुतमेव च ।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ।।३९७।।

प्रकरणात् प्रातःस्नानकालीनं फलमेव तु ।
स्कान्दे मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ ।।३९८।।

कथं पापात् प्रमुच्येत ? कथं स त्रिदिवं व्रजेत् ?
मकरस्थे रवौ माघे प्रातः काले तथाऽमले ।।३९९।।

गोपदेऽपि जले स्नानं स्वर्गदं पापिनामपि ।
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ।।४००।।

माघे स्नायी विपाकः स्यात्तत्संसर्गी च पञ्चमः ।
माघे मासि महत्यापः किञ्चिदभ्युदिते रवौ ।।४०१।।
ब्रह्मघ्नमपि चाण्डालं कम्पिताङ्गं पुनीमहि ।

**माघस्नाने सर्वेषामधिकारः । तदाहः—**

सर्वेषां सर्ववर्णानामाश्रमाणां च भूपते ! ।
माघस्नानं तु धर्मस्य धाराभिः खलु वर्षति ।।४०२।।

**महाभारतपाद्मयोः—**

महापातकसंख्यानि यानि मे सन्ति जाह्नवि ! ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ! ।।४०३।।

**इति नैवेद्यम्–** गोविन्दद्वादशीं स्नायात्। गोविन्दद्वादशी-फाल्गुनशुक्लद्वादशीफाल्गुनामावस्यामन्वन्तरादिरिति वक्ष्यते। फाल्गुने मासे स्नाने मासत्रयफलं तत्र स च सौरो मासः शिष्टपरिगृहीतः।

यदीच्छेद्विविधान् भोगान् चन्द्रसूर्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥४०४॥

यमः प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ।
देवान् पितृन् समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥४०५॥

देवान् पितृन् समभ्यर्च्य इति स्नानाङ्गदेवतर्पणानुवादः। स्नातो जुहोतीति यत्स्मृतिः।

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा ॥४०६॥

**वारुणशतभिषा, गौडाः पठन्ति–**

शनिवारसमायुक्ता सा महावारुणी स्मृता।
यदि लभ्येत गङ्गायां कोटिसूर्यग्रहैः समा ॥४०७॥

शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥४०८॥

अत्र च कृष्णादिरेव मासः शिष्टपरिगृहीतः, स्त्रीणां तु शतभिषायां स्नानं नास्ति।

स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषाङ्गते।
सप्तजन्म भवेयुस्ता विधवा दुर्भगा अपि ॥४०९॥

पठन्ति च वदन्ति च शतभिषायां स्नानवत्यो युवत्यो यदि तज्जनितदोषश्लेषविश्लेषदुःखं धनमेव कृपणानां सप्तजन्मापि ता तासां विगलितकुम्भकुम्भिकुम्भस्थलानाम्।

**वराहः–**

रोहिणी गुरुपुनर्वसूत्तरे या बिभर्त्ति वरवस्त्रभूषणम्।
सा न योषिदवलम्बते पतिस्नानमाचरति मेष वारुणे॥
हठाच्छतभिषास्नानं नारीणां यदिलापते!
पूजयेत्स्वामिनं तत्र आत्मने सर्वमाहृतम्॥
इति प्रतिनियतमास्यानि।

## । अथ मासस्नानम् ।

भविष्ये नैरन्तर्येण गङ्गायां मासं यः स्नाति मानवः ।
स हि शक्रसमो लोके चिरं स्थित्वा सगोत्रजैः ॥४१०॥
ततो ब्रह्मपुरे तिष्ठेत्कल्पकोटिशतायुतम् ।

## । अथ षण्मासस्नानम् ।

भविष्ये षण्मासं स्नाति गङ्गायां नैरन्तर्येण यो नरः ।
सर्वपापविनिर्मुक्तः समस्तकुलसंयुतः ॥४११॥
समस्तभोगसंयुक्तो विष्णुलोके महीयते ।
परार्धद्वितयं यावन्नात्र कार्या विचारणा ॥४१२॥

## । अथ यावज्जीवस्नानम् ।

गङ्गायां स्नाति यो मर्त्यो यावज्जीवं तु नित्यशः ।
जीवन्मुक्तः स चात्रापि देहान्ते मुक्त एव सः ॥४१३॥

## । अथ प्रकीर्णकः ।

**तत्र संक्रान्तिनिमित्तकः—**

भविष्ये अयने द्वे विषवे द्वे च चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥४१४॥
मृगकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने ।
तुलामेषे च विषुवे द्वे गोलमध्ये तथा परा ॥४१५॥

**मृगो मकरः—**

धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी तथा ॥४१६॥

**वाराहसंहितायाम्—**

अयनविष्णुपदीषडशीतयो विषुवविष्णुपदीषडशीतयः ।
अयनविष्णुपदीषडशीतयो विषुवविष्णुपदीषडशीतयः ॥४१७॥

कर्कटतो मकरतो वा संक्रान्तयो विष्णुपद्यो युगान्ताः परिकीर्त्तिताः तथा च ब्राह्मे—

सूर्यस्य कुम्भसंक्रान्त्या मन्त्रः कृतियुगस्मृतः ।
अथ वृश्चिकसंक्रान्त्या द्वापरान्तरसंज्ञया ॥४१८॥

तथा च सिंहसंक्रान्त्या मन्त्रः कलियुगस्य च।

सौरधर्मे संक्रान्तिसमयः सूक्ष्मो दुर्लभः पिशितेक्षणैः, तत्र योगाद्यश्चोर्द्ध्वं त्रिंशन्नाड्यः प्रकीर्तिताः।

देवीपुराणे षडशीति मुखेऽतीते वृक्षे च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥४१९॥

**अयने दक्षिणे पाठविशेषात्–**

यावद्विंशकलाभुक्त्या तत्पुण्यं तूत्तरायणे।
निरंशौ भास्करे दृष्टे दिनान्ते दक्षिणायने ॥४२०॥

इत्यत्र विंशतिदण्डपुण्यत्वं संक्रान्त्यनन्तरं दिनान्ते दिनं त्रिंशन्नाड्यास्तदन्ते तत्पर्यन्तमिति यावत् एतच्च संक्रान्तेः पूर्वनिरंशौ भास्करे दृष्टे इति तूत्तरायणमात्र-सम्बन्धि शातातपः।

अर्कात्षोडशविज्ञेया नाड्यः पश्चाच्च षोडश।
कालः पुण्योऽर्कसंक्रान्तेः विद्वद्भिः परिकीर्तितः ॥४२१॥

इदं विष्णुपदीमात्रे अन्यत्र सर्वत्र विशेषश्रवणात् तत एव दिवातनीषु द्वादशस्वपि संक्रान्तिषु व्यवस्था रात्रिसंक्रान्तिषु।

देवीपुराणे मानार्धे भास्करं पुण्यमपूर्वे शर्वरीदले।
सम्पूर्णे तूभयोर्देयमतिरेके परेऽहनि ॥४२२॥

मानार्धे दिनार्धे भास्करे निरंश इति शेषः, देयं योज्यं दिनार्धे अतिरेकेऽर्धरात्रोपरि तदाऽयमर्थः। अर्धरात्राभ्यन्तरसंक्रान्तौ पूर्वदिनोत्तरार्धमेव पुण्यं, अर्धरात्रोपरि संक्रान्तौ उत्तरदिनपूर्वार्धमेव पुण्यं सम्पूर्णार्धरात्रिसंक्रान्तौ पूर्व-दिनोत्तरार्धमुत्तरदिनोत्तरार्धमेव पुण्यं, एतच्च तिथिभेदे सति यदि तु पूर्वदिने संक्रान्तिसमये वैकैव तिथिर्भवेत् तदार्धरात्रिसंक्रान्तौ पूर्वोत्तरार्धमेव पुण्यम्,

"आदौ पुण्यं विजानीयाद् यद्यभिन्ना तिथिर्भवेत्" इत्यभिधानात्-
सौरधर्मे–या याः संन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।
अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ॥४२३॥

रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः।
अर्धरात्रावधौ तस्मिन्मध्याह्ने स्वोपरि क्रिया ॥४२४॥

ऊर्ध्वसंक्रमणे पुण्यमुदयात्प्रहरद्वयम्।
पूर्वार्धरात्रे संक्रान्तौ दिनार्धपुण्यदे स्मृते ॥४२५॥

एतच्च देवीपुराणे वाक्यव्याख्यानादेव व्याख्यातम् ।
न त्वेवं रात्रि संक्रमणेऽपि दिवैव पुण्यकालता प्राप्ता ।
राहुदर्शनसंक्रान्तिर्विवाहात्ययवृद्धिषु ॥
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च, इति ॥४२६॥

रात्रौ संक्रान्तिकृत्यकथनपरं देवलवचनं निर्विषयत्वमापद्यते चेति। न रात्रिसन्निहितदिवासंक्रान्तौ षोडशनाड्यादिना विहितकालेन रात्रेरपि व्यापनात्तद्विषयतयैवोपपत्तेः। अत्र च निशीति पदमपराह्णोपरिभूतकालसहितनिशापरं, तेन पञ्चमभागात्मकं सायाह्नेऽपि प्रकृतकृत्यं सिध्यति।

**अन्यथा–** "राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु। इत्यनेन सायाह्ननिषेधात् तत्र स्नानादिकं भ्रान्तिकृत्यमापद्येत।

**मत्स्यपुराणे–**

अयने कोटिगुणितं लक्षं विष्णुपदीद्वयम् ।
षडशीतिसहस्रन्तु षडशीत्यामुदाहृतम् ॥४२७॥

शतमिन्दुक्षये पुण्यं सहस्रं तु दिनक्षये ।
विषुवे शतसाहस्रमकामाद् वै त्वनन्तकम् ॥४२८॥

**ब्रह्माण्डे–**

संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
पुण्ये स्नात्वा तु गङ्गायां कुलं कोटि समुद्धरेत् ॥४२९॥

भविष्ये संक्रान्तिषु च सर्वासु चातुर्मासफलं भवेत् ।
एतदेव भवेत्पुण्यं माघकार्तिकमासयोः ॥४३०॥

षण्मासमेकस्त्वपरः सकृदेवोत्तरायणे ।
एतयोः संभवेत्पुण्यं विषुवे च तथैव च ॥४३१॥

**संक्रान्तौ ब्रह्मसदनावाप्तिफलम्–**

ब्राह्मे अयने द्वे विषुवे द्वे यः स्नायाज्जाह्नवीजले ।
गङ्गास्नानस्य लभते फलं षण्मासिकस्य च ॥४३२॥

षण्मासावच्छिन्नसमयाधिकरणकगङ्गास्नानफलमन्त्रषण्मासं स्नाति गङ्गायामित्यादि भविष्यपुराणपठितं षण्मासफलस्य श्रवणात्।

स्कान्दे विषुवद्वयेऽनन्तफलकत्वं वक्ष्यते शातातपः ।
संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥४३३॥

अयनादौ सदा ज्ञेयं द्रव्यमिष्टं गृहेषु च ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥४३४॥
रविसंक्रमणे पुण्ये न स्नायाद् यस्तु मानवः ।
सप्तजन्मान्यसौ रोगी दरिद्रश्चोपजायते ॥४३५॥

**संक्रान्तिर्देवीपुराणे–**

एकधाऽपि कृतं तत्र कोटिकोटिगुणं भवेत् ।
धर्माद्धि वर्धते चास्य राज्यपुत्रसुखानि च ॥४३६॥
अधर्माद् व्याधिशोकादि विषुवायनसन्निधौ ।
विषुवेषु च यद्दत्तं जप्तं भवति चाक्षयम् ॥४३७॥
एवं विष्णुपदे चैव षडशीतिमुखे तथा ।

## । अथ ग्रहणनिर्णयः ।

तत्र यावाल: संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कला ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥४३८॥

यावदिति पदेन संक्रान्तिवन्न पूर्वापरकालयोः पुण्यत्वं किन्त्वग्रस्तावच्छिन्नस्येति दर्शितं, तत्र हरिहरेण मेघादिच्छन्नेऽपि निमित्तमुक्तम् । दृशि हि उपलब्धिमात्रवचनः, उपलम्भस्य प्रमाणान्तरस्य गणितशास्त्रेणापि सम्भवात् । निमित्तबलादेव प्रमारूपताप्राप्तेः, अस्तु वा दर्शनपदस्य स्वावच्छिन्नत्वेन प्रमितेनोपलक्षकत्वं, दर्शनविषयकत्वं तु न प्रयोजकं, कर्मकाले तद्विरहात्, निश्चयपरं वा दर्शनपदं गुरुदर्शनादौ तथा दर्शनात् ।

न त्वेवं दिवा चन्द्रग्रहे रात्रौ सूर्यग्रहे पुण्यकालतापत्तिः, गणितशास्त्रेण तयोरपि प्रमितिसम्भवादिति चेत्, न तयो राज्ञाद्यभिनिवेद्यत्वे गणितशास्त्रेणाभिधानात् । तत्तद्दर्शनपदस्य निरुपाधिचाक्षुषज्ञानविषयत्वात्तद्विषयत्वयोग्यावस्थापरञ्च गोचरपदं प्रयत्नानयने या प्रतिबन्धकार्योऽपि त्वयोग्यता तद्विरह एव च ।

योग्यता, सा च मेघादिच्छन्नेनास्ति, अत एव दिवा चन्द्रग्रहरात्रिकालीनसूर्यग्रहयोर्विनिवृत्तिः, न तु ज्योतिःशास्त्रादभिधानात् । कालनियमकथनपरस्य तस्य राज्ञाद्यभिवेद्यतया नाभिधानाभावात्, अत एव

"स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने" इत्यादौ दर्शनमेव विवक्षितम् निरुपहता दृशस्तन्मात्रपरत्वात् । अतएव लोकाअपि दर्शनमेवाद्रियन्ते । न चैवं दर्शनान्तरं मेघादिच्छन्ने वृत्त्यापत्तिः । कदाचिद्दर्शनेऽपि दर्शनयोग्यता । तस्य व्यावृत्तिः, अयोग्या, दुर्निरूपणीयत्वात् ।

यदि किञ्चिद्दर्शनायोग्यत्वं यदि कोऽपि न पश्यति तदा जपेत्, यदि तु पर्वतादिव्यवधानान्न कोऽपि पश्यति तदा मा भून्निमित्तत्वं कल्पतरौ तु निमित्तबलादेव ज्ञानमात्रलाभे दर्शनपदोपादानवशाच्चाक्षुषज्ञानविषयत्वं प्रयोजनमित्युक्तम्।

अत्र च निषिद्धसमये गङ्गादितीर्थप्राप्तावपि ग्रहणदर्शनं न कर्त्तव्यम्, निषेधे परापलाभासम्भवात्।

**तथाहि वाराहसंहितायाम्—**

दशमसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे।
दिष्टेऽनिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ॥४३९॥

**रिष्फो द्वादशोऽङ्को नवमो जन्मर्क्षं जन्मतारा, राजमार्तण्डे—**

सप्ताष्टजन्मकेतुस्थे चतुर्थे नवमे तथा।
दशमे च निशानाथे न कुर्याद्राहुदर्शनम् ॥४४०॥

मैथिलानां तु जन्मचन्द्रमात्रे निषेधव्यवहारः, तत्र तु अज्ञानमेव मूलमिति।

**ब्रह्माण्डे** संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्ययोः।
पुष्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत् ॥४४१॥

**भविष्ये** संक्रान्तौ पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः।
गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत् ॥

**ब्राह्मे** चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम्।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥४४२॥

इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं तथा।
गङ्गातीरे तु सम्प्राप्तेरिन्दोः कोटी रवेर्दश ॥४४३॥

गवां कोटीसहस्रस्य सम्यक् तस्य च यत्फलम्।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥४४४॥

**पुनस्तद्वत्ततः सांख्यमुदाहृतम्। स्कान्दे—**

दिनक्षये पर्वणि जातकाले शशाङ्कसूर्यग्रहणद्वये च।
अनन्तपुण्यं विषुवद्वये च यस्तस्य पुंसोऽक्षयधर्मकोषः ॥४४५॥

अनन्तपुण्यमिति पूर्वान्वयस्नानादिति शेषः।

**भविष्ये** सोमसूर्यग्रहे लक्षं व्यतीपाते त्वनन्तकम्।

**गारुडे** सूर्यग्रहः सूर्यवारे सोमे सोमग्रहस्तथा।
चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् ॥४४६॥

अन्यस्माद् ग्रहणात् कोटिदानं गुणफलं भवेत्।

**दानादिसाधारणमिदं फलम्। ब्रह्मपुराणे–**

नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः।
चन्द्रार्कग्रहयोश्चापि व्यतीपातेषु पर्वसु॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्॥४४७॥
देवीपु. यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत्॥४४८॥

ये सूर्ये सैंहिके येन स्पृष्टे रेवाजलं नराः।
स्पृशन्ति चावगाहन्ति न ते प्राकृतमानुषाः॥४४९॥

स्नात्वा क्रतुशतं पुण्यं दृष्ट्वा गोदानजं फलम्।
स्पृष्ट्वा गोमेधजं पुण्यं पीत्वा सौत्रामणिं लभेत्॥४५०॥

स्नात्वा वाजिमखं पुण्यं प्राप्नुयादपि चारतः।
रविचन्द्रोपरांगे तु अयने चोत्तरायणे॥४५१॥

एवं गङ्गाऽपि द्रष्टव्या तद्वदेव सरस्वती।
ऊशरारण्यक्षेत्रेषु यत्पुण्यं समुदाहृतम्॥४५२॥
तदत्र कालमाहात्म्यादुपरागेऽधिकं भवेत्।

**ऊषरादयः पुण्यदेशभेदाः–**

कर्मप्रदीपः स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः॥४५३॥

स्वर्धुनी गङ्गा राहुदर्शननिमित्तकस्नानं रात्रावपि नद्यादिकं प्रविश्य कर्त्तव्यम्, "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु", इत्यादि पूर्वलिखितवाक्याच्चेति। कूपोदकस्नानपक्षे ग्रहण एव जलोद्धरणं कूपस्थान्यपीति कूपस्थस्यैव स्वर्धुन्यम्भोऽतिदेशादत एव श्रीदत्तोपाध्यायेनाह्निके तथा लिखितम्।

कात्यायनः उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्योपरागे च रजोदोषो न विद्यते॥४५४॥

अत्र ग्रहणकाले त्वशौचाप्ते साङ्गस्नानमात्रं कर्त्तव्यं न तु श्राद्धादि।

सूतके मृतके चैव न दोषो राहुदर्शने।
स्नानमात्रन्तु कुर्वीत दानश्राद्धविवर्जितम्॥४५५॥

स्मृतिः नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाच्च मुक्तयोः॥४५६॥

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।
स्नात्वा दृष्ट्वा परेऽह्न्यद्यद्ग्रस्तास्तमितयोस्तयोः ॥४५७॥

महानिशा च सार्द्धप्रहरान्तरं मुहूर्तचतुष्टयमिति कल्पतरुकारः।

अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥४५८॥

सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः।
धौतपापो विशुद्धात्मा मोदते तत्र देववत् ॥४५९॥

मुक्तदर्शनानन्तरं भोजनविधानादहोरात्राद्भोजनमदर्शनपक्षे सूर्याचन्द्रमसोरित्यादिना फलनिर्देशात्काम्यत्वं, कामनाविरहेऽपि नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायमित्यादिवाक्यादेव व्यवस्था। एवं च मुक्तयोश्चन्द्रसूर्ययोरस्तमयोर्दशनपक्षे भोजनमदोषं स्नात्वाऽश्नीयाच्च मुक्तयोरित्युक्तः। फलार्थिना मुक्तिदर्शनाभावे न भोक्तव्यम्।

**मुक्तं दृष्ट्वेति शातातपवचनात्, पठन्ति च—**

अर्धरात्रे व्यतीपाते यदा चन्द्रग्रहो भवेत्।
सायं तत्र न भुञ्जीत न तु प्रातरभोजनम् ॥४६०॥

एतच्च ग्रस्तास्तादिविषयपरम्।

## । अथ मन्वन्तरादि ।

मत्स्यपुराणे अश्वयुक्शुक्लनवमी द्वादशी कार्तिकी तथा।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥४६१॥

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥४६२॥

श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥४६३॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः।

अमावास्यामष्टमीं विहाय सर्वा शुक्ला, अत्र कामधेनौ तृतीया माघमासेति पठन्ति, कल्पतरौ तृतीया चैत्रमासस्येति पठन्ति। अत्र पाठद्वैधे ज्योतिःशास्त्रे मधौ तृतीयेति पाठात् चैत्रशुक्लतृतीयाऽत्र ग्राह्येति मन्वादौ गङ्गायां मासत्रयफलं संयुज्यते।

## । अथ युगाद्याः ।

वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥४६४॥

एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥४६५॥
श्राद्धं कृतं तेन समा सहस्रं रहस्यमेतन्मुनयो वदन्ति ।

अत्र भाद्रकृष्णत्रयोदशी भाद्रपूर्णिमानन्तरं बोद्धव्या शुक्लादिमासपरिग्रहात् विश्वादिभिः श्राद्धकालत्वेन तदभिधानात् शिष्टपरिग्रहाच्च पञ्चदशीपदेन माघपूर्णिमैव ग्राह्या शुक्लादिमासपरिग्रहेण पञ्चदशीपदेन तन्मात्रलाभात् ।

न च तमिस्रपक्ष इत्यनुषङ्गबलात्पञ्चदशीपदं माघीयामावास्यापरम्, अनुषङ्गे मानाभावात् ।

नवम्यां शुक्लपक्षस्य कार्तिके निरगात् कृतम् ।
त्रेता मासि तृतीयायां वैशाखे समपद्यत ।
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ॥४६६॥

कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ।
द्वे शुक्ले द्वे तथा कृष्णे युगाद्ये परिकीर्त्यते ॥४६७॥
शुक्ले पूर्वाह्णिके सद्भिः कृष्णे चैवापराह्णिके ।

इति गौडीयपठितवाक्यैकवाक्यतया अनुषङ्गः गौडीयतयैतद्वचनद्वयस्यामूलकत्वात् । किञ्च ।

वैशाखे शुक्लपक्षस्य तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षस्य त्रेता च नवमेऽहनि ॥४६८॥

**। अथ भाद्रपदे कृष्णत्रयोदश्यां द्वापरं युगम् ।**

माघे तु पूर्णमास्यान्तु घोरं कलियुगं पुरम् ।
युगारम्भास्तु तिथयोयुगाद्यास्तेन कीर्तिताः ।
सूर्यस्य सिंहसंक्रान्त्यामन्तः कलियुगस्य च ॥४६९॥
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेता युगस्य च ।

ज्ञेयाश्च वृषसंक्रान्त्या द्वापरान्तश्च संज्ञया ॥४७०॥
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च ।
युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते ॥४७१॥

इति परिशिष्टपरिगृहीतब्रह्मपुराणीयवचनविरोधश्च, तस्मान्माघपूर्णिमैव युगाद्या न तु माघामावास्या, केचित्तु युगभेदेन युगादित्वं स्वीकुर्वन्ति, हरिहरस्तु विकल्पमुक्तवान् ।

भविष्ये 'मन्वादौ च युगादौ च मासत्रयफलं भवेत्' ।

अत्र यद्यपि नैरन्तर्येण गङ्गायामित्यादिभविष्यपुराणीयपठितमासफलवत्, षण्मासफलवद्वा मासत्रयफलं विशिष्य न श्रुतमस्ति । तथापि मासफलमेव त्रिगुणं बोद्धव्यम् । तत्रापि शक्रसमत्वं यद्यपि समानमेव तथापि चिरसमये भूम्ना ब्रह्मपुराणाधिकरणककल्पकोटिशतायुषस्य[१] च त्रैगुण्यं विवक्षितमित्यभिधेयम् । केचित्तु राजाद्यलिखितवचनबलाद्युगाद्येषु श्राद्धे पिण्डं न मन्यन्त इति ।

## ।। अथ देशविशेषगङ्गास्नानफलम् ।।

**तत्र भविष्ये—**

गङ्गाद्वारे कुशावर्त्ते स्नाने पुण्यफलं शृणु ।
सप्तानां राजसूयानां फलं स्यादश्वमेधयोः ।।४७२।।

उषित्वा तत्र मासार्धं षण्णां विश्वजितां फलम् ।
दशायुतगवां दानात् पुण्यं च लभते नरः ।।४७३।।

सुरोत्तमं च गोविन्दं रुद्रं कनखले स्थितम् ।
स्नात्वा वाप्यथ गङ्गायां फलमक्षयमाप्नुयात् ।।४७४।।
गङ्गास्नानान्तरगोविन्दपूजनफलमेतदिति शिष्टाः ।

**वनपर्वणि—**

तीर्थं च शौकरं नाम महापुण्यं मुने! शृणु ।
यस्मिन्नाविरभूत्पूर्वं [२]वराहाकृतिरच्युतः ।।४७८।।(२)

शतमग्निचितां पुण्यं ज्योतिष्टोमद्वयस्य च ।
अग्निष्टोमसहस्रस्य फलमत्राप्नुयान्नरः ।।४७९।।

**स्कन्दमत्स्ययोः—**

यत् पुण्यं कनखले तीर्थे यत्पुण्यं तु गयासु च ।
स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः ।।४८०।।

तत्राभिषेकं यः कुर्यात्सोऽश्वमेधान्दशाप्नुयात् ।
महाभा. तत्रैव ब्रह्मणस्तीर्थं ज्योतिष्टोमाष्टकं तथा ।
अश्वमेधत्रयस्यापि स्नानात्त्वत्र फलं भवेत् ।।४८१।।

---

१. 'शतायुषः' इति शु.पा. ।
२. अत्र श्लोकसंख्याक्रमभङ्गोऽस्ति ।

**तत्रैव शौकर एव तथा–**

शौकराख्यं तीर्थमनघं यत्र च व्याधयोऽखिलाः ।
नश्यन्ति सर्वजन्मोत्थं स्यान्नष्टं पातकं नृणाम् ॥४८२॥

मत्स्य पु. कुरुक्षेत्रसमा गङ्गा यत्र कुत्रावगाहिता ।
तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन सङ्गता ॥४८३॥

तस्माद्दशगुणा पुण्या काश्यामुत्तरवाहिनी ।
काश्याः शतगुणा प्रोक्ता गङ्गायमुनसङ्गमे ॥४८४॥

सहस्रगुणिता चापि भवेत्पश्चिमवाहिनी ।
सा राजन् ! दर्शनादेव ब्रह्महत्यां व्यपोहति ॥४८५॥

महाभा. अत्राहुः कापिलं तीर्थं कपिले येन चान्वहम् ।
दत्तान्येवायुतान्यष्टौ स्नानात्तस्य फलं भवेत् ॥४८६॥

गङ्गाद्वारे कुशावर्ते विल्वके नीलपर्वते ।
तीर्थे कर्णखले स्नात्वा धूतपापो दिवं व्रजेत् ॥४८७॥

पाद्मे स्वर्णभारसंहस्रेण कुरुक्षेत्रे रविग्रहे ।
यत्फलं तल्लभेज्जन्तुः प्रयागे तु दिने दिने ॥४८८॥

भविष्ये गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्त्र्यहं स्नानतो माघे गङ्गायमुनसङ्गमे ॥४८९॥

गङ्गायमुनयोश्चैव सङ्गमो लोकविश्रुतः ।
तदेव कामिकं तीर्थं तत्र स्नानेन भक्तितः ॥४९०॥

यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः ।
भोगकामस्य भोगाः स्युः स्याद्राज्यं राज्यकामिनः ॥४९१॥

स्वर्गः स्यात्स्वर्गकामस्य मोक्षः स्यान्मोक्षकामिनः ।
काम्यप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ॥४९२॥

सर्वाणि तानि सेवन्ते गङ्गायमुनसंगमम् ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥४९३॥

स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ।
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ॥४९४॥

सदा [1]सेवन्ति तत्तीर्थं गङ्गायमुनसङ्गमम् ।
श्रवणात्तस्य तीर्थस्य नामसङ्कीर्तनादपि ॥४९५॥

---

१. श्रयन्ति

मृत्तिकालभनाच्चापि गङ्गास्नानफलं भवेत् ।
तत्राभिषेकं यः कुर्यात्सङ्गमे शंसितव्रतः ॥४९६॥
तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ।
न वेदवचनात्तात ! न लोकवचनादपि ॥४९७॥
मतिरुत्क्रमणीया ते प्रयागे मरणं प्रति ।
दशतीर्थसहस्राणि कोट्यस्तिस्रस्तथा पराः ॥४९८॥
तेषां सान्निध्यमत्रैव कीर्तितं कुरुनन्दन !
या गतिर्योगयुक्तानां सत्पथानां च धीमताम् ॥४९९॥
सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे ।
न ते जीवन्ति लोकेऽस्मिन् जीवन्तो वा मृता हि ते ॥५००॥
ये प्रयागं न सम्प्राप्तास्त्रिषु लोकेषु विश्रुतम् ॥५०१॥
महाभा. सितासिते यत्स्नानं माघे मासि युधिष्ठिर ! ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥५०२॥
भविष्ये अर्कतीर्थे नरः स्नात्वा गङ्गामभ्यर्च्य च पितॄन् ।
कुलानां तारयेत्सद्यः सप्त सप्त च सप्त च ॥५०३॥

**तथा—**

त्रैलोक्ये यानि तीर्थानि मोक्षं दानं च कृत्स्नशः ।
सेवन्ते सततं गङ्गां काश्यामुत्तरवाहिनीम् ॥५०४॥
दशाश्वमेधे यः स्नात्वा दृष्ट्वा विश्वेश्वरं शिवम् ।
सद्यः पापैर्विनिर्मुक्तो भवबन्धात्प्रमुच्यते ॥५०५॥
गङ्गा हि सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
वाराणस्यां विशेषेण यत्र चोत्तरवाहिनी ॥५०६॥
वाराणस्यास्तथाऽस्याश्च जाह्नव्यां सङ्गमे नरः ।
स्नानमात्रेण सर्वेभ्यः पातकेभ्यो विमुच्यते ॥५०७॥
काश्यामुत्तरवाहिन्यां गङ्गायां कार्तिके तथा ।
स्नानाद्विमुच्यते माघे महापापातिपातकैः ॥५०८॥
सर्वलोकेषु तीर्थानि यानि ख्यातानि सर्वतः ।
सर्वाणि तानि शेषाणि वाराणस्यां तु जाह्नवीम् ॥५०९॥
उत्तराभिमुखीं पुण्यामागच्छन्ति दिने दिने ।
नित्यं पर्वसु सर्वेषु पुण्यैरायतनैः सह ॥५१०॥

महापातकदुष्टानां दुष्टानां स्पर्शनेन तु ।
व्यपोहितं स्वपापं च जनः पापापनुत्तये ॥५११॥

जन्मान्तरशतेनाऽपि तत्कर्मनिरतस्य च ।
येऽन्यत्र सुधियश्चापि मोक्षो लभ्येत मानवैः ॥५१२॥

एतेन जन्मना चात्र गङ्गायां मरणेन च ।
मोक्षं तु लभते काश्यां विषये चलितात्मनः ॥५१३॥

पवित्राख्यं तु यत्तीर्थं सर्वतीर्थपवित्रकम् ।
द्वयोर्विश्वजितोस्तत्र स्नानात्पुण्यं लभेन्नरः ॥५१४॥

वेणीबाह्यं ततस्तीर्थं सरयूर्यत्र सङ्गता ।
सुपर्णा या महापुण्या स्वतस्तत्रैव सङ्गता ॥५१५॥

हरेर्दक्षिणपादाब्जक्षालनाच्च सुरापगा ।
वामपादोदकं विद्धि सरयूं मानसोद्भवाम् ॥५१६॥

तीर्थे तत्रार्चयन् रुद्रं विष्णुर्विष्णुत्वमाप्तवान् ।
पञ्चाश्वमेघफलदं स्नानं तस्मिन्नघापहम् ॥५१७॥

विष्णुमाराध्य वैणीं प्रसिद्धां दर्दुरीं तथा ।
ततस्तु गण्डकीतीर्थं गण्डकी यत्र संगता ॥
गोसहस्रप्रदानं च तत्र स्नानेन सम्मितम् ॥५१८॥

रामतीर्थं ततः पुण्यं वैकुण्ठायनसन्निधौ ।
सोमतीर्थं द्विजः प्राप्य विष्णुनामा ऋषिर्मतः ॥५१९॥

समभ्यर्च्य शिवं ध्यायन् गणतां तु समाययौ ।
चीपकाख्यं ततस्तीर्थं पर्वतान्तर्हितं पुरः ॥५२०॥

कहेलपुलिनी गङ्गा यत्र ज्ञात्वा भगीरथम् ।
मणिकर्णिका तु सा ज्ञेया महापातकनाशिनी ॥५२१॥

**स्मरन्ति च–**

कालहाख्यं ततस्तीर्थं पर्वतान्तर्हितं पुरः ।
कहेलपुलिना गङ्गा यत्र ज्ञात्वा भगीरथम् ॥५२२॥

रथेनैव द्विधा चक्रे तं पर्वतमनुत्तमम् ।
स तत्र स्थापयामास स्थाणुं पापप्रणाशनम् ॥५२३॥

तत्र स्नात्वा तु गङ्गायां दृष्ट्वाऽपि च महेश्वरम् ।
सर्वपापविनिर्मुक्तो मुनिं समधिगच्छति ॥५२४॥

ततस्तूद्दालके क्षेत्रे हरिर्यत्राणिमादिकाम् ।
सिद्धिं तत्र नरः स्नात्वा कुलकोटीः समुद्धरेत् ॥५२५॥
कलशाख्यं ततस्तीर्थं कलशान्निःसृतो मुनिः ।
अगस्तिस्तज्जपो यत्र तत्त्वान्मुनिवरोऽभवत् ॥५२६॥
सोमतीर्थं महापुण्यं तीर्थं वाराणसीसमम् ।
सोमो यत्रार्चयन् रूद्रमीशेन शिरसा धृतः ॥५२७॥
विंश्वामित्रस्य भगिनी गङ्गया यत्र सङ्गता ।
तत्राप्यत्युच्चविस्तारे सम्मतः स्यात्प्रियातिथिः ॥५२८॥
जह्नुह्रदे महातीर्थे स्नातं यत्र शरीरिणा ।
एकविंशतिसन्तानकारणं मृग्यते परम् ॥५२९॥

**जह्नुह्रदादेकशाखनगरे गङ्गायाममावास्याभ्यन्तरे—**

तस्मादतिथितीर्थं च यत्राराध्याऽदितिर्हरिः,
कश्यपाज्जन्म वै लेभे तत्र स्थानं महोदयम् ॥
शिलोच्चये महातीर्थे यत्र तप्त्वा तपः प्रजाः ॥५३०॥
तृणादिभिः सह स्वर्गं यान्ति तीर्थजलाश्रयात् ।
इन्द्राणी नाम तीर्थं स्यादिन्द्राणी यत्र वासवम् ॥५३१॥
तपस्तप्त्वा पतिं लेभे शैव्येव सा प्रियाऽभवत् ।
पुण्यमाम्रातकं तीर्थं विश्वामित्रस्तपश्चरन् ॥५३२॥
यत्र ब्रह्मर्षितां लेभे क्षत्रियस्तीर्थसेवया ।
प्रद्युम्नतीर्थं तपसा यत्रत्येन स्मरो हरेः ॥५३३॥
प्रद्युम्ननाम्ना पुत्रोऽभूत्स्थाने तत्र महोदये ।
प्रयागं च ततस्तीर्थं गङ्गायमुनसङ्गमम् ॥५३४॥
स्नानाच्चाक्षयं पुण्यं प्रयाग इति लक्ष्यते ।

दक्षिणप्रयाग उन्मुक्तवेणीसप्तग्राम इति प्रसिद्ध इति तीर्थचिन्तामणौ मिश्राः ।

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
स्नात्वेव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ॥५३५॥
गङ्गायास्त्वथ राजेन्द्र ! सागरस्य च सङ्गमे ।
अश्वमेधाद् दशगुणं प्रवदन्ति मनीषिणः ॥५३६॥

अन्तर्यक्षे क्षितौ तोये पापीयानपि यो मृतः।
हरिब्रह्मशिवैः पूज्यं पदमक्षयमश्नुते ॥५३७॥

**मात्स्ये गौडाः पठन्ति—**

गङ्गायां च जले मोक्षो वाराणस्यां जले स्थले।
जले स्थलेऽन्तरिक्षे च गङ्गासागरसङ्गमे ॥५३८॥

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।
सर्वत्र दुर्लभा गङ्गा त्रिषु, स्थाने विशिष्यते ॥५३९॥

## । अथ पञ्चतीर्थाः स्मरन्ति ।

अमरः कपिलश्चैव श्वेतद्वीपपतिस्तथा।
सङ्केतो माधवः स्कन्दः पञ्चमश्च महोदधिः ॥५४०॥

अमरोऽत्र महादेवः श्वेतद्वीपपतिः सङ्केत इत्येकैव देवता।

## । अथ प्रथमक्षीरहरिदर्शनम् ।

क्षीरवर्णं हरिं दृष्ट्वा स्मृत्वा अमरशङ्करम्।
तावन्न मुच्यते स्वर्गाद्यावदिन्द्राश्चतुर्दश ॥५४१॥

**इति वचनात् ततः शिवं पश्येत्—**

शिवकुण्डे नरः स्नात्वा स्मृत्वा चामरशङ्करम्।
माधवं कार्त्तिकेयञ्च न भूयः पुरुषो भवेत् ॥५४२॥

पुरुषो न भवेदिति पुनर्जन्माभावपरम्। ततश्च कपिलं पश्येत्।

कपिलस्य मुखं दृष्ट्वा स्पृष्ट्वा पैतामहं पदम्।
तारगङ्गोदकं पीत्वा पुनर्जन्म न विद्यते ॥५४३॥

सागरसन्निहिता, सगरसन्तिततारकत्वात् तारगङ्गेत्युच्यते, ततश्च सङ्केतमाधवं नमस्कृत्य पूजयेत्।

**तत्र मन्त्रः—**

श्वेतद्वीपमितिख्यातमिदं क्षेत्रं भवान् पतिः।
क्षेत्रस्यास्य जगन्नाथ! प्रसीद पुरुषोत्तम! ॥५४४॥

गङ्गासागरसम्भेदं समुल्लासैकमङ्गलीम्।
सङ्केतमाधवं देवं नमामि पुरुषोत्तमम् ॥५४५॥

सङ्केतमाधवो देवश्चतुश्चक्रसमन्वितः ।
जन्मकोटिसहस्रैस्तु यः कृतः पापसञ्चयः ॥५४६॥
चतुश्चक्रे हरौ दृष्टे तत्क्षणादेव नश्यति ।

**ततो गङ्गासागरसङ्गमे–**

प्रयागे माघमासे तु यत्फलं प्राप्नुयान्नरः ।
सागरे स्नानमात्रेण दिनेनैकेन तद्भवेत् ॥५४७॥

या गतिर्योगयुक्तस्य वाराणस्यां मृतस्य च ।
सा गतिःस्नानमात्रेण सागरे हरिवासरे ॥५४८॥

**सागरे गङ्गासागरे प्रकरणात्–**

तत्रमनुः त्वं देव ! सरसां नाथस्त्वं देव ! सरितां तथा ।
उभयोरम्भसि स्नात्वा मुञ्चामि दुरितानि वै ॥५४९॥

**ततः स्कन्दं पश्येत् । तत्र मन्त्रः–**

तडिद्वासं हयारूढं संसारार्णवतारकम् ।
पार्वती-नन्दनं ख्यातं प्रपन्नजनवत्सलम् ॥५५०॥
तडिद्वासमहं वन्दे क्षेत्रस्यास्य विनायकम् ।

तडिद्वास इति तत्र स्कन्दस्यैव नाम । यथासम्भवं सर्वानेतान् पूजयेत् । अन्यत्रापि नानास्थाने नानावतारान्तराणि पूजयन्ति ।

## । अथ शिवसन्निधानस्नानम् ।

**भविष्ये–**

शिवलिङ्गं महापुण्यं सर्वपापप्रणाशनम् ।
सर्वदेवमयं चैव सर्वसिद्धिप्रदायकम् ॥५५१॥

तत्रैव लीयते विश्वं तस्मिन्नुत्पद्यते तथा ।
स्थावरं जङ्गमं चैव जगत्तत्रैव तिष्ठति ॥५५२॥

सर्वोत्तरं तु तत्तेजः सर्वव्याधिविनाशनम् ।
तस्य पार्श्वे च गङ्गायां सर्वधर्ममयीकृते ॥५५३॥

स्नातस्य यद्भवेत् पुण्यं श्रद्धयाऽत्र जयस्य च ।
न शक्नुवन्ति देवाश्च सहस्राक्षपुरोगमाः ॥५५४॥
तद्वक्तुं सर्वशः साक्षाद्दिव्यवर्षशतेन च ।

**श्रीरत्नपाणिपुस्तकम् ।**

## । अथ सन्ध्याप्रकरणम् ।

पुलस्त्यः गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता ।
जाह्नव्यां शतसाहस्रा अनन्ता शिवसन्निधौ ॥५५५॥

## । अथ तर्पणम् ।

**ब्रह्माण्डाग्नेयदानधर्मेषु—**

य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄन् तर्पयेद् गङ्गामभिगम्य सुरांस्तथा ॥५५६॥

वैष्णवे दत्ता पितृभ्यो या आपस्तनयैः श्रद्धयान्वितैः ।
समास्त्रयं प्रयच्छन्ति तृप्तिं मैत्रेयदुर्लभाम् ॥५५७॥

**प्रकरणाद् गङ्गायां भविष्ये—**

सुलभाश्चतुरो वेदाः साङ्गाश्च सपदक्रमाः ।
सुलभानि कुरुक्षेत्रे दानानि विविधानि च ॥५५८॥

चान्द्रायणानि कृच्छ्राणि तपांसि विविधानि च ।
अग्निष्टोमादयो यज्ञाः सुलभाश्चाप्तदक्षिणाः ॥५५९॥
गङ्गातोयैस्तु सलिलैर्दुर्लभं पितृतर्पणम् ।

**तदधिकफलप्राप्तिः फलमित्यर्थः—**

मासतर्पणमात्रेण पिण्डानां पातनेन च ।
गङ्गायां पितरः सर्वे विमानात् सूर्यवर्चसः ॥५६०॥

अप्सरोगणसंयुक्ता हेमरत्नविभूषिताः ।
गङ्गातर्पणसंतृप्ताः श्राद्धपिण्डैः सुतर्पिताः ॥५६१॥

आरुह्य सहसा यान्ति ब्रह्मलोकमनामयम् ।
यावन्तश्च तिलाः पुत्रैर्गृहीताः पितृकर्मणि ॥५६२॥

तावद्वर्षसहस्राणि पितरः स्वर्गगामिनः ।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥५६३॥

सुलभं सकलं पुण्यं यज्ञदानादिजं फलम् ।
गङ्गातोयैश्च सलिलैर्दुर्लभं पितृतर्पणम् ॥५६४॥

ब्रह्म पु. देवेभ्यश्च पितृभ्यश्च यो दद्यात्सतिलं जलम् ।
तारयित्वा पापसङ्घात्स याति परमां गतिम् ॥५६५॥

देवाश्च पितरो यस्माद् गङ्गायां तु सदा स्थिताः ।
आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ॥५६६॥

पितृवंशोद्भवा ये च मातृवंशे च ये मृताः।
गुरुवंशे मृता ये च बन्धुवंशे मृताश्च ये ॥५६७॥
अजातदन्ता ये केचिद् ये च गर्भप्रपीडिताः।
अग्निविद्युच्चौरहुता व्याघ्रदंष्ट्रादिभिस्तथा ॥५६८॥
उद्बन्धनमृता ये च पतिता आत्मघातकाः।
आत्मविक्रयिणश्चैव ये वा चायाज्यस्य याजकाः ॥५६९॥
रसविक्रयिणो ये च वेदविक्रयिणश्च ये।
अग्निदा गरदाश्चैव गोघ्नाश्चैव स्ववंशजाः ॥५७०॥
असिपत्रवने ये च कुम्भीपाके च ये स्थिताः।
रौरवेऽप्यन्धतामिस्रे कालसूत्रे च ये स्थिताः ॥५७१॥
जात्यन्तरसहस्रेषु भ्रमन्ते च स्वकर्मणा।
ये च पक्षिगणानान्तु कीटवृक्षादिवीरुधाम् ॥५७२॥
ये लिङ्गानां त्वसंख्याता संख्यातानां च शोभनाः।
प्राप्ता ये यमसालोक्ये सुघोरैर्यमकिङ्करैः ॥५७३॥
ये बान्धवाऽऽबान्धवाश्च येऽन्यजन्मनि बान्धवाः।
येऽप्यविज्ञातनामानो ये चाप्यन्धाः स्वगोत्रजाः ॥५७४॥
विषेण च मृता ये च शृङ्गिखड्गिहताश्च ये।
कृतघ्नाश्च गुरुघ्नाश्च ये च मित्रद्रुहस्तथा ॥५७५॥
स्त्रीबालघातका ये च ये च विश्वासघातकाः।
असत्यहिंसानिरताः सर्वपापरताश्च ये ॥५७६॥
अश्वविक्रयिणो ये च परद्रव्यंरताश्च ये।
अनाथाः कृपणा दीना मानुष्यं प्राप्तुमक्षमाः ॥५७७॥
ये वा मृषिताश्चैव ते सर्वे सकुशैस्तिलैः।
तर्पिता जाह्नवीतोयैर्नरैण विधिना सकृत् ॥५७८॥
प्रयान्ति स्वर्गलोकन्तु नात्र कार्या विचारणा।
स्वर्गसंस्थाश्च ये केचित् पितरः पुण्यशालिनः ॥५७९॥
गङ्गाजलैश्च तैः पुण्या विविधास्तर्पिताः सकृत्।
तेऽपि मोक्षं प्रपद्यन्ते यथा ब्रह्माऽब्रवीद्वचः ॥५८०॥
स्मृतिः निषिद्धदिनमासाद्य यः कुर्यात्तिलतर्पणम्।
रुधिरं तद्भवेत्तोयं दाता स नरकं व्रजेत् ॥५८१॥

रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे ।
सप्तम्यां जन्मदिवसे न कुर्यात्तिलतर्पणम् ॥५८२॥

मात्स्ये संक्रान्तौ निशि सप्तम्यां रविशुक्रदिने तथा ।
जन्मनि श्राद्धदिवसे न कुर्यात्तिलतर्पणम् ॥५८३॥

**श्राद्धपदमत्रामावास्याश्राद्धेतरश्राद्धविषयम्–**

नीलषण्ढविमोक्षेण अमावास्यातिलोदकैः ।
वर्षासु दीपदानेऽपि पितृणामनृणो भवेत् ॥५८४॥

स्मृतिः अयने विषुवे चैव संक्रान्तौ ग्रहणेषु च ।
उपाकर्मवृषोत्सर्गे न दुष्येत् तिलतर्पणम् ॥५८५॥

**तीर्थे प्रतिषेधाभावात् स्कान्दे आह–**

तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः ।
योऽन्यथा तर्पयेन्मूढः स विष्ठायां कृमिर्भवेत् ॥४८६॥

**निषिद्धदिने इति प्रकरणाल्लब्धमेव–**

विशेषेण तु जाह्नव्यां सर्वदा तर्पयेत् पितृन् ।
न कालनियमस्तत्र क्रियते सर्वकर्मसु ॥४८७॥

**तथा च कात्यायनः,**

यो नित्यं तर्पयेत्तीर्थे पितृन् कृष्णातिलोदकैः ।
बद्धाँस्तान् मोचयित्वाऽग्रे शेषं ब्रह्मपुरे वसेत् ॥५८७॥(क)

यत्तु तिलैस्तर्पयेन्नित्यं गौडस्मृतिः तत्सामान्यजनविषयनिषिद्धदिनत्यागेन नित्यतेत्यर्थः, न तु सामान्यतर्पणे नित्यता बहुपराणस्मृतिविरोधादिति तदेतत् सर्वं निषिद्धदिनमासाद्येत्यादि प्राकरणिकं 'गङ्गावाक्यावल्यां' विद्यापत्युपाध्यायैर्लिखितमस्ति । मैथिलानां तु व्यवहारो न दृश्यते । इत्यमूलकत्वशङ्काऽवतरतीति इति ।

## । अथावगाहनम् ।

ब्रह्माण्ड पुराणे यैः पुण्यवाहिनी गङ्गा सकृद्भक्त्याऽवगाहिता ।
न तेषां कुलनाशश्च भवात्तारयते शिवा ॥५८८॥

अग्निं प्राप्य यथा सद्यः तूलराशिर्विनश्यति ।
तथा गङ्गाऽवगाहस्य सर्वपापं विनश्यति ॥५८९॥

भविष्ये भक्त्या गङ्गाऽवगाहस्य फलं वक्तुं न शक्यते ।
स्वर्गो मोक्षो भवेत्तस्येत्येवमाहुर्मनीषिणः ॥५९०॥

वनपर्वणि यद्यकार्यशतं कृत्वा कृतं गङ्गाऽवगाहनम् ।
सर्वं दहति गङ्गा तु तूलराशिमिवानलः ॥५९१॥

विष्णुपुराणे स्तुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ।
पापात्तारयति[१] भूतानि कीर्तिताऽपि दिने-दिने ॥५९२॥

अग्निं प्राप्य विधूयेत यथा तूलं द्विजोत्तम ! ।
तथा गङ्गाऽवगाहेन सर्वं पापं विधूयते ॥५९३॥

भूस्थैः स्वःस्थैर्दिविस्थैश्च भूतैरुच्चावचैरपि ।
गङ्गाऽवगाह्या सततमेतत् कार्यं सुसम्मतम् ॥५९४॥

ब्रह्म पु. वर्णानां ब्राह्मणो यद्वत्तथा तीर्थेषु जाह्नवी ।
स्वर्गस्थैर्गगनस्थैश्च तथा पातालवासिभिः ॥५९५॥

अवगाह्या तथा गङ्गा पूज्या वन्द्या च सर्वदा ।
भविष्ये सकृद्गङ्गाऽवगाहेन कुलकोटीः समुद्धरेत् ।
मोक्षं च लभते सत्यं पातकाभावमेव च ॥५९६॥

गाङ्गेये सेवते यः कुरुक्षेत्रे लभेत्तदवगाह्य सः ॥५९७॥

## ॥ अथ मृत्तिका ॥

**दानधर्मब्रह्माण्डाग्नेयेषु—**

गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥५९८॥

स्कान्दे अपि पापं नरो नित्यं सुदूरस्थोऽपि मानवः ।
आलिप्य विबुधान् याति भक्त्या तत्तीरमृत्तिकाम् ॥५९९॥

गङ्गातीरसमुद्भूतां मृदं भक्त्या तु मानवः ।
विलिप्य सर्वदेहेषु गोसहस्रफलं लभेत् ॥६००॥

## ॥ अथ पूजाप्रकरणम् ॥

गाङ्गेये पूजितायान्तु गङ्गायां पूजिता सर्वदेवताः ।
तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥६०१॥

नीलोत्पलं सितं पद्मं गङ्गायास्तु सदा प्रिये ।
ततः- पुष्पैः पूजयेद्यस्तु भक्त्या गङ्गां नरोत्तमः ॥६०२॥

तस्य तुष्टा सदा गङ्गा सर्वान् कामान् प्रयच्छति ।
इह श्रियं परां दत्वा मुक्तिमन्ते ददाति च ॥६०३॥

१. 'पापाद्रक्षति' पाठभेदः

भविष्ये (ध्यानम्) चतुर्भुजां त्रिनेत्रां च सर्वावयवभूषिताम्।
रत्नकुम्भसिताम्भोजवरदानाभयप्रदाम् ॥६०४॥

श्वेतवस्त्रपरीधानां मुक्तमालाविभूषिताम्।
ततो ध्यायेत्सुरूपाञ्च चन्द्रायुतसमप्रभाम् ॥६०५॥

चामरैर्वीज्यमानान्तु श्वेतच्छत्रोपशोभिताम्।
सुप्रसन्नां सुवदनां करुणार्द्रनिजान्तराम् ॥६०६॥

सुधाप्लावितभूपृष्ठां सान्द्रमार्द्रविलेपनाम्।
त्रैलोक्यनमितां गङ्गां देवैरेभिरभिष्टुताम् ॥६०७॥

दिव्यरूपविभूषाञ्च दिव्यमालानुलेपनाम्।
ध्यात्वा जले तथा प्रोक्तां तथाऽर्चायां च पूजयेत् ॥६०८॥

"ॐ गङ्गायै विश्वमुख्यायै शिवामृतायै शान्तिप्रदायिन्यै नारायण्यै नमो नमः" इति पूजामन्त्रः।

ब्रह्माण्डे स्मृताऽर्चिता स्तुता ध्याता भाविता चानुमोदिता।
गङ्गा तारयते पुंसामुभौ वंशौ भवार्णवात् ॥६०९॥

ब्रह्म पु. अन्यत्र कोटिपुष्पैश्च यत्पुण्यं लभते नरः।
गङ्गायामेकपुष्पेण तल्लभेन्नात्र संशयः ॥६१०॥

पूजयेत् प्रेष्ठकामस्तु गङ्गां त्रिदशवल्लभाम्।
सर्वोत्तमोत्तमस्यैव महादेवस्य मूर्धनि ॥६११॥

जटाजूटसमायुक्तां चन्द्रकोटिसमप्रभाम्।
ब्रह्माण्डराज्यनिलयां धारयामृतवर्षिणीम् ॥६१२॥

सर्वैश्वर्यसमेताञ्च सर्वोत्कृष्टां वरप्रदाम्।
ध्यायेद्गङ्गां जलस्थां च नित्यकामान् विचिन्तयन् ॥६१३॥

मुहूर्त्तमात्रं नियतो यावन्मासचतुष्टयम्।
मूलमन्त्रं ततो जप्त्वा नित्यमष्टोत्तरं शतम् ॥६१४॥

जातिश्रैष्ठ्यमवाप्नोति नात्र कार्या विचारणा।
तथा काम्यानवाप्नोति काम्या बाधास्तथैव च।
मासार्धमपि यस्त्वेवं नैरन्तर्येण पूजयेत् ॥६१५॥

स एव पुरुषश्रेष्ठो नैरन्तर्यं हि दुष्करम्।
एवं च बहुकालं यो नैरन्तर्येण पूजयेत् ॥६१६॥

तस्य पुण्यफलं वक्तुं वागीशोऽपि न च क्षमः ।
महामखैर्महादानैस्तपोभिर्विधिवत् कृतैः ।।६१७।।
अनेकशतसाहस्रैर्न-तत्फलमवाप्यते ।

**तथा–**

प्रह्लादं निवृतिं स्वास्थ्यमारोग्यं चारुरूपताम् ।।६१८।।
प्राप्नोति कलशैर्भानोर्गङ्गातोयाभिषेकतः ।
पितॄनुद्दिश्य तान् सर्वान् स्नापयेद् गाङ्गवारिणा ।।६१९।।

तृप्ताश्च पितरस्तस्य नरकस्थाश्च तत् क्षणात् ।
तान् लोकान् संप्रयान्त्येवं मोदन्ते तेषु ते चिरम् ।।६२०।।

मृत्कुम्भताम्रकुम्भैस्तु स्नानं शतगुणं स्मृतम् ।
एवं सर्वेषु नैवेद्यं वलिपूजादिषु क्रमात् ।
पात्रान्तरविशेषेण फलं चैवोत्तरोत्तरम् ।।६२२।।

विभवे सति यो हैमान् न कुर्याद्विधिविस्तरम् ।
नैतत्फलमवाप्नोति देवद्रोही स उच्यते ।।६२३।।

देवानां दर्शनं पुण्यं दर्शनात्स्पर्शनं परम् ।
अकृत्वा मन्त्रजापञ्च सुप्रभूतैः सुगन्धिभिः ।।६२८।।(क)

प्राहुर्गङ्गाजलैः स्नानं घृतस्नानसमं बुधाः ।।६२९।।
शिवस्य विष्णोर्गङ्गायां सूर्यस्य ब्रह्मणस्तथा ।

गङ्गातीरे प्रतीच्छन्ति यः करोति नरोत्तमः ।
तथैवायतनान्येषां कारयत्यपि शक्तितः ।।६३०।।

अन्यतीर्थेषु करणात् कोटि-कोटिगुणं भवेत ।
अग्निहोत्राश्च देवाश्च यज्ञाश्च बहुदक्षिणाः ।।६३१।।

गङ्गायां लिङ्गपूजायाः कोट्यंशेनापि नो समाः ।
गङ्गामज्जनशीलस्य गङ्गातीरे निवासिनः ।।६३२।।

गङ्गार्चनपरस्यापि वाजिमेधसमं फलम् ।
ब्रह्माण्डे यः प्रपद्याद् गवां लक्षं दोग्ध्रीणां वेदपारगे ।
अन्यत्र विधिना यस्तु भक्त्या गङ्गातटे नरः ।।६३३।।

एकाहमर्चयेद्भानुं शिवं वाऽप्यथ केशवम् ।
दुर्गां वा भक्तिसम्पन्नः सर्वपापप्रणाशिनीम् ।।६३४।।

(क) अत्र श्लोकसंख्याक्रमभङ्गः

स्मृतिः यथासम्भवपत्राद्यैः तस्य पुण्यं ततोऽधिकम्।
अर्घ्यं दिव्यविशेषेण गङ्गातोयेन यः सकृत् ॥६३५॥
मागधप्रस्थमात्रेण ताम्रपात्रे स्थितेन च ॥६३६॥

भानवेऽर्घ्यं प्रदद्याद् यः स्वकीयपितृभिस्सह।
पुत्रपौत्रसुसंयुक्तः स्वर्गलोके महीयते ॥६३७॥

ब्रह्माण्डे गङ्गातीरे सदा लिङ्गं विल्वपत्रैः सदा नराः।
पूजयिष्यन्ति सुप्रीतास्तेऽपवर्गस्य भाजनम् ॥६३८॥

**ब्रह्माण्डे आग्नेयदानधर्मेषु।**

गङ्गाजले नरः स्नात्वा तीरादाकृष्य मृत्तिकाम्।
कृत्वा लिङ्गं समापूज्य स्वर्गमोक्षौ समश्नुते ॥६३९॥

भविष्ये गङ्गायान्तु नरः स्नात्वा यो नित्यं लिङ्गमर्चयेत्।
एकेन जन्मना मुक्तिं परामाप्नोति स ध्रुवम् ॥६४०॥

गङ्गातीरसमुद्भूतमृल्लिङ्गानि भक्तितः।
सलक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ॥६४१॥

मन्त्रैश्च पत्रधूपाद्यैः सम्पूज्यापि स्वशक्तितः।
गङ्गायां यः क्षिपेल्लिङ्गं तत्पुण्यं तु ततोऽधिकम् ॥६४२॥
पूजापेक्षया लिङ्गप्रक्षेपेऽधिकं फलमित्यर्थः।

**भविष्ये शिवलिङ्गस्थापने।**

स्थाणुं स्फटिकसङ्काशं गङ्गातीरे करोति यः।
शिवलोके शिवाख्यः स्यात्तस्याक्षय्यं सुखं भवेत् ॥६४३॥

## । अथ जपप्रकरणम् ।

स्कान्दे गङ्गेति नामजपने कलिपादानजं फलम्।
ब्रह्माण्डे यज्ञो दानं तपो जप्यं श्राद्धं च सुरपूजनम्।
गङ्गायां तु कृतं सर्वं कोटिकोटिगुणं भवेत् ॥६४४॥

तन्नामजापी सततं सर्वदुःखान्तमृच्छति।
भविष्ये एकान्ते विजनस्थाने गङ्गायां तु जलान्तिके।
जपेदष्टाक्षरं मन्त्रं विष्णुसायुज्यमाप्नुयात् ॥६४५॥

एकान्तविजने अत्यन्तविजने तथा।
ॐ नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥६४६॥

अष्टाक्षरो महामन्त्रः सर्वपापहरः शुभः ।
सर्वेषां विष्णुमन्त्राणां राजत्वे परिकल्पितः ॥६४७॥

भक्तानां जपतां साक्षाद्विष्णुलोकफलप्रदः ।
वेदेषु च पुराणेषु सिद्धो मन्त्रः पुरातनः ॥६४८॥

एष एव परो मन्त्रः प्रोक्तस्तत्त्वार्थदर्शकः ।
एष एव परो मोक्षः एष स्वर्ग उदाहृतः ॥६४९॥

सर्ववेदरहस्येभ्यः सार एष समुद्धृतः ।
विष्णुना वैष्णवानाञ्च हिताय दयया पुरा ॥६५०॥

सर्वदानन्दरूपश्च परमानन्दरूपिणः ।
निरञ्जनस्य नित्यस्य साक्षाद्विष्णोस्तु वाचकः ॥६५१॥

तथा विश्वस्वरूपायां सर्वदेवमयाकृतौ ।
सर्वदेवतपोमय्यामतर्क्यानन्दतेजसि ॥६५२॥

सर्वसारस्वरूपायां सर्वतीर्थमयाकृतौ ।
सर्वानन्दप्रदायिन्यां गङ्गायां यो नरोत्तमः ॥६५३॥

अष्टाक्षरं जपेन्मन्त्रं मुक्तिस्तस्य करे स्थिता ।
गङ्गायां विधिना स्नात्वा जपेदष्टाक्षरं यदि ॥६५४॥

सर्वयज्ञफलं तस्य सर्वदानफलं तथा ।
सर्वव्रतफलं तस्य भवेत् सर्वतपःफलम् ॥६५५॥

षण्मासतोऽणिमाद्यास्तु सिद्धयोऽष्टौ भवन्ति वै ।
अष्टाक्षरा द्विजश्रेष्ठाः श्रेष्ठाः पञ्चाक्षरास्तथा ॥६५६॥

ॐ नमः शिवायेति मन्त्रः प्रणवेन तु संयुतः ।
सर्वधर्मप्रदः सद्यो विधिना शिवभक्तिदः ॥६५७॥

चतुर्विंशतिभिर्लक्षैर्जपैः सिद्धो भवेध्रुवम् ।
सम्यक् सिद्धैकमन्त्रस्तु शिवतुल्यो भवेत् सुधीः ॥६५८॥

पञ्चाक्षरी सिद्धमन्त्रः शिव एव न संशयः ।
सर्वमन्त्राधिकश्चैव मोक्षोपायस्तु तत्परः ॥६५९॥

अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
महापातकयुक्तोऽपि मन्त्रस्यास्य जपात्तथा ॥६६०॥

पा.लि.प.सं. ५१

अधिकारी भवेत्सद्य इति देवोऽब्रवीच्छिवः ।
मन्त्रस्त्वन्तर्जले जप्तो जपतां फलमृच्छति ।।६६१।।

## ।। अथ नमस्कार-प्रकरणम् ।।

सर्वतत्त्वमयी गङ्गा परमात्मस्वरूपिणी ।
त्रैलोक्यपावनार्थाय गङ्गां तां प्रणमेत्सदा ।।६६२।।

प्रणमेत् प्रातरुत्थाय गङ्गां पुण्यजलां जनः ।
फलं धर्मार्थकामानां तथा मोक्षस्य भाजनम् ।।६६३।।

## । अथ श्रवणप्रकरणम् ।

ब्रह्म पु. श्रुत्वा पञ्चक्रतुफलं दृष्ट्वा गोदानजं फलम् ।
स्पृष्ट्वा गोमेधजं पुण्यं पीत्वा मणिं लभेन्नरः ।।६६४।।

श्रुता गङ्गेति यैर्भक्त्या सकृद्दूरस्थितैरपि ।
ताँस्तु तारयते मर्त्यान् करुणार्द्रा भवार्णवात् ।।६६५।।

## । अथ दानप्रकरणम् ।

भविष्ये वासो हिरण्यं रत्नानि पत्रपुष्पफलानि च ।
अन्नापानादिकं चापि ददाति यस्य यत्प्रियम् ।।६६६।।

यद्वस्तु भक्त्या गङ्गायै यः प्रयच्छति मानवः ।
तत्र तत्सुखमनन्तं संप्राप्यैवेह जन्मनि ।।६६७।।

प्रेत्य चाप्नोति निर्वाणं परमं यन्निरञ्जनम् ।
दानं सदक्षिणमेव दानं दद्यात्सुहृद्वर ! ।।६६८।।

दक्षिणमित्यादिना व्यासेन ब्राह्मणसम्प्रदानके विशेषेण दक्षिणा प्रतिपादिता विद्यापत्युपाध्यायैः ।

**शिवपुराणे । गङ्गामुपक्रम्य—**

तैलदीपप्रदानेन ह्यक्षय्यां गतिमाप्नुयात् ।
**तथा—** गिरिशृङ्गे प्रदातव्यो नदीनां पुलिनेषु च ।।६६९।।
वृक्षमूलेषु गोष्ठेषु कान्तारग्रहणेषु च ।
दीपदानेन सर्वत्र महत्फलमुपाश्नुते ।।६७०।।

यावन्त्यक्षिनिमेषाणि दीपः प्रज्वलते नृप !
तावन्त्येव स वर्षाणि राजेन्द्र ! दिवि मोदते ।।६७१।।

पा.लि.प.सं. ५२

दीपदानेन राजेन्द्र ! चक्षुष्मानिह जायते ।
रूपसौभाग्ययुक्तस्य धनधान्यसुखान्वित: ॥६७२॥

देवी पुराणे

दत्वा तु धूपं गङ्गायै स्वर्गलोके महीयते ।
दीपदानात् सुतेजस्क: सगन्धो गन्धदो भवेत् ॥६७३॥

भविष्ये

गङ्गायां कुशदानेन ब्रह्मलोकमवाप्नुयात् ॥६७४॥

सदाशिवपुरं साक्षादाज्यदानेन चाप्नुयात् ।
गङ्गासम्प्रदाननिदानमिदं प्रकरणात् ॥६७५॥

गोभूहिरण्यदानेन भक्त्या गङ्गाकृते तटे ।
नरो न जायते भूय: संसारे दु:खसङ्कटे ॥६७६॥
विद्यादानेन वै ज्ञानं कीर्त्ति: कन्याप्रदानत: ।

गङ्गासम्प्रदानकत्वं प्रकरणात्– "विद्यापुस्तकमेव च" सुरपूजनं– "गङ्गायां च कृते सर्वं कोटिकोटिगुणं भवेत् ॥"

गङ्गातीरे नरो यस्तु प्लक्षाम्रबकुलावृतम् ।
कदलीनारिकेलञ्च कपित्थाशोकचम्पकै: ॥६७७॥

विचित्रं कारयित्वैवमारामं पुष्पशोभितम् ।
शिवाय विष्णवे चापि दुर्गायै भास्कराय च ॥६७८॥

प्रयच्छति यथा भक्त्या सर्वार्थं परिकल्प्य च ।
तस्य पुण्यफलं वक्ष्ये संक्षेपान्न तु विस्तरात् ॥६७९॥

यावन्ति तेषां वृक्षाणां पत्रपुष्पफलानि च ।
बीजानि च विचित्राणि तेषां मूलानि वै तथा ॥६८०॥

तावत्कल्पसहस्राणि तेषां लोके स मोदते ।
ग्रामं गङ्गातटे यो वा विप्रेभ्य: संप्रयच्छति ॥
ब्रह्मविष्णुशिवेभ्यश्च दुर्गायै भास्कराय च ॥६८१॥

सर्वदानेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
सर्वतीर्थेषु यत्पुण्यं सर्वव्रततप:सु च ॥६८२॥

सहस्रगुणितं चैव तत्फलं ग्रामदानत: ।
सूर्यकोटिप्रतीकाशैर्दिव्यस्त्रीकोटिसंयुतै: ॥६८३॥

दिव्यरत्नवरैश्चित्रैर्विमानैर्वैष्णवे पुरे ।
क्रीडते सर्वसम्पन्न: शंकरस्य पुरे तथा ॥६८४॥

स्वकीयपितृभिः सार्धं क्रीडते कालमक्षयम्।
यावत्तद्धामभूमेस्तु परिमात्वानुसंख्यया ॥६८५॥
भोगान् भुक्त्वा ततो लोके जायते योगिनां कुले।
अणिमादिगुणैर्युक्तः स्वयं भोगी भवत्यपि ॥६८६॥
देहान्ते निर्मले नित्ये पदे ब्रह्मणि लीयते।
यस्त्वक्षयतृतीयायां गङ्गातीरे ददाति वै।
घृतधेनुविधानेन तस्यं पुण्यं फलं शृणु ॥६८७॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
सहस्रादित्यसंकाशः सर्वकामसमन्वितः ॥६८८॥
हेमरत्नमयेऽचिन्त्ये विमाने हंसभूषिते।
स्वकीयपितृभिः सार्धं रुद्रलोके महीयते ॥६८९॥
ततस्तु जायते विप्रो गङ्गातीरे धनान्वितः।
अन्ते तु ब्रह्मविद्भूत्वा मोक्षमाप्नोत्यसंशयम् ॥६९०॥
तथा गोमात्रदानेन गङ्गातीरे विशेषतः।
तथैव गोप्रदानन्तु विधानात् कुरुते यतः ॥६९१॥
गोलोमसंख्यया यावत्कल्पान्युच्छ्रितसंख्यया।
गोलोके शिवलोके वा कामधेनुप्रदानतः ॥६९२॥
भुञ्जानः सर्वकामाँस्तु दिव्यान्नानाविधान् बहून्।
देवानामप्यलभ्याँस्तु स्थित्वा तु सह बान्धवैः ॥६९३॥
पितृभिश्च सुहृद्भिश्च सर्वरत्नसमन्वितः ॥६९४॥
सर्वदुःखविनिर्मुक्तः सर्वकामसमन्वितः ॥६९५॥
सर्वप्राणिप्रियो भूत्वा ततो मोक्षमवाप्नुयात् ॥६९६॥

**अक्षयतृतीयायां कपिलादाने।**

कपिलापरिदाता तु विधानाद् वेदपारगे।
नरकस्थान् पितृन् सर्वान् स्वर्गं नयति वै सदा ॥६९७॥

**तथा भविष्यपुराणे—**

निवर्तनद्वयं भूमेर्गङ्गातीरे विशेषतः।
विप्राय वेदविदुषे तथैवास्यां विशेषतः ॥६९८॥
नरो ददाति भक्त्या वै तस्य पुण्यफलं शृणु।
तद्भूमिपरमाणूनां संख्या ह्ययुतसंख्यया ॥६९९॥

सोमेन्द्रब्रह्मलोकेषु विष्णुलोके तथैव च ।
शिवलोके तथा श्रीमान् भोगान् भुङ्क्ते तथाविधान् ।।७००।।
जायते रूपसम्पन्नः सर्वभोगसमन्वितः ।
सर्वसम्पत्समृद्धस्तु सप्तद्वीपपतिर्भवेत् ।।७०१।।
भेरीशङ्खादिनिर्घोषैः गीतवादित्रनिःस्वनैः ।
स्तुतिभिर्मागधानाञ्च सुप्तोऽसौ प्रतिबुध्यते ।।७०२।।
सर्वसौख्यान्यवाप्येह सर्वधर्मपरायणः ।
नरकस्थान् पितृन् सर्वानापयित्वा दिवं व्रजेत् ।।७०३।।
स्वर्गस्थितान् पितृन् सर्वान् मोक्षयित्वा महामतिः ।
अन्ते ज्ञानासिना च्छित्वा ह्यविद्यां पञ्चपर्विकाम् ।।७०४।।

**पञ्चेन्द्रियमूलिकामित्यर्थः ।**

परवैराग्यमापन्नः परं ब्रह्माधिगच्छति ।

**निवर्तनलक्षणं तु मत्स्यपुराणे—**

सप्तहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्तनम् ।
त्रिभागहीनं गोचर्म सममाह बृहस्पतिः ।।७०५।।

**नन्दिकेश्वर-पुराणे ।**

एकोऽस्मि यावदुत्पन्नं नरः संवत्सरं फलम् ।
गोचर्ममात्रा सा क्षोणी स्तोकं वा यदि वा बहु ।।७०६।।
गोचर्ममात्रां पृथिवीं गङ्गातीरे ददाति यः ।
अक्षयायां तृतीयायां सोऽत्र क्षितिपतिर्भवेत् ।।७०७।।
तथा तस्यां तृतीयायां वेदविद्ब्राह्मणाय वै ।
माषषोडशमात्रं च सुवर्णं यः प्रयच्छति ।।७०८।।
स हेमरत्नरचिते विमाने सर्वगे शुभे ।
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।।७०९।।
सर्वैश्वर्यसमृद्धस्तु सर्वलोकेषु सर्वदा ।
ब्रह्माण्डान्तरसंस्थे तु रत्नभोगान् पृथक्विधान् ।।७१०।।
अनुभूय स्वपितृभिः सुविदाहूतसंप्लवम् ।
ततो रुद्रस्य सायुज्यं प्राप्नोत्यत्र न संशयः ।।७११।।

## ।। अथ श्राद्धप्रकरणम् ।।

विष्णु पु. गयाश्राद्धं कृतं तेन ह्युत्सृष्टश्च वृषस्तथा।
येन तद्वीचिसंसिक्ते तीर्थे श्राद्धमकारि च ।।७१२।।

तस्यालं तीर्थगमनं शरीरपरिशोषणम्।
येन गङ्गाजले स्नानं कृतं श्राद्धं च श्रद्धया ।।७१३।।

पितृनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम्।
गुडसर्पि:समायुक्तं गङ्गाम्भसि विनि:क्षिपेत् ।।७१४।।

तृप्ता भवन्ति पितर: तस्य वर्षशतत्रयम्।
पाद्मे अन्यतीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते।
गङ्गायां यत् कृतं श्राद्धं तच्छ्राद्धमपवर्गदम् ।।७१५।।

गङ्गायमुनयोस्तीरे पत्रस्य शरकाण्डके।
नर्मदाया गयातीर्थे सर्वमानान् समश्नुते ।।७१६।।

देवी पु. तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन।
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ।।७१७।।

शक्तुभि: पिण्डदानञ्च संयावै: पायसेन च।
कर्त्तव्यं ऋषिभि: प्रोक्तं पिण्याकेन गुडेन च ।।११८।।

संयावो घृतषण्डपाचितपक्वान्नं पिण्याकस्तिलकल्क:।
श्राद्धं तु तत्र कर्त्तव्यमर्घावाहनवर्जितम्।
श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतं च यत् ।।११९।।

श्राद्धं तत्तैर्थिकं प्रोक्तं पितृणां तुष्टिकारकम्।
अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरै: ।।७२०।।

प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम्।
पिण्डदानं तत: शस्तं पितृणां चातिवल्लभम् ।।७२१।।
विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्।
अमावास्यादिव्यतिरिक्तकाले।

## । अथ प्रवेशप्रकरणम् ।

ब्रह्म पु. प्रवेशमात्रे गङ्गायां स्नानार्थं भक्तितो नृणाम्।
ब्रह्महत्यादिपापानां नाश: स्यादिति निश्चितम् ।।७२२।।

अमावास्यादौ केचित्। अकाले इति रात्रिसन्ध्यादौ सूर्यादिवारसप्त-तथाऽश्विन्यादिसप्तविंशतिनक्षत्रप्रतिपदादितिथिपञ्चदशतदादीनां श्राद्धकाले तथा

कथनात्। कालपदेनैव परिग्रहान्निषिद्धकालं विना कालपदपरिग्राह्याभावात्। श्राद्धं प्रतिरुचेश्चैवेति याज्ञवल्क्यवचनाच्चेति वदन्ति तत्रोभयत्रापि पक्षे शिष्टोपग्रहः। प्रथमतस्तु बहुतरप्रामाणिकोऽपगृहीतः।

वर्धमानोपाध्यायास्तु पूर्वदिने निषिद्धसमये प्राप्ते चाग्रिमदिनेऽपि तीर्थप्राप्ति-निमित्तकं श्राद्धं कर्त्तव्यमितिश्राद्धप्रदीपे लिखितवन्तः। प्राप्तैरेवेत्यभिधा प्राप्तिनिमित्तकं श्राद्ध एवार्घावाहनं न कर्त्तव्यमिति मन्तव्यम्। न तु तीर्थेतरश्राद्धेऽपीति भ्रमः कार्यः, विलम्बो नैव कर्त्तव्य इत्युक्तः प्राप्तैरेवेत्येवकाराच्च शयनादिना समयक्षेपो न विधेय इति बोद्धव्यम्। श्राद्धाङ्गत्वेन पिण्डदानप्राप्तौ पुनः पिण्डदानवचनं यत्र कुतश्चिद्विशेष्यं सान्नश्राद्धकरणं शक्तिर्वस्तु वा श्राद्धीयं न भवति।

तत्र स्वातन्त्र्येण तन्निमित्तकं पिण्डदानमात्रमपि कर्त्तव्यमित्येवं परमिति वृद्धाः। तच्च पिण्डदानं त्ववनेजनपूजनान्तम्। एकस्मिन्नहनि नानातीर्थप्राप्तौ स्नानं तीर्थश्राद्धं चावर्तनीयं, इति निमित्तभेद एव देशभेदेऽपि श्राद्धकथनात्।

कौर्मे सकृद्गङ्गाभिगमनं कृत्वा पिण्डं ददाति यः।
तारिताः पितरस्तेन भवाम्भोधेर्न संशयः ॥७२३॥

गङ्गायां च गयायां च पिण्डदानं समं मतम्।
विशेषतः कलियुगे गङ्गापिण्डः प्रशस्यते ॥७२४॥

ब्रह्माण्डे गङ्गायां पिण्डदानेन पितरश्च तिलोदकैः।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयः ॥७२५॥

माहेन्द्रविरजेचैव गङ्गायां जाह्नवीतटे।
अत्र पिण्डप्रदो याति ब्रह्मलोकमनामयम् ॥७२६॥

**श्राद्धं पात्राभेद आवर्त्त इति अजपाम्।**

भविष्ये कन्यादानैस्तथाऽन्यस्य भूमिदानैश्च भक्तितः।
अन्नदानैश्च गोदानैः स्वर्णदानादिभिस्तथा ॥७२६॥(क)

रथाश्वगजदानैश्च यत्पुण्यं समुदाहृतम्।
तत्तच्छतगुणं गङ्गातोयदानादवाप्नुयात् ॥७२७॥

गङ्गां पतति संस्तौति स्नाति भक्त्या पिबेज्जलम्।
त्रिसन्ध्यं ज्ञानममलं भोगमोक्षं च विन्दति ॥७२८॥

महाभा. यस्तु सूर्य्यांशुसंतप्तां गङ्गायां च पिबेज्जलम्।
गवामाहारनिर्मुक्तापावकाशं विशिष्यते ॥७२९॥

गवामाहारनिर्मुक्ता पावका व्यवहारिणोऽपि, सोऽप्यभ्यर्हित इत्यर्थः।

चान्द्रायणसहस्रेण यश्चरेत्कायशोधनम् ।
यश्चरेद्वै यथेष्टं तु गङ्गाम्भः स विशिष्यते ॥७३०॥

ब्रह्माण्डे
गङ्गातीरे वसेन्नित्यं गङ्गातोयं पिबेत् सदा ।
दीक्षितः सर्वतीर्थेषु सोमपानं दिने-दिने ॥७३१॥

स्कान्दे
गण्डूषमात्रपानेन ह्यश्वमेधफलं भवेत् ।
स्वच्छन्दं यः पिबेच्चापस्तस्य मुक्तिः करे स्थिता ॥७३२॥

दानधर्मे
चान्द्रव्रतसहस्रैस्तु यश्चरेत्कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न संशयः ॥७३३॥

स्कान्दे
त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्मदं दशभिर्मासैगाङ्गं वर्षेण जीर्यति ॥७३४॥

अन्यान्तर्जाततोयानां मृतानां क्वापि देहिनाम् ।
तत्र तीर्थफलप्राप्तिर्नात्र कार्या विचारणा ॥७३५॥

## । अथ गङ्गावासप्रकरणम् ।

स्कान्दे
स एव देवै गन्धर्वैः पूजनीयो महर्षिभिः ।
यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः ॥७३६॥

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
यः संश्रयेद्यथेष्टं तु गङ्गाम्भः स विशिष्यते ॥७३७॥

तिष्ठेदवाक्शिरा यस्तु वर्षाणामयुतं पुमान् ।
यः सेवेत मासमेकं गङ्गाम्भः स विशिष्यते ॥७३८॥

अतो किं बहुनोक्तेन गङ्गा सेव्या सदा नरैः ।
नान्यत्संसारदुःखस्य नाशकं मोक्षदायकम् ॥७३९॥

नारदीये
किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
वास एव हि गङ्गायां सर्वज्ञानस्य कारणम् ॥७४०॥

ब्रह्म पु.
किं यज्ञैर्बहुवित्तस्थैः किन्तपोभिश्च शाश्वतैः ।
स्वर्गमोक्षप्रदा गङ्गा सुखसेव्या पुरः स्थिता ॥७४१॥

प्रभासे गोसहस्रेण राहुग्रस्ते दिवाकरे ।
यत्फलं लभते मर्त्यो गङ्गायां तद्दिने दिने ॥७४२॥

यदृच्छालाभसन्तोषः सर्वधर्मेषु वर्त्तनम् ।
सर्वभूतसमत्वञ्च गङ्गाभजनजं फलम् ॥७४३॥

सर्वक्रतुसहायश्च सर्वत्यागी महामति: ।
तत्त्वज्ञानी च योगी च यो हि गङ्गासमाश्रित: ॥७४४॥

यस्तु गङ्गां समाश्रित्य सुखं तिष्ठति निर्भय: ।
जीवन्मुक्त: स एवेह सर्वेषामुत्तमोत्तम: ॥७४५॥

गङ्गां संश्रृत्य यस्तिष्ठेत्तस्य कार्यं न विद्यते ।
कृतकृत्य: स वै युक्तो जीवन्मुक्तश्च मानव: ॥७४६॥

अन्योपायं च यस्त्यक्त्वा मोक्षकाम: समाहित:
गङ्गातीरे सुखं तिष्ठेत्स वै मोक्षस्य भाजनम् ॥७४७॥

महापातकिन: पापाननेकान् पुरुषाधमान् ।
पततो नरके गङ्गा तारयत्याशु संस्थितान् ॥७४८॥

त्रिकालज्ञैश्च विद्वद्भि: सेन्द्रैर्देवैर्महर्षिभि: ।
ब्रह्मर्षिभि: श्रिता गङ्गा पुमान् को नाम नाश्रयत् ॥७४९॥

न भयेभ्यो भयं तस्य न पापेभ्यो न राजत: ।
न वै रोगैश्च यो गङ्गामादेहान्तं सुसेवते ॥७५०॥

आत्मचित्सिद्धिकामश्च गङ्गामेवाश्रयेत्सदा ।
गङ्गा हि सर्वतत्त्वानां परमं तत्त्वमुच्यते ॥७५१॥

पुष्करे वा कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
यत्फलं तदवाप्नोति गङ्गायां तद्दिने दिने ॥७५२॥

गङ्गां दधार गगनात् पतमानां महेश्वर: ।
ईदृशीं ये न सेवन्ते हतास्ते पुरुषाधमा: ॥७५३॥

वाराणस्यां विशेषेण गङ्गा सद्यस्तु मोक्षदा ।
आदिमध्यान्तसंयुक्ता ब्रह्मविष्णुमहेश्वरा: ॥७५४॥

स्थिता शश्वत्सुति: सार्द्धं गङ्गायां तु सदैव हि ।
कलौ तत्परमब्रह्मप्राप्तये सत्वरं नृणाम् ॥७५५॥

गङ्गाभजनमेवाहुर्महोपायं महर्षय: ।
गङ्गातीरनिवासश्च यावज्जीवं प्रतिज्ञया ॥७५६॥

यस्य सिद्ध्यन्ति धर्मास्ते स देवो नात्र संशय: ।
न तपो न समाधिश्च प्रत्याहारादिकं न च ॥७५७॥

वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् ।
सन्ति गङ्गातटे वृक्षा देवोद्यानगृहाणि च ॥
सुलभश्च पवित्रश्च दृश्यान्तमुच्चगन्धि च ॥७५८॥

कन्दमूलफलादीनि सुलभानि विशेषतः ।
गङ्गाजले निर्मलश्च न तु स्वादु सुशीतलम् ॥७५९॥

श्रीरत्नपाणेः कृतम् ।

जीवता क्वापि स्थातव्यमिति निश्चित्य वा तथा ।
नरो गङ्गातटे धीमान् मनः संयम्य चञ्चलम् ।
तिष्ठेत् स्वकर्मफलवान् भक्त्या विरहितोऽपि सन् ॥७६०॥

सोऽपि याति परं स्थानं यत्र गत्वा न शोचते ।
गङ्गासेवापरा नित्यं निःसन्दिग्धा दृढव्रताः ॥७६१॥

देवा देवत्वमापन्ना मनसो नियमेन वै ।
मुक्तेर्बाधः स च नृणां मन एव हि कारणम् ॥७६२॥

तस्मान्मनःसंयमाय गङ्गायामेव बुद्धिमान् ।
रजसस्तमसश्चापि हानिर्भवति वै नृणाम् ।
सत्त्ववृद्धिर्भवेद् भक्त्या गङ्गामाश्रित्य तिष्ठति ॥७६३॥

विघ्नैः पुनः पुनर्विद्वान् हन्यमानोऽपि मानवः ।
कदाचित्कालयोगेन प्राप्तो गङ्गां न सन्त्यजेत् ॥७६४॥

सर्वावस्थोऽपि यो विप्रो गङ्गातीरे वसेत्सदा ।
दानयोगादिना यत्स्यात्तत्फलं लभते ध्रुवम् ॥७६५॥

तस्मादन्येषु तीर्थेषु रतिं सन्त्यज्य पण्डितैः ।
गङ्गासेवापरैर्भाव्यं हितमिच्छद्भिरात्मनः ॥७६६॥

देवा महर्षयः सिद्धाः योगिनस्तत्त्ववेदिनः ।
अनन्यमनसश्छन्नां गङ्गां नित्यमुपासते ॥७६७॥

अन्यत्र तपसा यज्ञैः स्वर्गं लभ्येत मानवैः ।
वास एव हि गङ्गायां दृढभक्तस्य मोक्षदः ॥७६८॥

अन्यत्रापि च संकल्पात्तपः कृत्वा समास्त्रयम् ।
यत्फलम् तल्लभेद्भक्त्या गङ्गायां घटिकार्धतः ॥७६९॥

भविष्ये कृच्छ्रातिकृच्छ्राणि सदा कृत्वा यत्फलमश्नुते ।
सदा चान्द्रायणं चैव तल्लभेज्जाह्नवीजले ॥७७०॥

योो देहपतनाद्यावद्गङ्गातीरं न मुञ्चति ।
स हि वेदान्तवित् सिद्धो ब्रह्मचर्यव्रती सदा ॥७७१॥

गङ्गां तु परमां गत्वा ये नराः पर्युपासते ।
ते मुच्यन्ते ह्ययत्नेन सर्वावस्थाङ्गता अपि ॥७७२॥

गङ्गासेवां हि मोक्षस्य हेतुं यो वेत्ति तत्त्वतः ।
स एव परमो योगी छिन्नपापो बुधोत्तमः ॥७७३॥

गङ्गालाभात्परो लाभः कश्चिदन्यो न विद्यते ।
तस्माद्गङ्गामुपासीत गङ्गैव परमः पुमान् ॥७७४॥

ऋजुः पन्थाः स च प्राप्तः शिवलोकस्य जाह्नवी ।
मोक्षवत्साऽनुसंज्ञाता तस्माद्गङ्गां समाश्रयेत् ॥७७५॥

कलौ गङ्गैव गङ्गैव कलौ गङ्गैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥७७६॥

गङ्गासेवापरस्येह दिवसार्धेन यत्फलम् ।
न तच्छक्यं समस्तैस्तु प्राप्तुं क्रतुशतैरपि ॥७७७॥

सर्वयज्ञतपोदानयोगस्वाध्यायकर्मभिः ।
यत्फलं लभते तत्तु गङ्गातीरे निवासतः ॥७७८॥

सत्यवादेषु यत्पुण्यं नैष्ठिकव्रतचारिणाम् ।
पञ्चाग्निहोतृणां यद्वद् गङ्गातीरे निवासतः ॥७७९॥

अनेकजन्मसाहस्रं भ्राम्यमाणस्तु योनिषु ।
कः कलौ मुक्तिमाप्नोति गङ्गासेवां विना नरः ॥७८०॥

गङ्गां संसेवते यस्तु सदा श्रद्धापरायणः ।
व्युदस्य सर्वपापानि विष्णुलोकं स गच्छति ॥७८१॥

गङ्गां यो भजते मर्त्यो निःसङ्गोच्छिन्नसंशयः ।
मनुष्यचर्मणा नद्धः स देवो नात्र संशयः ॥७८२॥

ज्ञानवृद्धास्त एवात्र तपोवृद्धास्त एव हि ।
स्त्रीबालवृद्धाः शक्ताश्च गङ्गां संश्रित्य ये स्थिताः ॥७८३॥

बन्धूनां न क्षयस्तेषां भवेद्गोत्रक्षयो न च ।
तेषां सर्वा च सम्पत्तिर्ये वै गङ्गां समाश्रिताः ॥७८४॥

उत्तमाश्रमिणस्ते वै ते च बुद्धिमतां वराः ।
कृतार्थास्ते हि मनुजा ये वै गङ्गां समाश्रिताः ॥७८५॥

ते धन्यास्ते जितात्मानः त एवात्महितैषिणः ।
भयेभ्यो न भयं तेषां ये वै गङ्गां समाश्रिताः ॥७८६॥

दुष्प्रतिग्रहशीला ये ये च वै कूटसाक्षिणः ।
भक्त्या गङ्गां समाश्रित्य तेऽपि यान्ति परां गतिम् ॥७८७॥

मानुष्यं दुर्लभं प्राप्य विद्युत्संपातचञ्चलम् ।
गङ्गां यः सेवते सोऽत्र शुद्धेः पारं परङ्गतः ॥७८८॥

विघ्नान्निहत्य यः कश्चित्कदाचिद्दैवदेशितः ।
यदि गङ्गाम्बुधिं प्राप्तस्तत्तीरं नैव सन्त्यजेत् ॥७८९॥

विघ्नैः पुनः पुनर्विद्वान् हन्यमानोऽपि शक्तितः ।
दैवयोगेन मम्प्राप्य गङ्गातीरं वसेत्सदा ॥७९०॥

सदा ददति दानानि सदा वै कुर्वते तपः ।
सदा यजन्ति यज्ञैश्च ये गङ्गां संश्रिता जनाः ॥७९१॥

परभूम्यपहर्तारः परद्रव्यापहारकाः ।
परस्त्रीषु रता ये च ये च ब्रह्मस्वहारकाः ॥७९२॥

महापातकिनो ये च सर्वपापैकशालिनः ।
अन्तरं यान्ति कोटीषु नरकाणां क्रमेण च ॥७९३॥

दारुणास्वतिघोरासु ये गताश्च श्रिताग्निषु ।
ये कल्पान्त-समुत्तीर्णा वृक्षकीटादियोनिषु ॥७९४॥

दाहच्छेदादियुक्तासु दुःखतृष्णार्दितासु च ।
तावत्कालं च संसारे भवन्ति योग्यतां गताः ॥७९५॥

तेऽपि वार्द्धक्यमासाद्य विरक्ताः प्राप्य जाह्नवीम् ।
पश्चात्संपतिताश्चैते प्रपद्यन्ते शुभां गतिम् ॥७९६॥

सर्वद्वन्द्वानि सन्त्यज्य भिक्षाशी सङ्गवर्जितः ।
गङ्गां यः सेवते नित्यं कृतार्थो मुक्त एव सः ॥७९७॥

गङ्गायां स्थितिमात्रेण भक्तिभावेन मानवाः ।
परां गतिं प्राप्नुवन्ति नात्र कार्या विचारणा ॥७९८॥

वेदान्तवेदिनो ये च महान्तो योगिनश्चये ।
तेऽप्याश्रयन्ति गङ्गायां गङ्गां को नाम नाश्रयेत् ॥७९९॥

गङ्गामेवाश्रयेद्यस्तु स मुनिः स च पण्डितः ।
त्रिरात्रं सप्तरात्रं वा स्थितिमात्रेण भक्तितः ॥८००॥

गङ्गातीरेषु पुरुषो नरकं नैव पश्यति ।

**अथात्र ब्रह्माण्डे ।**

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कथञ्चन ॥८०१॥

नारायणस्वामिकत्वं नारायणाधिकरणकक्षेत्रमित्यर्थो द्रष्टव्यः ।

अटवी पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न तेष्वस्ति परिग्रहः ॥८०२॥

इति मानवीयवचनसम्वादादिति विद्यापत्युपाध्यायाः ।

दानधर्मे भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥८०३॥

यावदाक्रमते जलमिति खाताभ्यन्तर इति शेषः ।

ब्रह्म पु. सार्धहस्तशतं यावद् गर्भतस्तीरमुच्यते ।
तत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ॥८०४॥

स्कान्दे तीराद्गव्यूतिमात्रं यत् परितः क्षेत्रमुच्यते ।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥८०५॥

अत्रस्थाश्च दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।

भविष्ये गङ्गासीमां न लङ्घ्यन्ति सर्वपापान्यशेषतः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ॥८०६॥
एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयात् ।

अत्र स्कान्दे परितो गव्यूतिमात्रं क्षेत्रमुक्तं, भविष्ये तु तटद्वयादेकयोजनक्षेत्रमुक्तं, इत्युभयत्रापि एकमूलके नानात्ववादे एकैकदिशि द्वौ द्वौ क्रोशौ ग्राह्यौ वर्धमानोपाध्यायाः ।

तीर्थन्यूनाधिकबोधकवचनानां मिथो विरोधे अधिकदेशव्यापकत्वे तात्पर्यं तत एवोभयव्यापकत्वसिद्धेः । शक्तिश्चैकद्विवचनवादः । अन्यथा विरोधापहारादित्याहुः, क्रोशलक्षणं तु,

'द्वि सहस्रे धनुष्कोटौ धनुर्हस्तचतुष्टयम्'
चतुर्विंशाङ्गुलो हस्तस्तैश्चतुर्भिर्धनुः स्मृतम् ।
धनुर्हस्तौ सहस्राणि योजनं परिकीर्तितम् ॥

इति शिष्टपरिगृहीतवचनबलाद्धनुषां सहस्रद्वयमेव ग्राह्यं, अङ्गुलं च तिर्यगवस्थिताः षड्यवाः ।

ब्रह्माण्डे
यत्र गङ्गा महाराज! शम्भुस्तत्र तपोवनम्।
सिद्धिक्षेत्रं तु तज्ज्ञेयं समन्ताद्वा त्रियोजनम् ॥८०७॥
एतच्च वाक्यं सोढदेववर्धमानाभ्यां पठितम्।

तथा च षट्क्रोशतटद्वये सिद्धिक्षेत्रं भवति तत्र च मन्त्रादिसिद्ध्यर्थं पुरश्चरणाधिकारमात्रम्। न पुनर्मरणादावपि फलातिशयः सिद्धिरेकत्रतया तदभिधानेऽनेककालान्तरजनकत्वे प्रमाणविरहात्। विद्यापत्युपाध्यायैस्तु एतदपि वाक्यं सिद्धिक्षेत्रं तु तत् प्रोक्तं समन्तादर्धयोजनमित्येव परिपठितम्।

एवञ्च स्कन्दपुराणीयपरिणामवचनेन सहैकवाक्यतेति न किञ्चिदनुपपन्नमिति।

## ॥ अथ प्रतिग्रहदूषणम् ॥

तत्र स्मृतिः
वरं विक्रयणं मातुर्वरं विक्रयणं पितुः।
न तु गङ्गातटस्थस्तु गृहणीयात्तु कदाचन ॥८०८॥

मत्स्य पु.
तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च।
निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेद्द्विजः ॥८०९॥

तीर्थे यः प्रतिगृह्णीयात् तीर्थे चायतनेषु च।
हिरण्यं रजतं ताम्रं यद्वस्तु स्वादु किञ्चन ॥८१०॥

स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा।
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ॥८११॥

तीर्थे प्रतिगृहीतस्तु तद्धने यावत् स्वत्त्वमनुवर्तते। तावत्तीर्थे स्नानादौ कोटिगुणत्वात् स्वफलं न जनयति तद्धनत्यागात्स्वफलं जनयत्येव, तीर्थे न प्रतिगृह्णीयादित्यनेन बाधितं निषेधात्पूर्वं पुनरवतिष्ठत एव तद्धनत्यागेन तीर्थफलकत्वमात्रनिवृत्तेरिति वर्धमानवचनात्।

गङ्गाया विक्रयाद्राजन्! विष्णोर्विक्रयणं भवेत्।
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥८१२॥

## ॥ अथ व्रतम् ॥

तत्र भविष्ये
अष्टमूर्तिधरां गङ्गां दिव्यरूपां निरीक्षितुम्।
साक्षाद्देवातिमर्त्यानां तमुपायव्रतं वद ॥८१३॥

शालितण्डुलप्रस्थेन द्विःप्रस्थपयसा तथा।
पायसं पाचयित्वा तु मण्डषण्डघृतं तथा ॥८१४॥

प्रत्येकं फलमात्रं तु तत्र निःक्षिप्य भक्तितः।
तत्पायसमपूपाँश्च मोदकान्मण्डकानि च ॥८१५॥

तथा गुञ्जार्धमात्रन्तु सुवर्णं रौप्यमेव च ।
चन्दनागुरुकर्पूरकुङ्कुमानि च गुग्गुलम् ॥८१६॥

विल्वपत्राणि दूर्वां च रोचनां सितचन्दनम् ।
नीलोत्पलानि पुष्पाणि पुष्पालाभे दलानि च ॥८१७॥

यथाशक्त्या महाभक्त्या गङ्गायां यो विनिःक्षिपेत् ।
मासि मासि पौर्णमास्यां दर्शे च ग्रहणद्वये ॥८१८॥

श्रद्धयाऽनेन मन्त्रेण यावत्संवत्सरं तथा ।
ॐ गङ्गादेव्यै नारायण्यै शिवायै ते नमो नमः ॥
इति मन्त्रेण सततं शतमष्टोत्तरं जपेत् ॥८१९॥

गङ्गाजलान्तः स्थित्वा च तन्मनाः स्तब्धसंशयः ।
हविष्याशी मिताहारो प्रमितेषु दिने दिने ॥८२०॥

संवत्सरान्ते तस्यैषा गङ्गादिव्यवपुर्धरा ।
दिव्यमालाम्बरधरा दिव्यगन्धानुलेपना ॥८२१॥

चारुरूपधरा देवी दिव्यरत्नविभूषणा ।
प्रत्यक्षभूता पुरतः तिष्ठत्येव वरप्रदा ! ॥८२२॥

एवं प्रत्यक्षतः साक्षाद् गङ्गां दिव्यवपुर्धराम् ।
दृष्ट्वा तु चक्षुषा मर्त्यो वरदानसमुद्यताम् ॥८२३॥

यान् यान् कामयते कामान् ताँस्तान् स समवाप्नुयात् ।
निर्मलस्तु परं मोक्षं लभेतानेन जन्मना ॥८२४॥

शृणुध्वं भक्तितो यूयं वक्ष्यामि मुनिपुङ्गवाः ।
सर्वव्रतानां राजानं धर्मव्रतमनुत्तमम् ॥८२५॥

वृषभध्वजेन कथितं शिवेन दयया पुरा ।
प्रीत्या देव्या तु तुष्टेन गङ्गातीरनिवासिना ॥८२६॥

देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा ।
अपराह्णे च पितृभिः सर्वैर्वा गुह्यकादभिः ॥८२७॥

सर्ववेलामतिक्रम्य नक्तं भोजनमुत्तमम् ।
उपवासात्परं भैक्ष्यं भैक्ष्यात्परमयाचितम् ॥८२८॥

अयाचितात्परं नक्तं तस्मान्नक्तेन वर्तयेत् ।
हविष्यभोजनं स्नानं नित्यमाहारलाघवम् ॥८२९॥

अग्निकार्यमधःशय्या नक्तभोजी षडाचरेत् ।
गङ्गातीरे माघमासे यः कुर्यान्नक्तभोजनम् ॥८३०॥

शिवायतनपार्श्वे तु कृशरं घृतसंयुतम् ।
नैवेद्यं विनिवेद्यैव कृशरान्नं शिवस्य तु ॥८३१॥

काष्ठे मौनेन भुञ्जानो जिह्वालौल्यं विवर्जयेत् ।
पलाशपत्रे भुञ्जानः शिवं स्मृत्वा विशेषतः ॥८३२॥

धर्मराजस्य देव्याश्च पृथक् पिण्डाँश्च कल्पयेत् ।
सोपवासश्चतुर्दश्यां भवेदुभयपक्षयोः ॥८३३॥

पौर्णमास्यां तु गन्धैश्च गङ्गायाः सलिलैस्तथा ।
शिवं सन्तर्प्य पयसा मधुना च स्वशक्तितः ॥८३४॥

तथैव हेमपद्मैश्च लिङ्गं मूर्ध्नि विसर्जयेत् ।
ततो दद्यात्स्वशक्त्या च शिवाय केवलं घृतम् ॥८३५॥

एकाङ्गे तु कृष्णतिलं शिवलिङ्गोपरि क्षिपेत् ।
नीलोत्पलैश्च सर्वैः पूजयेत्पङ्कजैरपि ॥८३६॥

अलाभे कारयेद्धेम्ना माषमात्रेण चोत्पलम् ।
पायसं चात्र विधिना घृतयुक्तं च गुग्गुलम् ॥८३७॥

घृतदीपं तथा रम्यैश्चन्दनाद्यैर्विलेपनम् ।
दद्यात्स्वशक्तितो भक्त्या तथा पत्रफलादिकम् ॥८३८॥

कृष्णं गोमिथुनञ्चैव सुरपञ्च निवेदयेत् ।
भोजयेद्ब्राह्मणानष्टौ मासान्ते तु सुदक्षिणम् ॥८३९॥

वर्जयेन्मधु मांसं च तं मासं ब्रह्मचर्यवान् ।
एवं कृत्वा यथोदिष्टमेकवारमिदं व्रतम् ॥८४०॥

यमनियमसम्पन्नं श्रद्धाभक्तिसमन्वितम् ॥८४१॥
गत्वा शिवपुरं रम्यं स सर्वकुलसंयुतः ॥८४२॥
सुहृद्भिर्बहुभिश्चैव सङ्गतः समवस्थितान् ॥८४३॥

भुक्त्वा भोगाँश्च शेषाँश्च यावदाभूतसम्प्लवम् ।
ततो भवति धर्मात्मा जम्बुद्वीपपतिस्तथा ॥८४४॥

तत्र भुङ्क्ते समस्ताँश्च भोगान्निहतकण्टकः ।
सुरूपः सुभगश्चैव, अतिरस्कृतशासनः ॥८४५॥

सर्वरोगविनिर्मुक्तः सोऽप्येह फलभाग् भवेत् ।
इदं धर्मव्रतं नाम न देयं यस्य कस्यचित् ।।८४६।।
नास्तिकस्य कुतर्कस्य संशयाविष्टचेतसः ।
आस्तिके श्रद्दधाने च देवब्राह्मणपूजके ।।८४७।।
सत्कुतर्कविहीने च कथितव्यं प्रयत्नतः ।
वैशाखशुक्लपक्षस्य चतुर्दश्यां समाहितः ।।
शाल्यन्नं क्षीरसंयुक्तं यः कुर्यान्नक्तभोजनम् ।।८४८।।
शिवं सम्पूज्य गन्धाद्यैर्भोज्यं च विनिवेदयेत् ।
काष्ठमौनेन भुक्त्वान्ते वटकाष्ठेन वै ततः ।।८४९।।
मौनेन प्रयतो भूत्वा कुर्याद्वै दन्तधावनम् ।
शिवलिङ्गसमीपे तु गङ्गातीरे निशि स्वपेत् ।।८५०।।
पौर्णमास्यां प्रभाते तु गङ्गायां विधिना तथा ।।८५१।।
स्नात्वोपवासं संकल्प्य कुर्याज्जागरणं निशि ।
लिङ्गं घृतेन संस्नाप्य पुष्पगन्धादिभिस्तथा ।।८५२।।
नैवेद्यपुष्पधूपैश्च सम्पूज्य वृषभं शुभम् ।
अश्वेतवस्त्रपुष्पाद्यैर्हारिद्रैश्चन्दनैस्तथा ।।८५३।।
अलङ्कृत्य विधानेन शिवाय विनिवेदयेत् ।
ब्राह्मणांश्च यथाशक्ति पायसेन तु भोजयेत् ।।८५४।।
एवं सकृच्च यो भक्त्या करोति त्वरयाऽन्वितः ।
स लभेदेकपादेन युगानां द्विसहस्रकम् ।।८५५।।
तपः कृत्वा तु नियमात्तत्पुण्यं तदसंशयम् ।
हंसयुक्तविमानैश्च पूर्णचन्द्रसमप्रभैः ।।८५६।।
सुखेन वृषसंयुक्तैर्मुक्ताजालविभूषितैः ।
स्वकीयपितृभिः सार्धं प्रयातीश्वरमन्दिरम् ।।८५७।।
नीलोत्पलसुगन्धाभिः(च) भुक्त्वा भोगानशेषतः ।
अनन्तकालमैश्वर्ययुक्तो भूत्वा ततो भुवि ।।८५८।।
जायते स महीपालः कीर्तिरूपसमन्वितः ।
एकच्छत्रो महीं सर्वां पालयेत्प्रजया सह ।।८५९।।

(च) 'सुगन्धाँश्च' इति शु.पा.

अन्तर्वैराग्यसम्पन्नो गङ्गान्ते भजते पुनः ।
स तया श्रद्धया युक्तो गङ्गायां मरणं लभेत् ॥८६०॥

तथा त्वत्र स्मृतिं लब्ध्वा मोक्षमाप्नोति स ध्रुवम् ।
ज्येष्ठे मासि सिते पक्षे दशमीहस्तसंयुते ।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः ॥८६१॥

निशायां जागरं कुर्याद् गङ्गां दशविधैः स्तवैः ।
पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दशसंख्यया ॥८६२॥

तथैव दीपैस्ताम्बूलैः पूजयेत् श्रद्धयाऽन्वितः ।
श्रुत्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ॥८६३॥

दशप्रसृतिकृष्णाँस्तिलान्सर्पिश्च वै जले ।
शक्तुपिण्डान् गुडान् बद्धान् दद्याच्च दशसंख्यया ॥८६४॥

ततो गङ्गातटे स्थित्वा हेम्ना रौप्येण वा तथा ।
गङ्गायाः प्रतिमां कृत्वा बृद्धमालास्वरूपिणीम् ॥८६५॥

पद्मस्वस्तिकचिह्नस्य संस्कृतस्य तथा पराम् ।
वस्त्रस्रग्दामकण्ठस्य पूर्णकुम्भस्य चोपरि ॥८६६॥

संस्थाप्य पूजयेद्देवीं तदलाभे मृदाऽपि वा ।
अथ तत्राप्यशक्तश्चेत् लिखेत् पिण्डेन वै भुवि ॥८६७॥

चतुर्भुजां सुवेशाञ्च सर्वरत्नविभूषिताम् ।
रत्नकुम्भसिताम्भोजवरदाभयकृत्कराम् ॥८६८॥

श्वेतवस्त्रपरीधानां मुक्तामालाविभूषिताम् ।
ततो ध्यायेत्सुयोग्याञ्च चन्द्रायुतसमप्रभाम् ॥८६९॥

चामरैर्वीज्यमानाञ्च श्वेतवस्त्रोपशोभिताम् ।
स्वभक्तानां च वरदां करुणार्द्रनिजान्तराम् ॥८७०॥

सुधाप्लावितभूपृष्ठां देवादिभिरभिष्टुताम् ।
दिव्यरत्नविभूषाञ्च दिव्यगन्धानुलेपनाम् ॥८७१॥

ध्यात्वा जले तथा प्रोक्तां तथाऽर्चायां विधानतः ।
वक्ष्यमाणेन मन्त्रेण कुर्यात्पूजामशेषतः ॥८७२॥

पञ्चामृतेन च स्नानमर्चायां च विशिष्यते ।
प्रतिमाग्रे स्थण्डिले तु गोमयेनोपलेपयेत् ॥८७३॥

नारायणं महेशञ्च ब्रह्माण भास्कर तथा ।
भागीरथं च नृपतिं हिमवन्तं नगेश्वरम् ॥८७४॥

गन्धपुष्पादिभिश्चैव यथाशक्ति प्रपूजयेत् ।
दशप्रस्थान् तिलान् दद्याद्दशविप्रेभ्य एव च ॥८७५॥

दशप्रस्थान् यवान् दद्याद्दशगव्यो गवां हि तान् ।
मत्स्यकच्छपराट[1]कमकरादिजले चरान् ॥८७६॥

कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा ।
तदभावे पिष्टमयानभ्यर्च्य कुसुमादिभिः ॥८७७॥

गङ्गायां प्रक्षिपेदाज्यं दीपाँश्चापि पृथग्विधान् ।
रक्षया त्रिदिने तस्मिन् विभवे सति कारयेत् ॥८७८॥

एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ।
दशपापैर्वक्ष्यमाणैः सद्यः पापाद् विमुच्यते ॥८७९॥

**आदत्तानामुपादानमित्यादि दशहारोऽयं लिखितः ।**

एतद्देशविधैः पापकोटिजन्मसमुद्भवैः ।
मुच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा ॥८८०॥

एकविंशति तान् सर्वान् पितृनेव तथाऽपरान् ।
उद्धरत्येव संसारान् मन्त्रमात्रेण पूजयेत् ॥८८१॥

ॐ नमो नारायण्यै दशहरायै गङ्गायै ते नमो नमः ।
इति मन्त्रेण यो मर्त्यो दिने तस्मिन् दिवानिशम् ॥८८२॥

जपेत् पञ्च सहस्राणि दशधर्मफलं लभेत् ।
उद्धरेद्दशपूर्वञ्च कुलं चैव भवार्णवात् ॥८८३॥

वक्ष्यमाणमिदं स्तोत्रं विधानात् प्रतिगृह्य च ।
गङ्गाग्रे तद्दिने जप्यं द्विःपूजां च प्रवर्तयेत् ॥८८४॥

ॐ नमः शिवायै गङ्गायै शिवदायै नमोऽस्तु ते ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥८८५॥

नमस्ते रुद्ररूपिण्यै गङ्गायै ते नमो नमः ।
सर्वदेवस्वरूपिण्यै कल्याण्यै ते नमो नमः ॥८८६॥
सर्वत्र सर्वव्याधीनां भिषक्श्रेष्ठे ! नमोऽस्तुते ॥८८७॥

---

१. राटाक, इति वा शु० पा० ।

स्थाणुजङ्गमसम्भूतविषहन्त्री नमोऽस्तु ते।
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ॥८८८॥

तापत्रितयहन्त्र्यै च प्राणमूर्त्यै नमो नमः।
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्तये ॥८८९॥

सत्त्वसंशुद्धिकारिण्यै नमः पापविमूर्त्तये।
भुक्तिमुक्तिप्रदायिन्यै भद्रायै ते नमो नमः ॥
भोगोपभोगदायिन्यै भगवत्यै नमोऽस्तु ते ॥८९०॥

मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः।
नमस्त्रैलोक्यपूतायै त्रिपथायै नमो नमः ॥८९१॥

नमस्त्रिलोकसंस्थायै क्षेमवत्यै नमो नमः।
त्रिंशदासनसंस्थायै तेजोमूर्त्यै नमो नमः ॥८९२॥

नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः।
नमस्ते विश्वमित्रायै रेवत्यै ते नमो नमः ॥८९३॥

वृहस्पत्यै नमस्तेऽस्तु लोकधात्र्यै नमो नमः।
नमस्ते विश्वमुख्यायै नन्दिन्यै ते नमो नमः ॥८९४॥

तृप्तायै सुखजन्यायै संज्ञीविन्यै नमो नमः।
ब्रह्मेशायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥८९५॥

प्रणतार्त्तिप्रभञ्जन्यै जगन्मात्रे नमोऽस्तु ते।
निस्तुषायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ॥८९६॥

सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः।
परावरे! नमस्तुभ्यं नमस्ते मोक्षदे! सदा ॥८९७॥

गङ्गा ममाग्रतो भूयाद्गङ्गा मे पार्श्वतः सदा।
गङ्गा मे सर्वतः भूयात्त्वयि गङ्गेऽस्तु मे स्थितिः ॥८९८॥

आदौ त्वमन्ते मध्ये च सर्वलोकप्रिये! सिते।
त्वमेव मूलप्रकृतिस्त्वं हि नारायणः प्रभुः ॥८९९॥

गङ्गे! त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे!।
इतीदं पठते(व) स्तोत्रं नित्यभक्तिपरो हि यः ॥९००॥

शृणोति श्रद्धया यश्च कायवाक्चित्तसम्भवैः।
दशधा संस्कृतेर्दोषैः सर्वैरेव विमुच्यते ॥९०१॥

---

(व) 'पठति' इति शु.पा.

रोगस्थो मुच्यते रोगादापन्नश्च तथाऽऽपदः ।
द्विषद्भ्यो बन्धनाद्यैश्च सर्वैरेव विमुच्यते ॥१०२॥
सर्वान् कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ।
इमं स्तवं गृहे यस्तु लिखित्वाऽपि विनिःक्षिपेत् ॥१०३॥
नाग्निवैरिभयं तस्य पापेभ्योऽपि भयं नहि ।
तस्यां दशम्यामेतत्तु स्तोत्रं गङ्गाजले स्थितः ॥१०४॥
यः पठेद्दशकृत्वस्तु दरिद्रो वाऽपि चाक्षमः ।
सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ॥१०५॥
पूर्वोक्तेन विधानेन फलं यत्परिकीर्त्तितम् ।
यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने ॥१०६॥
विधिर्यो विहितः सम्यक् सोऽपि गङ्गाप्रपूजने ।
यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा ॥१०७॥
उमा यथा तथा गङ्गा चतू रूपं न भिद्यते ।
विष्णुरुद्रान्तरं यश्च गङ्गागौर्यन्तरन्तथा ॥१०८॥
श्रीगौर्यन्तरं यच्च यो ब्रूते मूढधीस्ततः ।

## ।। अथ निषिद्धानि ।।

भविष्य पुराणे गङ्गाभक्तो नरस्त्वप्सु श्लेष्मासृग्रोमसञ्चयम् ।
उत्संगे न क्षिपेच्चापो हस्तपादौ न ताडयेत् ॥१०९॥
गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् ।
शौचमाचमनं स्नानं निर्माल्यं मलघर्षणम् ॥११०॥
गात्रसंवाहनं क्रीडां प्रतिग्रहमथो रतिम् ।
अन्यतीर्थरतं चैव ह्यन्यतीर्थप्रशंसनम् ॥१११॥
स्कान्दे वस्त्रत्यागमथोद्यान्तं सम्भारञ्च विशेषतः ।
नाभ्यङ्गितो प्रविशेच्च गङ्गायां न मलार्दितः ॥११२॥
न जपन्न मृषा जल्पन् न वदन्ननृतं नरः ।
निष्प्रयोजकजल्पनम्, अविहितजल्पनं, असदर्थजल्पनं च निषिद्धमित्यर्थः ॥११३॥
ब्राह्मे स्नायीत तैलवान् विप्रस्तटभूमिमुपेयिवान् ।
स्कान्दे आधिक्यं सर्वतीर्थेभ्यो गङ्गायां तु वदन्ति ये ॥११४॥

अल्पविद्यामदोन्मत्तास्ते वै निरयगामिनः ।
शिवं विष्णुं च गङ्गां च यो द्वेष्टि पुरुषाधमः ॥९१५॥

स्वकीयपितृभिः सार्धं सुघोरं नरकं व्रजेत् ।
तथैव गौरीं लक्ष्मीं च गङ्गां भानुसरस्वतीम् ॥९१६॥

ब्रह्माणं चैव यो द्वेष्टि सुघोरं नरकं व्रजेत् ।
गङ्गां च ये न सेवन्ते मूढास्ते तमसावृताः ॥९१७॥

मातुर्जठरमूत्रासृक्पुरीषमलसञ्चये ।
पूयाद्यशुचिमत्तास्ते विष्ठाद्यन्त्रादिसङ्कुले ॥९१८॥

पुनः पुनः प्रजायन्ते श्रद्धया रहिता ध्रुवम् ।
परमात्मा शिवो ह्यन्यस्तस्मादन्या तु जाह्नवी ॥९१९॥

इति यो वक्ति मूढात्मा स न मोक्षस्य भाजनम् ।
गङ्गां प्राप्यापि ये मर्त्याः प्रीयन्ते न रमन्ति च ॥
न तारयति तान् गङ्गाभक्तान् पापरताँस्तथा ॥९२०॥

मात्स्ये गङ्गां प्राप्यापि ये मर्त्याः श्रद्धाभक्तिं न कुर्वते ॥९२१॥
तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः ॥९२२॥
अन्यतीर्थसमां मत्वा कुम्भीपाकेन मज्जति ॥९२३॥

अन्यतीर्थसमां गङ्गां यो ब्रवीति नराधमः ।
स याति नरकं चैव रौरवं दारुणं महत् ॥९२४॥

भविष्ये गङ्गातीरं परित्यज्य येऽन्यतीर्थाभिलाषिणः ।
ब्रह्महत्याफलं तेषां सन्ततं संशयात्मनाम् ॥९२५॥

गङ्गातीरं परित्यज्य येऽन्यतीर्थाभिलाषिणः ।
तोयान्तरे रतिर्येषां ते वै निरयगामिनः ॥९२६॥

यामे स्तुतिवादोऽयमिति ये मन्यन्ते पुरुषाधमाः ।
कुतार्किका मूढधियस्ते वै निरयगामिनः ॥९२७॥

पण्डितोऽपि स मूर्खः स्याच्छक्तियुक्तोऽप्यशक्तितः ।
यस्तु भागीरथीं गङ्गां सुखसेव्यां न पश्यति ॥९२८॥

किमन्यैः कर्मभिः षड्भिः तस्य किं श्लाघ्यजन्मना ।
किं श्रियाऽतिविकासिन्या यस्तु गङ्गां न पश्यति ॥९२९॥

## ।। अथ मरणप्रकरणम् ।।

**तत्राग्नेयपुराणे-विष्णुवाक्यम् ।**

ये मुञ्चन्ति नराः प्राणाँस्तिष्ठन्तः सन्निधौ तव ।
ते मे लोकं प्रयास्यन्ति पूज्यमाना दिवौकसाम् ।।९३०।।

अर्घोदकेन जाह्नव्यां म्रियेतानशनेन यः ।
स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च ।।९३१।।

वृहस्पतिः शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे ।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्दने ।।९३२।।

ब्रह्म पु. या गतिर्योगयुक्तस्य मनुष्यस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान् गङ्गायां तु शरीरिणः ।।९३३।।

अनासक्तिं गृहीत्वा यो गङ्गातीरे नरो मृतः ।
सद्य एव परं स्थानं प्राप्नोति पितृभिः सह ।।९३४।।

गङ्गायां मरणात् प्राग् यः संसारं त्यक्तुमर्हति ।
शतानि बहुजन्मानि यत्र तत्र मृतस्य च ।।९३५।।

महाँश्चापि गतः कालो यत्र तत्रापि गच्छतः ।
अतिदूरे समीपे च सदृशं योजनत्रयम् ।।९३६।।

गङ्गायां मरणं नेह नात्र कार्या विचारणा ।

एतद्वचनबलात्तद्द्वये एकैकयोजने मरणं पुण्यतममिति स्मर्तव्यम् ।

ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपि वा ।
गङ्गायां तु मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति ।।९३७।।

विष्णु पु. प्राणेषूत्सृज्यमानेषु गङ्गाया यः स्मरेन्नरः ।
'स्पृशेद्वा पापशीलोऽपि स याति परमां गतिम् ।।९३८।।

या गतिर्ज्ञाननिष्ठानां या गतिर्योगिनामपि ।
ज्ञानविज्ञाननिष्ठानां सा गङ्गायां मृतस्य च ।।९३९।।

कृमिकीटपतङ्गाद्या ये मृता जाह्नवीतटे ।
कूलान्युपरिवृक्षाँश्च ते यान्ति परमां गतिम् ।।९४०।।

ब्रह्मविष्ण्वादिदेवानां लोकानाप्नोति मानवः ।
ज्ञानेन तस्यां गङ्गायां मरणान्मोक्षमाप्नुयात् ।।९४१।।

अपि योजनपर्यन्तं गङ्गां स्मृत्वा तनुं त्येजत् ।
वैवस्वतोऽपि तस्यार्थं दत्वा स्वर्गं प्रयच्छति ॥९४२॥

यदि गङ्गाजलौघेन प्लाव्यते यत् कलेवरम् ।
तदेतन्मयतां याति मृत्युकाले विशेषत: ॥९४३॥

स्कान्दे गङ्गायां मरणान्मुक्तिर्नात्र कार्या विचारणा ।
परब्रह्मस्वरूपिण्यामित्याह जगतां पति: ॥९४४॥

गङ्गायां त्यजत: प्राणान् कथयामि वरानने ! ।
कर्णे तत्परमं ब्रह्म ददामि परमं पदम् ॥९४५॥

भविष्ये गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति पूरुष: ।
अज्ञानाद्ब्रह्मणो लोकं याति नास्त्यत्र संशय: ॥९४६॥

गङ्गायां मरणमात्रेण मुक्ति: ज्ञानपूर्वकमरणे मुक्तिरित्यविरोधी पदार्थ: । अज्ञानात्कामनाविशेषे मरणात्कामनाविशेषे ब्रह्मलोकमिति पारस्करदर्शनात् ।

कर्णे तत्परमं ब्रह्म कथयामि वरानने ! ।
इत्यादि स्वरसाच्चेति विद्यापत्युपाध्याय: ।

## ।। अथास्थिप्रकरणम् ।।

विष्णु पुराणे शम्भोर्जटाकलापात्तु विनिष्क्रान्तास्थिशर्करा: ।
प्लावयित्वा दिवं निन्यु: पापात्तान् सगरात्मजान् ॥९४७॥

यम: गङ्गातोयास्थिप्लवने जीवस्य शुभकर्मण: ।
गतस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ॥९४८॥

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥९४९॥

**कौर्म्ये ।**

यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥९५०॥

भविष्ये गङ्गातोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरै: ।
तत्कालमादित: कृत्वा तस्य स्वर्गे भवेत् स्थिति: ॥९५१॥
तावद्युगसहस्रन्तु नात्र कार्या विचारणा ॥९५२॥

वनपर्वणि यावदस्थि मनुष्यस्य गङ्गाया: स्पृशते जलम् ।
तावत्स पुरुषो राजन् ! स्वर्गलोके महीयते ॥९५३॥

**ब्रह्मपुराणे ।**

स्नात्वा ततः पञ्चगव्येन
सिक्त्वा हिरण्यमध्वाज्यतिलैर्नियोज्य,
ततस्तु मृत्पिण्डपुटे निधाय
यास्यन् दिशं प्रेतगणोपगूढाम् ।
नमोऽस्तु धर्माय वदन् प्रविश्य
जलं समे प्रीतिरिति क्षिपेच्च,
एवं स्थिते प्रेतपुरस्थितस्य स्वर्गे
गतिः स्याच्च महेन्द्रतुल्या ॥९५४॥

## ॥ अथ केशनखभस्मादिपतनफलम् ॥

ब्रह्मपुराणे
केशरोमनखादीनि येषां पुंसां तु वायुना ।
निःक्षिप्यन्ते च गङ्गायां तेषां स्याद्दिवि संस्थितिः ॥९५५॥

**विष्णुपुराणे,** मुक्तप्राणस्यास्थिभस्मस्नायुकेशाद्युत्सृष्टं यत्पतितं सद्यः शरीरिणं स्वर्गे नयति ।

महाभा.
भस्मीभूताङ्गसङ्गेन स्वर्गताः सगरात्मजाः ।
किं पुनः सर्वदा देवीं ये सेवन्ते दृढव्रताः ॥९५६॥

रामायणे
भस्मान्यथाश्नुते तेन राजेन्द्रेण नरोत्तमः ।
सर्वलोके कृते ब्रह्मा राजानमिदमब्रवीत् ॥९५७॥

तारितानि नृपश्रेष्ठ ! दिवं यातानि देववत् ।
षष्टिपुत्रसहस्राणि सगरस्य महात्मनः ॥९५८॥

**॥ इति गङ्गाभक्तितरङ्गिण्यां प्रथमस्तरङ्गः ॥१॥**



# ।। अथ द्वितीयःतरङ्गः ।।

अधिगङ्गमनङ्गवैरिणः पदपङ्केरुहमर्चयाम्यहम् ।
यमकिङ्कर ! किङ्करिष्यसे मम शेषे वपुषो रुषा त्वया ।।९५९।।

**श्रीरत्नपाणेः पद्यमिदमिति ।**

उपोद्घातप्रसङ्गाद्यैर्व्यवस्थाः प्रागुदाहृताः ।
इहेदानीं निरूप्यन्ते काश्चित्प्राधान्यतः पुनः ।।९६०।।

तथाहि गङ्गादर्शनस्पर्शनस्मरणादिभिः पञ्चमहापातकादिसर्वपापक्षयो मुक्तिफलत्वेन श्रुतिस्मृतिपुराणादिषु बहुशः श्रूयते। ततः कतिपये तीर्थकाभासा यथाश्रुतार्थविपरीतार्थं कल्पयन्ति ।

तथाहि, नहि स्नानमात्रेण ब्रह्मवधादिपातकनिवृत्तिः, बहुवित्तव्यायामसाध्यप्रायश्चित्तस्यानुष्ठाने लक्षणाप्रामाण्यप्रसङ्गात्। न च गङ्गाविरहिणि देशे तत्प्रवृत्तिः,

"प्रायश्चित्तानि नीयन्ते यत्र गङ्गा न विद्यते"

इत्यादि दर्शनादिति वाच्यम्, गङ्गासन्निहितदेशेऽपि शिष्टानां कृतप्रायश्चित्तप्रवृत्तिदर्शनात्। न च लोकसंग्रहार्थं प्रवृत्तिः गङ्गास्नानेन तत्पापविमुक्तिविधिप्रवृत्तिसिद्धात् अभिप्रेतसिद्धे लौकिकसंग्रहस्यापि तावतैव सम्भवात्। एवञ्चाश्वमेधफलकत्वमपि नोपपद्यते। अश्वमेधेऽप्रवृत्त्यापत्तेः ।

किञ्च सर्वपापक्षयहेतुके गङ्गास्नाने कृतेऽप्युत्तरक्षणे पापसाध्यं तत्तद्दुःखमनुभूयत इति त्वयापि सर्वपापक्षय इत्यस्यार्थान्तरं कल्पनीयमेव।

किञ्च गङ्गास्नानादिनैव सर्वपापनाशोऽगम्यागमनादौ स्तेयादौ च कथं न लोकाः स्वाच्छन्द्येन प्रवर्तेरन्। गङ्गास्नानेनैव तस्याप्युपशमात्। यच्च मुक्तिफलत्वं श्रूयते तदपि नोपपद्यते। को हि गङ्गादर्शनमात्रसाध्यमुक्तिनिमित्तं चतुर्थाश्रमेणात्मानमवसादयेत् ? को वा श्रवणमनननिदिध्यासनादौ प्रवर्त्तेत ?। किमर्थं वाराणसीं मरणनिमित्तं यतेरन् ? किञ्च सकृद्दर्शनेऽपि सर्वपापविमुक्तौ मुक्तौ च दर्शनस्नानाद्यर्थं भूयोभूयः प्रयत्नैः ? एकेनैव फलसिद्धेः, तस्माद्ब्रह्मवधादिपापनिवृत्तिरित्यस्य वा "नरः फणिनं सर्पं हत्वा ब्रह्मवधी भवेत्। 'वृत्तिच्छेदो हि तद्वधः इत्यादिना' बोधितातिदेशिकब्रह्मवधादिपातकनिवृत्तिरित्यर्थस्तु जन्मान्तरीयब्रह्मवधादिनाशो मास्तु प्रायश्चित्तानामुपदेशात्। अश्वमेधसमफलत्वमपि यथाकथञ्चिन्मुखचन्द्रयोरिव साम्यमिति तात्पर्यमस्तु सर्वपापक्षय इत्यस्य सर्वजातीयपापनाश इत्यर्थोऽस्तु ।

एवं तीर्थव्यावृत्तिरिति युज्यते, तत्रापि जन्मशतस्य जन्मसहस्रपापनिवृत्तिः श्रूयते, तत्रापि तावत्कालेन विद्यमानधर्मनाशमात्रमर्थो न तु सकलसन्न्यासः

मुक्तिप्रतिपादकवाक्यानां तु मरणप्रकरणात्स्नातानां वाराणसीपरत्वं ज्ञानपूर्वक-मरणपरत्वं 'गङ्गायां ज्ञानतो मृत्वा मोक्षमाप्नोति पूरुषः' इत्यादि ब्रह्मपुराणीय-वचनस्वरसात्, दर्शनस्पर्शनप्रकरणप्रामाण्यमयेन गङ्गांस्नानादिवाक्यानां सङ्कोच-कल्पनमिति गङ्गाविरहिण्येव देशे प्रायश्चित्तप्रवृत्तावप्रामाण्यप्रसङ्गनिरासात्–

प्रायश्चित्तानि नीयन्ते यत्र गङ्गा न लभ्यते ॥९६१॥
यत्र गङ्गा महाराज ! प्रायश्चित्तं तु तत्र सा ।
चान्द्रायणपरान्तं वा प्राजापत्यमथापि वा ॥९६२॥

प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ।
कृत्वा तु दुस्तरं कर्म मज्जेद् गङ्गाम्भसि प्रिये ! ॥९६३॥

तत्क्षणादेव नश्यन्ति पापमुद्दिश्य मज्जनात् ।
नान्येन दह्यते लोके क्रिया नरकगामिनी ॥९६४॥

गङ्गाम्भसि प्रयत्नेन स्नातव्यं तेन मानवैः ।
ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी ॥९६५॥
सर्वतो निष्कृतिं याति गङ्गास्नानान्न संशयः ।

इत्यादिना कण्ठरवेणैव तथा प्रतिपादनात् गङ्गासन्निहितदेशे शिष्टाः कथं बहुव्यायामसाध्ये प्रायश्चित्ते प्रवर्तन्ते, इति तु शक्यं तत्र केचित् लघुनि कर्मणि न गुरुकर्मणो विघातम् ।

यदाह विष्णुः **'एनसि लघुनि लघूनि गुरुणि गुरूणि, प्रायश्चित्तानि, तथा च पाद्मे ।**

पापकृद् याति नरकं प्रायश्चित्तपराङ्मुखः ।
किन्तु पापानि रू[illegible]णि प्रायश्चित्तानि तत्तथा ॥९६६॥

तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः ।
पापे गुरुणि गुरूण्येव स्वल्पान्यल्पे च तद्विदुः ॥
प्रायश्चित्तानि विप्रेन्द्रा जगुः स्वायम्भुवादयः ॥९६७॥

इत्यादिस्वरसात् गङ्गागरीयसा कथं प्रायश्चित्तेनोपगम्यताम् ।

धर्मद्रव्यं ह्यपां बीजं वैकुण्ठचरणच्युतम् ।
धृतं मूर्ध्नि महेशेन यद्गाङ्गममलं जलम् ॥९६८॥

तद्ब्रह्मैव न सन्देहो निर्गुणं प्रकृतेः परम् ।
तेन किं समतां गच्छेदपि ब्रह्माण्डगोचरे ॥९६९॥

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
नरो न निरयं याति किं तस्य सदृशं भवेत् ? ॥९७०॥

स्कान्दे गङ्गायाः सदृशं तिष्ठेदपि ब्रह्माण्डगोचरे ।
इति यो वक्ति मूढात्मा सर्वधर्मबहिष्कृतः ॥९७१॥

स गच्छेद्रौरवं विप्रो यावदाभूतसंप्लवम् ।
शिष्टतन्त्रे तावन्न पातकं कर्त्तुं शक्ताः पातकिनो नराः ।
गङ्गा यत्र भवेत् पुंसां प्रायश्चित्तं शिवो वदेत् ॥९७२॥

इति बहुतरवचनस्वरसाद् गङ्गा प्रायश्चित्तेनोपदेष्टव्या न भवत्यनुपदिष्टाया अशिष्टा तत्प्रायश्चित्तानि तिरस्कृत्य कथं तत्त्वेन प्रवर्तन्तामिति, ननु लघुनि लघूनि गुरुणि गुरूणि प्रायश्चित्तानीति तत्त्वं गङ्गा सर्वतो गरीयसीत्यपि तत्त्वम् ।

किन्तु प्रयत्नवित्तव्ययैर्गौरवं लाघवं च विचार्यते, न हि गङ्गाप्रायश्चित्तं किन्तु तत्सर्वं निदर्शनस्पर्शनस्नानादि, तेषु तत्प्रायश्चित्तेषु च कुत्र प्रयत्न-वित्तव्ययो गौरवमिति विचारे गङ्गादर्शनादावेव लाघवात् ।

अपरे तु रामयुधिष्ठिरप्रभृतीनां ब्रह्मवधादिनिवृत्तिनिमित्तगङ्गादर्शने प्रवृत्तौ लोका अपि सुखनिरतिशया स्वेच्छया धर्मे प्रवर्तेरन्निति दुःसाध्येष्वेव लोकोपदेश-निमित्तं तेषां प्रवृत्तिः ।

स्कान्दे अल्पसाध्येऽपि दुःसाध्यं श्रावयेत्सततं जने ।
यथा पापे निवृत्ते तु प्रायश्चित्तभयादिति ॥९७३॥

**तथा–**

न निर्दिशेदल्पसाध्यं प्रायश्चित्तान्तरे बुधः ।
तस्मिन् संक्रमते पापं कर्त्ता तत्र विमुच्यते ॥९७४॥

इति तत्र, लोकनिवर्त्तनं हि तेषां स्वसमानकाले वा तत्र नाद्यः दण्डस्यैव सुतरां तत्र वारणसमर्थत्वात्, न द्वितीयः, तदा हि रामप्रभृतीनां आचारस्मरणं गङ्गास्नानादिनैव ब्रह्मवधादिसर्वपापनिवृत्तिरित्यर्थः प्रतिपादकानि बहूनि परमर्षिवचांसि सन्ति, तत्राचारस्यान्यथासिद्धिशङ्काकवलिततया वचसामेव बलत्वादिति । अत्रोच्यते–

समर्थेन प्रायश्चित्तत्वेन व्रतमाचरणीयं तदसामर्थ्ये दानं तदसामर्थ्ये जपहोमादिः तदसामर्थ्ये गङ्गादिमहातीर्थानां शरणं कर्त्तव्यम् ।

**अतएव हलायुधभट्टाः–** अथ प्रायश्चित्तभेद इत्युपक्रमाख्यापनेनानुपातेन तपसाध्ययनेन च ।

पापकृन्मुच्यते पापाद् यथा दानेन चापदि।
शोषणेन शरीरस्य तपसाऽध्ययनेन च ॥९७५॥

पापकृन्मुच्यते पापाद्दानेन च दमेन च।
अवरोधपरित्यागस्तपोदानानुकीर्तनम् ॥९७६॥

विद्याभ्यासो जप: स्पर्श: सप्ताङ्गं पापनाशनम्।
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ॥९७७॥

स्वपाकेष्वपि भुञ्जानो ध्यायी नैव च लिप्यते।
प्राणायामै: पवित्रैश्च ज्ञानैर्होमैर्जपैस्तथा ॥९७८॥

शुचिकामा: प्रमुच्यन्ते पातकेभ्यो हि सर्वश:।
प्रातर्निशि तथा सन्ध्यामाध्याह्नादिषु संस्मरन् ॥९७९॥

न याति नरकं शुद्ध: संक्षीणाखिलकल्मष:।
यद्यकार्यशतं कृत्वा कृतं गङ्गाभिषेचनम् ॥९८०॥
सर्वो दहति गङ्गाम्भस्तूलराशिमिवानल:।

**तथा सेतुबन्धरामेश्वरप्रस्तावे–**

ब्रह्महत्यादिपापानि नराणां यानि कानि ह।
दर्शनादेव नश्यन्ति नात्र कार्या विचारणा ॥९८१॥

हिरण्यदानं गोदानं भूमिदानं तथैव च।
नाशयत्याशु पापानि महापातकजान्यपि ॥९८२॥

दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजोत्तमा:।
पातकेभ्य: प्रमुच्यन्ते वेदाभ्यासान्न संशय: ॥९८३॥

एतैर्द्विजातय: शोध्या व्रतैरपि, तथैव स:।
अनाविष्कृतपापाँश्च मन्त्रैर्होमैश्च शोधयेत् ॥९८४॥

इत्यादीनि बहूनि परमर्षिवचांसि च पठित्वा तदिह व्रतकरणसमर्थेन व्रतमाचरणीयम्। तदसम्भवे मीमांसावचनपरिच्छिन्नानि चान्द्रायणादिव्रतसमानि धेनुसुवर्णादीनि कृतद्रव्याणि देयानि, तदसम्भवे जपहोमादीनि क्वचित् क्वचित् सम्भवे तीर्थसेवनं अनाविष्कृतपापास्तु प्रधानतया एवं जपहोमादयो विधेया इति व्यवस्थां कृतवन्त:।

वस्तुतस्तु गङ्गासन्निहितदेशे शिष्टानां यशोविशेषकाङ्क्षिणां स्वर्गविशेष-काङ्क्षिणामेव वा तत्प्रायश्चित्ते प्रवृत्तिरस्तु तत्तत्प्रायश्चित्तानाम् प्रायश्चित्तैरप्येतेन ध्रुवं स्वर्गं च विन्दति।

दीनात्मानस्तु पापेभ्यो कृच्छ्रैः सन्तापिता नराः।
गतपापा दिवं यान्ति नात्र कार्या विचारणा ॥९८५॥

**शङ्खलिखितौ–**

प्रायश्चित्तं प्रशंसन्ति नरा ज्ञानविचक्षणाः।
सर्वसुखोपपन्नाश्च ह्येवं ह्याहुः पुरातनाः॥
ज्ञानवान् यशसा युक्तो जायतेऽग्र्यकुलोचितः ॥९८६॥
धूतपापो जितक्रोधः सत्यवादी जितेन्द्रियः॥

इत्यादीनां पापनाशकत्वस्य यशोविशेषजनकत्वस्य स्वर्गविशेषजनकत्वस्य च श्रवणात्, तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत इत्यादौ बहुफलश्रवणात्।

रामयुधिष्ठिरप्रभृतीनां फलविशेषाकाङ्क्षयाऽपि तत्र प्रकृतिरुत्पद्यते, एवं च निष्परिपन्थिषु ब्रह्मवधाद्युपशमप्रतिपादकवाक्येषु किमर्थं सङ्कोचकल्पनात् अश्वमेध-गङ्गास्नानयोस्तु फलभूमैव कल्पताम्, आधिक्यं तु परब्रह्मास्वरूपायां गङ्गायां स्नानादौ अश्वमेधादौ प्रकरणस्थयशोविशेषाकांक्षत्वात्। यत्तूत्तरक्षणे पापासाध्यदुःखा-नुभवात्सर्वपापक्षय इत्यस्य सर्वजातीयपापक्षय इत्यर्थ इति तदप्ययुक्तम्।

एवं विद्यमानशरीरोपभोग्यदुःखधर्मभिन्नाधर्मनाश इत्येव किं न कथ्यते। तत्र धर्मारब्धशरीरेणावश्यं तादृशफलोपभोगात्, अतएव **लीलावतीकृतमुक्तिग्रन्थे** देहात्मककर्मभोग्यैकनाश्यत्वनियमादिभिः सिद्धवल्लिखितम्। अतएव श्रीदत्तहरिनाथो-पाध्यायाभ्यामेकादशीप्रकरणे–

"सर्वपापैः प्रमुच्यत" इत्यर्थान्मुक्तिः,

न चैवं सद्य एव शरीरपातापत्तिः, एतच्छरीरोपभोग्यपापभिन्नपदस्येत्युक्तम्। न च स्नानानन्तरं पुनः पापक्षयार्थं स्नानान्तरे प्रवृत्त्यनुपपत्तिः। न हि पापक्षयार्थं पुनः स्नाने प्रवृत्तिः किन्तर्हि स्वर्गार्थमेव। स्नानान्तरोत्पन्नाधर्मनाशार्थं वा प्रवृत्तिः। मुक्तिप्रतिपादकवाक्यानां तु किमर्थं सङ्कोचकल्पनम्। आरादुपकारकं कर्म, सन्नि-पत्योपकारकं ज्ञानम्। तथा च तत्त्वज्ञानप्रतिबन्धकीभूतदुरितोपशमद्वारा गङ्गास्नान-मरणादीनां मुक्तित्वे हेतुत्वम्, तेन च स्नानमरणादीनां दुरितोपशमोद्भवस्यैव कारणान्तरविलम्बाद् विलम्बः।

**यदाहुराचार्यचरणाः–** न ह्येतदेकस्माद्भवति, सामग्रीतः सर्वसम्भव इति, न पुनरेतावतैव संन्यासाश्रमे मननादौ च प्रवृत्त्यनुपपत्तिः।

"श्रद्धाकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते"।

इत्यादिना श्राद्धादीनां मोक्षहेतुत्वे श्रुतेऽपि चतुर्थाश्रममननादौ प्रकृत्त्यनुप-

शङ्खलिखितौ = वैदिकधर्मशास्त्रकारौ

पत्त्यापत्तेः। तस्माद्गङ्गास्नानादिना तत्त्वज्ञानप्रतिबन्धकीभूतदुरितोपशमे वृत्ते, न त्वज्ञानकारणान्तरे कर्णे तत्परमं ब्रह्म कथयामि वामनेनेत्यादि चेद्बोधि-तोपदेशाद् वा तत्त्वज्ञानोत्पत्तौ मिथ्याज्ञानादुपशमे मुक्तिरिति सर्वमवदातमिति।

नन्वेवं सम्भवत्वे तीर्थसेवनमिहायातं, तथाप्यनेकविधपापेषु किमावृत्त-गङ्गास्नानम्? अथ तन्त्रेण सकृदिति संशयस्तदवस्थ एवेति।

**तथा च देवलवचनम्–**

यत्स्यादनभिसन्धाय पापकर्म सकृत्कृतम्।
तस्येयं निष्कृतिः प्रोक्ता धर्मविद्भिर्मनीषिभिः ॥९८७॥

विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥९८८॥

**इति। गौतमोऽप्याह–** एनसि गुरुणि गुरूणि लघुनि लघूनि तेन पापसंख्यापरिगणितान्येव प्रायश्चित्तात्मकानि स्नानादीन्यनुष्ठेयानीति, तदसत् तन्त्रेण सकृत्स्नानादेव सकलपापक्षयसिद्धेस्तदर्थं पुनरनुष्ठानवैयर्थ्यात्, तन्त्रत्वे हि एकप्रयोग-विध्युपगृहीतत्वं वा समानकालदेशकर्तृत्वेनाप्यूह्यमानविशेषकत्वं वा कारणं ततो-भयमपि गङ्गास्नान इति तस्य कथं न तन्त्रत्वम्। नन्वेकस्य प्रधानानुष्ठानस्य युगपदेनकफलकत्वम्। योगसिद्धाधिकरणे कथमेकस्नानस्य युगपदनेकपापक्ष-यकारित्वं, भाष्यान्तरेति नैवं योगसिद्धाधिकरणं सिद्धान्त परिज्ञानात्, तत्र हि पृथगनुष्ठानसाध्यानेकफलानेकस्यैव कामायान्ये यज्ञक्रतव इति सङ्कीर्त्य सर्वेभ्यो दर्शपौर्णमासावित्यभिधानात्तत्र भवतु पृथगनुष्ठानसाध्यत्वं इह तु तथाभूतपृथग-नुष्ठानसाध्यत्वप्रतिपादकवचनाभावात्। अनेकफलानां च दशहरान्यायेन एककामना-विषयत्वसम्भवात्तन्त्रत्वमेवेति न चैवमनेकप्रयोगसाध्यानां षष्टिवर्षाद्युपभोग्यसजाती-यानेकफलानामेकस्मादेव तन्त्रानुष्ठितज्योतिष्टोमादिप्रयोगादेकदैव सकलनिष्पत्ति-सम्भवात्, पुनरनुष्ठानं तस्मादिति कर्मण्यारम्भाधिकरणसिद्धान्तविरोध इति वाच्यम्। यतो हि भवेदेव यदि षष्ट्यादिसंख्यावच्छिन्नफलश्रुतिविरोधो न भवेत्। तथाहि यद्येकस्मिन्प्रयोगे षष्टिवर्षभोग्यानेकानि फलानि भवेयुः। तदा षष्टिवर्षभोग्य-कालश्रुतिरेव न स्यात्। श्रूयते च तेनावगम्यते प्रयोगभेदादेव फलभेदसिद्धिः।

**यत्तु देवलवचनम्,** विधेः प्राथमिकादस्मादित्यादि तत्र आवृत्तानुष्ठानप्रति-पादनार्थं किन्तु द्विगुणत्रिगुणप्रायश्चित्ताभिध्यानद्वारेण परस्परपापहेत्वनुष्ठानानामधिक-पापजनकतया तदर्थमेव तथा चोक्तम्। चतुर्थे नास्ति निष्कृतिरिति न तु परमार्थतश्चतुर्थे निष्कृत्यभावः महापातकेऽपि द्वादशवार्षिकप्रायश्चित्तोपदेशात्, कामतोऽपि ब्रह्मवधे प्राणान्तिकाया निष्कृतेरुपदेशात्। अतो नायं विधिः किन्तु निन्दार्थवाद एव,

अतएव तुल्यरूपपापेषु महापापोद्देशेन प्रवृत्तद्वादशवार्षिकादिप्रायश्चित्ते कृते स्वल्पपापानां पशुपुरोडाशन्यायेन प्रसङ्गादेव नाश इति न पृथक् पापक्षयार्थं प्रायश्चित्तानुकरणम्। तद्वदेकेनैव स्नानेन एकलपापनिवृत्तेर्न तदर्थं स्नानान्तरकरणमिति सर्वत्र साभिलाष एव संकल्पः इति सिद्धम्। प्रक्रमाधिकरणे–

मासपक्षतिथीनां च निमित्तानां च सर्वशः।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्॥

इत्यादि वाक्यस्वरसात् सर्वसंकल्पवाक्येषु मासपक्षतिथीनां निमित्तविशेषोपनिपाते निमित्तोल्लेखः कर्त्तव्यः। तथा च साधारणदिने अद्य चैत्रकृष्णद्वितीयायां अश्वमेधयज्ञजन्यफलसमफलप्राप्तिकाम इत्यादिक्रमेण निमित्तोपनिपाते च चैत्रकृष्णप्रतिपदि नन्दायामित्यादिक्रमेण संकल्पवाक्यमिति यत्राकरवाक्ये मासपक्षतिथीनां निमित्तत्वं पतेत्, तत्रैवमेषामुल्लेखः।

अन्यत्र तु अद्य नन्दायामित्यादिक्रमेण निमित्तमात्रस्येति, परेषां मतं तत्र चकारे यस्य समुच्चयार्थकत्वे प्रथम एव पक्षः। व्यस्थितविकल्पपरतया तु द्वितीयः पक्षः प्रतिहस्तकवदस्तु गङ्गापक्षलोके द्वितीय एव पक्षो बहुशो लिखितः। **मैथिलानामाचारो** तथा–

गौडास्त्वधिकं शशिदिवाकरोद्यत्कीर्तनमपि कुर्वन्ति, तच्च प्रमाणाभावान्नादरणीयमिति कामनायां तु सर्वत्राकरवाक्ये येन प्रकारेण यत्फलं श्रुतं तेन विशिष्टं तदुल्लेखनीयम्।

न तु वेदादिबोधितफलप्राप्तिकाम इत्यादि क्रमेणापि वाक्यरचनमिति भ्रमः कर्त्तव्यो यथा श्रुतिविहार इति जैमिनीयसूत्रविरोधात्, विष्णुप्रीतिस्तु सर्वत्र कामनाविषयीकर्त्तुं युज्यते, तत्र पूर्वं सर्वत्र विष्णुप्रीतिर्वा फलमिति परमशिष्ट श्रीदत्तोपाध्यायेन गृहीतशङ्खलिखितवाक्यसमुदाचाराच्च।

ननु स्नानदर्शनादौ पुण्यकालस्नाने च मुनिपुराणादिभेदेन फलभेदः श्रूयते, तत्राविरोधे सर्वं फलं जायते। विरोधस्तु परब्रह्मस्वरूपिण्यां गङ्गायामसंभवी। न हि स्वर्गमोक्षौ विरुद्धाधिकारे कर्त्तव्यावपि गङ्गायां विरुद्धेति स्वर्गानन्तरमोक्षसम्भवादेवं च सङ्कल्पवाक्ये अनुपदर्शितेऽपि सकलमुनिप्रणीतं फलं भवतु, तदुक्तरीत्या सर्वपापक्षयवत्।

अतएव यत्रैव परस्परमाकाङ्क्षा, तत्र नानामुनिप्रणीतवाक्यैकवाक्यतया एकः श्राद्धेऽपि प्रयोगो निर्वाह्यते। यत्र नाकाङ्क्षा तत्र प्रयोगभेदः। कातीयगोभिलस्नानवत् अन्यथा ताभ्यामप्येकप्रयोगे वचनापत्तेरिति।

पा.लि.प.सं. ७५

अतएव परममीमांसकै: प्राचीनैर्भवशर्मप्रतिहस्तकप्रभृतिभिरेकैकमेव फलं भवतीति सङ्कल्पवाक्ये तथैव लिखितम्। अत एवैकस्मिन्नहनि निमित्तद्वयोपनिपाते द्वयोरपि निमित्तद्वयमुल्लिख्य फलद्वयं चोल्लिख्य सङ्कल्पो नार्हति गौडानामाचारोऽपि तथैवेति निरस्तम्, एकस्नानेन फलद्वयं वचनबलाद्वा भवेत्। तन्त्रेण वा।

न तावदाद्य: निरपेक्षश्रुतत्वेनाकाङ्क्षाविरहेण च वचनस्य तत्रासामर्थ्यात्। न द्वितीय:, समानदेशकालकर्तृत्वेनागृह्यमाणविशेषत्वस्य तन्त्रत्वप्रयोजकस्य विरहात्।

अतएव मैथिलानामाचारोऽपि तथैवेति तिथिपुरस्कारेण निमित्तविशेषोपनिपातोदयगामिन्येव तिथि: स्नानार्थमादरणीया, नैव चोदयिकी तिथिरिति श्रवणात्। न तु युगस्यादरस्तस्य व्रतमात्रप्राकरणिकत्वात्। नापि तन्त्रम्, तिथ्यवच्छिन्न कालमात्रादर:, निषिद्धे कालवर्जनमिति पर्वादीनां मासादिनिषेध एव वचनबलात्, तदन्वयात्। एवं च लक्षणपुरस्कारप्रवृत्तनिमित्तविशेषोऽपि उदयकालीननक्षत्रादर एव व्यवसायसाम्यादिति श्रीदत्तोपाध्याया:।

एवं च यद्यपि श्रीदत्तोपाध्याया यत्र तिथिनक्षत्रयोगप्रवृत्तो निमित्तविशेषस्तत्राप्युदयकालीनत्वमपेक्षणीयं भवितुमर्हति, न तु द्वितीययोगमात्रं विशिष्टं हि तदुभयम्, नाद्यस्तयोस्तु द्वयोरप्युदयकालीनत्वमपेक्षणीयमिति योगेऽपि द्वयोदययोगो युक्त:।

तथापि योगे योगमात्रमपेक्षणीयमाचारादत एव गजच्छायादौ तथा व्यवहार इति। यदि पुनर्विहितसमय: साङ्गस्नाननिर्वाहक्षमो न भवति।

किन्तु स्वल्पसमयावच्छिन्नस्तर्हि तदभ्यन्तर एवारभ्य कालान्तरेऽपि निर्वाह्यम्।

"काले खलु समारभ्यकालेऽपि समापयेदित्यादि"– इति चाभ्युदितेष्टौ सिद्धम्। माघादौ मासस्नानमुद्दिश्य प्रथमदिने सकृदेव सङ्कल्पाचरणं, न तु पृथक् पृथक् आवृत्तौ प्रमाणाभावाद्विरोधाच्च, प्रात्यहिकस्नानेन कालिकापूर्वं जन्यते, चरमस्नानेन तु मासान्तेऽखिले फलजननसमर्थं प्रधानापूर्वं जन्यते। न तु प्रात्यहिकस्नानेन कालिकापूर्वप्रात्यहिकफलजननसमर्थं प्रधानापूर्वजननमिति वाच्यम्। योगसिध्यधिकरणविरोधात्। समानदेशकालकर्तृत्वेनागृह्यमाणविशेषकत्वस्य तन्त्रत्वप्रयोजनकस्य विरहेण तत्रास्याप्यभावात्, तथा च यदि स्नानमफलं कामनाविरहस्तर्हि प्रात: संकल्पेन कर्त्तव्य:। प्रात: स्नानमुपक्रम्यैव मासफलश्रवणादित्युक्तमधस्तात्।

एवं च मध्यदिने निमित्तविशेषोपनिपाते संकल्पोऽर्हत्येव मासफलतदसंस्पर्शात्। एवं च षण्मासस्नानेऽपीति।

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम् ।
मलिम्लुचः स विज्ञेयो ह्यनर्हः सर्वकर्मसु ।।

**इति वैदिककर्ममात्रत्यागनिषेधे प्राप्ते—**

नित्यनैमित्तिके कुर्यात् प्रचेतः सन्मलिम्लुचे ।
तीर्थस्नानं गच्छायां प्रेतश्राद्धे तथैव च ।।इति।।

प्रतिप्रसवः। मलिम्लुचे त्वनावृत्तं तीर्थस्नानमपि त्यजेदिति पुनर्निषेधः। तदयं पर्यवसितार्थः, तीर्थस्नानविवाहदेवभवनमन्त्रादिदेवेक्षणं दूरेणैव जिगीषुः परिहरेदस्तङ्गते भार्गवे तथा मलिम्लुचे मासि सुराचार्येति चागतः, इति ज्योतिर्वचन-प्रतीतमप्यभजकत्वमात्रतीर्थस्नाने पर्युदस्यते काम्यफलाजनकत्वं त्वावृत्तानावृत्त-तीर्थस्नानादौ सर्वत्रैव 'मलिम्लुचः स विज्ञेयः कर्मणां फलनाशकृदित्यादिना प्राकाम्यफलमात्रस्य गोदानादिनिषेधात्। 'तीर्थस्नानं गजच्छाया' मित्यादिप्रतिप्रसव-स्यानिष्टाजनकत्वेनापि सम्भवात्। अनावृत्ते त्वनिष्टजनकत्वमपि।

**अतएव मलिम्लुचपरित्यागस्त्वदृष्टार्थो दृष्टानुत्पत्त्यर्थोऽनर्हः सर्वकर्मस्वित्य-भिधानात् ज्योतिःशास्त्रानिबन्धो निषिद्धशुक्रास्तादिसमये महादानादपूर्वमुत्पद्यते।** एवेत्यादि महादाननिर्णये प्रतिहस्तकचरणैः स्फुटं निगदितं नवीनवाचस्पति-मिश्रैरद्वैतनिर्णये आवृत्तानावृत्तसाधारणे तीर्थस्नाने गोदानादिवत् पुण्यजनकत्वे वचनान्तरात् सिद्ध एव मलिम्लुच आवृत्तः अनिष्टजनकमपीत्यभिधीयते। तीर्थस्नानं गजच्छायामित्यादिना अनावृत्ततीर्थस्नानवद्दृष्टदोषो न भवति, इत्यभिधीयते।

ननु काम्यफलजनकत्वमपीति सिद्धवल्लिखितं दानरत्नाकरस्यापि अत्रैव तात्पर्यमिति छान्दोग्यपरिशिष्टम्।

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चैतदमन्त्रवत् ।।

अनातुरः स्नानसम्वर्धनीयो रोगरहितः, गेह इति मुख्य एवार्थः इति भवशर्मप्रतिहस्तकचरणैः। उद्धृतोदकस्नानमात्रपरमिति श्रीदत्तोपाध्यायाः साग्न्य-नुदितहोमीति प्रातः स्नानपरं गेहपरं, स हि यदि होमलोपे सति यो गेहे स्नाति तदा मन्त्रशून्यं स्नायादिति हलायुधहरिनाथकल्पतरुकृतः स्वरसः।

अत्र अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेदित्युपक्रमात्। पद्मपुराणे "विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुपूजिते" इत्यादि स्नानप्रकारकथनान्मध्यमः पक्षः सर्वथा चिन्तनीयः। सङ्कोचे प्रमाणविरहाच्चरमोऽपि चिन्त्यः, प्रथम एव पक्षः साधीयान्। व्यवहारस्तु कुलाचारात् त्रिष्वपि साधारण इति,

"आवाहनं विसृष्टिश्च गङ्गास्नानं न विद्यते" इत्यादि
"भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी"

इत्यनेन च सन्निधापने फलकत्वस्य श्रूयमाणत्वाद् गङ्गायां ब्रह्मपुराणीयो विष्णोः पादप्रसूताऽसीत्यादि मन्त्रो न पठनीयः। अतएव धर्मकोषकृता गङ्गायां विष्णोः पादप्रसूतीत्यादिना नावाहनमिति सिद्धिवल्लिखितमिति चेन्न, अनुद्धृतैर्वा जलैः स्नानं समाचरेदित्युपक्रम्य सर्वत्र जले विष्णोरित्यादि मन्त्रपाठाद् गङ्गायामपि तदन्वयात् स्नाने हि करणत्वेन मन्त्रान्वयात्। अङ्गे श्रुतिरर्थवाद इति भवेत् सन्निहिता तत्रेत्यादेर्मीमांसकनयस्तावकत्वाच्च किंचित् किमिदं सन्निधापनं नाम न तावद् गङ्गायाः पूर्वरूपायास्तत्रागमनबाधात्।

नापि पुराधिष्ठात्र्या देवतायाः सन्निधापनं मूर्त्ताया युगपदनेकत्र तदसंभवात्। तस्मादधिष्ठात्र्या देवताया बुद्धिविशेषविषयत्वमेव प्रतिष्ठाविधिना प्रतिमाधिष्ठानवत् सान्निध्यं वाच्यम्, तच्च गङ्गायामपि नायोग्यं अस्तु वा त्रिपथगामिप्रवाहत्रयसान्निध्यं प्रवाहत्रयाधिकरणजन्यफलमिति न किञ्चिदनुपपन्नं, इह तर्पणं द्विविधं प्रधानमङ्गं च, ततः प्रथमम्–

**'तर्पणं तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः।**
**देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्'**

**इति शातातपोक्तम् द्वितीयं तु–**

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।
तर्पणं तु भवेत्तस्य अङ्गत्वेन प्रकीर्तितम्॥९८९॥

इति ब्रह्माण्डपुराणोक्तं, तत्र गेहादमन्त्रकस्नानपक्षे अङ्गिनोऽभावादङ्गस्याप्रसक्तेः तर्पणमुचितमिति सर्वतन्त्रकसिद्धम्। तच्च उदीरतेति प्रथमाञ्जलिमङ्गिरसो न इति, द्वितीयाञ्जलिमायान्तु न इति। तृतीयाञ्जलिं पित्रं ऊर्ध्वं वहन्तीति प्रथमाञ्जलिं पितृभ्यः स्वधायिभ्यो द्वितीयाञ्जलिं ये चेह पितर इति। तृतीयाञ्जलिं पितामहाय मधुवातेति। प्रथमाञ्जलिं मधुनस्तुमिति; द्वितीयाञ्जलिं मधुमान्नो वनस्पतिरिति, तृतीयाञ्जलिं प्रपितामहाय, सर्ववाक्यं नमो व इति वाक्येन प्रथमं केवलं वाक्याभ्यां च द्वितीयं मातामहाय, एवमेव प्रमातामहाय वृद्धप्रमातामहयोरपि दद्यादिति, एवं च वैधस्नानव्यतिरेकेण नित्यतर्पणे देवास्तृप्यन्तामिति। ऋषयस्तृप्यन्तां त्रिःप्रजापतिस्तृप्यतामिति तर्पणं विधाय अयमेव प्रकार; पद्मपुराणीयस्नानाङ्गेऽपि तर्पणे उदीर्यत इत्यादि मन्त्रान्वय इति वर्धमानोपाध्यायप्रभृतयः।

**तथाहि–**

विना रूप्यसुवर्णाभ्यां विना ताम्रतिलैस्तथा।
विना दर्भैर्विना मन्त्रैः पितृणां नोपतिष्ठति॥९९०॥

इत्यत्र दर्भादिवत्सर्वत्र मन्त्रान्वयो विधीयते। मन्त्रैर्विना निन्दार्थवादात्। अपरे तुभ्यमेव स्नानमुपक्रम्य तर्पणं पठन्ति तदेव तन्त्राङ्गम् अन्यधारकवत्सभ्या इति वदन्ति। तदनयोः पक्षयोरुभयत्रापि कुलक्रमेणाचारः, इति तथा कुलाचारमेव व्याहर्तुमर्हतीति तीर्थश्राद्धकरणे गङ्गायां प्रवाहावधिहस्तचतुष्टयाभ्यन्तर एव।

परमिदमन्नमेतद्भूस्वामिपितृभ्य इति न कर्त्तव्यम्, अन्यतीर्थान्तरेऽपि कर्त्तव्यमिति केचित्।

अटवी पर्वताः पुण्याः पुण्यतीर्थानि यानि च।
सर्वान्यस्वामिकान्याहुर्न तेष्वस्ति परिग्रहः॥

इति तीर्थमात्रस्यैवास्वामिकत्वात्। तत्र नारायणस्वामिनाऽस्यापि नारायणाधिकरणमात्रमर्थ इत्युक्तत्वादिति आचारस्त्वत्रापि द्विविध एवेति।

यावन्ति नखरोमाणि वायुना प्रेरितानि वै।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम्।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥
केशानां यावती संख्या छिन्नानां जाह्नवी जले।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

**इत्यादि विशेषश्रवणात्–**

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।

इति सामान्यतः श्रवणाद् गङ्गायामपि चयनमिति अतएव कामरूपिणी दाक्षिणात्यानां च तथैव व्यवहार इति केचित्। तत्र–

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा॥९९१॥

**इति शिष्टपरिगृहीतवचनविरोधात्।**

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ॥९९२॥
आधाने सोमपाने च मुण्डनं षट्सु संस्मृतम्।

इति परिसंख्यया भास्करक्षेत्रावधि गङ्गायामेव चयनविधानात्। अन्यथा षण्मृत्यनुपपत्तेः एतद्वचनेनैकमूलतया सर्वतीर्थेष्वयं विधिरित्यस्यापि भास्करक्षेत्रावच्छिन्नदेशपरत्वात्। न च तर्हि वर्जयित्वा गयां गङ्गामित्याद्यनन्वयात्तत्राप्यशक्तेरिति वाच्यम्। यवैर्यजेत ब्रीहिभिर्वा यजेतेत्युपपत्तिवाक्यानन्तर्मर्मयाज्ञियो वैनाश इतिवदत्र निन्दितत्वे तात्पर्यात्। केशानां यावती संख्येत्यादि वचनानामभिप्रयोगमात्रपरत्वात् वर्जयित्वा गयां गङ्गामित्यादिना अन्यः निषेधात् इति वाचस्पतिमिश्राः।

कामरूपिनिबन्धे दाक्षिणात्यनिबन्धे च 'वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गया' मिति दृश्यते।

तथा च केशानां यावती संख्येति आदिवचनानां संकोचे मानविरहाद् गङ्गायां सर्वमुण्डनमत एव सूकरक्षेत्रे सकलदेशीया मुण्डनं कारयन्तीति वैदेशिकाः। गङ्गाया लक्षणं तु हिमवन्निःसृतत्वे सति भागीरथमात्रप्रवृत्तत्वे सति साक्षात् सागरगामित्वं, यद्वा गङ्गात्वं जलवृत्तिप्रवाहविशेषनिष्ठाया इति।

एवं च त्रिपथगामिन्या सीतालकनन्दादिभिन्नानां चानुगतो गङ्गाकारप्रत्ययः। तच्च पुण्यविशेषजनकत्वाभिन्नकरसविशेषाभिव्यङ्ग्यत्वम्।

अतएव जलान्तरसम्बन्धे संसर्गिद्रव्यतया नैयायिकानां नयाच्च। यदि वा जलाहरणे च प्रवाहान्तरोत्पत्तावपि जातिविशेषसत्त्वात्र गङ्गालक्षितप्रवाहाद्बहिकृते तु गङ्गाजले जलान्तरसम्बन्धे संसर्गिद्रव्यतया यज्जलान्तरेणोत्पतत्यत इति तन्न गङ्गाजलं, किन्तु लक्षणोपादाने गङ्गाजलत्वं वर्तत इति जलान्तरापेक्षया तत्पवित्रमिति दिक्।

गङ्गातो निःसृतं तोयं पुनर्गङ्गात्र गच्छति।
अपेयं तद्द्विजातीनां पीत्वा चान्द्रायणं चरेत्॥
अग्राह्याश्च तथैवापो नद्याः प्रथमवेगिताः।
प्रक्षोभिताश्च तोयेन या च तीर्थाद्बहिर्गताः॥

**गङ्गादिप्रवाहावच्छिन्ननद्यन्तरितप्रथमतीर्थजलपूर्तिविषया इति**

अतत्त्वं तत्त्वं वा सुरधुनि! निरुक्तं भवतु ते,
व्यनक्त्यन्तर्मुक्तिं त्वयि यदि स एवास्य महिमा।
परं सत्यं तस्मिन् मयि सति परेषामपि तथा,
मृषा दोषोन्मेषस्तमपि तव तत्त्वं शमयतु॥

आत्मस्वरो निखिलभूपतिनम्रमौलि-
माणिक्यघृष्टचरणाङ्गुलिराविरासीत्।
तस्यात्मजेन कृतिना रचिते निबन्धे
युग्मः समाप्तिमगमद्वितयस्तरङ्गः॥९९२॥

**॥ इति गङ्गाभक्तितरङ्गिण्यां द्वितीयस्तरङ्गः ॥२॥**

❖❖❖

# अथ गङ्गायां स्नाननिषेधवाक्यम्

कर्कटप्रथमे भागे त्र्यहं गङ्गा रजस्वला।
चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी॥
आषाढीमवधीकृत्य त्र्यहं गङ्गा रजस्वला।
अन्या रक्तवहा नद्यः करतोयाम्बुवाहिनी॥९९३॥

प्रणिधानग्राह्यौ द्वौ प्रयुक्तौ तदिह संक्रान्तितरङ्गोपरि परिचीय वर्णमात्रं भगवत्यां भक्तिमातनुत।

**ब्राह्मे,** अद्य मातृपितृदारकुलकोट्यधिकसंसारसन्तरणकामो गङ्गाभक्तिमहं करिष्ये।

**भविष्ये,** अद्य दशकुलसन्तरणकामः कदा द्रक्ष्यामि कदा स्नानं लभेमहीति गङ्गायामभिलाषमहं करिष्ये।

**हरिवंशे,** सर्वांशतोऽविनाशकामो गङ्गायाः स्मरणमहं करिष्ये।

**ब्राह्मे,** अद्य सप्तावरसप्तपरतत्परपितृसन्तरणकामो गङ्गाकीर्तिमहं करिष्ये।

### । अथ यात्रा ।

तत्र पूर्वदिने कृतोपवासः अपरदिने कृतनित्यक्रियोऽद्य मोक्षकामो गङ्गा-यात्रामहं करिष्ये, इति भविष्यपुराणीयमन्यद्वा प्रधानसङ्कल्पं कृत्वा, अद्य तीर्थयात्रानिमित्तकगणेशपूजनमहं करिष्ये, इति संकल्प्य गणेशं भक्त्या सम्पूज्य, अद्य तीर्थयात्रानिमित्तकदेवपूजनमहं करिष्ये इति संकल्प्य ब्राह्मणं सम्पूज्य, अद्य तीर्थयात्रानिमित्तकपार्वणश्राद्धमहं करिष्ये इति संकल्प्य, हविषा पार्वणश्राद्धं कृत्वा प्रतिनिवृत्य पुनः पूर्ववदेव पितृब्राह्मणान् पूजयेत्।

तत्र अद्य तीर्थप्रत्यागमननिमित्तकदेवपूजनमहं करिष्ये इत्यादिक्रमेण संकल्प्य इति।

**ब्राह्मे,** अद्य ज्ञानैश्वर्यायुःप्रतिष्ठासर्वसामान्यताशुभाश्रयत्वप्राप्तिकामो गङ्गादर्शनमहं करिष्ये।

**भविष्ये,** अद्य सर्वदोषप्रशमनकामो गङ्गामहं स्पृशामि। अद्य ब्रह्महत्या-दिदोषशमनकामो गङ्गामहं स्नानार्थं प्रविशामि।

**विष्णुपुराणे,** अद्य सद्यःपापप्रणाशापूर्वपुण्यप्राप्तिकामो गङ्गास्नानमहं करिष्ये। अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामो गङ्गायां प्रातःस्नानमहं करिष्ये।

रात्रौ मध्याह्नव्यतिरिक्ते दिवा गृहे उद्धृतजलस्नानेष्वेतदेवं रात्रौ अद्य स्थाने अस्यां रात्राविति वक्तव्यम्।

**भविष्ये–** अद्य प्रातःकालीनगङ्गास्नानजन्यपुण्यशतगुणपुण्यप्राप्तिकामो गङ्गायां सायंकाले स्नानमहं करिष्ये।

**भविष्ये–** अद्य सप्तजन्मावच्छिन्नपतितान्नभक्षणपतितसंसर्गब्रह्महत्यादि-पञ्चमहापातकानिर्वचनीयपापक्षयरजस्वलास्पृष्टान्नभक्षणसततासत्यभाषणा-यसस्वर्णमणिरत्नापहरणसामान्यसकलवस्त्वपहरणसखिवधमित्रहिंसाविप्रहिंसामातृ-हिंसादिजनितमहारौरवाद्यनवरतयमकिंकरताडनविनिवारणाज्जन्मकृतबाल्ययौवनवार्द्ध-क्यदशापापक्षयब्रह्मलोकाधिकरणकपरमहंसदर्शनपूर्वकवासाधीतचतुर्वेदब्राह्मणसम्प्रदानेन कपिलाधेनुलक्षदानजन्यफलसमफलश्रीमन्नारायणदक्षिणभुजवासतदनन्तरमर्त्यलोकीय-जन्मगुणाश्रयत्वसर्वसुखभोगयशःप्राप्तिकामो नन्दायां गङ्गायां स्नानमहं करिष्ये।

**भविष्ये–** अष्टमीद्वये चतुर्दशीद्वये अमावास्यायाम्, अद्याष्टम्यां पर्वणि गङ्गास्नानजन्यपुण्यशतगुणपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

**पर्वसु** अद्यामुकपर्वणि अनन्तगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। **यमसंहितायाम्–** भौमवारयुक्तचतुर्दश्यामप्येतदेव फलम्।

**स्कान्दे–** अद्य सोमवारयुक्तामावास्यायां षष्टिजन्मसहस्रावच्छिन्नप्रति-जन्माक्षयधर्मप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। आदित्याहयुक्तसप्तम्यां भौमवारयुक्तचतुर्थ्यां वृहस्पतिवारयुक्ताष्टम्यामेतदेव फलम्। सूर्यवारयुक्तशुक्लसप्तम्यां अद्य विजयसप्तम्यां महापातकनाशकामो गङ्गायां स्नानमहं करिष्ये।

**प्रचेताः–** पूर्णिमाऽमावास्ययोः अद्य पक्षान्ते यमपुरागमनकामो गङ्गास्नानमहं करिष्ये।

**भविष्ये–** अद्यामावास्यायां ब्रह्मसदनावाप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्यामावास्यायामाजन्मदुष्कृतनाशकामो गङ्गायां स्नानमहं करिष्ये।

**भविष्ये–** अद्य जन्मनक्षत्रे व्यतीपाते वैधृतौ चैतदेव फलम्।

**ब्राह्मे–** अद्य पुष्ये कुलकोटिसमुद्धारकामो गङ्गायां स्नानमहं करिष्ये।

**भविष्ये–** अद्य जन्मनक्षत्रे आजन्मार्जितपापक्षयकामो गङ्गायां स्नानमहं करिष्ये। तथा अद्य जन्मनक्षत्रे कुलकोटिसमुद्धारकामो गङ्गायां स्नानमहं करिष्ये।

**ततः संहितायाम्–** अद्य भौमवारयुक्तामावास्यायां गोसहस्रदानजन्यफल-समफलप्राप्तिकामो गङ्गायां मौनेन स्नानमहं करिष्ये।

**ब्राह्मे–** अद्य व्यतीपाते कुलकोटिसमुद्धारकामो गङ्गायां स्नानमहं करिष्ये।

**भविष्ये–** अद्य चतुर्दश्यां व्यतीपातयुक्तचन्द्रमसि यत्र तत्र मरणेऽपि गङ्गामरणजन्यफलसमफलप्राप्तिकामो गङ्गास्नानमहं करिष्ये।

**तथा,** अद्य श्रवणार्क्षयुक्तद्वादश्यां दुर्लभफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। कृष्णाष्टमीयुक्तायां नक्षत्रेऽप्येतदेव फलम्।

**महापूर्णिमा स्कन्दमात्स्ययोः–** अद्य महापूर्णिमायां पूर्णिमास्यधिकरण-कगङ्गास्नानजन्यफलदशगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

**स्मृतौ–** अक्षय्यफलप्राप्तिकाम इति प्रतिमासनिमित्तानि, अथ प्रतिनियत-मासनिमित्तानि। अथ शनिवारयुक्तचैत्रपूर्णिमायां अद्य शनिवारयुक्तचैत्रपूर्णिमायां अश्वमेधादिकपुण्यप्राप्तिकामो गङ्गास्नानमहं करिष्ये।

अर्कगुरुयोगेष्वेतदेव फलम् इति प्रतिमासनिमित्तानि।

**स्मृतौ,** अद्य वैशाखशुक्लतृतीयायां रोहिणीयुक्तायां अक्षयपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य वैशाख्यामनन्तफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। दुर्लभफलप्राप्तिकामो वा।

**गारुडे,** अद्य ज्येष्ठशुक्लदशम्यां हस्तनक्षत्रयुक्तायां कायिकवाचिकमानस-दशविधपापक्षयकामो गङ्गायां स्नानमहं करिष्ये। अद्य ज्येष्ठशुक्लदशम्यांक्षिति-सुतयुक्तायां हस्तनक्षत्रे दशविधपापक्षयशतगुणवाजिमेधायुतजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य महाज्यैष्ठ्यामनन्तपुण्यप्राप्तिपूर्वकमहापातकनाशकामो गङ्गायां स्नानमहं करिष्ये। अद्याषाढपूर्णिमायां तिथौ अनन्तपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य मासत्रयावच्छिन्नवैधनिरन्तरगङ्गास्नानजन्यफलसमफलप्राप्तिकाम आषाढमासं प्राप्य गङ्गायां स्नानमहं करिष्ये। अद्य भाद्रशुक्लषष्ठ्यां पुण्यप्राप्ति-पापनाशशिवशान्तिशुभप्राप्तिकामो गङ्गास्नानमहं करिष्ये।

अद्य कार्त्तिकशुक्लनवम्यां वैधनिरन्तरसंवत्सरावच्छिन्नगङ्गास्नानजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य कार्त्तिक्यामनन्तफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये, महाकार्तिक्यां, अद्य महाकार्तिक्यां कार्तिक्याधिकरणक-गङ्गास्नानजन्यफलदशगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

अद्य पुष्करयोगे दुर्लभफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्यादिवैधनिरन्तरमासचतुष्टयावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामः कार्तिकमासं व्याप्य प्रातर्गङ्गास्नानमहं करिष्ये।

अद्य पौषशुक्लाष्टम्यां महाभोग्यां बुधवासरयोगे एतद्योगाधिकरणकसामान्य-जलस्नानफलकोटिगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

## । अत्र महादेवपूजाप्रणयनमित्युक्तम् ।

अद्य माघकृष्णाष्टम्यां सहस्त्रगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य माघशुक्लसप्तम्यामरुणोदयवेलायां सूर्यग्रहावच्छिन्न-समधिकरणकजन्यफलशतगुणफलकामो गङ्गायां स्नानमहं करिष्ये। अद्य माघशुक्लाष्टम्यां आर्द्रानक्षत्रयुक्तायां व्यतीपातदुर्लभफलप्राप्तिकामः पूर्वजाति-स्मरणत्वकामो गङ्गास्नानमहं करिष्ये।

अद्यादिसगोत्रसहितरुचिरशक्रलोकवासपूर्वकल्पकोटिशतायुतब्रह्मपुरवासकामो माघमासं व्याप्यं गङ्गायां प्रातःस्नानमहं करिष्ये। माघमासीयसामान्यजलाधि-करणकस्नानजन्यफलकोटिगुणफलप्राप्तिकामो वा चतुर्युगसहस्त्रावच्छिन्नसुरालय-पातनकाम इति वा प्रतिदिनसुवर्णसहस्त्रदानजन्यफलसमफलप्राप्तिकामो इति वा, अनड्वाहसहस्त्रदानजन्यफलसमफलकपिलायुतदानजन्यफलसमफलप्राप्तिकाम इति वा, अद्य सकलमहापातकनाशकामो गोविन्दद्वादश्यां गङ्गायां स्नानमहं करिष्ये। अद्यादिमासत्रयावच्छिन्नवैधनिरन्तरगङ्गास्नानजन्यफलसमफलप्राप्तिकामः फाल्गुनमासद्वयं व्याप्य गङ्गायां प्रातः स्नानमहं करिष्ये।

अद्य मधुकृष्णत्रयोदश्यां वारुणयुक्तायां सूर्यग्रहावच्छिन्नसमयाधिकरण-कगङ्गास्नानजन्यफलशतगुणफलप्राप्तिकामो नक्षत्रगङ्गायां स्नानमहं करिष्ये। इति मासनिमित्तसंकल्पाः।

अद्यादिचिरसमयसगोत्रजसहितशक्रसमत्वपूर्वकल्पकोटिशतायुतब्रह्मपुरवा-सकामः संव्याप्य गङ्गायां प्रातः स्नानमहं करिष्ये। अद्यादिसमस्तकुलसंयुक्तसर्व-पापविमुक्तिसमस्तभोगप्राप्तिपरार्द्धद्वितीयावच्छिन्नविष्णुलोकमहितत्वकामो गङ्गायां षण्मासं व्याप्य नैरन्तर्येण गङ्गायां स्नानमहं करिष्ये।

## । अथ संक्रान्तिः ।

अद्य दक्षिणसंक्रान्त्यां गङ्गास्नानजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। वैधनिरन्तरषण्मासावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामो वा उत्तरायणेऽप्येतदेव फलम्।

अद्य धान्यविषुवन्महारविसंक्रान्त्यां वैधनिरन्तरषण्मासावच्छिन्नगङ्गास्नान-जन्यफलसमफलप्राप्तिकामो वा गङ्गायां स्नानमहं करिष्ये। सहस्त्रगुणगङ्गास्नान-जन्यफलसमफलप्राप्तिकामो वा यवविषुवेऽप्येतदेव फलम्।

अद्य विष्णुपदीसंक्रान्त्यां लक्षगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

---

पा.लि.प.सं. ८४

अथ षडशीतिसंक्रान्तयः। षडशीतिसहस्रगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। विष्णुपदीषडशीतिसंक्रान्तिषु अद्यामुकसंक्रान्त्यां वैधनिरन्तरमासचतुष्टयावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। संक्रान्तिमात्रे अद्य संक्रान्तौ ब्रह्मसदनावाप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य यवविषुवन्महारविसंक्रान्त्यामनन्तफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

धान्यविषुवेऽप्येवम्। अथ ग्रहणे अस्यां रात्रौ राहुग्रस्ते निशाकरे कुलकोटिसमुद्धरणकामो गङ्गायां स्नानमहं करिष्ये। सूर्यग्रहेऽप्येतदेव फलम्।

ब्रह्मसदनावाप्तिकामो वा, पृथ्वीवर्तिसकलतीर्थस्नानजन्यफलसमफलप्राप्तिकामो वा, अक्षयधर्मकोषप्राप्तिकामो वा, चन्द्रकोटिगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो वा, सूर्यग्रहे अद्य राहुग्रस्ते दिवाकरे दशकोटिगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो वा, गङ्गायां स्नानमहं करिष्ये।

चन्द्रग्रस्ते सविधिगोकोटिसहस्रदानजन्यफलसमफलप्राप्तिकामो वा, सूर्यग्रहे सविधिशतकोटिसहस्रदानजन्यफलसमफलप्राप्तिकामो वा, सूर्यवारे तु सूर्यग्रहे तु, अद्य सूर्यवारे राहुग्रस्ते दिवाकरे सूर्यग्रहावच्छिन्नसमयाधिकरणकगङ्गास्नानजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

अस्यां रात्रौ चन्द्रदिने राहुग्रस्ते निशाकरे चन्द्रग्रहावच्छिन्नसमयाधिकरणकगङ्गास्नानजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

## । अथ मन्वन्तरादिः ।

अथ मन्वन्तरादौ वैधनिरन्तरमासत्रयावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये कुशावर्तेऽप्येतदेव फलम्। अद्यादिदशायुतगोदानजन्यपुण्यषड्विंशतिजितजन्यपुण्यप्राप्तिकामो गङ्गाद्वारे मासार्धं वासमहं करिष्ये। कुशावर्तेऽप्येतदेव फलम्। अद्याक्षयफलप्राप्तिकामो गङ्गायां स्नात्वा कर्णखले स्थितं सुरोत्तमं गोविन्दं रुद्रं पूजयिष्ये।

अद्य शतानि चिज्जोतिष्टोमद्वयाग्निष्टोमसहस्रजन्यफलसमफलप्राप्तिकामः शूकरक्षेत्रे गङ्गायां स्नानमहं करिष्ये। अद्य कर्णखलाधिकरणकगङ्गास्नानजन्यफलसमफलशूकरक्षेत्राधिकरणकगङ्गास्नानजन्यफलसमफलदशाश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामो गङ्गाद्वारे स्नानमहं करिष्ये। इति वा। अद्य ब्रह्मतीर्थे ज्योतिष्टोमायुताश्वमेधत्रयजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य कुकुव्ये सर्वव्याधिनाशसर्वजन्मोपात्तपातकनाशकामो गङ्गायां स्नानमहं करिष्ये। अद्य गङ्गास्नानजन्यफलदशगुणफलप्राप्तिकामो विन्ध्यसङ्गतायां गङ्गायां स्नानमहं करिष्ये।

प्रयागविस्तरोऽन्यत्र। अद्य त्रिसप्तकुलसन्तरणकामोऽर्कतीर्थे गङ्गायां स्नात्वा पितृदेवता अर्चयिष्ये।

वाराणसीविस्तरोऽन्यत्र, ग्रन्थगौरवभयादत्र न लिख्यते। अद्य पवित्राख्ये विश्वजिद्द्वयजन्यपुण्यसमपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य वेणीवाद्ये पञ्चाश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य गोसहस्रदानजन्यफलसमफलप्राप्तिकामो गण्डकीतीर्थसङ्गमे गङ्गायां स्नानमहं करिष्ये।

अद्यापूर्वपुण्यप्राप्तिकामो रामतीर्थे गङ्गायां स्नानमहं करिष्ये। सोम-तीर्थेऽप्येतदेव फलम्।

अद्य मणिकर्णिकास्नानजन्यफलसमफलमहापातकनाशकामः पञ्चकाख्ये गङ्गायां स्नानमहं करिष्ये। अद्य कामलाख्ये सर्वपापविनिर्मुक्तिपूर्वकमुक्तिप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्योद्दालकक्षेत्रे त्रिकोटिकुलोद्धरणकामो गङ्गायां स्नानमहं करिष्ये। अद्य कामलाख्ये मुनिवरत्वकामो रुद्रपूजनमहं करिष्ये। अद्य सोमतीर्थे वाराणसीस्नानजन्यफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अत्र वृत्ताविप्रिया-तिथित्वकामो विश्वामित्रभार्गवसङ्गमे गङ्गास्नानमहं करिष्ये।

अद्यैकविंशतिपुरुषसन्तरणसमस्नानप्राप्तिकामो जह्नुदेशे गङ्गास्नानमहं करिष्ये। अद्यादित्यतीर्थे महोदयप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य शिलोच्चये गङ्गायां स्नानमहं करिष्ये। अद्य इन्द्राणीतीर्थे प्रयागस्नानजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य ब्रह्मर्षित्वकाम आम्रातके गङ्गायां स्नानमहं करिष्ये।

अद्य महोदयप्राप्तिकामः पद्मिनीतीर्थे गङ्गायां स्नानमहं करिष्ये। अद्य दक्षिणप्रयागे पापादिक्षयपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। अद्य गङ्गा-सागरसङ्गमे शिवपुरगमनकामः स्नानमहं करिष्ये। दशगुणाश्वमेधफलप्राप्तिकामो वा दुर्लभफलप्राप्तिकामो वा अद्य सहस्राक्षप्रभृतिदेवानिर्वचनीयपुण्यप्राप्तिकामः शिवसन्निधौ गङ्गायां स्नानमहं करिष्ये।

।इति देशभेदाः।

❖❖❖

## ! अथ सन्ध्या !

अद्य शतसहस्रगुणसन्ध्यावन्दनजन्यफलसमफलप्राप्तिकामो गङ्गातीरे सन्ध्यावन्दनमहं करिष्ये।

तर्पणे, अद्यमासत्रयदुर्लभपितृतृप्तिकामो गङ्गायां स्नानमहं करिष्ये। अवगाहने अद्य लक्षकुलसर्वसन्तरणकामो गङ्गायामवगाहनमहं करिष्ये। अद्य गोसहस्रदानजन्यफलसमफलप्राप्तिकामो गङ्गामृत्तिकया सर्वगात्रलेपनमहं करिष्ये। अद्य सर्वदेवपूजनजन्यफलसमफलप्राप्तिकामो गङ्गापूजनमहं करिष्ये। अद्य कोटि-कोटिगुणफलप्राप्तिकामो गङ्गातीरेऽमुकमन्त्रजपमहं करिष्ये।

अद्य पञ्चक्रतुजन्यफलसमफलप्राप्तिकामो गङ्गाश्रवणमहं करिष्ये। अद्यैहिकैतद्वस्तुजन्यसुखप्राप्तिकरणोत्तरनिर्वाणप्राप्तिकामो गङ्गायै अमुकवस्त्वहं ददे।

अद्य गयाश्राद्धजन्यफलसमफलप्राप्तिकामो गङ्गातीरे श्राद्धमहं करिष्ये। अद्य कन्यादानभूम्यन्नदानगोदानस्वर्णदानरथाश्वगजदानजन्यफलशतगुणप्राप्तिकामो गङ्गाजलदानमहं करिष्ये।

अद्य देवगन्धर्वमहर्षिपूज्यत्वकामो गङ्गातीरे वासमहं करिष्ये। व्रते तु यदेव यत्र फलश्रुतं तदेव तत्र संकल्पवाक्यं योज्यम्। सुगममन्यदिति।

श्रीयोगीश्वरसम्भवस्य कृतिनः कीर्तिः प्रसूर्यायतां,
विद्वद्भिः परिशीलिता कृतिरियं कल्पान्तरस्थायिनी।
एवं नित्यमुपासनाभिरसकृत् किञ्चित् प्रसन्ना शिवे!।
मह्यं देवि! तदा कृताञ्जलिरहं त्वामद्य याचे वरम्॥

वचनाशुपरिश्रमेऽस्य ग्रन्थस्य गौरवभयान्न कृतः प्रयत्नः।
दिङ्मात्रमेतदुपदर्शितमित्थमेव विज्ञैर्विचिन्त्य वचनान्तरमूहनीयम्।

**इति श्रीगङ्गाभक्तितरङ्गिणी समाप्ता।**

कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः।
मलं भित्वा यथापद्मं नरकादुद्धराम्यहम्॥

शुभसम्वत्सरे श्रीमन्नृपतिवीरविक्रमादित्यसम्वत् १७७८ आषाढवदि ५ तिथौ शनिवासरे धनिष्ठानक्षत्रघटी ४७ विष्कुंभे ५५/३७ लिखितमिदं पुस्तकम् शुभं करोति देवी। शुभमस्तु श्रीरस्तु।

**॥ शुभम् ॥**



# दशहरास्तोत्रञ्च

॥ श्रीगणेशाय नमः ॥

केशवादिचतुर्विंशतिः २४ प्राणायामं कृत्वा, सुमुखेत्यादि पठित्वा श्रीपरमेश्वरप्रीत्यर्थम् अमुकगोत्रस्य, अमुकशर्मणः, ममेप्सितकामनासिद्ध्यर्थं श्रीगङ्गापूजनदशहरास्तोत्रपठनमहं करिष्ये। तदङ्गशरीरशुद्ध्यर्थं पुरुषसूक्तन्यासांश्च करिष्ये। कलशपूजनं शङ्खपूजनं घण्टापूजनं कुर्यात्।

**अथ ध्यानम्–**

नारायणं महेशञ्च ब्रह्माणं भास्करं तथा।
भागीरथं च नृपतिं हिमवन्तं नगेश्वरम् ॥१॥

चतुर्भुजां त्रिनेत्रां च सर्वावयवसंस्थिताम्।
रत्नकुम्भसिताम्भोजवरदाभयसत्कराम् ॥२॥

श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम्।
एवं ध्यायेत्सुसौम्याञ्च चन्द्रायुतसमप्रभाम् ॥३॥

चामरैर्वीज्यमानाञ्च श्वेतवस्त्रोपशोभिताम्।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ॥४॥

सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम्।
त्रैलोक्यनमितां गङ्गां सर्वदेवैरधिष्ठिताम् ॥५॥

दिव्यरत्नविभूषाञ्च दिव्यमाल्यसुशोभिताम्।
ध्यात्वा जले यथा प्रोक्तं तथा चायं प्रपूजयेत् ॥६॥

"ॐ नमो भगवत्यै दशपापहरायै ऐं ह्रीं क्लीं श्रीं हिलि हिलि मिलि मिलि गङ्गे मां पावय पावय स्वाहा।" ॐ नमः शिवायै नारायण्यै दशपापहरायै गङ्गायै स्वाहा। अनेन मन्त्रेण एवं गङ्गामावाह्य नारायणं रुद्रं ब्रह्माणं सूर्यं भगीरथं हिमाचलं च नाममन्त्रेण तत्रैवावाह्य आगमोक्तेन पञ्च-पुष्पाञ्जलिं गङ्गायै निवेदयेत्। उक्तमन्त्रैरुच्चार्य। श्री गङ्गायै नारायणरुद्रब्रह्मसूर्य-भगीरथहिमवत्सहितायै, आसनं, पाद्यं, अर्घ्यं, आचमनीयं, स्नानीयं, पञ्चामृतं, शुद्धोदकस्नानम्। अभिषेकस्नानं, वस्त्रयज्ञोपवीतं, गन्धं, अक्षतहरिद्राकुङ्कुमोक्त-कज्जलताडपत्रसिन्दूरादि समर्पयेत्, माल्यादीनि श्रीपुष्पम्।

१. **विषयः–** कर्मकाण्डम्, स.भ.पा.लि.सं. ४९७२४, **पत्र–** १-४, **लिपि–** दे.ना. पूर्णा।

ॐ दशाङ्गगुग्गुलं श्रीधूपम् ।
गृहाण मङ्गलं दीपं घृतवर्त्तिसमन्वितम् ।
रुद्ररूपे नमस्तेऽस्तु गृहाण वरदा भव ॥७॥

श्रीदीपम् अन्नं चतुर्विधम् श्रीनैवेद्यम् ।
पूर्ववत् मन्त्रेण, ताम्बूलादिसर्वान् परिकल्पयामि ।
परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गा ब्रूते कदाऽऽगत्य मामयं पावयिष्यति ॥८॥
इति ध्यानार्चनविधिः । इति सङ्कल्प्य ॥९॥

पश्चाज्जलान्तरे स्थित्वा, ज्येष्ठे मासि सिते पक्षे प्रतिपदादिदशमीपर्यन्तं दशहरास्तोत्रं दशविधपापप्रणाशनार्थमुत्तरोत्तरपाठमहं करिष्ये ।

ब्रह्मोवाच । वैश्वानरनारदसम्वादे, दशपापहरायाः[क] श्रीगङ्गायै निवेदयेत् । स्तोत्रं पठेत् ।

ॐ नमः शिवायै गङ्गायै (श्लोक) ।
उद्धरेत्येव संसारान्मन्त्रेणानेन पूजयेत् ॥१०॥

ॐ नमो भगवत्यै दशपापहरायै नारायण्यै रेवत्यै शिवायै विश्वमित्रायै दक्षायै अमृतायै विश्वमुख्यायै बृहत्यै नन्दिन्यै ते नमो नमः ।

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ।
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥११॥
ब्रह्मघ्नं वा सुरापं वा पुनर्जन्म न विद्यते ॥१२॥
सितमकर० ॥३९॥ आदावादिपिता० ॥१३॥
विष्णुपादा० ॥४१॥
धर्मद्रवेति विख्याता पापं मे हर जाह्नवि !
जाह्नवी सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
वाराणस्यां विशेषेण गङ्गा चोत्तरवाहिनी !
प्रयागे तु विशेषेण गङ्गा पश्चिमवाहिनी ॥१४॥

**॥ इति श्रीस्कन्दपुराणे काशीखण्डे दशहरास्तोत्रं सम्पूर्णम् ॥**

---

**क.** हरायै. शु. पा.

❖❖❖

# अथ दशहराप्रयुक्तगङ्गापूजाविधिः

ॐ नमः शिवायै नारायण्यै दशपापहरायै गङ्गायै स्वाहा, एवं गङ्गामावाह्य नारायणं रुद्रं ब्रह्माणं सूर्यं भगीरथं हिमाचलं च नाममन्त्रेण तत्रैवावाह्य उक्तमन्त्रैरुच्चार्य, श्रीगङ्गायै नारायणरुद्रब्रह्मसूर्यभगीरथहिमवत्सहितायै आसनं समर्पयामीत्येवमासनाद्युपचारैः पूजयेत्, दशविप्रेभ्यः प्रत्येकं षोडश-षोडशमुष्टितिलान् सदक्षिणान् दद्यात्।

एवं यवानपि, ततो गोदानं दद्यात् मत्स्यकच्छपमण्डूकान् सौवर्णान् राजतान् पिष्टमयान् वा सम्पूज्य तीर्थे क्षिपेत्। एवं दीपं प्रवाहयेत्। दशहरा-विधिस्नानं कृत्वा पितृतर्पणान्तनित्यकृत्यत्वात् सर्पिर्मिश्रान् दशप्रसृतिकृष्णतिलान् तीर्थे अञ्जलिना प्रक्षिप्य गुडमिश्रान् सक्तुपिण्डान् दश क्षिपेत्॥

**॥ पूजाविधिः इति दशहरास्तोत्रं समाप्तम् ॥**



# गङ्गापूजापद्धतिः[1]

**अथ गङ्गापूजापद्धतिः—**

ॐ स्वस्ति इन्द्र इति स्वस्ति वाच्यम्। ॐ सूर्यः सोम इति पठित्वा सङ्कल्पं कुर्य्यात्।

विष्णुरों तत्सदद्यज्यैष्ठे मासि शुक्ले पक्षे दशम्यान्तिथौ अमुकगोत्रः श्रीअमुकदेवशर्मा गङ्गाप्रीतिकामः गणपत्यादिनानादेवतापूजापूर्वकं गङ्गापूजनमहं करिष्ये। इति सङ्कल्प्य।

ॐ देवो व इति मन्त्रं पठित्वा भूतशुद्ध्यादिकं विधाय अर्घं संस्थाप्य नमः शिवायै प्रथमं नारायण्यै पदन्तु[2] स्यात् दशहरायै पदमिति गङ्गायै मन्त्रप्रसूनैः। 'स्वाहान्तः प्रणवादिश्च भवेदष्टादशाक्षरः।'

ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै स्वाहा।
पूजा दानं तपो होमोऽनेनैव मनुना स्मृतः।
हेम्ना रूपेण वा शक्त्या गङ्गामूर्त्तिं विधाय च ॥१॥
वस्त्राच्छादितवक्त्रस्य पूर्णकुम्भस्य चोपरि।
प्रतिष्ठाप्यार्चयेद्देवीं पञ्चामृतविशेषिताम्[3] ॥२॥
चतुर्भुजां त्रिनेत्राञ्च नदीनदनिषेविताम्[4]।
लावण्यामृतनिष्यन्दसंशीलस्थानरञ्जिकाम्[5] ॥३॥
पूर्णकुम्भसिताम्भोजवरदाभयहत्कराम्।
सुसौम्यां च[6] सुरम्यां च चन्द्रायुतसमप्रभाम् ॥४॥
चामरैर्वीज्यमानाञ्च श्वेतच्छत्रोपशोभिताम्।
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ॥५॥
त्रैलोक्यपूजितपदां देवर्षिभिरभिष्टुताम्।

इति ध्यात्वा स्वशिरसि पुष्पं दत्वा मानसैः सम्पूज्य विशेषार्घं कृत्वा एतैः गन्धपुष्पैः ॐ गङ्गायै नमः, पद्मायै नमः, यमुनायै नमः, समुद्रेभ्यो नमः, ऋषिभ्यो नमः, मरुद्यानेभ्यो नमः।

प्रणवादिमन्त्रेण[7] पूजयेत् पुनर्ध्यायेत्। आवाहनमुद्रां प्रदर्श्य ततः षोडशोपचारैर्दशोपचारैर्वा पूजयेत्। हिमवद्भगीरथप्रतिमानग्रे समभ्यर्च्य चन्दनाक्षत-

१. **विषयः—** कर्मकाण्डम्, पत्र-२ गणनया, अपूर्ण
२. पदन्तुशुः, ३. विशेषताम्, ४. निशेविताम्, ५. भुञ्जिकाम्, ६. सुसोभ्याढ्यां, ७. नमस्तेन।

निर्मितान् दशप्रस्थतिलान् दद्याद् दशविप्रेभ्यो आदरात्। पत्रपरिमितं पत्रञ्च कुडवः (?) प्रस्थ आढको द्रोण एव च।

धान्यमाने च बोद्धव्याः क्रमशोऽपि चतुर्गुणाः।
मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ॥६॥
हंसकारण्डववकचक्रटिट्टिभसारसान् ।
यथाशक्ति [8]स्वर्णरुप्यताम्रपत्रविनिर्मितान्।
अभ्यर्च्य गन्धकुसुमैर्गङ्गायां प्रक्षिपेत् व्रती ॥७॥
एवं कृत्वा विधानेन वित्तशाठ्यं विवर्जयेत् ।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ॥८॥

**अदत्तानामित्यादि**

एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः।
उपवासी व्रतं कुर्वन् मुच्यते नात्र संशयः ॥९॥
कृमिकीटपतङ्गाद्या ये मृता जाह्नवीतटे।
कुलात् पतन्ति ये वृक्षास्तेऽपि यान्ति परां गतिम् ॥१०॥
ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते।
गङ्गातीरे तु पुरुषो जले[9] वा भक्तिभावतः ॥११॥
निशायां जागरं कुर्यात् गङ्गायाः सविधे तटे[10]।
पुष्पैः सुगन्धैर्नैवेद्यैः फलैर्दशदशोन्मितैः ॥१२॥
प्रदीपैर्दशभिर्धूपैर्दशाङ्गैः गरुडध्वज !।
पूजयेत् श्रद्धया धीमान् दशकृत्वो विधानतः ॥१३॥
साज्यान् तिलान् क्षिपेत् तोये गङ्गायाः प्रसृतिर्दश।
गुडशक्तुमयान् पिण्डान् दद्याच्च दशमन्त्रतः ॥१४॥

**॥ नमः शिवायै प्रथमम् ॥**

ॐ नमः त्र्यक्षाय त्र्यक्षाय न मम आपृष्टं हंसान् समुपरिस्थितान्,

कमण्डलुचतुर्वक्त्रं यज्ञसूत्रसमन्वितम्।
सुमुखं सुप्रदं देवं महाभागं तपस्विनम् ॥१५॥

हस्तलेखे प्रमादजन्याः पाठाः अस्माभिः संशोध्य मूल पाठे निवेशिताः प्रमादपाठास्तु तत्तत्स्थाने पादटिप्पण्यां निदर्शिताः।

**॥ इति ध्यात्वा ॥**

८. प्रष्ट, ९. नारि, १०. हरे।



# गङ्गामानसपूजा

।। श्रीगणेशाय नमः ।।

द्रुतविल. मगधवन्दिकदम्बकमङ्गलैर्मृदुरवैरमरर्षिवरस्तवैः ।
जननि ! जागृहि पाहि शनैः शनैरुषसि सञ्जवने स्वसखीजनैः ।।१।।

पृथ्वी. सुवर्णघटवारिणा वदनवारिजं मार्जय
जयारिनिकरं क्षणं परिनिरीक्षणैश्चक्षुषाम् ।
पुनस्तटनिवासिनामुषसि सायमेकासने
सतां च हर मादृशां मरणजन्मतापत्रयम् ।।२।।

गङ्गे ! त्वं सुरगृहिणी गृहीतपाणि-
सौगन्ध्यैश्च दिविजचम्पकादितैलैः ।
अभ्यङ्गं कुरु रुचिरोष्णवारिभूरि-
सञ्चारैश्चिरमुपविश्य रुक्मपीठे ।।३।।

उपजाति. सुचेलकं शुक्लतमं च कञ्चुकी-
मुरीक्रियास्त्वं परिधानहेतुतः ।
विनिर्मितं सम्प्रति विश्वकर्मणा
विश्वेशि ! लोकाप्रतिमं विलोकय ।।४।।

अनु. पादुदत्तपदन्यासैः कन्याभिरथ मन्थरम् ।
महिलाभिश्च देवानामेहि देवि ! प्रमोदतः ।।५।।

वंशस्थम् क्षणं सरोजव्रजविष्टरान्तरे स्वयं स्थिरीभूय मनःसपर्यया ।
समर्चयामः स्मृतिवेदचर्चया गृहाण कारुण्यवशान्मदर्हणाम् ।।६।।

,, पदद्व[१]याम्भोरुहभर्त्सितप्रभे ! सुचन्दनाम्भःसुरसौरभीकृतम् ।
समर्पये पाद्यमये ! विधानतः हिरण्यपात्रेण हि तोषनिर्भरः ।।७।।

द्रुत. पा.लि.प.सं.२ धवलगन्धसुगन्धसुमाक्षतैः कुशयवैरमलैस्तिलसर्षपैः ।
जननि ! तेऽर्घ्यमिदं मृदुदूर्वया जनितमेभिरदः परमेश्वरि ! ।।८।।

,, राजीवराजिद्युतितस्करेण करेण चामीकरचारुदर्व्या ।
विधीयतामाचमनत्रयं च सुगन्धतोयं धृतमस्त्यधस्तात् ।।९।।

---

हस्तलेखे प्रमादजन्याः पाठाः अस्माभिः संशोध्य मूलपाठे निवेशिताः । प्रमादपाठास्तु तत्तत्स्थाने पादटिप्पण्यां निदर्शिताः ।
**विषयः–** स्तोत्रम्, ग्रन्थकारः नारायणः, पत्र १-११ पूर्ण, लिपि-दे.ना. सरस्वती भवन पाण्डुलिपि संख्या १८१०७
१. पदद्वये

रथोद्धता. तर्ककर्कशरदप्रकन्दनकांक्षयाऽपि मधुपर्कमर्पितम् ।
स्वर्णसम्पुटधृतं कराम्बुजे धेहि रत्ननिविधानकाङ्क्षितम् ॥१०॥

'' आप्लवं सुकृतिनां कृताकृतं न्यायतस्त्विवति हि जह्नुकन्यके ! ।
कुर्महे तदिह हेमभाजने स्थापयांघ्रिसरसीरुहद्वयम् ॥११॥

'' नन्दनोपवनपुष्पसमूहमन्थनोद्भवसुवासिततैलैः ।
पादपङ्कजतलं तव लिम्पे यन्निलिम्पयति लोचनमृग्यम् ॥१२॥

'' चिरमिह चरणाय चिह्निताय कुलिशकुशेशयकेतनाङ्कुशैर्वः ।
जननि ! निजकरद्वयेन चोद्वर्तनमथ कुङ्कुमकर्दमेन कुर्मः ॥१३॥

घृतमधुदधिदुग्धशर्करादिभिर्मृदुलपदाम्बुजमम्बु ! मार्जयामः ।
सपदि तदुपयुक्तवेदसूक्तैः पुनरपि विष्णुपदि ! त्वदुष्णतोयैः ॥१४॥

वसन्तति. लाक्षारसेन चरणावपि सेचयित्वा श्वेताक्षतैर्मलयजैः कुसुमैर्यजेयम् ।
पा.लि.प.सं.३ मातर्मुहुर्मुदितधीश्च सहस्रनाम्नाऽजस्रं प्रणौमि शिरसा प्रणिधाय पाणौ ॥१५॥

ब्रह्मर्षिणी सुरधुनि ! सुरसुन्दरीकराब्जैरतिसुरभीकृतगन्धसारचर्चाम् ।
कुरु सकलकलेवरे ललाटे चटुतिलकं वररक्तपारदस्य ॥१६॥

मलयजघनसारधीरकस्तूर्यगरुकवस्तुभिरन्तरे स्तनानाम् ।
जननि ! खलु सुखेन लेखनीयं बहुसुभगं जगदम्ब भङ्गमेभिः[2] ॥१७॥

अहमिह विलिखामि पादभागे भगवति सम्प्रति संभ्रमेण भूयः ।
सुघुसृणघनसाररक्तपङ्करचनमिषेण च गर्भवासदुःखम् ॥१८॥

अथ धेहितरां दधे हिरण्यवलयं द्वन्द्वमिदं पदाङ्गुलीषु ।
अपि चोपरि वल्गुगुल्फयोस्त्वामयि ! जाम्बूनदनूपुरौ पुनर्नु ॥१९॥

जातरूपमणिखण्डमण्डितां मेखलामखिलभूषणोत्तमाम् ।
चक्रपाणिचरणोद्भवोऽधुना तां वधान परिधौ नितम्बरे ! ॥२०॥

ताम्रपर्णीतटोत्पन्नमुक्ताकीर्णितजालिका ।
मातस्तनोतु कुतुकं कुचकुम्भश्च भूषितुम् ॥२१॥

गारुत्मतरुक्मरत्नपद्मरागकमौक्तिकैः ।
क्रमाः स्वयंकृताँस्त्वष्ट्रा स्वलङ्कारानुरीकुरु ॥२२॥

इन्द्रवज्रा ग्रैवेयकं लम्बनमम्ब ! कण्ठे प्रालम्बिकं लम्बितमूरुमूले ।
नक्षत्रमालामपि तत्र चैवाक्षिकं तथा वक्षसि कक्षया च ॥२३॥

पा.लि.प.सं.४ अष्टौ केयूराणि[3] धृत्वा प्रकोष्ठादूर्ध्वं देहे कङ्कणश्रेणिमन्त्ये ।
तत्रत्यप्रत्यङ्गुलीमध्यभागे गङ्गेऽमूस्त्वामूर्मिकामध्यमाभ्यः ॥२४॥

---

२. मङ्गमेभिः, ३. केयूराणी

मणिकर्णिकाभिरपि कर्णकुण्डलद्वयताण्डवेन तव गण्डमण्डलम् ।
मुखमम्ब ! मञ्जिमतमञ्च राजतेऽनुपमं नासापुटकरक्तमुक्तया ॥२५॥

अलिके किल किं ललाटिकालङ्करणैः कोटिमृगाङ्कवत्त्वदङ्गम् ।
नितरां वदनाम्बुजं चकास्ति चिबुके काञ्चन रत्नयोश्च योगात् ॥२६॥

वंशस्थम्. प्रसाधनीसाधितचूर्णकुन्तले ! प्रचण्डचूडामणिमादरादहम् ।
तथैव सीमन्ततले समन्ततः सपारितथ्या कुसुमादयो दधे ॥२७॥

उपजाति. श्रमेण नीलोत्पलमेव मत्वा स्रोतोजनैः खञ्जनमञ्जुनेत्रे ! ।
मेने मुहुः पक्ष्मलचालनेन तेषामलीनां कुरुषे निषेधम् ॥२८॥

वसन्ततिल. शुभ्रांशुरश्मिसदृशं परितः शरीरं काश्मीरकर्दमविमिश्रिततण्डुलैश्च ।
मुक्ताफलैर्मुहुरहं चिरमर्हयामि रत्नाक्षतैः पुनरिदं चरणारविन्दम् ॥२९॥

माङ्गल्ये ! सकलमये ! तवोत्तमाङ्गे द्रव्यञ्जामितमपि सर्वमर्पयामि ।
सीमन्तेऽमरतटिनि प्रमोदपूर्णः सिन्दूरं तदरुणकान्तितस्करञ्च ॥३०॥

बकुलचम्पककेतकमालतीप्रभृतिभिः कु[४]सुमैश्च सुगन्धिकैः ।
पा.लि.प.सं.५ तदपि नन्दनकाननसम्भवैरभिनवैरभितस्त्वयि भक्तितः ॥३१॥

धत्तूरकुन्दमन्दारकरवीरसरोरुहैः ।
काञ्चनारादिभिः पुष्पैः पूजयामि पुनर्वपुः ॥३२॥

शार्दूलवि. धम्मिल्लेति सुगन्धशुक्लकुसुमस्तोमप्रभूतस्रजं,
स्तोकं पाणिचतुष्टये प्रणिदधे केयूरवद्वर्तुलम् ।
कण्ठादाप्रपदं पदाब्जमहदामोदप्रभाहारकं,
मुक्ताहारमहं तथा त्रिपथगेऽमन्त्रिव्यथानिर्दहम् ॥३३॥

सिल्हसर्जरसपायसलोहचन्द्रचन्दनभवैर्वृकधूपैः ।
दारुहस्तकवदावपनस्थैर्धूमतस्तव मनोऽपि धुनोतु ॥३४॥

अनु. पिचुवर्त्तिकया मूर्तिः सर्पिः संयोगपीवया ।
नीराजये तां रोचिष्णुं विष्णुपादाब्जसम्भवे ! ॥३५॥

मणिमण्डितशातकुम्भभाण्डाभिवृतानेकमनोज्ञ[५]रम्यदीपैः ।
द्युमणिद्युतिभर्त्सनोद्यतैश्च वदनेन्दीवरमेतदन्यदीपैः ॥३६॥

डमरुकसमरूपवारिगोधूमपुरुहदीपधुतेन ते मुखश्रीः ।
जयति निरुपमञ्जगत्त्रये वाऽप्यहह ! सहस्रमुखेन शेष आह ॥३७॥

उपजाति तवाम्ब ! काये हिमबालुकायाः आरार्तिकान्दोलनतो मुखेन्दौ ।
खेदोऽपि मे दोषशतं तदानीं विदूरमासीत् परमात्मभावः ॥३८॥

४. कुसुमैः, ५. मनोज्ञदीपैः

भज भोजनभाजनं निजकरपङ्केरुहकेण केवलम् ।
पा.लि.प.सं.६ मधुराम्लपदार्थमिश्रितममृततश्रीरसमाधुरीहरम् ॥३९॥

हविषा सह तण्डुलोदनं परमानन्दधिया[६]ऽपि सादरम् ।
तदुपस्करसङ्गमेदुरं मृदुशाकं किल किञ्चिदुत्तमम् ॥४०॥

द्युतटिनि ! तपनीयपञ्चपात्रियमधुपयांस्य हविः सितापयांसि ।
कृशमकृशमशान वा यथेहं सहसुमनोऽभ्युपलाजपिष्टकैश्च ॥४१॥

तिन्तिडीकपृथुहिङ्गुहरिद्राजीरकार्द्रकवितुन्नककृष्णैः ।
आज्यसंस्कृतमथो हरिमन्थकस्य पिष्टमपि सिन्धुजतिक्तैः ॥४२॥

भक्षय सूक्ष्मसुचेलकघृष्टां धीरसितां दधिभिः सुरपालाम् ।
प्रेमभरेण सिताभ्रकरेण सौरभितावपनाभिहितां हि ॥४३॥

निष्ठीवे कनकमये स्वपाणिवक्त्रोच्छिष्टीयं तु घुसृणतैलपर्णिकाभिः ।
पा.लि.प.सं.७ तूर्णं मज्जय सुषमोष्णवारिणस्तु गण्डूषाभिरमलगण्डमण्डलश्च ॥४४॥

इन्द्रवज्रा उशीरगन्धैश्च सुधेव शीतलं दुकूलपूतं कनकालुकान्वितम् ।
विगृह्य हस्ताम्बुरुहे निपीयतां मुदाऽम्ब ! पानीयमिदं मितं मुहुः ॥४५॥

स्वाद्वीजम्बुकरकनारिकेलकोलिना-
देयीपनसनिकोचकादिसस्यम् ।
मातः ! स्वादय रुचितो यथारुचि
त्वं तालीजम्भलकदली रसालसस्यम् ॥४६॥

लेह्यं स्निग्धदधिफलस्य चामलक्या
मत्स्यण्ड्यास्त्वमिससमागमेन मिष्टम् ।
किञ्चैलादिपरिमलप्रपूरितं तत्-
पीयूषाधिकमधुरं समं वधूभिः ॥४७॥

कर्पूरकङ्कोललवङ्गकोशैस्ताम्बूलवल्लीदलमेलयाक्तम् ।
क्रमाद्गृहाण क्रमुकेण कीर्णं मुखारविन्दे खदिरेण चान्यैः ॥४८॥

मुहुर्वहुलताम्बूलभक्षणैश्च निजेक्षणैः ।
क्रियतामर्हणापूर्तिः करुणायास्तथोन्नतिः ॥४९॥

प्रतिक्षणं भक्षणहेतवे तवेतिहेमपेटे पटवेष्टनेन हि ।
सहाम्ब ! ताम्बूलसहस्रमास्थितं दधे वधूनां सविधे विधानतः ॥५०॥

मणिरजतसुवर्णशोणरत्नमरकतमौक्तिकविद्रुमादिवृन्दम् ।
अपि पुरुविददे पदारविन्दे त्वयि विनमय्य महाधनं धनञ्च ॥५१॥

६. दधियाद्धि

पा.लि.प.सं.८ त्वमिह मिहिरविम्बनिर्जितेनेक्षय निखिलं प्रतिविम्बमम्ब ! मञ्जु ।
मुखमपि मुकुरेण कुण्डलानां कुचरचनां स्फुरितं च लोचनानाम् ॥५२॥

शरदुदितसमेन्दु दीप्तिसत्तं वर्जितविभवं [7]मणिगर्भदण्डभूषम् ।
निजकरयुगले नियुज्य देहेऽमरधुनि ! मूर्धनि तेऽधुनाऽतपात्रम् ॥५३॥

रत्नकर्बुरहरिन्मणिगुच्छैश्चामरं गुरुपरिष्कृतमन्त्रः ।
वीजयामि च रविच्छविचोरं चारु तेन वदनाम्बुजमङ्गलम् ॥५४॥

व्यञ्जयामि निजसव्यभुजेन विश्वसेव्यवपुषि व्यजनं ते ।
मौक्तिकस्तबकतः प्रतिपन्नचित्रितं त्रिपथगे ! पृथुवेगम् ॥५५॥

मदोत्कटं हाटककिङ्किणीक्कणत्सुकण्ठकं तद् गुरुघण्टिकाङ्कितम् ।
महामदस्यन्दझरीमिलन्निदं मिलिन्दझङ्कारितगण्डमण्डलम् ॥५६॥

गन्धमादनमरुज्जितवेगं वाजिनं वृजिनरेचितमानम् ।
श्वेतलोहितकनीलहिरण्यमण्यलङ्कृतसमग्रसिताङ्गम् ॥५७॥

संयुक्तं द्रुतमतुरङ्गमैश्चतुर्भिश्चक्रैश्चारुमणिमयैश्च वैजयन्त्याः ।
भो भागीरथि ! विनयेन पूजनान्त्ये भक्त्या पुष्परथमथार्पये भवत्यै ॥५८॥

रत्नकाञ्चनमयी शिविकेनमम्बिके ! बहुलमौक्तिकजालैः ।
ग्रन्थिता नलिनतूलिकयाढ्या दीयते सपदि शौरिपदी यत् ॥५९॥

द्रुघणपरिघरिष्टिरोपकुन्तस्वधितिसृगच्छुरिकादिधारितास्तैः ।
पा.लि.प.सं.९ रथिभिरथवरुथिनी सनाथां दिशि दिशि दुन्दुभिनादिनी द्विपाश्वैः ॥६०॥

परिधीकृतसप्तवारिधिं द्विशतघ्नीद्रुघणादिमुद्रितम् ।
अलभं कनकाद्रिवद्रिपोरयि ! दुर्गे ! पुरुदुर्गमर्पये ॥६१॥

तथाङ्गीकुरुष्वाथ भागीरथि त्वं ददामो यदेतत् प्रमोदेन देवि ! ।
सुगन्धप्रसूनस्य च स्नेहमस्मिन्सुवासाय सम्यग्युहुस्तेऽब्जहस्ते ॥६२॥

कुटकुण्टकटीनटीनटाक्षप्रकटीकृच्छटिकाञ्चनाढ्यकाले ।
कुटिलभ्रुकुटीभ्रमत्कुचद्वन्द्वतटीं द्योस्तटिनीक्ष्यतां च पट्वी ॥६३॥

पुष्पिताग्रा तव जननि ! सुखेन सन्मुखे सा कुमुदमुखी प्रमुदे सखीसमूहैः ।
परिभवति च सप्तमं स्वरं स्व चरणसरोजनिरोपणक्कणेन ॥६४॥

द्रुतविल. चरणचङ्क्रमणेन चिरं क्रमाद् हरिणशावदृशां धरणीतले ।
मणिनिवेशितवेणिनितम्बयोर्विजयते स्खलनं किमुरोजयोः ॥६५॥

एतासां वदनसरोजनिःस्रवा सा किं शृङ्गाररसझरीवचोमयीयम् ।
द्राक्षाक्षोद्रमधुरिमाऽधरीकरोति क्षीरेक्षोरपि सुतरां श्रियं सुधायाः ॥६६॥

७. मणिभर्म, मणिहर्म इति वा शुद्धः पाठः सम्भावितः ।

विपञ्चीमुरजैः साधं द्विपञ्चस्वरवर्धितम् ।
गीतगन्धर्वकन्यायाः प्रस्पर्धिन्याः परस्परम् ॥६७॥

सुषिरततमृदं सुकिङ्किणीनां मृदुपरितैरपि मोदमेवमेतु ।
ललितवचसि लासिकावलीनां विरमतु दृष्टिविचेष्टितेषु चेतः ॥६८॥

पा.लि.प.सं.१० ढक्काभेरीपटहझल्लरीमृदङ्गवीणामर्दलपणवादिवाद्यघोषैः ।
शेषार्तिक्यमतिकुतूहलेन कुर्वे भूयस्ते मुखकमले कलेवरेऽपि ॥६९॥

विनाश्य विश्वाघमथाश्वमेध फलं पदं शश्वतमेव शश्वत् ।
तदङ्घ्रिविक्षेपणदः क्षणं ते प्रदक्षिणान्ते क्रियते प्रणामः ॥७०॥

वंशस्थ ध्वजोर्ध्वरेखासृणिवज्रनीरजाङ्किते सुपुष्पाञ्जलिमंघ्रिपुष्करे ।
महोत्पलं मौक्तिकरत्नमालिका गले च मौलौ प्रणिधाय पाणिभिः ॥७१॥

उपजाति उत्तिष्ठ चाष्टापदपादुकायां प्रदाय पादद्वयमालिवृन्दैः ।
यात्यम्ब ! नानाहयवाहनादावारुह्य साधाह्नि हि जाह्नवीह ॥७२॥

शुक्लेन्दीवरवदने ! त्वमिन्दिरेव गन्धामोदितसितमन्दिरे स्वकीये ।
दिव्ये देवयतितदङ्गनादिसेव्ये वास्तव्यं सुरनदि ! जह्नुनन्दिनीति ॥७३॥

रम्भाम्रप्रभृतिफलं समस्ति सन्ति ताम्बूली बहुलदलानि केतकी च ।
तत्साहित्यसहितमहो ! महाहिरण्यपात्रे स्तदिह महासुगन्धतैलैः ॥७४॥

प्रौढ्या त्वं बृहदुपबर्हतूलकाढ्ये तच्चामीकरमयमञ्चके सुखेन ।
एकान्ते स्वपिहि तु कौतुकेन कान्ते नास्मच्चेतसि तमपि चेतसि स्मरन्ती ॥७५॥

विधुविशदशरीरां धूतगौराम्बराञ्च
सितसरसिरूहास्यां स्वल्पहास्यां हरस्त्रीम् ।
पा.लि.प.सं.११ चटुलमुकुटताटङ्काङ्कितां किञ्च ताम्रा-
प्रपदकमलमुक्ताहारयुक्तामुपास्मि ॥७६॥

**॥ इति नारायणविरचिता गङ्गामानसपूजा सम्पूर्णा ॥**

**॥ श्रीगङ्गार्पणमस्तु ॥**



# गङ्गास्नानसङ्कल्पवाक्यदीपः[1]

॥ ॐ नमो गणेशाय ॥

नत्वा ब्रह्ममयीं गङ्गां जयकृष्णेन धीमता।
तज्जले स्नानसंकल्पवाक्यदीपः प्रकाश्यते ॥१॥

**अथ गङ्गाध्यानम्।**

चतुर्भुजां त्रिनेत्राञ्च सर्व्वावयवभूषिताम्।
रत्नकुम्भसिताम्भोजवरदामभयप्रदाम् ॥२॥
ततो ध्यायेत् सुरूपाञ्च चन्द्रायुतसमप्रभाम्।
चामरैर्व्वीज्यमानाञ्च श्वेतच्छत्रोपशोभिताम् ॥३॥
सुप्रसन्नां सुवदनां करुणार्द्रनिरन्तराम्।
सुराप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम् ॥४॥
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम्।
दिव्यरूपविभूषाञ्च दिव्यमाल्यानुलेपनाम् ॥५॥

**अथ मन्त्रः**

ॐ गङ्गायै विश्वमुख्यायै शान्तिप्रदायिन्यै
नारायण्यै नमो नमः।

**अथ सामान्यदिनस्नाम्**

अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति।
स्नानमात्रेण गङ्गायाः सद्यः पुण्यस्य भाजनम् ॥६॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा अनेकजन्मसंभूतपापविनाशपूर्वकं सद्यःपुण्यभाजनत्वकामो गङ्गायां स्नानमहङ्करिष्ये।

**अथ एकमासस्नानम्।**

नैरन्तर्य्येण गङ्गायां मासं यः स्नाति मानवः।
स शक्रलोके सुचिरं कालं स्थित्वा सगोत्रजैः ॥७॥
ततो ब्रह्मपुरे तिष्ठेत् कल्पकोटिशतायुतम्।

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा शक्रलोकाधिकरणकबहुगोत्रजसहित-सुचिरकालावच्छिन्नवासानन्तरं ब्रह्मपुराधिकरणककल्पकोटिशतायुतावच्छिन्नवास-कामोऽद्यारभ्य नैरन्तर्येण मासमेकं गङ्गायां स्नानमहं करिष्ये। अत्र मासः सौरः, शिष्टाचारादन्यत्रापि बोध्यम।

१. जयकृष्णकृतः, धर्मशास्त्र ग्रन्थसंख्या–११७९८ पत्र १-३१ लिपि-वंग मैथिली मिश्रित रचनाकाल संवत् १७११

**अथ षाण्मासिकस्नानम्**

यथा संस्नाति गङ्गायां नैरन्तर्य्येण यो नरः।
सर्व्वपापविनिर्मुक्तः समस्तकुलसंयुतः ॥८॥
समस्तभोगसंयुक्तो विष्णुलोके महीयते।

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्मा सर्व्वपापविनिर्म्मुक्तिपूर्वकसमस्तकुलसयुतं-समस्तभोगसंयुतश्रीविष्णुलोकाधिपरार्द्धद्वितयंयावन्महितत्वकामोऽद्यारभ्यनैरन्तर्य्येण षण्मासं यावद्गङ्गायां स्नानमहंकरिष्ये।

**अथमाघ स्नानम्।**

दिने दिने सहस्रन्तु सुवर्णानां विशाम्पते।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥९॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा प्रतिदिनं सहस्रस्वर्ण्णदानजन्यफल-समफलप्राप्तिकामोऽद्यारभ्य माघमासं यावत् प्रत्यहं गङ्गायां स्नानमहं करिष्ये।

**अथ माघ-फाल्गुनप्रातःस्नानम्।**

यदीच्छेद्विपुलान भोगान् चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥१०॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा चन्द्रसूर्य्यग्रहोपमविपुलभोगप्राप्ति-कामोऽद्यारभ्य माघफाल्गुनमासद्वयं यावत् प्रत्यहं गङ्गायां प्रातः स्नानमहङ्करिष्ये।

**अथ रटन्तीस्नानम्।**

माघे मास्यसितेपक्षे रटन्त्याख्या चतुर्द्दशी।
तस्यामुदयवेलायां स्नातो नावेक्षते यमम् ॥११॥

**माघोऽत्र गौणचन्द्रेण तिथिकृत्यत्वात्। उदयवेला अरुणोदयवेला।**

ॐ अद्येत्यादि माघे मासि कृष्णपक्षे चतुर्दश्यान्तिथौ रटन्त्यां अमुकगोत्रो-ऽमुकदेवशर्म्माऽरुणोदयवेलायां यमादर्शनकामो गङ्गायां स्नानमहङ्करिष्ये।

**अथ माघसप्तमी-स्नानम्।**

अरुणोदयवेलायां शुक्लमाघस्य सप्तमी।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समाः ॥१२॥

अद्येत्यादि अरुणोदयवेलायां अमुकगोत्रोऽमुकदेवशर्म्मा गङ्गाधिकरण-कबहुशतसूर्य्यग्रहकालीनस्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

**अथ कार्त्तिक-स्नानम्**

य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
कार्त्तिके सकलेमासि प्रातःस्नायी भवेत् सदा ॥१३॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा चन्द्रसूर्य्यग्रहोपमविपुलभोगप्राप्ति-कामोऽद्यारभ्य कार्त्तिकमासं यावत् प्रत्यहं गङ्गायां प्रातः स्नानमहङ्करिष्ये।

**अथ वैशाख-स्नानम्**

गवामर्द्धप्रसूतानां लक्षं दत्वा तु यत् फलम्।
तत् फलं लभते राजन् मेषे स्नात्वा तु जाह्नवीम् ॥१४॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा अर्द्धप्रसूतलक्षगवीदानजन्यफलसम-फलप्राप्तिकामोऽद्यारभ्य मेषस्थरविं यावत् प्रत्यहं गङ्गायां स्नानमहङ्करिष्ये।

**अथार्द्धोदय-योगस्नानम्**

अमार्कपातश्रवणैर्युक्ता चेत् पौषमाघयोः।
अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः ॥१५॥

दिवैक्ययोगः शस्तोऽयं नतु रात्रौ कदाचन।
अर्द्धोदये तु संप्राप्ते सर्वं गङ्गाजलैः समम् ॥१६॥

शुद्धात्मानो द्विजाः सर्व्वे भवेयुः ब्रह्मसम्मिताः।
अत्र यत् क्रियते दानं तद्दानं सेतुसन्निभम् ॥१७॥

अद्येत्यादि माघे मासि कृष्णेपक्षे अमावास्यायान्तिथौ अर्द्धोदयेऽमुक-गोत्रोऽमुकदेवशर्म्मा कोटिसूर्य्यग्रहकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

सामान्यजले तु गङ्गास्नानजन्यफलसमफलप्राप्तिकाम इति वक्तव्यम्। दाने तु कोटि सूर्य ग्रह कालीन तद्द्रव्य दान जन्यकोटि गुणफल प्राप्तिकाम इति वक्तव्यम्।

**अथ ग्रहणदानम्**

चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम्।
स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम् ॥१८॥

ॐ अद्येत्यादि राहुग्रस्ते निशाकरे दिवाकरे वा अमुकगोत्रोऽमुकदेवशर्मा सर्व्वतीर्थस्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

**अत्र विशेषोऽपि**

गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत् फलम्।
तत् फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥१९॥
दिवाकरे पुनस्तद्वच्छतसंख्यमुदाहृतम्।

अद्येत्यादिराहुग्रस्ते निशाकरे सयुग्मकोटिसहस्रदानजन्यफलसमफलप्राप्तिकाम इति।

अद्येत्यादि राहुग्रस्ते दिवाकरे राहुग्रस्तनिशाकरकालीनगङ्गास्नानजन्य-फलशतगुणपुण्यप्राप्तिकाम इति वक्तव्यम्।

सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहो भवेत्।
चूड़ामणिरयं योगस्तत्रानन्तफलं लभेत् ॥२०॥

अद्येत्यादि राहुग्रस्ते निशाकरे दिवाकरे वा चूड़ामणियोगे गङ्गाधिकरणक चन्द्रग्रहकालीनगङ्गास्नानजन्यानन्तगुणपुण्यप्राप्तिकामो गङ्गाधिकरणकसूर्यग्रहकालीन-गङ्गास्नानजन्यानन्तगुणपुण्यप्राप्तिकामो वा इति वक्तव्यम्।

**अथ गङ्गास्नानम्**

संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः।
पुष्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत् ॥२१॥

अद्येत्यादि पुष्यायां अमुकगोत्रोऽमुकदेवशर्मा बहुकोटिकुलसमुद्धारणकामो गङ्गायां स्नानमहङ्करिष्ये।

**अथदिनक्षयस्नानम्**

अन्येऽस्मिन् सावनेत्वह्नितिथीनां त्रितयं यदा।
तदा दिनक्षयः प्रोक्तः शतसाहस्त्रिकं फलम् ॥२२॥

ॐ अद्येत्यादि दिनक्षयेऽअमुकगोत्रोऽमुकदेवशर्मा सहस्रगङ्गास्नानजन्य-फलसमफलप्राप्तिकामों गङ्गायां स्नानमहङ्करिष्ये।

**अथ जन्मनक्षत्रस्नानम्।**

पुण्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ।
अमावास्यां नदीस्नानं हरत्याजन्मदुष्कृतीः ॥२३॥

**नद्यत्रप्रकरणात् गङ्गा**

अद्येत्यादि जन्मनक्षत्रेऽमुकगोत्रोऽमुकदेवशर्मा आजन्मदुष्कृतहननकामो-गङ्गायां स्नानमहङ्करिष्ये।

**अथ व्यतीपातस्नानम्**

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥२४॥
नागदैवतमाश्लेषा मस्तकं मृगशीर्षम् ॥२५॥

अद्येत्यादि व्यतीपाते अमुकगोत्रोऽमुकदेवशर्मा बहुजन्मकुलकोटिसमुद्धरणकामो गङ्गायां स्नानमहङ्करिष्ये ।

**अथ विशिष्टयोगस्नानम् ।**

चतुर्दश्यां यदा युक्तो व्यतीपातेन चन्द्रमाः ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥२६॥

तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात् ।
यत्र तत्र विपन्नोपि गङ्गामरणजञ्च तत् ॥२७॥

व्यतीपातोऽत्र विष्कुम्भाद्यन्तर्गतः, अन्यथाऽसम्भवात्, अद्येत्यादि व्यतीपातयुक्तचन्द्रमसि अमुकगोत्रोऽमुकदेवशर्म्मा गङ्गामरणजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

सोमवारेत्वमावास्या आदित्याहे च सप्तमी ।
चतुर्थी भौमवारे च अष्टमी च वृहस्पतौ ॥२८॥

अत्र यत् क्रियते पापमथवा पुण्यसञ्चयः ।
षष्टिवर्षसहस्राणि प्रतिजन्म तदक्षयम् ॥२९॥

अद्येत्यादि अमुके मासि कृष्णे पक्षे सोमवारसंयुक्तामावास्यायान्तिथौ अमुकगोत्रोऽमुकदेवशर्मा अमावास्याधिकरणकगङ्गास्नानजन्यषष्टिवर्षसहस्रावच्छिन्न प्रतिजन्माक्षयपुण्यप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। एवमन्येष्वपि बोध्यम् ।

अमावास्यां यदा वारो तावद् भूमिसुतस्य च ।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी ॥३०॥

अद्यामुकमासि कृष्णेपक्षे भूमिसुतवारसंयुक्तामावास्यायान्तिथौ अमुकगोत्रोऽमुकंदेवशर्म्मा गोसहस्रदानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

सिनीवाली कुहुश्चैव यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं जह्नौ निराकृतम् ॥३१॥

प्रकरणाद्गङ्गास्नान मेव बोध्यम् । सिनीवाली ।
चतुर्दशीयुक्तामावास्या । कुहुः प्रतिपद्युक्ता ॥३२॥

अद्येत्यादिकृष्णेपक्षे सिनीवाल्यां कुह्वां अमुकगोत्रोऽमुकदेवशर्म्मा गोसहस्र-दानजन्यफलसमफलप्राप्तिकामो गङ्गायां मौनेन स्नानमहङ्करिष्ये।

सामान्यजलेप्येतत्फलमिति केचित्। मौनमरुणोदयकालावधि न तु स्नान काल एव, तत्राऽमौनस्य वचनान्तरेण प्राप्तत्वादिति।

**अथ पर्वस्नानम्**

कृष्णाष्टम्यां सहस्रन्तु शतं स्यात् सर्व्वपर्व्वसु।
अमावास्यां शतगुणं सहस्रन्तु दिनक्षये ॥३३॥

सामान्यपर्व्वसु शतगुणं तदपेक्षया अमावास्यायां शतगुणमिति बोध्यम् अन्यथा पुनरुक्त्यापत्तेः।

तथा च अमावास्यायामयुतगुणमिति बोध्यम्।
चतुर्द्दश्यष्टमी चैव पूर्णिमा दर्श एव च।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥३४॥

**अथ पूर्णिमास्नानम्।**

तत्र सामान्यतः शतगुणं पर्वत्वेन लब्धम्। तत्रापि विशेषः।

पौर्णमासीष, चैतासु मासर्क्षसहितासु च।
एतासु स्नानदानाभ्यां फलं दशगुणं स्मृतम् ॥३५॥

तेन कार्त्तिक्यां कृत्तिकानक्षत्रयुक्तपौर्णमास्यां सहस्रगङ्गास्नानजन्यफलसमफलं बोध्यं एवमपरपौर्ण्णमासीष्वपि बोध्यम्। तत्रापि विशेषः।

माससंज्ञे यदा ऋक्षे[क] चन्द्रः सम्पूर्णमण्डलः।
गुरुमायाति संयोगं सा तिथि र्महतीस्मृता ॥३६॥
तत्रापि अकामा वैष्ठानन्तकं।
आषाढी कार्त्तिकी माघी वैशाखीषु ॥३७॥
अथ भाद्रपदे शुक्लाषष्ठी भरतसत्तम।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ॥३८॥
अक्षयमाभूतसंप्लवस्थायि।
द्वादश्यां श्रवणर्क्षे च अष्टम्यां पुष्ययोगतः।
आर्द्रायाञ्च चतुर्द्दश्यां गङ्गास्नानं सुदुर्लभम् ॥३९॥

**अथ संक्रान्तिस्नानम्।**

अयने कोटिगुणितं लक्षं विष्णुपदीषु च।
षडशीतिसहस्रन्तु षडशीत्यामुदाहतम् ॥४०॥

क. 'त्र्यक्षे' इति समीचिनं पाठं प्रतीयते।

शतं सिन्धुक्षये प्रोक्तं सहस्त्रन्तु दिनक्षये।
विषुवे च चतु:साहस्त्रमकामाष्वनन्तक: ॥४१॥
अयने विषुवे चैव य: स्नायाज् जाह्नवीजले।
गङ्गास्नानस्य लभते फलम् ॥४२॥

**षाण्मासिकस्य च**

तथा च विशेषवचनादयनयो: च विषुवद्वये च गङ्गास्नाने षाण्मासिकं फलम्। अयने कोटिगुणितं विषुवे शतसाहस्त्रं दान एव बोध्यं। किन्तु विशेषवचनाभावाद्विष्णुपदीचतुष्टये षड़शीतिचतुष्टये च स्नानदानयोर्यथाक्रम लक्षं षट्‌सहस्त्राधिकानीति सहस्त्रं फलं ज्ञेयम् ॥

अद्येत्यादि उत्तरायणसंक्रान्त्यां दक्षिणायनसंक्रान्त्यां अमुकगोत्रोऽमुकदेवशर्म्मा मासिकगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

अद्येत्यादि विष्णुपदीसंक्रान्त्यां अमुकगोत्रोऽमुकदेवशर्म्मा लक्षगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

अद्येत्यादि षडशीतिसंक्रान्त्यां अमुकगोत्रोऽमुकदेवशर्म्मा षड़शीतिसहस्त्रगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

अद्येत्यादि अद्य विंषुवसंक्रान्त्यां जलविषुवसंक्रान्त्याम्वा अमुकगोत्रोऽमुकदेवशर्म्मा षाण्मासिकगङ्गास्नानजन्यफलफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

**अथ युगाद्यक-स्नानम्।**

सर्व्वसत्वेकसन्तत्र नवम्यां कार्तिके तथा।
यवादौ च युगादौ च मासत्रयफलं लभेत् ॥४३॥

अद्य कार्त्तिके मासि शुक्लपक्षे नवम्यान्तिथौ युगादौ अमुकगोत्रोऽमुकदेवशर्म्मा सर्व्वऽसत्वगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

अद्य वैशाखे मासि शुक्ले पक्षे तृतीयान्तिथौ युगादौ अमुकगोत्रोऽमुकदेवशर्म्मा वैधनैरन्तर्य्यमासत्रयावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

एवं गौणचान्दे भाद्रकृष्णत्रयोदश्यात्मकयुगावदपि ज्ञेयम् अमुकयुगादावपि ज्ञेयम्। माघपूर्णिमायान्तु विशेष:। विशेषवचनादनन्तं फलं ज्ञेयं अनन्तपुण्यास्ति द्वयश्चतस्त्र: इति यदनन्तफलमुक्तं तद्दान एव, सामान्यविशेषन्यायादिति ॥

**अथ मन्वन्तरा-स्नानम्**

अद्येत्यादि आश्विने मासि शुक्ले पक्षे नवम्यान्तिथौ सर्व्वादौ अमुक-

गोत्रोऽमुकदेवशर्म्मा वैधनं गन्तर्य्यमासत्रयावच्छिन्नगङ्गास्नानजन्यफलसमफल प्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

एवमन्यमन्वन्तरास्वपि बोध्यम् ॥

**अथाशोकाष्टमी स्नानम् ।**

तत्र गङ्गायां पर्व्वान्तरतुल्यत्वान्न विशेषः ।

**किन्तु ब्रह्मपुत्रस्नान एव ।**

तथा च, पुनर्व्वसौ बुधोपेता चैत्रे मासि सिताष्टमी ।
लौहित्ये विरजे स्नायात् सर्व्वपापैः प्रमुच्यते ॥४४॥
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।
सर्व्वे लौहित्यमायान्ति चैत्रे मासि सिताष्टमीम् ॥४५॥

तथा च विशिष्टयोगे सर्व्वपापक्षयपूर्व्वकसर्व्वतीर्थस्नानजन्यफलसमफल-प्राप्तिकामो लौहित्ये स्नानमहङ्करिष्ये ।

चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः ।
स्नानाल्लौहित्यतो ह्येष स याति ब्रह्मणः पदम् ॥४६॥
तथा च केवलाष्टम्यां ब्रह्मपदप्रयाणम् ।
चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः
लौहित्यतोये यः स्नायात् स कैवल्यमवाप्नुयात् ॥४७॥
सकलचैत्रे स्नानं मुक्तिफलम् ।

**अथ स्नानमन्त्रः**

ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन ।
अमोघगर्भसंभूतं पापं लौहित्य मे हर ॥४८॥

**अद्य स्रोतोमात्रेण विष्णुः ।**

पुनर्वसुबुधोपेतां चैत्रे मासि सिताष्टमीम् ।
श्रोतःसु विधिवत् स्नानात् वाजपेयफलं लभेत् ॥४९॥

तथा च अद्य चैत्रे मासि शुक्ले पक्षे पुनर्व्वसुबुधवारयुक्ताष्टम्यान्तिथौ वाजपेययागजन्यफलसमफलप्राप्तिकामः श्रोतोजले स्नानमहङ्करिष्ये । इति ।

**अथ वारुण्यादि**

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्यते सूर्य्यग्रहशतैः समा ॥५०॥

**वारुणं-शतभिषा, मधौ-चैत्रे**

अद्य चैत्रे मासि कृष्णे पक्षे वारुणनक्षत्रयुक्तत्रयोदश्यान्तिथौ अमुकगोत्रोत्पन्नः

अमुकदेवशर्म्मा बहुशतसूर्य्यग्रहकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्यते कोटिसूर्य्यग्रहैः समा ॥५१॥

अद्येत्यादि चैत्रे मासि कृष्णे पक्षे त्रयोदश्यान्तिथौ महावारुण्यां अमुकगोत्रोऽमुकदेवशर्म्मा कोटिसूर्य्यग्रहकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥५२॥

अद्य चैत्रे मासि कृष्णे पक्षे त्रयोदश्यान्तिथौ महामहावारुण्यां अमुकगोत्रोऽमुकदेवशर्म्मा त्रिकोटिकुलसमुद्धरणकामो गङ्गायां स्नानमहङ्करिष्ये ।

अत्र वारुणीति संज्ञा महामहावारुणी वा कन्या बुद्धेभ्यनीत्य संज्ञाविधेः सार्थकत्वादिति ।

**अथ दशहरास्नानम् ।**

शुक्लपक्षस्य दशमी ज्येष्ठे मासि द्विजोत्तम ।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥५३॥

अद्येत्यादि ज्येष्ठे मासि शुक्ले पक्षे दशम्यान्तिथौ दशहरायां अमुकगोत्रोऽमुकदेवशर्म्मा अदत्तोपादानादिदशविधपापक्षयकामो गङ्गायां स्नानमहङ्करिष्ये ।

ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तयोगतः ।
दशजन्मापहा गङ्गा दशपापहरा स्मृता ॥५४॥

अद्येत्यादि ज्येष्ठे मासि शुक्ले पक्षे हस्तनक्षत्रयुक्तदशम्यान्तिथौ दशहरायां दशजन्मकृतादत्तोपादानादिदशविधपापक्षयकामो गङ्गायां स्नानमहङ्करिष्ये ।

ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां ।
हस्ते शैलात्त्ववगमदियं जान्हवी मर्त्यलोकम् ॥५५॥
पापान्यस्यां हरति च तिथौ सा दशेत्याहुराय्र्याः ।
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥५६॥

अद्येत्यादि ज्येष्ठे मासि शुक्ले पक्षे मङ्गलवाराधिकरणकहस्तनक्षत्रयुक्तदशम्यान्तिथौ दशहरायां अमुकगोत्रोऽमुकदेवशर्म्मा दशजन्मकृतादत्तोपादानादिदशविधपापक्षयपूर्वकशतगुणवाजिमेधायुतजन्यफलपुण्यसमपुण्यप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

**दशविधपापानि यथा–**

अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥५७॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥५८॥

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥५९॥

एतानि दशपापानि प्रशमं यान्तु जान्हवि ।
स्नातस्य मम ते देवि जले विष्णुपदोद्भवे ॥६०॥

विष्णुपादार्घ्यसम्भूते गङ्गे त्रिपथगामिनि ।
धर्म्मद्रवीति विख्याते पापं मे हर जान्हवि ॥६१॥

अयं मन्त्रः विष्णोः पादप्रसूतासीति मन्त्रान्ते पाठ्यः । आगन्तुकानामन्तेऽभिनिवश इति न्यायात् ।

**अथ महाज्यैष्ठी-स्नानम् ।**

ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता ॥६२॥

महाज्यैष्ठ्यांन्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥६३॥

अद्येत्यादि ज्येष्ठे मासि शुक्ले पक्षे पौर्णमास्यीयान्तिथौ महाज्यैष्ठ्यां अमुकगोत्रोऽमुकदेवशर्म्मा मोक्षप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

**अथ नन्दास्नानम् ।**

सप्तजन्मस्वयंभुक्तं पतितान्नञ्च तैः सह ।
संसर्गश्च कृतः पञ्च पातकानि महान्ति च ॥६४॥

तासां निर्व्वचनीयानि पापानि क्षयतासिषुः[१] ।
रजस्वलायाः स्पृष्टान्नभोजनेनापि यद्भवेत् ॥६५॥

सततासत्यभाषेण स्वर्णस्य हरणेन च ।
मणेश्चापि च रत्नस्य जीवहिंसादिभिश्च यत् ॥६६॥

जनितानि महादेव रौरवादीनि यानि च ।
तेष्वनक्तव्रतं विप्रास्ताड़नन्तु निवारयेत् ॥६७॥

१. क्षयतामनः, इति पा.भे. ।

यमस्य किङ्कराणाम्वा पापमाजन्म यत् कृतम् ।
बाल्ययौवनवार्द्धक्ये दशपापक्षयो भवेत् ।
ब्रह्मपुरे वसे भूष्वाहं सन्तु परमन्ततः[१] ॥६८॥
धेनूनां कपिलानाञ्च लक्षं दत्वा द्विजन्मने ।
चतुर्व्वेदाकृते काय तत् फलं लभते नरः ॥६९॥
श्रीमन्नारायणस्येह दक्षिणे वसते भुजे ।
मर्त्ये लोके ततो जन्म ततो गुणाश्रयो[२] भवेत् ॥७०॥

भुङ्क्ते सर्व्वसुखं भोगं यशश्चाप्नोति मानवः ।
गङ्गास्नानेन गङ्गायां नात्र कार्य्या विचारणा ॥७१॥
उभयो पक्षयोर्जातास्तिस्रस्तु तिथयः शुभाः ॥७२॥

एकादशी तथा षष्ठी प्रतिपच्च निबोधत ।
नन्दा तु कथितास्माभिः सर्व्वपापहराः शुभाः ॥७३॥

अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा सप्तजन्मावच्छिन्नपतितान्नभोजनपतित-संसर्गब्रह्महत्यादिपञ्चविधमहापातकानि निर्व्वचनीयपापक्षयरजस्वलास्पृष्टान्नभोजन-सततासत्यभाषणस्वर्णमणिरत्नापहरणसामान्यसकलावस्थापहरणसखिवधमित्रवधहिंसा-विप्रहिंसामातृहिंसाजनितमहारौरवाद्यनवरतयमकिंङ्करताड़ननिवारणजन्मकृतवाल्ययौवनवार्द्धक-दशपापक्षयब्रह्मलोकाधिकरणकपरमहंसदर्शनपूर्व्वकास्ताधीतचतुर्व्वेदब्राह्मणसंप्रदानककपिला-धेनुलक्षदानजन्यफलसमफलश्रीमन्नारायणदक्षिणभुजवासतदुत्तरमर्त्त्यलोकीयजन्मगुणाश्रयत्व-सर्व्वसुखभोगयशःप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

**अथ गङ्गास्मरणम् ।**

सहस्रयोजनस्था च गङ्गां भक्त्या स्मरन्ति ये ।
गङ्गा गङ्गेति ये ब्रूयुर्मुच्यन्ते तेऽपि पातकैः ॥७४॥
मनसा संस्मरेद्यस्तु गङ्गां दूरस्थितो नरः ।
चान्द्रायणसहस्रन्तु लभते नात्र संशयः ॥७५॥

**अथ गङ्गेति नाम कीर्त्तनम्**

गङ्गा गङ्गेति यैर्न्नाम योजनानां शतैरपि ।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥७६॥

**अथ यात्रा—**

गङ्गास्नानसमायुक्तो विधिना स्वगृहात्ततः ।
निर्गत्य मध्ये च नरः कुदेशे म्रियते यदि ।
गङ्गास्नानफलं तस्य नियतात्मा लभेत्तदा ॥७७॥

१. सन्दिग्धः पाठः ।, २. गुणाश्रयो इति वा.पा. ।

आनुषङ्गेण सङ्गेन वाणिज्येन च सेवया ।
कामासक्तोपि हि नरो गङ्गां प्राप्य दिवं व्रजेत् ॥७८॥
उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटं वेशं ग्रामं कृत्वा प्रदक्षिणम् ॥७९॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
ततः प्रदक्षिणं गच्छेत् प्रतिग्रहविवर्जितः ॥८०॥
पदे पदेऽश्वमेधस्य स्यात् फलं गच्छतो गयाम् ।

**गयामित्युपलक्षणम् ।**

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।
नरयाने तदर्द्धं स्यात् पदभ्यां तच्च चतुर्गुणम् ॥८१॥

**अत्र पादुकाग्रहणमावश्यकम् ।**

ऋतौ वर्षातपे छत्री व्रजेदाद्यटवीषु च ।
सशिरस्त्राणछत्रो वै सोपानत्कः सदा व्रजेत् ॥८२॥
षोड़शांशं स लभते यः परान्नेन गच्छति ।
अर्द्धतीर्थ फलं तस्य यः परार्थेण गच्छति ॥८३॥
परान्नेन प्रतिग्रहलब्धेन परार्थेन वेतनादिना ।
तीर्थं गच्छन्त्यजेत् प्रतिभू परान्नं परभोजनम् ॥८४॥

**परसिद्धान्न भोजनं ।**

तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थं समाचरन् ।
स्नानजं फलमाप्नोति न तु तीर्थफलं लभेत् ॥८५॥
तीर्थं प्राप्यानुषङ्गेन स्नानं विधिवदाचरेत् ।
अर्द्धतीर्थफल तस्य न तु यात्राफलं लभेत् ॥८६॥

**अथ श्रवणम् :-**

श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
सा पावयति भूतानि कीर्तिता च दिने दिने ॥८७॥

**अथ वीक्षणम् ।**

वर्त्तमानमतीतञ्च ज्ञानाच्चाज्ञानतोपि वा ।
कृतं यदशुभं कर्म्म गङ्गां दृष्ट्वा प्रणश्यति ॥८८॥

**अथ नमस्कारः ।**

प्रणमेत् प्रातरुत्थाय गङ्गां प्राप्य जलां शुभाम् ।
यस्तु धर्म्मार्थकामानां तथा मोक्षस्य भाजनम् ॥८९॥

अथ स्पर्शः ।

अभक्त्यापि महापापी गङ्गां स्पृष्ट्वा गुणभाग्भवेत् ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ।
अथ सर्वबन्धप्रकृतिं दशमयीं स्नापयेत् ॥९०॥

स्नापयेत् स्निग्धमित्रादीन् ज्ञातींस्तीर्थे नरोत्तम । अन्यथापहरन्त्येता इति ।

यावत् पुण्यममावास्या दिनानि दश नित्यशः ।
गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति मानवः ॥९२॥

अज्ञानात् ब्रह्मलोकञ्च याति नास्त्यत्र संशयः ।
गङ्गायाञ्च जले मोक्षो धावनासां[१] जले स्थले ॥९३॥

**अन्तरिक्षे मोक्ष इत्यर्थः । अथ मरणरीतिः–**

शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे ।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्दने ॥९४॥

गङ्गायां त्यजतः प्राणान् कथयामि वरानने ।
कर्णे तत् परमं ब्रह्म ददामि मामकं पदम् ॥९५॥

अर्द्धोदके तु जाह्नव्यां म्रियतेऽनशनेन यः ।
स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च ॥९६॥

**अर्द्धोदकञ्च चरणपर्य्यन्तम्, अथ गङ्गात्यागे दोषः–**

गङ्गातीरं परित्यज्य येन्यतीर्थाभिलाषिनः ।
ब्रह्महत्याफलं तेषां सततं संशयात्मनाम् ॥९७॥

**इति जयकृष्णभट्टाचार्यविरचितो गङ्गास्नानसंकल्पवाक्यदीपः सम्पूर्णः ।**

**चैत्रे कृष्णपक्षे च द्वितीयायां शुक्लवासरे ।**
**लिखिता खलु यत्नेन वावेल्ववेन धीमता ॥९८॥**

**यथा दृष्टं तथा लिखितं लिख्यको दोषको नास्ति । हस्ति विचलितु पादेन जिह्वा विचलितसरस्वती भीमस्यापि वने भङ्गो मुनीनाञ्च मतिभ्रमः । स्वाक्षर श्रीरुद्रामशर्म्मणः पुस्तकस्य अन्यस्य अधिकारो नास्ति शकाब्दा १६६९ शके आश्विनस्य कृष्णपक्षे षष्ठ्यान्तिथौ रोहिणी नक्षत्रे गरवणिजकरणे पुस्तकं सम्पूर्णम् ॥**

---

१. सन्दिग्धः पाठः ।



# गङ्गापत्तलकम्

## भक्तितरङ्गिणी

।। ॐ नमो गणेशाय ।।

वेदस्मृतिपुराणादि दृष्ट्वा गङ्गास्मृतं हितम् ।
कृतम्पत्तलकं रम्यं श्रीगणेश्वरमन्त्रिणा ।।१।।

श्रीहरिरनयो गङ्गास्मरणस्य कलानवसाराद्वाक्यम् । ॐ अद्य बद्धपाप-विमुक्तिकामो गङ्गामहं स्मरिष्यामि । ब्रह्माण्डपुराणे गङ्गास्मरणस्य ।

ॐ अद्य चान्द्रायणसहस्रजन्यफलसमफलप्राप्तिकामो गङ्गामहं स्मरिष्यामि ।।

**पापसंघातपञ्जरभेदकामो वा ।**

ॐ अद्य बद्धपापविमुक्तिकामो भक्त्या गङ्गामहं स्मरिष्यामि । भविष्यपुराणे गङ्गास्मरणस्य ।

ॐ अद्यविचित्रवद्धभरणविचित्राभरणवद्धस्त्रीकत्वारोग्याविपत्तिसम्पत्तिप्राप्ति-कामो गङ्गास्मरणमहं करिष्ये । सततं तद् गंङ्गास्मरणस्य । ॐ अद्य वद्धविमुक्ति-कामस्तद्गङ्गामहं स्मरिष्यामि ।।१।।

**अथ कीर्त्तनस्य कल्पतरौ ।**

ॐ अद्य सहस्रस्वरजन्मपुरुषतारणकामो गङ्गादेव्याः कीर्त्तनमहं करिष्ये ।

**आग्नेये विष्णुपुराणे ।**

गङ्गागङ्गेति नामोच्चारस्य ॐ अद्य जन्मार्जितपापक्षयकामो गङ्गागङ्गेति नामो-च्चारणमहं करिष्ये । आग्नेये, भक्त्या गङ्गागङ्गेति नामोच्चारणस्य । ॐ अद्य नित्यं त्रिदिवगमनकामो गङ्गागङ्गेति नामोच्चारणमहं करिष्ये । आग्नेये पितृणान्निरयस्थान-तारणकामो गङ्गागङ्गेति कीर्त्तनमहं करिष्ये ।

ब्रह्मपुराणे ॐ अद्य वद्धपातकविमुक्तिकामो भक्त्या गङ्गागङ्गेति कीर्त्तन-महंकरिष्ये ।

भविष्यपुराणे ॐ अद्यालक्ष्मीकालकर्ण्णीदुस्स्वप्नसृतदुर्व्विचिन्तितजन्यदुर्गितो-पगमनकामो गङ्गागङ्गेति भाषणमहं करिष्ये ।

ॐ अद्य स्वर्गगमनकामो गङ्गागङ्गेति कीर्त्तनमहं करिष्ये । त्रिसन्ध्या गङ्गागङ्गेति कीर्त्तनस्य ।

ॐ अद्य सन्ध्यात्रये परमगतिप्राप्तिकामो गङ्गागङ्गेति कीर्त्तनमहं करिष्ये ।।२।।

म.भ.पा.लि.सं. ३२१८, **विषयः–** धर्मशास्त्रम्, गणेश्वरमन्त्रीकृतम् पत्र १-१३+१ मैथिलीलिपित ।

अथ यात्रा। तत्र ब्रह्मपुराणोक्तफलानुसाराद्वाक्यम्। ॐ अद्य योगशुभवद्विशुभमतिकामो गङ्गायात्रामहं करिष्ये।

ब्रह्माण्डे। ॐ अद्य प्रतिपदश्वमेधयज्ञजन्यफलजन्मकृतपापक्षयकामो वा। कृत्यकल्पतरौ। ॐ अद्य मातृकपैतृकोभयवंश्यभवसागरसन्तरणकामो गङ्गादेव्याः स्पर्शनमहं करिष्ये।

जातसहस्रस्ववंश्यपुरुषपावनकामो वा वराहपुराणे। ॐ अद्य सर्व्वपातक विघातकामो गङ्गादेवीमहं स्पृशामि। पद्मपुराणे।

ॐ अद्य शाश्वतामृतपदप्राप्तिकामो भक्त्या वारम्बारं गङ्गादेवीमहं स्पृशामि ॥१॥

वनपर्व्वणि गङ्गावगाहने। ॐ अद्य पापक्षयकामो गङ्गावगाहनमहङ्करिष्ये। ब्रह्माण्डे।

भक्त्या गङ्गावगाहने। ॐ अद्य लक्षसुन्धनोत्तारणकामो भक्त्या गङ्गावगाहनमहं करिष्ये। भविष्ये। भविष्यपुराणे। ॐ अद्य स्वर्ग-मोक्षप्राप्तिकामो गङ्गावगाहनमहङ्करिष्ये। मोक्षप्राप्तिकामो वा स्कन्दपुराणे।

ॐ अद्य कुरुक्षेत्रसेवनजन्यफलसमफलप्राप्तिकामो गङ्गावगाहनमहङ्करिष्ये। विन्ध्यसङ्गतगङ्गावगाहने। ॐ अद्य कुरुक्षेत्रे सेवनजन्यफलदण्डगुणफलप्राप्तिकामो त्रिसन्ध्यसङ्गतगङ्गावगाहनमहङ्करिष्ये। पश्चिमवाहिन्यवगाहने'।

ॐ अद्य कुरुक्षेत्रे सेवनजन्यशतगुणफलप्राप्तिकामः पश्चिमवाहिनीगङ्गावगाहनमहङ्करिष्ये।

**उत्तरवाहिन्यवगाहने।**

ॐ अद्य कुरुक्षेत्रसेवनजन्यफलसहस्रगुणफलप्राप्तिकाम उत्तरवाहिनीगङ्गावगाहनमहङ्करिष्ये। भविष्ये गङ्गावगाहनस्य।

ॐ अद्य कुलकोटिसमुद्धरणकामो गङ्गावगाहनमहङ्करिष्ये।

ॐ अद्य स्वर्ग सहस्रावछिन्नैकपदव्रताचरणजन्यफलसमफलप्राप्त्या सप्तमकुलपवित्रत्वकामो गङ्गावगाहनमहं करिष्ये।

ॐ अद्य सप्तावरसप्तपरमद्वन्दलब्धीवनरकोद्धरणकामो वा। कल्पतरौ।

ॐ अद्य मातृकपैतृककोभयवंश्यभवसागरसन्तरणकामो गङ्गादेव्या अवगाहनमहङ्करिष्ये।

विष्णुपुराणे। ॐ अद्य पूतत्वकामो गङ्गावगाहनमहङ्करिष्ये।

## अथ मृत्तिकया सर्व्वगात्रालम्भने

भविष्ये। ॐ अद्य गोसहस्रप्रदानजन्यफलसमफलप्राप्तिकामनया गङ्गामृत्तिकया सर्व्वगात्रालम्भनमहङ्करिष्ये ॥११

स्कन्दपुराणे। ॐ अद्यादिवद्धदेवत्वप्राप्तिकामो गङ्गातीरमृत्तिकया नित्यं सर्व्वगात्रालम्भनमहङ्करिष्ये।

**अथ स्नानार्थजलप्रवेशः।**

ॐ अद्य ब्रह्महत्यादिजन्यदोषक्षयकामः वद्धशुभयात्राफलप्राप्तिकामो गङ्गादर्शनमहङ्करिष्ये। आजन्मकृतपापक्षयकामो वा त्रिदिवप्राप्तिकामो वा कल्पतरौ।

ॐ अद्य शतसहस्रस्ववंश्यपुरुषपावनकामो गङ्गादेव्या दर्शनमहङ्करिष्ये। "मुक्तिस्त्वद्दर्नाद्देवि नजानेस्नानजं फलमिति" दुर्व्वाससो वाक्यम्।

ॐ अद्य मुक्तिंप्राप्तिकामो गङ्गादर्शनमहङ्करिष्ये। ॐ अद्य मातृकपैत्रिकोभयवंशभवसागरसन्तरणकामो गङ्गादर्शनमहङ्करिष्ये।

दानधर्म्मे। ॐ अद्य सप्तावरसप्तपरवद्धपितरस्ववंश्यतारणकामो गङ्गादर्शनमहङ्करिष्ये।

वापीकूपतड़ागादिवद्धमित्रादिजन्यफलसमफलप्राप्तिकामो वा।

ॐ अद्य परमात्मदर्शनजन्यफलसमफलप्राप्तिकामो भक्त्या गङ्गादर्शनमहङ्करिष्ये।

**पापक्षयकामो वा।**

आग्नेये ॐ अद्य वाङ्मनःकायिकपापक्षयकामो गङ्गादर्शनमहङ्करिष्ये। श्रेयःकामो वा। सप्तावरसप्तपरवद्धकुलनरकोत्तरणकामो वा। पद्मपुराणे। वारम्वार दर्शने।

ॐ अद्य शाश्वतामृतप्राप्तिकामो भक्त्या वारम्बारदर्शनमहङ्करिष्ये। अथ स्पर्शस्य। तत्र ब्रह्मपुराणे। ॐ अद्य शुचित्वकामो गङ्गादेव्याः स्पर्शनमहङ्करिष्ये। ॐ स्वस्नानार्थगङ्गाजलप्रवेशमहङ्करिष्ये ॥१२॥

**अथस्नानम्। तत्र ब्रह्माण्डपुराणे।**

ॐ अद्यानेकजन्मसञ्जातपापक्षयताकालिकपुण्यभाजनत्वभवनकामो गङ्गायां स्नानमहङ्करिष्ये।

**दिवारात्रौ सन्ध्यायां गङ्गास्नानस्य—**

ॐ अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामो दिवसे गङ्गास्नानमङ्करिष्ये। रात्रिसन्ध्यान्यत्रावसानेप्येतदेव फलम्।

भविष्यपुराणे। ॐ अद्य मेरुमन्दरमात्रपापराशिक्षयकामो गङ्गास्नानमहङ्करिष्ये।

**वनपर्व्वणि, गङ्गायामाप्तवस्नाने–**

ॐ अद्य सर्व्वपापविमुक्तिकामो गङ्गायामाप्तवस्नानमहङ्करिष्ये।

भविष्यपुराणे ॐ अद्य सर्व्वपातकविमुक्तिकामो गङ्गास्नानमहङ्करिष्ये।

**ब्रह्मपुराणेऽग्नेयपुराणे दानधर्मे च।**

ॐ अद्य क्रतुशतप्राप्यवृद्ध्यधिकवृद्धिप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये। ॐ अद्य कपिलगवीकोटिदानजन्यफलविशिष्टफलप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये॥ सर्व्वतीर्थवद्धपुण्यायतनजन्यफलसमफलप्राप्तिकामो वा। याम्ये।

कुरुक्षेत्रसमा गङ्गा यत्र यत्रावगाहिता।

ॐ अद्य कुरुक्षेत्रस्नानजन्यफलसमफलप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये। आग्नेय पुराणे। सर्व्वसन्तप्तगङ्गाजलाधिकरणकसालादिक्रियाकरणे। ॐ अद्य सूर्य्यमण्डलभेदपूर्व्वकस्वर्गलोकगमनकामः सूर्य्यसन्तप्तगङ्गाजले स्नानमहङ्करिष्ये। अन्यक्रियाकरणेप्येतदेव फलं गङ्गायां स्नानादिकर्म्मणः।

ॐ अद्य स्वर्गगमनकामो गङ्गास्नानमहङ्करिष्ये। दानादावप्येतदेव फलम्।

**ब्रह्माण्डपुराणे गङ्गास्नानस्य।**

ॐ अद्य परमपुरुषावाप्तिकामो भक्त्या गङ्गास्नानमहङ्करिष्यें। जन्मसहस्रपापक्षयकामो वा।

**विष्णुपुराणे गङ्गास्नानस्य।**

ॐ अद्य सद्यःपुण्यावाप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। केशवाशक्ता गङ्गास्नानस्य ॐ अद्यघृतपापन्वोनमनिर्व्वाणप्राप्तिकामः केशवयोक्त पापोशमनाय गङ्गास्नानमहङ्करिष्ये।

अथ पुण्यकालगङ्गास्नानप्रकरणम्। श्रवणयुक्तद्वादश्याम्प्युष्ययुक्तां धर्म्म्यां स्वार्द्राद्युक्तचतुर्दश्यां वैशाख्याम् कार्त्तिक्यां माघमासीयामावास्यां कृष्णाष्टम्याङ्गङ्गास्नानस्य।

ॐ अद्य सुवर्णाद्युक्तद्वादश्यां सहस्रगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये। पुष्याद्युक्ताष्टम्यादावर्पादमेव फलम्।

**माघव्यतिरिक्तामावास्यायाङ्गस्नानस्य।**

ॐ अद्य स्वद्यामावास्यायाम्पर्व्वणि जातगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये।

अनुक्तपर्व्वान्तरेऽक्षपादमेव चलन्। दिनक्षये गङ्गास्नानस्य। ॐ आदिनक्षये सहस्रगुणगङ्गास्नानन्यफलसमफलप्राप्तिकामो गङ्गास्नानमहङ्करिष्ये। सोमग्रहणे। ॐ स्वस्यां रात्रौ राहुग्रस्ते निशाकरे कोटिगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये।

सूर्य्यग्रहणे। ॐ अद्य राहुग्रस्ते दिवाकरे दशकोटिगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। सोमग्रहणे लक्षगुणगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। सूर्य्यग्रहणेप्येतदेव फलम्।

ब्रह्मपुराणे सूर्य्यचन्द्रान्यतरग्रहणे गङ्गावगाहने सूर्य्यग्रहणे चन्द्रग्रहणे वा।

ॐ अद्य पृथ्वीवर्त्तिसर्व्वतीर्थस्नानजन्यफलसमफलप्राप्तिकामो गङ्गावगाहनमहङ्करिष्ये।

**भविष्यपुराणे। मध्यन्दिन स्नाने**

ॐ अद्य प्रातःकालीनगङ्गास्नानजन्यदशगुणपुण्यप्राप्तिकामो मध्यन्दिने गङ्गास्नानमहङ्करिष्ये।

**शिवसन्निधौ गङ्गास्नाने।**

ॐ अद्यानन्तगुणप्रातःकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामः शिवसन्निधौ गङ्गास्नानमहङ्करिष्ये। महाज्यैष्ठ्यार्द्धं गङ्गास्नाने।

ॐ अद्य सूर्य्यग्रहणसमकालीनगङ्गास्नानजन्यफलसमफलशतगुणाधिकफलप्राप्तिकामो महाज्येष्ठ्याङ्गङ्गास्नानमहङ्करिष्ये। अरुणोदयवेलायां माघशुक्लसप्तम्याङ्गङ्गास्नाने। ॐ अद्य माघशुक्लसप्तम्यां अरुणोदयवेलायां सूर्य्यग्रहणवद्भिन्नसमयाधिकरणकगङ्गास्नानजन्यफलशतगुणफलप्राप्तिकामनया गङ्गास्नानमहङ्करिष्ये।

शतभिषाद्युक्तचैत्रकृष्णत्रयोदश्यां गङ्गास्नानेऽप्येतदेव फलम्।

**गोविन्दद्वादश्याङ्गङ्गास्नाने।**

ॐ अद्य गोविन्दद्वादश्याम्महापातकादियावदेकपापक्षयकामो गङ्गायां स्नानमहङ्करिष्ये। व्यतीपाते। ॐ अद्य व्यतीपाते गङ्गास्नानजन्यानन्तगुणफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। ब्रह्माण्डपुराणे। पुष्याद्युक्तसंक्रान्तौ पुष्याद्युक्तव्यतीपाते पुष्यनक्षत्रग्रहणे गङ्गास्नाने। ॐ अद्य पुष्यनक्षत्रयुक्तसंक्रान्तौ कुलकोटिसमुद्धारकामो गङ्गायां स्नानमहङ्करिष्ये। पुष्ययुक्तव्यतीपाते ग्रहणान्यतरस्नानेप्येतदेव फलम्।

चण्डेश्वरपत्तलके केवलपुष्यस्यैव निमित्तत्वमिति उपाध्यायादयो वाचस्पतिमिश्रादयश्च।

ॐ अद्य पुष्यनक्षत्रवद्धकोटिकुलोद्धरणकामो गङ्गायां स्नानमहङ्करिष्ये।

**भविष्यपुराणे– जन्मनक्षत्रे गङ्गास्नाने ।**

अद्य जन्मनक्षत्रताकालिक जन्मप्रभृतिकृतपापक्षयकामो गङ्गायां स्नानमहङ्करिष्ये ।

चतुर्द्दश्यां व्यतिपाताद्युक्तचन्द्रर्मास भक्त्या गङ्गास्नानस्य । ॐ अद्य गङ्गाधिकरणकमरणजन्यफलसमफलप्राप्तिकामनया गङ्गायां स्नानमहङ्करिष्ये ।

ॐ अद्य ज्येष्ठशुक्लदशम्यां कुजवासरे हस्तनक्षत्रे दशविधिपापक्षय-फलगुणवाजिमेधायुतजन्यपुण्यसमपुण्यप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये । भविष्य-पुराणे । आर्द्रानक्षत्रयुक्तव्यतीपातयुक्तमाघकृष्णाष्टम्यां गङ्गास्नानस्य ।

ॐ अद्य आर्द्रानक्षत्रव्यतीपातयुक्तमाघकृष्णाष्टम्यां सविद्यत्वजातिस्मरत्व-सर्वज्ञत्वतपोध्यानभागित्वताकोलिकप्राप्तिसर्व्वशास्त्रविद्यारोगित्वभरणकामो गङ्गायां स्नानमहङ्करिष्ये ।

यान् दोषान् कायवाञ्छित्तसम्भवान्[१] । स स्नानेन भक्त्या तु मोदते दिवि देववत् ।

ॐ अद्य कायवाञ्छितकामजदोषनिलयनपूर्व्वकयुद्धाधिकरणकदेववन्मोदन-कामोऽद्यादिवर्षम्भक्त्या गङ्गास्नानमहङ्करिष्ये ।

**मासन्नैरन्तर्य्येण गङ्गास्नानस्य ।**

ॐ अद्य शक्रलोकचिरकालावस्थानपूर्व्वकसद्गोत्रजन्मोत्तरब्रह्मलोकाधिकरणक कल्पकोटिशतायुतावस्थानप्राप्तिकामनया प्रत्यहङ्गङ्गास्नानमहङ्करिष्ये ।

**गङ्गायां षण्मासस्नानस्य ।**

ॐ अद्यादिषण्मासं व्याप्य प्रत्यहं सर्व्वपापविनिर्म्मुक्तित्वपरार्द्धावच्छिन्न-समयाधिकरणकसमस्तकुलसंयुतसमस्तभोगानुरक्तात्मविष्णुलोकमहितत्वकामो गङ्गायां स्नानमहङ्करिष्ये । उत्तरायणे रविस्नानेप्येतदेव फलम् । विषुवद्वयेप्येतदेव फलम् । तत्र वाक्यम् । ॐ अद्य विषुवरविसंक्रान्तौ ॐ उत्तरायणरविसंक्रान्तौ वा वैध-निरन्तरषण्मासावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये । संक्रान्तौ गङ्गास्नानस्य निरन्तरमासचतुष्टयावच्छिन्नगङ्गास्नानजन्यफलसमफलप्राप्ति-कामो गङ्गायां स्नानमहङ्करिष्ये ।

माघकार्त्तिकमासान्यतरगङ्गास्नानेप्येतदेव फलम् । कार्त्तिकशुक्लनवम्यां गङ्गास्नानस्य ।

ॐ अद्य कार्त्तिकशुक्लनवम्यां स्वसेवावच्छिन्नगङ्गास्नानजन्यफलसमफल-प्राप्तिकामो गङ्गास्नानमहङ्करिष्ये । मन्वन्तरादौ स्वर्गादौ च गङ्गास्नानस्य ।

---

१. सन्दिग्धः पाठः ।

ॐ अद्य मन्वन्तरादौ निरन्तरमासत्रयावच्छिन्नगङ्गास्नानजन्यफलसमफल-प्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये। संक्रान्तौ पक्षयोरन्ते चन्द्रसूर्य्योपरागाणां गङ्गास्नाने। ॐ अद्य संक्रान्तौ ब्रह्मसदनकामो गङ्गास्नानमहङ्करिष्ये।

अक्षयतृतीयायां गङ्गास्नानस्य युक्तः वैशाखशुक्ल तृतीयायां विशेषतः। गङ्गातोये नरः स्नात्वा वा शुध्यते सर्व्वकिल्विषैः। ॐ अद्य वैशाखशुक्ल-तृतीयायां सर्वकिल्विषविमुक्तिकामो गङ्गायां स्नानमहङ्करिष्ये। युगादित्वान्मा-सत्रयफलम्।

**वैशाखप्रातःस्नानस्य। काशीखण्डे।**

यदानन्दपुराणे प्रोक्तं वसती वर्ष कोटिभिः।
तर्प्यतो माधवे मासि स्नानेनैकेन लभ्यते ॥२॥

ॐ अद्य माधवे मास्यानन्दपुरवासाधिकरणकवर्षकोट्यवच्छिन्नवासकामो गङ्गायां प्रातःस्नानमहङ्करिष्ये।

**अणु तर्प्यणम्। तत्र विष्णु पुराणे–**

श्रद्धान्वितपुत्रकर्तृक तर्प्पणस्य।

ॐ अद्य वर्षत्रयावच्छिन्नदुर्ल्लभपितृतृप्तिकामो गङ्गाजलेन पितृतर्प्पण-महङ्करिष्ये।

**भविष्यपुराणे। सतिलगङ्गातोयेन तर्प्पणे।**

ॐ अद्य षड़ङ्गसपदक्रमचतुर्व्वेदाध्ययनजन्यफलसमफलकुरुक्षेत्रसेवनफल-नानादानजन्यफलचन्द्रायणवद्धकृद्विविधतपोजन्यफलस्य दक्षिणानिध्योमादिवद्ध-विविधयज्ञजन्यफलसमफलाधिकरणप्राप्तिकामस्सतिलगङ्गातोयेन तर्प्पणमहङ्करिष्ये। मासतर्प्पणपिण्डदानयोः।

ॐ अद्यादिपितृणां सूर्य्यावरस्थत्वंस्वतृप्तित्वविमानारोहणपूर्व्वकताकोटि-कालामयब्रह्मलोकगमनकामो मासं व्याप्य प्रत्यहं गङ्गातोयेन पितृतर्प्पणमहङ्करिष्ये। पिण्डदानेप्येतदेव फलम्। सतिलगङ्गातोयेन पितृतर्प्पणे।

ॐ अद्यैतत्तिलसमसंख्याकवर्षसहस्रावच्छिन्नवद्धपितृस्वर्गवासकामस्संतिल-गङ्गातोयेन तर्प्पणमहङ्करिष्ये। स्वस्वस्यपितृमोक्षकामो वा।

**आग्नेये। गङ्गाजलेन देवानां स्नपने।**

ॐ अद्य वद्धपितृतृप्तिबद्धपितृलोकगमनतदधिकरणकचिरकालमोदन-कामो गङ्गाम्भसा देवानां स्नपनमहङ्करिष्ये। मृत्तिकाकुम्भताम्रकुम्भैः शतगुणं रौप्यकुम्भै र्लक्षगुणं हेमैः कोटिगुणं स्नपनम्। वृहन्नंदिपुराणे।

**गण्डूषेण गङ्गाम्भसा शिरस्नपने ।**

ॐ अद्यशिरःस्नपनसहस्रजन्यफलसमफलप्राप्तिकामो गण्डूषेण गङ्गाम्भसा-शिरस्नपनमहङ्करिष्ये ।

## अथ जपप्रकरणम्

**स्कन्दपुराणे । सततं गङ्गानामजपे ।**

ॐ अद्यासर्व्वदुःखान्तर्गत्वकामनया सततं गङ्गानामजपमहङ्करिष्ये । गङ्गायामष्टाक्षरजपे ।

ॐ अद्य मुक्तिप्राप्तिकामो गङ्गायामष्टाक्षरजपमहं करिष्ये । गङ्गायां विधिवत् स्नात्वाऽष्टाक्षरजपे ।

ॐ अद्य सर्व्वयज्ञसर्व्वदानसर्व्वतपःफलसमफलप्राप्तिकामो गङ्गायां विधिवत्स्नात्वाऽष्टाक्षरजपमहङ्करिष्ये ।

**षण्मासमष्टाक्षरजपे ।**

ॐ अद्यादि अणिमाद्यष्टमहासिद्धिप्राप्तिकामः षण्मास विधिवत्स्नात्वा-ऽष्टाक्षरजपमहङ्करिष्ये । गंगायां पञ्चाक्षरजपे । ॐ अद्य मोक्षप्राप्तिकामो गङ्गायां पञ्चाक्षरं जपमहङ्करिष्ये ।

**पञ्चाक्षरस्तु ।। नमश्शिवायेतिमन्त्रः**

**ब्रह्माण्डपुराणे । गङ्गायाञ्जपमन्त्रः ।**

ॐ स्वद्य कोटिगुणजपजन्यफलसमफलप्राप्तिकामो गङ्गायामम्बक-जपमहङ्करिष्ये ।

गङ्गायामन्तर्ज्जपे मन्त्रदेवताध्यानसमानकालीनजपे ।

ॐ स्वद्य महापातकविमुक्तिकामो गङ्गायामन्तर्ज्जले मन्त्र-देवताध्यान समानकालीनजपमहङ्करिष्ये । अथ पूजाधिकरणम् गाङ्गेये ।

ॐ अद्य सर्व्वदेवतापूजनजन्यफलसमफलप्राप्तिकामो गङ्गामहं पूजयिष्ये । ब्रह्माण्डपुराणे ।

ॐ अद्य मातृपैतृकोभयधर्माभध्वान्तवसन्त बहुकामो गङ्गामहं पूजयिष्ये ।

**पद्मपुराणे । नीलोत्पलशुद्ध पूजने ।**

ॐ अद्य गङ्गासन्तोषहेतुकसर्व्वकालिकसर्व्वकामावात्प्याऽदिकपरश्रीलाभ-तत्वनगोनन्तरत्वक्तप्राप्तिकामो नीलोत्पलैः गङ्गापूजनमहङ्करिष्ये ।

श्वेतपद्मैरप्येतदेव फलम्। ब्रह्मपुराणे वैशाखशुक्लसप्तम्यां पूजने। ॐ अद्य वैशाखशुक्ल सप्तम्यां स्वर्गप्राप्तिकामो गङ्गापूजनमहङ्करिष्ये।

**पूजायाञ्च प्रकार:।**

चतुर्भुजां त्रिनेत्राञ्च सर्व्वावयवशोभिनीम्। रत्नकुम्भसिताम्भोजवरदानाभयंकरां।

श्वेतवस्त्रपरीधानां श्वेतवृत्रोपशोभिताम् सुप्रसन्नां सुवरदा करुणार्द्र निरन्तरां सूधापूरितभूपृष्ठमार्द्र गन्धानुलेपनां त्रैलोक्य नमितांगङ्गां देवाभिर्गभिप्रुनादिव्यं कं परिभूष्याढ्यांन्दिव्य मालानुलेपनां। देवाञ्च जलेस्नात्वा पूजयेती। अर्व्वायं वाथर्व्वा प्रतिमा पूजनमन्त्र:।

ॐ गंङ्गायै विश्वमुख्यायै चिरामृतायै शान्तिप्रदायिन्यै नमो नम:। गङ्गायां स्नात्वा नित्यलिङ्गार्च्चने।

ॐ अद्यादि परममुक्तिकामनया स्नात्वा लिङ्गार्च्चनमहं करिष्ये। गङ्गायां लिङ्गं पूजायां।

ॐ अद्यानेकाग्निहोत्रवद्धवेदवद्धदक्षिणानेकयज्ञजन्यफलसमफलकोटिगुणाधिकफलप्राप्तिकामो गङ्गायां लिङ्गपूजनमहं करिष्ये। ब्रह्माण्डे–

भानो: शिवस्य वा पूजने केशवे मुक्तामणिविभूषितस्वरूपाञ्च चन्द्रायुतसमप्रभां रामवै रीड्यमानां तुष्टिं।

ॐ अद्य वेदपारग स्वब्राह्मणसम्प्रदान कादाग्वृगवीलक्षदानविधिसमफल प्राप्तिकाम: गङ्गायां विधिवत् स्नात्वाष्टाक्षरजपमहङ्करिष्ये। षण्मासमष्टाक्षरे जपे।

ॐ अद्यादि अणिमाद्यष्टमहासिद्धिप्राप्तिकाम: षण्मासं विधिवत्स्नात्वाषडाक्षरजपमहङ्करिष्ये। गङ्गायां पञ्चाक्षरजपे। ॐ अद्य मोक्षप्राप्तिकामो गङ्गायाम्पञ्चाक्षरजपमहङ्करिष्ये, पञ्चाक्षरस्तु, नमश्शिवायेति मन्त्र: ब्रह्माण्डपुराणे गङ्गायाञ्जपमन्त्र:।

ॐ अद्य कोटिगुणजपजन्यफलसमफलप्राप्तिकामो गङ्गायां सम्यक् जपमहङ्करिष्ये। गङ्गायामन्तर्ज्जपे मन्त्रदेवता।

**ध्यानसमानकालीन जपे।।**

ॐ अद्य महापातकविमुक्तिकामो गङ्गायामन्तर्ज्जले भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे। गीतवाद्ययोरन्यतरस्य दाने। ॐ अद्यान्यतमसौख्यप्राप्तिकामनयासंङ्गीत कुर्व्व दैवतं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे। "वाद्य दानेप्येवं नृत्यदाने"।

ॐ अद्य भूताधिकरणकरूपजन्मप्राप्तिकामो नृत्यमिदं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे।

## विष्णुधर्मोत्तरे

**पादुकाद्यदाने ।**

ॐ अद्याग्निष्टोमयज्ञजन्यफलप्राप्तिकामनया इमे पादुके विष्णुदैवते भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

ॐ उपानद्वाहनशय्यादानवृत्राशनमन्यतमदाने पादमेव फलम् ।

**''शस्यदानस्य''**

ॐ अद्यत्वे उत्तमपदप्राप्तिकाम एतानि धान्यानि प्रजापतिदैवतानि भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

यवदानेपीदमेव फलम् । करण्डकघण्टयोरन्यतरदाने । ॐ अद्य क्षिति-राज्यप्राप्तिकामनयाङ्गराजविद्धं विष्णु दैवतं भगवत्यै गङ्गा देव्यै तुभ्यमहन्ददे ।

**भूषणदाने ।**

ॐ अद्य भूतलराज्यप्राप्तिकामनया इदम्भूषण विष्णुदैवतं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**अथ गङ्गातीरे ब्राह्मणदानम्-**

तत्र कुशोदकं न देयं ब्राह्मणयोः पूजा एतान् कुशान् ददानीति द्विद्यक्ति मुक्ति वसेरन वासवजन्य पुण्याधिकंपुण्यप्राप्तिकामो गङ्गायां सूर्य्यपूजनमहङ्करिष्ये ।

## शिवकेशवार्च्चनेप्येतदेव फलम्

### ।। अथ दान-प्रकरणम् ।।

गङ्गायै वस्त्र हिरण्यवद्धरणेप्यत्र पुष्पफलान्नपानादि

**स्वीय प्रियान्यतमदाने ।**

ॐ अद्य ऐहिकानन्तरवस्तुसाध्यसुखदेहत्यागानन्तरनिरंञ्जनपरमनिर्वाण-प्राप्तिकामनया इदं वस्त्रं वृहस्पति दैवतं भगवत्यै गङ्गायै तुभ्यमहं ददे ।

**हिरण्यादिदानेप्येतदेव फलम् ।**

वस्त्रस्थाने हिरण्यादि प्रयोग इति विशेषः दानसारे ।

**नन्दिपुराणे । अलङ्करणदानस्य ।**

ॐ अद्य नानाभरणभूषितस्वीयवरुणलोकगमनतत्वतत्पृथिव्यधिकरण-द्वीपपतित्वभवकामनयेदमलङ्करणं विष्णुदैवतं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**शय्यादाने ।**

ॐ अद्य कण्टकनानाकाम्यां इमा शय्या विष्णु दैवत्यां भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**सुवर्णदानस्य ।**

अद्य गङ्गालोकवासकाम्याङ्गसुवर्णमग्निर्दैवतं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**शिवप्रवालेन दीपदानस्य ।**

ॐ अद्याक्षयगतिप्राप्तिकाम इमं दीपं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**क्रीड़ाभूमिः ।**

ॐ अद्य स्वर्गलोकप्राप्तिकाम्यायां क्रीड़ाभूमिं विष्णुदैवतां भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

**वस्त्रदाने ।**

ॐ अद्यैहलौकिकस्य वेशत्वभरणकाम्याङ्गवस्त्रं वृहस्पतिदैवतं भगवत्यै गङ्गादेव्यै तुभ्यमहन्ददे ।

## ।। गङ्गाजलपानेन ।।

ॐ अद्य क्रियासाफल्यप्राप्तिकाम एतानि फलानि विष्णु दैवतानि नृजन्य-कायभक्तिविशिष्टफलप्राप्तिकामो गङ्गाजलपानमहं करिष्ये ।

ॐ अद्यान्नदानगोदानसुवर्णदानादिरथाश्वगजदानजन्यपुण्यशतगुणपुण्य-प्राप्तिकामो गङ्गाजलपानमहं करिष्ये ।

कल्पतरौ ॐ अद्य मातृकपैतृकोभयवंशभवसागरसन्तरणकामो गङ्गाजल-पानमहं करिष्ये ।

## ।। नागाय ।।

ॐ अद्य पापक्षयकामनया गङ्गाजलपानमहं करिष्ये । ब्रह्माण्ड पुराणे ।। सदा गङ्गातोयपाने ॐ अद्य सर्वयज्ञदीक्षाप्रतिदानसोमपानजन्यपुण्यसमपुण्य-प्राप्तिकामनया गङ्गातोयपानमहं करिष्ये ।

## ।। दानधर्मे ।।

**गङ्गातोयसाध्यसर्वव्यापारकरणे ।**

ॐ अद्य पृथ्वीनागानन्तरस्वन्ध्यवस्थानामलत्वप्राप्तिकामनया गङ्गाजलेन सर्वकर्माणि चाहं करिष्ये ।

**स्कन्दपुराणे । गण्डूष मात्र जलपाने ।**

ॐ अद्याश्वमेधयज्ञफलप्राप्तिकामो गण्डूषमात्रगङ्गाजलपानमहं करिष्ये। स्वावृन्देन गङ्गाजलपाने।

ॐ अद्य मुक्तिप्राप्तिकामनया स्वावृन्देन गङ्गाजलपानमहं करिष्ये।

**।। अथ प्रणामः ।। अग्निपुराणे ।।**

ॐ अद्य ब्रह्ममहापद्मप्राप्तिकामो गङ्गा देव्याः प्रणामहं करिष्ये। प्रातरुत्थाय यावज्जीवप्रणामे। ॐ [illegible] यावज्जीवं धर्म्मार्थकाममोक्षप्राप्तिकामः प्रातरुत्थाय गङ्गा प्रणाममहंक[illegible]

**अथ श्राद्धप्रकरणम्।**

ॐ अद्य गयाश्राद्धकृत्योसैजकत्वेजलन्दत्वादयमभिषिच्य कुशतिल-जलान्यादाय।

ॐ अद्य गङ्गातीरे ब्रह्मलोकप्राप्तिकामो एतान् कुशान् प्रजापतिदैवतानद्य स्वकगोत्रयोऽस्वकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे तुभ्यमस्तीति। ब्राह्मणेनोक्तेन दक्षिणादानन्देयस्पर्शान्तिष्टामवदानेपूजादि पूर्ववत्।

ॐ अद्य गङ्गातीरेरुद्रविष्णुलोकप्राप्तिकाम एतान् यवान् प्रजापति दैवतानद्य स्वकं गोत्रायेत्यादि दक्षिणाद्यष्टिमुष्टिग्रहणान्तम्।।

**।। तिलदाने ।।**

ॐ अद्य गङ्गायामैश्वर्य्यप्राप्तिकाम एतांस्तिलान् सोमदैवतमित्यादि दक्षिणा मुष्टि (द्यष्टि) ग्रहणान्तं। तिलहोमेप्येतदेव फलम्।

**।। घृतदाने ।।**

ॐ अद्य गङ्गातीरे सदाशिवप्राप्तिकाम्याद् घृतं प्रजापतिदैवतंमित्यादि दक्षिणापि शान्तम्।

**।। गो-स्वर्ण-भूमिदाने ।।**

ॐ अद्य गङ्गातीर्थे विषयसंकटसंसारपुनर्ज्जन्माभावकाम्या इमां गङ्गारुद्र-दैवतामिमां पुरग्रहणान्तदक्षिणासुवर्णभूमिदानेप्येतदेव फलम्।

**।। वस्तुदाने ।।**

ॐ अद्य गङ्गातीरे दीर्घायुत्व प्राप्तिकाम एतानि वस्तूनि वृहस्पति दैवतानी-लादिदक्षिणादशाग्रहणान्तम्।

## ।। अन्नदाने ।।

ॐ अद्य गङ्गातीरे वद्धसम्पत्तिकाम एतान्यन्नानि प्रजापति देवतानीत्यादि। गङ्गातीरे यज्ञदानतपःश्राद्धसर्वपूजनानिकोटिकोटिगुणानि सूर्य्यांशुं सन्तप्त गङ्गाजल पाने दानधर्म्मे।

ॐ अद्य गोनिर्हारविमुक्ति परकामानजन्यफलविशिष्टफलप्राप्तिकामः सूर्य्यांशु सन्तप्तगङ्गाजलपानमहं करिष्ये।

## ।। महाभ. दीपं / ।।

**गङ्गाजल-पात्रदाने।**

ॐ अद्य चान्द्रायणमहत्वकरणजन्यफलसमफलप्राप्तिकामो गङ्गावीचि-संसिक्ततीरे श्राद्धमहंकरिष्ये। गङ्गायां पितृमुद्दिश्य भक्त्या मधुघृतगुडसंयुक्त-पायसप्रक्षेपे।

ॐ अद्य वर्षशतत्रयावच्छिन्नवद्धपितृतृप्तिकामः पितृनुद्दिश्य गङ्गाम्भसि मधुसर्पिःगुडसंयुक्तपायससमाद्युक्तं गङ्गाम्भस्यहं प्रक्षेप्स्यामीति सङ्कल्प्य सव्येन एव प्राङ्मुख उपविष्टः प्रक्षिपेत्।

ॐ अद्य श्राद्धजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गातीरे श्राद्धमहं करिष्ये।। इत्यादि।

## अथ गङ्गान्तरर्ज्जलमरणफलम्

**तत्र स्मृतिः**

शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्द्दने।।३।।

**आग्नेय पुराणे। गङ्गां प्रति विष्णुवाक्यं।**

ये मुञ्चन्ति नराः प्राणां स्तिष्ठन्तः सन्निधौ तव।
ते मां लोकं गमिष्यन्ति पूज्यमाना दिवौकसाम्।।४।।

**तथा :-**

अर्द्धोदकेन जाह्नव्या मृयतेऽनशनेन यः।
स याति न पुनर्ज्जन्म ब्रह्मसायुज्यमेति च।
अर्द्धेदकं चरणनाभिपर्य्यंतमुदकम्।।५।।

**ब्रह्मपुराणे।**

या गति र्योग युक्तस्य सर्व्वस्य सुमनीषिः।
सा गतिः सृजतः प्राणान् गंगायां तु मनीषिणः।।६।।

**गृहीत्वा यो गङ्गातीरे मृतो नरः**

सद्य एवं परं मोक्षमाप्नोति पितृभिः सहः।
गङ्गायां मरणात् प्राणान् कः प्राज्ञस्त्यक्तुमर्हति ।।७।।

गङ्गानिवद्धजन्मानि तन्मृतानि च महाद्यापिगतः कालो यत्र तत्रापि गत्वतः।

अत्र दूरे समीपे वा सदृशो योजनद्वयं।
गङ्गायां मरणेनेह नात्र कार्या विचारणा ।।८।।

तत्त्वज्ञानतोऽज्ञानतो वाकामतः कामतो पिऽवा।
गङ्गायान्तु मृतो मर्तः स्वर्गं मोक्षञ्च विन्दति ।।९।।

भविष्ये। प्राणे स्वासृज्य मा वेष गङ्गां यः स्मरेन्नरः। स्पृशेद्वाप शनोमापि स याति परमांगतिं।

**भागवते–** गङ्गाङ्कत्वा यैः शरीरं विसृज्य गता धीरास्ते विष्णुस्थे समत्वं तथा।
गङ्गासागरमुपक्रम्य अनुविक्षे क्षितौ तोये पापीयानपि यो मृतः।

ब्रह्मविष्णुशिवैपूजांपदमक्षयमद्वात्रतथा ।
ॐ क्रोमद्धि द्वयः प्राणे प्रयतः शिष्ट सम्मतः ।।१०।।

चिन्तयेन्मनसा गङ्गां स याति परमं लभेदिति।
**ब्रह्माण्डे–** यत्र तत्र मृतो वापि मरणे समुपस्थिते।
भक्त्या गङ्गां स्मरन् याति नरः शिवपुरं स्मृतः ।।११।।

## अथ गङ्गायामस्थिस्थितं फलम्।

**तत्र विष्णुपुराणे–**

शम्भोर्ज्जटाकलापात्तु विनिःक्रान्ता सरिद्वरा।
प्लावयित्वा दिवं निन्ये ह्यपापा सागरान्जने ।।१२।।

**कौर्म्ये।** यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य वै।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।१३।।

गङ्गातोये तु यस्यास्ति नीत्वा संक्षिप्य तेन वैः।
वर्षाणान्तु सहस्राणि तस्य स्वर्गे भवेत् स्थितिः ।।१४।।

यस्मिन् काले नृणामस्ति गङ्गायां क्षिप्यते नरैः।
तस्य कामादितः कृत्वा स्वर्ग लोके भवेस्थितिः ।।१५।।

**।। यमः ।।**

गङ्गातोयेषु यस्यास्थि पतते शुद्धकर्म्मणः ।
न तस्य पुनरावृत्ति मर्त्यलोके कथञ्चन ।।१६।।

**।। गौड़ाः ।।**

दशाहाभ्यन्तरे यस्य गङ्गातोयेस्थिसंस्थितिः ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ।।१७।।

**अथास्थि-प्रक्षेप-प्रकारः ।**

**तत्र ब्रह्मपुराणे ।**

स्नात्वा तत्र पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलेन योज्यते। तत्र मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपगुहाम् ।

नमोऽस्तु धर्म्मा विपुलं प्रविश्य जलं समेप्रीति गति क्षिपेच्च ।
स्नात्वा तथोत्तीर्य्य च भास्करञ्च दृष्ट्वा प्रदद्यादथ दक्षिणाञ्च ।।१८।।
एवं कृतं प्रेतपूर्वे स्थितस्य सद्योगतिः स्यात्तु महेन्द्रतुल्या ।

**पञ्चगव्यम् अर्थतीर्थं ।**

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ।।१९।।
तत्र न प्रतिगृह्णीयात् प्राणै कण्ठगतैरपि ।

**दानधर्म्मे ।**

भाद्रशुक्लचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद् गर्भं विजानीयात्तदूर्ध्व तीरमुच्यते ।।२०।।

**ब्रह्मपुराणे ।**

सार्द्धहस्तशतं यावत्तदूर्द्धं तीर उच्यते ।
तीराद् गव्यूतिमात्रन्तु पद्गतः क्षेत्र उच्यते ।।२१।।
आदानं जपो होम गङ्गायां न संशयः
उभयत्र तटे प्रत्येकं क्रोशद्वयं क्षेत्रम् ।।२२।।

**तदुक्तं भविष्ये ।**

गङ्गा सामाननंधन्ति सर्व्वपापान्यशेषताम् ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ।
एकयोजनविस्तीर्णा क्षेत्रसीमात्तटद्वयात् ।।२३।।

**भविष्यपुराणे ।**

यत्र गङ्गा महाराज शम्भू स्तत्रतपावनम् ।
सिद्धिक्षेत्रन्तु तज्ज्ञेयं समन्तात् त्रियोजनं ।।२४।।

अत्र हस्तचतुष्टयाभ्यन्तरे प्रतिग्रह निषेधः । सर्व्वत्रैव सार्द्धहस्तशताभ्यन्तरे तु तीर्थे तन्निषेधो गण्डक्यादिप्रसिद्धनदीत्विति शिष्टाचारः ।

क्षेत्रप्रतिग्रहनिषेधस्तु गङ्गायामेव ।
तत्रैत्र क्षेत्रकथनादिति व्यवस्था ॥२५॥

**मत्स्य पुराणे ।**

नं तीर्थे प्रतिगृह्णीयात् पुण्यक्षये तलेक्ष च ।
निमित्ते यच्च सर्व्वेस्य अप्रमत्तो भवेन्नरः ॥२६॥

तीर्थे यः प्रतिगृह्णन्ति पुण्येष्वायतनेसुच ।
निमित्तेभ्यच सार्द्ध क्षेत्रेक्षर तथैव च ॥२७॥

निष्फलं तस्य तत्तीर्थ यावत्तद्धनमश्नुते । गङ्गायामन्यदपि तत्रैव । गङ्गां विक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत् । जनार्द्दने तु विक्रीते विक्रीतं भुवनत्रयम् । अथ मृत्तिकाफलम् । तत्र भागवते गङ्गांतर समुद्धूतं मृदं मूर्ध्ना भर्त्ति यः । विभर्त्ति पापोऽर्कस्यतमोनाशयः केवलम् ।

कृते तु सर्व्वतीर्थानि त्रेतायां पुष्करं परम् ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ॥२८॥

योऽसौ सर्व्वगतो विष्णु चित्स्वरूपी जनार्द्दनः ।
स एव द्रव रूपेण गङ्गाम्भो नात्र संशयः २९॥

इति वाचस्पतिविरचित तीर्थचिन्तामणौ ।
अकिञ्चित्वद्धृत्य गङ्गाभक्ति तरङ्गिणी समाप्ता ॥३०॥

शाके १११२ फाल्गुन शुक्ल चतुर्द्दश्यां चन्द्रे वलहाग्रामावस्त्वित उत्तप्रिवसं श्रीराजार्म्मणो लिपियं रियम् ।

**अथ नन्दा सङ्कल्पः ।**

ॐ अद्य स्वकेमास्य स्वके पक्षे प्रतिपत्तिथौ सप्तजन्मावच्छिन्नपतितान्न भक्षणपतितसंसर्गपञ्चमहापातकरजस्वलास्पृष्टान्नभक्षणसततासत्यभाषणसुवर्णमणि रत्नोपहरणसामान्यसकलवस्तुपचरणसखिवधपितृवधमातृवधविप्रहिंसादिजनितशैवशिलासंहातवज्रकण्टकशूचित्यखक्रकचदासकुम्भीपाकमहापातकदारुणादिपत्रवनादिनानानवकयकिंकरताडनमित्रार्चनगजन्मवाल्ययौवनवार्द्धकदशाहृतदशविधपापक्षयब्रह्मलोकाधिकरणकपरमपददर्शनपूर्व्वकब्रह्मपुरवासचतुर्व्वेदब्राह्मणसम्प्रदानफलककपिलनगरीदानचतुर्व्वेदाध्ययनजन्यफलश्रीमन्नारायणदक्षिणभुजवासनानागुणसमन्वित सर्वसुखभोगयशःप्राप्तिकामो नन्दायां गङ्गायां स्नानमहं करिष्ये ।

**अथार्द्धोदय-संकल्पः ।**

ॐ अद्य माघे मासि कृष्णेपक्षे श्रवणार्कव्यतीपातद्युक्तायाममावास्यायान्तिथौ सूर्य्यपर्व्वशताधिकगङ्गास्नानजन्यफलसमफलप्राप्तिकामोऽर्द्धोदये गङ्गायां स्नानमहं करिष्ये ।

**अथाभिलाष मन्त्रः ।**

कदा द्रक्ष्यामि तां गङ्गां कदा गङ्गां लभेमहि ।
इत्यभिलषितो सफलामिद शतारयेत् ।।३१।।

**अथयात्रा ।**

ॐ गङ्गे गन्तुं प्रतीरन्तेया त्रेतायां विहिता मया निघ्नां सिद्धिमाप्नोति त्वत्प्रसादात्सरिद्वरे ।

**अथ दलमन्त्रः ।**

ॐ अद्य सत्समफलं सफलं जन्मजीवितक्षयजीवितम् । साक्षाद्ब्रह्म स्वरूपां त्वां पश्यामि जरचक्षुषा ।

**अथस्पर्शनमन्त्रः**

ॐ स्वर्गारोहणसोपानं त्वदीयमुदकं प्रभो अतःस्पृशामि पादाभ्यां गङ्गादेवि नमोस्तुते ।

ॐ गङ्गे देवि जगद्धात्रि पादाभ्यां सलिलन्तव ।
स्पृशामि त्वां पदा धर्म्मे प्रसन्ना क्षन्तुमर्हति ।।३२।।

**स्नानमन्त्रः**

ॐ ब्रह्म स्वरूपे हे गङ्गे स्नानमाचम्यते मया । त्वदीये निर्म्मले तोये यथोक्तफलदा भव ।

**मृत्तिकालेपनम्**

त्वत् कर्द्मैरतिस्निग्धैः सर्व्वपापप्रणाशनैः ।
मया विलिप्यते गात्रं मातर्म्मे हर पातकम् ।।३३।।

**।। समाप्तोयं गङ्गाज्ञानमहोदधिः ।।**

**।। शुभं भूयात् ।।**

श्रीगणेशाय नमः

# गङ्गाज्ञानमहोदधिः श्लोकानुक्रमणिका

| तत्र श्लोकाः | पत्रसंख्या/ श्लोक संख्या |
|---|---|

शुभं भूयात्

